मीमांसक-श्रीनीलकण्ठभट्टविरचितः

# भगवन्तभास्करः

( द्वादशमयूखसंवलितः धर्मविद्यात्मकः ग्रन्थः )

प्रथमः खण्डः

( संस्कारा-ऽऽचार-समय-श्राद्ध-नीति-व्यवहार-मयूखात्मकः )

मुसलगाँवकरोपनामकेन विधिवेत्त्रा डॉ० वेणीमाधवशास्त्रिणा
लिखितया भूमिकया सहितः




**चौखम्बा संस्कृत प्रतिष्ठान**

३८ यू. ए., जवाहरनगर, बंगलो रोड,

दिल्ली ११०००७

प्रकाशक—

चौखम्बा संस्कृत प्रतिष्ठान

( प्राच्यभारती के प्रकाशक एवं वितरक )

३८ यू. ए., जवाहरनगर, बंगलो रोड

दिल्ली ११०००७



पुनर्मुद्रित संस्करण १९८६

मूल्य १२०.०० ( १–२ खण्ड )

अन्य प्राप्तिस्थान—

चौखम्बा सुरभारती प्रकाशन

के० ३७/११७, गोपालमन्दिर लेन

पो० बा० नं० ११२९, वाराणसी २२१००१

*

प्रमुख वितरक—

चौखम्बा विद्याभवन

चौक ( बनारस स्टेट बैंक भवन के पीछे ),

पो० बा० नं० १०६९, वाराणसी २२१००१

दूरभाष : ६३०७६

मुद्रक—

श्रीजी मुद्रणालय

वाराणसी

It is a reproduction of the earlier edition of "Gujarati Press" Bombay.

# BHAGAVANTABHĀSKARA

OF

## SRĪ NĪLAKAṆṬHA BHAṬṬA

*( A treatise on Theology compiled in twelve Mayukhas )*

## Volume I

*( Containing Sanskara-Achara-Samaya-Shraddha-Niti and Vyavahara Mayukhas )*

*With an Introduction by*

**Dr. Venimadhav Shastri Musalgaonkar**




**CHAUKHAMBA SANSKRIT PRATISHTHAN**

**38 U. A., Jawaharnagar, Bungalow Road**

**DELHI 110007**

# भूमिका

प्रसिद्धिरियं यावद् धर्मशास्त्रान्तरिक्षे भगवन्तभास्करस्य नोदयस्तावद् धर्माऽधर्मविमर्शो न सुलभः। बहोः कालात् खल्वापणे भगवन्तभास्करीयमयूख-ग्रन्थाः क्रेतृजनसुलभा नासन्। अतस्तान् पुनर्मुद्रापयितुमस्ति दिल्लीस्थित-'चौखम्बा-संस्कृत-प्रतिष्ठान'स्य सत्सङ्कल्पः। ईश्वर-कृपया तत् सङ्कल्पोऽद्य सिद्धिङ्गत इति विज्ञाय मोमुद्यते मनः। चिरात् पुनर्दृष्टिपथमागच्छतु ग्रन्थोऽयमिति धिया भगवन्तभास्करस्याऽऽराधकानां कृते भूमिकेयं रुचिकरी स्यादिति विश्वस्यते।

अस्मिन् जगति सुखदुःखाऽवाप्तिः कर्मजा इति श्रूयते। पुण्यकर्मणां फलं सुखम्। पापकर्मणां फलं दुःखम्। पुण्यकर्माचरणशीलोऽपि दुःखभाग्भवति कदाचित्, पापकर्मलिप्तोऽपि सुखमश्नुत इति दरीदृश्यते। एतस्मात् कारणात् पाप-पुण्याधीनं सुखदुःखमिति नियम आपाततो बाधितो भवति। तथापि पूर्वस्मिन् जन्मनि जन्मान्तरे वा तेनैव पापमाचरितन्तत्तस्यैव फलमित्यनुमानेन समाधेयम्।

किं पुण्यं ? किञ्च पापम् ?—इति निर्णेतुं नास्ति सुगमम्। तथापि लोके तावत् सुख-दुःखयोः परिधौ तयोः समावेशो जायते। आचारमूलकमेव उभयोः निदर्शनं स्मृतिकारैः सन्दर्शितम्। अतस्तयोर्मध्ये पापस्य निराकरणाय उपाया वर्णिताः स्मृतिग्रन्थेषु निबन्धग्रन्थेषु च।

स्मृतिमूलकमेव धर्मशास्त्रम्। अतः 'धर्म-शास्त्रन्तु वै स्मृतिः'[1] इति वाक्यं सुप्रसिद्धम्। पुरुषार्थचतुष्टये धर्मोऽप्येकः। स च निरतिशयाऽऽनन्दलक्षणात्मकः, आत्यन्तिकदुःख-निवृत्ति-लक्षणरूपमोक्षस्य प्रवर्तकः, पुरुषेणाऽभ्यर्थ्यमानतया मुख्यः पुरुषार्थः। तत्राऽपि धर्ममात्रं सर्वेषां साधनम्। प्रवृत्ति-निवृत्त्यात्मकस्य द्विविधस्याऽपि धर्मस्य पुरुषार्थ-साधनता उक्ता विचक्षणैः—

> 'प्रवृत्तिलक्षणे धर्मे फलमभ्युदयो मतः।
> निवृत्ति-संज्ञके धर्मे फलं निःश्रेयसं मतम्॥' इति।

अपि च—भगवान् श्रीहरिः निज-पुरातन-ज्ञानराशिप्रकाशाय, वेदानां व्यासाय च वेदव्यास-रूपतया स्वयमेव स्कान्दे उक्तवान्—

> 'धर्मात् सुखं च ज्ञानं च यस्मादुभयमाप्नुयात्।
> तस्मात् सर्वं परित्यज्य विद्वान् धर्मं समाचरेत्॥' इति।

अतो मनीषिभिः धर्म एवाऽखिलस्थितिहेतुत्वेन राद्धान्तितो दरीदृश्यते।

---

१. मनु. २।१०,

धर्मं निर्णीषुः भगवान् जैमिनिः एवमाह—'चोदनालक्षणोऽर्थो धर्मः' इति। अनेन सूत्रेण धर्म-स्वरूपं तत्प्रामाण्यञ्चोच्यते। इदम् इह अनेनाधिकारिणा कर्तव्यमिति विधिविहितो यागादिरेव धर्म इति जैमिनेराशयः।

कर्मैव कर्तेत्युद्घोषो मीमांसकानाम्। न तावद्यागापूर्वोभयनिष्ठं धर्मत्वं जातिः। यागस्य क्रियेच्छान्यतररूपतया क्रियात्वेन इच्छात्वेन च सङ्करात्। अतो धर्मत्वं नाम अपूर्वनिष्ठैव सुखकारणतावच्छेदिका जातिरिति नैयायिकानामभिमतम्। अपूर्वमजानतामपि यागादि-कर्तरि धार्मिक इति रूढप्रयोगात् वेदबोधितेष्टसाधनत्वरूपो यागाऽपूर्वोभयनिष्ठोपाधिरेव धर्मत्वमिति केचित्। वस्तुतस्त्वलौकिक-श्रेयःसाधनत्वेन विहित-क्रियात्वं वा धर्मत्वमिति सुस्पष्टं निरणायि भाट्टकुलावतंसेन विद्वद्वरेण श्रीमद् गागाभट्टेन।[1]

मिताक्षरायाः प्रणेता विज्ञानेश्वरस्तु षड्विध-स्मार्त-विषयो धर्मपदवाच्य इति मन्यते। यथा–'वर्णधर्मः, आश्रमधर्मः, वर्णाश्रम-धर्मः, गुण-धर्मः, निमित्त-धर्मः, साधारण-धर्मश्चेति। तत्र—(१) वर्णधर्मो—'नित्यं मद्यं वर्जयेदि'ति। (२) आश्रम-धर्मोऽग्नीन्धनभैक्ष्यचर्यादिः। (३) वर्णाश्रमधर्मो यथा—'पालाशो दण्डो ब्राह्मणस्य, खादिरः क्षत्रियस्य'[2] इति। (४) गुण-धर्मः—शास्त्रविहिताऽभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनादिरूपः। (५) निमित्त-धर्मो—विहिताऽकरण-प्रतिषिद्ध-सेवन-निमित्तेन करणीयं प्रायश्चित्तम्। (६) साधारण-धर्मः—अहिंसा-पालनरूपः। 'न हिंस्यात् सर्वाणि भूतानि' इति आचाण्डालं साधारणो धर्म इति। एतावता गुणविशिष्ट-धर्म-प्रतिपादकं शास्त्रमेव धर्मशास्त्रमिति व्यपदिश्यते।

आचार-व्यवहार-प्रायश्चित्तात्मकस्य त्रिस्कन्धस्य धर्मशास्त्रस्य विवेचनमन्तरा दुर्ज्ञेयमिदं धर्मस्वरूपम्। पुरा सत्यादियुगत्रये धर्माऽधर्म-जिज्ञासायां वेदज्ञा महर्षयः साक्षात् वेदादेव निर्णयं कर्तुं पारयन्ति स्म।[3] युगविपर्यये सम्प्राप्ते च कलौ युगे अचिराऽऽयुषः पुरुषा भविष्यन्ति, तेषां बुद्धिरपि लघुतां गमिष्यतीति विज्ञाय परमकारुणिकेन कृष्णद्वैपायनाख्येन महर्षिणा व्यासेन

---

१. 'मीमांसार्णवकर्णधारविबुधः श्रीभट्टनारायणस्तद्वंशस्य करीरतां भजति यो विश्वेराख्यः कृती। 'गागाभट्ट' इति प्रथां दिनकरात् प्राप्तः पितुर्लालनात्......॥' Vide Dr. Mitra's Bikaner Cat. pp. 386–387. Vide also I. O Cat. Part III. P. 505.

२. मनु. २।४५, याज्ञ० १।२।२९,

३. 'धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः।'–मनु० २।१३, २।१०, २।६,

वेदश्चतुर्धा विभक्तः। ततो वेदज्ञैर्गौतमादिभिर्महर्षिभिर्धर्माऽधर्मविवेकं सुगमं कर्तुं विरचितानि त्रिविधानि कल्पसूत्राणि।

ततश्च वेदज्ञैः मन्वादिभिः स्मृतिकारैः धर्माऽधर्मविवेचनार्थं स्मृतिग्रन्थानां प्रणयनं कृतम्। धर्माऽधर्म-विनिर्णये प्रामाण्यं श्रुतेरेव। या च स्मृतिः श्रुति-विरुद्धा सा प्रमाणतां न भजते। श्रुति-द्वैधन्तु यत्र स्यात् तत्रोभयोरपि प्रामाण्यं मन्यन्ते सम्प्रदायविदः। स्मृत्योर्विरोधे वेदसम्मतस्मृतेरेव प्रामाण्यं स्वीकुर्वन्ति।

महर्षिणा याज्ञवल्क्येन विंशतिसंख्याकाः स्मृतिकाराः परिगणिताः।[1] मिताक्षराकारस्तु ( ई० उ० १०८०-११०० )—'नेय परिसंख्या[2] किन्तु प्रदर्श-नार्थमेतत्' इति कथितवान्। अतो बौधायनादेरपि धर्मशास्त्रत्वमविरुद्धम्। समेषाम् एतेषां प्रामाण्ये भजमाने सत्यपि साकाङ्क्षाणामाकाङ्क्षापरिपूरण-मन्यतः क्रियते एव। विरोधे तु विकल्पः। वीरमित्रोदयकारेण मित्रमिश्रेण ( ई०उ०१६१०-१६४० ) तु परिभाषाप्रकरणे[3] अन्येऽपि स्मृतिकाराः परि-गणिताः। सर्वेषां स्मृतिकाराणां प्रामाण्यं श्रुतिमूलकमेव। यतः श्रुत्यर्थाऽविरोधी स्मृतिरपि प्रमाणभूताऽस्ति।

स्मृतिग्रन्थटीकाकर्तृभिः विश्वरूप–( ई० उ० ८००-८२५ )-मेघातिथि–( ई० उ० ८०५-९०० )-विज्ञानेश्वर–(ई० उ० १०८०-११००)-गोविन्दराज–(ई० उ० १०८०-११०१)-कुल्लूकभट्ट–(ई० उ० ११५०-१३००)-माधवाचार्य–( ई० उ० १३००-१३८० )-शूलपाणि–(ई० उ० १३७५-१४४०)–बालम्भट्टा-दिभिः–( ई० उ० १७३०-१८२० )–तत्तत्स्मृति-काराणामाशयः तेषु तेषु ग्रन्थेषु स्फुटीकृतस्तथापि यत्र तत्र स्मार्तशास्त्रे समन्वयस्थापनस्य महती आवश्यकता-ऽनुभूता धर्मशास्त्रीयनिबन्धकारैः।

निबन्ध-युगे ( ई० उ० ११००-२००० ) धर्मशास्त्रीयपरम्परायाः विकाशो निर्बाधः सञ्जातः। निबन्धयुगे त्रिस्कन्धात्मकधर्मशास्त्रीयसाहित्यस्य वैपुल्येन श्रीवृद्धिरभवत्। ह्रासोन्मुखीं युगानुसारिसृष्टिप्रक्रियामनुसृत्य जायमानां प्रजा-जनानां बुद्धि-शक्तिक्षीणताञ्च विलोक्य कल्याणैकहेतुभूतधर्मविषयं सर्वेषां कृते देशकालाऽनुरूपं सहजबोधगम्यं च विधातुमस्मिन् युगे आविर्भूताः समन्वय-वादिनो निबन्धकाराः। धार्मिक-समस्यानां समाधानार्थं व्यवस्थापनार्थञ्च

१. याज्ञ० १।१।४-५,

२. 'परिसंख्यानम् एकस्यानेकत्रप्राप्तस्य अन्यतो निवृत्यर्थमेकत्र पुन-र्वचनम्' —मिताक्षरायाम् (याज्ञ०) १।१।४-५। विशेषस्तु १।३।८१ द्रष्टव्यम्।

३. पृ० १८,

निबन्धकारैः कृतः प्रयासो निःसंशयः स्तुत्यः। वैदिकाऽऽर्य-धर्मस्य संरक्षणे पोषणे च स्मार्तटीकाकाराणां निबन्धकाराणाञ्चाद्भुतं कर्तृत्वं दरीदृश्यते।

स्मृतिग्रन्थानां टीकाप्रणयनापेक्षया निबन्धलेखनप्रक्रिया दुरूहा। स्मार्तटीकाकारापेक्षया निबन्धकाराणां सञ्चारक्षेत्रं सुविशालं बहुविस्तृतं च भवति। वेदेभ्य आरभ्य समकालिक-निबन्धलेखकानां मतमतान्तरपर्यालोचनं निबन्धकारैः अपेक्ष्यते। पूर्ववर्ति-लेखकैः कृताया आलोचनायाः प्रत्यालोचनेन सहैव सामयिकीनां समस्यानां समाधानार्थं व्यवस्थापनार्थं च वेदशास्त्राविरुद्धाः सिद्धान्ताः तैः स्थापनीया भवन्ति।

धर्मशास्त्रीय-निबन्ध-लेखकानां संख्यापि समधिका। बहुजनोपकारकान् धर्मशास्त्र-सम्बद्धान् द्वादशप्रमुख-विषयानधिकृत्य 'सेंगर'[1] कुलविभूषण-**भगवन्तदेव**-नृपाश्रितेन यमुना-चर्मण्वती-सङ्गमस्थले 'भरेहा'ऽख्ये राजधानिभूते जनपदे

---

१. 'सेंगर'वंशोत्पत्तिविषये जनश्रुतिरनुश्रूयते, यथा—

'जज्ञे पितामहतनोः खलु कश्यपो य-
स्तस्मादजायत मुनिस्तु विभाण्डकाऽऽख्यः।
तं पुत्रिणां धुरमरोपयद् 'ऋष्यशृङ्ग'-
स्तस्यान्वयेप्यजनि शृङ्गिवराभिधानः॥

तस्मिन् वंशे महति वितते सेङ्गराख्ये नृपाणां,
राजा कर्णः समजनि यथा सागरे शीतरश्मिः।
कीर्त्या यस्य प्रथिततरया श्रोत्रजातेऽभिपूर्णे,
कर्णस्याऽपि प्रविततकथा नावकाशं लभन्ते॥

विशोकाख्यदेवस्तत्सुतोऽभूद्विशोकीकृता येन सर्वा धरित्री।
ततोप्यास राजाऽस्तशत्रुस्ततोऽभूद्रयाख्यो रवेणैव सर्वाऽहितघ्नः॥
बभूवाऽथ वैराटराजस्ततोऽभून्नृपो मेदिनीवल्लभो वीढुराजः।
नरब्रह्मदेवस्ततो मन्युदेवस्ततोऽभून्नृपश्चन्द्रपालाभिधानः॥
शिवगणाऽख्यनृपः समजन्यथो, शिवगणाख्यपुरं प्रचकार यः।
शिवगणेन समः सकलैर्गुणैः शिवशिवप्रथमो गणनासु यः॥
रोलिचन्द्र इति तत्तनयोऽभूत् कर्मसेननृपतिस्तमथानु।
लोकपो नरहरिर्नृपराजो रामचन्द्र इति तत्तनुजातः॥

यशोदेवस्ततो जातस्ताराचन्द्रनृपस्ततः।
चक्रसेनस्ततो राजा राजसिंहनृपो यतः॥

ततोऽप्यभूद् भूपति-साहिदेवः स्वकीर्तिभिर्निर्जितदुग्धसिन्धुः।
अभूत्ततः श्रीभगवन्तदेवः सदैव भाग्योदयवान् क्षितीशः॥

( इदानीमुत्तरप्रदेशीये इटावामण्डले ) श्रीभगवन्तदेववर्मकृतप्रार्थनामुररीकृत्य तत्सन्निधावेव कृतवास्तव्येन भाट्टकुलावतंसेन विद्वन्मूर्धन्येन महामीमांसकेन नीलकण्ठभट्टेन स्वामिनः आज्ञामवाप्य तद्यशोऽभिवृद्धये भास्कराऽऽख्यो निबन्ध-ग्रन्थो विरचितः ।

---

यद्दानद्रविणाद्रिनिर्जितवपू रत्नाचलो लज्जया
दूरे स्तब्ध इलावृते निविशते नो यत्र पुंसां गतिः ।
किं च त्रस्यदरातिवामनयनानेत्राम्बुभिर्वर्द्धित-
स्तेजोग्निर्वडवामुखोत्थहुतभुक्तुल्यः कथं नो भवेत् ।।
( इमे श्लोकाः क्वचित् मयूखग्रन्थेऽपि दृग्गोचरतां यान्ति । )

जनश्रुतिमनुसृत्य 'सेगर' वंश-क्रमः—

पितामहः ( ब्रह्मदेवः )
|
कश्यपः
|
विभाण्डकः
|
ऋष्यशृङ्गः
|
( १ ) शृङ्गिः ( शृङ्गिवंशप्रवर्तकः, गच्छता कालेन अयमेव शृङ्गिवंशः 'सेंगर' वंशनाम्ना लोके प्रसिद्धः । )
|
( २ ) कर्णः
|
( ३ ) विशोकः
|
( ४ ) अस्तशत्रुः ( आसराजदेवोऽपरनामधेयः )
|
( ५ ) रयदेवः
|
( ६ ) वैराटराजः
|
( ७ ) वीढुराजः
|
( ८ ) नरब्रह्मदेवः
|
( ९ ) मन्युदेवः
|

'आज्ञप्तस्तेन राज्ञा विबुधकुलमणिर्दाक्षिणात्या[1]ऽवतंसो
भट्टः श्रीनीलकण्ठः स्मृतिषु दृढमतिर्जैमिनीयेऽद्वितीयः ।
आज्ञामादाय मूर्ध्ना सविनयममुना तस्य सर्वान् निबन्धान्
दृष्ट्वा सम्यग् विविच्य प्रविततकिरणस्तन्यते भास्करोऽयम् ।।

डॉ. पा. वा. काणे महोदयैरस्य रचनाकालो ई. उ. १६१०-१६४५ निश्चितः ।

धर्माऽधर्म-विवेचने भ्रान्ति-ध्वान्त-विनाशाय भास्करादन्यः कः समर्थो भवेदिति मन्वानेन नीलकण्ठभट्टेन विरचिते भास्कराऽख्ये महानिबन्धे स्वाश्रयदातुरपि पुण्यं नाम प्रथमं संयोजितम् । स्वाश्रयदातुर्नामसंयोजनेन तद्यशोऽजरामरतां प्राप्तम् । अत एवेदानीमयं निबन्ध-ग्रन्थो 'भगवन्तभास्कर' इत्या-

( १० ) चन्द्रपालः
|
( ११ ) शिवगणः
|
( १२ ) रोलिचन्द्रः
|
( १३ ) कर्मसेनः
|
( १४ ) रामचन्द्रः
|
( १५ ) यशोदेवः
|
( १६ ) ताराचन्द्रः
|
( १७ ) चक्रसेनः
|
( १८ ) राजसिंहः
|
( १९ ) साहिदेवः
|
( २० ) भगवन्तदेवः ( वंशप्रवर्तकात् शृङ्गितस्तदन्वये विंशतितमः पुरुषः सेंगरकुलकीर्तिसंस्थापकः । अयमेव नीलकण्ठभट्टस्याश्रयदाता । )

१. उत्तरभारते महाराष्ट्रीयाः खलु 'दाक्षिणात्य'पदवाच्याः । 'दाक्षिणात्य' इति महाराष्ट्रीयानां संज्ञा । 'पेशवे'तिलकादयश्च उत्तरे भारते दाक्षिणात्य-ब्राह्मणाः इति सुप्रसिद्धमेव ।

ख्यया लोके प्रसिद्धः। अस्मिन् महानिबन्धग्रन्थे धर्मसम्बन्धिनो द्वादश-संख्याका विषयाः प्रतिपादिताः।

अस्य ग्रन्थ-राजस्य 'भास्कर' इति अन्वर्था संज्ञा। उदिते भास्करे तमो विनश्यति, दिनञ्च प्रवर्तते। अत एव भास्करस्तमिस्रहा इति निगद्यते। धर्मानुष्ठानस्य मुख्यः कालः सञ्जाते भास्करोदये एव प्रवर्तते। भ्रान्तिनिरासोऽपि प्रकाशमूलक एवास्ति। प्रकाशश्च भास्कराधीनः। यथा वेदानां स्वतः प्रामाण्यं तथैव भास्करस्यापि स्वतः प्रकाशकत्वम्। अस्मिन् महानिबन्धे प्रतिपादितानि यानि द्वादशप्रकरणानि सन्ति तेषां प्रत्येकस्य 'मयूखे'ति संज्ञा सार्था एव। अत्र मयूखानां रचना-क्रमो ग्रन्थकारेण अनेन क्रमेण स्वयमेव वर्णितः—

'संस्काराचारकालाः समुचितरचनाः श्राद्धनीती विवादो[1]
दानोत्सर्गप्रतिष्ठा जगति जयकराः संगतार्थानुबद्धाः।
प्रायश्चित्तं विशुद्धिस्तदनु निगदिता शान्तिरेवं क्रमेण
ख्याता ग्रन्थेऽत्र शुद्धे बुधजनसुखदा द्वादशैते मयूखाः॥

द्वादश मयूखेषु प्रतिपादिता विषयाश्च तत्र एवं वर्णिताः।

( १ ) **संस्कारमयूखे**—निबन्धोपयोगी धर्मप्रामाण्यादि-विचारः, विनायक-पूजनं, स्वस्तिवाचनादयः, संस्कारोद्देशः, संस्कारपरिगणनं, संस्कारप्रकाराः, स्त्री-शूद्र-संस्कारविषये विशेषः, रजोदर्शन-विचारः, आगर्भाधानात् विवाहान्त-संस्कार-विचारः, सापिण्ड्यविचारः, गोत्रप्रवरनिर्णयः, स्त्रीधर्माः, वर्णजाति-विवेकः, वर्णधर्माः, आश्रमधर्माः, कातीय-सूत्रानुसारि-संस्कारप्रयोगाः, प्रयोग-परिभाषा चेति विषयाः सन्ति।

( २ ) **आचारमयूखे**–आर्याचारवर्णनम्, आप्रबोधात् स्वापान्तम् इष्टा-निष्टस्वप्नफलम्, दुःस्वप्नशान्तिश्च।

( ३ ) **समयमयूखे**—तिथिसामान्यनिर्णयः, तिथिविशेषनिर्णयः, उपवासाधि-कारिणः, उपाकर्म, उत्सर्जनम्, सर्पबलिः, अमानिर्णयः, अन्ये यागाः, श्राद्धविषये अमानिर्णयः, वारविशेषे फलविशेषः, संक्रान्ति-निर्णयः, चैत्रादि-मासकृत्यम्, ऋतुनिर्णयः, जन्मतिथिकृत्यम्, क्षौरे निषिद्धकालः, कलि-वर्ज्याणि चेति।

( ४ ) **श्राद्धमयूखे**—श्राद्धपरिभाषा, अष्टका-न्वष्टकैकोद्दिष्टादिश्राद्धानां विधिश्च।

( ५ ) **नीतिमयूखे**—राजनीतिः साङ्गोपाङ्गवर्णनम्।

---

१. 'विवादो व्यवहारः स्यात्'—इत्यमरः, १।६।१८०,

( ६ ) **व्यवहारमयूखे**—अष्टादश व्यवहारपक्षाः संवर्णिताः, व्यवहारशब्द-स्य परिभाषा, व्यवहारमातृकावर्णनम्, स्वत्वनिरूपणम्, दायः, तद्विभागः विभागकालश्च, दत्तक-प्रकरणम्, अविभाज्यं दायद्वैविध्यम्, सप्रतिबन्धदाय-हरणे क्रमः, संसृष्टिनिर्णयः, स्त्रीधनञ्च ।

( ७ ) **दानमयूखे**—दानपरिभाषा, विविधदानानां साङ्गोपाङ्गवर्णनञ्च ।

( ८ ) **उत्सर्गमयूखे**—जलाशय-वापी-कूप-तडागाऽऽरामादीनामुत्सर्गः, तत्-फलं विधिश्च ।

( ९ ) **प्रतिष्ठामयूखे**—विविधदेवमूर्तिप्रतिष्ठापनविधिः, क्रमश्च ।

( १० ) **प्रायश्चित्तमयूखे**—प्रायश्चित्तपरिभाषा, विविधपापापकरण-क्षमानां प्रायश्चित्तानां वर्णनं, तद्विधिश्च ।

( ११ ) **शुद्धिमयूखे**—शुद्धाशुद्धविवेचनं, शास्त्रविहितकर्मसम्पादनार्थं शुद्धेरावश्यकता, विविध-शुद्धिप्रकाराः च दर्शिताः ।

( १२ ) **शान्तिमयूखे**—शान्तिलक्षणम्, शान्तिपरिभाषा, विनायकस्नपनं तत् प्रयोगश्च, ग्रहयज्ञः, ग्रहादीनां लक्षणानि, अधिदेवता-प्रत्यधिदेवता-लक्षणानि, लोकपालरूपाणि, लक्ष-कोटि-शतमुखकोटिहोमः, वास्तुकर्म, ग्रहयोगशान्तिः, जननशान्तिः, ग्रहणशान्तिः, ग्रहणोत्पत्तौ शान्तिः, प्रसव-शान्तिः, नक्षत्रशान्तयः, उत्पातशान्तिः, विविधशान्तयः, तत्प्रयोगविधिश्चेति विस्तरेण सर्वे विषया दर्शिताः ।

अत्र द्वादशमयूखेषु संवर्णितानां विषयाणां केवलं दिग्दर्शनमात्रं कृतम् । विस्तृतविवरणार्थं प्रतिमयूखादौ विषयसूची द्रष्टव्या ।

अनेके नीलकण्ठाः स्वनामधन्या अभूवन्तन्मध्ये कोऽयं नीलकण्ठो येन भगवन्त-भास्कराऽऽख्यो ग्रन्थो विरचित इति जिज्ञासा पाठकानां मनसि स्वभावत एव संजायते इति नास्त्यत्र चित्रम् । भगवन्तभास्करप्रणेतृनीलकण्ठविषयिणीजिज्ञासा-परितृप्तये किञ्चिन्निवेदनमप्यावश्यकमेवातो विज्ञाप्यते । अत्र मयूखकारस्य नील-कण्ठभट्टस्य परिचयप्रतिपादनं न केवलं प्रासङ्गिकमपि तु प्रज्ञानकरमपि ।

अस्ति भारतवर्षे महाराष्ट्रैकदेशे सुविख्याता नाम्ना प्रतिष्ठान-( पैठण )-पुरी । पुरा इयं नगरी शकारि-शालिवाहनस्य नृपवरस्य राजधानी आसीत् । अस्यां पुण्यनगर्यां नीलकण्ठभट्टस्य पितृपितामहादयः पूर्वजाः निवसन्ति स्म । ये च तपस्विनो विप्राग्रगण्याश्चासन् । 'भट्ट-कुलम्' ऋग्वेदीय-शाकलशाखाध्यायि ( आश्वलायनशाखाध्यायीति केचिदामनन्ति ) 'विश्वामित्र'गोत्रीय-देशस्थ-महाराष्ट्रीय-ब्राह्मणकुलम् । एतत्कुलं 'भट्टे'ति आस्पदेन प्रथितमस्ति । महा-राष्ट्रीयपरम्परामनुसृत्य नाम्ना सह पितृनाम उपनाम च संयोजनीयं भवति ।

'मयूख'कारस्य पूर्णं नाम 'नीलकण्ठ शंकरभट्ट' इति परम्परानुगतं प्रसिद्धम् । कुलसंज्ञाभूतस्य आस्पदस्य कोऽपि कार्य-कारण-भाव-सम्बन्धो भवत्येव । पितृ-नामसहितेन व्यक्तिवाचकेन नाम्ना सह उपनाम-संयोजनेनैव तन्नाम्नः ( तन्ना-मकस्य व्यक्तिविशेषस्य ) परिचायिका शक्तिरनुभूयते । गुर्जरदेशेऽपि एवमेव नामलेखनस्य कथनस्य च परम्परा रीतिर्वा । यथा महाराष्ट्रे—बाल-गंगाधर-तिलकेति, गुर्जरे च—मोहनदास-कर्मचन्द-गान्धीति प्रसिद्धिः । अत्र प्रथमा व्यक्तिवाचकसंज्ञा, द्वितीया व्यक्तिविशेषस्य पितृ-संज्ञा, तृतीया च कुलपरि-चायिका संज्ञा ।

नीलकण्ठभट्टस्य पितृकुले प्रदीर्घकालात् विद्यासमाराधनमभूत् । अनेनैव हेतुना एतत् कुलं भट्टेति संज्ञया जनैरभिहितम् । 'भट्टेति' विदुषां सम्मान-सूचकः उपाधिः । गच्छता कालेन अयमेवोपाधिः वंशगतनाम्ना लोके प्रथितो-ऽभवत् । साम्प्रतिका एतेषां वंशधराः स्वनाम्ना वंशगतेन सह द्विरावृत्तं भट्टेति पदं प्रयुञ्जते । यथा—'भट्ट-भट्टति' । अत्र प्रथमं भट्टपदं नाम्नः सूचकमन्यच्च 'भट्टे'ति पदं विद्वदुपाधिसूचकमिति तेषामभिप्रायः ।

नीलकण्ठभट्टस्य पैतृकवंशक्रमाऽनुक्रमो यथा तत्रैवोक्तम्—

'भट्टः श्रीनागपाशात् समजनि विबुधश्चाङ्गदेवाख्यभट्टः
प्रासोष्टाऽसौ तनूजं रघुपतिनिरतं भट्टगोविन्दसंज्ञम् ।
विश्वामित्रान्ववायाम्बुधि-विधुरधिकं वर्धते तत्तनूजो
विद्याऽब्धौ लब्धपारः प्रथित-पृथुयशा भट्टरामेश्वराख्यः ।।[१]
विश्वामित्रकुलोदधौ विधुरिवाऽखण्डः कलानां निधि-
र्वाग्गुम्फे निखिलेऽपि यस्य वसुधा शिष्य-प्रशिष्यैश्चिता ।
विद्या-पद्म-विकासनैकतरणिः श्रीभट्टगोविन्दजः
संख्यावद् गणनाग्रणीर्विजयते श्रीभट्टरामेश्वरः ।।[२]
'यस्याचिता ब्रह्महरीशकल्पैः स्वसूनुभिर्यश्च तुरीयरूपः ।
नारायणश्रीधरमाधवाख्यै रामेश्वरः सोऽजनि गाधिवंशे ।।'[३]

---

१. नारायण भट्टप्रणीतायां वृत्तरत्नाकर-टीकायां I. O. Cat. part II. P. 303,

२. 'त्रिस्थली-सेतुः' ( Mss. Decan college. No. 104 of 1892–95 and Visrambag. I No. 149.

३. Vide I. O. Cat. p. 531. Nos. 1667–68 कालतत्त्वविवेचन of रघुनाथ, son of माधव ।

'श्रीरामेश्वरसूरिसूनुरभवन्नारायणाख्यो महान्—
येनाकार्यविमुक्तके सुविधिना विश्वेवरस्थापना ॥'[१]

तत्रैव च नीलकण्ठभट्टस्य पैतृकवंशक्रमो यथा—

भाट्टवंशे ज्ञातपूर्वपुरुषेषु प्रथमः—

( १ ) नागपाशभट्टः
|
( २ ) चांगदेव भट्टः
|
( ३ ) गोविन्दभट्टः
|
( ४ ) रामेश्वरभट्टः ( प्रतिष्ठानपुराद् वाराणसीं समागतः )
|
( ५ ) नारायणभट्टः, श्रीधरभट्टः, माधवभट्टश्च
|
( ६ ) रामकृष्णभट्टः, शंकरभट्टः, गोविन्दभट्टश्च
|
( ७ ) दिनकरभट्टः, कमलाकरभट्टः, लक्ष्मणभट्टश्च
( दिवाकरभट्टोपनामकः )
|
( ८ ) विश्वेश्वरभट्टः ( गागाभट्टेत्युपनामकः ) छत्रपति-शिवराजस्य राज्याभिषेककर्ता ।

शंकरभट्टस्य—

( ७ ) रंगनाथभट्टः, दामोदरभट्टः, नरसिंहभट्टः, नीलकण्ठभट्टश्च ।

नीलकण्ठभट्टस्य—

( ८ ) शंकरभट्टः ( द्वितीयः ), भानुभट्टः, कन्या चेति त्रीण्यपत्यानि ।

अस्मिन् नैलकण्ठीये पैतृके स्वस्य च परिवारे सर्वे प्राप्तसारस्वतप्रसादा विद्वज्जनाग्रगण्याश्च । प्रायः सर्वे च विविध-ग्रन्थ-प्रणेतारः अभूवन् । भाट्ट-निर्मितं साहित्यं विपुलं वर्तते । नास्त्यत्रावकाशो न चाऽऽवश्यकता समग्रस्य भाट्टसाहित्यस्य समालोचनायाः । यद्यपि भाट्टसाहित्यचर्चा विदुषां मनोहारिणी हितकारिणी चेति नास्त्यत्र सन्देहलवलेशस्तथापि अतिविस्तरभयात् स्वकल्पित-मर्यादामतिक्रमितुं नोत्सहे ।

भट्टश्रीनीलकण्ठस्य बहुमुखी शास्त्रप्रतिभा, सार्वभौमश्चास्य पाण्डि-त्यम् । वेद-शास्त्रेषु अस्याप्रतिहता गतिः । एतत् सर्वं श्रीनीलकण्ठेन पैतृक-दाय-

---

१. दानहीरावलिप्रकाशस्य प्रस्तावनायाम् । Vide I. O. Cat. Part III. P. 547, No. 654.

रूपेणैव सम्प्राप्तम् । श्रीनीलकण्ठभट्टस्य पितामहो 'जगद्गुरु'-विरुदावलि-विभूषितः सर्वदिग्विख्यातो नारायणभट्टः । काश्यां प्राचीनं विश्वनाथमन्दिरं यत् यवनैर्विध्वस्तन्तदनेन पुनः संस्थापितमासीत् । भारतीयेतिहासे विदितचरमिदन्तथ्यं यद् विश्वनाथमन्दिरविध्वंसजन्यपापस्योग्रतावशात् सम्पूर्णे भारते वर्षे अनावृष्टिमूलकं दुर्भिक्षं प्रारब्धम् । राष्ट्रविप्लवकारि दुर्भिक्षमवलोक्य भयसन्त्रस्तो यवनशासकः श्रीनारायणभट्टस्य शरणमागत्य पर्जन्यार्थं सम्प्रार्थितवान् । परमकारुणिकेन निग्रहाऽनुग्रहसमर्थेन भट्टनारायणेन शरणागतस्य यवनशासकस्य सर्वजनहितकारिणी प्रार्थना स्वीकृता । स्वतपःप्रभावेण च तेन वृष्टिः कारिता । ततः सन्तुष्टेन यवनशासकेन विश्वनाथमन्दिरस्य पुनर्निर्माणाय आज्ञा प्रदत्ता । विश्वनाथमन्दिरस्य पुनर्निर्माणव्ययभारम् इन्दौरराज्याधिष्ठात्री स्वनामधन्या पुण्यश्लोका महाराज्ञी अहिल्याबाई 'होलकर' समूढवती । काम्बोज-( काबुल )-विजयी रणजीतसिंहश्च नवनिर्मितविश्वनाथमन्दिरस्य समग्रं शिखरं सुवर्णपत्रेण विभूषितवान् ।

अनेन प्रकारेण श्रीनारायणभट्टेनाऽऽर्यधर्मो रक्षितः । तदारभ्य जनैः श्रीनारायणभट्टः 'जगद्गुरुः' इति सम्मानसूचकोपाधिना विभूषितः । विद्वत्सभायाञ्च तस्मै 'अग्रपूजा'रूपः सम्मानः प्रदत्तः । इदानीमपि विद्वत्सभायां भाट्टवंशधरा अग्रपूजा-सम्मानं प्राप्नुवन्तीति । श्रीनीलकण्ठभट्टस्य जन्म एवंविधलब्धप्रतिष्ठविद्या-तपःपूतपरिवारे संजातम् । धर्मशास्त्रीयेतिहासग्रन्थे डॉ. पा. वा. काणेमहोदयेन नीलकण्ठीयग्रन्थरचनाकालः ई० उ० १६१०–१६४५ स्वीकृतः ।

श्रीनीलकण्ठभट्टेन द्वादशमयूखात्मक–भगवन्तभास्करादतिरिक्ता अन्ये ग्रन्था अपि विरचिताः । यथा–व्यवहारतत्त्वम्, दत्तकनिर्णयः, धर्मप्रकाशः, श्राद्धप्रकाशश्चेति । निर्णयसिन्धुकारेण कमलाकरभट्टेन निर्णयसिन्धौ नीलकण्ठीयव्यवहारतत्त्वस्य चर्चा कृता । तथैव च धर्मसिन्धौ तृतीये परिच्छेदे दत्तकमरणजन्याऽऽशौचविचारे काशीनाथोपाध्यायेन नीलकण्ठीय-दत्तकनिर्णयाऽऽख्यस्य ग्रन्थस्योल्लेखः कृतः । स्वयं भट्टः श्रीनीलकण्ठोऽपि व्यवहारतत्त्वाऽऽख्ये ग्रन्थे 'दत्तकनिर्णयाख्यो ग्रन्थो मया लिखितः' इति उक्तवान् । यथाहि—'···दत्त्रिमो यो विधिना दत्तः । निर्णीतं चैतन्मया दत्तकनिर्णये' । अन्यच्च–'एषां कलिवर्ज्याऽवर्ज्यादिविवेकोऽस्मज्ज्येष्ठभ्रातृभट्टदामोदरकृत-कलिवर्ज्यनिर्णयादवधेयः ।' व्यवहारतत्त्वे आभ्यामुल्लेखाभ्यां सुस्पष्टं भवति यद् व्यवहारतत्त्वाऽऽख्योऽन्यो व्यवहारविषयकोऽपि ग्रन्थः ( व्यवहारमयूखातिरिक्तः ) भट्टश्रीनीलकण्ठस्यैव । पुनश्च व्यवहारतत्त्वे दत्ताप्रदानिकप्रपञ्चे—'निर्णीतञ्चैतद् विस्तरेण तातचरणैर्द्वैतनिर्णये ।' द्वैतनिर्णयः खलु शंकरभट्टस्यैव योऽस्य भट्टश्रीनीलकण्ठस्य पिता ।

श्री ऑफ्रेक्ट महोदयः 'धर्मप्रकाशः' 'श्राद्धप्रकाशश्चे'ति द्वौ ग्रन्थावपि भट्ट-श्रीनीलकण्ठस्येति उक्तवान् । डॉ० पा० वा० काणे महोदयः 'धर्मप्रकाशाऽऽख्य'स्य ग्रन्थस्य कर्तृत्वं नीलकण्ठीयं न स्वीकरोति । तन्मते धर्मप्रकाशस्य कर्ता शंकरभट्टः प्रथमः, यतः संस्कारमयूखे सप्तत्रिंशत्तमे ३७ पृष्ठे 'धर्मप्रकाशे तातचरणाः' इत्युक्तमस्ति । किन्तु डॉ० काणेमहोदयः श्राद्धप्रकाशकर्तृत्वविषये मौनमापन्नः । मौनं तु सम्मतिनिदर्शकमिति मन्यन्ते शिष्टजनाः । बम्बईतो गुजरातीमुद्रणालये संस्कारमयूखस्य यत् संस्करणं मुद्रितं प्रकाशितञ्चास्मिन् संस्करणे प्रस्तावना-मनुसृत्य संस्कारमयूखस्य रचनाकारः शंकरभट्टः ( द्वितीयः ) इति उल्लिखितम्, यो हि भट्टः श्रीनीलकण्ठात्मजः । वस्तुतस्तु भट्टः श्रीनीलकण्ठ एव द्वादशमयूखानां मौलिको लेखकः कर्ता वा । संस्कारमयूखस्य भट्टः श्रीनीलकण्ठात्मजः शंकरभट्टः (द्वितीयः) तु सम्पादकः परिष्कर्ता वा भवेत् । तत्परिष्कारं कुर्वाणेन द्वितीयेन शंकरभट्टेन यत्र तत्र परिवर्तनं परिवर्धनञ्च कृतमिति सत्यम् । एत-देव भ्रान्तिजनकसमस्यामूलकं सञ्जातम् । उपर्युक्ते मुद्रिते संस्कारमयूखे सप्तम-दशमपृष्ठयोर्मध्ये—'श्राद्धमयूखे तातचरणाः', ७० पृष्ठे यथा वा 'कलिवर्ज्याणि च समयमयूखे दर्शयिष्यामः,' तथैव ८२ पृष्ठे यथा वा 'पुत्रिकाकरणप्रकारादिकं व्यवहारमयूखे दर्शयिष्यामः ।' एवमेव १२९ पृष्ठे यथा वा 'विशेषस्तु आचार-मयूखे वक्ष्यते ।' तत्रैव संस्कारमयूखस्यान्तिमे भागे ( Colophon ) समापन-संसूचके लेखे यदुल्लिखितम्—

'चर्मण्वती-तरणिजा-शुभ-संगमस्य
सान्निध्यभाजि कृतशालिनि मध्य-देशे ।
ख्याता भरेह नगरी किल तत्र राजा
राजीवलोचनरतो भगवन्तदेवः ॥'

अन्यच्चाग्रे—'इति श्री सैमर ( सैंगर ) वंशावतंस महाराजाधिराज-श्रीभगवन्तदेवादिष्टमीमांसक-भट्टशंकरात्मज-भट्टनीलकण्ठकृते भगवन्तभास्करे प्रथमः संस्कारमयूखः समाप्तः' इत्युल्लेखो वर्तते । उपर्युक्तस्थलेषु सर्वत्र संस्कारमयूखस्य कर्तृत्वमक्षुण्णतया ( प्रथम ) शंकरभट्टात्मजस्य भट्टस्य श्रीनीलकण्ठस्यैव प्रतिभाति नास्त्यत्र सन्देहावकाशः ।

( १ ) भगवन्तदेवाश्रितो भट्टः श्रीनीलकण्ठ एव न तत्पुत्रः शंकरभट्टो द्वितीयः । ( २ ) भगवन्तभास्करस्य समग्रता द्वादशमयूखमूला एव । ( ३ ) संस्कारमयूखश्च द्वादशेषु मयूखेषु प्रथम इति विवादरहितं तथ्यम् । अन्यच्चाऽनुपेक्षणीयमिदन्तथ्यम् अस्ति यत्—मुम्बापुर्यां १९१३ तमे ख्रिष्टाऽब्दे

गुजरातीमुद्रणालये सम्मुद्रिते संस्कारमयूखस्य संस्करणे ग्रन्थारम्भके मंगलाचरणे पद्यद्वयं दृग्गोचरतां याति, तत्र द्वितीयेन पद्येन सर्वं स्पष्टं जायते । तद्यथा—

'श्रीभास्करं शिवकरं शिरसा प्रणम्य
श्रीनीलकण्ठपितरं जननीं च गङ्गाम् ।
तत्पादचिन्तनबलो बुधशंकराख्यः
संस्कारभास्करममुं वितनोति काश्याम् ॥'

इति मंगलाचरणात्मकमिदं पद्यं संस्कारभास्कराख्यग्रन्थकारेण भट्टेन श्रीनीलकण्ठात्मजेन द्वितीयेन शंकरभट्टेन लिखितन्नास्त्यत्र विसंवादः । संस्कार भास्कराऽऽख्योऽन्यो ग्रन्थः प्रसिद्धः समुपलभ्यते च । विदितचरमिदं कर्मकाण्डिनां सम्प्रदाये परम्परायां च ।

महामहोपाध्याया भारतभूमण्डनभूता वेदवेदार्थप्रवचनपटीयांसः श्रौत-स्मार्तक्रियास्वनन्यसाधारणनैपुण्यभाजो मुसलगांवकरकुलललामभूता अस्मत्पितृ-चरणाः श्रीसदाशिव शास्त्रीति विश्रुतनामधेया अत्रामनन्ति स्म । यत्—'ग्रन्थ-परिष्कारकर्त्रा, ग्रन्थ-लिपिकरेण संपादकेन वा अनवधानतया संस्कारभास्करस्थ-मङ्गलाचरण-पद्यमत्रावतारितम् । संस्कारभास्कराख्यस्य ग्रन्थस्य कर्ता गङ्गा-नीलकण्ठात्मजः शंकरभट्टो द्वितीयः । न चाऽयं संस्कारमयूखस्य कर्ता । संस्कार-मयूखस्य कर्ता श्रीनीलकण्ठभट्ट एव नान्यो मन्तव्यः । यत्र तत्र च संस्कार-मयूखसम्पादकेन परिष्कर्त्रा वा नीलकण्ठात्मजेन द्वितीयेन शंकरभट्टेन ग्रन्थकर्तु-राशयं स्फुटीकर्तुं टिप्पणी संयोजिता भवेत् । यथा—'श्राद्धमयूखे तातचरणाः ।' यथा वा—'धर्मप्रकाशे तातचरणाः' ( १९१३ तमे ख्रिष्टाब्दे मुद्रिते उपर्युक्ते संस्कारमयूखस्य संस्करणे सप्तत्रिंशत्तमे ३७ पृष्ठे ) । इयमुक्तिस्तु वस्तुतः पाद-टिप्पण्यां शोभते । संपादकस्य प्रतिलिपिकर्तुर्वा अनवधानतया अस्थाने प्रयोगात् सन्देहजनिका सञ्जाता । उद्धृतवचनयोर्वक्ता मयूखकारो भट्टः श्रीनीलकण्ठो नास्त्येव । अपि तु संस्कारमयूखसम्पादकस्तत्परिष्कारकर्ता वा विज्ञायते । संस्कारमयूखस्य मौलिको लेखकः प्रथमशंकरभट्टात्मजो भट्टः श्रीनीलकण्ठ एव नास्त्यत्र विसंवादः । अन्यथा भगवन्तभास्करस्य द्वादशमयूखात्मताभङ्गप्रसङ्गा-पत्तिरुत्पत्स्यते । 'धर्मप्रकाशे तातचरणा' इति, 'श्राद्धमयूखे तातचरणा' इति वा—अनयोर्वक्ता यदि श्रीनीलकण्ठभट्ट एव स्वीक्रियते तर्हि धर्मप्रकाशस्य श्राद्ध-मयूखस्य च कर्तृत्वं प्रथमशंकरभट्टस्य ( श्रीनीलकण्ठभट्टजनकस्य ) सिद्ध्यति । तन्न प्रमाणाभावात् ।

धर्मप्रकाशे श्राद्धमयूखे वा 'तातचरणा' इत्यत्र श्रीनीलकण्ठभट्टस्य वक्तृत्वं स्वीक्रियेत चेत् धर्मप्रकाशस्य श्राद्धमयूखस्य च कर्तृत्वं प्रथमशंकरभट्टस्यैव

सिद्धयति । यदि च संस्कारमयूखस्य कर्ता द्वितीयः शंकरभट्टः स्वीक्रियते यो हि श्रीनीलकण्ठात्मजस्तर्हि धर्मप्रकाशस्य श्राद्धमयूखस्य च कर्तृत्वं श्रीनीलकण्ठ-भट्टस्य सिद्धयति । तथा हि श्रीनीलकण्ठभट्टस्य द्वादशमयूखकर्तृत्वं विनङ्क्ष्यति । उभयंविपत्तिवारणायेयमुक्तिः संस्कारमयूखस्य परिष्कार-कर्तुः, संपादकस्य, ग्रन्थलिपिकरस्य वा स्वीकृत्य पादटिप्पण्यां स्थाप्येत चेत् तदा संस्कारमयूखस्य श्राद्धमयूखस्य धर्मप्रकाशस्य च कर्तृत्वं श्रीनीलकण्ठभट्टस्यैव सिद्धयेत् । अन्यच्च उपर्युक्तमुद्रितसंस्कारमयूखस्य मुखपृष्ठे यल्लिखितं—'श्रीनीलकण्ठभट्ट-सुत शंकर-भट्टकृतः संस्कारमयूखः' तथा च अस्य ग्रन्थस्य समापन-( Colophon )-लेखे यल्लिखितं—'इति श्री···मीमांसक-भट्टशंकरात्मज-भट्टनीलकण्ठकृते भगवन्तभास्करे प्रथमः संस्कारमयूखः समाप्तः' इति । अनेन सह सुस्पष्टा विसं-गतिः । तस्मात् परस्परविसंगतिवारणायाऽपरिहार्यमेवेदं यद् ग्रन्थपरिष्कर्तुः सम्पादकस्य वाऽनवधानजन्यं भ्रमसूलकं मन्तव्यमिदं सुधीभिः । नान्यः पन्थाः ।

सत्यपि एककर्तृत्वे व्यवहारतत्त्वे व्यवहारमयूखे च यत्र तत्र विरोधोऽपि दृग्गोचरो जायते । यथा—( १ ) व्यवहारतत्त्वे उत्तराधिकारप्रकरणे मातृ-स्थानं पितुः पूर्वम् । व्यवहारमयूखे च सर्वथा एतद् विपरीतम् । ( २ ) व्यव-हारतत्त्वे—उत्तराधिकारप्रकरणे भगिनीकृते नास्ति किञ्चिदपि स्थानम् । किन्तु व्यवहारमयूखे भगिन्याः स्थानं गोत्रजोत्तराधिकारिणां मध्ये महत्त्वपूर्णं वर्तते । अत्र हेतुद्वयं प्रतिभाति । प्रथमं व्यवहारतत्त्वाऽऽख्यो ग्रन्थः मिताक्षराऽनुसारी विद्यते । अपरं च विज्ञानेश्वरोऽपि दाक्षिणात्यो वर्तते । भट्टः श्रीनीलकण्ठोऽपि दाक्षिणात्य एव ।

व्यवहारमयूखस्य च रचना उत्तरभारते स्थितस्य स्वाश्रयदातुः राज्ये प्रचलितलोकरीतिप्रभाविता प्रतिभाति । पौर्वात्यधर्मशास्त्रकाराः मातृतः पिता वरिष्ठः श्रेष्ठश्चेति मन्यन्ते । दाक्षिणात्यधर्मशास्त्रकाराश्चैतद्विपरीतं मन्यन्ते । एतेषां मते पितृतः मातृस्थानस्य प्राथम्यं, यतो माता गरीयसी । उत्तरे भारते दाक्षिणात्यादप्यधिकः प्रभावः पौर्वात्यधर्मशास्त्रकाराणां दरीदृश्यते । स च स्वाभाविक एव । तथाऽपि व्यवहारतत्त्वाऽऽख्यो ग्रन्थः मिताक्षरायाः संक्षेपमात्रं नास्ति । यतः उभयोर्मध्ये अन्तरङ्गक्रमो भिन्नः ।

सत्यपि भिन्नेऽन्तरङ्गक्रमे व्यवहारतत्त्वाऽऽख्यस्य ग्रन्थस्य कर्ता भट्टश्रीनील-कण्ठ एव, यतः व्यवहारतत्त्वे प्रतिप्रकरणान्ते समापनद्योतके लेखे (Colophon) ग्रन्थकारेण 'इति श्री शंकरभट्टात्मज-नीलकण्ठकृते व्यवहारतत्त्वे स्वामिपाल-विवादः' इति लिखितम् । एतत्सर्वं प्रमाणयति यत् व्यवहारतत्त्वस्य कर्ता भट्टः श्रीनीलकण्ठ एव ।

मयूखकारो भट्टः श्रीनीलकण्ठः पूर्वमीमांसाशास्त्रनिष्णातः स्मार्तशास्त्रनिष्ठः विवेकशीलः विनम्रः स्वतन्त्रविचारकः विदुषामादरकर्ता चासीत् । परस्पर-विरोधिभिः अत्रि-आङ्गिरस-देवल-याज्ञवल्क्य-मन्वादिभिः सह तथैव परवर्तिभिः टीकाकारैः मेधातिथि-हेमाद्रि-विज्ञानेश्वर-माधवादिभिश्च सहैव क्वचित् श्रीनीलकण्ठभट्टस्य मतभेदेऽपि तान्प्रत्यनादरं न व्यनक्ति । प्रत्युत यत्र कुत्र असामञ्जस्यं यदि प्रतीयते तत्र श्रीनीलकण्ठभट्टः सामञ्जस्यं प्रस्थापयितुं यतते । यत्र च असामञ्जस्यं दूरीकर्तुं न शक्यते तत्र तेषां वचनानां पुराकल्पीयत्वं प्रतिपाद्य समन्वयं स्थापयति ।

वर्तमानेऽपि वैचारिके मतभेदे श्रीनीलकण्ठभट्टः तान् प्रति सम्मानं प्रदर्शयन् स्वकीयं मतं निर्भयरीत्या प्रतिपादयति । श्रीनीलकण्ठभट्टकृता समालोचना निष्पक्षा सप्रमाणा तर्कसंगता बुद्धिग्राह्या शिष्टजनसम्मता च । सत्यान्वेषकस्य भूमिका यथा स्यात्तथैवास्योपक्रमः सर्वत्र प्रतीयते । दृढनिष्ठो भट्टः श्रीनीलकण्ठः स्पष्टवादी । कस्मादप्ययं न बिभेति । निर्भयः सन् स्वपितृमतमपि समालोचयति । अन्येषां का कथा ? प्रमाणाऽभावे स्वपितृमतमपि नाङ्गीकरोति । अस्य पिता नारायणभट्टात्मजः शंकरभट्टः उद्भटमीमांसको विदुषामग्रगण्यो द्वैतनिर्णयाख्यग्रन्थस्य लेखक आसीत् ।

नीलकण्ठीया लेखनशैली अद्भुता, हृदयग्राहिणी, स्पष्टवादिनी च । तथापि हृदयोद्वेगकारिणी नास्ति । यथा—'अत्र कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्या नृपक्रियाः' इति वाक्ये स्त्रीग्रहणं भार्यापरमभिप्रेत्य 'मातुलाद्यभावे आसुरादि-विवाहोढा-क्रियाकारिणीति तातचरणाः'—इत्युक्त्वा 'प्रमाणन्त्वत्र न जाने' इति कथितवान् । किञ्च यथा 'पितुः पुत्रेण कर्तव्यः' इत्यत्र पुत्रशब्देन द्वादश-विधपुत्रग्रहणं तथा पत्नीशब्देनाऽपि सकलविवाहोढा-ग्रहणमपि प्रतिभाति' इति वाराणसेय-संस्करणे श्राद्धमयूखे ( पृ० २५ ) कथयित्वा, अन्यच्च—'तात-चरणास्तु अयुतहोमादीनामेव प्राधान्यं ग्रहहोमस्त्वङ्गमित्याहुः तदाशयं न जाने' इति निरूपितवान् ( शान्तिमयूखे, पृ० ३८, वाराणसेये संस्करणे १९४३ ख्रीष्टाब्दे )।

श्रीनीलकण्ठभट्टस्य बहुज्ञता बहुमुखी प्रतिभा च प्रशंसार्हा । भगवन्तभास्करे अनेन षण्णवति ( ९६ ) संख्याकेभ्यः स्मृतिग्रन्थेभ्यः समुद्धरणानि प्रस्तुतानि, समालोचितानि च । अयन्तु गर्भकालादारभ्यैव पूर्वमीमांसासिद्धान्तान् हृदयङ्गमं चकार । यत्र तत्र चाऽयं सहजरीत्या पूर्वमीमांसापद्धतिमनुसृत्य विषयं प्रतिपादयति परमतं च खण्डयति । यत्र तत्र स महानुभावः 'वेदोऽखिलं धर्ममूलम्', 'वेदार्थनिर्णायकं शास्त्रं च पूर्वमीमांसाशास्त्रमिति केचित्' इति कथयित्वा

कुमारिलभट्टपादस्तु—'धर्मप्रतिपादकं शास्त्रं पूर्वमीमांसाशास्त्रमिति मन्यते'।[१] धर्मशास्त्रस्य पूर्वमीमांसया सह पूर्य-पूरक-सम्बन्धः। धर्मशास्त्रकाराणां वचनेषु यत्र तत्र परिदृश्यमानस्य विरोधस्य शास्त्र-युक्तिभ्यां तत्परिहारपूर्वकं परस्पर-समन्वयसंस्थापनमेव निबन्धकाराणां प्रधानं कार्यम्। धर्मशास्त्रीयनिबन्ध-काराणां साफल्यं सर्वथा पूर्वमीमांसाशास्त्रज्ञतामूलकमेव। श्रीनीलकण्ठभट्टस्तु पितृपरम्परानुरूपसर्वशास्त्रनिष्णातः, शास्त्रार्थकलापटुः, धर्मशास्त्रे चाऽप्रति-भटः, उद्भटश्चायं पण्डितः। श्रीनीलकण्ठभट्टस्य सार्वभौमपाण्डित्यं भगवन्त-भास्करे दृग्गोचरतां याति। अस्य व्यक्तित्वं कृतित्वञ्चाऽस्माभिर्विस्तृतरीत्या व्यवहारमयूखस्य शास्त्रीयविवेचने व्याख्यातन्तत्तत्रैव द्रष्टव्यम्। इति शम्।

श्री सत्यनारायणमन्दिरम्
म. म. मुसलगांवकर मार्गः
आगरानगरम् ( उ० प्र० )
श्रावण शु० पञ्चमी
वि० सं० २०४२

विद्वज्जनविधेयः—
**वेणीमाधव शास्त्री**

१. डॉ. गजाननशास्त्रि मुसलगांवकरमहोदयैर्लिखितो 'मीमांसाशास्त्रस्येति-हासः।'

श्रीनीलकंठभट्टसुतशंकरभट्टकृतः

# संस्कारमयूखः

( प्रथमः )

शेंडे उपाह्वैः पण्डितनरहरिशास्त्रिभिः
संशोधितः




## चौखम्बा संस्कृत प्रतिष्ठान

( प्राच्यभारती के प्रकाशक एवं वितरक )

३८ यू. ए., जवाहरनगर, बंगलो रोड

दिल्ली ११०००७

# संस्कारमयूखस्थविषयानुक्रमणिका ।

समाप्तेयमनुक्रमणिका ।

॥ श्रीभगवन्तभास्करे ॥

# संस्कारमयूखः ।

प्रथमः १.



## मङ्गलाचरणम् ।

यतः सर्वं विश्वं भजति जनिसत्तालयमिदं
य आत्मा सर्वेषां स्थिरचरजडानामपि विभुः ।
तमेतं भास्वन्तं विधिहरिमहेशानवपुषं
नमस्यामः कामं परमकमनीयं सुकृतिनाम् ॥ १ ॥

श्रीभास्करं शिवकरं शिरसा प्रणम्य श्रीनीलकण्ठपितरं जननीं च गङ्गाम्
तत्पादचिन्तनबलो बुधशङ्कराख्यः संस्कारभास्करममुं वितनोति काश्याम्।२॥

## निबन्धोपयोगी विचारः ।

तत्रास्य धर्मप्रमाणविवेचकत्वात्प्रथमं धर्मप्रमाणान्युच्यन्ते । तान्याह याज्ञवल्क्यः—

धर्मप्रमाणानि ।

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम् ॥ इति ।

सदाचारः श्रुतिस्मृत्यविरुद्धोऽदृष्टार्थो वसन्तोत्सवादिः । धर्मे मूलं प्रमाणमित्यर्थः । सम्यक्संकल्पाज्जातः कामो यथा भोजनव्यतिरेकेण जलं न पातव्यमिति । एतेषां च विरोधे पूर्वं पूर्वं बलीयः । तथा च प्रयोगपारिजाते संग्रहे—

श्रुतिस्मृतिपुराणेषु विरुद्धेषु परस्परम् ।
पूर्वं पूर्वं बलीयः स्यादिति न्यायविदो विदुः ॥

स्मृतिष्वपि मनुस्मृतिः प्रबला, इति । तथाचाङ्गिराः—

मन्वर्थविपरीता तु या स्मृतिः सा विनश्यति ॥ इति ।

विनश्यति अनादरणीयेत्यर्थः । तथा 'मनोर्ऋचः सामिधेन्यो भवन्ति'

---

१ सहसा पाठः ङ ।

इत्यस्य वाक्यशेषे श्रूयते—'यद्वै किंच मनुरवदत्तद्भेषजम्' इति ।

स्मृतिप्रवर्तका उक्ता याज्ञवल्क्येन—

मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसंवर्ताः कात्यायनबृहस्पती ॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रवर्तकाः ॥ इति ।

अन्येऽप्युक्ताः पैठीनसिना—

तेषां मन्वङ्गिरोव्यासगौतमात्र्युशनोयमाः ।
वसिष्ठदक्षसंवर्तशातातपपराशराः ॥
विष्ण्वापस्तम्बहारीताः शङ्खः कात्यायनो गुरुः ।
प्रचेता नारदो योगी बौधायनपितामहौ ॥
सुमन्तुकाश्यपौ बभ्रुः पैठीनो व्याघ्र एव च ।
सत्यव्रतो भरद्वाजो गार्ग्यः कात्यायनस्तथा ॥
जाबालिर्जमदग्निश्च लौगाक्षिर्ब्रह्मसंभवः ।
इति धर्मप्रणेतारः षट्त्रिंशदृषयः स्मृताः ॥

षट्त्रिंशदिति न परिसंख्या । तेन विश्वामित्रादीनामपि धर्मप्रणेतृत्वं सिद्धम् । एवमायुर्वेदादीनामपि स्मृतित्वम् । तत्र केचन दृष्टमूलाः केचन श्रुतिमूला अर्थाः । एवं पुराणादीनामपि । अस्माभिस्तु प्रामाणिकानां वराहमिहिरादीनां वचांसि प्रमाणत्वेनोपन्यस्यन्ते ।

संहिता उक्ता हेमाद्रौ भविष्यत्पुराणे—

भार्गवी नारदीया च बार्हस्पत्याङ्गिरस्यपि ।
स्वायंभुवस्य शास्त्रस्य चतस्रः संहिता मताः ॥

यत्तु सूतसंहितायाम्—

आद्या सनत्कुमारोक्ता द्वितीया सूतसंहिता ।
तृतीया शांकरी विप्राश्चतुर्थी वैष्णवी मता ।
तत्परा संहिता ब्राह्मी सौर्यन्त्या संहिता तथा ॥

इति संहिता उक्तास्ताः स्कान्दान्तर्गता न स्वतन्त्राः ।

अन्येऽपि संहिताकर्तारः कश्यपेन गणिताः—

सूर्यः पितामहो व्यासो वसिष्ठोऽत्रिः पराशरः ।
कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिराः ॥

रोमशः पौलिशिश्चैव च्यवनो यवनो भृगुः।
शौनकोऽष्टादशैवैते ज्योतिःशास्त्रप्रवर्तकाः॥ इति।

संहितालक्षणं च—

आदौ शास्त्रोपनयनं खेटचारोऽब्दलक्षणम्।
तिथिवासरनक्षत्रयोगतिथ्यर्थलक्षणम्[1]॥
मुहूर्तोपग्रहः सूर्यसंक्रातिर्गोचरक्रमः।
चन्द्रताराबलं चैव क्रियाः षोडशकर्मणाम्॥
नृपाभिषेचनं देवप्रतिष्ठा सद्मलक्षणम्।
अग्न्याधानं मेघगर्भनिखिलोत्पातलक्षणम्।
तच्छान्तिर्मिश्रकाध्यायस्तृतीयस्कन्धसंभवः॥

तृतीयस्कन्धः संहिता, संभवो रचना।

महापुराणान्युक्तानि वैष्णवे—

ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा।
तथाऽन्यं नारदीयं च मार्कण्डेयं च सप्तमम्॥
आग्नेयमष्टमं चैव भविष्यं नवमं तथा।
दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम्॥
वाराहं द्वादशं चैव स्कान्दं चात्र त्रयोदशम्।
चतुर्दशं वामनं च कौर्मं पञ्चदशं स्मृतम्॥
मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम्।
अष्टादश पुराणानि कीर्तितानि मया तव॥ इति।

उपपुराणानि कौर्मे—

अन्यान्यपि पुराणानि मुनिभिः कथितानि तु।
आद्यं सनत्कुमारोक्तं नारसिंहमतः परम्॥
तृतीयं नान्दमुद्दिष्टं कुमारेण तु भाषितम्।
दुर्वाससोक्तमाश्चर्यं नारदोक्तमतः परम्॥
कापिलं मानवं चैव तथैवोशनसेरितम्।
ब्रह्माण्डं वारुणं चैव कालिकाह्वयमेव च॥
माहेश्वरं तथा साम्बं सौरं सर्वार्थसंचयम्।
पराशरोक्तं प्रथमं तथा भागवताह्वयम्।
इदमष्टादशं प्रोक्तं पुराणं कौर्ममुत्तमम्॥

---

१ तिथ्यर्धं करणम्।

महापुराणमध्ये गणितानामप्युपपुराणेषु गणनायां न कोऽपि विरोधः। एकस्यैवोभयसंज्ञाकरणे विरोधाभावात्। इत्युपपुराणानि।

धर्मलक्षणं जैमिनिराह—चोदनालक्षणोऽर्थो धर्मः। विधिश्चोदनाशब्देनोच्यते। तत्प्रमाणक इत्यर्थः। धर्माधर्मयोरुपादानपरित्यागावुक्तौ स्कान्दे—

धर्माद्राज्यं धनं सौख्यमधर्माद्दुःखसंभवः।
तस्माद्धर्मं सुखार्थाय कुर्यात्पापं विसर्जयेत्॥

"धर्मेण पापमपनुदति" इति च श्रुतिः। धर्मश्च द्विविधः। श्रौतः स्मार्तश्च। श्रौतोऽग्निहोत्रज्योतिष्टोमादिः। स्मार्तोऽष्टकादिः। अस्मिंश्च ग्रन्थे स्मार्तधर्मः [अधि?] क्रियते।

अथ देशा विष्णुपुराणे—

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद्भारतं नाम भारती यत्र संततिः॥
अत्र जन्मसहस्राणां सहस्रैरपि सत्तम।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसंचयात्॥

मनुः—आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात्।
तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः॥

तयोर्हिमवद्विन्ध्ययोः। विष्णुर्विशेषमाह—

चातुर्वर्ण्यव्यवस्थानं यस्मिन्देशे न विद्यते।
तं म्लेच्छदेशं जानीयादार्यावर्तमतः परम्॥

मनुः—कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्ततः परः॥

तथा—सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते॥

तथा—हिमवद्विन्ध्ययोर्मध्ये यः प्राग्विनशनादपि।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः॥

विनशनं सरस्वत्याः। तथा—

कुरुक्षेत्रं च मत्स्याश्च पञ्चालाः शूरसैनिकाः।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तादनन्तरः॥
एतान्द्विजातयो देशान्संश्रयेयुः प्रयत्नतः।
शूद्रस्तु यस्मिन्कस्मिन्वा निवसेद्वृत्तिकर्शितः॥

एष धर्मस्य वै योनिः समासात्कथितः किल ।
सर्वपापहरः पुण्यसाधनं सर्वकर्मणाम् ॥'

अनन्तर ईषन्न्यूनः । मत्स्या विराटदेशाः । पञ्चालाः कान्यकुब्जदेशाः । शूरसैनिका मथुरादेशाः । व्यासः—

सर्वे शिलोच्चयाः पुण्याः सागराः सरितस्तथा ।
अरण्यानि च पुण्यानि विशेषान्नैमिषं तथा ॥

तथा—आर्यावर्तसमुत्पन्नो द्विजो वा यदि वाऽद्विजः ।
कर्मदां सिन्धुपारं च करतोयां न लङ्घयेत् ॥
आर्यावर्तमतिक्रम्य विना तीर्थक्रियां द्विजः ।
आज्ञां चैव तथा पित्रोरैन्दवेन विशुध्यति ॥ इति ।

इति निबन्धोपयोगी विचारः ।

---

## विनायकपूजनस्वस्तिवाचनादि ।

अथ संस्कारोपयोगि विनायकपूजनस्वस्तिवाचनाद्युच्यते ।

विनायकपूजनम् ।

गृह्यपरिशिष्टे—'आदौ विनायकः पूज्यः अन्ते तु कुलदेवताः ॥ तथा—अथ स्वस्तिवाचनमृद्धिपूर्तेषु । ऋद्धिर्विवाहान्ता अपत्यसंस्काराः, प्रतिष्ठोद्यापने पूर्ते, तत्कर्मणश्चाद्यन्तयोः कुर्यादिति । शौनकः—

स्वस्तिवाचनम् ।

पुण्याहवाचनविधिं वक्ष्यामोऽथ यथाविधि ।
प्रयोक्तुः कर्मणां चादावन्ते चोदयसिद्धये ॥ इति ।

व्यासः—संपूज्य गन्धमाल्याद्यैर्ब्राह्मणान्स्वस्ति वाचयेत् ।
धर्मकर्मणि माङ्गल्ये संग्रामेऽद्भुतदर्शने ।

तच्च प्रधानप्रयोगान्तर्गतमिति केचित् । प्रयोगबहिर्भूतमिति तु बहवः । तत्राद्ये प्रधानसंकल्पं कृत्वा तत्कार्यम् । द्वितीये तु तत्कृत्वा प्रधानसंकल्प इति प्रयोगरत्ने भट्टचरणाः ।

कर्मप्रदीपे—कर्मादिषु च सर्वत्र मातरः सगणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥
प्रतिमासु च शुद्धासु लिखित्वा वा पटादिषु ।
अपि वाऽक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः ॥
कुड्यलग्ना वसोर्धाराः सप्तवारं घृतेन तु ।
कारयेत्पञ्च धारा वा नातिनीचा न चोच्छ्रिताः ॥

आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः ।
षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ।। इति ।

मातरो गौर्यादयः षोडश । वसोर्धारादेवताः 'ब्राह्मी माहेश्वरी' इत्याद्याः सप्त स्मृत्यन्तरप्रसिद्धा ज्ञेयाः । षड्भ्य इति कातीयच्छन्दोगपरम् । अन्येषां तु नवदैवत्यम् ।

महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च ।
नवदैवतमत्रेष्टं शेषं षाट्पौरुषं विदुः ।।

इति हेमाद्रौ वचनादिति तातचरणाः । मम तु प्रतिभाति—

महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च ।
ज्ञेयं द्वादशदैवत्यं तीर्थे प्रोष्ठपदासु च ।।

इति द्वादशदैवत्यविधानात्पक्षत्रयमपि यथासंप्रदायं व्यवतिष्ठते इति ।

आभ्युदयिकापरपर्यायनान्दीश्राद्धनिमित्तान्याह लौगाक्षिः—

नान्दीश्राद्धम्। नामान्नचौलगोदानसीमोपनयपुंसवे ।
स्नानाधानविवाहेषु नान्दीश्राद्धं विधीयते ।

वृद्धगार्ग्यः—

अग्न्याधानाभिषेकादिष्विष्टापूर्ते स्त्रिया ऋतौ ।
वृद्धिश्राद्धं प्रकुर्वीत आश्रमग्रहणे तथा ।। इति ।

जाबालिः—'यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः ।।
पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् ।।

विष्णुपुराणेऽपि— कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः ।
नामकर्मणि बालानां चूडाकर्मणिके तथा ।।
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ।
नान्दीमुखं पितृगणमर्चयेत्प्रयतो गृही ।।

तथा—जातस्य जातकर्मादिक्रियाकाण्डमशेषतः ।
पुत्रस्य कुर्वीत पिता श्राद्धं चाऽभ्युदयात्मकम् ।।

जातकर्मादिक्रियाकाण्डमपत्यसंस्काराः । पुत्रस्येति पुंस्त्वमविवक्षितमनुवाद्यविशेषणत्वात् । तेन कन्याया अपि संस्काराङ्गमाभ्युदयिकं समन्त्रकमेव भवति । मन्त्रबाधे मानाभावात् । यत्तु पुंजातकर्मादिसंस्कारानुक्त्वा याज्ञवल्क्यवचः—'तूष्णीमेताः क्रियाः स्त्रीणा विवाहस्तु समन्त्रकः' । इति तत्प्रधानाङ्गमन्त्रबाधपरम् । यदि हि 'अप्स्ववभृथेन चरन्ति' इति तृतीयान्तेनेव साङ्गभावनामुक्त्वा तस्यां तूष्णीन्त्वं विधीयेत तदा स्याद(ङ्गा)ङ्गभूतम-

न्त्रबाधः । इह तु "यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्याः" इत्यत्रेष्टीनामिव क्रियाणां प्रथमान्तपदोपात्तत्वात्प्रधान एव तूष्णीन्त्वविधि-र्नाऽङ्गेऽपीति वृद्धिश्राद्धं समन्त्रकमेव भवतीति श्राद्धमयूखे तातचरणाः ।

यत्तु—'नानिष्ट्वा तु पितॄन् श्राद्धे कर्म वैदिकमारभेत्' तद्यत्र प्राति-स्विकवाक्ये नान्दीश्राद्धमुक्तं तत्रैवोपसंह्रियते । यद्वा वाक्यान्तरप्राप्तकर्मा-ङ्गत्वे एतत्पूर्वकालतामात्रमेव बोधयति न कर्माङ्गतामपि । अतो न संध्याव-न्दनादावतिप्रसङ्गः । पक्षद्वयेऽपि—

नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते ।
न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु ॥

इति कर्मप्रदीपवचोऽनुवादकमेव न निषेधकं प्राप्त्यभावात् । सोष्यन्ती-कर्म सुखप्रसवार्थम् । प्रोषितागते च पुत्रे पितुः कर्म छन्दोगपरिशिष्टे प्रसिद्धम् । अत एव—

नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयात्मकम् ।
पुत्रजन्मनि तत्कार्यं जातकर्मसमं नरैः ॥

इति मार्कण्डेयपुराणवचने नैमित्तिक-जातकर्मसम-पदाभ्यां पुत्रजन्मनि-मित्तकमेव श्राद्धं न तु जातकर्माङ्गमित्युक्तं संगच्छते ।

यत्तु हेमाद्रौ—'वृद्धिश्राद्धं तु कर्तव्यं जातकर्मादिकेषु वै ।' इति । तत्रापि जातकर्म आदौ येषामित्यतद्गुणसंविज्ञानबहुव्रीहिणा नामकर्मादीनामेव ग्रहणं न जातकर्मण इति । एवं च जातकर्मातिरिक्तसंस्कारेषु नान्दीश्राद्धस्याङ्गत्वे सिद्धे यदैकसंस्कार्यस्यानेकसंस्कारेष्वेककर्तृकेषु एकस्मिन्काले युगपदुप-स्थितेषु देशकालकर्त्रैक्याद्गृह्यमाणरूपतन्त्रन्यायादेव मातृपूजनाभ्युदयिकयोः सकृदनुष्ठाने प्राप्ते—

गणशः क्रियमाणेषु मातृभ्यः पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥

इति ब्राह्मवचनमनुवादकमेव न सकृत्त्वविधिपरम् । अन्ये तु—'अनेनैव न्यायेनानेकसंस्कार्याणां सजातीयविजातीयानेकसंस्कारेष्वपि सकृदेव तत्' इत्याहुः । तन्न । संस्कारजन्यचरमापूर्वाणामनेकसंस्कार्यनिष्ठत्वेन तदङ्गाभ्युद-यिकश्राद्धजन्याङ्गापूर्वाणामपि तन्निष्ठत्वस्यावश्यकत्वात् । न च तत्संभव-ति 'एकया सामग्र्यैकमेव कार्यं जन्यते' इति नियमस्य योगसिद्ध्य-धिकरणे स्थापितत्वान्न सकृदनुष्ठितेनाभ्युदयिकेनानेकापूर्वोत्पत्तिरिति अने-कसंस्कार्येषु पृथगेव वृद्धिश्राद्धमिति तातचरणाः ।

ननु सत्रादिष्वनेकयजमानगतान्यनेकान्यपूर्वाण्येकस्मात्सत्रप्रयोगादुत्पद्यन्त इत्युक्तनियमे व्यभिचाराद्प्रकृतेऽपि तथास्त्विति चेन्न[1]। तत्रापि स्वस्वात्मघटितसामग्रीभेदात् ।

एवं प्रधानावृत्त्या प्राप्ताया नान्दीश्राद्धावृत्तेरपवादः कर्मप्रदीपे—

असकृद्यानि कर्माणि क्रियेरन्कर्मकारिणा ।
प्रतिप्रयोगं नैताः स्युर्मातरः श्राद्धमेव च ॥ इति ।

तान्येव कर्माण्याह—

आधानहोमयोश्चैव वैश्वदेवे तथैव च ।
बलिकर्मणि दर्शे च पौर्णमास्यां तथैव च ।
नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः ॥
एकमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथक् ॥

असकृत्पुनः पुनः । प्रतिदिनं प्रतिमासं प्रत्यब्दं चेति यावत् । नवयज्ञो नवान्नेष्टिः । पूर्वश्लोकस्थकर्मशब्दस्योत्तरश्लोकपरिगणितेषु कर्मसूपसंहारस्तेनापरिगणितज्योतिष्टोमादिषु भवत्येव प्रतिप्रयोगं वृद्धिश्राद्धमिति तातचरणाः । होमादिनवयज्ञपर्यन्तेषु न पृथक् श्राद्धं किंत्वाधानादौ कृतमेव श्राद्धमुपकरोतीति केचित् । आभ्युदयिके कालमाह वसिष्ठः—

पूर्वेद्युर्मातृकं श्राद्धं कर्माहे पैतृकं तथा ।
उत्तरेद्युः प्रकुर्वीत मातामहगणस्य तु ॥
अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः ।
पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकम् ॥ इति ।

मातृपूर्वकमेव श्राद्धत्रयं विवृतमाश्वलायनेन—

माता पितामही चैव संपूज्या प्रपितामही ।
पित्रादयस्त्रयश्चैव मातुःपित्रादयस्त्रयः ।
एते नवार्चनीयाः स्युः पितरोऽभ्युदये द्विजैः ॥ इति ।

यत्तु वृद्धवसिष्ठवचनम्—

नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् ।
नाम संकीर्तयेद्विद्वानन्यत्र पितृपूर्वकम् ॥ इति ।

स्मृत्यर्थसारे च—

वृद्धमुख्यास्तु पितरो वृद्धिश्राद्धेषु भुञ्जते । इति ।

---

१ चेच्छृणु । तत्रापि पाठः ङ.

तदाश्वलायनान्यपरम् । आश्वलायनानां त्वाश्वलायनवचनादानुलोम्येन तन्मात्रादिपूर्वकमिति भट्टचरणप्रभृतयो बहवः। मात्रादीन्विशिनष्टि विष्णुः—

नान्दीमुखान्पितॄनादौ तर्पयेत्पितृदेवताः । इति ।

अत्र पितृशब्दो न जनकपरः किंतु सपिण्डीकरणजन्यपितृभावपरः । पितॄनिति बहुवचनात् । यत्तु ब्राह्मे—

पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयो ह्यश्रुमुखा एते पितरः संप्रकीर्तिताः ।
तेभ्यः पूर्वे त्रयो ये तु ते तु नान्दीमुखाः स्मृताः ॥ इति ॥

तन्महालयप्रकरणपठितत्वादिति हेमाद्र्यादयः ।

विभक्त्यादिविषये विशेषः प्रयोगरत्नसंग्रहे—

शुभाय प्रथमान्तेन वृद्धौ सं(सां ?)कल्पमाचरेत् ।
न षष्ठ्या यदि वा कुर्यान्महादोषोऽभिजायते ॥
अनस्मद्वृद्धशब्दानामरूपाणासगोत्रिणाम् ।
अनाम्नां चातिलाद्यैश्च नान्दीश्राद्धं च सव्यवत् ॥

कारिकायां च—

संबन्धनामरूपाणि वर्जयेदत्र कर्मणि ।

पिण्डदानव्यवस्थोक्ता भविष्यत्पुराणे—

पिण्डनिर्वपणं कुर्यान्न वा कुर्यान्नराधिप ।
वृद्धिश्राद्धे महाबाहो कुलधर्मानवेक्ष्य तु ॥ इति ।

पिण्डदानपक्षे विशेषमाह वृद्धवसिष्ठः—

दधिकर्कन्धुसंमिश्रान्पिण्डान्दद्याद्यथाक्रमम् ।

कर्कन्धुर्बदरीफलम् । एकैकस्मै पिण्डद्वयं वा देयम् ।

एकं नाम्नाऽपरं तूष्णीं तथा पिण्डद्वयं बुधः ॥

इति चतुर्विंशतिमतात् । अत्र कर्तृव्यवस्थोक्ता कात्यायनेन ।

स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु ।
पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात् ॥

तेषां सुतानामोद्वाहनात्प्रथमविवाहपर्यन्तं पिता स्वपितृभ्यः पिण्डदानोपलक्षितं वृद्धिश्राद्धं कुर्यात् । तस्य पितुरभावे तस्य संस्कार्यस्य पितॄणां यः क्रमस्तेन क्रमेण पितृव्यमातुलादिर्दद्यान्न स्वपितृभ्य इति हेमाद्रिः । अत्र पितुरभावो ध्वंस एव । नत्वत्यन्ताभावः । तथात्वे प्रतिनिधित्वादेव तदीयेभ्य एव पित्रादिभ्यो ददात्येवेति वचनवैयर्थ्यं स्यात् । तं पितरमारभ्य संस्कार्यस्य

पितॄणां यः क्रमस्तेन क्रमेण दद्यात्। तथा च तेषामिति तच्छब्देन स्वपितरः परामृश्यन्त इति व्याख्यानमयुक्तम्। तस्याभावे तेषां दद्यादित्यनेनैव साकाङ्क्ष्यात्तत्क्रमादित्यस्य वैयर्थ्यापत्तेः। ओद्वाहनादित्यत्र विशेषः सायणीये—

नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे पुनः।
अत ऊर्ध्वं सुतः कुर्यात्स्वयमेव तु नान्दिकम्॥ इति।

अत्र 'लक्षण्यां स्त्रियमुद्वहेत्', 'अरोगामुपयच्छेत' इत्यादौ साङ्गोद्वाहभावनायां वरस्य कर्तृत्वेन नान्दीश्राद्धेऽपि तत्कर्तृत्वं प्राप्तमपि पिण्डानोद्वाहनादित्यनेनापोदितमत ऊर्ध्वमित्यनेन प्रतिप्रसूयत इति विधिलाघवायात ऊर्ध्वमित्येव विधीयते न तु पिता कुर्यादित्यपि। तेन प्रथमोद्वाहे पितुरभावे वरः स्वयमेव कुर्यादित्युक्तम्।

जीवत्पिता कथं कुर्यादित्यपेक्षायामाह कात्यायनः—

वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः॥ इति।

ताते सतीति वृद्धितीर्थसंन्यस्तपतितपदैः प्रत्येकं संबध्यते। तत्रापि वृद्धौ तीर्थे चेत्यनेकनिमित्तसमावेशे वाक्यभेदापत्तेः 'अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि' इत्यन्तर्वेदिवहिर्वेदिपदे इव संधिदेशस्य, 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इति जातपुत्रादिपदानीव वयोविशेषस्य, वृद्धितीर्थपदे जीवत्पितृकाधिकारिकश्राद्धमात्रोपलक्षके इति श्राद्धमयूखे तातचरणाः। येभ्य एवेत्येवकारेण मृतमातृमातामहस्यापि तत्पार्वणे न भवत इति बोध्यम्।

पितामहप्रपितामहयोर्जीवतोर्विशेष उक्तो विष्णुपुराणे—'पितरि जीवति यः श्राद्धं कुर्यात्स येषां पिता कुर्यात्तेषां कुर्यात्पितरि पितामहे च येषां पितामहः, पितरि पितामहे प्रपितामहे च नैव दद्यात्' इति।

आश्वलायनानां विशेषस्तु गृह्यपरिशिष्टे—'जीवत्पिता सुतसंस्कारेषु मातृमातामहयोस्तस्यां जीवन्त्यां मातामहस्य कुर्यात्' इति। अत्रानयोरन्यतरजीवने तु स वर्गस्त्याज्यः। उभयोर्जीवने तु वर्गत्रयमपि पितृनिरूपितमेव। केचित्तु एतद्वचसाऽपि स्वीयमातृमातामहपार्वणे एव भवतो न पितृपार्वणमि(?)त्याहुरिति दिक्।

---

## संस्कारोद्देशः।

अथ संस्कारास्तानुद्दिशति गौतमः—'गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनानि चत्वारि वेदव्रतानि स्नानं सहधर्म-

चारिणीसंयोगः पञ्चानां यज्ञानामनुष्ठानमष्टका पार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्था अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टिर्निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्था अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्था इत्येते चत्वारिंशत्संस्काराः' इति । 'यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणाश्च स ब्राह्मणो ब्रह्मणः सायुज्यमाप्नोति ' इति । पार्वणः स्थालीपाकः । श्रावणी तत्र क्रियमाणं श्रवणाकर्म । आग्रहायणी तत्र क्रियमाणं प्रत्यवरोहणम् । चैत्री तत्र क्रियमाणः शूलगवः । आश्वयुजी तत्र क्रियमाणमाश्वयुजीकर्म । अष्टावात्मगुणाः । दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गल्यमकार्पण्यमस्पृहा ' इति ।

हारीतः—द्विविध एव संस्कारो भवति ब्राह्मो दैवश्च । गर्भाधानादिः स्मार्तो ब्राह्मः । पाकयज्ञा हविर्यज्ञाश्चेति दैवः । ब्राह्मेण संस्कारेण संस्कृत ऋषीणां सलोकतां गच्छति । दैवेनोत्तरेण संस्कृतो देवानां समानतां सलोकतां गच्छतीति ।

अङ्गिरास्तु पञ्चविंशतिसंस्कारानाह—

पञ्चविंशति-संस्काराः ।

गर्भाधानं पुंसवनं सीमन्तो बलिरेव च ।
जातकृत्यं नामकर्म निष्क्रमोऽन्नाशनं परम् ।।
चौलकर्मोपनयनं तद्व्रतानां चतुष्टयम् ।
स्नानोद्वाहौ चाग्रयणमष्टकाश्च यथायथम् ।।
श्रावण्यामाश्वयुज्यां च मार्गशीर्ष्यां च पार्वणम् ।
उत्सर्गश्चाप्युपाकर्म महायज्ञाश्च नित्यशः ।।
संस्कारा नियता ह्येते ब्राह्मणस्य विशेषतः ।
पञ्चविंशतिसंस्कारैः संस्कृता ये द्विजातयः ।
ते पवित्राश्च योग्याश्च श्राद्धादिषु सुयन्त्रिताः ।। इति ।

बलिर्विष्णुबलिः । आश्वलायनस्तु संज्ञाविशेषमप्याह—

नैमित्तिकाः षोडशोक्ताः समुद्वाहावसानकाः ।
सप्तैवाग्रयणाद्याश्च संस्कारा वार्षिका मताः ।।
मासिकं पार्वणं प्रोक्तमशक्तानां तु वार्षिकम् ।
महायज्ञाश्च नित्याः स्युः संध्यावच्चाग्निहोत्रवत् ।। इति ।

पार्वणं श्राद्धम् । मासिकं मासि मासि कर्तव्यम् । अशक्ताना वार्षिकं वर्षे एकवारं कर्तव्यमिति । संस्कारानुक्त्वा यमः—

शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः । इति ।

होमोऽपि द्विजानामेव ।

गार्भैर्होमैर्जातकर्मचूडामौञ्जिनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥

इति मनुवाक्ये द्विजग्रहणादिति धर्मप्रकाशे ।

बीजं शुक्रशोणिते तत्संबन्धि निषिद्धकालमैथुनादिप्रयुक्तं बैजिकम् । अशुचिगर्भकोशस्थितिजं गार्भिकम् । तदपगच्छतीति कुल्लूकभट्टः ।

बीजगर्भयोः पापनिमित्तत्वाभावादुभयसंसर्गादशुचित्वमात्रमेनःशब्दार्थो न पापमिति तु मेधातिथिः ।

विज्ञानेश्वरस्तु 'एवमेनः शमं याति बीजगर्भसमुद्भवम्' इत्येतद्व्याख्याने— 'गोत्रव्याधिसंक्रान्तिनिमित्तमेनो न तु पतितोत्पन्नत्वादि' इत्याह । पापनिरासार्थत्वाच्च नित्यतापि । याज्ञवल्क्यः—

ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।
निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ॥ इति ।

तेषां मन्त्रतः क्रिया इत्युक्तेः शूद्रस्यामन्त्रका इति गम्यते । तत्र तस्याध्ययनाभावात्तदङ्गभूतोपनयनवेदव्रतादीनां निवृत्तिः । जातकर्माद्याः स्त्रीणामप्यमन्त्रकाः—

तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः । इति स्मृतेः ।

अत्र चोपनयनान्तानामावश्यकत्वं न स्नानादीनाम् । तेन 'यमिच्छेत्तु तमावसेद्ब्रह्मचर्यादेव प्रव्रजेत्' इत्यादि संगच्छते । आश्वलायनेन तु 'उपनिषदि गर्भलम्भनं पुंसवनमनवलोभनं च' इत्यनवलोभनमप्युक्तम् । अन्येऽपि कर्णवेधादयः संस्कारा ज्योतिःशास्त्रोक्तास्तत्र तत्र वक्ष्यन्ते ।

इति संस्कारोद्देशः ।

---

## रजोदर्शनविचारः ।

तत्र गर्भाधानहेतुरजोदर्शने प्रशस्ताप्रशस्तकालानाह नारदः—

रजोदर्शने प्रशस्ताप्रशस्तकालः ।

कुलीरवृषचापान्त्यनृयुक्कन्यातुलाघटाः ।
राशयः शुभदा ज्ञेया नारीणां प्रथमार्तवे ॥

कुलीरः कर्कटः। चापो धनुः। अन्त्यो मीनः। नृयुक् मिथुनम्। घटः कुम्भः। स्मृतिचन्द्रिकायाम्—

पक्षफलम्। शुक्लपक्षे सुशीला स्यात्कृष्णे सा कुलटा भवेत्।
कृष्णस्य द्वादशीं[1] यावन्मध्यमं फलमादिशेत्॥

तत्रैव—अमारिक्ताष्टमीषष्ठीद्वादशीप्रतिपत्स्वपि।
वर्ज्यतिथ्यादि। परिघस्य च पूर्वार्धे व्यतीपाते च वैधृतौ।
संध्यासूपप्लवे विष्ट्यामशुभं प्रथमार्तवम्॥

उपप्लवो ग्रहणम्। तथा—

वारफलम्। रोगी प्रतिव्रता दुःखी पुत्रिणी भोगभागिनी।
पतिव्रता क्लेशयुक्ता सूर्यवारादिषु क्रमात्॥

नक्षत्रफलमाह गर्गः—

नक्षत्रफलम्। सुभगा चैव दुःशीला वन्ध्या पुत्रसमन्विता।
धर्मयुक्ता व्रतघ्नी च परसंतानमोदिनी॥
सुपुत्रा चैव दुःपुत्रा पितृवेश्मरता सदा।
दीना प्रज्ञावती चैव पुत्राढ्या चित्रकारिणी॥
साध्वी पतिव्रता नित्यं सुपुत्रा कष्टचारिणी।
स्वकर्मनिरता हिंस्रा पुण्या पौत्रादिसंयुता॥
नित्यं धनकथासक्ता पुत्रधान्यसमन्विता।
मूर्खाऽर्थाढ्या गुणवती दस्रर्क्षादेः क्रमात्फलम्॥

स्मृति रत्ने—शुभं चैव तु पूर्वाह्णे मध्याह्ने मध्यमं फलम्।
वेलाफलम्। अपराह्णे तु वैधव्यं पूर्वरात्रौ शुभं भवेत्।
मध्यरात्रे तु मध्यं स्यात्पररात्रे शुभान्विता॥

कश्यपः—मलिना मन्दवारे तु रात्रावपि तथैव च। इति।

तथा—अमासंक्रान्तिविष्ट्यां च व्यतीपाते च वैधृतौ।
परिघस्य च पूर्वार्धे षट् च गण्डातिगण्डयोः॥
योगफलम्। व्याघाते नव शूले तु नाड्यः पञ्चर्तुदर्शने।
वैधव्यमर्थहानिं च सुतनाशं महद्भयम्॥
वैधव्यं शत्रुवृद्धिं च दारिद्र्यं क्षीणजीवनम्।
तेजोहानिं समायाति सदा पुष्पवती क्रमात्॥

---

१ दशमीं पाठः ङ.।

स्थलविशेषेण फलमाह वसिष्ठः—

स्थानफलम्।

ग्रामाद्बहिः परग्रामे चेत्स्यात्सा व्यभिचारिणी।
पतिव्रता पतिस्थाने सुशीला गृहमध्यके॥
ग्राममध्ये च वृद्धिश्च विधवा च दिगम्बरा।
परागारे च दुःशीला आयुष्यं जलसंनिधौ।
धनमध्ये तु कन्या या धनधान्यसमृद्धिदा॥

परगृह इत्यनेन पित्रादिगृहमपि गृह्यते।

वस्त्रविशेषेण फलभेदमाह वसिष्ठः—

वस्त्रविशेषे फलभेदः।

सुभगा श्वेतवस्त्रा स्याद्दृढवस्त्रा पतिव्रता।
क्षौमवस्त्रा क्षितीशा स्यान्नववस्त्रा सुखान्विता॥
दुर्भगा जीर्णवस्त्रा स्याद्रोगिणी रक्तवाससा।
नीलाम्बरधरा नारी विधवा पुष्पिता यदि।
मलिनाम्बरतो नारी दरिद्रा स्याद्रजस्वला॥

दवरातः—

संमार्जनीकाष्ठतृणाग्निशूर्पान्हस्ते दधाना कुलटा तदा स्यात्।
तल्पोपभोगे तपसि स्थिता चेद्दृष्टं रजो भाग्यवती तदा स्यात्॥ इति।

इदं फलं प्रथमरजोदर्शन एव।

रजोबिन्दुफलमाह वसिष्ठः—

रजोबिन्दुफलम्।

वस्त्रे स्युर्विषमा रक्तबिन्दवः पुत्रमाप्नुयात्।
समाश्चेत्कन्यका चेति फलं स्यात्प्रथमार्तवे॥

शान्तिमाह नारदः—

कुयोगशान्तिः।

निन्द्यर्क्षतिथिवारेषु यदि पुष्पं प्रदृश्यते।
तत्र शान्तिं प्रकुर्वन्ति घृतदूर्वातिलाक्षतैः॥ इति।

शान्तिस्तु[१] शान्तिमयूखे वक्ष्यते। वसिष्ठः—

प्रभूतदोषं यदि दृश्यते तत्पुष्पं ततः शान्तिककर्म कार्यम्।
विवर्जयेद्देव तदैकशय्यां यावद्रजोदर्शनमन्यघस्रे॥

रजस्वलानियमाः।

दक्षः—आर्तवाभिप्लुता नारी नैकवेश्मनि संविशेत्।
न संसर्गं व्रजेत्सर्वैः स्नात्वा पापैः प्रमुच्यते॥
अञ्जनाभ्यञ्जने स्नानं प्रवासं दन्तधावनम्।
न कुर्यात्सार्तवा नारी ग्रहाणामीक्षणं तथा॥

---

१ शान्तिस्तु तातचरणकृतशान्तिमयूखे ज्ञेयेति पाठः ङ.।

नखानां कृन्तनं रज्जुतालपत्रादिबन्धनम् ।
दग्धे शरावे भुञ्जीत पेयं चाञ्जलिना पिबेत् ।।

वसिष्ठः—'त्रिरात्रं रजस्वलाऽस्नानाऽशुचिर्भवति । नाञ्ज्यान्नाभ्यञ्ज्या-न्नाप्सु स्नायादधः शयीत न दिवा स्वप्यान्नाग्निं स्पृशेन्न रज्जुं सृजेन्न दन्ता-न्धावयेन्न मांसमश्नीयात्' इति ।

चतुर्थदिने च स्नानादिना शुद्धा । तथा च स्मृत्यर्थसारे—'ब्राह्मणी रज-स्वला चतुर्थेऽह्नि षष्टिमृत्तिकाभिः शौचं कृत्वा क्षत्रियादिस्त्री पादपादन्यून-मृत्तिकाभिर्विधवा द्विगुणाभिः शौचं कृत्वा मलं प्रक्षाल्य सचैलं सङ्गवे स्नायात्' इति । अतः सूर्योदयात्पूर्वं स्नानाचरणं दुराचार एव ।

।। इति रजस्वलानियमाः ।।

प्रथमर्तौ तु विशेषः स्मृतिचन्द्रिकायां स्मृत्यन्तरे—

प्रथमर्तौ तु पुष्पिण्याः पतिपुत्रवतीस्त्रियः ।
अक्षतैरासनं कुर्यात्तस्मिंस्तामुपवेशयेत् ।।
हरिद्रागन्धपुष्पादीन्दद्यात्ताम्बूलकं स्रजम् ।
आशिषो वाचयेयुस्ताः पतिपुत्रवती भव ।।
दीपैर्नीराजनं कुर्यात्सदीपे वासयेद्गृहे ।
लवणापूपमुद्गादि दद्यात्ताभ्यः स्वशक्तितः ।। इति ।

---

## गर्भाधानम् ।

अथ गर्भाधानम् । तच्च ऋतौ कार्यम् । तदाह याज्ञवल्क्यः—

षोडशर्तुनिशाः स्त्रीणां तस्मिन्युग्मासु संविशेत् ।
ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत् ।।

निशाग्रहणं दिवसनिषेधार्थम् । तथा च श्रुतिः—"प्राणं वा एते प्रस्क-न्दन्ति ये दिवा रत्या संयुज्यन्ते ब्रह्मवर्चसमेव तद्यद्रात्रौ संयुज्यन्ते" इति । शङ्खलिखितावपि—'नार्तवेऽपि दिवा व्रजेत्' इति । आद्याश्चतस्र इति चतुर्थदिने रजसोऽनिवृत्तौ ज्ञेयम् । रजोनिवृत्तौ तु देवलः—तस्मात्त्रिरात्रं दारान्वै पुष्पितान्परिवर्जयेत् ।। इति ।

हिरण्यकेशिसूत्रमपि—'चतुर्थ्यां स्नातां प्रयतवस्त्रामलंकृतां ब्राह्मणसं-भाषामाचम्योपह्वयते' इति । ब्राह्मणसंभाषां प्रशस्तब्राह्मणेन कृतसंभाष-णाम् । आपस्तम्बः—

स्नानं रजस्वलायास्तु चतुर्थेऽहनि शस्यते ।
गम्या निवृत्ते रजसि नानिवृत्ते कथंचन ।। इति ।

युग्मासु फलमाह मनुः—

युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु । इति ।

एकस्यां सकृदेव गच्छेत् । यथोक्तम्—

एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत् ।
सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान् ।। इति ।

सुस्थे एकादशादिस्थानस्थिते । क्षामता चास्निग्धभोजनादिना कार्या रजःक्षयार्थम् । यथोक्तम्—

पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः । इति ।

तत्र युग्मासु शोणिताधिक्ये पुरुषाकृतिः स्त्री अयुग्मासु शुक्राधिक्ये स्त्र्याकारः पुमानिति ज्ञेयम् । शुक्रशोणितयोरुपादानकारणत्वात् । ब्रह्मचार्येवेति यत्र ब्रह्मचर्यं विहितं श्राद्धभोजनादौ तत्र गमने न दोषः ।

पर्वाणि विष्णुपुराणे—

पर्वाणि । चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ।।

ऋतावगमने दोषमाह पराशरः—

अगमने दोषः । ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ।। इति ।

क्वचित्स्वस्थः सन्निति पाठः । अथ गमने निषिद्धकालाः । मनुः—

गमने निषिद्धकालः । अमावास्यामष्टमीं च पौर्णमासीं चतुर्दशीम् ।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः ।। इति ।

ज्योतिःशास्त्रे—

पित्र्यं पौष्णं नैर्ऋतं चैव धिष्ण्यं त्यक्त्वा नारीं सुप्रसन्नः प्रसन्नाम् ।
पुष्टः क्षामां पुत्रकामोऽभिगच्छन्सल्लक्षण्यं पुत्रमाप्नोति पित्र्यम् ।।

यौगपद्ये देवलः—

बहुपरिग्रहवतो विशेषः । यौगपद्ये तु तीर्थानां विप्रादिक्रमशो व्रजेत् ।
रक्षणार्थमपुत्रां वा ग्रहणक्रमतोऽपि वा ।। इति ।

तीर्थं रजः । विशेषमाह याज्ञवल्क्यः—

यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन् । इति ।

यथाकामी ऋतुं विनापि स्त्रीकामनायां स्त्रियमभिरमयेत् । एवं च ।

ऋतुं नोपैति यो भार्यामनृतौ यश्च गच्छति ।
तुल्यमाहुस्तयोः पापमयोनौ यश्च सिञ्चति ।। इति ।

बौधायनीयेऽनृतुगमननिषेधः स स्त्रिया अकामनायां ज्ञेयः ।

गर्भिणीगमनमप्यनुजानात्यत्रिः—

गर्भिणी गमने । षण्मासात्कामयेन्मर्त्यो गर्भिणीं स्त्रियमेव हि ।
आदन्तजननादूर्ध्वमेवं धर्मो न हीयते ।। इति ।

बालके जाते तस्य दन्तजननादूर्ध्वं गच्छेदित्यर्थः । स्त्रीणामप्यगमने दोष इति हेमाद्रौ—

ऋतुस्नाता तु या नारी भर्तारं नोपगच्छति ।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं तु विवासयेत् ।। इति ।

अत्र—ऋतुकालाभिगामी स्याद्यावत्पुत्रोऽभिजायते ।।

इति कूर्मपुराणवाक्येनैव पुत्रोत्पादनेन शास्त्रार्थस्य कृतत्वादानृण्ये च जाते न पुत्रान्तरोत्पादनमावश्यकमिति केचित् । तन्न । यद्यप्यानृण्यं जातं तथापि एकपुत्रनिन्दापूर्वकं बहुपुत्रप्राशस्त्यमुक्तं भारते—

अपत्यं तु ममैवैकं कुले महति भारत ।
अपुत्रतैकपुत्रत्वमित्याहुर्धर्मवादिनः ।।
चक्षुरेकं च पुत्रश्च अस्ति नैव च भारत ।
चक्षुर्नाशे तनोर्नाशः पुत्रनाशे कुलक्षयः ।। इति ।

तथा 'ऋतुस्नातां तु यो भार्याम्' इत्यस्य एकपुत्रानन्तरमृतौ जाते प्रत्यविधानात् । तथार्थवादोऽपि—

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ।। इति ।

अतो बहुपुत्रोत्पत्तिरप्रतिषेधात्प्राशस्त्याच्च कर्तव्या ।

आश्वलायनः—

गुर्विणीपतिधर्माः । वपनं मैथुनं तीर्थं वर्जयेद्गुर्विणीपतिः ।
श्राद्धं च सप्तमान्मासादूर्ध्वं चान्यत्र वेदवित् ।।

श्राद्धं श्राद्धभोजनमिति केचित् । अत्र प्रमाणं मृग्यम् । अन्यत्कालविधानव्याख्योक्तम् । सप्तमान्मासादिति सर्वत्र ज्ञेयम् ।

क्षौरं शवानुगमनं नखकृन्तनं च श्राद्धं च वास्तुकरणं त्वतिदूरयानम् ।

उद्वाहमम्बुधिजले गमनं तथैवमायुःक्षयं भवति गर्भिणिकापतीनाम् ।। क्वचित्तु 'उद्वाहमौपनयनं जलधेश्च गाहम्' इति पाठः । ज्योतिषरत्ने गालवः—

दहनं वपनं चैव चौलं वै गिरिरोहणम् ।
नाव आरोहणं चैव वर्जयेद्गुर्विणीपतिः ।।
प्रव्यक्तगर्भापतिरब्धियानं मृतस्य वाहं क्षुरकर्म सङ्गम् ।
तस्यां तु यत्नेन गयादितीर्थं यागादिकं वास्तुविधिं न कुर्यात् ।।

आयुःक्षयं तत्साधनम् ।

अथ गुर्विणीनियमाः । पद्मपुराणे दितिं प्रति काश्यपः—

नावस्करेपूपविशेन्मुसलोलूखलादिषु ।
जलं च नावगाहेत शून्यागारं च वर्जयेत् ।।
विलिखेन्न नखैर्भूमिं नाङ्गारेण न भस्मना ।
न शयालुः सदा तिष्ठेद्व्यायामं च विवर्जयेत् ।।
न तुषाङ्गारभस्मास्थिकपालेषु च संविशेत् ।
वर्जयेत्कलहं लोकैर्गात्रभङ्गं तथैव च ।।
न शयीतोत्तरशिरा नचैवाधःशिराः क्वचित् ।
न वस्त्रहीना नोद्विग्ना न चार्द्रचरणा सती ।।

गुर्विणी-नियमाः ।

मात्स्ये—संध्यायां हि न भोक्तव्यं गर्भिण्या वरवर्णिनि ।
न स्थातव्यं न गन्तव्यं वृक्षमूलेषु सर्वदा ।।
न शयालुः सदा तिष्ठेत्खट्वाछायां विवर्जयेत् ।
सर्वौषधीभिः कोष्णेन वारिणा स्नानमाचरेत् ।।
कृतरक्षा सुभूषा च वास्तुपूजनतत्परा ।
दानशीला तृतीयायां पार्वत्या भक्तिमाचरेत् ।।
गर्भिणी कुञ्जराश्वादिशैलहर्म्यादिरोहणम् ।
व्यायामं शीघ्रगमनं शकटारोहणं त्यजेत् ।।
शोकं रक्तविमोक्षं च साध्वसं कुक्कुटासनम् ।
व्यवसायं दिवा स्वापं रात्रौ जागरणं त्यजेत् ।।
अतिक्षारं तु नाश्नीयादत्यम्लमतिभूरि च ।
अत्युष्णमतिशीतं च गुर्वाहारं परित्यजेत् ।।
यस्तु तस्या भवेत्पुत्रः स्थिरायुर्वृद्धिसंयुतः ।
अन्यथा गर्भपतनं सा चाप्नोति न संशयः ।। इति ।

यात्राविषये बृहस्पतिः—

चतुर्थे मासि षष्ठे वाऽप्यष्टमे गर्भिणी यदा ।
यात्रां नित्यं विवर्ज्या स्यादाषाढे तु विशेषतः ॥

चतुर्थात्षष्ठाष्टमादारभ्येत्यर्थः । इदं च समर्थासमर्थस्त्रीपरम् । अत्यसमर्थायास्तु चतुर्थमासादारभ्यैव यात्रा वर्ज्येत्यर्थः । आषाढे तु सर्वमासेषु ।

दोहदमप्यवश्यं प्रदेयमित्याह याज्ञवल्क्यः—

दोहदस्याऽप्रदानेन गर्भो दोषमवाप्नुयात् ।
वैरूप्यं मरणं वापि तस्मात्कार्यं प्रियं स्त्रियाः ॥

प्रयोगपारिजाते संग्रहे—

गर्भिणीवाञ्छितं द्रव्यं तस्यै दद्याद्यथोदितम् ।
सूते चिरायुषं पुत्रमन्यथा दोषमर्हति ॥

इति गर्भाधानम् ।

---

## पुंसवनम् ।

अथ पुंसवनम् । याज्ञवल्क्यः—

कालः । गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा । इति ।

गर्भचलनकालः शारीरके—'तस्माच्चतुर्थे मासि चलनादावभिप्रायं करोति' इति । पारस्करः—

'मासे द्वितीये तृतीये वा यदहः पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्' इति । पुंनक्षत्राणि तु [वासरे]—

हस्तो मूलः श्रवणः पुनर्वसुर्मृगशिरास्तथा पुष्यः ।
पुंसंज्ञकेषु कार्येष्वेतानि शुभानि धिष्ण्यानि ॥

नारदीये—रोहिणीभाद्रपदाद्वयमुक्तम् । वासिष्ठे च स्वात्यनुराधाश्विन्यः ।

विशेषमाह जातूकर्ण्यः—

द्वितीये वा तृतीये वा मासि पुंसवनं भवेत् ।
व्यक्ते गर्भेऽथवा कार्यं सीमन्तेन सहाऽथ वा ॥ इति ।

व्यक्ते अन्येनानुक्तेऽपि ज्ञातुं शक्ये । अत्र सति संभवे शुक्रास्तमलमासादिवर्ज्यमसंभवे तत्रापि कार्यमावश्यकत्वात् । इदं च चन्द्रताराबले कार्यम् । पुंसवनं प्रकृत्य—

---

१ वा सप्तमे पाठः ङ. । २ यात्रां विवर्जयेन्नित्यमाषाढे इति पाठः ङ. ।

चतुर्थे मासि षष्ठे वाऽप्यष्टमे वा तदीश्वरे[1] ।
बलोपपन्ने दम्पत्योश्चन्द्रताराबलान्विते ॥

इति नारदवचनात् । इदं च पुमान्सूयतेऽनेनेति व्युत्पत्त्या कर्मनामधेयम् । तच्च कर्म यवसहितमाषद्वययुक्तदधिप्राशनम् । अत्र कांश्चित्कालान्निषेधति बृहस्पतिः—

कुलीरं मिथुनं कन्यां हित्वा शेषाः शुभावहाः । इति ।

इति पुंसवनम् ।

## अनवलोभनम् ।

अथानवलोभनम् । बैजवापगृह्ये—'अथ पुंसवनानवलोभने करोति मासि द्वितीये वा तृतीये वा' इति । इदं च पुंसवनदिन एव तदुत्तरं कार्यम् । पुंसवनमुक्त्वा 'अथास्यै मण्डलागारच्छायायामजीतामोषधीं नस्तः करोति' इत्याश्वलायनगृह्ये क्रमाम्नानात् । इदमपि न अवलुप्यते गर्भोऽनेनेति व्युत्पत्त्या गर्भाविनाशफलकं यन्नस्यरूपं कर्म तस्य नामधेयम् । भकारश्छान्दसः । तथा च मन्त्रलिङ्गमाह—"पौत्रमघं मा नियाम्" इति । पुत्रसंबन्धि अघं पापं मा नियां मा प्राप्नुयामिति । एवं च नाशकारणपापाभावाद्गर्भानाश इति । एते च कर्मणी गर्भसंस्कारत्वात्प्रतिगर्भमावर्तेते इति नारायणः । तन्मते—

कालः ।

सकृत्सुसंस्कृता नारी सर्वगर्भेषु संस्कृता ।

इति देवलवाक्यं सीमन्तोन्नयनविषयमेवेति प्रतीमः । विज्ञानेश्वरस्तु पुंसवनस्यापि सकृदनुष्ठानमिच्छति । तत्र युक्तिश्चिन्त्या । इत्यनवलोभनम् ।

## सीमन्तोन्नयनम् ।

अथ सीमन्तोन्नयनम् । आपस्तम्बः—'सीमन्तोन्नयनं प्रथमे[2] गर्भे चतुर्थे मासि' इति । साङ्ख्यायनगृह्येऽपि—'सप्तमे मासि प्रथमे गर्भे सीमन्तोन्नयनम्' इति । याज्ञवल्क्यः—'षष्ठेऽष्टमे वा सीमन्तः' इति । आश्वलायनः—'आपूर्यमाणपक्षे यदा पुंसा नक्षत्रेण चन्द्रमा युक्तः स्यात्' इति । आपूर्यमाणपक्षः शुक्लपक्षः । पुंनक्षत्राण्युक्तानि । इदं च

कालः ।

१ तदीश्वरे—चतुर्थषष्ठाष्टममासेश्वरे । उक्तं च वसिष्ठेन—'सितावनेयामरपूज्यसूर्यचन्द्रार्किसौम्योदयपेन्दुसूर्याः । मासाधिपाः स्युः क्रमशो दशैते निपीडितो नाशयति स्वमासि' इति ।
२ प्रथमगर्भे इति पाठः ङ. ।

सकृदेव कार्यम्। प्रथमे गर्भ इति सांख्ययनापस्तम्बोक्तेः। स्त्रीसंस्कारत्वाच्च 'सकृत्सुसंस्कृता नारी सर्वगर्भेषु संस्कृता।' इति वचनप्रवृत्तेः।

यत्तु स्मृतिचन्द्रिकायां विष्णुः—

सीमन्तोन्नयनं कर्म तत्स्त्रीसंस्कार इष्यते।
केचिद्गर्भस्य संस्काराद्गर्भे गर्भे प्रयुञ्जते॥ इति।

तत्र केचिद्वृद्धा(चिदित्युक्तत्वा?)दनादरः स्पष्टः। हारीतस्तु स्पष्टमेवाह—

सकृत्संस्कृतसंस्काराः सीमन्तेन द्विजस्त्रियः।
यं यं गर्भं प्रसूयन्ते स सर्वः संस्कृतो भवेत्॥ इति।

इदं च दैवज्ञोदिते शुभमुहूर्ते कार्यम्। यथाह गर्गः—

सीमन्तोन्नयनं कार्यं शुभांशे शुभलग्नके।
कुलीरमृगकन्याश्च वर्ज्याः शेषाश्च शोभनाः॥ इति।

अत्रापि शुक्रास्तादिव्यतिरिक्तकाललाभे न तत्र कार्यमन्यथाऽस्तादावपीति नियतकालत्वात्। सीमन्ते च भोक्तुर्दोषमाह धर्मप्रकाशे धौम्यः—

ब्रह्मौदने च सोमे च सीमन्तोन्नयनेऽथ वा।
जीव[1]श्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत्॥ इति।

ब्रह्मौदनमाधानाङ्गभूतं, जातश्राद्धं पुत्रे जाते वृद्धिश्राद्धम्।

अजातसीमन्तायाः प्रसूतौ सत्यव्रत आह—

स्त्री यदाऽकृतसीमन्ता प्रसूयेत कदाचन।
गृहीतपुत्रा विधिवत्पुनः संस्कारमर्हति॥

पुनः पादपूरणार्थम्। यः संस्कारोऽतिक्रान्तः स कर्तव्य इत्यर्थः।

इति सीमन्तोन्नयनम्।

---

सूतिकागृहमाह वसिष्ठः—

ऐन्द्रे तु विक्रमस्थानमाग्नेये सूतिकागृम्।
सूतिकागृहम्। याम्यायां शयनस्थानं वायव्यां पशुमन्दिरम्।
कौबेर्यां तु धनस्थानमैशान्यां देवतालयः॥ इति।

पद्मपुराणे पारस्करः—

प्रविशेत्सूतिकागारं कृतरक्षं समन्ततः।
प्राग्द्वारमुत्तरद्वारमथवा सुदृढं शुभम्॥
देवानां ब्राह्मणानां च गवां कृत्वा च पूजनम्।

---

१ अत्र 'जातश्राद्धे' इति पाठोऽवगम्यते, अग्रे तस्य व्याख्यातत्वात्।

एरण्डमूलचूर्णेन सघृतेन तथैव ताम् ।
सुखप्रसवनार्थाय पश्चात्कायेऽनुलेपयेत् ।। इति ।

---

## जातकर्म ।

अथ जातकर्म । तत्र पितुः पुत्रे जाते स्नानमाह संवर्तः—

पुत्रजनने कर्तव्यम्। जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते । इति ।

इदं च शीताद्भिः कार्यम् । तदाह जाबालिः—

कुर्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च । इति ।

इदं च रात्रावपि कार्यमित्याह—

रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः ।
नैमित्तिके च कुर्वीत स्नानं दानं च रात्रिषु ।। इति ।
ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च ।
दानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति ।। इति ।

संवर्तः—माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ।

जैमिनिः—यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् ।
छिन्ने नाले ततः पश्चात्सूतकं च विधीयते ।। इति ।

अस्मान्नालछेदोत्तरमेवाशौचप्रवृत्तिरिति भाति । प्राञ्चस्तु 'यावन्न छिद्यते नालं तावच्छिशुमृतौ पूर्ण सूतकं नाप्नोति । नालच्छेदोत्तरं तु शिशुमृतौ संपूर्ण प्राप्नोति' इति व्याचख्युः । एवं च ज्ञायते तेषां जन्मोत्तरमेवाशौचप्रवृत्तिरिष्टेति । युक्तं चेदम् । आशौचं जननोत्तरमेव प्रवर्तते । जातकर्मवृद्धिश्राद्धदानादौ तु तात्कालिकी शुद्धिर्वचनेन बोध्यते । 'कर्तुस्तात्कालिकी शुद्धिः' इतिवत् । एवं च स्नानोत्तरं संध्यादिकं न भवत्येवेति दिक् । दानार्थं दिनमनुज्ञातमादिपुराणे—

देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् ।
आयान्ति तस्मात्तदहः पुण्यं पूज्यं च सर्वतः ।
तत्र दद्यात्सुवर्णं तु भूमिं गां तुरगं रथम् ।। इति ।

पुत्रमुखावलोकनस्य फलमाह वसिष्ठः—

जातमात्रकुमारस्य मुखमस्यावलोकयेत् ।
पिता ऋणाद्विमुच्येत पुत्रस्य मुखदर्शनात् ।। इति ।

आशौचान्तरेऽपि पुत्रे जाते तात्कालिकीं शुद्धिमाह प्रजापतिः—

सूतके तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।
कर्तुस्तात्कालिकीशुद्धिः—।। इति ।

जातकर्मणि प्रधान(कृत्य)माहाऽऽश्वलायनः—'कुमारं जातं पुराऽन्यैरालम्भात्सर्पिर्मधुनी हिरण्यनिकाषं हिरण्येन प्राशयेत्' इति। कात्यायनसूत्रे तु विशेषः—'अनामिकया सुवर्णान्तर्हितया मधुघृते प्राशयति घृतं च' इति ।

तत्कालमाह गर्गः—

जातमात्रकुमारस्य जातकर्म विधीयते ।
स्तनप्राशनतः पूर्वं नाभिकर्तनतोऽपि वा ।। इति ।

पूर्वमित्यर्थः ।

मनुः—प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ।
मन्त्रवत्प्राशयेदस्य हिरण्यं मधुसर्पिषा ।। इति ।

वर्धनं छेदः । अत्र पुंस्त्वमविवक्षितमनुवाद्यविशेषणत्वादिति केचित् । मेधातिथिस्तु विवक्षितमेव पुंस्त्वं तेन नपुंसकस्य न भवति स्त्रिया वाक्यान्तरप्राप्तत्वादमन्त्रकं भवत्येवेत्याह ।

अत्र च वृद्धिश्राद्धमामेन कार्यमित्याह प्रचेताः—

स्त्री शूद्रः श्वपचश्चैव जातकर्मणि चाप्यथ ।
आमश्राद्धं सदा कुर्याद्विधिना पार्वणेन तु ।

हेमाद्रिस्तु हेम्नैवाऽऽह—

पुत्रजन्मनि कुर्वीत श्राद्धं हेम्नैव बुद्धिमान् ।
न पक्वेन न चामेन कल्याणान्यभिकामयन् ।।

इतिसंवर्तोक्तेः । अत्र नैमित्तिककाम्यभेदेनाऽऽमहेमव्यवस्था द्रष्टव्या । यदा तु पुत्रजन्म मूलादिनक्षत्रेषु तदा मुखावलोकनजातकर्मादि शान्तिं विना न कुर्यात् । एवं संक्रान्तिविष्ट्यादावपि । शान्तिस्तु[1] शान्तिमयूखे वक्ष्यते । पुरुषापराधेन काले जातकर्माननुष्ठाने कालान्तरमाह बैजवापः—

जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि ।
दैवादतीतकाले चेदतीते सूतके भवेत् ।। इति ।

अस्य फलमाहाश्वलायनः—

गर्भाम्बुपानदोषाणामपनुत्त्यै शिशुं पिता ।
प्राशयेन्मधुना सार्धं साज्यं हैमरसं शुभम् ।। इति ।

स्त्रीणामप्येतदमन्त्रकं कार्यम् । इति जातकर्म ।

दशदिनमध्ये विशेषमाह व्यासः—

सूतौ दशदिनकृत्यम् ।

सूतिकावासनिलया जन्मदा नाम देवताः ।
तासां यागनिमित्तं तु शुद्धिर्जन्मनि कीर्तिता ।।

---

१ शान्तिस्तु तातचरणकृतशान्तिमयूखतो ज्ञेयेति पाठः ङ. ।

प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा ।
त्रिष्वाशौचं न कुर्वीत सूतके पुत्रजन्मनि ।। इति ।
दद्यात्तु प्रथमे हेम षष्ठे वा सप्तमेऽपि वा ।
बलिदानं तु दशमे स्वर्णदानं प्रशस्यते ।। इति ।

अत्राशौचाभावो दानादिविषय एव न संध्यादिविषये ।

मार्कण्डेयोऽपि—रक्षणीया तथा षष्ठी निशा तत्र विशेषतः ।
रात्रौ जागरणं काय जन्मदानां तथा बलिः ।।
पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः ।
रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके ।।

नारदोऽपि—जननात्सप्तमे चान्हि मृत्युरायाति घातकः ।
दिने दिने च रक्षेयं कर्तव्यायुर्विवृद्धये ।।

इति प्रथमादिदिनकृत्यम् ।

---

## नामकरणम् ।

आश्वलायनगृह्ये जातकर्मोत्तरं कालान्तरमनुक्त्वा—'नाम चास्मै दद्युर्घोषवदाद्यन्तरन्तस्थमभिनिष्ठानान्तं द्व्यक्षरं चतुरक्षरं वा द्व्यक्षरं प्रतिष्ठाकामश्चतुरक्षरं ब्रह्मवर्चसकामो युग्मानि त्वेव पुंसामयुग्मानि स्त्रीणामभिवादनीयं च समीक्षेत तन्मातापितरौ विद्यातामोपनयनात्' इतिनामकरणमुक्तम् । तेन ज्ञायते—जातकर्मोत्तरमेव कालः ।

अस्यार्थः—वर्गाणां प्रथमद्वितीयाः जिह्वामूलीयोपध्मानीयौ शषसाश्चेत्यघोषा अन्ये घोषवन्तः । यरलवा अन्तस्थाः । अभिनिष्ठानो विसर्जनीयः । अक्षराणि स्वराः । पुनर्युग्मानीतिग्रहणं षडक्षरादिग्रहणार्थम् । अभिवादनीयसवकहडचक्रप्रमाणेन नाक्षत्रम् ।

मनुः—नामधेयं दशम्यां तु द्वादश्यां वापि कारयेत् ।
पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ।। इति ।

दशम्यामतीतायामिति व्याख्यातारः । णिजविवक्षितः । 'अहन्येकादशे नाम' इति याज्ञवल्क्येऽपि । कालान्तरं भविष्यत्पुराणे—

नामधेयं दशम्यां तु केचिदिच्छन्ति पार्थिव ।
द्वादश्यामपरे रात्र्यां मासे पूर्णे तथा परे ।
अष्टादशेऽहनि तथा वदन्त्यन्ये मनीषिणः ।। इति ।

गृह्यपरिशिष्टे—'जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे नामकर-

णम् ' इति । व्युष्टेऽतीते । विशेषमाह पतञ्जलिः—'घोषवदाद्यन्तरन्तस्थमवृद्धं त्रिपुरुषानूकम् ' इति। 'नामकरणे योऽधिकारी पिता तस्य ये त्रयः पुरुषास्ताननुकायत्यभिधत्ते इति त्रिपुरुषानूकम् "अन्येषामपि–" इति दीर्घः' इति प्रदीपकारः । प्रयोगपारिजाते कपिलसंहितायाम्—

एकादशेऽह्नि विधिवन्नाम कुर्यात्कुलोचितम् ।
देवतानां विशेषेण पित्रोर्वा नाम शस्यते ।।
नैव कार्यं नृपादीनां नाम जीवनहेतुतः ।
पूर्वः परस्य वर्णस्य हीनस्यापि न धारयेत् ।। इति ।

कर्तुः पित्रोरित्यर्थः । इदं च दाक्षिणात्यशिष्टा आचरन्ति । मनुः—

मङ्गल्यं ब्राह्मणस्य स्यात्क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ।। इति ।

स्त्रीषु विशेषमाह गोभिलः–'अयुग्दान्तं स्त्रीणाम् ' इति । दान्तं यशोदा शर्मदेत्यादिकम् । केचित्तु यन्नाम तद्दाशब्दान्तं वर्णयन्ति । तथा च पार्वतीदा गङ्गादेत्येवं प्रयोज्यं तथा च तेषां मते यशोदेत्यादिषु यशोदादा इति प्रयुज्येत । इदं च व्याख्यानं न क्वापि निबन्धेषु दृष्टम्। अतः पूर्वोक्तमेव ज्याय इति । शङ्खलिखिताभ्यां नामोक्त्वा माससंबद्धमपि नाम कार्यमिति केचिदित्युक्तम् ।

(नामकरणे स्त्रीणां विशेषः।)

तत्र मासनामानि वसिष्ठ आह—

(मासनामानि ।)

चैत्रादिमासनामानि वैकुण्ठोऽथ जनार्दनः ।
उपेन्द्रो यज्ञपुरुषो वासुदेवस्त्रिविक्रमः ।।
योगीशः पुण्डरीकाक्षः कृष्णोऽनन्तोऽच्युतस्तथा ।
चक्रधारीति चैतानि क्रमादाहुर्मनीषिणः ।। इति ।

अत्र केचिन्मासानां मार्गशीर्षोऽहम् इति सामान्यलिङ्गान्मार्गशीर्षमारभ्य मासनामानि कल्पयन्ति । तद्वासिष्ठे चैत्रग्रहणेन विशेषाभिधानादुपेक्ष्यम् । ' मलमासे जन्म चेदुत्तरमासनाम—

(मलमासे विशेषः ।)

षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः ।
पूर्वमर्धं परित्यज्य कर्तव्या चोत्तरे क्रिया ।।

इत्युत्तरमासशेषत्वेनाभिधानात् । विष्टिव्यतीपातादौ न कर्तव्यमित्याह गर्गः—

व्यतीपाते च संक्रान्तौ ग्रहणे वैधृतावपि ।
श्राद्धं विना शुभं कर्म प्राप्तकालेऽपि नाचरेत् ।। इति ।

I-3.

अतः शुभे मुहूर्ते पूर्वोक्तान्यतमकाले कार्यं शुक्रास्तादीनां तु नैव विचारः। विशेषमाह कश्यपः—

उक्तकाले प्रकर्तव्या द्विजानामखिलाः क्रियाः।
अतोऽन्येषु तु कालेषु कर्तव्याश्चोत्तरायणे॥
सुरेज्येऽप्यसुरेज्ये वा नास्तगे न च वार्द्धके।
शुभलग्ने शुभांशे च शुभेऽह्नि शुभवासरे॥
चन्द्रताराबलोपेते नैधनादपवर्जिते।
नाम मङ्गलघोषेण रहस्यं दक्षिणश्रुतौ॥

बृहस्पतिः—पूर्वाह्णः श्रेष्ठ इत्युक्तो मध्याह्नो मध्यमः स्मृतः।
अपराह्णं च रात्रिं च वर्जयेन्नामकर्मणि॥ इति।

इदं च पितुरन्येनापि संनिहितेन कार्यम्। इति नामकरणम्।

---

## कर्णवेधः।

कर्णवेधमाह बृहस्पतिः—

जन्मतो दशमे चाह्नि द्वादशे वाऽथ षोडशे।
सप्तमे मासि वा कुर्याद्दशमे मासि वा पुनः॥ इति।

गर्गः—मासे षष्ठे सप्तमे वाप्यष्टमे मासि वत्सरे।
कार्तिके पूर्णमासे वा चैत्रे वा फाल्गुनेऽपि वा।
कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभ दिने॥ इति।

कार्तिकादिकं पूर्वकालापेक्षया भिन्नम्। पूर्णमास इति स्वतन्त्रः कालः। न विशेषणविशेष्यभावः। कार्तिके पौषमासे वेति वा पाठः। अयमेव युक्तो मासप्रायपाठात्। जन्ममासं निषेधति व्यासः—

यो जन्ममासे क्षुरकर्म यात्रां कर्णस्य वेधं कुरुतेऽतिमोहात्।
मूढः स रोगी धनपुत्रनाशं प्राप्नोति गूढं वधबन्धनानि॥

जन्ममासनिषेधस्तु द्वितीयादिवर्षगतो नाद्यवर्षगतस्तस्य विहितत्वेन निषेधानवकाशात्। अन्ये विधिनिषेधा ज्योतिःशास्त्रादवसेयाः। विशेष उक्तः सुबोधे—

शातकुम्भमयी सूची वेधने तु शुभप्रदा।
राजती वाऽऽयसी वापि यथाविभवतः शुभा॥ इति।

इति कर्णवेधः।

---

## निष्क्रमणम् ।

निष्क्रमणमाहतुः शङ्खलिखितौ—'अत ऊर्ध्वं तृतीये मासि निष्क्रमणिका' । याज्ञवल्क्यः—'चतुर्थे मासि निष्क्रमः' इति । कर्तव्यमाह शङ्खः—

चतुर्थेमासि कर्तव्यं बालस्याऽऽदित्यदर्शनम् । इति ।

मुहूर्तसंग्रहे—पूर्वपक्षः शुभः प्रोक्तः कृष्णोऽप्यन्त्यत्रिकं विना । इति ।
अत्र दिवसानुपादानाद्दैवज्ञोदितं तन्मासस्थं शुभं दिनं ग्राह्यम् ।
कारिकायां विशेषः—

आदाय गेहान्निष्क्रम्य गच्छेयुर्देवतालयम् ।
अभ्यर्च्य देवतां सम्यगाशिषो वाचयेदथ ॥
कृत्वा प्रदक्षिणं गेहमानयन्ति ततः स्वकम् ।
मातृष्वसृगृहं वाऽपि मातुलादेर्गृहं नयेत् ॥
तदाशीर्वादाद्यैः स्याद्दीर्घायुरभिनन्दितः ।
जयन्तस्य मतेनायं लिखितः शिशुनिष्क्रमः ॥ इति ।

मातुलादिर्बालस्य । इति निष्क्रमणम् ।

---

## उपवेशनम् ।

उपवेशनमुक्तं पद्मपुराणे—

अष्टमे च तथा मासि भूमौ तमुपवेशयेत् ।
तत्र सर्वे ग्रहाः शस्ता भौमो राम विशेषतः ॥
वराहं पूजयेद्देवं पृथिवीं च तथा द्विजः ।
पूजनं पूर्ववत्कृत्वा गुरुदेवद्विजन्मनाम् ॥
भूभागमुपलिप्याथ कृत्वा तत्र तु मण्डलम् ।
शङ्खपुण्याहशब्देन भूमौ तमुपवेशयेत् ॥

तत्र मन्त्र उक्तस्तत्रैव—

रक्षैनं वसुधे देवि सदा सर्वगतं शिशुम् ।
आयुःप्रमाणं निखिलं निक्षिपस्व हरिप्रिये ॥
अचिरादायुषस्त्वत्र ये केचित्परिपन्थिनः ।
जीवितारोग्यवित्तेषु निर्दहस्वाचिरेण तान् ॥

---

१ निर्णयसिन्धौतूपवेशननिर्णये 'पञ्चमे च तथा' इत्यारभ्य 'भौमोऽप्यत्र विशेषतः । उत्तरात्रितयं सौम्यं पुष्पर्क्षं मित्रदैवतम् । प्राजापत्यं च हस्तश्च शस्तमाश्विनमित्रभम् । वराहं पूजयेद्देवमित्यादि दृश्यते तत्समीचीनम् । २ शुभे ङ. पाठः ।

धरिण्यशेषभूतानां मातस्त्वमधिका ह्यसि ।
कुमारं पाहि मातस्त्वं ब्रह्मा तदनुमन्यताम् ।। इति ।

इत्युपवेशनम् ।

---

## अन्नप्राशनम् ।

अन्नप्राशनमाह यमः—

ततोऽन्नप्राशनं मासि षष्ठे कार्यं यथाविधि ।
अष्टमे वाऽथ कर्तव्यं यदैव मङ्गलं गृहे ।। इति ।

कुले यदैव मङ्गलं तदैव कार्यमिति कालान्तरम् । लौगाक्षिः—'षष्ठे मासेऽन्नप्राशनं जातेषु दन्तेषु वा पूर्णे संवत्सरे वा ' इति । अत्रापि दिनविशेषानुपादानादैवज्ञोदितं शुभं दिनं ग्राह्यम् । कर्तव्यमाह मार्कण्डेयः—

देवतापुरतस्तस्य धात्र्युत्सङ्गगतस्य च ।।
अलंकृतस्य दातव्यमन्नं पात्रेऽथ काञ्चने ।
मध्वाज्यकनकोपेतं प्राशयेत्पायसं तु तम् ' इति ।

आश्वलायनगृह्ये तु विशेषः—'षष्ठे मास्यन्नप्राशनमाजमन्नाद्यकामस्तैत्तिरं ब्रह्मवर्चसकामो घृतौदनं तेजस्कामो मध्वोदनमायुष्कामो दध्योदनमिन्द्रियकामः क्षीरौदनं पशुकामो दधिमधुघृतमिश्रमन्नं प्राशयेत्सर्वकामो भवतीति विज्ञायते ' । आजं मांसं तित्तिरसमभिव्याहारात् । तत्र व्यञ्जनस्थानीयत्वान्मांसस्यान्नं ग्राह्यमेव । अन्नप्राशने फलाधिक्यमाश्वलायनस्मृतौ—

(तत्र फलाधिक्यम् ।)

स्वमलप्राशनाच्छुद्ध्यै प्राशयेच्चायुषेऽपि वा ।। इति ।

इत्यन्नप्राशनम् ।

---

तदुत्तरं जीविकापरीक्षोक्ता मार्कण्डेयेन—

(जीविकापरीक्षा ।)

देवाग्रतोऽथ विन्यस्य शिल्पभाण्डानि सर्वशः ।
वस्त्राणि चैव शस्त्राणि ततः पश्येत्तु लक्षणम् ।।

शिल्पस्य लेखनादेर्भाण्डं वस्तु लेखनीमषीपात्रादि । शस्त्रं युद्धवस्तु ।

प्रथमं यत्स्पृशेद्बालस्ततो भाण्डं स्वयं तदा ।
जीविका तस्य बालस्य तेनैव तु भविष्यति ।। इति ।

इति जीविकापरीक्षा ।

---

१ बा ङ. पाठः ।

# चूडाकर्म ।

चूडाकर्माह मनुः—

चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः ।
प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात् ॥

यमः—द्वितीये वा तृतीये वा कर्तव्यं श्रुतिचोदनात् । इति ।

आश्वलायनः—'तृतीये वर्षे चौलं यथाकुलधर्मं वा ' इति । तथा—'उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः ' इति ।

कारिकायाम्—यथाकुलं च केषांचिदुपनीत्या सहेष्यते । इति ।

आश्वलायनस्मृतौ—

तृतीये वत्सरे चौलं कुर्वीतास्योत्तरायणे ।
शुक्लपक्षे शुभर्क्षे तु कृत्वाऽभ्युदयिकं तथा ।

शुभर्क्षे इति ज्योतिर्विदुपदिष्टे मुहूर्ते इत्यर्थः—

[ [1]प्रयोगपरिजाते नारदः—

जन्मतस्तु तृतीयेऽब्दे श्रेष्ठमिच्छन्ति पण्डिताः ।
पञ्चमे सप्तमे वाऽपि जन्मतो मध्यमं भवेत् ।
अधमं गर्भतः स्यात्तु नवमैकादशेऽपि वा ॥ इति ।

तत्रैव—आद्येऽब्दे कुर्वते केचित्पञ्चमेऽब्दे द्वितीयके ।
उपनीत्या सहैवेति विकल्पाः कुलधर्मतः ॥ ] इति ।

विवाहचण्डेश्वरः—

मार्गे मासि तथा ज्येष्ठे क्षौरं परिणयं व्रतम् ।
ज्येष्ठपुत्रदुहित्रोस्तु यत्नेन परिवर्जयेत् ॥

वृत्तशते—

न जन्मधिष्ण्ये न च जन्ममासे न जन्मकालीयदिने विदध्यात् ।
ज्येष्ठे न मासे प्रथमस्य सूनोस्त्वाद्याः सुताया अपि मङ्गलानि ॥

नक्षत्राणि निषेधति व्यासः—

नक्षत्रे तु न कुर्वीत यस्मिञ्जातो भवेन्नरः ।
न प्रौष्ठपदयोः कार्यं नैवाऽऽग्नेये च भारत ।
तिथिं प्रतिपदं रिक्तां विष्टिं चैव विवर्जयेत् ॥

---

१ कुण्डलितो ग्रन्थः ङपुस्तकेऽधिकः ।

विहितान्यपि तेनैवोक्तानि—

अश्विनी श्रवणः स्वाती चित्रा पुष्यः पुनर्वसुः ।
धनिष्ठारेवतीज्येष्ठामृगहस्तेषु कारयेत् ।। इति ।

क्षौरमिति शेषः । अन्ये च नक्षत्रयोगकरणविधिनिषेधा ज्योतिःशास्त्राद्-वसेयाः । गोत्रविशेषेण विशेषमाह लौगाक्षिः—'दक्षिणतः कमुञ्जा वसिष्ठाना-मुभयतोऽत्रिकश्यपानां मुण्डा भृगवः पञ्चचूडा अङ्गिरसो बालिमेके मङ्ग-लार्थं शिखिनोऽन्ये यथाकुलधर्मम् । कमुञ्जा चूडा । कचित्कुसुञ्जेति पाठः । अन्ये बालिं केशपङ्क्तिं कुर्वन्ति अन्ते समरेखया मुण्डनं कृत्वा सर्व एव केशाः स्थाप्याः' इति स्मृतिचन्द्रिकायाम् । आपस्तम्बस्तु विशेषमाह—

तत्र विशेषः 'केशान्निर्नीय यथार्षं शिखां निदधाति । यथैषां कुलधर्मः स्यात्' यथार्षं यथाप्रवरम् । एते संस्काराः स्त्रीणां मन्त्ररहिताः ।

एतेषां जातकर्मादीनां लोपे प्रायश्चित्तमाह शौनकः—

ऐतेष्वेकैकलोपेऽपि पादकृच्छ्रं समाचरेत् ।
चूडाया अर्धकृच्छ्रं स्यादापदि त्वेवमीरितम् ।
अनापदि तु सर्वत्र द्विगुणं द्विगुणं चरेत् ।। इति ।

अतीतानां कालमाह मनुः—

जातकर्मादिसंस्काराः स्वकाले न भवन्ति चेत् ।
चौलादर्वाक् प्रकुर्वीत प्रायश्चित्तादनन्तरम् ।।

गृह्यकारिकायां विकल्प उक्तः ।

प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै ।
कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चितः ।। इति ।

शिष्टानां तु करणपक्ष एव संमतः । विशेषान्तरमाह नारदः—

शिशोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् ।
पञ्चमाब्दादथोर्ध्वं तु गर्भिण्यामपि कारयेत् ।
सहोपनीत्या कुर्याच्चेत्तत्र दोषो न विद्यते ।। इति ।

[ मातरि गर्भिण्यामपि पञ्चमासपर्यन्तं न दोषः । तदाह मदनरत्ने बृहस्पतिः—

गर्भे मातुः कुमारस्य न कुर्याच्चौलकर्म तु ।
पञ्चमासादधः कुर्यादत ऊर्ध्वं न कारयेत् ।। इति ।

१ इत्यधिकं ङ. पुस्तके ।

मातरि रजस्वलायां मेधातिथिः—

चौले च व्रतबन्धे च विवाहे यज्ञकर्मणि ।
माता रजस्वला यस्य भवेत्तस्य न शोभनम् ।।

वृद्धमनुः—विवाहव्रतचूडासु माता यदि रजस्वला ।
तदा न मङ्गलं कार्यं शुद्धे कार्यं शुभेप्सुभिः ।। इति ।]

इति चूडाकर्म ।

---

## विद्यारम्भः ।

विद्यारम्भमाह मार्कण्डेयः—

प्राप्तेऽथ पञ्चमे वर्षे विद्यारम्भं तु कारयेत् ।
ततः प्रभृत्यनध्यायान्वर्जनीयान्विवर्जयेत् ।। इति ।

विद्यारम्भश्चात्राक्षरपरिचितिः । यथाह श्रीधरः—

विद्यारम्भः । उदग्गते भास्वति पञ्चमेऽब्दे प्राप्तेऽक्षरस्वीकरणं शिशूनाम् ।
सरस्वतीं विघ्नविनायकं च गुडौदनाद्यैरपि पूज्य कुर्यात् ।।

विष्णुधर्मोत्तरे पुष्करः—

प्राप्ते तु पञ्चमे वर्षे अप्रसुप्ते जनार्दने ।
षष्ठीं प्रतिपदं चैव वर्जयित्वा तथाष्टमीम् ।।
रिक्तां पञ्चदशीं चैव सौरभौमदिने तथा ।
एवं सुनिश्चिते काले विद्यारम्भं तु कारयेत् ।

इति विद्यारम्भः ।

---

अनुपनीतधर्माः । अथानुपनीतधर्माः गौतमः—'प्रागुपनयनात्कामचारकामवादकामभक्षाः' इति । कामचारोऽङ्गनादिदेशगमनम् । कामवादोऽश्लीलादिभाषणमनृतभाषणं च । कामभक्षो लशुनपर्युषितभक्षणम् । कामभक्षादिकं महापातकातिरिक्तविषयम् ।

स्यात्कामचारभक्षोऽपि महतः पातकादृते ।

इतिषट्त्रिंशन्मतात् । गौतमः—यथोपपादमूत्रपुरीषो भवति न तस्याचमनकल्पो विद्यते न तस्योदङ्मुखो दिवा रात्रौ दक्षिणामुख इत्यादयो नियमाः । स एव । अन्यत्रावमार्जनप्रक्षालनप्रोक्षणेभ्यो न तस्य स्पर्शनादशौचम् । इति । इदं कृत्वा स्पर्शनं कार्यमित्यर्थः । स्मृतिदीपिकायाम्—

शिशोरभ्युक्षणं प्रोक्तं बालस्याऽऽचमनं स्मृतम् । इति ।
रजस्वलादिसंस्पर्शे स्नानमेव विधीयते । इति ।

तल्लक्षणानि तत्रैव—

प्राक्चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः ।
कुमारकस्तु विज्ञेयो यावन्मौञ्जी न बध्यते ।। इति ।

बालं प्रकृत्य गौतमः—'नत्वेवैनमाग्निहवनबलिहरणयोर्नियुञ्ज्यात्' इति ।

मनुः—न त्वस्मिन्विद्यते कर्म यावन्मौञ्जी न बध्यते ।
नातिव्याहारयेद्ब्रह्म स्वधानिनयनादृते ।।

ब्रह्म वेदः । स्वधानिनयनं प्रेतकर्म । इत्यनुपनीतधर्माः ।

---

## उपनयनम् ।

उपनयनविचारः । उपनयनमुक्तं श्रुतौ—'अष्टवर्षं ब्राह्मणमुपनयीत' इति ।

याज्ञवल्क्यः—गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योपनायनम् ।
राज्ञामेकादशे सैके विशामेके यथाकुलम् ।। इति ।

सैके द्वादशे । गर्भैकादशे गर्भद्वादशे इत्यपि बोध्यम् । तथाच मनुः—

गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ।

लोगाक्षिस्तु—'सप्तमे वर्षे ब्राह्मणस्योपनयनं नवमे राजन्यस्यैकादशे वैश्यस्य' इत्याह । पैठीनसिरपि—'गर्भपञ्चमे ब्राह्मणमुपनयेत्' इति । गुणफलमाह मनुः—

ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ।। इति ।

आपस्तम्बः—'सप्तमे ब्रह्मवर्चसकाममष्टम आयुःकामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादश इन्द्रियकामं द्वादशे पशुकामम्' इति । वर्णविशेषेण ऋतुनियम उक्तः श्रुतौ—'वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यम्' इति । कालान्तरमुक्तं ज्योतिःशास्त्रे—

माघादिषु तु मासेषु मौञ्जी पञ्चसु शस्यते ।

ज्येष्ठमासे ज्येष्ठोपनयनं न कार्यम् । तथा च गर्गः—

ज्येष्ठमासे विशेषेण सर्वज्येष्ठस्य चैव हि ।
उपनीतस्य पुत्रस्य जडत्वं मृत्युरेव वा ।। इति ।

जन्ममासे न कार्यमित्युक्तं संग्रहे—

विवाहे चोपनयने जन्ममासं विवर्जयेत् ।

जन्ममासलक्षणमुक्तं वृद्धगर्गेण—

जन्ममास-लक्षणम् ।

आरभ्य जन्मदिवसं यावत्त्रिंशद्दिनं भवेत् ।
जन्ममासः स विज्ञेयो गर्हितः सर्वकर्मसु ।।

एवं चाष्टम्यादितिथिमारभ्याष्टम्यन्तो जन्ममासोऽभिमतः । न तु दर्शान्तः पूर्णिमान्तो वा । विशेषमाह चण्डेश्वरः—

तद्विशेषः । माघे द्रविणशीलाख्यः फाल्गुने च दृढव्रतः ।
चैत्रे भवति मेधावी वैशाखे कोविदो भवेत् ।
ज्येष्ठे तु गृह्नीतिज्ञ आषाढे क्रतुभाग्भवेत् ।
मार्गशीर्षे भवेद्भ्रष्टः शेषे दुःखमवाप्नुयात् ॥

आषाढस्तु विष्णुशयनात्प्रागेव तदूर्ध्वं तत्र सर्वेषां निषिद्धत्वात् । विशेषमाहुर्वसिष्ठादयः—

आर्द्रादिके स्वातिविरामकाले नक्षत्रवृन्दे दशके रविश्चेत् ।
विवाहचौलव्रतबन्धनाद्यं सुरप्रतिष्ठादि न कार्यमेव ॥

आपूर्यमाणपक्ष इति शुक्ल आश्वलायनेनोक्तो मुख्यः । अनुकल्पमाह बृहस्पतिः—

अनुकल्पः । शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना । इति ।

अथ गौणकालः । गृह्ये—'आ षोडशाद्ब्राह्मणस्यानतीतः काल आ द्वाविंशात्क्षत्रियस्या चतुर्विंशाद्वैश्यस्यात ऊर्ध्वं पतितसावित्रीका भवन्ति नैनानुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्व्यवहरेयुः' इति । अत्र व्रात्यतां प्रक्रम्य ।

स वित्री पतिता यस्य दशवर्षाणि पञ्च च ।
सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः ॥ इति ।

यमेन स्पष्टं पञ्चदशवर्षोत्तरं प्रायश्चित्ताभिधानादाषोडशादिष्वाङ् मर्यादार्थकः । एवं पञ्चदशवर्षोत्तरमेव व्रात्यस्तोमादिकं जायते इति । यत्तु—

औपनायनिकः कालः परः षोडशवार्षिकः ।
द्वाविंशतिः परोऽन्यस्य चतुर्विंशतिमः परः ॥

इति व्यासवाक्ये संपूर्णषोडशवर्षग्रहणाद्विरोधमुपन्यस्यति । तत्र धर्मप्रकाश एवं व्यवस्थोक्ता । यमवाक्यं जन्मप्रभृति पञ्चदशवर्षातिक्रमे प्रायश्चित्तविधिपरम् । व्यासवाक्यं त्वाधानप्रभृतिषोडशवर्षातिक्रमे प्रायश्चित्तपरमिति न द्वयोरपि विरोधः । ईदृशी च सरणिः प्राक् क्वचिदाश्रितैव ।

यथा—अष्टादशदिनादर्वागशुचित्वं न विद्यते ।
चतुर्दशदिनादर्वागशुचित्वं विधीयते ।

इतिवाक्ययोः पूर्वं रजोदर्शनात्प्रभृत्युत्तरं तु स्नानादारभ्येति ।

---

१ नोपेति काशीमु. पु. पाठः । २ व्रात्यप्रायश्चित्तं प्रक्रम्येति ङ पाठः । ३ 'नविद्यते' इत्यपेक्ष्यते तथोपक्रमात् । अन्यथा विरोधपरिहारकल्यवस्थाश्रयणस्यासंगत्यापत्तेः ।

याज्ञवल्क्यः—अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिःकृताः ।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥ इति ।

तं विनोपनयनेऽधिकारो नास्तीत्यर्थः । स चानुपनीतेनानाहिताग्निनाऽविदुषाप्यवकीर्णिपशुवत्कार्यः । यागोपयुक्ताध्ययनमगत्या कर्तव्यम् । ततः स्मृत्युक्तं प्रायश्चित्तं कृत्वा उपनयनमिति ।

अथ निषिद्धकालो रत्नकोशे—

नष्टे चन्द्रेऽस्तगे शुक्रे निरंशे चैव भास्करे ।
कर्तव्यं नोपनयनमनध्याये गलग्रहे ॥

राशिप्रथमांशगः सूर्यो निरंशः । अनध्यायान्विस्तरेणाग्रे वक्ष्यामः । गलग्रहास्तत्रैव—

त्रयोदशीचतुष्कं तु सप्तम्यादित्रयं तथा ।
चतुर्थ्येकाकिनी प्रोक्ता अष्टावेते गलग्रहाः ॥ इति ।

वक्ष्यमाणानध्यायप्रतिप्रसवमाहतुर्भरद्वाजवसिष्ठौ—

या चैत्रवैशाखसिता तृतीया माघेऽथ सप्तम्यथ फाल्गुनस्य ।
कृष्णे द्वितीयोपनये प्रशस्ताः प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैः ॥ इति ।

चैत्रवैशाखशुक्लतृतीये मन्वादियुगादी । माघसितसप्तम्यपि मन्वादिः ।

अनध्यायप्रतिप्रसवः ।

एतासामनध्यायत्वं वक्ष्यते । टोडरानन्दे कारिकानिबन्धे विशेषः—

अनध्यायाच्च पूर्वेद्युरनध्यायात्परेऽहनि ।
व्रतारम्भं विसर्गं च विद्यारम्भं न कारयेत् ॥ इति ।

अनध्यायात्परेहनीति द्वितीयेतरविषयं द्वितीयायाः सुरेश्वरेण प्रतिपदोक्तत्वादित्यपि व्याख्यातं तत्रैव । ननु नवम्यादित्रयमिति नवम्या अपि निषेधात्कोऽस्य विषयः । उच्यते । निषेधद्वयवशाद्दोषाधिक्यकल्पना । मान्यास्तु यदा नवमी दशदण्डा तदा 'निषेधः कालमात्रकः' इतिवचनात्तदुत्तरमुपनयनं प्राप्तमनेन निषिध्यत इत्याहुः ।

पूर्वाह्णादिप्राशस्त्यमाह धर्मप्रकाशे ज्योतिर्मनुः—

सर्वदेशेषु पूर्वाह्णे मुख्यं स्यादुपनायनम् ।
मध्याह्ने मध्यमं प्रोक्तमपराह्णे तु गर्हितम् ॥ इति ।

भरद्वाजः—विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे ।
अनध्याये चोपनीतः पुनः संस्कारमर्हति ॥ इति ।

---

१ व्रात्यस्तोमो यागविशेषः । २ केचित्त्विति ङ. पाठः ।

पुनरुपनयननिमित्तानि चाग्रे विस्तरेण वक्ष्यामः । विशेषमाह व्यवहारचण्डेश्वरः—

केतोरस्तदिनादूर्ध्वं सप्ताहानि परित्यजेत् ।
यावत्केतूदयस्तावदशुद्धः समयो भवेत् ।। इति ।

इदं ब्रह्मपुत्राख्योग्रकेतुविषयमिति धर्मप्रकाशे ।

गर्गः—चन्द्रसूर्योपरागेषु त्र्यहं प्रागशुभं भवेत् ।
सप्ताहमशुभं पश्चात्स्मृतं ग्रहणशूलकम् ।

खण्डग्रहेऽङ्गिराः—

सर्वग्रासे तु सप्ताहमर्धग्रासे दिनत्रयम् ।
त्रिद्व्येकाङ्गुलतो ग्रासे दिनमेकं तु वर्जयेत् ।। इति ।

विवाहचण्डेश्वरः[1]—

ग्रहे रवीन्द्वोरवनिप्रकम्पे केतूद्गमोल्कापतनादिदोषे ।
व्रते दशाहानि वदन्ति तज्ज्ञास्त्रयोदशाहानि वदन्ति केचित् ।।

ज्योतिर्निबन्धेऽनुकल्पोऽप्युक्तः—

पञ्चदिनानि वसिष्ठस्त्रिदिनं गर्गस्तु कौशिकस्त्वेकम् ।
यवनाचार्यस्य मतं पञ्चमुहूर्तान्दूषयति राहुः ।।

एवं सर्वमालोक्य ज्योतिर्विदुपदिष्टे मुहूर्ते उपनयनं कुर्यात् । अत्र च माणवककर्तृकं गुरुसमीपगमनं प्रधानमिति जरन्मीमांसकाः । नव्यास्तु णिजविवक्षायां मानाभावादाचार्यकर्तृकं माणवकाधिकारिकमुपनयनमेव विधीयत इत्याहुः । युक्तं चेदम् । स्मृत्यर्थसारे तु । आचार्यसमीपनयनमाग्निसमीपनयनं वा गायत्रीवाचनं वा प्रधानमित्युक्तम् । अथोपनेत्रुपनेययोरधिकारसंपादनार्थं प्रायश्चित्तमाह वृद्धविष्णुः—

कृच्छ्रत्रयं चोपनेता त्रीन्कृच्छ्रांश्च बटुश्चरेत् । इति ।

आचार्यस्य विशेषं स एवाह—

उपनेयोपनेत्रधिकारप्रायश्चित्तम् ।

सावित्रीमभ्यसेदग्निं पवित्राणि च संस्मरन् ।
सहस्रं द्वादशाख्यं च सावित्रीं प्रजपेद्बुधः ।
स्वाधिकारार्थमेवास्याः प्रदानार्थं हि तत्स्मृतम् ।। इति ।

षण्ढादीनामप्युपनयनमुक्तं ब्रह्माण्डे—

षण्ढाद्युपनयनम् ।

ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः ।
तस्माच्च षण्ढबधिरकुब्जवामनपङ्गुषु ।।

---

१ विवाहचण्डेश्वरः इति ङ पाठः ।

जडगद्गदरोगार्तशुष्काङ्गविकलाङ्गिषु ।
मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये ।
ध्वस्तपुंस्त्वेषु चैतेषु संस्काराः स्युर्यथोचितम् ॥

यथोचितमिति अशक्याङ्गहीनेने [हीना इ?] त्यर्थः ।

मत्तोन्मत्तौ न संस्कार्याविति केचित्प्रचक्षते ।
कर्मस्वनधिकाराच्च पातित्यं नास्ति चैतयोः ॥
तदपत्यं च संस्कार्यमपरे त्वाहुरन्यथा ।
संस्कारमन्त्रहोमादीन्करोत्याचार्य एव तु ॥
उपनेयांश्च विधिवदाचार्यः स्वसमीपतः ।
आनीयाग्निसमीपं वा सावित्रीं स्पृश्य वा जपेत् ।
कन्यास्वीकरणादन्यत्सर्वं विप्रेण कारयेत् ॥ इति ।

उपनेतृक्रममाह गर्गः—

पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः ।
उपायनेऽधिकारी स्यात्पूर्वाभावे परः परः ॥

तथा—पितैवोपनयेत्पुत्रं तदभावे पितुः पिता ।
तदभावे पितुर्भ्राता तदभावे तु सोदरः ॥ इति ।

इति कालादिनिर्णयः ।

अथ परिधानोत्तरीयनिर्णयः । तत्र गृह्यम्—'अहतेन वाससा संवीतमैणेयेन वाऽजिनेन ब्राह्मणं रौरवेण क्षत्रियमाजेन वैश्यम् । यदि वासांसि वसीरन् रक्तानि वसीरन्काषायं ब्राह्मणो माञ्जिष्ठं क्षत्रियो हारिद्रं वैश्यः' इति ।

(परिधानीयोत्तरीयनिर्णयः ।)

अहतलक्षणं प्रचेता आह—

(अहतलक्षणम् ।)

ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ।
अहतं तद्विजानीयात्सर्वकर्मसु पावनम् ॥ इति ।

पूर्वगृह्यार्थः । तत्र वासः साधारणं यदा त्वजिनं प्रावरणं तदा ब्राह्मणा[दय ऐणेया]दीनि । एणी विन्दुस(र)हिता मृगी । 'एण्या ढञ्' इति ढञ् । यदि वासांसीत्यत्र वाक्यभेदव्यवहितान्वयौ । वासांसि वसीरन्नित्येकं वाक्यम् । यदि रक्तानि वसीरंस्तदा काषायमित्यादि चाऽन्यत् । मनुर्विशेषमाह—

(वस्त्रेषु विशेषः ।)

कार्ष्णरौरववास्तानि चर्माणि ब्रह्मचारिणः ।
वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च ॥ इति ।

कार्ष्णरौरववास्तान्युत्तरीयाणि 'कृष्णरुरुवस्ताजिनान्युत्तरीयाणि' इति शङ्खवचनात् । वस्त्रेषु विशेषमाह वसिष्ठः—'शुक्लमहतं वासो ब्राह्मणस्य कार्पासं माञ्जिष्ठं क्षौमं क्षत्रियस्य पीतं कौशेयं वैश्यस्य' इति ।

वस्त्रेषु विशेषः ।

इति वस्त्रादिनिर्णयः ।

---

मेखलाव्यवस्थामाह मनुः—

मेखला-व्यवस्था ।

मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी ॥

ज्या कदाचिच्चर्ममयी भवति कदाचित्तृणमयी । तत्र चर्ममयीव्यावृत्त्यर्थं मौर्वीति मेधातिथिः । ज्यायाश्च स्वरूपनाशप्रसङ्गात्त्रिवृत्त्वादिगुणो नेति धर्मप्रकाशे तातचरणाः । शणे तु त्रिवृत्त्वादिगुणोऽस्त्येव । गृह्ये विशेषः—'तेषां मेखला मौञ्जी ब्राह्मणस्य धनुर्ज्या क्षत्रियस्याऽऽवी वैश्यस्य' इति आव्यूर्णाकृतेत्यर्थः । अनुकल्पमाह मनुः—

अनुकल्पः ।

मुञ्जालाभे तु कर्तव्या कुशाश्मन्तकबल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव च ॥ इति ।

अत्र कुल्लूकभट्टः 'आदिशब्दस्य लोपमङ्गीकृत्याकाङ्क्षितविधानान्मुञ्जादीनां तिसृणां मेखलानामलाभे क्रमेण कुशाश्मन्तकबल्वजा ग्राह्या इत्याह । ग्रन्थयश्च शिष्टाचारात्प्रवरसंख्यया कार्याः । तथा च मनूक्तो विकल्पो व्यवस्थितः । एकप्रवरस्यैकैको ग्रन्थिस्त्रिप्रवरस्य त्रयः पञ्चप्रवरस्य पञ्चेति ।

इति मेखलाव्यवस्था ।

---

दण्डा उक्ता गृह्ये 'तेषां दण्डाः पालाशो ब्राह्मणस्यौदुम्बरः क्षत्रियस्य बैल्वो वैश्यस्य केशसंमितो ब्राह्मणस्य ललाटसंमितः क्षत्रियस्य प्राणसंमितो वैश्यस्य सर्वे वा सर्वेषाम्' इति । प्राणो नासा । मनुर्विशेषमाह—

दण्डाः ।

ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ ।
पैप्पलौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः ॥ इति ।

न चात्र द्वन्द्वनिर्देशात्समुच्चय इति वाच्यं, दण्डं प्रदायेतिसूत्रे गुणभूतदण्डैकत्वश्रवणात् । मनुस्मृतावेव गुणविधिवाक्ये 'केशान्तको ब्राह्मणस्य' इत्येकवचनश्रवणात् वसिष्ठस्मृतौ स्पष्टमेव 'बैल्वः पालाशो वा' इति विकल्पाभिधानाच्च । अतो विकल्पितयोरेव द्वन्द्वनिर्देश इति । सर्वेषामलाभे ग्रम आह—

एतेषामप्यलाभे तु सर्वेषां सर्वयज्ञियाः । इति ।

दण्डान्विशिनष्टि श्लोकगौतमः—

ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः ।
अनुद्वेगकरा दण्डाः सत्वचो नाग्निदूषिताः ॥ इति ।

इति दण्डनिर्णयः ।

---

यज्ञोपवीतमाह मनुः—

उपवीतम् ।

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ।
शणसूत्रमयं राज्ञो वैश्यस्याऽऽविकमुच्यते ॥

शणसूत्रमयमित्यत्रापि ऊर्ध्ववृतं त्रिवृदिति संबध्यते । आविकमव्यूर्णासंभवम् । एवं च यदिदानींतनानां क्षत्रियवैश्यानां कार्पासोपवीतधारणं तत्र मूलं न विद्मः । विशेष उक्तः छन्दोगपरिशिष्टे—

त्रिवृदूर्ध्ववृतं कार्यं तन्तुत्रयमधोवृतम् ।
त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते ॥

कर्तव्यतामाह देवलः—

ग्रामान्निष्क्रम्य संख्याय षण्णवत्यङ्गुलीषु तत् ।
तावत्त्रिगुणितं सूत्रं प्रक्षाल्याब्लिङ्गकैस्त्रिभिः ॥
देवागारेऽथवा गोष्ठे नद्यां वाऽन्यत्र वा शुचौ ।
सावित्र्या त्रिवृतं कुर्यान्नवसूत्रं तु तद्भवेत् ॥
हरिब्रह्मेश्वरेभ्यश्च प्रणम्याऽवदधात्यथ ।
यज्ञोपवीतमित्यादिव्याहृत्या चापि धारयेत् ॥

तथा—यज्ञोपवीतं कुर्वीत सूत्राणि नवतन्तवः । इति ।

वसिष्ठस्तु विशेषमाह—

नाभेरूर्ध्वमनायुष्यमधो नाभेस्तपःक्षयः ।
तस्मान्नाभिसमं कुर्यादुपवीतं विचक्षणः ॥

कात्यायनोऽपि—पृष्ठदेशे च नाभ्यां च धृतं यद्विन्दते कटिम् ।
तद्धार्यमुपवीतं स्यान्नातिलम्बं नचोच्छ्रितम् ॥ इति ।

धारणे विशेषमाह भृगुः—

धारणे विशेषः ।

उपवीतं बटोरेकं द्वे तथेतरयोः स्मृते ।
एकमेव यतीनां स्यादिति शास्त्रस्य निश्चयः ॥

इतरयोर्गृहस्थवनस्थयोः । यतीनां त्रिदण्डिनाम् । 'स्नानोत्तरमेव द्वे' इत्याह वसिष्ठः—

स्नातकानां द्वितीयं स्यादन्तर्वासस्तथोत्तरम् । इति ।

एतद्धारणं नित्यम्—'बहूनि चायुष्कामस्य' इति देवलवचनाद्बहून्यपि धार्याणि । बहुत्वावधिमाह कश्यपः—

त्रीणि चत्वारि पञ्चाष्ट गृहिणः स्युर्दशापि वा ।
सर्वैर्वा शुचिभिर्धार्यमुपवीतं द्विजातिभिः ॥

इदं च—सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥

इतिभृगुस्मृतेर्नित्यम् । तत्र पूर्वार्धेन पुरुषार्थत्वमुत्तरार्धेन क्रत्वङ्गत्वमिति । विशेषमाह मनुः—

उद्धृते दक्षिणे पाणावुपवीत्युच्यते द्विजः ।
सव्ये प्राचीनआवीती निवीती कण्ठसर्जने ॥

असमासश्छान्दसः । स्मृतिसारे—'सूत्रमन्यकृतमपि ग्राह्यम्' इत्युक्तम् ।

छेदे विनाशे वा स्नातः कन्यया निर्मितं शुभम् ।
विधवाद्याभिरथवा सूत्रं गृह्णीत वै मुनिः ॥ इति ।

मेखलादीनां छेदे जलमध्ये प्रक्षेपः कार्य इत्याह मनुः—

मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रवत् ॥ इति ।

मन्त्रवदिति उपनयनकाले यैर्मन्त्रैर्धृतानि ते मन्त्रा गृह्यन्ते । इत्युपवीतनिर्णयः ।

## इत्युपनयनम् ।

---

अथ पुनरुपनयने विशेषमाहाऽऽश्वलायनः—'अथोपेतपूर्वस्य कृताकृतं केशवपनं मेधाजननं चानिरुक्तं परिदानं कालश्च तत्सवितुः वृणीमह इति सावित्रीम्' इति । कृताकृतं वैकल्पिकम् । अनिरुक्तं न कर्तव्यमित्यर्थः । कालनियमोऽपि नास्तीत्यर्थः ।

पुनरुपनयने विशेषः ।

पराशरः—अजिनं मेखला दण्डो भैक्षचर्या व्रतानि च ।
निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि ॥ इति ।

इदं च पुनरुपनयनं वेदान्तराध्ययनं चिकीर्षुः कुर्यादिति हरदत्त आह ।

आश्वलायनः—अध्वर्यूणां सामगानामृचमध्येतुमिच्छताम् ।
क्रिया स्यात्परिदानान्ता दीक्षादिर्न विधीयते ॥

ऋचमृग्वेदम् । परिदानम् 'आदित्याय व्रतपतये बटुं ते ददामि' इति विहितम् । अन्ये तु यत्र पुनःसंस्कारो विधीयते तत्रापीयमेवेतिकर्तव्यतेति ।

अथ पुनरुपनयननिमित्तानि भरद्वाजः—

पुनरुपनय-ननिमित्तानि ।

विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे ।
उपनीतस्त्वनध्याये पुनःसंस्कारमर्हति ।।
अपराह्णे चोपनीतः पुनःसंस्कारमर्हति ।। इति ।

तथा—प्रदोषे निश्यनध्याये नन्दे कृष्णे गलग्रहे ।
मधुं विनोपनीतस्तु पुनः संस्कारमर्हति ।। इति ।

पराशरः—अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ।। ।

विष्णुः—'विड्वराहग्रामकुक्कुटगोमांसभक्षणेषु द्विजातीनां प्रायश्चित्तान्ते पुनःसंस्कारं कुर्यात्' इति ।

लशुनं गृञ्जनं जग्ध्वा पलाण्डुं च तथा पुनः ।
उष्ट्रमानुषकेभाश्वारासभीक्षीरभोजनात् ।
उपायनं पुनः कुर्यात्तप्तकृच्छ्रं चरेन्मुहुः ।।

देशान्तरं गतस्यौर्ध्वदेहिके कृते यद्यसौ पुनरायाति तत्रोक्तं संग्रहे—

जीवन्यदि समागच्छेद्घृतकुम्भे निमज्य तम् ।
पुनरुत्थापयित्वाऽस्य जातकर्मादि कारयेत् ।। इति ।

बौधायनः—

सिन्धुसौवीरसौराष्ट्रांस्तथा प्रत्यन्तवासिनः ।
( अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति ।। इति । )

अगमने ( तीर्थयात्रार्थमङ्गादिगमने ? ) तु न दोषः—

अङ्गवङ्गकलिङ्गांश्च सौराष्ट्रमगधांस्तथा ।
तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हति ।।

इति श्लोकगौतमोक्तेः । इति पुनरुपनयननिमित्तानि ।

---

## ब्रह्मचारिधर्माः ।

अथ ब्रह्मचारिधर्माः । याज्ञवल्क्यः—

गुरुं वै चाप्युपासीत स्वाध्यायार्थं समाहितः । इति ।

आश्वलायनः—

ब्रह्मचारि-धर्माः ।

अञ्जनाभ्यञ्जने क्षौद्रं गन्धपुष्पाक्षतान्व्रती ।
वर्जयेत्पादुके छत्रं यानोष्णीषरथादिकान् ।।
न शयीतान्तरिक्षे तु नाऽशुचौ न परैः सह ।
न वासीत न नग्नश्च नालीकं बिभृयाद्व्रती ।।

नालीकं नालिकेरकमण्डलुमिति धर्मप्रकाशे—

मनसापि न चोल्लङ्घ्या गुरोराज्ञा कथंचन।
गुरुवद्गुरुपत्नीषु तत्पुत्रादिषु सर्वदा॥
प्रत्यक्षे वा परोक्षे वा चरेत प्रथमाश्रमी।
वेदोदितव्रतैरन्यान्व्रतानन्यान्न संचरेत् (?)।
न स्नायात्सर्वतीर्थेषु न भुञ्जीयादितस्ततः॥

तीर्थयात्रां न कुर्यादित्यर्थः।

भैक्षमाहृत्य भुञ्जीयात्सायंप्रातर्गुरौ वसन।
देवर्षिपितृपूजां च कुर्याद्वा गुर्वनुज्ञया॥
अच्छिन्नान्धारयेन्नित्यं दण्डाजिनकमण्डलून्।
यज्ञसूत्रपवित्रे च मेखलां च गुरौ वसन्॥
न शावसूतके स्यातां मातापित्रोर्मृतावृते।
व्रतिनश्चोत्सवालोकः श्राद्धान्नं च न शस्यते॥
न भक्षयेच्च ताम्बूलमथ मैथुनमेव च।
वर्जयेल्लशुनं लाजान्लाजापूपादिकान्व्रती॥
चरित्वा चतुरो वेदांस्त्रीन्द्वौ चैकमथापि वा।
तोषयेद्दक्षिणाभिस्तु गुरुं भक्त्या विचक्षणः॥ इति।

सुमन्तुः—ब्रह्मचर्यं तपो भैक्ष्यं संध्ययोरग्निकर्म च।
स्वाध्यायं गुरुवृत्तिश्च चर्येयं ब्रह्मचारिणः॥

व्यासः—जघन्यशायी पूर्वं स्यादुत्थायी गुरुवेश्मनि। इति

गुरुसेवायाः फलमाह शङ्खः—

गुरुसेवाफलम्। न स्नानेन न होमेन नैवाग्निपरिचर्यया।
ब्रह्मचारी दिवं याति स याति गुरुपूजनात्॥

मनुः—अधःशय्याऽऽसनं[1] चास्य नित्यं स्याद्गुरुसन्निधौ।
गुरोश्च चक्षुर्विषये न यथेष्टासनो भवेत्॥

प्रसारणादिकं न कुर्यादित्यर्थः। अत्र नित्यग्रहणाद्ब्रह्मचर्योत्तरकालमप्येतेऽनुवर्तन्ते एव। समासनमप्यनुजानाति क्वचिद्विष्णुः—

'नास्यैकासनो भवेदृते शिलाफलकनौयानेभ्यः' इति।

मनुः—गुरोर्यत्र परीवादो निन्दावाऽपि प्रवर्तते।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः॥

---

१ नीचैः शय्या ङ. पाठः।

सद्दोषकीर्तनं परीवादः । असद्दोषोक्तिर्निन्दा । निन्दादिकरणे फलमाह स एव—

गुरुनिन्दाफलम् ।

भवेत्खरः परीवादाच्छ्वा वै भवति निन्दकः ।
परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी ॥

परिभोक्ता अदत्तगुरुदानभोक्ता । हारीतः—

ऋचं वा यदि चार्धर्चं पादं वा यदि वाऽक्षरम् ।
सकाशाद्यस्य गृह्णीयान्नियतं तस्य गौरवम् ॥

मनुः—नोदाहरेदस्य नाम परोक्षमपि केवलम् ।
न चैवास्याऽनुकुर्वीत मतिभाषितचेष्टितम् ॥ इति ।

केवलं नाम न ग्राह्यं किंतु उपाध्यायादिविशिष्टम् । उक्तं च गौतमेन—'नामगोत्रे गुरोः समानतो निर्दिशेत्' इति । मानेन सहितं समानम् ।

याज्ञवल्क्यः—

मधुमांसाञ्जनोच्छिष्टशुल्कस्त्रीप्राणिहिंसनम् ।
भास्करालोकनाश्लीलपरिवादादि वर्जयेत् ॥ इति ।

मधु क्षौद्रम् । आश्वलायनस्मृतौ क्षौद्रग्रहणात् । शुल्कं निष्ठुरवाक्यम् । यदि मांसभक्षणान्निवर्त्त्या व्याधिस्तदा गुरोरुच्छिष्टं भक्षणीयम् । आश्वलायनस्मृतौ 'स चेद्व्याधीयीत कामं गुरोरुच्छिष्टं भेषजार्थं सर्वं प्राश्नीयात्' इति । आपस्तम्बोऽपि—

'पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोक्तव्यम्' इति ।

मनुः—वर्जयेन्मधु मांसं च गन्धमाल्यरसान् स्त्रियः ।
शुल्कानि चैव सर्वाणि प्राणिनां च विहिंसनम् ॥
अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम् ।
कामं क्रोधं च लोभं च नर्तनं गीतवादने ।
स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च ॥ इति ।

प्रेक्षणालम्भमिति मैथुनशङ्कायामेव । यथोक्तं गौतमेन—'प्रेक्षणालम्भने मैथुनशङ्कायाम्' इति ॥ एवं च मान्यस्त्रीणां प्रेक्षणमालम्भः संभाषणं वा न दोषाय। आलम्भः स्पर्शः । मनुर्विशेषमाह—

मुण्डो वा जटिलो वा स्यादथवा स्याच्छिखाजटी । इति ।

अत्र त्रयः पक्षाः मुण्डः जटी शिखाजटी वेति । गौतमोऽपि—'मुण्डी शिखी वा' इति । कात्यायनोऽपि—

सशिखं वपनं कार्यमास्नानाद्ब्रह्मचारिणः । इति ।

सर्वमुण्डत्वं सामगविषयमिति केचित्। तथा च विष्णुपुराणे ज्ञापकम्—

एतं लूनशिखास्तस्य दर्शनैरचिरोद्गतैः ।
कुशाकाशा विराजन्ते बटवः सामगा इव ॥ इति ।

यमः— खट्वासनं च शयनं वर्जयेद्दन्तधावनम् ।
स्वपेदेकः कुशेष्वेव न रेतः स्कन्दयेत्क्वचित् ॥

कूर्मपुराणे—

नाऽऽदर्शं वै समीक्षेत नाचरेद्दन्तधावनम् । इति ।

याज्ञवल्क्यः—

ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि ।
ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ॥ इति ।

ब्रह्मचर्ये स्थितो ब्राह्मणादिरेकमेकसंबन्ध्यन्नं नाद्यात् । एकस्यान्नं न गृह्णीयात् किं तु बहूनां ब्रह्मचारी तु श्राद्धे निमन्त्रितः सन्मधुमांसादिवर्जमेकस्यापि गृहेऽश्नीयात् । अनेन ज्ञायते श्राद्धव्यतिरेकेणैकस्यान्नं न गृह्णीयादिति । तथा—

अग्निकार्यं ततः कुर्यात्संध्ययोरुभयोरपि । इति ।

ततः संध्योत्तरम् । संध्याविधिश्चाचारमयूखे विस्तरेण वक्ष्यते । कदाचित्प्रातःसंध्योत्तरमकृतस्याग्निकार्यस्य यावद्भोजनं गौणकालमाह स एव—

कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया । इति ।

'सायमेवाग्निपूजेत्येके' इति सायमेवाग्निकार्यमित्याहाऽऽपस्तम्बः ।

समिदाहरणं मनुराह—

पुरादाहृत्य समिधः स निदध्याद्विहायसि ।
सायं प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः ॥ इति ।

विहायसि मण्डपादाविति धर्मप्रकाशे । आपस्तम्बः—'नास्तमिते समिद्धारो गच्छेत् ' इति ।

समित्परिमाणमाह कात्यायनः—

नाङ्गुष्ठादधिका कार्या समित्स्थूलतया क्वचित् ।
न विहीना त्वचा चैव न सकीटा न पाटिता ॥
प्रादेशान्नाधिका नोना तथा न स्याद्विशाखिका ।
विशीर्णा विदला ह्रस्वा वक्राः ससुषिराः कृशाः ।
दीर्घाः स्थूलाश्च समिधो वर्जनीयाः प्रयत्नतः ॥ इति ।

अग्निकार्याकरणे प्रायश्चित्तमृग्विधाने—

अग्निकार्याकरणे प्रायश्चित्तम्। मानस्तोके जपेन्मन्त्रं शतसंख्यं शिवालये।
अग्निकार्यं विना भुङ्क्ते न पापं ब्रह्मचारिणः ॥ इति।

इत्यग्निकार्यम्।

ततोऽभिवादनमुक्तं याज्ञवल्क्येन—

अभिवादनम्। ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन्। इति।

ततोऽग्निकार्यानन्तरम्। अत्राग्निकार्याभिवादनयोरङ्गाङ्गित्वाभावात्कदाचिदग्निकार्याकरणेऽपि अभिवादनं कार्यमेव। वृद्धा मान्याः। तत्र मान्यो-गुरुः। तं विशिनष्टि याज्ञवल्क्यः—

स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति। इति।

क्रिया निषेकाद्याः। मनुरपि—

निषेकादीनि कर्माणि यः करोति यथाविधि।
संभावयति चान्नेन स विप्रो गुरुरुच्यते ॥ इति।

एवं च पितैव गुरुः। निषेकादिक्रियाकर्तृत्वात्तस्य। एवं च—

उपनीय य ऋग्वेदमाचार्यः स उदाहृतः।

इत्याचार्यस्योपनेतृत्वं पित्रभावे द्रष्टव्यम्। यद्यपि क्षत्रियस्य वृत्त्यर्थत्वेनाप्राप्तमध्यापनं तथाप्यापदि धर्मार्थं प्राप्तमेव।

अतश्च—'पितैवोपनयेत्पुत्रम्' इति क्षत्रियादिं प्रत्यापदि प्रवर्तत एव। अयं परो विशेषः। याज्ञवल्क्यवाक्ये संज्ञासंबन्धस्त्रैवर्णिकान्विषयीकरोति। मनुवाक्ये तु विप्रग्रहणात्तमेव विषयीकरोति। एवं च विप्रसान्न (विप्रादन्यत्र?) संभावनाकरणे गुरुत्वं यद्यपि मनुवाक्यं न प्रतिपादयति तथापि याज्ञवल्क्यवचनात्तत्सिद्धिः। एवंवर्णिकानां मध्ये यस्यैवैतद्वचनद्वयप्रतिपादितानि निमित्तानि न सन्ति न तस्य गुरुशब्दवाच्यत्वम्। शूद्राणां तु न कदाप्येतद्वचनद्वयप्रतिपादितं गुरुत्वं संभाव्यते। नन्वेवं शूद्राणां गुरुतल्पगमनप्रायश्चित्तं न स्यादिति चेद्यद्यपि[1] गुरुतल्पगमनजन्यं न स्यात्तथापि मातृगमनजन्यं स्यादेवेति न विरोधः।

यद्वा—उपाध्यायः पिता ज्येष्ठो भ्राता चैव महामतिः।
मातुलश्च गुरुस्त्राता मातामहपितामहौ ॥
वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवः स्मृताः।

१ चेन्न यद्यपि ङ. पाठः।

माता मातामही गुर्वी पितुर्मातुश्च सोदराः ।
पितामही स्वसा ज्येष्ठा धात्री च गुरवः स्त्रियः ॥

इति देवलवाक्येन केवलस्यापि पितुर्गुरुसंज्ञाकरणात्तद्भार्यागमने भविष्यत्येव गुरुतल्पगमनप्रायश्चित्तम् । आचार्यं विशिनष्टि मनुः—

उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः ।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ इति ।

रहस्यमुपनिषदः । उपाध्यायं विशिनष्टि स एव—

एकदेशं तु यो वेदं वेदाङ्गान्यथवा पुनः ।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते ॥ इति ।

शङ्खोऽपि—भृतकाध्यापको यस्तु स उपाध्याय उच्यते । इति ।

मासे दिने वर्षे वा एतावद्देयमिति परिच्छिद्य योऽध्यापयति स भृतकाध्यापकः । विष्णुरपि—

' यस्त्वेनं मूल्येनाध्यापयेत्तमुपाध्यायम् ' इति ।

विद्यादिति शेषः । एषु च मध्ये माता मान्यतरेत्युक्तं याज्ञवल्क्येन—

एते मान्या यथापूर्वमेभ्यो माता गरीयसी ॥ इति ।

धर्मप्रकाशे पुराणे तु—

द्वौ गुरू पुरुषस्येह पिता माता च धर्मतः ।
तयोरपि पिता श्रेयान्बीजप्राधान्यदर्शनात् ।
अभावे बीजिनो माता तदभावे तु पूर्वजः ॥

इति पितुर्गरीयस्त्वमुक्तम् । अत्रेच्छया विकल्पः तुल्यकल्पत्वं वा । अन्यं विशेषमाह विष्णुः—

'बाले समानवयस्यध्यापके गुरुवद्वर्तेत' इति ।

बाल इति नावगणनीय इत्यर्थः । इति गुर्वादिनिरूपणम् ।

अभिवादनप्रकारमाह मनुः—

अभिवादात्परं विप्रो ज्यायांसमभिवादयन् ।
असौ नामाहमस्मीति स्वं नाम परिकीर्तयेत् ॥

अभिवादादभिवादये इति पदात्परं स्वं नाम ग्राह्यम् ।

तथा—भोशब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने । इति ।

तथाच अभिवादये देवदत्तोऽहं भो इत्युल्लेखः । एकहस्तेनाभिवादनकरणे दोषमाह विष्णुः—

जन्मप्रभृति यत्किंचिच्चेतसा धर्ममाचरेत् ।
धर्मं तन्निष्फलं याति एकहस्ताभिवादने ॥ इति ।

विशेषमाहात्रिः—

दक्षिणं पाणिमुद्धृत्य प्रकाममभिवादयेत् ।
श्रोत्रिये त्वञ्जलिः कार्यः पादोपग्रहणं गुरोः ॥ इति ।

एतस्माच्च वाक्यादेकहस्तेनाप्यभिवादनं गम्यते । एवं च पूर्वोक्तदोषश्रवणं श्रोत्रियादौ ज्ञेयम् । पादोपसंग्रहणप्रकारमाह मनुः—

व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥

गुरुचरण इति शेषः । बौधायनः—'श्रोत्रे संस्पृश्य' इति विशेषमाह । अन्यविशेषमाह मनुः—

गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत् । इति ।

अथ प्रत्यभिवादनमुक्तं मनुना—

प्रत्यभिवादनम् ।

आयुष्मान्भव सौम्येति वाच्यो विप्रोऽभिवादने ।
अकारश्चैव नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥

अत्र न नाम्नोन्तेऽकारो विधीयते किंतु यो नामान्तेऽकारस्तमुद्दिश्य प्लुतमात्रं विधीयते । नाम्नां च सर्वेषामकारान्तत्वाभावादकारग्रहणं नामान्तस्वरोपलक्षणमिति व्याख्यातृसंप्रदायः । सौम्येति नामग्रहणार्थं तथा च नामान्तस्वरः प्लुतो भवति । शर्मादिप्रयोगोऽपि कार्य इति केचित् । एवं चायुष्मान्भव देवदत्ता ३ शर्मन्निति प्रयोगः । केचित्तु शर्मशब्दान्तर्गताकारं प्लुतं पठन्ति । तच्चिन्त्यम् । शर्मशब्दस्य नामान्तर्गत्यभावात् । तदन्तर्गतौ केवलशर्मप्रयोगाभावादवश्यवक्तव्ये उपपदे द्व्यक्षरनामानुपपत्तिः । इदं च शूद्रस्य न भवति । 'प्रत्यभिवादेऽशूद्रे' इतिस्मृतिरूपपाणिनिसूत्रात् । अनेन च ज्ञायते शूद्रं प्रत्यपि प्रत्यभिवादनं प्राप्तमिति ।

ब्राह्मणस्य क्षत्रियादीनामभिवादने प्रायश्चित्तमाह शातातपः—

ब्राह्मणस्य क्षत्रियादीनामभिवादने प्रायश्चितम् ।

क्षत्रवैश्यावभिवाद्य प्रायश्चित्तं कथं भवेत् ।
ब्राह्मणानां दशाष्टौ वा अभिवाद्य विशुध्यति ॥
अभिवाद्य द्विजः शूद्रं सचैलं स्नानमाचरेत् ।
ब्राह्मणानां शतं सम्यगभिवाद्य विशुध्यति ॥ इति ।

अभिवादनापवादमाह विष्णुः—

सभासु चैव सर्वासु यज्ञे राजगृहे तथा ।
नमस्कारं प्रकुर्वीत ब्राह्मणान्नाभिवादयेत् ॥

क्वचिद(न)भिवादनमाह शातातपः—

उदक्यां सूतिकां नारीं भर्तृघ्नीं गर्भघातिनीम् ।
अभिवाद्य द्विजो मोहादहोरात्रेण शुध्यति ॥

अनेन निषेधेन ज्ञायते स्त्रियोऽप्यभिवाद्या इति ।

यथोक्तं मनुना—

कामं तु गुरुपत्नीनां युवतीनां युवा भुवि ।
विधिवद्वन्दनं कुर्यादसावहमिति ब्रुवन् ॥ इति ।

विशेष उक्तस्तेनैव—

यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥

'एतच्चाभिवादनमधिकवयसामेव कार्यम्—'ज्यायांसमभिवादयेत्' इति स्मृतेः ।

तथा अत एव ऋत्विगादीनां मान्यत्वेऽपि कनीयसामनभिवाद्यत्वमाह गौतमः—'ऋत्विक्श्वशुरमातुलपितृव्याणां तु यवीयसां प्रत्युत्थानमनभिवाद्याः' इति ।

यत्तु वासिष्ठः—'ऋत्विक्श्वशुरपितृव्यमातुलानवरवयसः प्रत्युत्थायाभिवादयेत्' इति । तदभिवादनमाभिमुख्येन वदनं परितोषणार्थम् । अत एव बौधायनः—ऋत्विक्श्वशुरपितृव्यमातुलानां यवीयसां प्रत्युत्थायाभिभाषणम् ॥ इति ।

अभिभाषणनियममाह मनुः—

कुशलं ब्राह्मणं पृच्छेत्क्षत्रबन्धुमनामयम् ।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च । इति ।

ब्राह्मणेन स्वस्मात्कनिष्ठानां क्षत्रियादीनां वाऽऽशीर्देयेत्युक्तं भविष्यत्पुराणे—

ब्राह्मणः सर्ववर्णानां स्वस्ति कुर्यादिति स्थितिः ॥ इति ।

विशेष उक्तः शातातपेन—

पाखण्डं पतितं व्रात्यं महापातकिनं शठम् ।

नास्तिकं च कृतघ्नं च नाभिवादेत्कथंचन ॥
धावन्तं च प्रमत्तं च मन्त्रोच्चारकृतं तथा ।
भुञ्जानमाचमनार्हं नाभिवादेत्कथंचन ॥
वमन्तं कृन्तमाणं च कुर्वन्तं दन्तधावनम् ।
अभ्यक्तशिरसं चैव स्नास्यन्तं नाभिवादयेत् ॥

जमदग्निः—

देवताप्रतिमां दृष्ट्वा यतिं चैव त्रिदण्डिनम् ।
नमस्कारं न कुर्याच्चेदहोरात्रेण शुध्यति ॥

इत्यभिवादनप्रत्यभिवादननिर्णयः ।

---

अथ मान्यतानिमित्तानि । याज्ञवल्क्यः—

विद्याकर्मवयोबन्धुवित्तैर्मान्या यथाक्रमम् ।

मान्यतानिमित्तानि । अत्र पूर्वपूर्वस्य गरीयस्त्वं ज्ञेयम् । उक्तं च गौतमेन— 'श्रुतं सर्वेभ्यो गरीयस्तन्मूलत्वाद्धर्मस्य' इति ।

मनुरपि—पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च ।
यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः ॥ इति ।

दशमीं गत इति नवतेरूर्ध्वावस्था प्राप्त इत्यर्थः । पञ्चानां विद्यादीनाम् ।

याज्ञवल्क्योऽपि—

एतैः प्रभूतैः शूद्रोऽपि वार्द्धके मानमर्हति । इति ।

मार्गापसारणे विशेषमाह मनुः—

मार्गापसारणे विशेषः । चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः ।
स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च ॥

वरो विवाहोद्यतः । भारतेऽपि—

अष्टावक्रः पथि राज्ञा समेत्य प्रोत्सार्यमाणो[1] वाक्यमिदं बभाषे ।
अन्धस्य पन्था बधिरस्य पन्थाः स्त्रियः पन्था भारवाहस्य पन्थाः ।
राज्ञः पन्था ब्राह्मणेनासमेत्य स्नातस्य पन्थाः ब्राह्मणस्यैव पन्थाः॥इति ।

इति मान्यतानिमित्तम् ।

---

अध्ययनधर्माः । मनुः—चर्याविशेषैर्विविधैर्व्रतैश्च श्रुतिचोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥ इति ।

---

१ मार्यमाणं ङ. पाठः ।

रहस्यमुपनिषत् । श्रुतौ—'तस्मात्स्वाध्यायोऽध्येतव्यः' इति स्वः स्वकीयोऽध्यायः शाखा तदुक्तं भट्टपादैः—

अत्र स्वाध्यायशब्देन स्वशाखैका तु गृह्यते । इति ।

अनेन च स्वाध्यायाध्ययनस्य प्राथम्यमावश्यकत्वं चोक्तं न तु द्वितीयवेदाध्ययनम् ।

एवंच—वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।

इत्यविरुद्धम् ।

अत्र केचित्—बहूनां वेदानामध्ययनेऽपि स्ववेदसंबन्धिनी द्वितीया शाखानाध्येतव्येति व्याचक्षते । यथा आश्वलायनेन शाङ्खायनशाखेति । तदयुक्तम् । आश्वलायनेन यजुःशाखाध्येतव्या न शाङ्खायनशाखेत्यत्र मानाभावात् । न च स्वाध्याय इत्यत्रैकवचनात्तदर्थस्यावर्त्मीमांसारीत्योपादेयगतत्वात्पशुना यजेतेत्यत्र द्वितीयपश्वनालम्भवद्द्वितीयशाखाऽनध्ययनमिति वाच्यम् । तत्र हि एकत्वं प्रकृत्यन्वयि व्यावर्तकं संभवति नत्वेवमत्राऽपि स्वाध्यायस्यैकत्वेन परिज्ञातत्वात् । न ह्याकाश इत्यत्रैकत्वं व्यावर्तकं भवति । अतोऽत्र—

एकवेदस्य शाखानां मध्ये योऽन्यां समाश्रयेत् ।
स्वशाखां संपरित्यज्य शाखारण्डः स उच्यते ।। इति ।

अन्यां स्वशाखाभिन्नाम् । यत्र हि एकवेदशाखानां मध्ये स्वीयां परित्यज्य योऽन्यामधीते स शाखारण्ड इतिवदता तामधीत्यान्यशाखाध्ययनमनुज्ञातं भवति । स एव—

अधीत्य शाखामात्मीयां परशाखां ततः पठेत् । इति ।

तथा 'षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति । विशेषमाह कात्यायनः—

स्वशाखाश्रयमुत्सृज्य परशाखाश्रयं तु यः ।
कर्तुमिच्छति दुर्मेधा मोघं तस्य विचेष्टितम् ।। इति ।

इदं स्वशाखोक्तविरुद्धं न कार्यमित्येवंपरम् । यथोक्तं तेनैव—

यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत् ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकं यथा ।। इति ।

---

अध्ययनधर्ममाह मनुः—

अध्ययनधर्माः ।

प्राक्कूलान्पर्युपासीनः पवित्रैश्चैव पावितः ।
प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति ।। इति ।

प्राक्कूलान्प्रागग्रान् । पवित्रमाह गौतमः—'प्राणोपस्पर्शनं दर्भैः' इति । प्राणा इन्द्रियाणि । संवर्तः—

पवित्रम् । प्रणवं प्राक् प्रयुञ्जीत व्याहृतीस्तदनन्तरम् ।
सावित्र्याश्चानुवचनं ततो वृत्तान्तमारभेत् ॥ इति ।

वृत्तान्तं पत्रस्थापितम् । मनुः—

ओङ्कारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः ।
त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखम् ॥

तिस्रः भूर्भुवःस्वः । ब्रह्मणो वेदस्य मुखमारम्भे पठनीयमित्यर्थः ।

ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।

इतिवचनादन्ते प्रणवमात्रम् । गौतमः—'प्राङ्मुखो दक्षिणतः शिष्य उदङ्मुखो वा' इति । मनुः—

अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः ।
ब्रह्माञ्जलिपुटोऽध्याप्यो लघुवासा जितेन्द्रियः ॥ इति ।

लट्प्रयोगेणाचमनमध्ययनाङ्गम् । शूद्रसन्निधौ नाध्येयमित्याह व्यासः—

शूद्रसन्निधानाध्ययननिषेधः । अनध्यायेष्वधीतं यच्च शूद्रस्य संनिधौ ।
प्रतिग्रहनिमित्तं यन्नरकाय तदुच्यते ॥ इति ।

अस्याध्ययने लब्धिर्भविष्यतीत्याशया पठितम् । नारदः—

पुस्तकप्रत्ययाधीतं नाधीतं गुरुसन्निधौ ।
भ्राजते न सभामध्ये जारगर्भ इव स्त्रियाः ॥
नाविस्पष्टमधीयीत न शूद्रजनसन्निधौ ।
न निशान्ते परिश्रान्तो ब्रह्माधीत्य पुनः स्वपेत् ॥

नारदः—हस्तेनाधीयमानस्तु स्वरवर्णान् प्रयोजयन् ।
ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ॥

हस्तस्वराध्ययनं तु सामयजुर्वेदिनाम् ।

व्यासः—मेखलाजिनदण्डानां धारणैर्ब्रह्मचारिभिः ।
वेदः कृत्स्नोऽधिगन्तव्यः सर्वज्ञाना द्विजातिभिः ॥
भिक्षाशिभिर्गुरोर्नित्यं शुश्रूषायां रतैः सदा ।
आसमाप्तेर्व्रतं कार्यं वेदस्य विधिवद्द्विजैः ॥ इति ।

शुश्रूषाफलमाह स एव—

शुश्रूषाफलम् । यथा खनन्खनित्रेण नरो वार्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥

नारदः—अहेरिव गणाद्भीतः सौहित्यान्नरकादिव ।
गक्षसीभ्य इव स्त्रीभ्यः स विद्यामुपगच्छति ।। इति ।

सौहित्यं तृप्तिः । लघुव्यासः—

ऋक्पादमप्यधीयीत मार्गेणोक्तेन धर्मवित् ।
नत्वेव चतुरो वेदानन्यायेन कदाचन ।।
वेदविप्लावनात्तेन वरं मौनं समाश्रितम् ।
वेदविप्लावनाद्भीतो (?) नरकं यात्यधोमुखः ।। इति ।

वेदविप्लावकस्य लक्षणमाह यमः—

योऽर्थार्थी मां द्विजे दद्यात्पठेच्चैवाऽविधानतः ।
अनध्याये च तं प्राहुर्वेदविप्लावकं द्विजाः ।।

विद्यानाशहेतून्नारद आह—

विद्यानाश-हेतवः ।

द्यूतं पुस्तकशुश्रूषा नाटकासक्तिरेव च ।
स्त्रियस्तन्द्रा च निद्रा च विद्याविघ्नकराणि षट् ।

पुस्तकस्य पुराणादेः शुश्रूषा श्रोतुमिच्छा । अन्यान्यपि लोकतो विद्यानाशकारणान्यवगन्तव्यानि ।

इत्यध्येतृधर्माः ।

---

गुरुधर्मानाह याज्ञवल्क्यः—

गुरुधर्माः ।

कृतज्ञाऽद्रोहिमेधाविशुचिकल्पानसूयकाः ।
अध्याप्या धर्मतः साधुशक्ताप्तज्ञानवित्तदाः ।।

कृतज्ञः उपकारस्य वेत्ता । कल्पो नीरोग इति ।

धर्मप्रकाशे मनुः—

आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः ।
आप्तः शक्तोऽर्थदः साधुः स्वोऽध्याप्या दश धर्मतः ।।

तथा—धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा ।
न तत्र विद्या वक्तव्या उप्तं बीजमिवोषरे ।।

यदा विहितानानुष्ठापकाय नास्तिकाय चाध्यापयति तदा धर्माभावः ।

नारदः—

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थं नोपलभ्यते ।। इति ।

चतुर्थं साधनम् । यमः—

सततं प्रातरुत्थाय दन्तधावनपूर्वकम् ।
स्नात्वा हुत्वाऽथ शिष्येभ्यः कुर्यादध्यापनं द्विजः ।। इति ।

शयानस्याध्यापननिषेधः । आपस्तम्बः—' शयानश्चाध्यापनं वर्जयेत् ' इति ।

मनुः—अध्येष्यमाणस्तु गुरुर्नित्यकालमतन्द्रितः ।
अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति वा चरेत् ।।

ताडनमपि स एवाह—

भार्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः ।
प्राप्तापराधास्ताड्यास्ते रज्ज्वा वेणुदलेन च ।। इति ।

ताडनं तु शिरसि न कार्यम् । यथोक्तं मनुना—

पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथंचन ।
अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चोरकिल्बिषम् ।।

विद्यावतः प्रार्थितस्याध्यापनमावश्यकम् ' ये हि विद्यामधीत्यार्थिने न प्रदद्युर्न ते धर्मभाजः स्युः ' इति वसिष्ठस्मरणादध्यापनेनाधीताया विद्यायाः संपूर्णं फलमाप्नोतीत्यर्थः ।

अधीयीरंस्त्रयो वर्णाः स्वकर्मस्था द्विजातयः ।
प्रब्रूयाद्ब्राह्मणस्तेषां नेतराविति निश्चयः ।।

इतिमनुवचनाद्ब्राह्मणेनैव कार्यम् । इतरौ राजवैश्यौ । अत्र वाक्यत्रयम्—' त्रयो वर्णा ब्राह्मणादधीयीरन् ' वक्ष्यमाणवचनस्वरसाद्ब्राह्मणादित्यध्याहार्यम् । ' ब्राह्मण एव प्रब्रूयात् ' इति द्वितीयम् । 'नेतरौ ' इति प्रतिषेधरूपं तृतीयम् । एवं यदा क्षत्रियादिरध्यापयति तदा तस्याध्येतुश्च दोषः । आपद्युभयोर्दोषो नास्तीत्याह मनुः—

अब्राह्मणादध्ययनमापत्काले विधीयते ।
अनुव्रज्य तु शुश्रूषा यावदध्ययनं गुरोः ।। इति ।

अनुव्रज्य शुश्रूषेत्यनुगमनमात्रं कार्यं न पादप्रक्षालनादि । इयं चापद्ब्राह्मणाध्यापकाभावरूपाऽध्येतुः । गौतमोऽपि—'आपत्कल्पा अब्राह्मणाद्ब्राह्मणस्य विद्योपयोगोऽनुगमनं शुश्रूषाऽऽसमाप्तेर्ब्राह्मणो गुरुः' इति ।

मनुरपि—श्रद्दधानः शुभां विद्यामाददीताऽवरादपि ।
अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि ।। इति ।

वेदाध्ययनस्य श्रैष्ठ्यमाह याज्ञवल्क्यः—

यज्ञानां तपसश्चैव शुभानां चैव कर्मणाम् ।
वेद एव द्विजातीनां निःश्रेयसकरः परः ॥ इति ।

विद्यादानस्य फलमाह स एव—

विद्यादान-फलम् ।

सर्वधर्ममयं ब्रह्म प्रदानेभ्योऽधिकं यतः ।
तद्दत्त्वा समवाप्नोति ब्रह्मलोकं सनातनम् ॥ इति ।

इति गुरुधर्माः ।

---

अथानध्यायाः । ते च नित्यनैमित्तिकभेदेन द्विधा । तत्र नित्यास्तावदुच्यन्ते ।

मनुः—अमावास्या गुरुं हन्ति शिष्यं हन्ति चतुर्दशी ।

अनध्यायाः ।

ब्रह्माऽष्टमी पौर्णमास्यौ तस्मात्ताः परिवर्जयेत ॥ इति ।

तथा—अमावास्याचतुर्दश्योः पौर्णमास्यष्टकासु च । इति ।

अष्टमीत्वेनाष्टकानामुपादानादोषातिशयार्थं पुनर्ग्रहणम् । केचित्तु अष्टमीष्वित्येव पठन्ति । अहोरात्रं चायमनध्यायः । याज्ञवल्क्येन द्युनिशमित्यनुवृत्तौ चतुर्दश्यादीनामुपादानात् । रामायणे हनुमद्वाक्यम्—

सा स्वभावेन तन्वङ्गी त्वद्वियोगाद्विशेषतः ।
प्रतिपत्पाठशीलस्य विद्येव तनुतां गता ॥ इति ।

हारीतोऽपि—

प्रतिपत्सु चतुर्दश्यामष्टम्यां पर्वणोर्द्वयोः ।
श्वोऽनध्यायेऽद्य शर्वर्यां नाधीयीत कदाचन ॥ इति ।

तथा—प्रदोषेषु त्रयोदश्यां नाध्येयं प्रतिपत्सु च । इति ।

त्रिमुहूर्तः प्रदोषः स्याद्भानावस्तंगते सति ॥

इत्युक्तप्रदोषे । यद्वा प्रदोष उक्तो बृहन्मनुना—

चतुर्थ्यां च त्रयोदश्यां सप्तम्यामर्धरात्रतः ।
अर्वाङ्नाध्ययनं कुर्याद्यदीच्छेत्तस्य धारणम् ॥

स्मृत्यर्थसारे विशेषः—

चतुर्थ्याः पूर्वरात्रे तु नवनाडीषु दर्शने ।
नाध्येयं पूर्वरात्रे स्यात्सप्तमी च त्रयोदशी ॥
अर्धरात्रात्पुरा चेत्स्यान्नाध्येयं पूर्वरात्रके ॥ इति ।

पूर्वं चतुर्थ्यामर्धरात्रतोऽर्वाङ्नाध्येयमिति तावत्पर्यंतं चतुर्थीसत्वे अन्यथा नवनाडीपर्यन्तम् । यद्वा पूर्ववचनेनार्धरात्रात्प्राग्दोषेऽवगते पुनरत्र नवनाडीग्रहणं दोषातिशयार्थम् ।

दक्षः—प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् ।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ॥

बौधायनः—प्रातःसंध्या त्रिनाडी स्यात्सायंसंध्या तथाविधा ।
महानिशा तु विज्ञेया चतस्रो घटिकास्तथा ।
सायंप्रातःसंध्ययोश्च नाधीयीत महानिशि ॥

तथा—महानिशा तु विज्ञेया रात्रौ मध्यमयामयोः ।
तस्यां स्नानं न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥ इति ।

अत्रापि घटिकाचतुष्टयं दोषातिशयार्थम् । स्मृतिचन्द्रिकायां पुराणे—

महानवम्यां द्वादश्यां भरण्यां च महाद्युते ।
तथाक्षयतृतीयायां शिष्यान्नाध्यापयेद्बुधः ।
माघमासस्य सप्तम्यां रथाख्यायां विवर्जयेत् ॥ इति ।

महच्छब्दस्य द्वादश्या भरण्या च सहान्वय इति धर्मप्रकाशे । महानवमी आश्विनशुक्ला । महाद्वादशी कार्तिकशुक्लद्वादशी । महाभरणी प्रौष्ठपद्यनन्तरेति तत्रैव । नारदीये—

अयने विषुवे चैव शयने बोधने हरेः ।
अनध्यायस्तु कर्तव्यो मन्वादिषु युगादिषु ॥

तथा—युगादिषु च सर्वासु तथा मन्वन्तरादिषु ।
अनध्यायं प्रकुर्वीत या च सोपपदा तिथिः ॥

मन्वन्तरादयो युगादयश्च [1]श्राद्धमयूखे वक्ष्यन्ते । सोपपदा उक्ताः कालादर्शे—

सिता ज्येष्ठे द्वितीया च आश्विने दशमी सिता ।
चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः ॥ इति ।

यदि कदाचिदनध्यायतिथिः प्रातः सायं वा तदाप्यनध्याय इत्याह बौधायनः—'यद्यनध्यायतिथिर्द्विमुहूर्ता परिदृश्येत तमनध्यायं प्राहुः' इति । दिनमध्ये परिदृश्येतेत्यर्थः । कालादर्शे स्मृतिः—

चातुर्मास्यद्वितीयासु वेदाध्यायं विवर्जयेत ॥ इति ।

---

१ तातकृतश्राद्धमयूखे ज्ञेयाः ङ. पाठः ।

ता आह गार्ग्यः—

शुचावूर्जे तपस्ये च या द्वितीया विधुक्षये ।
चातुर्मास्यद्वितीयास्ताः प्रवदन्ति मनीषिणः ।। इति ।

विधुक्षयः कृष्णपक्षः । आषाढ्युत्तरा कार्तिक्युत्तरा फाल्गुन्युत्तरा चेत्यर्थः । इति नित्यानध्यायाः ।

---

अथ नैमित्तिकेषु तात्कालिकानध्यायानाह याज्ञवल्क्यः—

नैमित्तिकानध्यायाः ।

श्वक्रोष्टुगर्दभोलूकसामबाणार्तनिस्वने ।
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ।।
देशेऽशुचावात्मनि च विद्युत्स्तनितसंप्लवे ।
भुक्त्वार्द्रपाणिरम्भोऽन्तरर्धरात्रेऽतिमारुते ।।

तात्कालिकानध्यायाः ।

पांशुवर्षे च दिग्दाहे संध्यानीहारभीतिषु ।
धावतः पूतिगन्धे च शिष्टे च गृहमागते ।।
खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे ।
सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः ।। इति ।

बाणो वंशः[1] । शिष्टागमनेऽहि शिष्टाज्ञायां नानध्यायः । यथाह यमः—

आगतं वाऽतिथिं दृष्ट्वा नाऽधीयीतैव बुद्धिमान् ।
अथानुज्ञापिते तस्मिन्नध्येतव्यं प्रयत्नतः ।। इति ।

यानं रथादिः । इरिणमूषरं महाभूमिर्वा । यावन्निमित्तं शब्दादि तावदेवानध्याय इत्यर्थः । मनुः—

नित्यानध्याय एव स्याद्ग्रामेषु नगरेषु च ।
धर्मनैपुणकामानां पूतिगन्धे च सर्वतः ।। इति ।

धर्मस्य नैपुणं संपूर्णत्वं तत्कामयतीति । वासिष्ठो विशेषमाह—'नगरेषु कामं गोमयपर्युक्षिते परिलिखने च ' इति । हेमाद्रौ स्मृतौ—

सर्वकुत्सितगन्धे च परिवादसभासु च ।
गोविप्ररोधने सर्वदा……श्राद्धपङ्क्तिषु ।।
शाल्मलस्य मधूकस्य कोविदारकपित्थयोः ।
श्लेष्मातकस्य छायायां चेति तात्कालिकान्विदुः ।।

---

१ गिरिरिति ङ. पाठः ।

श्राद्धपङ्क्तिषु विहितमन्त्रभिन्नेषु श्राद्धभागेष्वनध्यायः। विहितमन्त्राः श्राद्धमयूखे वक्ष्यन्ते।

मनुः—शयानः प्रौढपादश्च कृत्वा चैवावसक्थिकाम्।
नाधीयीताऽऽमिषं जग्ध्वा सूतकान्नाद्यमेव च॥ इति।

प्रौढपादः प्रसारितपादः पादारोपितपादो वा। अवसक्थिका जानुनोर्मध्यस्य च बन्धः। स एव—

नाधीयीत श्मशानान्ते ग्रामान्ते गोव्रजेऽपि वा।
वसित्वा मैथुनं वासः श्राद्धिकं प्रतिगृह्य च॥
न विवादे न कलहे न सेनाया न संगरे।
न भुक्तमात्रे नाऽजीर्णे न वमित्वा न मुक्तके।
शस्त्रेण च क्षते गात्रे रुधिरे च परिस्रुते॥

मुक्तकं मुखोद्गार इति। धर्मप्रकाशे यमः—'सामशब्दे नाथर्वयजुषी' इति। नाधीयीतेत्यर्थः। आपस्तम्बः—'शाखान्तरध्वनौ साम्नामनध्यायः' इति। गौतमः। 'अभ्रदर्शने चापर्तौ' अपर्तौ प्रावृड्भिन्नर्तौ। हेमाद्रौ स्मृतिः—'गजगण्डसारससिंहव्याघ्रमहापापिकृतघ्नावेक्षणमनध्यायः' इति। एषां यावदवेक्षणं तावदनध्याय इत्यर्थः। प्रचेताः—'चतुष्पथवर्त्ममहापथराजोद्यानेषु नाधीयीत' इति।

शङ्खः—नाधीयीताभियुक्तोऽपि यानगो न च योगतः।
देवायतनवल्मीकश्मशानवनसन्निधौ॥

आपस्तम्बः—'ब्रह्माध्येष्यमाणो मलवद्वाससेच्छन्संभाषितुं ब्राह्मणेन संभाष्य तया संभाषेत ब्राह्मणेनैव संभाष्याधीयीत' इति। यावद्ब्राह्मणसंभाषणं न कृतं तावदनध्याय इति। गोत्तमः—'बाणभेरीमृदङ्गगदार्तस्वरेषु' इति। अनध्याय इत्यर्थः। गदं शकटम्।

तात्कालिकानुक्त्वा सज्योतिरनध्यायानाह मनुः—

प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तनितनिस्वने।
सज्योतिः स्यादनध्यायः शेषे रात्रौ यथा दिवा॥

प्रादुष्कृतेष्विति प्रातःसंध्योपलक्षणम्। सज्योतिरिति सायंसंध्यायां रात्रौ। पूर्वं विद्युत्स्तनितवर्षाणि प्रक्रान्तानि। तत्रोभयोरुक्तम्। शेषे वर्षे यथा दिवा तथा रात्रौ अहोरात्रमित्यर्थः। वर्षे संध्यायामेव। अयं सज्योतिरनध्यायः

१ प्र इति ङ. पाठः।

प्रावृट्काले । यथाहऽऽपैठीनसिः—‘ यदा वर्षास्वेव विद्युत्स्तनितं वा तदा संज्योतिः ’ इति । अवर्षासु विद्युदादौ त्रिरात्रं वक्ष्यते । इदं सायंसंध्याया हारीतेन ‘ प्रातःसंध्यास्तनितेऽहोरात्रम् ’ इत्युक्तत्वात् । स्मृत्यर्थसारे ‘ काकोलूकमूषककुक्कुटमण्डूकाद्यन्तरागमनं दिने चेद्दिनान्तं रात्रौ चेद्रात्र्यन्तमनध्यायः ’ इति । गौतमः—‘ श्मशानग्रामान्तमहापथेष्वनध्यायः ’ इति इति सज्योतिरनध्यायः । अहोरात्रानध्यायमाह याज्ञवल्क्यः—

संध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ।
समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥
पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके ।
ऋतुसंधिषु भुक्त्वा तु श्राद्धिकं प्रतिगृह्य च ॥
पशुमण्डूकनकुलश्वाहिमार्जारमूषकैः ।
कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये ॥

श्राद्धिकं प्रतिगृह्यचेति पार्वणसंबन्धि । एकोद्दिष्टे वक्ष्यते । नवश्राद्धेऽन्नजरणपर्यन्तमनध्यायः ।

शातातपः—‘ अष्टकासु त्वहोरात्रमुल्कासु च महोत्सवे ’ इति ।

गौतमः—‘ सकलोपाहितवेदसमाप्तिछर्दिश्राद्धमनुष्ययज्ञभोजनेष्वहोरात्रमिति ’ । सकलोपाहितोऽग्न्युत्पातः । छर्दौ विशेषमाहाऽऽपस्तम्बः—‘ छर्दयित्वा स्वप्नान्ते घृतं वा प्राश्य ’ इति । अधीयीतेत्यर्थः । स्वप्नान्तं मेहनादि । धर्मप्रकाशे । अहोरात्रानुवृत्तौ गोभिलः—

सब्रह्मचारिणि मृते प्रेते भूमिपतावपि । इति ।

अनध्याय इत्यर्थः । गौतमः—‘ऊर्ध्वं भोजनादुत्सवे प्राधानस्य’ इति । अस्यार्थः । उत्सवे विवाहादावूर्ध्वं भोजनादहोरात्रमनध्यायः । प्राधानस्य प्रथमाध्ययने अनुत्सवेऽपि भोजनादूर्ध्वमनध्याय इति ।

इत्यहोरात्रानध्यायाः ।

---

आकालिकानध्यायमाह मनुः—

आकालिकानध्यायः ।

विद्युत्स्तनितवर्षेषु महोल्कानां च संप्लवे ।
आकालिकमनध्यायमेतेषु मनुरब्रवीत् ॥ इति ।

विद्युदादित्रयसाहित्यमत्र ज्ञेयम् । द्वन्द्वनिर्देशादिति मेधातिथिः । प्रत्येकं निमित्ततेति हेमाद्रिः । इदं च वर्षाकाले, तद्भिन्ने वक्ष्यते । यस्मिन्समये निमित्तं जातं तं कालमारभ्य श्वस्तावत्कालपर्यन्तम् । विद्युदादीनां निमित्तत्वं संध्यायामेव । यथाऽऽह स एव—

I-5

एतास्त्वभ्युदितान्विद्याद्यदा प्रादुष्कृताग्निषु ।
तदा विद्यादनध्यायमनृतौ चाभ्रदर्शने ॥

एवं च ऋतावभ्रदर्शने नानध्यायः । अभ्रदर्शनेऽपि प्रादुष्कृतान्वय इति धर्मप्रकाशे । आपस्तम्बः—'उल्कापातमग्न्युत्पातं च सर्वासां विद्यानामाकालिकम्' इति । अनध्याय इत्यर्थः । हेमाद्रौ स्मृत्यन्तरे—'अग्न्युत्पाते चाकालवृष्टौ चाकालिकोऽनध्यायः' इति । अग्न्युत्पातश्च समानग्रामभवः। आपस्तम्बः—'विद्युत्स्तनयित्नुवृष्टयोऽपर्तौ यत्र संनिपतेयुरुयहमनध्यायो यावद्भूमिर्व्युदका इत्येके । एकेन द्वाभ्यां चैतेषामाकालम्' इति ।

अपर्तुमाह गार्ग्यः—

अनूराधर्क्षमारभ्य षोडशर्क्षेषु भास्करः ।
यावत्प्रवर्तते तावदकालं मुनयो विदुः ॥ इति ।

एवं च मृगमारभ्य विशाखान्तं कालः । इत्याकालिकानध्यायः ।

---

पक्षिण्यनध्यायमाह मनुः—

पक्षिण्यनध्यायः।

यथाशास्त्रं तु कृत्वैवमुत्सर्गं छन्दसां बहिः ।
विरमेत्पक्षिणीं रात्रिं यद्वाप्येकमहर्निशम् ॥ इति ।

कालादर्शे मनुः—

उत्सर्गे प्रथमेऽध्याये त्वनध्यायरुयहं भवेत् ।
धारणाध्ययनादौ तु पक्षिणीं दिनमेव च ॥ इति ।

इति पक्षिण्यनध्यायः ।

---

त्रिदिनाऽनध्यायमाह मनुः—

त्रिदिनानध्यायः ।

प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम् ।
त्र्यहं न कीर्तयेद्ब्रह्म राज्ञो राहोश्च सूतके ॥ इति ।

अत्र केचिन्नवश्राद्धेऽन्नजरणपर्यन्तमनध्याय एकोद्दिष्टे तु त्र्यहमित्यनौचित्यं मन्वाना नवश्राद्धीयमतिपूर्वान्नभोजनेऽन्नजरणपर्यन्तमेकोद्दिष्टेषु मतिपूर्वे त्र्यहमिति व्यवस्थापयन्ति । मनूक्तैकोद्दिष्टशब्देन नवश्राद्धान्यपि गृह्यन्ते । शङ्खः—'राहुदर्शने शक्रध्वजपतने आचार्ये च मृते त्रिरात्रम्' इति । इदं च संपूर्णग्रहे । खण्डग्रहे तु गौतमोक्तमाकालिकमनध्यायं विद्यादिति तत्रैव । विज्ञानेश्वरस्तु ग्रस्तास्ते त्रिरात्रमन्यथाऽकालिकमित्याह । शक्रध्वजकालमाह गार्ग्यः—

द्वादश्यां तु सिते पक्षे मासि प्रौष्ठपदे तथा ।

............शक्रयष्टिनिपातनम्' इति ।

पौर्णमास्यामिति केचित् । मनुः—

उपाकर्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम् । इति ।

याज्ञवल्क्यः—

त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु ।

विश्वामित्रः—

समाप्य वेदं त्रिदिनं वेदानध्ययनं भवेत् । इति ।

हारीतः 'आरण्यशूकरस्य त्र्यहं ग्राम्यस्याहः' इति । अन्तरागमन इत्यर्थः ।

इति त्र्यहानध्यायाः ।

---

महागुरुनिपाते ब्राह्मणस्य द्वादशरात्रमध्ययनादिनिषेधात्सोऽप्यनध्यायः ।

त्रिमासानध्याय उक्तो हेमाद्रौ—

अविगवयाजव्याघ्रनास्तिकादौ त्रिमासम् । इति ।

त्रिमासानध्यायः ।

---

षण्मासानध्याय उक्तः श्लोकगौतमेन—

षण्मासानध्यायः ।

गुर्वन्तेवासिनां वेदमध्येतॄणां च मध्यतः ।
ययुः शशाः श्वपाकाऽजा नाधीयीतार्धवत्सरम् ॥ इति ।

पूर्वमजे मासत्रयमुक्तमतोऽत्र प्रथमारम्भेऽजगमने षण्मासं ज्ञेयम् । संवत्सराऽनध्याय उक्तो वसिष्ठेन उक्तः (स्मृत्यर्थसारे—गजसारससिंहव्याघ्र-महापातकिकृतघ्नादेरब्दमिति) ।

वत्सरानध्यायः ।

इत्यनध्यायाः ।

---

अथानध्यायापवादमाह मनुः—

अनध्यायापवादः ।

वेदोपाकरणे चैव स्वाध्याये चैव नैत्यके ।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥ इति ।

नित्यस्वाध्यायो ब्रह्मयज्ञः । शौनकः—

नित्ये जपे च काम्ये च वेदपारायणे तथा ।
नाऽनध्यायोऽस्ति वेदानां ग्रहणे[1] ग्राहणे स्मृतः ॥

तथा—देवतार्चनमन्त्राणां नानध्यायः स्मृतस्तथा ।
नाऽनध्याये जपेद्वेदान्रुद्रांश्चैव विशेषतः ।

---

१ अयमनध्यायप्रतिषेधोऽति मन्दबुद्धिविषयः ।

पौरुषं पावमानं च गृहीतनियमादृते ॥ इति ।

यदि मयेदमपठित्वा न भोक्तव्यमिति नियमस्तदाऽध्येयमित्यर्थः ।

तथा—चतुर्दश्यष्टमीपर्वप्रतिपत्स्वेव सर्वदा ।
दुर्मेधसामनध्यायस्त्वन्तरा गमनेषु च ।
तत्र विस्मृतिशीलानां बहुवेदप्रपाठिनाम् ॥
चतुर्दश्यष्टमीपर्वप्रतिपद्वर्जितासु च ।
वेदाङ्गन्यायमीमांसाधर्मशास्त्राणि चाऽभ्यसेत्॥इति पठितम् ।

इत्यपवादाः ।

भिक्षाप्रकारमाह मनुः—
प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम् ।
प्रदक्षिणं परीत्याग्निं चरेद्भैक्षं यथाविधि ॥
भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः ।
भवन्मध्यं तु राजन्यो वैश्यस्तु भवदन्तिमः ॥
वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु ।
ब्रह्मचार्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम् ॥ इति ।

भिक्षा-प्रकारः ।

भवत्पूर्वमिति 'भवती भिक्षां ददातु । भिक्षां भवती ददातु । भिक्षां ददातु भवती' इति ।

व्यासः—ब्राह्मणक्षत्रियविशश्चरेयुर्भैक्षमन्वहम् ।
सजातीयगृहेष्वेव सार्ववर्णिकमेव वा ॥ इति ।

शूद्रादामं ग्राह्यं न तु पक्वम् ।
तस्मादामं ग्रहीतव्यं शूद्रादप्यङ्गिराब्रवीत् ।

इत्यङ्गिरःस्मृतेः ।
यस्तु वेदमधीयानः शूद्रान्नमुपजीवति ।
शूद्रो वेदफलं याति शूद्रत्वं सोऽधिगच्छति ॥

इति पराशरेण सिद्धान्नस्य निन्दितत्वाच्च एतच्चापद्विषयम् ।
चातुर्वर्ण्यं चरेद्भैक्षमलाभे कुरुनन्दन ।

इति भविष्यत्पुराणोक्तेः । मनुरपि—
सर्वं वापि चरेद्ग्रामं पूर्वोक्तानामसंभवे ।
नियम्य प्रयतो वाचमभिशस्तांश्च वर्जयेत् ॥ इति ।

अभिशस्तवर्जनेनैव पतितवर्जनं सुतरां सिद्धम् । विशेषमाह मनुः—
गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।

यत्तु—मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ।
भिक्षेत भिक्षां प्रथमं या चैनं न निवारयेत् ॥ इति ।

तथा 'अप्रत्याख्यायिनमग्रे भिक्षेताऽप्रत्याख्यायिनीं वा' इति तदुपलय-भाङ्गभिक्षापरमिति न विरोधः । एतच्च सायंप्रातः कार्यम्—' सायंप्रात-रमत्रेण भिक्षां चरेत् ' इत्यापस्तम्बोक्तेः । अमत्रे विशेषमाह हारीतः— 'लौहे मृन्मये वा पात्रे भुञ्जीत' इति । विशेषमाह मनुः—

भैक्षेण वर्तयेन्नित्यं नैकान्नाशी भवेद्व्रती ॥ इति ।

यमः—आहारमात्रादधिकं न क्वचिद्भैक्षमाहरेत् ।
युज्यते स्तेयदोषेण कामतोऽधिकमाहरन् ॥ इति ।

कामत इत्युक्त्याऽज्ञानादधिकाहरणे न दोषः । अज्ञानादधिकाहरणे आपस्तम्बः—'न चोच्छिष्टं कुर्यादशक्तौ भूमौ निखनेदप्सु वा प्रवेशयेत्' इति।

गुरवे निवेद्यमित्याह मनुः—

गुरवे निवेदनम् ।

समाहृत्य तु तद्भैक्षं यावदर्थममायया ।
निवेद्य गुरवेऽश्नीयादाचम्य प्राङ्मुखः शुचिः ॥ इति ।

अमायया गुरुर्ग्रहीष्यतीति भिया स्वादु न गोपनीयमित्यर्थः ।

याज्ञवल्क्यः—

कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया ।
अपोशानक्रियापूर्वं सत्कृत्यान्नमकुत्सयन् ॥ इति ।

गुरोरसंनिधौ तत्पुत्रादिभ्योऽनुज्ञा ग्राह्या । ' असंनिधौ तद्भार्यापुत्रस-ब्रह्मचारिसद्भ्यः ' इति गौतमस्मरणात् । आपस्तम्बः—'भुक्त्वा स्वयममत्रं प्रक्षालयेत् ' इति । तच्च भोजनमपरिमितमित्याह वसिष्ठः—

अष्टौ ग्रासा मुनेर्भैक्षं वानप्रस्थस्य षोडश ।
द्वात्रिंशत्तु गृहस्थस्यापरिमितं ब्रह्मचारिणः ॥ इति ।

आपस्तम्बः—आहिताग्निरनड्वांश्च ब्रह्मचारीति ते त्रयः ।
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम् ॥ इति ।

आहिताग्नेर्बर्हिःसमिदाहरणादेरवश्यकर्तव्यत्वाद्ब्रह्मचारिणश्च गुरुसेवाया अवश्यकर्तव्यत्वात्तद्विरोधिशरीरनैर्बल्यापादकं काम्यव्रतादि नानुष्ठानार्ह-मित्यर्थः । अनडुद्ग्रहणं दृष्टान्तार्थम् ।

इति भिक्षाटनम् ।

---

ब्रह्मचर्यावधिमाह याज्ञवल्क्यः—प्रतिवेदं ब्रह्मचर्यं द्वादशाब्दानि पञ्च वा। 'ग्रहणान्तिकमित्येके' इति।

यावद्ग्रहणं स्वाधीनोच्चारणक्षमत्वं तावद्वा।

यमः—व्रसेद्द्वादशवर्षाणि चतुर्विंशतिमेव वा।

षट्त्रिंशतं वा वर्षाणि प्रतिवेदं व्रतं चरेत्॥ इति।

यस्तु चतुरो वेदानध्येतुमिच्छति तस्याष्टाचत्वारिंशद्वर्षाणि। यथाहाऽऽपस्तम्बः—'उपेतस्याचार्यकुले ब्रह्मचारिवासोऽष्टाचत्वारिंशद्वत्सरान्' इति। अत्र च पक्षविकल्पे अध्ययनकाल एव 'वैकल्पिकानामादितोऽवधारणम्' इतिन्यायेनैकः पक्षः परिग्रहीतव्यः। तस्मिंश्च द्वादशवर्षपक्षादौ परिगृहीते मध्ये गृहीतेऽपि वेदे कालः पूरयितव्य इति मेधातिथिः।

इति ब्रह्मचर्यावधिः।

---

द्विविधो ब्रह्मचारी उपकुर्वाणिको नैष्ठिकश्च। तत्र नैष्ठिकस्य विशेष उक्तो याज्ञवल्क्येन—

ब्रह्मचारिणो द्वैविध्यम्।

नैष्ठिको ब्रह्मचारी तु वसेदाचार्यसन्निधौ।

तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा॥ इति।

वसिष्ठः—'संयतवाक्चतुर्थषष्ठाष्टमकालभोजी भैक्षाशी गुर्वधीनो जटिलः शिखाजटो वा गुरुमुपासीताहूताध्यायी सर्वं लब्धं निवेद्य तदनुज्ञया भुञ्जीत। खट्वाशयनदन्तप्रक्षालनाञ्जनाभ्यञ्जनवर्जी स्थानासनशीलस्त्रिरह्नोऽभ्युपेयादपः' इति। त्रिकालं स्नायादित्यर्थः। देवलेन तु सकृदवगाहनं सकृद्भोजनमुक्तं तदशक्तपरम्। केषांचिन्नैष्ठिकब्रह्मचर्यमेवेत्याह विष्णुः—

कुब्जवामनजात्यन्धक्लीबपङ्ग्वार्तरोगिणाम्।

व्रतचर्या भवेत्तेषां यावज्जीवमनंशतः॥ इति।

अत्रानंशत इति हेतुं वदता दृष्टमूलत्वमुक्तम्। अतः प्रतिग्रहादिना द्रव्यसद्भावे भवत्येव विवाहः। दृष्टं च धृतराष्ट्रे। संग्रहेऽपि—

पङ्ग्वादीनामनंशत्वादसामर्थ्याच्च शास्त्रतः।

नियतं नैष्ठिकत्वं स्यात्कर्मस्वनधिकारतः॥ इति।

न चैवं सर्वनैष्ठिकविधीनां कुब्जादिपरत्वेनोपसंहारादन्येषामनधिकार इति वाच्यम्।

यदि त्वात्यन्तिको वासो रोचेतास्य गुरोः कुले।

युक्तः परिचरेदेनमाशरीरविमोक्षणात्॥

---

१ स्नानेति पाठान्तरम्।

इति मनुप्रतिपादितपाक्षिकत्वविरोधात् कुब्जादीनां नित्यप्राप्तेः[1] ।
नच ब्रह्मचारिद्वैविध्याच्चत्वार आश्रमा इत्यापस्तम्बवचनविरोधः ।

द्वितीयो नैष्ठिकश्चैव तस्मिन्नेवाश्रमे स्थितः ।

इति दक्षेणैकाश्रमत्वोक्तेः । अस्य फलमाह याज्ञवल्क्यः—

ब्रह्मचर्यफलम् ।

अनेन विधिना देहं साधयन् विजितेन्द्रियः ।
ब्रह्मलोकमवाप्नोति न चेहाजायते पुनः ।। इति ।

इदं च फलं ब्रह्मविद्विषयमब्रह्मविदस्तु ब्रह्मलोकमात्रम् 'तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति ज्ञानस्यैव मोक्षसाधनत्वोक्तेरिति । इति नैष्ठिकब्रह्मचर्यविधिः ।

---

व्रतान्युक्तान्याश्वलायनस्मृतौ—

वेदव्रतानि ।

प्रथमं स्यान्महानाम्नी द्वितीयं स्यान्महाव्रतम् ।
तृतीयं स्यादुपनिषद्गोदानाख्यं ततः परम् ।। इति ।

स्मृत्यादौ गोदानस्यैव केशान्त इति संज्ञा । तत्कालमाह मनुः—

केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते ।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः ।। इति ।

द्व्यधिके चतुर्विंशे इत्यर्थः । एवं च व्रतानां वर्षव्यवधानेनानुष्ठेयत्वाद्ब्राह्मणस्य त्रयोदशवर्षादारभ्य व्रतानि भवन्ति । राजन्यस्योनविंशवर्षादारभ्य वैश्यस्यैकविंशादारभ्येति । एषु च व्रतेषु चौलवत्कालनिर्णयः । तदुक्तं श्रीधरीये—

तिथिनक्षत्रवारांशवर्गोदयानिरीक्षणम् ।
चौलवत्सर्वमाख्यातं सगोदानव्रतेषु च ।। इति ।

तैत्तिरीयाणां नामभेदः—प्राजापत्यं सौम्यमाग्नेयं वैश्वदेवमिति । तेषु च व्रतेषु दण्डादीनाह पराशरः—

यद्यस्य विहितं कर्म यत्सूत्रं या च मेखला ।
यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि ।। इति ।

स्वकाले व्रतलोपे प्रायश्चित्तमाहात्रिः—

व्रतलोपप्रायश्चित्तम् ।

पिता भ्राता परो वापि प्राजापत्यत्रयं चरेत् । इति ।
बटोरशक्तौ पित्रादीनामनुष्ठानम् । शक्तौ तु तेनैव कार्यम् ।

यथाह शौनकः—

प्रत्येकं कृच्छ्रमेकैकं चरित्वाऽऽज्याहुतीः शतम् ।
हुत्वा चैव तु गायत्र्या स्नायादित्याह शौनकः ।। इति ।

---

[1] न कुब्जादीनां नित्यप्राप्तिरिति पाठान्तरम् ।

अत्र प्रायश्चित्ते स्नानसमानकर्तृकत्वश्रवणाद्बटोरेव कर्तृत्वम् । प्रायश्चित्तोत्तरकालमेतानि समावर्तनेन सह कर्तव्यानीति प्रयोगपारिजाते । तत्र मूलं मृग्यम् । इति व्रतलोपप्रायश्चित्तम् ।

---

अथाश्रमविकल्पसमुच्चयौ । समुच्चयस्तावदादित्यपुराणे—

ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ।
अप्रमत्तेन मनसा मा गाः पुत्र कुवर्त्मना ॥ इति ।

मनुरपि—ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ।
एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः ॥
सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः ।
यथोक्तकारिणं विप्रं नयन्ति परमां गतिम् ॥ इति ।

गृहस्थप्रभवा गृहस्थोपजीविनः । अधस्तनव्रतादीनां गृहस्थानामपि गृहस्थोपजीवित्वाच्चतुर्णां ग्रहणम् । क्रमश इति प्रातिलोम्यं नाभीष्टम् । तथा च दक्षः—

त्रयाणामानुलोम्यं स्यात्प्रातिलोम्यं न विद्यते ।
प्रातिलोम्येन यो याति न तस्मात्पापकृत्तरः ॥

त्रयाणामिति ब्रह्मचर्योत्तरेषां ग्रहणम् । तस्यावश्यकत्वादित्यर्थः । मनुर्विशेषमाह—

चतुर्थमायुषो भागं वसित्वाद्यं गुरोः कुले ।
द्वितीयमायुषो भागं कृतदारो गृहे वसेत् ॥
वनेषु च विहृत्यैवं तृतीयं भागमायुषः ।
चतुर्थमायुषो भागं त्यक्त्वा सङ्गान्परिव्रजेत् ॥ इति ।

अत्र 'शतायुर्वै पुरुषः' इतिश्रुतेः पञ्चविंशतिवर्षपर्यन्तमेकैकस्मिन्नाश्रमेऽवस्थातव्यमिति निबन्धकृतः । एवं क्रमे स्थिते यदापस्तम्बेनोक्तम् 'चत्वार आश्रमा गार्हस्थ्यमाचार्यकुले वासो मौनं वानप्रस्थम्' इति तत्रोद्देशमात्रे तात्पर्यं न क्रमे । आश्रमसमुच्चयस्य फलमाह हारीतः—

अनेन विधिना यो हि आश्रमानुपसेवते ।
स सर्वलोकान्निर्जित्य ब्रह्मलोकाय कल्पते ॥ इति ।

विकल्प उक्तो जाबालश्रुतौ 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा' इति । भविष्यत्पुराणेऽपि—

गार्हस्थ्यमिच्छन् भूपाल कुर्याद्दारपरिग्रहम् ।

ब्रह्मचर्येण वा कालं नयेत्संकल्पपूर्वकम् ।
वैखानसो वापि भवेत्परिव्राडथवेच्छया ॥ इति ।

वसिष्ठेन गार्हस्थ्यस्य स्तुतिरुक्ता—

गृहस्थ एव प्रव्रजेद्गृहस्थः स्तूयते यतः ।
गार्हस्थ्यस्तुतिः । चतुर्णामाश्रमाणां तु गृहस्थस्तु विशिष्यते ॥
सर्वेषामपि वै तेषां वेदस्मृतिविधानतः ।
गृहस्थ उच्यते श्रेष्ठः स त्रीनेतान्बिभर्ति हि ॥ इति ।

ततश्चैवमुक्तम् । प्रथमं ब्रह्मचर्यमावश्यकम् । ततो यदि तत्रैव रुचिस्ततो ब्रह्मचर्येणैव यावज्जीवं तिष्ठेत् । यदि न रुचिस्ततो गृही वनी यती वा भवेदिति । ततो गार्हस्थ्येनैवायुः क्षपयेद्वनाश्रमेण वा यत्याश्रमेण । तत्राश्रमचतुष्टयं विप्रादिवर्णत्रयस्य 'त्रयाणा वर्णानां चत्वार आश्रमाः' इति कठसूत्रात् । एवम्—

एष वोऽभिहितो धर्मो ब्राह्मणस्य चतुर्विधः ।

इतिमनुवाक्ये ब्राह्मणग्रहणं द्विजोपलक्षणमिति धर्मप्रकाशे पितामहचरणाः । श्रुतिगतेषु सर्वेषु 'ब्राह्मणो निर्वेदमायात' इत्यादिसंन्यासविधिषु ब्राह्मणग्रहणात्तस्य च स्मृत्यनुरोधेनोपलक्षणत्वे प्रमाणाभावात, प्रत्यक्षश्रुतिविरुद्धा काचित्स्मृतिरप्रमाणम् जाघनीभिः पत्नीः संयाजयन्तीतिवत् ? । अथवा क्षत्रियादीनां संन्यासश्रवणं विद्वत्संन्यासपरमिति शंकराचार्यादीनामाशयः । इत्याश्रमविकल्पसमुच्चयौ ।

## समावर्तनम् ।

स्नानमाह याज्ञवल्क्यः—

गुरवे तु वरं दत्त्वा स्नायीत तदनुज्ञया ।
वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ॥ इति ।

वरं गुरुतोषकारिणीं दक्षिणाम् । संग्रहकारो विशेषमाह—

आहरिष्यामि किं तेऽर्थं भवतो वचनादिह ।
त्वयोक्तं हि करिष्यामि कृतार्थः स्यां गृहेण तु ॥ इति ।
तेनोक्तं च तथा कृत्वा स्नानं शिष्यः समाचरेत् ।
अलमर्थेन मे वत्स त्वद्गुणैरस्मि तोषितः ॥
'गृहाय त्वानुजानामि'

इत्यनुज्ञापर्यन्तं कार्यम् । तथा चोक्तं कूर्मपुराणे—

वेदं वेदौ तथा वेदान्वेदान्वा चतुरो द्विजः ।

अधीत्य चाधिगम्यार्थं ततः स्नायाद्द्विजोत्तमः ।। इति

इदं च विस्तरतो भट्टपादैः 'अथातो धर्मजिज्ञासा' इत्यस्मिन्सूत्रे प्रपञ्चितमिति नेह प्रपञ्चितम् । दक्षिणा च गुरुतोषार्था न तु मूल्यरूपा । विद्याया मूल्याभावात् । तथाच तापिनी श्रुतिः—

सप्तद्वीपवती भूमिर्दक्षिणार्थं न कल्पते । इति ।

छन्दोगश्रुतिरपि—'यद्यप्यस्मा इलामद्भिः परिगृहीतां धनेन पूर्णां दद्यादेतदेव ततो भूय इति'। एतद्विद्याग्रहणम् । हारीतोऽपि—

एकमप्यक्षरं यत्तु गुरुः शिष्ये निवेदयेत् ।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्वाऽप्यनृणो भवेत् ।। इति ।

यद्यप्येवं तथापि देयमाह मनुः—

स्नास्यंस्तु गुरुणाऽऽज्ञप्तः शक्त्या गुर्वर्थमाहरेत् ।
क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमासनम् ।
धान्यं वासांसि शाकां वा गुरवे प्रीतिमावहन् । इति ।

आश्वलायन उपकल्प्यद्रव्याण्याह—'अथैतान्युपकल्पयीत समावर्त्यमानो मणिं कुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रजमुन्मर्दनमनुलेपनमाञ्जनमुष्णीषमित्यात्मने चाचार्याय च यद्युभयोर्न विन्देताऽऽचार्यायैव' इति । करञ्जफलं पेषयित्वा तेनोद्वर्तनमुन्मर्दनमिति वृत्तौ । इदं च स्वकर्तृकं 'समावर्त्यमानः' इतिसूत्रात् । एवं च तदङ्गभूतं नान्दीश्राद्धं स्वयमेव कार्यम् । शौनकः—

कुर्वीत स्वयमेवेदं कर्माऽऽचार्यानपेक्षतः ।
विधायाभ्युदयश्राद्धं पूर्वेद्युरपरेऽह्नि[1] वा ।। इति ।

अत्र हि त्वार्थल्यप्प्रयोगात्समानकर्तृकता गम्यते । अत्र कालनिर्णयश्चौलवत् । उक्तं च शौनकेन—

गोदानेनातिदिष्टत्वात्कर्मणोऽस्योत्तरायणम् ।
पूर्वपक्षादियोगं च प्रतीक्ष्य ह्येतदाचरेत् ।। इति ।

---

स्नातकधर्मा उक्ताः कूर्मपुराणे—

यज्ञोपवीतद्वितयं सोदकं च कमण्डलुम् ।
छत्रं चोष्णीषममलं पादुके चाप्युपानहौ ।।

धारयेदिति शेषः । आश्वलायनः—'तस्यैतानि व्रतानि भवन्ति न नक्तं

---

१ अपरेऽहनीति पाठः ।

स्नायान्न नग्नः स्नायान्न नग्नः शयीत न नग्नां स्त्रियमीक्षेतान्यत्र मैथुनाद्वर्षति न धावेन्न वृक्षमारोहेन्न कूपमवरोहेन्न बाहुभ्यां नदीं तरेन्न संशयमभ्यापद्येत ' इति । याज्ञवल्क्यः—

न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः ।
न विरुद्धप्रसङ्गेन संतोषी च भवेत्सदा ॥

स्वाध्यायो वेदस्तद्विरुद्धं तन्नाशकारकमित्यर्थः । विरुद्धप्रसङ्गो द्यूतादिः ।

तथा—राजान्तेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा ।
दम्भिहैतुकपाखण्डिबकवृत्तींश्च वर्जयेत् ॥

आपदि गृह्णीयादित्यर्थः । दम्भी द्रव्यार्थं धर्मलिङ्गधारी न श्रद्धया । हैतुकः सर्वत्र हेतुभिः संशयोत्पादकः । पाखण्डी अस्थिमालादिविरुद्धवेषधारी । बकवृत्तिरधोदृष्टिर्नैष्कृतिकः स्वार्थसाधन तत्परः ' शठो मिथ्याविनीतश्च बकवृत्ति रुदाहृतः ' इति मनूक्तेः ।

शुक्लाम्बरधरो नीचकेशश्मश्रुनखः शुचिः ।
न भार्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः ॥
न संशयं प्रपद्येत नाकस्मादप्रियं वदेत् ।
नाहितं नानृतं चैव न स्तेनः स्यान्न वार्धुषी ॥

वार्धुषी निषिद्धवृद्ध्युपजीवी ।

दाक्षायणी ब्रह्मसूत्री वेणुमान्सकमण्डलुः ।
कुर्यात्प्रदक्षिणं देवं मृद्गोविप्रवनस्पतीन् ॥
न तु मेहेन्नदीछायावर्त्मगोष्ठाम्बुभस्मसु ।
न प्रत्यग्न्यर्कगोसोमसंध्याम्बुस्त्रीद्विजन्मनः ॥
नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्टमैथुनाम् ।
न च मूत्रं पुरीषं वा नाशुची राहुतारकाः ॥
अयं मे वज्र इत्येवं सर्वं मन्त्रमुदीरयन् ।
वर्षत्यप्रावृतो गच्छेत्स्वपेत्प्रत्यक्शिरा न च ॥

'अयं मे वज्रः पाप्मानमपहन्तु' इतिमन्त्रः । गच्छेन्न धावेन ।

ष्ठीवनाऽसृक्शकृन्मूत्ररेतांस्यप्सु न निक्षिपेत् ।
पादौ प्रतापयेन्नाग्नौ न चैनमतिलङ्घयेत् ॥

---

१ नाप्सु वेति पाठः ।

जलं पिबेन्नाञ्जलिना न शयानं प्रबोधयेत् ।
नाक्षैः क्रीडेन्न धर्मघ्नैर्व्याधितैर्वा न संविशेत् ।। इति ।

जलमिति पेयमात्रोपलक्षणम् । 'नाञ्जलिना पिबेत्' इति गौतमेन पेयविशेषानुपादानादिति कश्चित्तन्न । सामान्यस्यापि गौतमीयस्य विशेषेण याज्ञवल्क्येनोपसंहर्तुं शक्यत्वात् । अतो जलमेव न पेयमात्रमिति । शयानं श्रेष्ठं न प्रबोधयेदिति ।

नैकः स्वप्याच्छून्यगृहे श्रेयांसं न प्रबोधयेत् । इतिमनूक्तेः ।
विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरम् ।
केशभस्मतुषाङ्गारकपालेषु च संस्थितिम् ।।

विरुद्धं जनपदकुलविरुद्धम् । नदीतरणं बाहुभ्याम् । अत उडुपादिना पारगमने न दोषः । नदीमिति तडागाद्युपलक्षणमिति कश्चित् । तत्र प्रमाणं मृग्यम् । यदि परं ममांसाभिज्ञः सन् 'उद्देश्यविशेषणमविवक्षितम्' इति नीत्या नदीग्रहणमविवक्षितमेवं जलग्रहणमिति यदि मन्यसे तर्हि श्रेयांसमितिविशेषणविवक्षाहेतौ किमिति मूकोऽसि । एवं 'न ब्राह्मणं हन्यात्' इत्यत्राप्यतिप्रसङ्गः ।

नाचक्षीत धयन्तीं गां नाऽद्वारेण विशेत्कचित् ।
न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः ।।

परस्य क्षीरादि धयन्तीं गां तस्मै नाचक्षीत । यद्वा वत्सं धापयन्तीम् । अन्तर्भावितण्यन्ताच्छतृप्रत्ययः । न विनिवर्तयेदपि ।

न वारयेद्गां धयन्तीं न वाचक्षीत कस्यचित् । इति मनूक्तेः ।
प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः ।
दुष्टा दशगुणं पूर्वात्पूर्वादेते यथाक्रमम् ।।

सूनी हिंसाशीलः । चक्री तिलपीडकः । ध्वजी सुराचक्रेण जीवी ।

देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियाः ।
नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्तनानि च ।।
विप्राहिक्षत्रियात्मानो नावज्ञेयाः कथंचन ।
आ मृत्योः श्रियमाकाङ्क्षेन्न कंचिन्मर्मणि स्पृशेत् ।
दूरादुच्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत् ।।

पादाम्भः पादप्रक्षालनोदकम् ।

श्रुतिस्मृत्युदितं कर्म नित्यं सम्यक् समाचरेत् ।

गोब्राह्मणानलान्नानि नोच्छिष्टो न पदा स्पृशेत् ।
न निन्दाताडने कुर्यात्पुत्रं शिष्यं च ताडयेत् ॥

कथं तर्हि कवले गृहीते उच्छिष्टेन पुनः पात्रस्थं स्पृश्यते । भोजनार्थे पात्रस्थे न दोष इति शिष्टविगानाभावात्कल्प्यते ।

कर्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत् ।
अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु ॥

अभ्यनुज्ञातमपि भोजनावशिष्टमांसभक्षणादिकं लोकविद्विष्टमत एवास्वर्ग्यं नाचरेत् । धर्मपदेनापिना योगान्न स्वार्थे तात्पर्यम् । केचित्त्विदानींतनाना मधुपर्के पशुवधानाचरणादीनामेतद्वचनमूलकत्वमिति वदन्ति तन्न, कलिनिषिद्धत्वेनैवानाचरणात् विधिविहितबाधकत्वायोगाच्च ।

मातृपित्रतिथिभ्रातृजामिसंबन्धिमातुलैः ।
वृद्धबालातुराचार्यैर्वैद्यसंश्रितबान्धवैः ॥
ऋत्विक्पुरोहितापत्यभार्यादाससनाभिभिः ।
विवादं वर्जयित्वा तु सर्वाँल्लोकाञ्जयेद्गृही ॥
पञ्चपिण्डाननुद्धृत्य न स्नायात्परवारिणि ।
स्नायान्नदीदेवखातह्रदप्रस्रवणेषु च ॥

परवार्यनुत्सृष्टोदकम् ।

परशय्यासनोद्यानगृहयानानि वर्जयेत् ।
अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि ॥

अदत्तान्यननुज्ञातानीति ग्रन्थकृतः ॥

कदर्यबद्धचौराणां क्लीबरङ्गावतारिणाम् ।
वैणाभिशस्तवार्धुष्यगणिकागणदीक्षिणाम् ॥
चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम् ।
क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम् ॥
अवीरास्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम् ।
शस्त्रविक्रयिकर्मारतन्तुवायश्ववृत्तिनाम् ॥
नृशंसराजरजककृतघ्नवधजीविनाम् ।
चैलधावसुराजीवसहोपपतिवेश्मनाम् ॥
पिशुनानृतिनोश्चैव तथा चाक्रिकबन्दिनाम् ।
एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा ॥

कदर्यः—आत्मानं धर्मकृत्यं च पुत्रान्दारांश्च पीडयेत् ।

लोभाद्यः पितरौ भृत्यान् स कदर्य इति स्मृतः ॥

इति लक्षितः । वैणो वेणुच्छेदनजीवी । वीणावादनजीवीति केचित् । गणदीक्षी बहुयाजकः । पराशरस्मृतिव्याख्याने तु गणान्नं दीक्षी दीक्षितस्तस्य चेति व्याख्यातम् । गणान्नं च बहूनामेकपात्रे पक्वं तदुच्यते । दीक्षितान्ननिषेधश्चाग्नीषोमीयपशुसंस्थापर्यन्तं क्रीतराजको भोज्यान्न इत्यस्याप्रामाण्यादिति भाष्यकृतः । आचार्यास्तु वदन्ति । उभयोरपि श्रुतित्वाविशेषेणाबाधान्नाप्रामाण्यम् । तदुक्तम्—

क्रीतराजकभोज्यान्नवाक्यं चाथर्ववैदिकम् ।
न च तस्याप्रमाणत्वे किंचिदप्यस्ति कारणम् ॥ इति ।

तथोभयोर्विषयोऽपि प्रदर्शितः—

आपद्धर्मा यथैवान्ये मुख्यासंभवहेतुकाः ।
तथैव प्राणपीडायां क्रीतराजकभोजनम् ॥
सामान्येनाभ्यनुज्ञाताद्विशेषश्च विशिष्यते ।
विशेषोऽत्यन्तनिर्दोषः स्तोकदोषेतरक्रिया ॥ इति ।

प्रपञ्चितं चैतद्वार्तिककारैरिति काठिन्यभिया नेह विस्तरेण प्रपञ्चितम् । अवीरा पतिपुत्ररहिता । कर्मारो लोहकारः । तन्तुवायः सूचिशिल्पोपजीवी । श्ववृत्तिः श्वभिः वृत्तं जीवनमस्यास्तीति श्ववृत्तिः । राजा पुरोहितश्च 'राजपुरोहितान्नानि वर्जयेत्' इतिशङ्खस्मृतेः । कदर्यादयश्च द्विजातय एव । शूद्राणां वक्ष्यमाणदासादिव्यतिरेकेणाभोज्यान्नत्वात्—

शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः ।
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥ इति ।

अर्धसीरी कृषिफलभागग्राही । अहं त्वदेकाश्रित इति यो निवेदनमात्मनः करोति । "शूद्रादीनां भोज्यान्नत्वमापद्विषयम्' इति हरदत्तः । चतुर्विंशतिटीकायां तु—

कन्दुपक्वं शूल्यत्पक्वं पायसं दधिसक्तवः ।
एतानि शूद्राद्ग्राह्याणि भोज्यानि मनुरब्रवीत् ॥

इतिवचनोपात्तपरमिति । शूले यत्पक्वंमस्पृष्टमित्यर्थः । परं तु कलावेतेषां भोज्यान्नत्वनिषेधान्नातीव परिच्छेदोऽस्माभिः क्रियते । [1]कलिवर्ज्यानि च समयमयूखे दर्शयिष्यामः । माधवीये मार्कण्डेयः—

न म्लेच्छभाषां शिक्षेत न पश्येदात्मनः शकृत् ।
वर्जयेन्मार्जनीरेणुं नापेयं च पिबेद्द्विजः ॥ इति ।

१ कलिवर्ज्यानि च तातचरणकृतसमयमयूखे ज्ञेयानि ङ. पाठः ।

अपेयं काञ्जिकादि । मनुः—

वयसः कर्मणोऽर्थस्य श्रुतस्याऽभिजनस्य च ।
[ वेष[1]वाग्बुद्धिसारूप्यमाचरन्विचरेदिह ।।
नित्यं शास्त्राण्यवेक्षेत नियमांश्चैव वैदिकान् ।
नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन ।। ]
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ।
न लङ्घयेद्वत्सतन्त्रीं न प्रधावेच्च वर्षति ।।

वत्सतन्त्री वत्सबन्धनरज्जुः । वत्सग्रहणं च गोत्वजातेरुपलक्षणमिति हरदत्तः ।

न चोदके निरीक्षेत स्वं रूपमिति धारणा ।
नाश्नीयाद्भार्यया सार्धं नैनामीक्षेत चाश्नतीम् ।।
क्षुवन्तीं जृम्भमाणां वा न चासीनां यथासुखम् ।
नाञ्जयन्तीं स्वके नेत्रे न चाभ्यक्तामनावृताम् ।।
नान्नमद्यादेकवासा न नग्नः स्नानमाचरेत् ।
न मूत्रं पथि कुर्वीत न भस्मनि न गोव्रजे ।।
न फालकृष्टे न जले न चित्यां न च पर्वते ।
नोदक्यायाऽभिभाषेत यज्ञं गच्छेन्न चावृतः ।।

अवृतो यजमानेनानाकारितो लोभान्न गच्छेत् । द्रष्टुं तु कामं गच्छेत् । 'न यज्ञमवृतो गच्छेद्दर्शनाय तु कामम्' इतिगौतमोक्तेः ।

स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् ।
न दिवीन्द्रायुधं दृष्ट्वा कस्यचिद्दर्शयेद् बुधः ।।
न भुञ्जीतोद्धृतस्नेहं नातिसौहित्यमाचरेत् ।

अनेन चोद्धृतस्नेहतक्रादिभोजनमनाचारः । यत्तु तक्रादिभिन्नपिण्याकादिपरत्वं कल्पयन्ति न तत्र किंचिन्मूलम् । सौहित्यमत्यशनम् ।

न नृत्येदथवा गायेन्न वादित्राणि वादयेत् ।
न पादौ धावयेत्कांस्ये कदाचिदपि भाजने ।।
न भिन्नभाण्डे भुञ्जीत न भावप्रतिदूषिते ।
उपानहौ च वासश्च धृतमन्यैर्न धारयेत् ।।
उपवीतमलंकारं स्रजं करकमेव च ।
बालातपः प्रेतधूमो वर्ज्यं भिन्नं तथासनम् ।।

१ इत्यधिकं ङः पुस्तके ।

बालातपः शरत्कालातपः । सङ्घातप इत्यन्ये ।

न कर्म निष्फलं कुर्यान्नायत्यामसुखोदयम् ।
गवां पृष्ठेन यानं तु सर्वथैव विगर्हितम् ॥

रथादियोगे त्वीषद्विगर्हितमिति ज्ञेयम् ।

रात्रौ च वृक्षमूलानि दूरतः परिवर्जयेत् ।
सर्वं च तिलसंबद्धं नाद्यादस्तमये प्रति ॥
आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत् ।
न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविःकृतम् ॥

अयं च साक्षादुपदेशनिषेधः ।

श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः ।

इतिकरणे तु न दोषः । उच्छिष्टं भुक्तावशिष्टं न दद्यात् । शूद्रस्य गौतमेनोच्छिष्टाशनं शिल्पवृत्तिश्चेत्युच्छिष्टाशनस्याभ्यनुज्ञानान्न दोषः । दातुस्तु भवत्येव । एवं च यदि प्रत्यवायमङ्गीकृत्योच्छिष्टं ददाति तदा तेन भक्षणीयम् । यथा कुरुक्षेत्रादौ दातुरभ्युदयः प्रतिग्रहीतुर्दोष एवत्रामपीति केचित् । सांप्रदायिकास्तु उच्छिष्टदानप्रतिषेधो गृहस्थशूद्रविषयः । तद्भिन्नाय तु देयम् । तथाच व्याघ्रः—

उच्छिष्टमन्नं दातव्यं शूद्रायाऽगृहमेधिने ।
गृहस्थाय तु दातव्यमनुच्छिष्टं दिने दिने ॥ इति ।
न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत् ।

धर्मं धर्मशास्त्रम् । पूर्वनिषेधस्तु दण्डनीतिविषय इति व्याख्यातारः ।

न संहताभ्यां पाणिभ्यां कण्डूयेतात्मनः शिरः ।
न स्पृशेच्चैतदुच्छिष्टो न च स्नायाद्विना ततः ॥

एतत् शिरः । इदं च शिरःस्नानं शक्तस्य ।

न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि ।

भोजनोत्तरं स्नानस्य निषेधो रागप्राप्तस्य ।

भद्रं भद्रमिति ब्रूयाद्भद्रमित्येव वा वदेत् ।
शुष्कवैरं विवादं च न कुर्यात्केनचित्सह ॥

शुष्कं फलशून्यम् । एवं विवादोऽपि ।

नाऽज्ञातेन समं गच्छेन्नैको न वृषलैः सह ।
अनातुरः खानि खानि न स्पृशेदनिमित्ततः ॥

खानि छिद्राणि ।

रोमाणि च रहस्यानि सर्वाण्येव विवर्जयेत् ।
प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत् ॥
न धर्मस्यापदेशेन पापं कृत्वा व्रतं चरेत् ।
यमान्सेवेत नियतं नित्यं च नियमान्बुधः ॥
आनृशंस्यं क्षमा सत्यमहिंसा दममस्पृहा ।
ध्यानं प्रसादो माधुर्यमार्जवं च यमा दश ॥
शौचमिज्या तपो दानं स्वाध्यायोपस्थनिग्रहः ।
व्रतोपवासौ मौनं च स्नानं च नियमा दश ॥
नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनस्तथा[१] ।

अश्राद्धिनः श्रद्धारहितस्य ।

आददीताऽऽममेवास्माद्वृत्तावैकरात्रकम् ।
उत्तमैरुत्तमैर्नित्यं संबन्धानाचरेत्सदा ॥
निनीपुः कुलमुत्कर्षमधमानधमांस्त्यजेत् ।
गुरून्भृत्यांश्चोज्जिहीर्षन्नर्चिष्यन्देवतातिथीन् ॥
सर्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः ।
येनास्य पितरो याता येन याताः पितामहाः ॥
तेन यायात्सतां मार्गमेवं गच्छंस्तरिष्यति[२] ।
एषोदिता गृहस्थस्य वृत्तिर्विप्रस्य शाश्वती ।
स्नातकव्रतकल्पश्च सत्यवृत्तिकरः शुभः ॥ इति ।

अत्र 'स्वर्गायुष्ययशस्यानि व्रतानीमानि धारयेत्' इत्युपक्रमात्, 'स्नातकव्रतकल्पश्च सत्यवृत्तिकरः शुभः' इत्युपसंहाराच्च मध्येश्रुतानां नञा-मुपपदेनान्वयात्पर्युदासा अङ्गीक्रियन्ते । तदुक्तं भगवता जैमिनिना—'तदुत्सर्गे कर्माणि पुरुषार्थाय' इति ।

तथा—उपक्रमे श्रुतं कर्मवाचि व्रतपदं यतः ।
तदन्वयबलात्कर्मविशेषोऽतोऽत्र चोद्यते ॥
तेन लक्षणयाप्यत्र पर्युदासः स च क्रतोः ।
बहिःश्रुतः फलाकाङ्क्षी पुरुषार्थत्वमृच्छति ॥ इति ।

संकल्प एव चात्र लक्ष्यते । उदाहृता च तन्त्ररत्ने स्मृतिः—
त्रिसन्ध्यं जपता तेन सावित्रीं नेक्ष इत्ययम् ।

---

१ 'द्विजः' इति पाठः । २ 'येनं गच्छन्नरिष्यते' इति मुद्रितमनुस्मृतौ पाठः ।

आदित्यं ध्यायता कार्यः संकल्पः पापनाशनः ॥ इति ।

विस्तरस्तु तन्त्ररत्नादौ द्रष्टव्यो दुर्गमत्वभिया नेह प्रपञ्चितः । अन्ये च स्नातकधर्मा मानवगौतमीयादिशास्त्रे द्रष्टव्याः । विस्तरभयात्तु नेह प्रपञ्चिताः ।

इति स्नातकधर्मप्रकरणम् ।

---

स्नातकभेदा उक्ता गोभिलेन—

'विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातकश्च' इति । विद्यामेवाधीत्य स्नानं कृतवानिति विद्यास्नातकः । व्रतान्येव कृत्वा स्नानं कृतवानिति व्रतस्नातकः । विद्यामधीत्य व्रतानि कृत्वा च यः स्नाति स उभयस्नातकः । तेषामन्त्यः श्रेष्ठः । उभौ तुल्यौ ।

स्नातकभेदाः ।

इति स्नातकभेदाः ।

---

## विवाहप्रकरणम् ।

उपकुर्वाणकस्य गार्हस्थ्यं कर्तुं विवाह उक्तो याज्ञवल्क्येन—

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ।
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥ इति ।

कन्यालक्षणानि ।

अस्यार्थः । लक्षण्यां बाह्याभ्यन्तरलक्षणैर्युक्ताम् । बाह्यानि मनुनोक्तानि—

अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम् ।
तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत्स्त्रियम् ॥ इति ।

वर्ज्या आह स एव—

नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् ॥
नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम् ।
न पक्ष्यहिप्रेष्यनाम्नीं न[1] विभीषणनामिकाम् ॥ इति ।

वर्ज्यकन्याः ।

विष्णुपुराणे—

न श्मश्रुव्यञ्जनवतीं न चैव पुरुषाकृतिम् ।
न घर्घरस्वरां क्षामां तथा काकस्वरां न च ।
नानिबद्धेक्षणां तद्वद्वृत्ताक्षीं नोद्वहेद् बुधः ॥

अनिबद्धेक्षणां मनोनुरञ्जनेक्षणरहिताम् ।

---

१ नच भीषणेति मुद्रितमनुस्मृतिपुस्तके पाठः ।

यस्याश्च रोमशे जङ्घे गुल्फौ यस्यास्तथोन्नतौ ।
गण्डयोः कूपकौ यस्या हसन्त्यास्तां च नोद्वहेत् ॥
नातिरक्तच्छविं पाण्डुकरजामरुणेक्षणाम् ।
आपीनहस्तपादां च न कन्यामुद्वहेद् बुधः ॥
न वामनीं नातिदीर्घां नोद्वहेत्संगतभ्रुवम् ।
नचातिच्छिद्रदशनां न करालमुखीं नरः ॥ इति ।

आभ्यन्तराण्युक्तान्याश्वलायनेन—'अष्टौ पिण्डान्कृत्वा ऋतमग्रे प्रथमं जज्ञ ऋते सत्यं प्रतिष्ठितम् । यदियं कुमार्यभिजाता तदियमिह प्रतिपद्यतां यत्सत्यं तद्दृश्यतामिति पिण्डानभिमन्त्र्य कुमारीं ब्रूयादेषामेकं गृहाणेति क्षेत्राच्चेदुभयतःसस्याद्गृह्णीयादन्नवत्यस्याः प्रजा भविष्यतीति विद्या- द्गोष्ठात्पशुमती वेदिपुरीषाद्ब्रह्मवर्चस्विन्यविदासिनो ह्रदात्सर्वसंपन्ना देव- नात्कितवी चतुष्पथाद्द्विप्रव्राजिनीरिणादधन्या श्मशानात्पतिघ्नी ' इति । देवनं द्यूतम् । ईरिणमूखरम् । न अन्यः पूर्वो यस्याः साऽनन्यपूर्विका । दानेनोपभोगेन वा । कान्तां मनोनयनानन्दकारिणीम् । यथोक्तमापस्त- म्बेन—'यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिः ' इति । इयं च परीक्षा कुलपरीक्षोत्तरं कार्या ' कुलमग्रे परीक्षेत ' इत्याश्वलायनस्मृतेः ।

मनुः—उत्तमैरुत्तमो नित्यं संबन्धानाचरेत्सदा । इति ।

उत्तमानाह स एव—

विशुद्धाः कर्मभिश्चैव तथा श्रुतिनिदर्शितैः[1] ।
अविप्लुतब्रह्मचर्या महाकुलसमन्विताः ।
अक्रोधनाः सुप्रसादाः कार्याः संबन्धिनः सदा ॥

उत्तमा वंशाः ।

नीचानाह स एव—

ये स्तेनाः पिशुनाः क्लीबा ये च नास्तिकवृत्तयः ।
विकर्मणा च जीवन्तो विकृताकृतयस्तथा ॥
प्रबद्धवैराः शूरैर्ये राजकिल्बिषिणस्तथा ।
ब्रह्मस्वादननिन्द्याश्च कदर्याश्च विगर्हिताः ॥
अप्रजा येषु वंशेषु स्त्रीप्रजाप्रसवास्तथा ।
पतिघ्न्यश्च सुवासिन्यस्तांश्च यत्नेन वर्जयेत् ॥ तान् वंशान् ।
महान्त्यपि समृद्धानि गोजाविधनधान्यतः ।

अधमा वंशाः ।

१ श्रुतिस्मृतिनिदर्शितैः ङ. पाठः ।

स्त्रीसंबन्धे दशैतानि कुलानि परिवर्जयेत् ॥
हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम् ।
क्षय्यामयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च ॥

तथा—कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥
शिल्पेन व्यवहारेण शूद्रापत्यैश्च केवलैः ।
गोभिरश्वैश्च यानैश्च कृष्या राजोपसेवया ॥
अयाज्ययाजनैश्चैव नास्तिक्येन च कर्मणा ।
कुलान्यकुलतां यान्ति यानि हीनानि मन्त्रतः ॥ इति ।

विष्णुः—अश्वं पित्रा परीक्षेत मात्रा कन्या परीक्षयेत् ।
कृष्या भूमिं परीक्षेत आचारेण कुलं तथा ॥इति ।

नारदेन कन्यालक्षणान्युक्तानि—

नारदोक्तकन्यालक्षणानि ।

पूर्णचन्द्रमुखी कन्या बालसूर्यसमप्रभा ।
विशालनेत्रा रक्तोष्ठी सा कन्या लभते सुखम् ॥
अङ्कुशं कुण्डलं चक्रं यस्याः पाणितले भवेत् ।
पुत्रं प्रसूते सा नारी नरेन्द्रं लभते सुतम् ॥
यस्याः पाणितले रेखा प्राकारं तोरणं तथा ।
अपि दासकुले जाता राजपत्नी भविष्यति ॥
यस्याः संकुचिताः केशा मुखं च परिमण्डलम् ।
नाभिश्च दक्षिणावर्ता सा नारी प्रियभाग्भवेत् ॥
दीर्घाङ्गुली च या नारी दीर्घकेशा च या भवेत् ।
दीर्घमायुरवाप्नोति धनधान्यविवर्धिनी ॥ इति ।

अन्यान्यपि सामुद्रिकलक्षणानि तद्ग्रन्थतोऽवगन्तव्यानि । विस्तरभयान्नेह लिख्यन्ते ।

---

असपिण्डामिति । अत्र केचित्—

साපिण्ड्यम् ।

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥

इति मात्स्यात्सप्तपुरुषपर्यवसायिनी सपिण्डता । तथा च देवदत्तस्य पित्रादिभिः षड्भिः सापिण्ड्यं पुत्रादिभिश्च षड्भिरिति । साप्तपौरुषमिति सप्तपुरुषानभिव्याप्येत्यर्थ इत्याहुः । नन्वेवं भगिन्यादिभिः सापिण्ड्यं न

स्यात् । अत्र समादधिरे माधवाचार्याः–'उद्देश्यदेवतात्वेन सापिण्ड्यनिर्वाहः' इति । तथाच देवदत्तकर्तृके श्राद्धे भगिन्यादीनामप्युद्देश्यत्वाद्यास्त्येव सापिण्ड्यम् । तथा सति महालयादिश्राद्धे गुरुशिष्यादीनामपि सापिण्ड्यं स्यात् । अतो निर्वाप्यपिण्डान्वयपक्षं विहाय अवयवानुवृत्तिपक्षमङ्गीचक्रुर्विज्ञानेश्वरादयः । तथाहि समानः पिण्डो देहो देहावयवा यस्याः सा सपिण्डा न सपिण्डा असपिण्डेति । तथाहि पितुरवयवानां रक्तमज्जादीनां पुत्रशरीरे साक्षात्प्रवेशः । पितामहस्य पितृद्वारा । एवं प्रपितामहादीनामपि यथाकथंचित्परंपरयाऽवयवानुवृत्तिरस्त्येवेति । एवं मात्रादिभिरपि । एवं पत्या पत्न्या एकशरीरारम्भकत्वेन । क्वचिच्चैकावयवाधारत्वेनापि सापिण्ड्यम् । यथा यात्रोर्भर्तृद्वारा श्वशुरावयवाधारत्वम् । एवं यथाकथंचित्सापिण्ड्यमन्यत्राप्यूह्यम् । यद्वा यत्राभियुक्तानां सपिण्ड इति प्रसिद्धिस्तत्र सापिण्ड्यमिति । अत्र यद्यप्यसपिण्डामिति नञ्समासेन पर्युदासस्तथाप्ययं निषेधफलकः सपिण्डापरिणयने प्रायश्चित्ताम्नानात् ।

एवमेकशरीरावयवान्वयरूपे सापिण्ड्ये विधातृशरीरेणापि परंपरया सापिण्ड्यापत्तिरतः संकोच उक्तो याज्ञवल्क्येन—

'पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा' इति ।

मातृतः पञ्चमात् पितृतः सप्तमादिति तथाच पङ्कजशब्दवत्सपिण्डशब्दो योगरूढः । एतन्निष्कर्षश्चाभियुक्तैः कृतः—

वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः ।
पञ्चमी चेत्तयोर्माता तत्सापिण्ड्यं निवर्तते ॥ इति ।

कूटस्थो मूलपुरुषः । यतः संतानभेदस्ततो गणयेत् । नारदोऽपि—

मातृतः पञ्चमादूर्ध्वं पितृतः सप्तमात्तथा ।
गृहस्थ उद्वहेत्कन्यामन्यथा गुरुतल्पगः ॥ इति ।

पैठीनसिरपि—'पञ्चमीं मातृतः परिहरेत्सप्तमीं पितृतः' इति । अत्र वधूवरयोः पितृद्वारकसापिण्ड्यविचारवेलायां मूलपुरुषगणने पञ्चम्या मातुः संताने निवृत्तमपि सापिण्ड्यं मण्डूकप्लुत्या तस्याः पुत्रसंतानेऽनुवर्तत एव । वधूवरयोः पितुः षष्ठत्वादिति सांप्रदायिकाः ।

यत्तु विष्णुपुराणे—

पञ्चमीं मातृपक्षात्तु पितृपक्षात्तु सप्तमीम् ।
गृहस्थ उद्वहेत्कन्यां न्याय्येन विधिना नृप ॥

---

१ महादिष्वपीति च. पाठः ।

यच्च वासिष्ठे—

पञ्चमीं सप्तमीं चैव मातृतः पितृतस्तथा । इति ।

तदुभयमप्यतीत्येति व्याख्येयं पूर्वोक्तवचनविरोधात् ।

सप्तमे पञ्चमे चैव येषां वैवाहिकी क्रिया ।
क्रियापरा अपि हि ते पतिताः शूद्रतां गताः ॥

इति मरीचिना दोषोक्तेश्च ।

यत्तु षट्त्रिंशन्मते—

तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा ।
विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥ इति ।

यदपि पैठीनसिस्मृतौ—'त्रीनतीत्य मातृतः पञ्चातीत्य पितृतः' इति तदर्वाग्दोषातिशयार्थम् । अन्यथा 'पञ्चमात्सप्तमादूर्ध्वम्' इत्यनेन पञ्चमषष्ठादौ क्रियमाणो विवाहोऽनिष्टसाधनं षट्त्रिंशन्मतादिभिस्त्विष्टसाधनमिति विरुद्धबोधद्वयस्याशक्यत्वात् । दोषातिशयार्थत्वं कथमिति चेदुच्यते । पञ्चमात्सप्तमादूर्ध्वमित्यनेन पूर्वं बोधितो दोषः क्वचिदल्पः क्वचिद्भूयानिति बोधयितुं शक्यत्वात् । तस्य च प्रयोजनं प्रायश्चित्तालपत्वबहुत्वादि । नहि सापिण्ड्याविशेषे भगिनीगमने यावानेव दोषस्तावानेव पञ्चम्यामिति वक्तुं शक्यम् । अतः पूर्वोक्तमेव ज्याय इति । षट्त्रिंशन्मतादिवाक्यान्यापद्विषयाणि । अनुज्ञातं च निषिद्धमप्यापदि चातुर्वर्ण्यभैक्ष्यादि ।

दोषाभावोऽप्युक्तस्तत्र निबन्धकृद्भिरिति चेन्न । तत्रापि—

आपत्कल्पं द्विजः कृत्वा प्रायश्चित्तं पुनश्चरेत् ।

इतिवचनेन दोषस्योक्तत्वात् । स्तोकदोषाच्च दोषाभाववचनम् । यद्येवमङ्गीकृत्य तृतीयापरिणयनमिष्टं तदा क्रियतां नाम न तु सर्वथा दोषाभावः ।

विशेषान्तरं गृह्यपरिशिष्टे—'अविरुद्धसंबधामुपयच्छेत' इत्युक्त्वा 'दम्पत्योर्मिथः पितृमातृसाम्ये विरुद्धसंबन्धः यथा भार्यास्वसुर्दुहिता पितृव्यपत्नीस्वसा च' इत्युक्तम् । अत्र गृह्यपरिशिष्ट एव विरुद्धसंबन्धस्योक्तत्वान्नाधिककल्पनायां मानमस्तीति भार्यास्वसृकन्या पितृव्यपत्नीस्वसा चापरिणेयेति ।

अत्र विन्ध्यदक्षिणवासिनः केचित्—

मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ॥

इत्यादिबहुस्मृतिनिषिद्धमपि मातुलकन्यापरिणयनमाचरन्ति। स च दुरा-चार इति भट्टपादादयः । भट्टसोमेश्वरस्मृतिचन्द्रिकाकारमाधवादयस्तु दुरा-चारत्वं नास्तीत्याहुः । बलाबलाधिकरणे 'श्रुत्या लिङ्गं बाध्यते' इत्युक्त्वा–"क्वचिच्छ्रौतेन लिङ्गेन विरोधाधिकरणरीत्या संभवदन्यमूलायाः स्मृतेर्बाधः। यथा 'गर्भे नु नौ जनिता दम्पती कर्देवस्त्वष्टा सविता विश्वरूपः' इति दाशतय्यां श्रुतम् । तस्यार्थः–यमी यमं स्वभ्रातरं मिथुनार्थं प्रोवाच । सा च यमेन भ्रात्रेदमयुक्तमिति प्रत्याख्याता वदति। कः प्रजापतिर्विश्वरूपो विश्वात्मा त्वष्टा सविता नौ आवयोर्भ्रातृभगिन्योर्गर्भे दम्पती जनिता जनयिष्यति । आवयोरपत्ययोरवश्यं दंपतीत्वं भावि तद्वरमावामेव दम्पती भवाव इति लिङ्गमनन्यगति । तथा "आयाहीन्द्र पथिभीरीळितेभिर्यज्ञमिमं नो भाग-धेयं जुषस्व । तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव" । अस्यार्थः । हे इन्द्र त्वमीडितेभिः प्रशस्तैः पथिभिः मार्गैर्नोऽस्माकं यज्ञ-मायाह्यागच्छ आगत्य तृप्तामाज्यसिक्तां वपां भागधेयं वपारूपं भागं जुषस्व सेस्वव । तत्र वपाभागत्वे दृष्टान्तद्वयम् । यथा मातुलस्य जहुरप-त्यरूपा योषा स्त्री कन्येत्यर्थः । सा मातुलशब्दस्य संबन्धिशब्दत्वाद्भा-गिनेयोपस्थितेस्तस्य भागः भजनीया सेव्येत्यर्थः । यथा पैतृष्वसेयी मातुलपुत्रस्य भाग इति च लिङ्गम् । स्मृतिचन्द्रिकायां व्याख्याने क-श्चिद्विशेषः । आगत्य भागं सेवस्व । एते यजमानास्त्वामुद्दिश्य वपां जहुस्त्यक्तवन्तः योषा दुहिता । अन्यत्पूर्ववत् । तथा वाजसनेयिश्रुतौ स्रुग्व्यूहनार्थवादे 'तृतीये संगच्छामहै चतुर्थे संगच्छामहै' इत्यपि लिङ्गम् । नचास्यार्थवादत्वात्स्वार्थापरत्वमिति वाच्यम् । अप्राप्तार्थस्य 'उपरि हि देवे-भ्यो धारयति' इत्यादिवद्विधिपरत्वात् । एवं स्थिते मातुलकन्यापरिण-यने यत्प्रायश्चित्तादिस्मरणं तदासुरादिविवाहोत्पन्नाविषयं द्रष्टव्यम् । किं तत्र प्रमाणमिति चेदुच्यते—

गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥

इति मनुवचनेनोद्देश्यविशेषणस्य पुंस्त्वस्याविवक्षितत्वेन दानकर्मीभूतस्य जनककुले संबन्धमात्रनिवृत्त्या सापिण्ड्यस्यापि निवृत्तिः प्रतीयते । अतः कन्याया अपि ब्राह्मादिविवाहचतुष्टये दानसद्भावात्तत्र च सापि-ण्ड्यस्यापि निवृत्तेस्ततपरं मातुलकन्यापरिणयनम् । आसुरादिविवाहेषु दा-

नाभावात्सापिण्ड्यानिवृत्तेस्तत्परो निषेध इति । कथमिदानीं मातुलकन्या-वत्पैतृष्वस्रेयी दौहित्री वा न परिणीयते ।

अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु ।

इतिनिषेधादतो न दुराचारत्वमिति । अत्रोच्यते । 'गर्भे नु नौ' इत्यस्यामृचि पूर्वेषामाचरितं स्मृत्यनुमेयश्रुतिविरोधान्न तादृशविधिकल्पकम् । यत्र हि नान्यविरोधोऽप्राप्तार्थकत्वं च तत्रैव विधिनिषेधकल्पनम् । यथा 'उल्मुकैर्ह स्म पूर्वे समाजग्मुः' इत्यादिषु । अन्यथा 'प्रजापतिरुषसमभ्यैत्स्वां दुहितरम्' इत्याद्यर्थवाददर्शनादन्यैरपि दुहितृगमनं कर्तव्यमिति कल्पनं त्वदुक्तरीत्या केन निवार्येत । मन्त्रार्थवादेषु च बहवोऽर्थाः । केचन सिद्धार्थानुवादका यथा 'अग्निर्हिमस्य भेषजं', 'वायुर्वै क्षेपिष्ठा देवता' इति । केचन रागप्राप्तानुवादकाः । यथा 'तस्माद्वत्सो मातरं स्वसारं चाधिरोहति' यथाच 'तस्माच्छ्वश्रूः श्वशुरश्च पुत्रश्च दुहिता च सुरां पीत्वा विलपन्त आसते' इत्यादि । केचन प्रायोदृष्टानुवादकाः । यथा 'तस्मात्प्रजा दश मासान्गर्भं धृत्वा एकादशमनु प्रजायन्ते' इत्यादयः । नैतावता-विध्यादिकल्पनम् । अत एव स्वार्थे तात्पर्याभावान्न विधिपरत्वमङ्गीकृतम् 'सोऽरोदीत्' इत्येवमादीनां मीमांसकैः । एवमत्रापि 'गर्भे नु नौ' इत्यस्यां पूर्वाचरितमात्रं कीर्त्यते"—इत्यादि शास्त्रदीपिकाप्रकाशे पितामहचरणैर्विस्तरेणोक्तमेव । वस्तुतस्तु नौ आवां जनिता जनयिता गर्भे नु गर्भे एव कः कृतवानिति माधवाचार्यव्याख्यानमेव युक्तम् । करित्यस्यानुदात्तत्वेन पाठाद्रेफान्तत्वदर्शनाच्च । जनितेत्यस्यान्तोदात्तत्वेन पाठात्तृजन्तमेव न तु लुडन्तम् 'तिङ्ङतिङः' इत्यनुदात्तत्वापत्तेः । तेन जनितेत्यस्य जनयिष्यतीतिव्याख्यानमयुक्तम् । अत एव "न वा उ ते तन्वा तन्वा१ संपपृच्यां पापमाहुर्यः स्वसारं निगच्छन् । अन्येन मत्प्रमुदः कल्पयस्व न ते भ्राता सुभगे वष्ट्येतत्" इति यमोक्तप्रत्याख्यानं संगच्छते । अस्यार्थः—हे सुभगे ते तव तन्वा शरीरेण तन्वां स्वीयां तनूं न वा उ नैव संपपृच्याम् । संपर्कयिष्यामीति । तत्र हेतुः । यः स्वसारं निगच्छन् यः स्वसारं गच्छति तं लोका देवाश्च पापिष्ठमाहुः तर्हि मत्संतोषः कथं स्यात्तत्राह मत् मत्तः जायमानाः प्रमुदः त्वमन्येन पुंसा कल्पयस्व अर्जयस्व ते भ्राता यमः एतत्कर्म न वष्टि न काङ्क्षतीति दिक् । 'आयाहीन्द्र' इत्यस्यां च रागप्राप्तस्यानुवादः । कथमनियतप्राप्तस्य नित्यवदनुवाद इति चेत् 'तस्मा-

त्प्रजा' इत्यस्य वा क्व नित्यप्राप्तिः । तत्र यथैवानियतप्राप्तिमुपजीव्यानुवादोपपत्तिरेवमत्रापि ।

यत्तु दानेन सापिण्ड्यं निवर्तत इति । तत्रोच्यते—

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः ॥

इति पुंस्त्वविशिष्टानुवादेन संज्ञाकरणात्कन्यायाश्च दत्रिमसंज्ञाभावाद्दत्रिमानुवादेन विधीयमानाऽपि सापिण्ड्यनिवृत्तिर्न कन्याया भवति ।

नन्वेवं दत्रिमस्य सापिण्ड्यनिवृत्तौ जनककन्यादिपरिणयनं स्यात् । स्यादेव यदि ' ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो मातृबन्धुभ्यः पञ्चमाद्बीजिनश्च सप्तमात् ' इति वाक्यं नाभविष्यत् । अत्र हि बीजिग्रहणेन दत्रिमस्य जनककुले सापिण्ड्यमस्तीति ज्ञायते । गोत्रनिवृत्तिस्तु ।

स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे ।

इत्यनेन वचनेन न त्वनेन । अतो मातुलकन्यापरिणयनं दुराचारः । अत एव भट्टपादैरुक्तम्—

वासुदेवाङ्गजाता च कौन्तेयस्य विरुध्यते । इति ।

बौधायनेन च दुराचारान्परिगणयता स्पष्टमेवोक्तम्—'पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतो यानि दक्षिणतस्तान्यनुव्याख्यास्यामो तथैतदनुपेतेन सह भोजनं स्त्रिया सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृगमनमिति । अथोत्तरत ऊर्णाविक्रयः सीधुपानमुभयतोदद्भिर्व्यवहार आयुधीयकं समुद्रयानमिति । तत्रेतरदितरस्मिन् कुर्वन् दुष्यति तद्देशप्रामाण्यान्मिथ्यैतदिति गौतमः उभयमेव नाद्रियेत शिष्टस्मृतिविरोधदर्शनात् ' इति ग्रन्थेन । सीधु मद्यम् । उभयतो दन्ता येषां ते उभयतोदतः । तैरुभयतोदद्भिः । व्यवहारस्तत्करणकक्रयविक्रयरूपः यानादिरूपो वा । आयुधीयकम् आयुधेन जीवनम् । बृहस्पतिरपि—

उद्वह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ।
मत्स्यादाश्च नराः पूर्वे व्यभिचाररताः स्त्रियः ॥
उत्तरे मद्यपाश्चैव स्पृश्या नृणां रजस्वलाः ।
सजाताश्चापि गृह्णन्ति भ्रातृभार्यामभर्तृकाम् ।
सर्वदेशेष्वनाचारो रथ्याताम्बूलचर्वणम् ॥ इति ।

विशेषः स्मृत्यन्तरे—

गायत्र्या उपदेष्टुश्च कन्यां नैवोद्वहेद्द्विजः ।
गुरोश्च कन्यां शिष्यो वा तत्संतत्याऽपि नेष्यते ।
पुरुषत्रयपर्यन्तं भ्रात्रादेर्नैतदिष्यते ।। इति ।

सपत्नमातामहकुले सापिण्ड्यमाह सुमन्तुः—'पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयान्यन्यथा संकरकारिणः स्युः' इति । द्वितीयतच्छब्देन मातृपरामर्शः । अत्र 'यावद्वचनं वाचनिकम्' इति न्यायात्परिगणितेष्वेव सापिण्ड्यं न सप्तमादिपर्यन्तम् । एतत्सापिण्ड्यविषयमेव—

असपिण्डा च या मातुरसगोत्रा च या पितुः ।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ।।

इति मनुवाक्यमिति निबन्धकृतः । एतदुपपत्तिश्च द्वैतनिर्णय उक्ता । अत्रासपिण्डामिति निषेधः सार्ववर्णिकः । असमानार्षगोत्रजामिति त्रयाणाम् । तत्र क्षत्रियवैश्ययोः पुरोहितगोत्रं न स्वत इति । यवीयसीमिति वयसा परिमाणेन च न्यूनाम् । वयोन्यूनतायां विशेषमाह मनुः—

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।
त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ।। इति ।

त्र्यष्टवर्षश्चतुर्विंशतिवर्षः । बृहस्पतिर्विशेषमाह—

त्रिंशद्वर्षो दशाब्दां तु भार्यां विन्देत नग्निकाम् ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ।। इति ।

भ्रातृमतीमिति पुत्रिकाकरणशङ्कानिवृत्तये । तथाच मनुः—

यस्यास्तु न भवेद्भ्राता न विज्ञायेत वै पिता ।
नोपयच्छेत तां प्राज्ञः पुत्रिकाधर्मशङ्कया ।। इति ।

अनेन पितुरभिप्रायमात्रेणापरिभाषिताऽपि पुत्रिका भवतीति गम्यते । अत एव गौतमः—'अभिसंधिमात्रा पुत्रिकेत्येकेषां तत्संशयान्नोपयच्छेदभ्रातृकाम्' इति । पुत्रिकाकरणप्रकारादिकं [1]व्यवहारमयूखे दर्शयिष्यामः ।

---

असमानार्षगोत्रजामिति । आर्षं च गोत्रं चार्षगोत्रे समाने च ते आर्षगोत्रे च समानार्षगोत्रे समानार्षगोत्रयोर्जाता समानार्षगोत्रजा न तादृशी असमानार्षगोत्रजा । अत्र च प्रत्येकं प्रतिषेधः । समानार्षा नोद्वाह्या

---

१ द्वादशविधपुत्रनिरूपणे व्यवेति ङ.; तातचरणकृतव्यवहारमयूखे ज्ञेयमिति च. पाठः ।

सगोत्रा च नोद्वाह्येति प्रत्येकं प्रायश्चित्ताम्नानात् । तच्च प्रायश्चित्तमयूखे वक्ष्यते । आर्षः प्रवरः गोत्रप्रवर्तकस्य ऋषेर्व्यावर्तको मुनिविशेषः । वत्सार्ष्टिषेणयोः गोत्रभेदे प्रवरैक्यात्, व्यामुष्यायणानां संकृतीनां प्रवरभेदेऽपि सगोत्रत्वादुभयोपादानम् । मातामहगोत्राऽप्यपरिणेया । तथा च मनुः—

मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरां चैव त्यक्त्वा चान्द्रायणं चरेत् ।। इति ।

अत्र सगोत्रा नोद्वाह्येत्यनेनैव मातृगोत्रपर्युदासे सिद्धे मातृगोत्रग्रहणं मातुर्विवाहात्पूर्वगोत्रनिवृत्त्यर्थम् । तथा च मातामहगोत्रा नोद्वाह्येति फलितम् । तच्च माध्यन्दिनीयानाम् । तथा च चतुर्विंशतिमतटीकायां सत्याषाढवचनम् 'मातृगोत्रं माध्यन्दिनीयानाम्' इति ।

---

अथ गोत्रप्रवरनिर्णयः । तत्र स्मृत्यर्थसारे गोत्रलक्षणमुक्तम् ।

गोत्रप्रवर-निर्णयः ।

जमदग्निर्भरद्वाजविश्वामित्रात्रिगौतमाः ।
वसिष्ठकश्यपागस्त्या मुनयो गोत्रकारिणः ।

कानि तानि गोत्राणि यत्प्रवर्तकतैषामित्यत आह—

एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते ।। इति ।

अपत्यानीति न साक्षात् किंतु पुत्रपौत्रादिपरंपरया । तथा बौधायनोऽप्याह—'एतेषामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते' इति । एवमुच्यमाने भृग्वादीनां गोत्रत्वं न स्यात् । तत्र केचिदिष्टापत्त्या परिहरन्ति । अपरे भृग्वादिष्वनादिशिष्टानां गोत्रत्वसमाख्यानात्प्रवरमञ्जरीप्रयोगपारिजातमदनपारिजातादिग्रन्थविरोधाच्च न गोत्रत्वमपलपितुं शक्यम् । किंतु यत्र शिष्टानां गोत्रत्वप्रसिद्धिस्तद्गोत्रं मन्त्रत्वादिवदित्याहुः । वस्तुतस्त्वेतस्य पक्षस्य सूत्रानारूढत्वात्प्रवरवत्त्वं गोत्रलक्षणं युक्तमुत्पश्यामः । तथा च सत्याषाढसूत्रे प्रवरानुक्त्वा तैर्गोत्राणि इत्युक्तम् । व्याख्यातं च शबरस्वामिभिः 'प्रवरैर्गोत्राणां गणव्यवस्था समानता च' इति । एवं च स्वरूपतः समानतया च गोत्रज्ञाने प्रवराणां हेतुत्वमुक्तम् । तथा च तद्वद्गोत्रमित्युक्तं भवति । ततश्च यमेवैकमधिकृत्य प्रवराम्नानं सोऽधिकृतो गोत्रम् । तस्य चैकस्याधिकृतस्य येषु स्वस्वगणान्तर्गतेष्वनुवृत्त्याख्यं साम्यं भवति ते सगोत्रा इति फलितमिति पितामहचरणोक्तपक्ष एव श्रेयान् । एवं च

---

१ यद्विशिष्टानामिति च. पाठः । २ प्रवरवत्त्वमेव गोत्रमिति पाठान्तरम् ।

शिष्टाचारोऽप्यनुगृहीतो भवति बहुग्रन्थविरोधश्च परिहृतो भवति । यत्तु बौधायनसत्याषाढादिभिरगस्त्याष्टमानामपत्यं गोत्रमित्युक्तम्, न तल्लक्षणाभिप्रायेण किंत्वयोगव्यावृत्त्येति ज्ञेयम् । नचैवं वत्सविदयोरार्ष्टिषेणादिभिः सगोत्रतापत्तिरिति वाच्यम् ।

एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते ।
तावत्समानगोत्रत्वमृते भृग्वङ्गिरोगणात् ॥

इति बौधायनेन पर्युदासात् । अनेन च पर्युदासेन ज्ञायते भृग्वङ्गिरोगणेष्वस्ति गोत्रत्वमिति । यत्तु प्रवरमञ्जरीकृता क्वचिन्नास्त्येवैषां गोत्रतेत्युक्तं तत्पूर्वापरग्रन्थविरोधात्परमताभिप्रायेण । यत्तु विश्वनाथदेवेनोक्तम्—

भृग्वङ्गिरोन्यद्यत्किंचिदृषेर्यावत्सु वर्तनम् ।
तावत्समानगोत्रत्वमिति केचित्समूचिरे ॥
तत्रैवं सति सर्वत्र सगोत्रत्वनिबन्धने ।
अनुद्वाहे तु कुत्र स्यात्प्रवरैक्यं प्रयोजकम् ॥ इति ।

तदस्माभिः पूर्वमसंकीर्णोदाहरणोपन्यासादपास्तम् । तस्मादस्ति हरितादीनामपि गोत्रत्वम् । यद्यपि गोत्राणामानन्त्यं तथापि यानधिकृत्य प्रवरा आम्नातास्तादृशगणा एकोनपञ्चाशत् । उक्तं च बौधायनेन—

गोत्राणां च सहस्राणि प्रयुतान्यर्बुदानि च ।
ऊनपञ्चाशदेतेषां प्रवरा ऋषिदर्शनात् ॥ इति ।

ते च गणा यथा—भृगूणां सप्त ७, जमदग्नेस्तदन्तर्भावः । विश्वामित्राणा दश १०, अत्रेश्चत्वारः ४, अङ्गिरसां सप्तदश १७, अत्रैव गौतमभरद्वाजयोरन्तर्भावः । कश्यपानां त्रयः ३, वसिष्ठानां चत्वारः ४, अगस्तेश्चत्वारः ४. तथा च संग्रहे उक्तम्—

सप्तेह भृगवः सप्तदशाङ्गिरस एव च ।
ततोऽत्रयश्च चत्वारो बोद्धव्याः कश्यपास्त्रयः ॥
चत्वारोऽत्र वसिष्ठाः स्युर्विश्वामित्रास्ततो दश ।
अगस्तयस्तु चत्वार इति संग्रहकृद्वचः ॥

प्रवराः शिष्टपरंपराप्रसिद्धाः । इतिगोत्रप्रवरलक्षणम् ।

---

१ 'अन्यत्र भृग्वङ्गिरसां गणात्' इति च. पाठः । २ अत्र सर्वेषु लिखितमुद्रितपुस्तकेषु 'न स एव'; 'नस्त एव' इति च पाठो दृश्यते तथापि नास्त्येवेति पाठो युक्तत्वात् कल्पितः ।

अथोद्दिष्टगणक्रमेण बौधायनादिसूत्रोक्तानि गोत्राणि प्रदर्श्यन्ते । तत्र तावद्भृगूणां सप्तान्तर्गणाः । तत्राजामदग्न्याः केवलभृगवः पञ्च । आर्ष्टिषेणा यस्काः मित्रयुवो वैन्याः शुनका इति । तद्यथा ।

आर्ष्टिषेणा नैरथयो ग्राम्यायणयः कात्यायनाश्चान्द्रायणाः पैटकलायनाः सिद्धाः सुमनायनाः गौराम्भिराम्भिः इत्येते आर्ष्टिषेणाः । तेषां च पञ्चार्षेयाः—भार्गवच्यावनाप्नवानार्ष्टिषेणानूप' इति । एषामविवाहः । इत्यार्ष्टिषेणगणः ।

यस्को मौनो मूको वाधूलो वर्षपुष्पो मापो राजतैनो दुर्दिनो भास्करो दैवन्तायनो जैवन्तायनो वाकलयो भध्यमेयो वासयः कौशाम्बेयाः कौटिल्याः सात्यकेयाः क्रौञ्जिक्रौञ्चिल्याः सत्यकयश्चित्रसेनाः भागन्तयस्ताकश्चिकेयाः औक्त्याः और्गवित्रतयः भागुरिश्च इत्येते यस्काः । तेषां त्र्यार्षेयाः प्रवराः । ' भार्गववैतहव्यसावेतस ' इति । इति यस्कगणः ।

मित्रयवो रौकेपायणा नाशायजना रोष्टायना रौक्यायनाः सखण्डिनाः सुरभिनेया माल्याया वाल्याया महावाल्यास्ताक्ष्यायणा औरक्षाथणा भाजाधयः 'कैतवायना' इत्येते मित्रयुवस्तेषां त्र्यार्षेयः प्रवरः । ' भार्गववाध्र्यश्वदैवोदास ' इति । इति मित्रयुगणः ।

वैन्याः पार्था वाष्कलाः श्येनाः, तेषां त्र्यार्षेयः प्रवरः ' भार्गववैन्यपार्थ ' इति । इति वैन्यगणः ।

शुनकाः समदा यज्ञपयः सैगन्धयः खार्दमायना गाङ्गायना मत्स्यगन्धा भार्गायणाः श्रोत्रियास्तैत्तिरीया इत्येते शुनकास्तेषा मेकार्षेयः प्रवरः । 'शुनक' इति। 'गृत्समद' इति वा। इति शुनकगणः । इति केवलभृगवः ।

अथ गणद्वयं सप्तर्ष्यन्तर्गतं वत्सबिदाख्यं तदुच्यते मार्कण्डेया माण्डव्या—माण्डूकेयाः कांसय आलेखना दार्भायणाः शार्करायणा देवतायनाः शौनकायनकयो वैश्वानरयो वैहीनरयो विरोहिता बाह्या गौद्रायणाष्टैकयः काशकृत्स्ना वाद्भूतकाः कृतभागा एतिशायनाः सौकृतयो मण्डविसौविस्तयः हस्त्यग्नयो हस्ताग्नयः शौद्रायकाः वैकेषाया द्रोणजिह्वय औरसयः काम्बरोदरयः कण्ठोरकृतो वैहलयो विरूपाक्षा मिकाश्वा उच्चैर्मन्यवो

---

१ अयमधिको ङ. । २ क्रौम्बिल्या ङ. पाठः । ३ औत्तथाः ङ. पाठः । ४ और्गुविंत्रतयः ङ. पाठः। ५ रौक्यायणा ङ. पाठः । ६ औरक्षीयणा वाजायना उक्षपणामाजाधेया ङ. पाठः। ७ गाङ्गायना ङ. पाठः । ८ कासय आलेखना दार्भायणाः शार्कटाः क्षौदेवेतायनाः शौनकायना मध्रकेयाः पार्षिकाः कांसाः प्रतापनाःपैङ्गलायनाः इति ङ. पाठः ।

वैमत्या आर्यायणा मार्कायणाः काह्वायना वायवा दैवमत्या आर्कयणाः काङ्कायना वायानिनः शांकरवश्चान्द्रामसा गाङ्गेयाः तोयेया याज्ञिया परिमण्डलयो जाबालयो बाहुमित्रायणा आपिशलयो वैष्ट्रपुरयो लोहितायना उष्ट्रावायानिनः शारद्वन्तायना राजितवाहा वात्सा वात्स्यायना इत्येते वत्सास्तेषां पञ्चार्षेयः प्रवरो 'भार्गवच्यावनाप्नवानौर्वजामदग्न्य' इति। इति वत्सगणः।

बिदाः शैला अवयः शौलाः प्राचीनयोग्या अभयदानाः काण्डरथयो वैतभृताः पुलस्तय आर्कायणास्तान्त्रायणाः कामला इत्येते बिदास्तेषां पञ्चार्षेयः प्रवरो भवति 'भार्गवच्यावनाप्नवानौर्वबैद' इति। इति बिदगणः।

आपस्तम्बस्तु विशेषमाह स उच्यते--तत्र यस्कगणो वीहव्यगणत्वेन व्यपदिष्टः। सावेतसेत्यत्र सावेद्वसेति। शुनकगणो गार्त्समदत्वेन व्यपदिष्टः। मित्रयुगणो वध्र्यश्वगणत्वेन व्यपदिष्टः। बिदगणो नोक्तः। कात्यायनेन भृगोर्द्वादश गणा उक्ताः। तद्यथा वात्स्यायना आवाच्या बैजवाः शाठरमाठरा विदा आर्ष्टिषेणा वत्सा वेदविश्वज्योतिषः पार्श्वश्वेता आपिशायना वीतहव्या गृत्समदाश्चेति। वात्स्यायनानां पञ्चार्षेयाः 'भार्गवच्यावनाप्नवानौर्वजामदग्न्य' इति। आवाच्यानां 'भार्गवच्यावनावाच्या' इति। बैजवानाम् 'भार्गवच्यावनाप्नवानवैजवनैमथित' इति। शाठरमाठराणाम् 'भार्गवशाठरमाठर' इति। बिदानाम् 'भार्गवच्यावनाप्नवान' इति। आर्ष्टिषेणानां पूर्वोक्तः। वत्सपुरोधसां 'भार्गवच्यावनाप्नवानवैजवनैमथित' इति। शाठरमाठराणां भार्गवशाठरमाठर' इति। बिदानाम् 'भार्गवच्यावनाप्नवान' इति। आर्ष्टिषेणानां पूर्वोक्ताः। वत्सपुरोधसाम् 'भार्गवच्यावनाप्नवानवात्सपौरोधस' इति। 'भार्गववत्सपौरोधस' इति वा। वेदविश्वज्योतिषाणाम् 'भार्गववेदवैश्वज्योतिष' इति। पार्श्वश्वेतानाम् 'भार्गववैन्यपार्थ' इति। आपिशायनानाम् 'भार्गववाध्र्यश्वदैवोदास' इति। वीतहव्यानाम् 'भार्गववैतहव्यसावेधस' इति। गृत्समदानाम् 'गार्त्समद' इति। भार्गवगार्त्समद' इति वा। लौगाक्षिस्तु सप्तगणेषु विशेषमाह--गणास्तावत् 'वत्सा विदा वात्स्या आर्ष्टिषेणाः खालायना वीतहव्या गार्त्समदाश्च' इति। तत्र वात्स्यानां पूर्ववत्। विदानां त्र्यार्षेया 'भार्गवौर्वजामदग्न्य' इति। वात्स्यानां 'भार्गवच्यावनाप्नवान' इति। आर्ष्टिषेणानां

१ उष्ट्राक्षा मालयनाः ङ. पाठः। २ वाजिनवाहा ङ पाठः। ३ वो ङ. पाठः। ४ विहव्य इति ङ. पाठः।

पूर्ववत् । खालायनानां मित्रयुववत् । वीतहव्यानां 'भार्गववैतहव्यसावेतस' इति । एवं पूर्वोक्तेषु वत्सविदार्ष्टिषेणानामन्योन्यमविवाहः । गोत्रप्रवरैक्यात् । यस्कमित्रयुवैन्यशुनकाः परस्परं न विवहेयुः । बौधायनमते प्रवरैक्यात् पूर्वोपपादितप्रकारेण गोत्रैक्याच्च । यस्कादिचतुर्भिर्विदादित्रिभिर्भवत्येव विवाहः । सगोत्रत्वाभावात् । ननु भार्गवरूपैकप्रवरसाम्यात्कथं विवाहः । उच्यते—

पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।
भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत् ॥

इति बौधायनवचनेन भृगुगणे एकानुवृत्तेरप्रयोजकत्वात् । एवमग्रेऽपि द्रष्टव्यम् ।

इति भार्गवनिर्णयः ।

---

अथाङ्गिरोनिर्णयः । तत्र तद्गणास्त्रयः केवलाङ्गिरसो गौतमा भरद्वाजाश्चेति । तत्र केवलाङ्गिरसः षट्, चत्वारो भरद्वाजाः, सप्त गौतमा इत्येवं सप्तदश । तत्र केवलाङ्गिरसां षड्गणमध्ये एकः संकृतिर्द्व्यामुष्यायणः । तत्तत्प्रकरणे निरूपयिष्यामः । अवशिष्टाः पञ्च तद्यथा । विष्णुवृद्धकण्वहरितरथीतरमुद्गलाख्याः । त उच्यन्ते ।

विष्णुवृद्धाः शठा मठाः भद्रणा मद्रणा बादरायणाः सात्यकिः[1] शालङ्कायना नैतुद्याः स्तुत्या भारुण्या वैहोढा देवस्थातयः इत्येते विष्णुवृद्धास्तेषां त्र्यार्षेयः प्रवरः 'आङ्गिरसपौरुकुत्सत्रासदस्यव' इति । इति विष्णुवृद्धगणः ।

कण्वाः औपमः कठायना बाष्कलाः पौलाः हलिनो माञ्जिः माञ्जयः मौजिगन्धा विजिवा जया वाजश्रवस इत्येते कण्वास्तेषां त्र्यार्षेयः प्रवरः 'आङ्गिरसाजमीढकाण्व' इति । इति काण्वगणः ।

हरिताः कौत्सः साङ्ख्यो दाभ्यो भैम्यो भैमगवो मलायुर्लम्बोदरो बलोदरो महोदरो नैमिश्रयो मिश्रोदना मिश्रयः कौतपाः कारीषयः कौलयः पौलयः मौद्गलोमा माधूपमान्धातृमाण्डकारय इत्येते हरितास्तेषां त्र्यार्षेयः प्रवरः । 'आङ्गिरसाम्बरीषयौवनाश्व' इति । इति हरितगणः ।

रथीतरा हास्तिदासिका ह्वायना नैतिरक्षयः ऐशानयः शैलालयो मिलैभिला भायसा वहवा भैक्षवाहा ठेमगवा इत्येते रथीतरास्तेषां त्रयः प्रवराः 'आङ्गिरसवैरूपराथीतर' इति । इति रथीतरगणः ।

---

[1] सात्यकयो ङ. पाठः ।

मुद्गला हिरण्याक्षा ऋषभामिनाः क्षपासस्या झषायणा दीर्घजङ्घाः प्रबलजङ्घाः स्तरणमिन्द्व इत्येते मुद्गलास्तेषां त्रयः प्रवराः। आङ्गिरसभार्म्यश्वमौद्गल्य ' इति । इति मुद्गलगणः । इति केवलाङ्गिरसः ।

एषु पञ्चसु स्वं स्वं गणं हित्वा परस्परं विवाहः । यद्यप्याङ्गिरसेति प्रवरैक्यं सर्वत्र तथाप्यङ्गिरोगणत्वाददोषः ।

अथ भरद्वाजाङ्गिरसः। तद्गणाश्चत्वारः भरद्वाजाः कपयः गर्गा रौक्षायणा इति । ते उक्ता बौधायनेन ।

भरद्वाजा क्षाम्यायणाः सङ्कडा[1] देवाश्वा उद्वहव्याः प्राग्वंशय वाहलभा वाद्यो गावसानायना वैदेहा आत्रा औक्षा भूरयः परिणद्धेयाः केशखेयाः शौद्धय उरूढाः खारिग्रीवय औपसयो वयोक्षिभेदा अग्निवेश्या व्ययाः शठा गौरिवा लेखायनाः स्तनकर्णा ऋक्षा माणिमिन्द्याः कठोदकाः सौद्धलयो वैलाः खारुडा देवयो भाद्रपद्यः सौरभराः शुङ्गा देवमतय इषुमता औदमैधयः प्रवाहणेयाः कुल्माषा राजस्तम्भयः सुधापक्तो वाराहयो बलभीकयो रुद्राङ्गपथाः शालाहलयो वेदवेला नृत्यायनाः शालालयः शार्दूलयः शाकला वाष्कलाः सत्यकेयाः क्रोडायनाकौण्डिन्या ब्रह्मस्तम्भा राजस्तम्भा आपस्तम्भाः ये चान्ये स्तम्भस्तम्बशब्दान्ता अरुणिः सिन्धुः कौमुदगन्धिः इति पृथग्ग्रामान्यन्यत्र आरणसिन्धुकौमुदगन्धयः शिखायना आत्रेयायणा भामाण्याः कुक्षाः कौकक्षिपो[2] नैतुन्तयो दार्भयः श्यामेघाः मत्सकाथाः करुणायनाः कारुपथयः कारिषायणाः काम्बल्या इत्येते भरद्वाजास्तेषां त्र्यार्षेयः प्रवरः ' आङ्गिरसबार्हस्पत्यभारद्वाज ' इति । इति भरद्वाजगणः ।

रौक्षायणाः कपिलाः शक्तिफलाः शैफिला वैकिडोऽकौथुमोऽग्निजिह्वी च कणिश्च[3]सूतिश्चेति रौक्षायणास्तेषां पञ्च प्रवराः ' आङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातवचस ' इति । इति रौक्षायणगणः ।

गर्गाः सैम्भरावणाः[4] सांख्यानायना गन्धरायणा वालुकयो भ्राष्ट्रका भ्राष्ट्रविन्दवः क्रोष्ट्रकयः सौयामुनिः भ्राजिनाक्षयो होत्रयः सपचपचयो यवा[5] नवपलाशाः शाखावनयः संग्रहकल्पा वेणुभिरिः सौहग्रकारि रौतिक्रौचाल्या राजवत्यो लवाः इत्येते गर्गास्तेषां पञ्चप्रवराः ' आङ्गिरसबार्हस्पत्यभारद्वाजगार्ग्यसैन्येति' त्रयो वा 'आङ्गिरससैन्यगार्ग्येति।' इति गर्गगणः ।

---

१ मङ्कडा इति ङ. पाठः । २ कौकक्षियो ङ. पाठः । ३ श्च ङ. पाठः । ४ साम्भरायणाः ङ. पाठः । ५ जवा ङ. पाठः ।

कपयः वैतलायनाः पतञ्जलीनाः तरस्विनः ताण्डिनः भोंजसयः सार ङ्गरवाः खरशिखण्डिनः मौशितकिः संशयः पौष्ययः ऐतिशायना इत्येते कपय-स्तेषां त्रयः प्रवराः । 'आङ्गिरसामहीयवौरुक्षयस' इति । इति कपिगणः । भरद्वाजानां चतुर्णामविवाहः । इति भरद्वाजाङ्गिरसः ।

गौतमाङ्गिरसां सप्त गणाः । आयास्याः शरद्वन्ताः कौमण्डा दीर्घतमसः कारेणुपालयो वामदेवा औशनसाश्चेति । त उच्यन्ते ।

आयास्या आणिवेया मूढरथाः कावाक्ष्यो वैदेहाः कौमारवत्याडिः दर्भिः दतौकिः सात्यमुग्रिकौवाह्याः बौभ्याः नैकरुघिष्टिः स्तैकषिः किरालयः कारुणिः कठोरिः काशीवाः कार्क्षीवा इत्येत आयास्यास्तेषां त्रयः प्रवराः 'आङ्गिरसायास्यगौतम' इति । इत्यायास्यगणः ।

शरद्वन्तः अभिजितो रोहिण्याः क्षीरकरभाः सौमुचयः सौयामुनाः कौ-पबिन्दवो राहूगणा गणयोमयणा इत्येते शरद्वन्तास्तेषां त्रिप्रवराः 'आ-ङ्गिरसगौतमशारद्वन्त' इति । इति शरद्वद्गणः ।

कौमाण्डा मानसरेषणा मासुराक्षाः काण्वरेभय आञ्जायना वाजायना इत्येते कौमाण्डास्तेषां पञ्चार्षेयः प्रवरः 'आङ्गिरसौचथ्यकार्क्षावतगौ-तमकौमण्ड' इति । कौमाण्डगणः ।

दीर्घतमसां पञ्च 'आङ्गिरसौचथ्यकाक्षीवतगौतमदैर्घतमस' इति । इति दीर्घतमोगणः ।

कारेणुपालयो वास्तव्याः श्वेतीयाः पौञ्जिष्ठ्य औदजायना मान्धुक्षारा अजगन्धय इत्येते कारेणुपालयस्तेषां त्रिप्रवराः 'आङ्गिरसगौतमकारेणुपाल' इति । इति कारेणुपालिगणः ।

वामदेवानां त्रयः 'आङ्गिरसगौतमवामदेव' इति । इति वामदेवगणः ।

औशनसा दिश्याः सुरूपाः प्रशस्ताः सुरूपाक्षा महोदरा विकंहताः सुबुध्या निहता इत्येत औशनसास्तेषां त्र्यार्षेयः प्रवरः । 'आङ्गिरसगौतमौ-शनस' इति । इत्यौशनसगणः । गौतमानां सप्तानामविवाहः ।

इति गौतमाङ्गिरसः ।

---

अथ विश्वामित्रास्तेषां गणा दश । कुशिकरौहितरौक्थककामकायनक-तवधनञ्जयाऽजाऽघमर्षणपूरणेन्द्रकौशिकाख्याः । त उच्यन्ते ।

कुशिकाः पार्णजङ्घा वालुक्या औदरिः माणिः वृहदग्निः रालवः राघठिः आपद्यव्याः कामन्दैतका बद्धकथाः श्विकिताः कामकायना शालङ्कायनाः ।

शाङ्कायनाः यमदूता आनतिन्नाः तारकायणा चार्वासा जाबालयः याज्ञवल्क्याः विदण्डाः भुवनयनाः सौरनुतयः औपदहनयः औदुम्बरिः श्राष्ट्रेया श्यामेयाः चैत्रेयाः साश्वता मयूराः चित्रभावनाः श्येतभावना अनुतन्तवयो मान्तवा ये चान्ये व्रतशब्दान्ताः वाभ्रव्याः कालोत्सरा इत्येते कुशिकास्तेषां त्रिप्रवराः 'वैश्वामित्रदेवरातौदल' इति। इति कुशिकगणः।

रोहिता दण्डकयः चाक्रवर्मापिणः खजूरायिणः वाञ्जायनाः वासयः इत्येते रोहितास्तेषा त्र्यार्षेयः प्रवरः 'वैश्वामित्राष्टकरोहित' इति। इति रोहितगणः।

रौक्थकाः खोद्वहा वला रेवणाश्च तेषां त्रयः वैश्वामित्ररौक्थकरैवण इति। इति रौक्थकगणः।

वैश्वामित्रा दैवश्रवसो दैवतरस औसनव्याः कामकायनास्तेषां त्रयः 'वैश्वामित्रदेवश्रवसदैवतरस' इति। इति कामकायनगणः।

कताः सैरन्धाः करभा वाजायनाः सांहितेयाः कौकुल्याः। पिण्डग्रीवा नारायणा नारावा इत्येते कतास्तेषां त्रयः 'वैश्वामित्रकात्यात्कील' इति। इति कतगणः।

धनञ्जयाः पारिजामयः आश्रयेनावायन्याः सैन्धवायनः पुष्कराक्षास्तेषां त्रयः 'वैश्वामित्रमाधुछन्दसधानञ्जय' इति। इति धनञ्जयगणः।

आजानां त्रयः 'वैश्वामित्रमाधुछन्दसआज' इत्याजगणः।

अघमर्षणाः कौशिकाः तेषां त्रयः 'वैश्वामित्राघमर्षणकौशिक' इति। इत्यघमर्षणगणः।

पूरणाः वारिधापयः तेषां द्वौ॥ 'वैश्वामित्रपौरण' इति। इति पूरणगणः।

इन्द्रकौशिकानां द्वौ 'वैश्वामित्रेन्द्रकौशिक' इति। इतीन्द्रकौशिकगणः। सर्वेषां वैश्वामित्राणामविवाहः।

इति विश्वामित्राः।

---

अथात्रयश्चतुर्भेदाः। अत्रयः वाद्भूतका गविष्ठिरा मुद्गलाश्चेति। त उच्यन्ते।

भूरयः छान्द्रिश्छान्दोगिः पौष्टिका मौद्गलयः सोपानच्छरालाश्छागलाः स्तृणबिन्दुः भागन्तयः मालरुचः व्यालयः साम्भव्यायनाः सावव्यायनाः कर्मधीयाः कामप्यायन्निः दाक्षिः वैदेहा गणपतयः औद्दालकिः श्रोणभावाः गौरिग्रीवयः गाविष्ठिराः शिशुपालाः कृष्णात्रेयाः गौरात्रेया

तृणात्रेयाः अरुणात्रेयाः गोपवनाः कालापयवयः आनीलायना आनीशायनाः आनन्दिः मानन्दिः गौरन्दिः सैरन्दिः पुष्पयः शेफयः साकेतायना शाकटायना भरद्वाजनयः इन्द्रातिथिः इत्येतेऽत्रयः । तेषां त्रयः प्रवराः 'आत्रेयार्चनानसश्यावाश्व' इति । इत्यत्रिगणः ।

वाद्भूतकानां त्रयः 'आत्रेयार्चनानसवाद्भूतक' इति । इति वाद्भूतकगणः ।

गविष्ठिराणां त्रयः 'आत्रेयार्चनानसगाविष्ठिर' इति । इति गविष्ठिरगणः ।

मुद्गलाः व्यालिसन्धिः अर्णवाः बौधाः क्षावाजकिः गविष्ठिराः शिरीषयः शालिमताः व्रीहिमताः गौरिवीताः गौरिकिः वयोवायवनाः बाष्कलाः इत्येते मुद्गलास्तेषां त्रयः प्रवराः 'आत्रेयार्चनानसपौर्वातिथ' इति । इतिमुद्गलगणः । अत्रीणां सर्वेषामविवाहः ।

इत्यत्रयो निर्णीताः ।

---

अथ वसिष्ठास्तेषां चत्वारो गणा आद्यवसिष्ठाः कुण्डिना उपमन्यवः पराशराश्चेति । ते उच्यन्ते ।

वैतलकिः वाररकिः सारवला गौरिश्रवस आश्वलायनाः कपिष्ठाः शौचिवृक्षा व्याघ्रपादो वाह्यकायनिः वाढव्या जातूकर्ण्या औडुलोमिः कौभोजिः कौलायनाः सुन्दहरितः काण्डवृद्धिः सौवत्सायना आलम्भायनाः लोमन्यः स्वस्त्याः कर्षिताः पार्णकायनाः पार्णवल्क्यः देवलका गौरव्या विश्वावना बाहुकपय आविक्षिपयो वंश्यजपयः पूर्णवेला विशिखा इत्येते वसिष्ठास्तेषामेकप्रवरो 'वासिष्ठ' इति । इत्याद्यवसिष्ठगणः ।

कुण्डिना होलायना गौणा आश्वत्था वैकर्णेय आविल्वा बदरा आश्मरथ्या वाहवः कौंकोक्याः साङ्खलिनः कापटवः पेटका नमग्रामा हिरण्याक्षाः पैष्टयाः पैप्पल्यादयः माध्यन्दिनाः शान्तिसौपत्तिः इति कुण्डिनास्तेषां त्रयः प्रवराः 'वासिष्ठमैत्रावरुणकौण्डिन्य' इति । इतिकुण्डिनगणः ।

उपमन्यव औपगवा माण्डलेखयः कापिञ्जला जलागृहाः तपोलोकाः सैत्रणाः खवेषाः तागुरिः स्वराक्षरा मौलयः चैलहलिनः महाकर्णायना बालशिखा औदाहमानयः चलायना भागुरिः रथायनाः कुण्डोदरायणाः कावाधयः वार्कोश्वय आनुक्षरव आलववाः कपिकेशा इत्येते उपमन्यवस्तेषां त्रयः प्रवराः 'वासिष्ठेन्द्रप्रमदाभरद्वसव्य' इति ।

पराशराः कुण्डशयो वाजयो वाजिमन्तयो वैमातायना गोबालिः । प्ररोहयः वैकलयः प्लाक्षयः कौमुदादय अहार्यग्धिः । खल्वायना गोपायनाः तातय

आरुणिः वारुणिः । भालुक्या वाजरिः चक्राह्वयनाः क्रौङ्कलयः क्रैमतिः । कृष्णाजिनाः कपिमुखाः स्वस्त्ययनयः श्वेतयूपयः पौष्कलत्याविः । गार्ग्यायणयः वार्णयः श्यामेयाः श्लौनुहिः सहचौलिस्तेषां त्र्यार्षेयः 'वासिष्ठशाक्त्यपाराशर्य' इति ॥ अत्र गोवाल्यन्ताः कृष्णाः पराशराः । अहार्यश्रयन्ताः गौराः । वारुण्यन्ताः अरुणाः । क्रैमत्यन्ताः नीलाः । पौष्कलसाव्यन्ताः श्वेताः । सहचौल्यन्ताः श्यामा इति संज्ञा । इतिपराशरगणः । वासिष्ठानां सर्वेषां परस्परमविवाहः ॥ आपस्तम्बस्त्वाद्यवसिष्ठानामपि 'वासिष्ठशाक्त्यपाराशर्य' इति त्रिप्रवरानाह ।

इति वसिष्ठाः ।

---

अथ कश्यपास्तेषां त्रयो गणाः । निध्रुवा रेभाः शाण्डिलाश्चेति । त उच्यन्ते ।

कश्यपाः छागलेया माठरा ऐतिशायना आभूत्या वैशिखा धूम्रायणाः सोम्या धर्म्यायणा औदवृत्तिः आग्रायणाः पैन्वकयः प्रावार्यहद्रोगा आनयाः पाश्चायतिका मौषीतकिः साममया माघवयः सारावयः सौधवयः सापस्था आसुरायणाः छागव्याः सोमधाः[1] स्थौलकेशयः वार्द्धकय औपव्या लाक्षायणाः क्रोष्टाजीवनयः खाद्रायणा रोहितायना मितकुम्भाः पिङ्गाक्षय औडलयः मारयणाः पचयः वैकर्णेयाः कौशीतकेयाः धूमलक्ष्मणयः सुराः गौरिवायना विमथ्या अग्निशर्मालायणाः औक्षायनयः काम्बोदरयः[2] देवराताः वैदूराः वावेलाः महावक्रेयाः पैठीनस्याः पाः नस्याः वृषगणाः द्राक्षमाणयः भालन्दनाः शाङ्गमित्रेयाः हिरण्मयाः वालाः जारमाण्याः साविश्रवसः वैशम्पायनाः स्वैरकिः कांसतयाः उल्कायनिः मार्जलायनाः कांसलायनाः देवोहोताः सुरुचयः स्वरेभाः आयस्थूणाः भागुरयः पाथिकायाः गोपायनाः हिरण्मयाः आग्निदेविः तथ्यशौर्याः मुसलाः आविश्रेण्या उत्तरतोगण्डूषाः दलाः[3] मन्त्रिताः वैकर्णयः स्थूलबिन्दव इत्येते निध्रुवास्तेषां त्रयः प्रवराः 'काश्यपावत्सारनैध्रुव' इति इति निध्रुवगणः ।

रेभाणां त्रयः 'काश्यपावत्साररैभ्य' इति । इति रेभगणः ।

शाण्डिलाः कौहलाः पार्यकावा औदमधयः सौदानवः सौपशवः कारेयाः कौकटयः शैशिकयः माहकयः बहुदेहा[4] गोमूत्राः वाक्यशठाः जालन्धरिः धन्वन्तरिः इत्येते शाण्डिलास्तेषां त्रयः प्रवराः 'काश्यपावत्सारशाण्डि-

---

१ स्तोमधा ङ. पाठः । २ कम्वलोदरिः ङ. पाठः । ३ उदलाः ङ. पाठः । ४ बहूदकयः ङ. पाठः ।

ल्य ' इति । १ ' कश्यपावत्सारदेवल ' इति वा । २ ' काश्यपावत्सारासित ' इति वा । ३ ' शाण्डिल्यासितदेवल ' इति वा । ४ ' काश्यपासितदेवल ' इति वा । इतिशाण्डिलगणः ।

आपस्तम्बसूत्रे निरुपदाः कश्यपा उक्ताः । रेभशाण्डिलास्तु द्व्यार्षेया-त्र्यार्षेया वा । ' देवलासित ' इति । ' काश्यपदेवलासित ' इति । कश्यपानां सर्वेषामविवाहः ।

इति कश्यपनिर्णयः ।

अथागस्तयः । ते त्रयः । आद्यागस्तयः साम्भवाहाः सोमवाहाश्चेति । त उच्यन्ते ।

अगस्तयः विशालाद्याः शालङ्कायना औदहनयः कुल्माषदण्डिनाः पर्णाय्यः सावर्णिः ववन्दयः वैरणयः बुधोदरयः सौम्नपथयः शाल्वातयाः मौञ्जिकराः शत्रयः हृद्योमाः शाण्डिधाराः पथोद्गताः हरिग्रीवाः रौहिण्याः मौसलयः इत्येतेऽगस्तयः । तेषां त्रयः प्रवराः ' आगस्त्यदार्ढ्यच्युतेध्मवाह ' इति ।। अन्यत्र तु चत्वारः प्रवरा उक्ताः ।

इध्मवाहाः इच्छावाहाः साम्भवाहाः सोमवाहाः यज्ञवाहाश्चेति । इध्मवाहानां त्रयः ' आगस्त्यदार्ढ्यच्युतेध्मवाह ' इति ।

साम्भवाहानाम् ' आगस्त्यदार्ढ्यच्युतसाम्भवाह ' इति ।।

सोमवाहानाम् ' आगस्त्यदार्ढ्यच्युतसोमवाह ' इति ।

यज्ञवाहानाम् 'आगस्त्यदार्ढ्यच्युतेध्मवाह ' इति ।।

कात्यायनलौगाक्षिभ्यामगस्तिगणमध्ये पुलस्त्यः पुलहः क्रतुः इत्याद्युक्त्वा 'आगस्त्यमाहेन्द्रमायोभुव' इति । इति प्रवरा उक्ताः । ततः पूरणादीनुक्त्वा 'आगस्त्यपौर्णमासपौरण' इति प्रवरा उक्ताः । सत्याषाढस्तु आद्यागस्तीननुक्रम्य 'आगस्त्यदार्ढ्यच्युतेध्मवाह' इति त्रीन् । आगस्तीनां सर्वेषामविवाहः।

इत्यगस्त्यनिर्णयः ।

द्व्यामुष्यायणाः । अथ द्व्यामुष्यायणाः । तत्र भरद्वाजानां केवलाङ्गिरसामत्रीणां कश्यपानां वसिष्ठानां विश्वामित्राणां च द्व्यामुष्यायणाः । नान्येषाम् । त उच्यन्ते ।। तत्र संकृतिगणो द्व्यामुष्यायणः । स यथा । संकृतयः मेलकाः पौलास्तंण्डिशंबुशैवगवाः परिभवास्तारकाद्याः हारिग्रीवाः ऐतरेयाः षेणायाः आरायणाः आश्वलायनाः श्रौतायनाः आम्रायणाः

१ प्रत्येकं भिन्नाः ।

आर्षभयः चान्द्रायणाः आग्रापयः पूतिमाषाः इत्येते संकृतयस्तेषा त्र्यार्षेयः 'आङ्गिरससांकृत्यगौरिवीत' इति। आश्वलायनस्तु 'शाक्त्यगौरवीत-सांकृत्य' इति प्रवरानाह। एतैः पूर्वोक्तैः परस्परं चतुर्विधवसिष्ठैश्च सह न विवाहः। चतुर्विंशति(मत)टीकायां तु कश्यपैस्त्रिभिरविवाह इत्युक्तम्। श्लोकोऽप्युक्तः—

काश्यपेयगणस्यापि वसिष्ठस्य गणस्य च।
संकृतिपूतिमाषाभ्यां विवाहो न परस्परम्॥ इति।

तत्राकरो मृग्यः। लौगाक्षीणां त्रयः प्रवराः 'काश्यपावत्सारवासिष्ठ' इति॥ एषां वासिष्ठकश्यपैरविवाहः। तथा धनञ्जयानां विश्वामित्रात्रि-भिरविवाहः। एवं वामरथ्यानां जातूकर्ण्यानां वसिष्ठात्रिभिरविवाहः। विश्वामित्रभरद्वाजैः शौङ्गशैशिरीणां न विवाहः। अस्य प्रवराः। 'आङ्गिरसबार्हस्पत्यभारद्वाजकात्यात्कील' इति। क्वचित्तु देवरातेन विश्वामित्रजमदग्निभिः सह न विवाह इत्युक्तम्॥ तत्र केषांचित्काशी-स्थानामनादरः। विपरीतानुष्ठानात्। दक्षिणदेशे तु न कुर्वन्ति। तत्र मूलं [ प्रयोगपारिजाते संग्रहे—

जमदग्निगणस्यापि विश्वामित्रगणस्य च।
न देवरातगोत्रेण विवाहः स्यात्परस्परम्॥ इति।

हरिवंशे तु—

और्वस्यैवमृचीकस्य सत्यवत्यां महायशाः।
जमदग्निस्तपोवीर्यो जज्ञे ब्रह्मविदां वरः॥
मध्यमश्च शुनःशेपः शुनःपुच्छः कनिष्ठकः।
इत्युक्त्वा—देवैर्दत्तः शुनःशेपो विश्वामित्राय भार्गवः॥
देवैर्दत्तः स वै यस्माद्देवरातस्ततोऽभवत्॥

इति देवरातस्य जमदग्निसंबन्धकथनाज्जामदग्न्यत्वमुक्तम्। ] मृग्यम्।

इति द्व्यामुष्यायणाः।

---

यत्तु 'मानवेति वा सर्वेषाम्' इति प्रवर उक्तः स वरणे नतु विवाहादौ तस्योपयोगः॥ राजन्यवैश्यानां समानार्षेयत्वादिकं पुरोहित-गोत्रादिभिर्विचारणीयम्।

---

१ कश्यपैस्त्रिभिरिति ङ पाठः। २ गणस्येत्यधिकं ङ। [ ३ ] एतच्चिह्नान्तर्गतं च. पुस्तके दृश्यते। मृग्यमिति च नास्ति।

अथ कश्चिद्विशेषो मृग्यमूलोऽपि लिख्यते ॥ शौङ्गशैशिरीणां पञ्चोक्ताः। 'आंगिरसबार्हस्पत्यभारद्वाजशौङ्गशैशिर' इति वा । त्रयोवा 'आंगिरसकात्यात्कील' इति । 'भारद्वाजकात्यात्कील' इति वा ॥ कपिलानां आङ्गिरसबार्हस्पत्यभारद्वाजवान्दनमातवचस' इति ॥ एषां विश्वामित्रभरद्वाजैर्नान्वयः ॥ धनञ्जयानां 'वैश्वामित्रमाधुछन्दसधानञ्जय' इति । एषामत्रिविश्वामित्रैर्नान्वयः ॥ लौगाक्षीणां 'काश्यपावत्सारवासिष्ठ इति । 'वासिष्ठावत्सारकाश्यप' इति वा । एषां वासिष्ठकाश्यपैरविवाहः । यस्य विस्मरणादिना गोत्रनाशस्तस्य काश्यपगोत्रम् । 'गोत्रनाशे तु काश्यपम्' इति हेमाद्रौ व्याघ्रोक्तेः ।

अथात्र स्मृत्यर्थसारीयाः श्लोकाः संग्रहार्थं लिख्यन्ते—

अथात्र[1] गोत्रप्रवरनिर्णयो वर्ण्यतेऽञ्जसा ॥
जमदग्निभरद्वाजविश्वामित्रात्रिगौतमाः ॥ १ ॥
वसिष्ठकश्यपागस्त्या मुनयो गोत्रकारिणः ॥
एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते ॥ २ ॥
म्रियमाणतया वाऽपि सत्तया वाऽनुवर्तनम् ॥
एकस्य दृश्यते यत्र तद्गोत्रं तस्य कथ्यते ॥ ३ ॥
समानमुनिभूयस्त्वमेकप्रवरतामपि ॥
समानप्रवरत्वं च द्वेधा बौधायनोऽब्रवीत् ॥ ४ ॥
मुनिप्रणीतप्रवरैरूनपञ्चाशता वयम् ॥
अनन्तान्यपि गोत्राणि चाङ्गीकृत्याभिदध्महे ॥ ५ ॥
जामदग्न्या वत्सबिदावार्ष्टिषेणाः परस्परम् ॥
नान्वियुः प्रवरैक्येन सगोत्रत्वेन चादिमौ ॥ ६ ॥
यस्का मित्रयुवो वैन्याः शुनकाः प्रवरैक्यतः ॥
स्वं स्वं हित्वा गणं सर्वे विवहेयुः परावरैः ॥ ७ ॥
उक्ताः सप्त भृगोर्वंशा वक्ष्यन्तेऽङ्गिरसो गणाः ॥
गौतमाः सप्त चायास्याः शरद्वन्तास्तथा परे ॥ ८ ॥
कौमाण्डादीर्घतमसस्ततः कारेणुपालयः ॥
वामदेवा औशनसा गोत्रैक्यान्नान्वियुर्मिथः ॥ ९ ॥
केवलाङ्गिरसाश्चैके विष्णुवृद्धाः सकण्वजाः ॥
हरिता रथीतराश्च मुद्गलाः प्रवरैक्यतः ॥ १० ॥

(गोत्रप्रवरनिर्णायकश्लोकाः ।)

१ अथैत्रेति च. पाठः ।

स्वं स्वं हित्वा गणं सर्वे विवहेयुः परावरैः ॥
षोडशाङ्गिरसस्त्रेधा प्रोक्ताः संकृतयस्तथा ॥ ११ ॥
संकृतीनां द्विवंश्यत्वाद्वासिष्ठैश्च चतुर्विधैः ॥
स्ववर्गीयैः सगोत्रत्वात्प्रवरैक्याच्च नान्वियुः ॥ १२ ॥
चत्वारोऽत्रय आद्यात्रिवाद्भूतकगविष्ठिराः ॥
मुद्गलाश्चान्त्यगोत्रैक्यात्प्रवरैक्याच्च नान्वियुः ॥ १३ ॥
त्रयश्च कश्यपगणा निध्रुवा रेभशण्डिलाः ॥
गोत्रैक्यात्प्रवरैक्याच्च नोद्वहेयुः परस्परम् ॥ १४ ॥
वासिष्ठैः कश्यपैर्नित्यं लौगाक्षीणामनन्वयः ॥
अंहं वसिष्ठतोक्तिस्तु प्रयाजाद्यादिगोचरा ॥ १५ ॥
वसिष्ठाः कुण्डिनाश्चैवमुपमन्युपराशराः ॥
वसिष्ठा इति चत्वारो गोत्रैक्यान्नान्वियुर्मिथः ॥ १६ ॥
कुशिका रोहितगणा रौक्थकाः कामकायनाः ॥
कता धनञ्जया आजा अघमर्षणपूरणाः ॥ १७ ॥
इन्द्रकौशिकजाश्चेति विश्वामित्रगणा दश ॥
नोद्वहेयुः सगोत्रत्वात्कचिच्च प्रवरैक्यतः ॥ १८ ॥
अगस्तयः साम्भवाहाः सोमवाहा इति त्रयः ॥
गोत्रैक्यात्प्रवरैक्याच्च नोद्वहेयुः परस्परम् ॥ १९ ॥
वर्गा एकोन पञ्चाशत्प्रसिद्धा मुनिभिः स्मृताः ॥
अप्रसिद्धाः परे वंश्या अन्तर्भूता इहैव ते ॥ २० ॥
विश्वामित्रात्रिगोत्रेण नोद्वहेयुर्धनञ्जयाः ॥
अत्रेस्तु पुत्रिकापुत्रा वामरथ्यादयस्तथा ॥ २१ ॥
तथैव जानूकर्ण्याश्च वसिष्ठैरत्रिभिः सह ॥
भरद्वाजेन शुङ्गेन विश्वामित्रस्य शैशिरेः ॥ २२ ॥
क्षेत्रे जातो द्विगोत्रर्षिः प्रोच्यते शौङ्गशैशिरिः ॥
विश्वामित्रभरद्वाजैस्तज्जानां तेन नान्वयः ॥ २३ ॥
कपिलानां भरद्वाजैर्विश्वामित्रैश्च नान्वयः ॥
गुर्गेः सगोत्रप्रवरा नोद्वाह्या क्षत्रविड्गणैः ॥ २४ ॥
सगोत्राद्यनभिज्ञैश्च विप्रैराचार्यगोत्रजाः ॥

---

१ 'अह्वर्वसिष्ठशक्तिस्तु' इति च. पाठः । २ रौत्यका इति च. पाठः ।

दानादिनान्यगोत्राः स्युरज्ञातगुरुगोत्रिणः ॥ २५ ॥
समानप्रवरोद्वाहनिषेधः क्षत्रवैश्ययोः ।
प्रवरान्मानवेत्यस्मात्प्रवराच्चान्यगोचरः ॥ २६ ॥
इत्थं सगोत्रसंबन्धविवाहविषये स्थिते ।
यदि कश्चिज्ज्ञानतस्तां कन्यामूढ्वोपगच्छति ॥ २७ ॥
गुरुतल्पव्रताच्छुद्ध्येद्गर्भस्तज्जोऽन्त्यतां व्रजेत् ।
भोगतस्तां परित्यज्य पालयेज्जननीमिव ॥ २८ ॥

अत्र प्रायश्चित्तप्रपञ्चः प्रायश्चित्तमयूखे वक्ष्यते ।

जामदग्न्या वत्सविदा आर्ष्टिषेणास्तथैव च ।
पञ्चावत्तिन एवैते अन्ये चतुरवत्तिनः [1] ॥ २९ ॥

अर्थतः पूर्वमेव व्याख्यातानि पद्यानि । इह कपिलानामित्यर्द्धं प्रक्षिप्तमिति टीकाकृतः ।

सगोत्रसप्रवरपरिणये प्रायश्चितमुक्तं मदनपारिजाते शातातपेन—

परिणीय सगोत्रां तु समानप्रवरां तथा ।
त्यागं कृत्वा द्विजस्तस्यास्ततश्चान्द्रायणं चरेत् ॥

आपस्तम्बः—

समानगोत्रप्रवरां कन्यामूढ्वोपगम्य वा ।
तस्यामुत्पाद्य चण्डालं ब्राह्मण्यादेव हीयते ॥
समानप्रवरां कन्यामेकगोत्रामथापि वा ।
विवाहयति यो मूढस्तस्य वक्ष्यामि निष्कृतिम् ॥
उत्सृज्य तां ततो भार्यां मातृवत्परिपालयेत् ।

अत्र प्रमादेन परिणयनमात्रे चान्द्रायणादि । अत्र गोत्रप्रवरनिर्णये बहुवक्तव्यमप्युपयोगाभावाद्विस्तृतिभयाच्च नोक्तम् । विचारबाहुल्यजिज्ञासुना द्वैतनिर्णये द्रष्टव्यम् ।

इति कन्यालक्षणादि ।

---

एतानेव धर्मान्वरेऽतिदिशति याज्ञवल्क्यः—

एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः ।
बलात्परीक्षितः पुंस्त्वे युवा धीमाञ्जनप्रियः ॥ इति ।

वरगुणाः

अत्र भ्रातृमदनन्यपूर्वयवीयस्त्वरूपगुणत्रयभिन्नाः सर्वे गुणा अतिदिश्यन्ते । सवर्ण उत्तमवर्णो वा । असपिण्डादिगुणातिदेशादुभयतः सापि-

---

[1] सगोत्राः इति च पाठः । [2] सुवर्ण इति मुद्रितपु० पाठः ।

ण्ड्यनिवृत्तिरभिप्रेता । तेन वरनिरूपितं कन्यायां कन्यानिरूपितं च वरे पृथगेव सापिण्ड्यं नतु व्यासज्यवृत्ति उभयनिरूपितमेकमिति पितामहचरणाः । पुंस्त्वपरीक्षोक्ता नारदेन—

यस्याप्सु प्लवते बीजं ह्लादि मूत्रं च फेनिलम् ।
पुमान् स्याल्लक्षणैरेतैर्विपरीतस्तु षण्ढकः ॥ इति ।

गृह्ये—'बुद्धिमते कन्यां प्रयच्छेत्' इति । यमोऽप्याह—

कुलं च शीलं च वपुर्वयश्च विद्यां च वित्तं च सनाथतां च ।
एतान्गुणान्सप्त परीक्ष्य देया कन्या बुधैः शेषमचिन्तनीयम्॥इति ।

सामुद्रिके—पूर्वमायुः परीक्षेत पश्चाल्लक्षणमादिशेत् ।
आयुर्हीननराणां हि लक्षणैः किं प्रयोजनम् ॥ इति ।

अन्यानि सामुद्रिकलक्षणानि विस्तरभिया नोक्तानि ।

इति वरगुणाः ।

---

अथ विवाहक्रमः । याज्ञवल्क्यः—

विवाहक्रमः । तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ।
ब्राह्मणक्षत्रियविशां भार्याः स्वाः शूद्रजन्मनः ॥

तिस्र इत्यादिसङ्ख्या सवर्णाव्यतिरेकेण । मनुः—

सवर्णाऽग्रे द्विजातीनां प्रशस्ता दारकर्मणि ।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवराः ॥

अत्र प्राञ्चः—रतिपुत्रधर्मार्थत्वेन विवाहस्त्रिविधः । पुत्रार्थो द्विविधः नित्यः काम्यश्च । अपुत्रस्य यः सुतार्थं विवाहः स नित्यः । एकस्मिन्पुत्रे जाते बहुपुत्रोत्पादनार्थं यो विवाहः स काम्यः । तत्र नित्ये सवर्णैव काम्यपुत्रोत्पादने शूद्राव्यतिरिक्ताः । रत्यर्थमनाश्रमित्वदोषपरिहारार्थं वा शूद्राऽपि परिणेया । न तु पुत्रोत्पत्त्युद्देशेन ।

यदुच्यते द्विजातीनां शूद्राचारोपसङ्ग्रहः ।
नैतन्मम मतं यस्मात्तत्राऽऽत्मा जायते स्वयम् ॥

इति हेत्वभिधानात् । नचैवं शूद्रापुत्रस्य विभागो न संगच्छत इति वाच्यम् । रत्यर्थं प्रवृत्तस्यानुषङ्गेण पुत्रे जाते वचनस्यार्थवत्त्वात् । यदि नित्यपुत्रोत्पादनार्थं सवर्णा न लभ्यते तदाऽनुकल्पार्थमप्यसवर्णापरिणयनमित्याहुः । विशेष उक्तो याज्ञवल्क्येन—

पाणिर्ग्राह्यः सवर्णासु गृह्णीयात्क्षत्रिया शरम् ।
वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः ॥ इति ।

तथा—वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने । इति च ।
अग्रजन्मग्रहणेनोत्तमवर्णग्रहणम् । वैश्यायाः क्षत्रियेण सह विवाहे प्रतोद एव ।

इति विवाहक्रमः ।

---

अथ विवाहभेदाः—तत्र विवाहशब्दः [ब्दार्थः] कन्यापितरं प्रति दानम्—'अलंकृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहः' इति श्रुतौ दानविवाहशब्दयोः सामानाधिकरण्यात् । वरं प्रति पाणिग्रहणादि । अन्यथा 'उदगयनआपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः सार्वकालमेके विवाहं तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुयात्' इत्याश्वलायनेन विवाहात्पूर्वं होम उक्तोऽसंगतः स्यात् । नहि कन्यादानात्पुरस्तादेता आहुतयः सन्ति ।

मनुः—ब्राह्मो दैवस्तथैवाऽऽर्षः प्राजापत्यस्तथाऽसुरः ।
विवाहभेदाः। गान्धर्वो राक्षसश्चैव पैशाचस्त्वष्टमः स्मृतः ।। इति ।

तत्र क्रमेणैवाष्टानां स्वरूपं फलं चाहाऽऽश्वलायनः—'अलंकृत्य कन्यामुदकपूर्वां दद्यादेष ब्राह्मो विवाहस्तस्यां जातो द्वादशावरान्द्वादशपरान्पुनात्युभयत ऋत्विजे वितते कर्मणि दद्यादलंकृत्य स दैवो दशावरान् दशपरान्पुनात्युभयतः सह धर्मं चरत इति प्राजापत्योऽष्टावरानष्टपरान्पुनात्युभयतो गोमिथुनं दत्त्वोपयच्छेत स आर्षः सप्तावरान्सप्त परान्पुनात्युभयतो मिथः समयं कृत्वोपयच्छेत स गान्धर्वो धनेनोपतोष्योपयच्छेत स आसुरः सुप्तानां प्रमत्तानां वाऽपहरेत्स पैशाचो हत्वा भित्त्वा च शीर्षाणि रुदतीं रुदद्भ्यो हरेत्स राक्षसः' इति ।

एतेषु गुणदोषानाह मनुः—

ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः ।
ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसंमताः ।
इतरेष्ववशिष्टेषु नृशंसानृतवादिनः ।
जायन्ते दुर्विवाहेषु ब्रह्मधर्मद्विषः सुताः ।।

नृशंसा हिंस्राः । ब्रह्मद्विषो वेदद्विषः । गान्धर्वादिष्वनन्तरं होमादिकमपि कार्यम् । तद्विना भार्यात्वानुत्पत्तेः। तथाऽऽह देवलः—

गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः ।
कर्तव्यश्च त्रिभिर्वर्णैः समर्थेनाग्निसाक्षिकः ।

वसिष्ठोऽपि—बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ।।

अत्र व्यवस्थामाह मनुः—

विवाहव्यवस्था।

चतुरो ब्राह्मणस्याऽऽद्यान्प्रशस्तान्कवयो विदुः ।
राक्षसं क्षत्रियस्यैवमासुरं वैश्यशूद्रयोः ।। इति ।

राक्षसः क्षत्रियस्य मुख्यः । आसुरो वैश्यशूद्रयोर्मुख्यः । अनुकल्पमाह स एव—

षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान् ।
विट्शूद्रयोस्तु तानेव विन्द्याद्धर्म्यानराक्षसान् ।। इति ।

अस्यार्थः—ब्राह्मणस्य ब्राह्माद्या गान्धर्वान्ताः षडेव नेतरौ । एवं च क्षत्रियादेर्ब्राह्माद्यनुज्ञा । आसुरादयश्चत्वारः क्षत्रियस्य धर्म्याः । वैश्यशूद्रयोरपि राक्षसवर्जमेत एव । एवं च राक्षसं क्षत्रियस्यैव । ब्राह्मणस्य षट् । नेतरौ । क्षत्रियस्य सर्वे । आसुरं निन्दति कश्यपः ।

क्रीता द्रव्येण या नारी न सा पत्नी विधीयते ।
न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुः ।। इति ।

यमः— कन्याविक्रयिणो मूर्खा रहःकिल्बिषकारिणः ।

कन्याविक्रयिणो निन्दा।

पतन्ति नरके घोरे दहन्त्यासप्तमं कुलम् ।। इति ।

एतच्चात्मार्थे धनग्रहणे दोषः कन्यार्थे तु न दोषः । यथाह मनुः—

यासां नाऽऽददते शुल्कं ज्ञातयो न स विक्रयः ।
अर्हणं तत्कुमारीणामानृशंस्यं तु केवलम् ।।

आनृशंस्यममायित्वम्[1] । ब्राह्मणस्यापि पैशाचमनुजानाति वत्सः—

सर्वोपायैरसाध्या स्यात्सुकन्या पुरुषस्य या ।
चौरेणापि विवाहेन सा विवाह्या रहःस्थिता ।। इति ।

विवाहमध्ये स्त्रीणां रजोदर्शने विशेषमाह यज्ञपार्श्वः—

विवाहे कन्यारजोदर्शने कर्तव्यम्

विवाहे वितते तन्त्रे होमकाल उपस्थिते ।
कन्याया ऋतुरागच्छेत्कथं कुर्वन्ति याज्ञिकाः ।।
स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि ।
युञ्जानामाहुतिं हुत्वा ततस्तन्त्रं प्रवर्तयेत् ।। इति ।

इति विवाहभेदाः ।

अथकालः । अत्र गृह्यम्—'उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहाः' इति । यत्तु 'सार्वकालमेके विवाहम्'

१ अपापित्वमिति च पाठः ।

इति तद्दक्षिणायनप्राप्त्यर्थमिति धर्मप्रकाशे पितामहचरणाः । आसुरादि-विवाहविषयमिति केचित् । नारदः—

माघफाल्गुनवैशाखज्येष्ठमासाः शुभप्रदाः ।
मध्यमः कार्तिको मार्गशीर्षको निन्दिताः परे ॥
न कदाचिद्दशर्क्षेषु भानोरार्द्राप्रवेशनात् ।
विवाहं देवतानां च प्रतिष्ठां नोपनायनम् ॥

अत्र यद्यपि शेषा निन्दितास्तथापि 'भानोरार्द्राप्रवेशनात्' इति पुनः श्रुत्याऽऽषाढोऽभ्यनुज्ञातः स च, 'आर्द्राप्रवेशनात्पूर्वमिति । अत्र च विधि-निषेधाः सौरमानाभिप्रायेण । यथोक्तं गर्गेण—

सौरो[1] मासो विवाहादौ यज्ञादौ सावनः स्मृतः । इति ।

कश्यपेन चान्द्रमानमप्युक्तम्—

उपवासव्रतोद्वाहयात्राक्षौरोपनायनम् ।
तिथिवर्षादि निखिलं चान्द्रमानेन गृह्यते ॥ इति ।

मदनरत्ने मिहिरः ज्येष्ठमासं प्रक्रम्य—

ज्येष्ठस्य ज्येष्ठकन्याया विवाहो न प्रशस्यते[2] ।
तयोरन्यतरे ज्येष्ठे ज्येष्ठमासो न शस्यते ॥
द्वौ ज्येष्ठौ मध्यमौ प्रोक्तावेकज्येष्ठं शुभावहम् ॥
ज्येष्ठत्रयं न कुर्वीत विवाहे सर्वसंमतम् ।

ज्येष्ठा कन्या वरोऽपि ज्येष्ठः ज्येष्ठमासश्चेति त्रिज्येष्ठम् । ज्येष्ठानक्षत्रेण वा त्रिज्येष्ठम् । ज्येष्ठानक्षत्रं ज्येष्ठमासः ज्येष्ठा कन्येत्यपि त्रिज्येष्ठम् । चतुर्ज्येष्ठे त्रिज्येष्ठस्य सद्भावान्निषेधप्रवृत्तिरस्त्येव । ज्येष्ठशब्देन त्वाद्यगर्भोत्पन्नमपत्यं, तदाह श्रीपतिः—

आद्यगर्भदुहितुः सुतस्य वा ज्येष्ठमासि न तु जातु मङ्गलम् । इति ।

तथा पक्षोऽपि पूर्वमापूर्यमाण उक्तः । बृहस्पतिः कृष्णमप्याह—

शुक्लपक्षः शुभः प्रोक्तः कृष्णोऽप्यन्त्यत्रिकं विना । इति ।

जन्मपक्षस्तु निषिद्धः—

विवाहे चोपनयने जन्ममासं विवर्जयेत् ।
विशेषाज्जन्मपक्षं तु वसिष्ठाद्यैरुदाहृतम् ॥ इति ।

तिथ्यादिप्राशस्त्यनिषेधादि ज्योतिःशास्त्रादवगन्तव्यम् ।

इति विवाहकालनिर्णयः ।

---

१ सौरमासेति च पाठः । २ ज्येष्ठमासः प्रशस्यते इति पाठान्तरम् ।

अथ विवाहकालः । बौधायनः—

दद्याद्गुणवते कन्यां नग्निकां ब्रह्मचारिणे ।

विवाहकालः । अपि वा गुणहीनाय नोपरुन्ध्याद्रजस्वलाम् ॥ इति ।

उपरोधनेन रजस्वलाप्रयोजको न भवेदित्यर्थः । पुराणेऽपि—

यावन्न लज्जया याति कन्या पुरुषसन्निधौ ।
योन्यादीन्नावगूहेत तावद्भवति कन्यका ॥

यमः—अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥ इति ।

ऊर्ध्वं द्वादशे वर्ष इत्यर्थः । उक्तं च संवर्तेन—

अष्टमे तु भवेद्गौरी नववर्षा तु रोहिणी ।
दशमे कन्यका प्रोक्ता द्वादशे वृषली भवेत् ॥

वृषली रजस्वला । यथोक्तं देवलेन—

वन्ध्या च वृषली ज्ञेया वृषली च मृतप्रजा ।
अपरा वृषली ज्ञेया कुमारी या रजस्वला ॥ इति ।

यमस्तु दोषमाह—

विवाहे दोषाः । प्राप्ते द्वादशके वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिता पिबति शोणितम् ॥

द्वादशवर्षग्रहणं प्रायिकम् । कस्याश्चित्तत्रापि तद्दर्शनाभावात् । अतो रजोदर्शनं विवाहात्पूर्वं यथा न भवति तथा कुर्यादित्युक्तं भवति । अतश्च—

त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।

इत्यादिमनूक्तिः संगच्छते । अस्याश्च ग्रहणेऽपि दोषमाह यमः—

यस्तां समुद्वहेत्कन्यां ब्राह्मणो मदमोहितः ।
असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥

यत्तु मनुः—काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि ।
नत्वेवैनां प्रयच्छेत गुणहीनाय कर्हिचित् । इति ।

तदपि शब्दात्कामशब्दाच्च न स्वार्थपरम् । किंतु गुणवते दानप्रशंसार्थम् । अग्रे स्वयमेव बाहुल्येन दोषाभिधानात् । कन्यादाने फलमाह मनुः—

नाग्निहोत्रादिभिस्तत्स्याद्रक्षातो ब्राह्मणस्य वा ।
यत्कन्यां विधिवद्दत्त्वा फलमाप्नोति मानवः ॥ इति ।

सालंकृतिकन्यादाने विशेषमाह संवर्तः—

अलंकृत्य तु यः कन्यां भूषणाच्छादनादिभिः
दत्त्वा स्वर्गमवाप्नोति पूज्यते वासवादिभिः ॥
कूपदश्चाश्वमेधी च प्राणदाता भयेषु च ।
समं यान्ति रथा एषां त्रयो वै नात्र संशयः ॥ इति ।

'सत्कृत्यालंकृतां कन्यां यो ददाति स कूपदः' इति कोशः । कचित्कूकुद इति पाठः । न चेदं फलश्रवणात्काम्यमेवेति वाच्यम्, अप्रदाने दोषश्रवणात् । अतो जातेष्टिवन्नित्यं काम्यं च । तथा कालान्तरमपि—

वैवाहिको विधिः स्त्रीणामौपनायनिकः परः । इति ।

ये उपनयने कालाः पञ्चमवर्षादयस्त एव कन्याविवाहे । मनुर्विशेषमाह—

उत्कृष्टायानुरूपाय वराय सदृशाय च ।
अप्राप्तामपि तां तस्मै कन्यां दद्याद्विचक्षणः ॥

अप्राप्तां कालमप्राप्तामित्यर्थः । वरानुरोधेन देयेत्यर्थः ।

इति विवाहकालः ।

---

अथ दातृक्रमः । याज्ञवल्क्यः—

पिता पितामहो भ्राता सकुल्यो जननी तथा ।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ।
अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ ॥

(कन्यादातृक्रमः ।)

नारदेन त्वन्येऽप्युक्ताः—

पिता दद्यात्स्वयं कन्यां भ्राता वानुमते पितुः ।
मातामहो मातुलश्च सकुल्यो बान्धवस्तथा ॥
माता त्वभावे दातृणां प्रकृतौ यदि वर्तते ॥
तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः ॥

प्रकृतिस्थ उन्मादादिदोषशून्यः । वयोविशेषेण फलमाह मरीचिः—

गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददद्ब्रह्मलोकं रौरवं तु रजस्वलाम् ॥ इति ।

(कन्यावयोविशेषेण दानफलविशेषः ।)

गौर्यादिस्वरूपमुक्तं प्राक् । यदि ऋतुदर्शनेऽपिता चेन्न ददाति तदा कन्या वर्षत्रयं प्रतीक्ष्य स्वयमेव वरयेत् । तदाह बौधायनः—

(स्वयंवरणम् ।)

त्रीणि वर्षाण्यृतुमती काङ्क्षेत पितृशासनम् ।
ततश्चतुर्थे वर्षे तु विन्देत्तु सदृशं पतिम् ॥

यत्तु विष्णुः—ऋतुत्रयमुपास्यैव कन्या कुर्यात्स्वयंवरम् । इति ।

---

[1] जामय इति ।

तद्गुणवद्वरविषयम् । इयं प्रतीक्षा दातृसद्भावे । यदा तु कोऽपि दाता नास्ति तदा राजा दद्यात् । यथाह नारदः—

यदा तु कश्चिन्नैव स्यात्कन्या राजानमाव्रजेत् । इति ।

यदा राजाऽपि न ददाति तदा स्वयंवरं कुर्यात् । याज्ञवल्क्यः—

गम्यं त्वभावे दातॄणां कन्या कुर्यात्स्वयंवरम् । इति ।

गम्यं गमनार्हम् । तथा पित्राज्ञयाऽपि स्वयंवर उक्तो भारते सावित्र्युपाख्याने—

पुत्रि प्रदानकालस्ते न च[1] कश्चिद्वृणोति माम् ।
स्वयमन्विच्छ भर्तारं गुणैः सदृशमात्मनः ॥

तथा नलोपाख्यानेऽपि—

स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनाम् ।
अपश्यदात्मनः कार्यं दमयन्त्याः स्वयंवरम् ॥ इति ।

स्कान्दे विशेषः—अलंकृत्य[2] सुवर्णेन परकीयां तु कन्यकाम् ।
धर्मेण विधिना दातुमसगोत्रोऽपि युज्यते ॥ इति ।

तत्फलं तत्रैव—अनाथां कन्यकां दृष्ट्वा सदृशाभ्यधिके वरे ।
द्विगुणं फलमाप्नोति कन्यादाने यदीरितम् ॥ इति ।

अतोऽन्यकन्याऽन्येनापि धर्मार्थं देया । इति दातृस्वयंवरनिर्णयः ।

---

अथ दत्तापहारः । तत्र दत्तापहारे दण्डमाह याज्ञवल्क्यः—

सकृत्प्रदीयते कन्या हरँस्तां चौरदण्डभाक् । इति ।

दत्तकन्यापहारविषये दण्डादि ।

नारदोऽपि—दत्तां न्यायेन यः कन्यां वराय न ददाति ताम् ।
अदुष्टश्चेद्वरो राज्ञा स दण्ड्यस्तत्र चोरवत् ॥

दत्तां वाग्दत्ताम् । अदुष्टश्चेदित्यनेन दुष्टाय न देयेति गम्यते । उक्तं च गौतमेन—'प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात्' इति । याज्ञवल्क्योऽपि—

दत्तामपि हरेत्पूर्वाच्छ्रेयांश्चेद्वर आव्रजेत् । इति ।

यत्तु मनुनोक्तम्—एतत्तु न परे चक्रुर्नापरे जातु साधवः ।
यदन्यस्याभ्यनुज्ञाय नरस्यान्यस्य दीयते ॥

यच्च—सकृदंशो निपतति सकृत्कन्या प्रदीयते । इति ।

तद्दोषवर्जितविषयम् । दुष्टेनापि यदि पाणिग्रहणसमयाद्यन्तं क्रियते ततो नैव ग्राह्या । अत एव नारदः—

---

१ न च याचति केचन इति व्रतराजादिषु पाठः । २ आत्मीकृत्येति मुद्रितपु॰ पाठः ।

स्त्रीपुंसयोस्तु संबन्धाद्वरणं प्राग्विधीयते ।
वरणाद्ग्रहणं पाणेः स संस्कारो विलक्षणः ।
तयोरनियतं प्रोक्तं वरणं दोषदर्शनात् ।। इति ।

तयोर्वरणपाणिग्रहणयोर्मध्ये वरणमनियतं यतो तद्दोषदर्शनात्प्रत्यावर्तेत इत्यर्थः ।

यमोऽपि—नोदकेन न वाचा वा कन्यायाः पतिरुच्यते ।
पाणिग्रहणसंस्कारात्पतिः स्यात्सप्तमे पदे ।। इति ।

अनेन च सप्तपद्याः प्राग्वरमरणे न वैधव्यमिति गम्यते। वसिष्ठेनाप्युक्तम्—
अद्भिर्वाचा च दत्तायां म्रियेताऽऽदौ वरो यदि ।
न च मन्त्रोपनीता स्यात्कुमारी पितुरेव सा ।। इति ।

वरणोत्तरं देशान्तरगमन आह कात्यायनः—

शुल्कदातुर्देशान्तरगमनादिषुकर्तव्यम् ।

वरयित्वा तु यःकश्चित्प्रणश्येत्पुरुषो यदा ।
ऋत्वागमांस्त्रीनतीत्य कन्याऽन्यं वरयेत्पतिम् ।। इति ।

प्रणश्येद्देशान्तरं गच्छेदिति माधवः। अन्यथा प्रतीक्षावैयर्थ्यात् । एवं च
प्रतिगृह्य तु यः कन्यां वरो देशान्तरं व्रजेत् ।
त्रीनृतून्समतिक्रम्य कन्याऽन्यं वरयेद्वरम् ।।

इति नारदीयेनाप्येकार्थता भवति । शुल्कदातुर्देशान्तरगतौ कात्यायन आह—
प्रदाय शुल्कं गच्छेद्यः कन्यायाः स्त्रीधनं तथा ।
धार्या सा वर्षमेकं तु देयाऽन्यस्मै विधानतः ।। इति ।

शुल्कदमरणे मनुराह—
कन्यायां दत्तशुल्कायां म्रियेत यदि शुल्कदः ।
देवराय प्रदातव्या यदि कन्याऽनुमन्यते ।।

यदिकन्यानुमन्यते इत्यनेन कन्यानुमतौ देवराय यदि तु देवरातिरिक्तमेवानुमन्यते तदा तस्मा एव ।

बहुभिर्निर्दोषैर्वरणे कृते विशेषमाह कात्यायनः—
अनेकेभ्यो हि दत्तायामनूढायां तु तत्र वै ।
पूर्वागतश्च[1] सर्वेषां लभेताद्यवरः सुताम् ।।
पश्चाद्वरेण यद्दत्तं तस्याः प्रतिलभेत सः ।
अथागच्छेत[2] वोढायां दत्तं पूर्ववरो हरेत् ।।

---

१ परागतश्चेति च पाठः. । २ आगंच्छेन्नेति पाठः ।

I-8

अन्यस्मै दत्तायां तस्यां यच्छुल्कं तदेव लभेतेत्यर्थः। सदोषाय प्रथमं प्रतिश्रुताऽपि न देया—

दत्तामपि हरेत्पूर्वाच्छ्रेयांश्चेद्वर आव्रजेत् । इति स्मृतेः ।

वसिष्ठस्तु पाणिग्रहणोत्तरमपि ग्राह्येत्याह—

पाणिग्रहे कृते कन्या केवलं मन्त्रसंस्कृता ।
सा चेदक्षतयोनिः स्यात्पुनः संस्कारमर्हति ॥

नारदोऽपि—उद्वाहिताऽपि सा कन्या न चेत्संप्राप्तमैथुना ।
पुनः संस्कारमर्हेत्सा यथा कन्या तथैव सा ॥

अयं चोद्वाहोत्तरमपहारः कलौ निषिद्धः । कलिनिषिद्धानि च समयमयूखे वक्ष्यन्ते । वाग्दानोत्तरं तु कन्यादोषोपलम्भे गृहीताया अपि त्यागमाह मनुः—

विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां विगर्हिताम् । इति

विगर्हितां दुष्टाम् । नारदः—

नादुष्टां दूषयेत्कन्यां नादुष्टं दूषयेद्वरम् ।
दोषे सति न दोषः स्यादन्योन्यं त्यजतोर्द्वयोः ॥

कन्यादोषा नारदेन दर्शिताः—

कन्यादोषाः ।

दीर्घकुत्सितरोगार्ता व्यङ्गा संस्पृष्टमैथुना ।
धृष्टाऽन्याहितभावा वा कन्या दुष्टा प्रकीर्तिता ॥ इति ।

अन्यस्मिन्पुरुषान्तरे आहितः कृतो भावो मानसाभिलाषो यया सा तथोक्ता।

अदुष्टात्यागे दोषमाह याज्ञवल्क्यः—

अदुष्टां च त्यजन्दण्ड्यो दूषयंस्तु मृषा शतम् । इति ।

कन्यादोषमनाख्याय ददत्पित्रादिरपि दण्ड्य इत्याह स एव—

अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम् । इति ।

इतिदत्तापहारनिर्णयः ॥

---

अधिवेदने निमित्तान्याह याज्ञवल्क्यः—

अधिवेदननिमित्तानि ।

सुरापी व्याधिता धूर्ता वन्ध्यार्थघ्न्यप्रियंवदा ।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ॥

धूर्ता विसंवादशीला। अधिवेदनं भार्यान्तरपरिग्रहः । विशेषमाह मनुः—

मद्यपाऽसत्यवृत्ता च प्रतिकूला च या भवेत् ।
व्याधिता चाधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्वदा ॥

वन्ध्याऽष्टमेऽधिवेद्याऽब्दे दशमे तु मृतप्रजा ।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥

एतेषु निमित्तेष्वधिवेत्तव्येत्यभ्यनुज्ञामात्रं नत्वधिवेदनाकरणे प्रत्यवायः ॥ याज्ञवल्क्यः—

अधिविन्ना तु भर्तव्या महदेनोऽन्यथा भवेत् ।
अधिविन्नस्त्रियै देयमाधिवेदनिकं समम् ।
न दत्तं स्त्रीधनं यासां दत्ते त्वर्धं प्रकल्पयेत् ॥ इति ।

इत्यधिवेदनम् ।

---

अथ विवाहोपनयनादौ निषेधास्त उच्यन्ते । सारावल्याम्—

विवाहोपनयनादौ निषेधाः ।

एकमातृप्रसूतानामेकस्मिन्वत्सरे यदि ।
विवाहं नैव कुर्वन्ति कुर्वन्ति तु ततोऽन्यथा ॥

( ततोऽन्यथा ) भिन्नमातृकयोर्वत्सरभेदेन वा । प्रयोगपारिजाते स्मृत्यन्तरे—

विवाहस्त्वेकजन्यानामेकस्मिन्नुदये कुले ।
नाशं करोत्येकवर्षे स्यादेका विधवा तयोः ॥

उदयो लग्नम् । क्वचिदपवादस्तत्रैव—

एकोदरीकरतलग्रहणं यदि स्यादेकोदरस्थवरयोः कुलनाशनं च ।

एकाब्दके तु विधवा भवतीति कन्या नद्यन्तरे तु शुभदं पृथुशैलरोधे ॥

विशेषमाह नारदः—

पुत्रोद्वाहात्परं पुत्रीविवाहो न ऋतुत्रये ।
न कार्यं व्रतमुद्वाहान्मङ्गले नाप्यमङ्गलम् ॥
विवाहश्चैव कन्यानां षण्मासाभ्यन्तरे यदि ।
असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत् ॥ इति ।

मङ्गले विवाहादौ । अमङ्गलं श्राद्धादि । अनुकल्पमाह गर्गः—

अनुकल्पः ।

पुत्रीपरिणयादूर्ध्वं यावद्दिनचतुष्टयम् ।
पुत्र्यन्तरस्य कुर्वीत नोद्वाहमिति सूरयः ॥

अनुकल्पान्तरमाह स एव—

भ्रातृयुग्मे स्वसृयुग्मे भ्रातृस्वसृयुगे तथा ।
न जातु मण्डनं कार्यमेकस्मिन्मण्डपेऽहनि ॥ इति ।

भ्रातृयुग्मस्य स्वसृयुग्मस्य भ्रातृस्वसृयुग्मस्य चैकस्मिन्नहन्येकस्मिन्मण्डपे मण्डनं न कुर्यात् । पृथगयं निषेधः । समुच्चये मानाभावात् । इदं

च वचनद्वयं भिन्नमातृजविषयमिति केचित् । तन्न मानाभावात् । एकोदराहितैकशुक्रजन्यापत्ययोर्मुख्यस्य भ्रातृशब्दस्यान्यत्र गौणत्वाच्च ।

अन्यं विशेषमाह नारदः—

प्रत्युद्वाहो नैव कार्यो नैकस्मै दुहितृद्वयम् ।
न चैकजन्मनोः पुंसोरेकजन्ये तु कन्यके ।
नूनं कदाचिदुद्वाहौ नैकदा मुण्डनद्वयम् ।। इति ।

नूनं कदाचिदुद्वाहौ इति सापत्नपरम् । मुण्डनद्वयं सापत्नयो-रपि न भवति । दुहितृद्वयं न देयमित्यध्याहारः । कन्यके न देये इति च । विशेषान्तरं संहितासारावल्याम्—

सापत्नयोर्मुण्डनमूर्ध्वमिष्टं न पुत्रयोर्मुण्डनमेकवर्षे ।
न पुंविवाहोर्ध्वमृतुत्रयेऽपि विवाहकार्यं दुहितुः प्रकुर्यात् ।।

अत्रापवादः—

न मण्डनाच्चापि हि मुण्डनं तु गोत्रैकतायां यदि नाब्दभेदः ।

इत्यपि क्वचित् । मुण्डनं चौलम् ।

मुण्डनं चौलमित्युक्तं व्रतोद्वाहौ तु मण्डनम् । इति ।

अत्रिः—कुले ऋतुत्रयादर्वाङ्मण्डनादपि मुण्डनम् ।
प्रवेशान्निर्गमं चैव न कुर्यान्मण्डनत्रयम् ।।
पुत्रीपरिणयादूर्ध्वं पुत्रस्योद्वाहनक्रिया ।
न दुष्टा स्यान्मातृभेदे गृहभेदेऽपि चैव हि ।।
पुरुषत्रयपर्यन्तं प्रतिकूलं सगोत्रिणाम् ।
प्रवेशनिर्गमौ तद्वत्तथा मण्डनमुण्डने ।। इति ।

ऋतुत्रयापवाद उक्तः सारावल्याम्—

फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने ।
भेदादब्दस्य कुर्वीत नर्तुत्रयविलङ्घनम् ।। इति ।

यमलयोर्विशेषः—

एकस्मिन्वत्सरे चैव वासरे मण्डपे तथा ।
कर्तव्यं मङ्गलं स्वस्रोर्भ्रात्रोर्यमलजातयोः ।। इति ।
पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः ।।

इति मण्डनमुण्डनविचारः ।

---

१ न मण्डनान्मुण्डनमिति ङ. पाठः । २ विलम्बनम् इति पाठो ङे ।

हारीतोऽन्यं विशेषमाह—

स्पर्शिता स्याद्यदा कन्या वाचा[1]ऽपि ह्युदकेन च ।
अन्तरा प्रातिकूल्यं चेत्पूर्वोढा विधवा भवेत् ।
अचिरेणैव कालेन पशुभृत्यधनक्षयः ॥ इति ।

प्रातिकूल्यं मरणम् । दक्षः—

दम्पत्योः पितरौ भ्राता सोपनीतः सहोदरः ।
पितृव्य[2]सदृशश्चैव पितामहपितामही ।
एषामन्यतमे नष्टे नोद्वहेत्तां वधूं वरः ॥

ज्योतिःप्रकाशे—प्रतिकूलेऽपि कर्तव्यो विवाहो मासतः परम् ।
शान्तिं विधाय गां दत्त्वा वाग्दानादि चरेत्पुनः ॥ इति ।

शान्तिर्नवग्रहयज्ञादिः । इति प्रतिकूलविचारः ।

इति निषेधाः ।

---

[ अथ[3] विवाहाग्न्यनुगमनादौ प्रायश्चित्तम् । तत्र गृहप्रवेशनीयहोमात्पूर्वं द्वादशरात्रमध्ये विवाहाग्न्यनुगमने श्रोत्रियागारादग्निमानीयाऽऽयतने स्थापयित्वा परिसमूहनादि कृत्वाऽऽज्यं संकृत्य 'अयाश्च' इत्येकामाहुतिं हुत्वा नित्यहोमं कुर्यात् । द्वादशरात्रोत्तरमाज्याहुतयो लाजाहुतयश्चाऽऽवर्तनीयाः। इदं च 'नित्यानुगृहीतः स्यात्' इति सूत्रव्याख्यावसरे देवस्वामिभाष्ये इत्थमुक्तम् 'उपशान्तेऽन्यमग्निमाहृत्य होमकार्ये आहरणप्रायश्चित्तं कृत्वा परिचरणं स्यात्' इति । नारायणेन वृत्तिकृता तु 'यदि विवाहाग्निर्नष्टः स्यान्नष्टाहरणप्रायश्चित्तं कृत्वा परिचरेत्' इत्युक्त्वा 'यदि तूपशाम्येत्पत्न्युपवसेदित्येके' इति सूत्रव्याख्यावसरे पुनरेवमुक्तम् । अत्र एकेग्रहणाद्यजमानो वेत्येके 'अयाश्च' इत्येकामाहुतिं जुहुयादित्यन्ये । कुतः शास्त्रान्तरे दर्शनात् इति । अत्र शास्त्रान्तरम् 'उपवासश्चान्यतरस्य भार्यायाः पत्युर्वाऽनुगतेऽपि वोत्तरया जुहुयान्नोपवसेत्' इत्यापस्तम्बसूत्रम् । अन्यतरस्य कालस्य अन्हो रात्रेर्वा संबन्धादुपवासोऽनशनम् । 'उत्तरया 'अयाश्च' इत्येतयाऽऽज्येनजुहुयात्' इति सुदर्शनभाष्ये स्थितम् । इदमेव देवस्वामिभाष्ये स्पष्टीकृतम् । गृहप्रवेशनीयहोमोत्तरं द्वादशरात्रमध्येऽनुगमने उक्तप्रायश्चित्तमेव। तदूर्ध्वं तु विवाहहोमस्य गृहप्रवेशनीयहोमस्य चाऽऽवृत्तिरिति वृत्तिग्रन्थे स्प-

---

१ वाचा वाऽप्युदकेन च इति पाठो ङः । २ पितृव्यस्तादृश इति ङः । ३ अयं कुण्डलितो ग्रन्थः च. पुस्तक एव दृश्यते । स च यद्यपि वधूगृहप्रवेशानन्तरं निवेशयितुमुचितस्तथाप्यादर्शपुस्तकेऽत्र दृष्टत्वात्तथैव स्थापितः ।

ष्टम् । तथाहि गृहप्रवेशनीयसूत्रे 'विवाहाग्निमुपसमाधाय'इत्यत्र विवाहाग्निग्रहणान्न विवाहहोममात्रेणाग्नेर्गृह्यत्वसिद्धिः, किं तर्हि विवाहहोमगृहप्रवेशनीयहोमाभ्यामेवेत्युक्त्वोपसंहृतम् । तेनाग्निनाशे होमद्वयं कार्यमिति सिद्धमिति । तदनन्तरं पाणिग्रहणसूत्रे नष्टाहरणप्रायश्चित्तमुक्त्वा मतान्तरमुक्तम् । यदि वैवाह्यो न गृहीतः दायविभागकाले गृह्यते गृहीतो विनष्टः द्वादशरात्रमतिक्रान्तस्तत उक्तया क्रियया पश्चाद्गृहीतो भवति । तत्र विवाहाज्याहुतयो लाजाहुतयो गृहप्रवेशनीयाहुतयश्च हृदयाञ्जनं च भवति नान्यत् । कन्यासंस्कारत्वाद्धोमद्वयं चात्र समानतन्त्रं स्यादिति । अत्र सर्वत्र मूलं चतुरध्यायात्मकाश्वलायनगृह्यपरिशिष्टम् । तत्र प्रथमाध्याये सप्तदशः खण्डः—अथ पुनराधानमनुगतेऽग्निं शिष्टागारादानीयोक्तवदुपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्याऽऽज्यमुत्पूयायाश्चाग्न इत्येकामाज्याहुतिं हुत्वा यथापूर्वं परिचरेदेवमाद्वादशरात्रादत ऊर्ध्वं विवाहगृहप्रवेशनीयहोमाभ्यामेकतन्त्राभ्यामादध्यात्तत्र विवाहाज्याहुतयो लाजाहुतयो गृहप्रवेशनीयाहुतयो हृदयाञ्जनं भवति । कर्तैव लाजानावपत्येतत्पुनराधानम् । नित्यहोममतीत्य मनस्वत्या चतुर्गृहीतं जुहुयादाद्वादशरात्रादूर्ध्वं पुनराधानमेवं कुर्यादिति । गृह्यसूत्रगृह्यपरिशिष्टमूलिकाश्चात्र गृह्यकारिकाः ।

> औपासनोऽनुगच्छेच्चेदुपलेपादि पूर्ववत् ।
> आहृत्य श्रोत्रियागारात्प्रतिष्ठाप्य हविर्भुजम् ।
> अन्यस्माद्धोमकालात्स्त्री नाश्नीयाद्यदि वा गृही ।
> पर्युक्षणादिकं कृत्वा संस्कृत्याऽऽज्यं च पूर्ववत् ।
> अयाश्चेत्येतया हुत्वा यथापूर्वं जुहोत्यथ ॥ इति ।

तथा—उपलेपादिकं कुर्यादाघारान्तं विवाहवत् ।

> विवाहाज्याहुतीर्हुत्वा लाजहोमो भवेदथ ।
> गृहप्रवेशनीयाश्च हुत्वाऽस्या हृदयाञ्जनम् ।
> परिणीत्यादि नान्यत्स्याल्लाजानावपते स्वयम् ।
> समानतन्त्रकं चेह होमद्वयमिदं भवेत् । इति ।

अस्याग्नेर्नाशापहारयोरिदमेव प्रायश्चित्तं ' यदि तूपशाम्येत् ' इति सूत्रस्य नाशापहारयोः प्रदर्शनार्थत्वात् । अत्र प्रयोगपारिजातग्रन्थ इत्थम्—'एवं हि रक्षितोग्निर्गृहप्रवेशनीयहोमादर्वागनुगतश्चेत्तदा विवाहहोमः पुनः कार्यः । गृहप्रवेशनीयहोमानन्तरमुपगतश्चेत्तर्हि होमद्वयमपि पुनः कर्त-

व्यमिति गृहप्रवेशनीयहोमसूत्रे वृत्तिकारेणोक्तत्वात्तद्द्वादशरात्रादावनुसन्धेयमिति । अस्माद्विवाहहोमोत्तरं गृहप्रवेशनीयहोमात्पूर्वं द्वादशरात्रमध्येऽप्यग्न्यनुगमने विवाहहोमावृत्तिं मन्यन्ते यथाश्रुतग्राहिणः । तद्दृष्टान्ताज्ञानविजृम्भितम् । यतो गृहप्रवेशनीयहोमोत्तरं द्वादशरात्रोत्तरमेव होमद्वयावृत्तिर्वृत्तिकारादीनामिष्टेत्युक्तमेव । अतस्तद्वदत्रापीत्यनेनापि द्वादशरात्रोत्तरं गृहप्रवेशनीयहोमात्पूर्वमग्न्यनुगमने विवाहहोमावृत्तिरिति तद्ग्रन्थार्थो ज्ञेयः । न च नित्यहोमारम्भात्पूर्वमनुगमने तदावृत्तिः होमारम्भोत्तरं तु प्रायश्चित्तमिति शङ्क्यम् । गृहप्रवेशनीयहोमोत्तरं नित्यहोमारम्भात्पूर्वमपि होमद्वयावृत्तिप्रसङ्गात्प्रमाणाभावाच्च ।

यत्तु औपासनात्पूर्वं यदि विवाहाग्निः शाम्येत तदा प्रायश्चित्तमुक्तं विश्वादर्शे—

उद्वाहोपासनात्पूर्वमनले शान्तिमागते ।
स्थालीपाकं ततः कृत्वा औपासनमथाचरेत् ।
नवनाडीभ्य ऊर्ध्वं चेत्स्थालीपाको भवेन्न वै ।
औपासनं तदा कुर्यात्परेद्युः सायमेव च ।

इति विधानपारिजात उक्तं तदाश्वलायनान्यपरम् । आश्वलायनाना प्रायश्चितार्थं स्थालीपाकाभावात् । वस्तुतस्तु विश्वादर्शग्रन्थेऽदर्शनान्निर्मूलमेव । यत्तु आपस्तम्बीयाश्वलानीयपद्धतिकारौ सिंगाभट्टकृष्णभट्टौ विवाहहोमोत्तरमेवाग्निनाशे पुनर्विवाहहोमप्रतिपादकम्—

उद्वाहोपासनात्पूर्वमनले शान्तिमागते ।
पुनर्होमान्तरं कृत्वा कर्मशेषं समापयेत् ।

इत्यापस्तम्बवचनमिति लिलिखतुः तत्प्रवरदेवस्यैकादशाध्यायात्मकापस्तम्बस्मृतौ निबन्धान्तरे चादर्शनाद्बहुसंग्रहकारप्रयोगपारिजातकारेणालिखनाच्च नाऽऽश्वासनीयम् ।

इत्यग्न्यनुगमनप्रायश्चित्तनिर्णयः । ]

---

अथाशौचनिर्णयः । याज्ञवल्क्यः—

आशौचनिर्णयः ।

दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ।
आपद्यपि च कष्टायां सद्यः शौचं विधीयते ॥

विष्णुः—व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।
प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥

प्रारम्भमाह सः—

प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ।। इति ।

बृहस्पतिः—

' विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
पूर्वसंकल्पितार्थेषु न दोषः परिकीर्तितः ।। इति ।

षट्त्रिंशन्मते—

विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ।
परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः ।।

परैरसगोत्रैः ।

भुञ्जानेषु तु विप्रेषु त्वन्तरा मृतसूतके ।
अन्यगेहोदकाचान्ताः सर्वे ते शुचयः स्मृताः ।। इति ।
अन्नं त्याज्यं । तथाच ब्राह्मे—
भोजनार्द्धे तु संभुक्ते विप्रे सूतिर्विपद्यते ।
यदि कश्चित्तदोच्छिष्टं शेषं त्यक्त्वा समाहितः ।
आचम्य परकीयेन तोयेन शुचयो द्विजाः । इति ।

---

आवश्यकत्वे नान्दीश्राद्धावधिरुक्तः स्मृत्यन्तरे—

एकविंशत्यहर्यज्ञे विवाहे दश वासराः ।
त्रिषट्चौलोपनयने नान्दीश्राद्धं विधीयते ।। इति ।

आरम्भाभावेऽप्यग्रे कालान्तराभावे आशौचाभाव उक्तो विष्णुना—

अनारब्धविशुद्ध्यर्थं कूश्माण्डैर्जुहुयाद्घृतम् ।
गां दद्यात्पञ्चगव्याशी ततः शुध्यति सूतकी ।।

सूतकीति जननाशौचं प्रत्येवेदं प्रवर्तते । बहूनां संभाराणां संपादितानां धारणाशक्तावाह विष्णुः—

' न देवप्रतिष्ठाविवाहयोः पूर्वसंभृतयोरपि ' इति । आशौचं नेत्यर्थः ।।

इत्याशौचनिर्णयः ।

रजोदोषे वृद्धमनुः—विवाहव्रतचूडासु माता यदि रजस्वला ।
तदा न मङ्गलं कार्यं शुद्धौ कार्यं शुभेच्छुभिः ।
गर्गः—यस्योद्वाहादिमङ्गल्ये माता यदि रजस्वला ।
तदा न तत्प्रकर्तव्यमायुःक्षयकरं यतः ।। इति ।

मेधातिथिः—

चौले च व्रतबन्धे च विवाहे यज्ञकर्मणि ।
भार्या रजस्वला यस्य प्रायस्तस्य न शोभनम् ॥
रजोदोषे विधानादि ।
वधूवरान्यतरयोर्जननी चेद्रजस्वला ।
तस्याः शुद्धेः परं कार्यं माङ्गल्यं मनुरब्रवीत् ॥

बृहस्पतिः—वैधव्यं च विवाहे स्याज्जडत्वं व्रतबन्धने ।
चूडायां च शिशोर्मृत्युर्विघ्नं यात्राप्रवेशयोः ॥

अथ वेदिः ।

तथा—सूतिकोदक्ययोः शुद्ध्यै गां दद्याद्धोमपूर्वकम् ।
प्राप्ते कर्मणि शुद्धिः स्यादितरस्मिन्न शुध्यति ॥
अलाभे सुमुहूर्तस्य रजोदोषे च सङ्गते ।
श्रियं संपूज्य तत्कुर्याद्वृत्रहत्याभयं नहि ॥
हैमीं माषमितां पद्मां श्रीसूक्तविधिनाऽर्चयेत् ।
प्रत्यृचं पायसं हुत्वा अभिषेकं समाचरेत् ॥ इति ।

अस्य मूलं मृग्यम् ।

विवाहवेदिमाह नारदः—

हस्तोच्छ्रितां चतुर्हस्तैश्चतुरस्रां समन्ततः ।
स्तम्भैश्चतुर्भिः सुश्लक्ष्णैर्वामभागे स्वसद्मनः ॥
वेदिविधानम् ।
विचित्रितां चित्रकुम्भैर्विविधैस्तोरणाङ्कुरैः ।
एवंविधामारोहयेन्मिथुनं साग्नि वेदिकाम् ॥ इति ।

इतिवेदिः ।

---

अथ कन्यादानार्थं रात्रावपि स्नानमाह वृद्धयाज्ञवल्क्यः—

ग्रहणोद्वाहसंक्रान्तियात्रार्तिप्रसवेषु च ।
कन्यादानार्थं रात्रावपि स्नानानुज्ञा ।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते' ॥

विवाहेऽपि रात्रिमनुजानात्यत्रिः—

मुख्यो विवाहः पूर्वाह्णे मध्याह्ने चोत्तमोत्तमः ।
निशायां मध्यमः प्रोक्तस्त्वपराह्णे तु गर्हितः ॥ इति ।

विवाहश्च कन्यापितरं प्रति दानम् । वरं प्रति पाणिग्रहणादि । कन्या भुक्तवताऽपि प्रतिग्राह्येत्याह व्यासः—

---

१ पाणिग्रहणमङ्गलमिति च. पाठः ।

मुक्त्वा समुद्वहेत्कन्यां सावित्रीग्रहणं तथा।
उपोषितः सुतां दद्यादर्चिताय द्विजाय तु ॥ इति।

सर्वेषु दानेषु प्राङ्मुखो दातोदङ्मुखः प्रतिग्रहीता। कन्यादान उदङ्मुखो दाता प्राङ्मुखं संप्रदानम्' इति वक्ष्यते दानमयूखे।

---

मधुपर्कमाहाऽऽश्वलायनः—

ऋत्विजो वृत्वा मधुपर्कमाहरेत्स्नातकायोपस्थिताय' इति उपस्थिताय कन्याप्रतिग्रहार्थमागताय। अस्मिन्मधुपर्के गवालम्भः कलौ न कार्यः पादप्रक्षालने मधुपर्कविशेषेण विशेषमाहाऽऽश्वलायनः—'दक्षिणमग्रे ब्राह्मणाय प्रयच्छेत्सव्यं शूद्राय' इति। अग्रे प्रथमम्। एवं च क्षत्रियवैश्ययोरनियमः। ब्राह्मणग्रहणं द्विजोपलक्षणमिति केचित्। मधुपर्कश्च भोजनम्। तथाच नारायणेन 'नामांसो मधुपर्को भवति' इति सूत्रव्याख्यान उक्तम्। 'मांसस्य लोके व्यञ्जनस्थानीयत्वात्तत्सहितो मधुपर्को भोजनम्' इति। अयं चार्च्यशाखया कार्यः। तदुक्तं परिशिष्टे—

मधुपर्कः।

अर्च्यस्य यस्य या शाखा तच्छाखागृह्यचोदितः।
मधुपर्कः प्रदातव्योऽप्यन्यशाखेऽपि दातरि ॥ इति।

याज्ञिकास्तु ज्योतिष्टोमादावन्यशाखीयोऽपि यच्छाखीयमार्त्विज्यं करोति तच्छाखया कुर्वन्ति। तत्संप्रदायमात्रम्। कन्यादानं तु दानमयूखे वक्ष्यते।

इति मधुपर्कः।

---

अथ वधूप्रवेशः। मिहिरः—

वधूगृहप्रवेशः।

विवाहस्य निवृत्तिस्तु चतुर्थेऽहनि रात्रिषु।
तासु नागबलिः कार्यो विप्राशीर्वाचनं तथा ॥

नागानां हस्तिनां बलिः पूजा। विधिमाह यज्ञपार्श्वः—

चतुर्थे दिवसे रात्रौ लिखेन्मानःसरोवरम्।
हिरण्यगर्भं तन्मध्ये गन्धपुष्पाक्षतादिभिः ॥
संपूज्याप्सरसश्चैव सोमगन्धर्वपावकान्।
संपूज्य वाऽश्वहस्त्यादीनारोप्य स्वगृहं प्रति ॥
संवेशनादिकं कर्म अन्यथा तु व्रजेद्व्ययम्।

संवेशनं गृहप्रवेशः। कालदीपे—

शुभकाले गृहे प्राप्तौ वर्धन्ते संपदः सदा।
असत्काले गृहप्राप्तौ सर्वनाशो गृहे भवेत् ॥

नारदः—आरभ्योद्वाहदिवसात्षष्ठे वाऽप्यष्टमे दिने ।
वधूप्रवेशः संपत्त्यै दशमेऽथ समे दिने ॥
तथा—'समवर्षे समे मासि यदि नारी गृहं व्रजेत् ।
आयुष्यं हरते भर्तुः सा नारी मरणं व्रजेत् ॥ इति ।
तथा—वधूप्रवेशः प्रथमे तृतीये शुभप्रदः पञ्चमकेऽथवाऽह्नि ।
द्वितीयके वाऽथ चतुर्थके वा षष्ठे वियोगामयदुःखदः स्यात् ॥ इति ।
तथा ज्योतिःप्रकाशे—
वामे शुक्रे नवोढायाः सुखं हानिश्च दक्षिणे ।
धनं धान्यं च पृष्ठस्थे सर्वनाशः पुरः स्थिते ॥
नवोढायास्तु वैधव्यं यदुक्तं संमुखे भृगौ ।
तदेवं विबुधैर्ज्ञेयमन्यथा तु द्विरागमे ॥ इति ।
अन्यत्सुमुहूर्त्तादि दैवज्ञोदितं ग्राह्यम् ।

इति वधूप्रवेशः ।

---

मण्डपोद्वासनकालः प्रयोगरत्ने—
समे च दिवसे कुर्यान्मण्डपोद्वासनं बुधः ।
षष्ठं च विषमं नेष्टं मुक्त्वा पञ्चमसप्तमौ ॥
षष्ठं नेष्टमित्यर्थः । विषममपि नेष्टं पञ्चमसप्तमे दिने मुक्त्वा ।

इति मण्डपोद्वासनम् ।

---

अथ तृतीयमानुषीविवाहनिषेधो मात्स्ये—
तृतीयां मानुषीं नैव चतुर्थीं यः समुद्वहेत् ।
पुत्रपौत्रादिसंपन्नः कटुम्बी साग्निकोऽज्वरः ॥
उद्वहेदग्निसिद्ध्यर्थं तृतीयां न कदाचन ।
मोहादज्ञानतो वाऽपि यदि गच्छेत्तु मानुषीम् ॥
नश्यत्येव न संदेहो गर्गस्य वचनं यथा ॥ इति ।

तृतीयमानुषीविवाहनिषेधः

संग्रहे—चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेत् ॥ इति ।
अर्कविवाहप्रकारः शान्तिमयूखे वक्ष्यते ।

---

ज्येष्ठे भ्रातर्यकृतविवाहे कनिष्ठो न विवहेदित्युक्तं चतुर्विंशतिमते—
जीवति पितरि नादध्यादाहिताग्निः स नो यदि ।
तथैव भ्रातरि ज्येष्ठे न यजेन्न विवाहयेत ॥
ज्येष्ठभ्रात्रा त्वनुज्ञातः कुर्यादग्निपरिग्रहम् ।
अनुज्ञातोऽपि सन्पित्रा नादध्यान्मनुरब्रवीत ॥

अनूढज्येष्ठस्य विवाहनिषेधः सापवादः ।

क्वचिददोष इत्याह कात्यायनः—

देशान्तरस्थक्लीबैकवृषणानसहोदरान् ।
वेश्याभिसक्तपतितशूद्रकल्पातिरोगिणः ।
जडमूकान्धबधिरकुब्जवामनकुण्डकान् ॥
अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च[१] ।
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा ।
कुहकांस्तस्करांश्चापि परिविन्दन्न दुष्यति ॥

अभार्यान्नैष्ठिकादीन् । अन्यथा दोष इति गम्यते ।

---

यमलयोर्मध्ये जन्मनैव ज्येष्ठता । केचिदाधानक्रमेण ज्येष्ठं वर्णयन्तः पश्चाज्जातस्य पूर्वमाधानं भवतीति तस्यैव ज्येष्ठतामाहुः । तन्न । आधानप्राथम्येन ज्येष्ठतायां मानाभावात् । अन्यथा पत्नीनां पूर्वापरभावे नाधाने जाते उत्तराहितस्य प्रथमोत्पत्तौ ज्येष्ठता न स्यात् । आधाने जन्मशब्दाभावाच्च । अतएवाह मनुः—

यमलयोर्ज्यैष्ठनिर्णयः ।

यमयोश्चैव गर्भेषु जन्मनो ज्येष्ठता मता ॥ इति ।

मेधातिथिनाऽपि जन्मत एव ज्यैष्ठ्यमित्युक्तमस्मिन्विषये । तथाऽग्रेदिधिषूविषये भूयान्प्रपञ्चः प्रायश्चित्तमयूखे निरूपयिष्यते ।

---

पुनर्विवाहेऽग्निमाह कात्यायनः—

सदारोऽन्यान्पुनर्दारानुद्वोढुं कारणान्तरात् ।
यदीच्छेदग्निमान्कुर्वन्क होमोऽस्य विधीयते ॥
स्वाग्नावेव भवेद्धोमो लौकिके न कदाचन ॥ इति ।

पुनर्विवाहेऽग्निः ।

इदं चाग्निसन्निधाने । अग्निसंनिधानाभावे तु लौकिके कृत्वाऽग्निद्वयसंसर्गं कुर्यात् । संसर्गं चाह शौनकः—

अथाग्न्योर्गृह्ययोर्योगं सपत्नीभेदजातयोः ।
सहाधिकारसिद्ध्यर्थमहं वक्ष्यामि शौनकः ॥
पृथक्स्थण्डिलयोरग्निं समाधाय यथाविधि ।
तन्त्रं कृत्वाऽऽज्यभागान्तमग्न्याधानादिकं ततः ॥
जुहुयात्पूर्वपत्न्यग्नौ तयाऽन्वारब्ध आहुतीः ।
अग्निमीळे पुरोहितं सूक्तेन नवर्चेन तु ॥
समिध्यैनं समारोप्यायं ते योनिरित्यृचा ।
प्रत्यवरोहेत्यनया कनिष्ठाग्नौ विधीयते ॥
आज्यभागान्ततन्त्रादि कृत्वाऽऽरभ्य तदादितः ॥

अग्निद्वयसंसर्गः ।

---

१ वा ङ. पाठः ।

समन्वारब्ध एताभ्यां पत्नीभ्यां जुहुयाद्धृतम् ।
चतुर्गृहीतेनैताभिर्ऋग्भिः षड्भिर्यथाक्रमम् ॥
अग्नावग्निश्चरतीति, अग्निनाग्निः समिध्यते ।
अस्तीदमिति तिसृभिः पाहिनो अग्न एकया ॥
ततः स्विष्टकृदारभ्य होमशेषं समापयेत् ।
गोयुग्मं दक्षिणा देया श्रोत्रियायाऽऽहिताग्नये ॥
पत्न्योरेका यदि मृता दग्ध्वाऽनेनैव तां पुनः ।
आददीतान्यया सार्द्धमाधानविधिना गृही ॥ इति ।

इत्यग्निद्वयसंसर्गः ।

---

अथ सायंप्रातर्होमः। तत्र सायंकालादारम्भः । तत्कर्तृनाहाश्वलायनः—
'पाणिग्रहणादि गृह्यं परिचरेत्स्वयं पत्न्यपि वा पुत्रः कुमार्यन्तेवासी वा' इति ।

दक्षः—ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः ।
एतैरेव हुतं यत्तु तद्धुतं स्वयमेव तु ॥ इति ।

एतैश्च यजमानस्य पत्न्या वा अनुज्ञया तत्सन्निधौ च होतव्यं नान्यथा। पर्वणि तु सायंहोमः स्वयमेव कार्यो नान्येन । तत्र प्रादुष्करणकालमाह कात्यायनः—

सूर्ये तु शैलमप्राप्ते षट्त्रिंशद्भिरिहाङ्गुलैः ।
प्रादुष्करणमग्नीनां प्रातर्भासामदर्शने ।

उक्तकालातिक्रमे व्याहृतिभिरेकाज्याहुतिः । होमकालमाह मनुः—

लेखामात्रस्तु दृश्येत रश्मिभिस्तु समन्वितः ।
होमकालः। उदितं तं विजानीयात्तत्र होमं प्रकल्पयेत् ॥

अनुकल्पोऽपि—'प्रदोषान्तो होमकालः सङ्गवान्तः प्रातस्तमतिनीय चतुर्गृहीतमाज्यं जुहुयाद्व्याहृतिभिः' ।

'होमद्रव्याणि गृह्यपरिशिष्टे—'पयो दधि सर्पिर्यवागूरोदनं तण्डुलासोमस्तैलमापो व्रीहयो यवास्तिलाः' इति । होम्यानि

सङ्ग्रहे—द्रवं हविः स्रुवेणैव पाणिना कठिनं हविः ।
अङ्गुल्यग्रैर्न होतव्यं न कृत्वांऽगुलिभेदनम् ॥ इति ।

आयतनं चोक्तम्—अरत्निमात्रमग्न्यर्थं कार्यमायतनं बुधैः ।
पशीलमात्रमित्येके तदप्यल्पान्तरं भवेत् ॥ इति ।

अपत्नीकोऽपि पूर्वमृतायै पत्न्या अर्द्धाग्निं दत्त्वाऽवशिष्टार्द्धाग्नौ पूर्ववत्सायंप्रातर्होमौ कुर्यादिष्टिं तु न इति । इति नित्यहोमः ॥

---

## स्त्रीधर्माः ।

अथ स्त्रीधर्माः । मनुः—

बालया वा युवत्या वा वृद्धया वाऽपि योषिता ।
न स्वातन्त्र्येण कर्तव्यं किंचित्कार्यं गृहेष्वपि ॥
पित्रा भर्त्रा सुतैर्वाऽपि नेच्छेद्विरहमात्मनः ।
एषां हि विरहेण स्त्री गर्ह्ये कुर्यादुभे कुले ॥

स्त्रीधर्माः ।

याज्ञवल्क्यः—

संयतोपस्कृता दक्षा हृष्टा व्ययपराङ्मुखी ।
कुर्याच्छ्वशुरयोः पादवंदनं भर्तृतत्परा ॥
नास्ति स्त्रीणां जपो यज्ञो न व्रतं नाप्युपोषणम् ।
पतिं शुश्रूषते येन तेन स्वर्गे महीयते ॥
पाणिग्राहस्य साध्वी स्त्री जीवतो वा मृतस्य वा ।
पतिलोकमभीप्सन्ती नाहितं किंचिदाचरेत् ॥

स्कान्दे—प्रसुप्तं तु सुखासीनं रममाणं यदृच्छया ।
आतुरेष्वपि कार्येषु पतिं नोत्थापयेत्क्वचित् ॥
स्त्रीधर्मिणी त्रिरात्रं तु स्वमुखं नैव दर्शयेत् ।
स्ववाक्यं श्रावयेन्नापि यावत्स्नाता विशुद्ध्यति ॥
सुस्नाता भर्तृवदनमीक्षेन्नान्यस्य कस्यचित् ।
अथवा मनसि ध्यात्वा पतिं भानुं विलोकयेत् ॥
न रजक्या न कारुक्या न च श्रमणयाऽपि च ।
न च दुर्भगया वाऽपि सखित्वं कुरुते तु सा ॥
भर्तृविद्वेषणीं नारीं न संभाषेत कर्हिचित् ।

तथा—उक्ता प्रत्युत्तरं दद्याद्या नारी क्रोधतत्परा ॥
सा शुनी जायते ग्रामे शृगाली निर्जने वने ।
पतिं या ताडितुं चेच्छेत्सा व्याघ्री वृषदंशिका ॥ इति ।

शङ्खः—' नानुक्त्वा गृहान्निर्गच्छेन्नानुत्तरीया न त्वरितं व्रजेन्न परपुरुषं भाषेतान्यत्र वणिक्प्रव्रजितवृद्धवैद्येभ्यो न नाभिं दर्शयेदागुल्फाद्वासः परिदध्यान्न स्तनौ विवृतौ कुर्यान्न हसेदनपावृतं न भर्तारं तद्बन्धून्वा द्विष्यात् '।

मनुः—' तस्मात्सर्वं परित्यज्य पतिमेकं समर्चयेत् ।
भुङ्क्ते भुक्ते पतौ या तु ह्यासीना वाऽपि वाऽऽसिते ॥
[1]विनिद्रे च विनिद्रा या प्रथमं प्रतिबुध्यते ।

१ सनिद्रे इति च. पाठः ।

अनलंकृतमात्मानं पत्युर्नो दर्शयेत्कचिन् ॥
आक्रुष्टा वाऽपि नाक्रोशेत्ताडिताऽपि प्रसीदति ।
सेवते भर्त्तुरुच्छिष्टमिष्टमन्नं फलादिकम् ॥
सहाप्रसाद इत्युक्त्वा पतिदत्तं प्रतीच्छति ।

एते पूर्वोक्ता नियमा विवाहोत्तरमेव ।

अथ प्रोषितपतिकाधर्माः । याज्ञवल्क्यः—

प्रोषितपतिकाधर्माः ।

क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् ।
हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥

तथा—'प्रोषिते मलिना कृशा' इति ।

---

अथ विधवाधर्माः । मनुः—

विधवाधर्माः ।

कामं तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ।
न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु ॥
आसीताऽऽमरणात्क्षान्ता नियता ब्रह्मचारिणी ॥

तथा—विधवाकबरीबन्धो भर्त्तृबन्धाय जायते ।
शिरसो वपनं तस्मात्कार्यं विधवया सदा ॥
एकाहारः सदा कार्यो न द्वितीयः कदाचन ।
कृच्छ्रं पराकं कुर्याच्च तप्तकृच्छ्रमथापि वा ॥
यवान्नेन फलाहारैः शाकाहारैः पयोव्रतैः ।
प्राणयात्रां प्रकुर्वीत यावत्प्राणः स्वयं व्रजेत् ॥
पर्यङ्कशायिनी नारी विधवा पातयेत्पतिम् ।
तस्माद्भूशयनं कार्यं पतिसौख्यसमीहया ॥
नैवाङ्गोद्वर्त्तनाभ्यङ्गं स्त्रिया विधवया क्वचित् ।
तर्पणं प्रत्यहं कार्यं भर्तुः कुशतिलोदकैः ॥

तर्पणं पुत्रपौत्राभावे ।

नाधिरोहेदनड्वाहं प्राणैः कण्ठगतैरपि ।
कञ्चुकं न परीदध्याद्वासो न विकृतं वसेत् ॥
एवं धर्मसमायुक्ता विधवाऽपि पतिव्रता ।
पतिलोकमवाप्नोति न भवेत्काऽपि दुःखिता ॥ इति ।

यत्तु ब्रह्मचर्येण सह वैकल्पिकं सहगमनमुक्तं तद्विस्तरेण[1] शुद्धिमयूखे प्रपञ्चयिष्यामः । इतिस्त्रीधर्माः ॥

---

१ ङ पुस्तके 'विस्तरेण' अस्याग्रे 'इतिस्त्रीधर्माः । आधानादि तु त्रैवर्णिकानां नित्यम् । यथाऽऽह वसिष्ठः । इतिपाठः; पितामहचरणैर्धर्मप्रकाशे उक्तमिति नेह विस्तरः । इति च. पाठः ।

अथ विवाहोत्तरं पञ्चयज्ञानुष्ठानमुक्तमाचारमयूखे दर्शयिष्यामः अष्टकादिश्राद्धज्ञानं श्राद्धमयूखे। सप्त पाकसंस्था नित्याः। आधानादीनि तु त्रैवर्णिकानां नित्यानि। यथाऽऽह वसिष्ठः—'अवश्यं ब्राह्मणोऽग्नीनादधीत—ताग्निहोत्रदर्शपूर्णमासाग्रयणेष्टिपशुसोमांश्च यजेत। इति॥' याज्ञवल्क्योऽपि—

सप्तपाकसंस्था आधानादीनि। प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा।
कर्तव्याऽऽग्रयणेष्टिश्च चातुर्मास्यानि चैव हि॥ इति।

तथा नित्यानि कर्माण्युक्त्वा बौधायनेनोक्तम्—

तस्मात्कन्दैः फलैर्मूलैर्मधुनाऽऽज्यरसेन वा।
नित्यं नित्यानि कुर्वीत न तु नित्यानि लोपयेत्॥

यानि तु—भवेत्त्रैवार्षिकान्नो यः स हि सोमं पिबेद्द्विजः।
प्राक्सौमिकीः क्रियाः कुर्याद्यस्यान्नं वार्षिकं भवेत्॥

तथा—पुण्यान्यन्यानि कुर्वीत श्रद्दधानो जितेन्द्रियः।
नत्वल्पदक्षिणैर्यज्ञैर्यजेताथ कथंचन॥
अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्त्वथर्त्विजम्।
आत्मानं दक्षिणाहीनो नास्ति यज्ञसमो रिपुः॥

इत्यादीनि तानि काम्यपराणि। नित्येषु यथाशक्त्यङ्गहीनेनाधिकारस्य षष्ठे स्थितत्वात्, कन्दैर्मूलैरित्यादि च संगच्छते। 'नित्येष्वपि देवताग्निशब्दक्रियाणां प्रतिनिधिर्नास्ति तथाऽनुपादेयानां कालादीनां न त्यागः' इत्यादि स्थितं षष्ठे।

इति संस्काराः।

## वर्णजातिविवेकः।

ब्राह्मणस्य चतस्रो भार्या क्षत्रियस्य तिस्रो वैश्यस्य द्वे शूद्रस्यैकेति स्थितम्। तत्र समानजातिभ्यां पितृभ्यां जातानामपत्यानां समानजातित्वं मातापित्रोर्वैजात्याज्जात्यन्तरं च भवतीति स्पष्टम्। लोके ता जातीराह याज्ञवल्क्यः—

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः।
अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्द्धनाः॥
विप्रान्मूर्द्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम्।
[1]अम्बष्ठः शूद्र्यां[2] जातो निषादः पारशवोऽपि वा॥

१ 'अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि च' इतिमूलस्मृतौ पाठः। २ शूद्र्यां ङ. पाठः।

एकस्यैव नामद्वयम् ।

वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ।
वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः ॥

प्रतिलोमजा अप्युक्तास्तेनैव—

' ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा ।
शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिष्कृतः ॥
क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च ।
शूद्रादायोगवं वैश्याज्जनयामास वै सुतम् ॥
माहिष्येण करण्यां तु रथकारः प्रजायते ।
असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः ॥ इति ।

प्रतिलोमा असन्तोऽनुलोमाः सन्त इत्यर्थः । एतेषां संकीर्णसंकरे भेदादिक्रमनुपयोगाद्विस्तृतिभयाच्च नोक्तम् । एतासां च जातीनां गोत्वादिजातिवत्प्रत्यक्षतेतिस्थितं वार्तिके । क्वचिज्जातेः शास्त्रगम्यताऽपि । यथोक्तं याज्ञवल्क्येन—

जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा ।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ॥ इति ।

अस्यार्थो मिताक्षरायां—सप्तमेऽपिवाशब्दात्षष्ठे पञ्चमे युगे जन्मनि जातेरुत्कर्षः । पूर्वजात्यपगमोऽन्यजातिप्राप्तिश्च यथा—ब्राह्मणेन शूद्रायामुत्पादिता निषादी । सा ब्राह्मणेनोढा तस्याः कन्याऽपि ब्राह्मणेनोढा कन्यां जनयति । अनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणं जनयति । एवं ब्राह्मणेन वैश्यायामुत्पादिताऽम्बष्ठा । सा ब्राह्मणेनोढेत्येवं परंपरया षष्ठे ब्राह्मणं जनयति । एवं क्षत्रियायामुत्पादिता मूर्धावसिक्ता । सा ब्राह्मणेनोढा । तत्कन्याऽप्येवमिति पञ्चमे ब्राह्मणं जनयति । एवमुग्रा क्षत्रियोढा माहिष्या च यथाक्रमं षष्ठं पञ्चमं क्षत्रियं जनयति । तथा करणी वैश्योढा पञ्चमं वैश्यमिति । इयं च दिक् । तद्यथा मूर्धावसिक्तेन क्षत्रियोढा तत्पुत्रेणाऽपि क्षत्रियेत्येवं क्रमेण पञ्चमं क्षत्रियं जनयति । एवमम्बष्ठेनोढा वैश्या तत्पुत्रेणापि सेत्येवं क्रमेण षष्ठं वैश्यं जनयति । एवं निषादेन शूद्रोढा तत्पुत्रेणापि शूद्रेत्येवं क्रमेण सप्तमे शूद्रं जनयति । एवं मूर्धावसिक्तादिष्वपि योज्यम् । तथा कर्मणां वृत्त्यर्थानामपकृष्टकर्मणां व्यत्यये साम्यं यज्जातीयवृत्तिपरिग्रहस्तज्जातिप्राप्तिरित्यर्थः । तद्यथा ब्राह्मणः स्ववृत्त्याऽजी-

१ कर्म ङ. पाठो. २ तेषामिति च. पाठः ।



I-9

वन्नापदि क्षत्रवृत्तिं करोति गतायामप्यापदि तां न जहाति तत्पुत्रोऽप्येवमिति क्रमेण पञ्चमः क्षत्रिय एव जायते। तथा विप्र आपदि वैश्यवृत्त्या जीवंस्तस्यां गतायामपि तां वृत्तिं न जहात्येवं तत्पुत्रोऽपीत्येवं क्रमेण षष्ठो वैश्य एव जायते। एवं शूद्रवृत्त्याऽपि जीवतः। एवं क्षत्रियवैश्ययोरपि योज्यम्। अस्मिन्व्याख्यानेऽपिशब्दस्य षष्ठपरत्वे मूलं मृग्यम्। एतेषां वृत्तयस्त्वनुपयोगान्नोक्ताः॥

इति वर्णजातिविवेकः।

## वर्णधर्माः।

अथ साधारणा वर्णधर्माः। तत्र ब्राह्मणस्य षट् कर्माणि यजनाध्ययनदानयाजनाध्यापनप्रतिग्रहाख्यानि। तेषु त्रीणि वृत्त्यर्थानि। यथाऽऽह मनुः—

साधारणा वर्णधर्माः।

षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः॥ इति।

यजनं तत्र तत्र स्पष्टम्। याजनं केषांचित्प्रतिषिद्धम्। यथाऽऽह देवलः—

यः शूद्रान्पतितांश्चापि याजयेदर्थकारणात्।
याजितो वा पुनस्ताभ्यां ब्राह्मणोऽयाज्ययाजकः॥ इति।

सुमन्तुरप्ययाज्यानाह—'अभिशस्तपतितपौनर्भवभ्रूणहपुंश्चल्यशुचिवस्त्रकारतैलिकचाक्रिकध्वजिसुवर्णकारचर्मकारवेधकि[1]गणगणकगणिकसौनिकव्याधनिषादरजकबुरुडचर्मकारा अभोज्यान्ना अप्रतिग्राह्या अयाज्याश्चेति। तथाऽभिचारयाजनमपि प्रतिषिद्धम्। यथाऽऽह मनुः—

व्रात्यानां याजनं कृत्वा परेषामन्त्यकर्म च।
अभिचारमहीनं वा त्रिभिः कृच्छ्रैर्व्यपोहति॥ इति।

इति याजनम्। दानप्रतिग्रहौ दानमयूखतो ज्ञेयौ। अध्ययनाध्यापने पूर्वमुक्ते।

---

## आपत्कल्पाः।

अथ ब्राह्मणस्यापत्कल्पः—तत्र पूर्वोक्तवृत्तित्रयासंभवे मनुः—

अजीवंस्तु स्वधर्मेण ब्राह्मणः स्वेन कर्मणा।
जीवेत्क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः॥ इति।

---

१ कन्धकिरिति च. पाठः।

पुनः स्वकर्मग्रहणं विगुणकर्मसंग्रहार्थम् । एतदुक्तं भवति—यथोक्तैः प्रतिग्रहादिभिरजीवन्दुष्प्रतिग्रहादिकमपि कुर्यात् । नत्वन्य-वृत्तिम् । यथोक्तं भगवता—

ब्राह्मण-स्यापत्कल्पः

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।। इति ।

मनुरपि—वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः ।
परधर्माश्रयाद्विप्रः सद्यः पतति जातितः ।। इति ।

तेनाप्यजीवन्क्षत्रवृत्त्या तयाप्यजीवन्वैश्यवृत्त्या । तथोक्तं याज्ञवल्क्येन 'विशां वाऽप्यापदि द्विजः' इति ।

वैश्यवृत्तावपि कृषिः कारणीया स्वयं न कार्या । यथोक्तं बृहस्पतिना—

कुसीदकृषिवाणिज्यं प्रकुर्वीताऽस्वयंकृतम् ।
आपत्काले स्वयं कुर्यान्नैनसा युज्यते द्विजः ।। इति ।

तत्रापि नीलीकृषिर्वर्ज्या ।

नीलीकर्षणकर्ता तु चण्डालसदृशो हि सः ।

इत्यापस्तम्बेन निन्दितत्वात् । कृषिधर्मानग्रे वक्ष्यामः । वाणिज्येऽपि विशेषमाह याज्ञवल्क्यः—

ब्राह्मणस्य वाणिज्ये विशेषः

फलोपलक्षौमसोममनुष्यापूपवीरुधः ।
तिलौदनरसक्षारान्दधि क्षीरं घृतं जलम् ।।
रसासवमधूच्छिष्टमधुलाक्षाः सबर्हिषः ।
मृच्चर्मपुष्पकुतपकेशतक्रविषक्षितीः ।।
कौशेयनीलीलवणमांसैकशफसीसकान् ।
शाकार्द्रौषधिपिण्याकपशुगन्धांस्तथैव च ।।
वैश्यवृत्त्याऽपि जीवन्नो विक्रीणीत कदाचन ।। इति ।

मनुरपि—अश्मनो लवणं चैव पशवो ये च मानुषाः ।
सर्वं च तान्तवं रक्तं शाणक्षौमाविकानि च ।।
अपि चेत्स्युररक्तानि फलमूले तथौषधीः ।
अयः शस्त्रं विषं मांसं सोमं गन्धांश्च सर्वशः ।।
क्षीरं क्षौद्रं दधि घृतं तैलं मधु गुडं कुशान् ।
आरण्यांश्च पशून्सर्वान्दंष्ट्रिणश्च वयांसि च ।।
मद्यं नीलीं च लाक्षां च सर्वांश्चैकशफांस्तथा ।

न विक्रीणीयादिति शेषः । तथा—

भोजनाभ्यञ्जनात्पानाद्यदन्यत्कुरुते तिलैः ।
कृमिभूतः श्वविष्ठायां पितृभिः सह मज्जति ॥
सद्यः पतति मांसेन लाक्षया लवणेन च ।
त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात् ॥
इतरेषां तु पण्यानां विक्रयादिह कामतः ।
ब्राह्मणः सप्तरात्रेण वैश्यभावं नियच्छति ॥

इतरेषां पूर्वोक्तानां क्षीरव्यतिरिक्तानाम् । इदमनापदि । रसेपु विशेषमाह स एव—

रसा रसैर्निमातव्या न त्वेव लवणं रसैः ।
कृतान्नं चाऽकृतान्नेन तिला धान्येन तत्समाः ॥ इति ।

वाणिज्यमप्यस्वयंकृतमित्याह गौतमः—'वाणिज्यं कृषिवदेव' इति। अत्यन्तापदि तु स्वयमपि कुर्यात् । सर्वासंभवे सेवामप्यनुजानाति प्रचेताः—

महदापद्गतो विप्रः क्षत्रसेवां समाश्रयेत् ।
शूद्रसेवा न कर्तव्या प्राणैः कण्ठगतैरपि ॥

शूद्रसेवायां प्रायश्चित्ताम्नानादत्यन्तापदि सापि कार्येत्येवं गम्यते । तथा अत्यन्तापदि चौर्यमनुजानाति याज्ञवल्क्यः—

बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत् ।
प्रतिगृह्य तदाख्येयमभियुक्तेन धर्मतः ॥

अब्राह्मणादिति शूद्राद्धरेत्तदलाभे वैश्यात्तदलाभे क्षत्रियादिति निबन्धकृतः। मनुः—द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके ।

आददानः परक्षेत्रान्न दण्डं दातुमर्हति ।
तथैव सप्तमे भक्ते भक्तानि षडनश्नता ॥
अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः ॥ इति ।

राजानं प्रत्याह मनुः—

तस्य वृत्तं कुलं शीलं श्रुतमध्ययनं तथा ।
ज्ञात्वा राजा कुटुम्बं च धर्म्यां वृत्तिं प्रकल्पयेत् ॥ इति ।

राज्ञे निदेशः । एवं क्षत्रियस्यापदि वैश्यवृत्तिः । शूद्रवृत्तिस्तदसंभवे । वैश्यस्यापादि शूद्रवृत्तिः क्षत्रवृत्तिर्वा नतु ब्राह्मणवृत्तिः । शूद्रस्यापदि वैश्यवृत्तिस्तदसंभवे क्षत्रवृत्तिः । न तु विप्रवृत्तिः । यथोक्तम्—

---

१ दानादिति त्र. पाठः । २ वाकृतान्नेनेति मुद्रितपु. पाठः ।

उत्कृष्टं वाऽपकृष्टं वा तयोः कर्म न विद्यते।
मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते॥

ब्राह्मणस्यापकृष्टं सेवादि नास्ति शूद्रस्योत्कृष्टमध्ययनादि नास्ति। एवं चात्यन्तापदि क्षत्रियवैश्ययोर्ब्राह्मणकर्मानुज्ञातं भवति। एवं यथाकथंचिदप्यापदं हित्वा प्रायश्चित्तं कुर्यात्। यथोक्तं। याज्ञवल्क्येन—

निस्तीर्य तामथात्मानं पावयित्वा न्यसेत्पथि॥

पराशरोऽपि—अशक्तो निन्दितं कुर्यात्प्रायश्चित्तं पुनश्चरेत्॥ इति।
अतो ज्ञायतेऽनुज्ञानेऽपीपद्दोषोऽस्त्येव।

यत्तु—आपद्गतः संप्रगृह्णन्भुञ्जानो वा यतस्ततः।
न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि सः॥ इति।

तन्न सर्वथा दोषाभावप्रतिपादनपरम्। किंतु सर्वत एवात्मानं गोपयेत्' इति गोपनस्य पापाभावार्थवादेनावश्यकत्वार्थम्। अग्रे प्रायश्चित्ताम्नानात्। एतावान्परं विशेषो यदनापदि कृतानां निन्दितानां कर्मणां बहुप्रायश्चित्तमापदि त्वल्पमिति॥ इत्यापत्कल्पनिरूपणम्॥

## क्षत्रियधर्माः।

क्षत्रियधर्मा अपि गीतायाम्—

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाऽप्यपलायनम्।
दानमीश्वरभावश्च क्षत्रकर्म स्वभावजम्॥ इति।

अन्ये चोक्ताः, नीतिमयूखादौ विस्तरेण वक्ष्यन्ते च।

## वैश्यधर्माः

वैश्यधर्मा उक्ता याज्ञवल्क्येन—

कुसीदकृषिवाणिज्यं पाशुपाल्यं विशः स्मृतम्॥ इति।

भारते वैश्यवाक्यम्—

यद्ददामि न तन्न्यूनं यद्गृह्णामि न चाधिकम्।
विक्रीणामि रसांश्चाहं मद्यवर्जममायया॥ इति।

कृष्युपयुक्तहले विशेषमाह हारीतः—

कृष्यां विधेयानि। अष्टगवं धर्म्यहलं षड्गवं जीवितार्थिनाम्।
चतुर्गवं नृशंसानां द्विगवं ब्रह्मघातिनाम्॥ इति।

द्विगवं ब्रह्मघातवन्निन्दितमित्यर्थः। इदं च कठिनभूमिविषयत्वेन योज्यम्। योज्यवृषान्पराशर आह—

स्थिराङ्गं नीरुजं तृप्तं सुनर्दं षण्ढवर्जितम् ।
वाहयेद्दिवसस्यार्द्धं पश्चात्स्नानं समाचरेत् ॥

सुनर्दोऽश्रान्तः । स्नानं वृषाणाम् । वर्ज्यानाह स एव—

क्षुधितं तृषितं श्रान्तं बलीवर्दं न योजयेत् ।
हीनाङ्गं व्याधितं क्लीबं वृषं विप्रो न वाहयेत् ॥ इति ।

विप्र इत्युपलक्षणम् । भारते—

वाहयेद्धुंकृतेनैव शाखया वा सपत्रया ।
न दण्डेन न यष्ट्या वा न पाशेन न दारुणा ॥

खलयज्ञमाह पराशरः—

वृक्षं छित्त्वा महीं भित्त्वा हत्वा च कृमिकीटकान् ।
कर्षकः खलयज्ञेन सर्वपापैः प्रमुच्यते ॥

खलयज्ञः खलस्थधान्यदानम् । धान्यभाग उक्तः शैवपुराणे—

राज्ञे दत्त्वा तु षड्भागं देवानां चैकविंशकम् ।
विप्राणां त्रिंशकं भागं सर्वपापैः प्रमुच्यते ॥

'देवग्रहणं पितॄणामुपलक्षणम्' इति धर्मप्रकाशे । एतददाने दोष उक्तस्तत्रैव—

अदत्वा कर्षको देवि यस्तु धान्यं प्रवेशयेत् ।
मरुदेशे भवेद्वृक्षः स पुष्पफलवर्जितः ॥ इति ।

एतादृशस्य फलमुक्तं भारते—

वणिग्धर्ममनुञ्चन्वै देवब्राह्मणपूजकः ।
स वणिक् स्वर्गमाप्नोति पूज्यमानोऽप्सरोगणैः ॥

वैपरीत्ये दोषस्तत्रैव—

यः करोति जनान्साधून्वणिक्कर्मणि वञ्चनम् ।
स याति नरकं घोरं धनं तस्यापि हीयते ॥

साधूञ्जनान्प्राप्येत्यर्थः । उक्ता वक्ष्यमाणाश्च साधारणधर्माः वैश्यस्य भवन्त्येवेति ॥ इति वैश्यधर्माः ॥

---

## शूद्रधर्माः ।

शूद्रधर्ममाह मनुः—

विप्रसेवैव शूद्रस्य विशिष्टं कर्म कथ्यते ॥ इति ।

विष्णुपुराणे—

द्विजशुश्रूषयैवैष ब्रह्मयज्ञाधिकारवान् ।

निजाञ्जयति वै लोकान् शूद्रो धन्यतरः स्मृतः ॥ इति ।

द्विजैश्च शूद्रवृत्तिः कार्येत्युक्तं भारते—

यश्च कश्चिद्द्विजातीनां शूद्रः शुश्रूषुराव्रजेत् ।
कल्प्या तस्य वनैराहुर्वृत्तिं धर्मविदो जनाः ॥

गौतमः—'जीर्णान्युपानच्छत्रवासांसि कूर्चानीति' देयानीति शेषः । कूर्चं तृणमयमासनम् । उपलक्षणं चेदम् । अतश्चापेक्षितं जीर्णं शय्याकम्बलाद्यपि देयम् । वृत्त्यन्तरमाह याज्ञवल्क्यः—

शूद्रस्य द्विजशुश्रूषा तयाऽजीवन्वणिग्भवेत् ॥
शिल्पैश्च विविधैर्जीवेद्द्विजातिहितमाचरन् ॥ इति ।

शूद्रस्य वाणिज्ये प्रसक्ते पूर्वोक्तानां फलोपलादीनां विक्रये न दोषः ॥

लवणं मधु तक्रं च तैलं दधि घृतं पयः ।
न दुष्येच्छूद्रजातीनां कुर्यात्सर्वेषु विक्रयम् ॥

इति बृहत्पराशरोक्तेः । कश्चिद्विशेषमाह स एव—

विक्रीणन्मद्यमांसानि ह्यभक्ष्यस्य च भक्षणम् ।
कुर्वन्नगम्यागमनं शूद्रः पतति तत्क्षणात् ॥
कपिलाक्षीरपानेन ब्राह्मणीगमनेन च ।
वेदाक्षरविचारेण शूद्रश्चाण्डालतां व्रजेत् ॥ इति ।

एवं च मद्यमांसातिरिक्तं विक्रेयमिति । पुराणादिश्रवणे शूद्रस्याधिकारो नाध्ययने । तथा च भारते—

स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा ।
तेन भारतमाख्यानं मुनिना कृपया कृतम् ।
श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः ॥ इति ।

शूद्रं प्रति विशेषमाहाङ्गिराः—

तस्माच्छूद्रं समासाद्य सदा धर्मपथे स्थितम् ।
प्रायश्चित्तं प्रदातव्यं जपहोमविवर्जितम् ॥ इति ।

स्वयंकर्तृकयोर्जपहोमयोर्निषेधः । अतो ब्राह्मणेन जपे होमे वा कारिते न दोषः । तदुक्तं धर्मविवृतौ[1]—

उपवासो व्रतं होमस्तीर्थस्नानजपादिकम् ।
विप्रैः संपादितं यस्य संपन्नं तस्य तत्फलम् ॥ इति ।

---

१ धर्मप्रकाशे इति ङ. पाठः ।

शूद्रस्य पञ्चगव्याशनमाह पराशरः—

शूद्रस्य पञ्चगव्याशनम्।

स्त्रीशूद्रस्य विशुद्ध्यर्थं प्राजापत्यं समाचरेत्।
पञ्चगव्यं तु कुर्वीत स्नात्वा पीत्वा शुचिर्भवेत्॥ इति।

यत्त्वत्रिणोक्तम्—

पञ्चगव्यं पिबेच्छूद्रो ब्राह्मणस्तु सुरां पिबेत्।
उभौ तौ पापकर्माणौ पूयाख्ये नरके वसेत्॥ इति।

तद्विकल्पार्थमिति केचित्। प्रायश्चित्ताङ्गं पञ्चगव्यं प्राश्यमनङ्गं तु नेति व्यवस्थेति धर्मप्रकाशे। युक्तं तु—कलौ पाराशरी स्मृतिरित्यनेनान्यस्मृतिविरोधे कलौ पराशरस्मृतिर्बलीयसीत्युच्यते। अतः कलौ प्राशनमेव। युगान्तरे तु विकल्प इति। शूद्रस्य सर्वसंस्कारप्राप्तौ केषांचिद्बाधः। तत्र गर्भाधानप्रभृत्यन्नप्राशनान्ताः संस्काराः शूद्रस्य भवन्ति। यत्तु—ब्राह्मणक्षत्रियवैश्यानां गर्भाधानसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचूडोपनयनव्रतचर्याध्ययनसमावर्तनविवाहयज्ञदानानि समानानि इति-सुमन्तुवाक्यम्। तत्रयाणां मन्त्रवत्संस्कारपरं न शूद्रपरिसंख्यार्थम्। तथासति तस्य विवाहाप्रसक्तेः। चूडाकरणं तु—

चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः।

इति मनुवचने द्विजातिग्रहणात् शूद्रस्य नेति मेधातिथिः। अपरार्कस्तु चूडाकरणं मन्त्रसहितं न भवतीत्याह। वसिष्ठस्तु स्पष्टं विकल्पमाह—'परिचर्या तु शूद्रस्यानियतः केशवेशः' इति। अस्यार्थो धर्मप्रकाशे—केशवेश एका शिखा सोऽनियतो वैकल्पिकः। तस्माच्छिखामात्रधारणं मुण्डनं वेत्यर्थ इति। उपनयनं त्वध्ययनाभावान्नास्ति। मनुरपि—'चतुर्थ एकजातिस्तु' इति। एकैव जातिर्जननं यस्येत्यर्थः। शूद्रस्य पञ्चमहायज्ञमन्त्रमाह याज्ञवल्क्यः—

नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्। इति।

स्वाहास्थाने नमःशब्दः प्रयोक्तव्य इत्यर्थः। देवताभ्यः पितृभ्यश्चेति वा नमस्कारमन्त्र इति विज्ञानेश्वरः।

शूद्रस्य पञ्चमहायज्ञाः।

भारते तु—

स्वाहाकारो नमस्कारो मन्त्रः शूद्रे विधीयते।

इति स्वाहाशब्दस्यापि विधानाद्विकल्पः। अत्र च 'शूद्रा वाजसनेयिनः' इति वसिष्ठवाक्याद्यानि तेषां कर्माणि तानि कातीयसूत्रानुसारेण कार्या-

णीति । वैश्वदेवादौ लौकिकाग्निर्ज्ञेयः । तथा शूद्रस्याऽऽगमोक्ता दीक्षा पूजा च भवति । वराहपुराणे त्रैवर्णिकानां दीक्षाविधिमुक्त्वा—

शूद्रस्यापि प्रवक्ष्यामि मद्भक्तस्य वराङ्गने ।
यां तु दीक्षां समासाद्य मुच्यते सर्वकिल्बिषैः ॥

इत्युक्तत्वात् । सूतसंहितायामपि त्रैवर्णिकाना मन्त्रपूजाद्युक्त्वा संन्यासिना प्रणवेन पूजामुक्त्वा—

नमोन्तेन शिवेनैव स्त्रीणां पूजा विधीयते ।
शिवमन्त्रेण शूद्राणामेवं पूजा प्रकीर्तिता ॥ इत्युक्तम् ।

तत्रैव—शूद्रः कर्मरतस्तेन स्पृश्यमानो द्विजन्मनाम् ।
हृष्यास्यहं च सुतरां पूज्यमानश्च सुन्दरि ॥
वर्णत्रयस्य शुश्रूषां शुचिः शूद्रः करोति यः ।
स्वधर्मस्य स्थितिं ज्ञात्वा तस्य गृह्णाम्यहं बलिम् ॥ इति ।

भविष्यत्पुराणे—

ब्राह्मणं क्षत्रियं वैश्यं कुलीनं शूद्रमेव तु ।
पुरुषं वा स्त्रियं वाऽपि दीक्षयेत्सूर्यमण्डले ॥

आराध्यदेवता सूर्यमण्डले त्वया ध्येया पूज्या वेत्युपदिश्य दीक्षयेदित्यर्थः ।
वराहपुराणे—

ब्राह्मणक्षत्रियविशां पञ्चरात्रं विधीयते ।
शूद्रादीना च तच्छ्रोत्रपदवीमुपयास्यति ॥

इति पञ्चरात्रश्रवणविधानाच्च सौरवैष्णवशैवशाक्तवैनायकमन्त्रेष्वधिकारः सिद्धः । यत्तु पूर्वं सूतसंहितायां पूजनं स्पर्शनं चोक्तं तत्स्वकृतपार्थिवादिविषयम् ।

यश्च—केशवं वा शिवं वाऽपि स्पृष्ट्वा नरकमश्नुते ।

इति निषेधः सोन्यस्थापितपरः स्थावरपरो वा । दीक्षितानां स्थावरेष्वपि ब्राह्मणद्वारा पूजा भवतीति । स्थावरे स्फाटिके । विशेषस्त्वाचारमयूखे वक्ष्यते । तथा शूद्रस्य ज्ञानेऽधिकारो महाभारते—

प्राप्य ज्ञानं ब्राह्मणात्क्षत्रियाद्वा
वैश्याः शूद्रा अपि नीचा अभीक्ष्णम् ।
श्रद्धातव्यं श्रद्दधानेन नित्यं
न श्रद्धालुं जन्ममृत्यू विशेताम् ॥ इति ।

यत्तूत्तरमीमांसायामपशूद्राधिकरणे शूद्रस्य ब्रह्मविद्यानधिकार उक्तः

स त्रैवर्णिकादिवदुपनिषच्छ्रवणादिना न भवतीत्येवंपरः । पुराणादिश्रवणेन तु ब्रह्मज्ञानं केन वार्येत । तेन 'सर्वं ब्रह्मण उत्पन्नं ब्रह्मण्यध्यस्तं मिथ्या ब्रह्मैव सत्यम्' इत्येवंरूपेण निदिध्यासनेन ज्ञानं संपादनीयम् । अत एव गीतायाम्—

मामुपाश्रित्य कौन्तेय येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ।। इत्युक्तम्

तथा शूद्रेण क्रियमाणे श्राद्धे ब्राह्मणेन मन्त्राः पठनीयाः ।

अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते ।। इति वाराहोक्तेः ।

यत्तु मात्स्ये—

शूद्रोऽप्यमन्त्रवत्कुर्यादनेन विधिना ततः ।। इति ।

तत्स्वयं मन्त्रप्रयोगो न कर्तव्य इत्येवंपरम् । सर्वश्राद्धानि चाऽऽमेन भवन्ति 'शूद्रः कुर्यात्सदैव हि' इत्युक्तेः । यत्तु वाराहे श्राद्धं प्रकृत्य—

त्रिषु वर्णेषु कर्तव्यं पाकभोजनमेव तु ।
शुश्रूषामभिपन्नानां शूद्राणां च वरानने ।।

इति पाकश्राद्धमुक्तं तच्छूद्रायां द्विजोत्पन्नविषयमिति केचित् । युक्तं तु–तस्मिञ्छूद्रत्वाभावात् 'शूद्राश्च पाककर्तारः' इत्यापस्तम्बोक्तपाककर्तृगोपालादिसच्छूद्रपरमिति । तच्च कलियुगातिरिक्तयुगविषयमिति वक्ष्यते । यत्तु भविष्यत्पुराणे—

आवाहनादि कर्तव्यं यथा शूद्रेण तच्छृणु ।
देवानां देवनाम्ना तु पितॄणां नामगोत्रतः ।।
पिण्डांश्च निर्वपेद्वीर नामतो गोत्रतस्तथा ।।

इति शूद्राणां गोत्रमुक्तं तत्र केचिद्वदन्ति—'तस्मादाहुः सर्वाः प्रजाः काश्यप्यः' इति सामान्यदर्शनात्सर्वशूद्राणां काश्यपं गोत्रम् । तस्य च श्राद्ध एवोत्कीर्तनं नान्यत्र 'यावद्वचनं वाचनिकम्' इति न्यायात् । अन्यथा सर्वशूद्राणामेकगोत्रत्वादविवाहः प्रसज्येतेति । अन्ये तु मुख्यशूद्रस्य सप्तर्ष्यन्यतमापत्यत्वाभावाच्छूद्रायामुत्पन्नः पारसवो गृह्यत इत्याहुः । युक्तं तु ब्राह्मणेनोत्पादितः पारसवस्तेन शूद्रोढा तदुत्पन्नेन पुनः शूद्रोढेत्येवं सप्तमे शूद्रो भवति । तस्य परंपरया सप्तर्ष्यन्यतमापत्यत्वेन गोत्रसत्वात्तत्परमेवेति । अन्ये शूद्रधर्मा आशौचादयस्तत्र तत्र वक्ष्यन्ते शान्तिकादावप्यधिकारः शान्तिमयूखे स्थापयिष्यते । अन्ये च—

१ आमश्राद्धं प्रकृत्येति शेषः ।

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।
दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम्॥
इति साधारणधर्मा अपि ज्ञेयाः। इति शूद्रधर्माः।

---

## आश्रमधर्माः

अथाश्रमधर्माः। तत्र ब्रह्मचारिधर्मा उक्ताः। गृहस्थो द्विविध उक्तो देवलेन—'द्विविधो गृहस्थो यायावरः शालीनश्च। तयोर्यायावरः प्रवरो याजनाध्यापनप्रतिग्रहवर्जनादिति। तस्य जीवनोपायमाह याज्ञवल्क्यः—'जीवेद्वापि शिलोञ्छेन' इति। गृहीतधान्ये क्षेत्रे पतितमञ्जरीग्रहणं शिलम्। एकैककणग्रहणमुञ्छम्। धान्यस्य संचय उक्तस्तेनैव—

कुशूलकुम्भीधान्यो वा त्र्याहिकोऽश्वस्तनोऽपि वा। इति।

स्वकुटुम्बपोषणपरिमितं द्वादशदिनपर्याप्तमन्नं यः संगृह्णाति स कुशूलधान्यः। षड्दिनपर्याप्तसंग्रहीता कुम्भीधान्यः त्र्याहिकाऽश्वस्तनौ स्पष्टौ। एषां मध्ये परः परः श्रेष्ठः। शालीनमाह देवलः—'षट्कर्माधिष्ठितः प्रेष्यचतुष्पदगृहग्रामधनधान्ययुक्तो लोकानुवर्त्ती शालीनः' इति। स चतुर्विधः। यथोक्तं मनुना—

षट्कर्मैको भवत्येषां त्रिभिरन्यः प्रवर्तते।
द्वाभ्यामन्यश्चतुर्थस्तु ब्रह्मसत्रेण जीवति॥ इति।

अस्यार्थः—कश्चिद्याजनाध्यापनप्रतिग्रहकृषिवाणिज्यपाशुपाल्यैः षड्भिर्जीवति। अन्यस्त्रिभिः प्रतिग्रहाध्यापनयाजनैः। तृतीयो द्वाभ्यां याजनाध्यापनाभ्यां चतुर्थस्त्वध्यापनेनैवेति। एतेष्वपि परः परः श्रेष्ठः। अन्ये गृहस्थधर्मा उक्ता वक्ष्यन्ते च॥

इति गृहस्थधर्माः।

---

तृतीयाश्रममाह याज्ञवल्क्यः—

सुतविन्यस्तपत्नीकस्तया वाऽनुगतो वनम्।
वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत्॥ इति।

भार्यायां तिष्ठन्त्यामपि ब्रह्मचारी। तत्कालमाह मनुः—

गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः।
अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत्॥ इति।

सुतनिक्षेपादि पत्न्यां विद्यमानायाम । तत्र कृत्यमाह मनुः—

तृतीयाश्रमः

वैतानिकं च जुहुयादग्निहोत्रं यथाविधि ॥
दर्शमस्कन्दयन्पर्व पूर्णमासं च योगतः । इति ।

याज्ञवल्क्यः—अफालकृष्टेनाग्नींश्च पितॄन्देवातिथींनपि ॥
भृत्यांश्च तर्पयेच्छ्मश्रुजटालोमभृदात्मवान् ।

मनुः—संत्यज्य ग्राम्यमाहारं सर्वं चैव परिच्छदम् । इति ।

अत्र संचयमाह याज्ञवल्क्यः—

अह्नो मासस्य पण्णां वा तथा संवत्सरस्य वा ।
अर्थस्य संचयं कुर्यात्कृतमाश्वयुजे त्यजेत् ॥
दान्तस्त्रिपवणस्नायी निवृत्तश्च प्रतिग्रहात् ।
स्वाध्यायवान्दानशीलः सर्वसत्वहिते रतः ॥
दन्तोलूखलिकः कालपक्काशी वाऽश्मकुट्टकः ।
श्रौतं स्मार्तं फलस्नेहैः कर्म कुर्यात्क्रियास्तथा ॥

वितुषीकरणसाधनं दन्ता एवेत्यर्थः । कालेन पक्कमश्नातीति कालपक्काशी । फलमिङ्गुदादि तस्य स्नेहैः । कर्म श्रौतादि । क्रियाः व्रतार्चनादयः । तथा—

चान्द्रायणैर्नयेत्कालं कृच्छ्रैर्वा वर्तयेत्सदा ।
पक्षे गते वाऽप्यश्नीयान्मासे वाऽहनि वा गते ॥
स्वप्याद्भूमौ शुची रात्रौ दिवसं प्रपदैर्नयेत् ।
स्थानासनविहारैर्वा योगाभ्यासेन वा तथा ॥

रात्राविति दिवसव्यावृत्त्यर्थम् । प्रपदैरटनैः ।

ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः ॥

पञ्चाग्निप्रकारश्च चतुर्दिक्षु चत्वारोऽग्नयः एकः सूर्य इति पञ्च । अन्यत्र द्वादशाग्निप्रकारोऽपि । तद्यथा—स्वस्य परित एकादशाग्न्यायतनान्येकः सूर्यश्चेति । स्थण्डिलेशय इति आवरणरहिते देशे स्थेयमित्यर्थः । शयनमुपलक्षणम् । तेनोपवेशनाद्यपि ग्राह्यम् ।

आर्द्रवासास्तु हेमन्ते शक्त्या वाऽपि तपश्चरेत् ।
कण्टकैर्यश्च तुदति चन्दनैर्यश्च लिम्पति ॥
अक्रुद्धोऽपरितुष्टश्च समस्तस्य च तस्य च ।

१ शक्तितः पाठः । २ दिवा संप्रपदैरिति ङ. पाठः ।

पूर्वं वन्याहारतोक्ता । इदानीं ग्रामादाहृत्याप्याहारं कुर्यादित्याह स एव—

ग्रामादाहृत्य वा ग्रासानष्टौ भुञ्जीत वाग्यतः ।
वायुभक्षः प्रागुदीचीं गच्छेद्वाऽऽवर्ष्मसङ्क्षयात् ॥ इति ।

प्रागुदीची ऐशानी । इति वानप्रस्थधर्माः ।

## संन्यासः ।

संन्यासमाह याज्ञवल्क्यः—

वनाद्गृहाद्वा कृत्वेष्टिं सार्ववेदसदक्षिणाम् ।
प्राजापत्यां तदन्ते तानग्नीनारोप्य चात्मनि ॥
अधीतवेदो जपकृत्पुत्रवानन्नदोऽग्निमान् ।
शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा ॥ इति ।

अद्यारोपादि गृहात्संन्यासे । वैराग्यं चाधिकारिविशेषणम् । 'यदह-रेव विरजेत्तदहरेव प्रव्रजेत्' इतिश्रुतेः । याज्ञवल्क्यः—

अवेक्ष्या गर्भवासाश्च कर्मजा गतयस्तथा ।
आधयो व्याधयः क्लेशा जरा रूपविपर्ययः ॥
भवो जातिसहस्रेषु प्रियाप्रियविपर्ययः । इति ।

एतद्विचारे क्रियमाणे वैराग्यं भवतीति । अस्य चातुर्विध्यमाहात्रिः—

चतुर्विधो भिक्षुकः स्यात्कुटीचरबहूदकौ ।
हंसः परमहंसश्च यो यः पश्चात्स उत्तमः ॥

क्वचित्कुटीचक इति पाठः । तत्राद्ययोर्द्वयोः शिखासूत्रधारणं पुत्रदत्तान्नभोजनं भवति। परंतु सर्वव्यासङ्गान्विहायाध्यात्मविद्याऽभ्यसनीया । हंसस्तु पुत्रादीना त्यागं कृत्वा वनादौ वसेत् । शिखासूत्रे वैकल्पिके । परमहंसो मुण्डः सूत्ररहितश्च । सर्वेषां ब्रह्मविद्याभ्यासस्तुल्यः । अस्माभिस्तु प्रायशः परमहंसधर्मा एवोच्यन्ते त उक्ताः श्रुतौ—सोऽथ परिव्राडेकशाटी-परिहितो मुण्डो दारुपात्रोऽरण्यनित्यो भिक्षार्थं ग्रामं प्रविशेदासायं प्रदक्षि-णेनाऽविचिकित्सन्सार्ववर्णभैक्षचर्यमभिशस्तपतितवर्जमयज्ञोपवीती शौच-निष्ठः काममेकं वैणवं दण्डमाददीत' इति। 'सार्ववर्णमापदि' तत्र शूद्रादाम-ग्रहणम्। काममिति वैकल्पिकदण्डग्रहणम् । परमहंसस्यायमेक एव दण्डः। त्रिदण्डादिकं हंसादीनाम् । अत एव परमहंससंन्यासग्रहणे तेषां त्याग उक्तः। अत ऊर्ध्वं यज्ञोपवीतमासनं शिखां यष्टयः शिक्यमित्येतानि वर्जे-

यित्वाऽथ दण्डमादत्ते 'सखा मां गोपायति' इति । संन्यासश्च ज्ञानप्रतिबन्धकदुरितनाशद्वारा ज्ञानसाधनमिति स्थितमुत्तरमीमांसायाम् । क्वचिज्जन्मान्तरीयः संन्यासोऽन्यजन्मन्युपयुज्यते । तथाच श्रूयते—'यद्यातुरः स्यान्मनसा वाचा वा संन्यसेत्' इति । अयं च संन्यासो न पूर्वसंन्यासापेक्षया कर्मान्तरम् । पूर्वस्योपस्थितत्वाद्गौरवात्प्रमाणाभावाच्च । अतः पूर्वोत्पन्नस्य संन्यासस्य यदि 'ब्राह्मणो यजेत' इत्यादिवदातुरकर्तृकप्रयोगान्तरं विधीयते तत्रापि वैराग्यमपेक्षितमेव । न चातुरस्य वैराग्यसत्त्वे 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इत्यनेनैव प्राप्तेरनर्थकं पुनर्विधानमिति वाच्यम् । संन्यासस्य काम्यत्वेन सर्वाङ्गोपसंहारासमर्थमातुरं प्रत्यप्राप्तेः । अतोऽर्थवद्वचनमिति । विस्तरस्तु दुर्गमत्वभिया नेह प्रतन्यते । अङ्गिरा अपि—

अन्धः पङ्गुर्दरिद्रो वा विरक्तः संन्यसेद्द्विजः ।
सर्वेषामेव वैराग्यं संन्यासे तु विधीयते ।। इति ।

सुमन्तुः—आतुराणां च संन्यासे न विधिर्नैव च क्रिया ।
प्रैषमात्रं समुच्चार्य संन्यासं तत्र कारयेत् ।। इति ।

तत्र संन्यासाङ्गभूतं श्राद्धं श्राद्धमयूखे वक्ष्यते ।

गोभिलः—ततः समाचरेत्स्नानं हेमरूप्यकुशाम्भसा ।
कृत्वा तु वपनं विद्वान्भवेन्मुण्डोऽथवा शिखी ।।

बह्वृचगृह्यपरिशिष्टे—'अथ पुत्रान्सुहृदो बन्धून्प्रत्याह न मे कश्चिन्नाहं कस्यचित्' इति । ततः 'पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थितोऽहम्' इति अपः पाणिना हुत्वा शिखार्थं रक्षितान्केशानुत्पाट्याथ यज्ञोपवीतं भूमावप्सु वा निक्षिपेत् । ततः प्राङ्मुखस्तिष्ठन्नूर्ध्वबाहुर्ब्रूयात् 'संन्यस्तं मया' इति त्रिः ।। 'अभयं सर्वभूतेभ्यो मत्तः' इति उदकपूर्णमञ्जलिं निनयेत् ।

---

## यतिनामानि ।

अथ नामानि—तीर्थाश्रमवनारण्यगिरिपर्वतसागराः ।
सरस्वती भारती च पुरी नाम यतेर्दश ।। इति ।

ततो गुरुरद्वैतब्रह्मोपदेशं कुर्यात् । ततो नग्न उदीचीं दिशं गच्छेत् । यदि विविदिषुस्ततः श्रवणाद्यर्थं गुरुसमीपमागच्छेत् । उक्तं च—'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इति । ततः कौपीनं कटिसूत्रं चोपाददीत । अत्रिर्विशेषमाह—

कौपीनाच्छादनं वासः कन्था शीतनिवारिणी ।
पादुके चापि गृह्णीयात्कुर्यान्नान्यस्य संग्रहम् ।। इति ।

गुरोश्च सेवा कायवाङ्मनोभिः कार्या । एवंसंन्यस्तस्य धर्मानाह पराशरः—

एकाकी निस्पृहस्तिष्ठेन्न केनापि सहालपेत् ।
दद्यान्नारायणेत्येवं प्रतिवाक्यं सदा यतिः ।।

दक्षः—एको भिक्षुर्यथोक्तस्तु द्वावेव मिथुनं स्मृतम् ।
त्रयो ग्रामः समाख्यात ऊर्ध्वं तु नगरं स्मृतम् ।। इति ।

याज्ञवल्क्यः—

अप्रमत्तश्चरेद्भैक्षं सायाह्ने नाभिलक्षितः ।
रहिते भिक्षुकैर्ग्रामे यात्रामात्रमलोलुपः ।।

यात्रामात्रं कुर्यात् प्राणयात्रां, अतितृष्णया न भुञ्जीतेत्यर्थः ।

वसिष्ठः—' सप्तागाराण्यसंकल्पितानि चरेद्भैक्षमेकवारम् ' इति ।

तत्कालमाह मनुः—

विधूमे सन्नमुशले व्यङ्गारे भुक्तवज्जने ।
वृत्ते शरावसंपाते नित्यं भिक्षां यतिश्चरेत् ।। इति ।

तथाष्टौ मासान् कार[1](?)वत्परिचरेत् । चतुरो वार्षिकान्मासानेकत्र तिष्ठेत् इति । चत्वारः श्रावणादिकार्तिकान्ताः । तत्र च मासचतुष्टयपर्यन्तं केशनखादिधारणम् । अन्यत्र तु ' ऋतुसन्धिषु वापयेत् ' । इति मासद्वयोत्तरम् । केचित्तत्रापि पक्षा वै मासा इति लिङ्गदर्शनान्मासमात्रमेवानुतिष्ठन्ति ।

---

## यतिपात्राणि ।

पात्राण्याह याज्ञवल्क्यः—

यतिपात्राणि मृद्वेणुदार्वलाबुमयानि च ।
सलिलैः शुद्धिरेतेषां गोवालैश्चावघर्षणम् ।। इति ।

यतेस्ताम्बूलं निषिद्धं वायुपुराणे—

द्वावेतौ समवीर्यौ तु सुराताम्बूलमेव च ।
तस्मात्सर्वप्रयत्नेन ताम्बूलं वर्जयेद्यतिः ।।

तथा सर्वदा प्रणवजपपूर्वं ब्रह्मानुध्यानरतो भवेत् । गयायां यतेर्विशेषः—

---

१ कीटवदिति पाठान्तरम् ।

गयायां मुण्डपृष्ठे च कूपे यूपे वटे तथा ।
दण्डं प्रदर्शयेद्भिक्षुः पितृभिः सह मुच्यते ॥

प्रदर्शयेत्स्पर्शयेत् । एवं संन्यासपूर्वकं जातस्य ज्ञानस्यफलमुक्तं श्रुतौ—
' ब्रह्मसंस्थोऽमृतत्वमेति ' इति । जाबालश्रुतौ—

शतं कुलानां पुरतो बभूव तथा पराणां त्रिशतं समग्रम् ।
एते भवन्ति सुकृतस्य लोके येषां कुले संन्यसतीह विप्रः ॥ इति ।

यतिमरणे विशेषः—

सर्वसङ्गनिवृत्तस्य ध्यानयोगपरस्य च ।
न तस्य दहनं कार्यं नाशौचं नोदकक्रिया ॥
निदध्यात्प्रणवेनैव ध्यायन् भिक्षोः कलेवरम् ।
प्रोक्षणं खननं चैव सर्वं तेनैव कारयेत् ॥ इति ।

एते च संक्षेपेणोक्ता यति धर्माः । विस्तरस्तु विश्वेश्वरनिबन्धादौ द्रष्टव्यः ।

इति श्रीसैमरवंशावतंसमहाराजाधिराजश्रीभगवन्तदेवादिष्टश्रीजगद्गुरुभट्टनारायण-
सूरिसूनुपण्डितशिरोरत्नमीमांसापारावारपारीणधुरीणभट्टशंकरात्मज-
भट्टनीलकण्ठात्मजभट्टशङ्करकृतौ संस्कारभास्करः समाप्तः ।

---

## कातीयसूत्रानुसारिप्रयोगाः ।

अथ पूर्वोद्दिष्टानां संस्काराणां कातीयसूत्रानुसारेण प्रयोगा लिख्यन्ते ।
तत्र परिभाषासूत्रम् । ' अथातो गृह्यस्थालीपाकानां कर्म परिसमुह्योपलि-
प्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य प्रणी-
य परिस्तीर्यार्थवदासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्यार्थवत्प्रोक्ष्य निरु-
प्याज्यमधिश्रित्य पर्यग्नि कुर्यात् । स्रुवं प्रतप्य संमृज्याभ्युक्ष्य पुनः प्रतप्य
निदध्यादाज्यमुद्वास्योत्पूयावेक्ष्य प्रोक्षणीश्च पूर्ववदुपयमनान् कुशानादाय
समिधोऽभ्याधाय पर्युक्ष्य जुहुयादेष एव विधिर्यत्र क्वचिद्धोमः ' इति ।
ब्रह्मासने ब्रह्मोपवेशनीयः ।

### अथ सर्वत्रोपयुक्तः स्थालीपाकप्रयोगः ।

तत्र प्रथमारम्भे पुण्याहमातृपूजाभ्युदयिकानि कृत्वा देशकालौ
स्मृत्वा अमुकस्थालीपाकेन यक्ष्ये ' इति संकल्प्य ' अमुककर्मणि
कृताकृतप्रत्यवेक्षणार्थं ब्रह्माणं त्वां वृणे ' इति ब्रह्माणं वृत्वा शुद्धायां भूमौ
दर्भैस्त्रिः परिसमुह्योपलिप्य स्फ्येनोल्लिख्यानामिकाङ्गुष्ठेनोद्धृत्याद्भिरभ्यु-
क्ष्याग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य तत्र ब्रह्माणमुपवेश्य

प्रणीताः प्रणयेत् । तद्यथा—वामहस्ते वारुणं चमसमादाय दक्षिणेन जलं संपूर्याग्नेरुत्तरतो निधाय जलं स्पृष्ट्वाऽग्नेरीशान्यां स्थापयेत् । ततः प्रागग्रैः कुशैः परिस्तरणम् । तत उत्तरतोऽग्नेरर्थवतां पात्राणामासादनम् । तद्यथा । पवित्रच्छेदनकुशाः पवित्रे द्वे प्रोक्षणीपात्रमाज्यस्थाली चरुस्थाली संमार्गकुशा उपयमनकुशाः समिधस्तिस्रः प्रादेशमात्र्यः खादिरः स्रुवः आज्यं तण्डुलाः पूर्णपात्रं चेत्येतान्यासादयेत् । ततस्त्रिभिः कुशैः कुश-द्वयं छित्त्वा प्रादेशमात्रं स्थापयेत् । ततः प्रोक्षणीपात्रे प्रणीतोदकमासिच्य पवित्राभ्यामुत्पवनम् । तदेव पात्रं सव्यहस्ते निधाय सव्यहस्तस्थितस्यैव दक्षिणेनोद्दिङ्गनम् । ततो भूमौ निधाय प्रणीतोदकेन प्रोक्षेत् । तत आ-सादितानामेकैकस्य प्रोक्षणं प्रोक्षण्युदकेन । ततः प्रणीताग्न्योर्मध्ये प्रोक्ष-णीपात्रस्य निधानम् । तत आज्यस्थाल्यामाज्यनिर्वापः । चरुस्थाल्यां तण्डुलप्रक्षेपः । त्रिः प्रक्षालनम् । आज्याधिश्रयणम् । आज्यादुत्तरतश्च-रोरधिश्रयणम् । उभयोः पर्यग्निकरणम् । उदकोपस्पर्शनम् । चरुश्रपणं कृत्वाऽर्धशृते चरौ स्रुवप्रतपनं संमार्गकुशैः संमार्जनम् । अग्रैरग्रं मूलैर्मूलं प्रणीतोदकेनाभ्युक्ष्य पुनः प्रतप्य निदधाति । आज्योद्वासनम् । ततश्चरो-रुद्वासनम् । शृतानां तु पूर्वेणोद्वासितानां तु पृष्ठतः । पवित्राभ्यामाज्यो-त्पवनम् । ततोऽवेक्षणम् । तत आज्यमध्ये पतितापद्रव्यनिरसनम् । प्रोक्ष-ण्युत्पवनम् । उपयमनकुशादानम् । ततस्तिष्ठन्समिधोऽभ्याधाय प्रोक्षण्यु-दकेनाग्निं पर्युक्षेत् । पवित्रयोः प्रणीतामध्ये निधानम् । ततो दक्षिणं जान्वाच्य स्रुवेणाज्यमादाय जुहोति 'प्रजापतये स्वाहा' इति पश्चिमत आरभ्य पूर्वपर्यन्तमाघारयेत् । इदं प्रजापतये न मम इति त्यागः । संस्रवं प्रोक्षणीमध्ये स्थापयेत् । एवं सर्वत्र ।। 'इन्द्राय स्वाहा' इति तथैव इदमिन्द्राय न मम इति । एतावाघारौ ।। 'अग्नयेस्वाहा' इति पूर्वो-त्तरतः । 'सोमाय स्वाहा' इति पूर्वदक्षिणतः । एतावाज्यभागौ ।। ततः प्रधानहोमः ।। ततः 'अग्नये स्विष्टकृते स्वाहा' इति स्विष्टकृत् ।। आज्यहोमे स्विष्टकृत् सर्वहोमान्ते भवति ।। ततो व्याहृतिभिराज्यं जुहु-यात् । 'भूःस्वाहा' इदमग्नये । 'भुवःस्वाहा' इदं वायवे । 'स्वःस्वाहा' इदं सूर्याय । 'भूर्भुवःस्वःस्वाहा' इदं प्रजापतये ।। ततः 'त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेडोअवया सिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्स्वाहा' इदमग्नीवरुणाभ्याम् । 'स त्वं नो अग्ने वमो भवोती नेदिष्ठो अस्या

उषसो व्युष्टौ । अत्र यक्ष्वनो वरुण ऽ रराणो वीहिमृडीक ऽ सुहवो न एधि स्वाहा ' इदमग्नीवरुणाभ्यां न मम । ' अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्वमया असि । अयानो यज्ञं वहास्ययानो धेहि भेषजं स्वाहा ' इदमग्नये अयसे । ' ये ते शतं वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ' इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यो न मम । 'उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यम ऽ श्रथाय । अथावयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा' इदं वरुणायादित्यायादितये । ' प्रजापतये स्वाहा ' इदं प्रजापतये । एता आज्याहुतीर्ब्रह्मणाऽन्वारब्धो जुहोति ॥ ततः संस्रवप्राशनम् । पवित्रे अग्नौ प्रहरति । ब्रह्मणे पूर्णपात्रं दक्षिणा । प्रणीताविमोकः । उपयमनस्याग्नौ प्रक्षेपः । यत्र ब्राह्मणभोजनमाम्नातं तत्र तत्कुर्यात् । इति सकलस्थालीपाकेतिकर्तव्यता । आज्यहोमे चरुसंबद्धपदार्थनिवृत्तिः । अन्यत्समानम् ॥

## पुंसवनम् ।

अथपुंसवनम् । गर्भाधानोत्तरं द्वितीये तृतीये वा मासि पूर्वोक्तकाले कर्ता शुचिर्गर्भिणीमुपवासं कारयित्वा स्नापयित्वाऽहते वाससी परिधाप्य कालाद्युल्लिख्य ' अस्य गर्भस्य बीजगर्भसमुद्भवैनोनिबर्हणार्थं पुंसवनं करिष्ये ' इति संकल्प्य पुण्याहमातृपूजाभ्युदयिकानि कृत्वा न्यग्रोधाऽवरोहाग्रपल्लवानुदकेन पिष्ट्वा ' हिरण्यगर्भोऽद्भ्यः संभृत—' इति द्वाभ्यामृग्भ्यां पत्न्या नासिकादक्षिणपुटे आसिञ्चेत । अत्र यदि मे वीर्यवान् पुत्रो भवत्विति कामना तत उदकपूर्णं शरावं बध्वा उपस्थे स्थापयित्वा ' सुपर्णोऽसि ' इति विकृतिच्छन्दस्कया ' स्वःपत ' इत्यन्तया गर्भाशयं स्पृष्ट्वा अभिमन्त्रयेत् ॥ इति पुंसवनम् ॥

## सीमन्तोन्नयनम् ।

अथ सीमन्तोन्नयनम् । कर्ता शुचिर्दर्भपाणिर्देशकालौ स्मृत्वा ' बीजगर्भसमुद्भवैनोनिबर्हणार्थं परमेश्वरप्रीत्यर्थं सीमन्तोन्नयनं करिष्ये ' इति संकल्प्य पुण्याहवाचनमातृपूजाभ्युदयिकानि कृत्वा पञ्च भूसंस्कारान्कृत्वा लौकिकाग्निमुपसमाधायाऽऽज्यभागान्तं कृत्वा तिलमुद्गमिश्रेण चरुणा ' प्रजापतये स्वाहा ' इति जुहुयात । इदं प्रजापतये इति त्यागः

तत उत्तरार्धात्स्विष्टकृतं हुत्वा व्याहृत्यादिनवाहुतीर्हुत्वा संस्रवं प्राश्य ब्रह्मणे पूर्णपात्रं वरं वा दत्त्वाऽग्नेः पश्चात्कोमलासने भद्रपीठाख्ये गर्भिणीं स्नातामहतवस्त्रामुपवेश्य औदुम्बरेण युग्मफलवताऽपक्वस्तबकेन अश्वत्थ-शङ्कुना त्रिभिश्च दर्भपिञ्जूलैस्त्रेण्या शलल्या सूत्रकर्तनार्थया च सूच्या इत्येतैरेकीकृतैस्ततः सीमन्तं विनयति 'भूर्भुवःस्वर्विनयामि' इति मन्त्रेण । यद्वा 'भूर्विनयामि भुवर्विनयामि स्वर्विनयामि' इति त्रिभिर्मन्त्रैस्त्रिर्वि-नयति । ततस्तत्सर्वं वेण्यां बध्नाति । 'अयमूर्जावतो वृक्ष उर्जीव फलितो भव' इति मन्त्रेण । ततो वीणागाथिनौ प्रति 'राजानं संगायेताम्' इति प्रैषं ददाति । यद्वा 'सोमं राजानं संगायेताम्' इति प्रैषः । तौ च प्रेषितौ 'सोम एव नो राजेमा मानुषीः प्रजाः । अविमुक्तचक्र आसीरं-स्तीरे तुभ्यमसौ' इति गाथां गायतः असौस्थाने समीपावस्थिताया गङ्गा-प्रमुख्या नद्या नाम गृह्णाति स्त्री ॥ इति सीमन्तः ॥

## सोष्यन्तीकर्म ।

अथ सोष्यन्तीं कर्ता शुचिः प्रसूतिशूलवतीं स्त्रियं 'एजतु दशमास्यः' इत्यृचा 'अस्रज्जरायुणा सह' इत्यन्तयाऽद्भिरभ्युक्षति । ततः स्त्रीसमीपे 'अवैतु पृश्निशेवलꣳ शुने जराय्वत्तवे । नैव माꣳसेन पीवरीं न कस्मिंश्च नायतनमवजरायु पद्यताम्' इति मन्त्रं जपेत् ॥

## जातकर्म ।

अथ कुमारे जाते नालच्छेदात्पूर्वं स्नात्वा पुण्याहवाचनवृद्धिश्राद्धादि कृत्वा 'जातकर्म करिष्ये' इति संकल्प्य मेधाजननायुष्ये कुर्यात् । मेधाजननं यथा । अनामिकया सुवर्णान्तर्हितया मधुघृते मिश्रयित्वा केवलं वा घृतं 'भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवःस्वः सर्वं त्वयि दधामि' इति मन्त्रेण सकृत्प्राशयेत् । आयुष्यं यथा । कुमारस्य नाभिसमीपे कर्णसमीपे वा 'अग्निरायुष्मान्' इत्यष्टौ मन्त्रान् त्रिर्जपेत् । ते यथा । 'अग्निरायुष्मान्त्स वनस्पतिभिरायुष्मांस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि । सोम आयुष्मान्त्स ओषधीभिरायुष्मांस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि । ब्रह्माऽऽयुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि । देवा आ-युष्मन्तस्तेऽमृतेनायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि । ऋषय आयु-ष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि । पितर आयु-ष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि । यज्ञ आयु

ष्मान्स दक्षिणाभिरायुष्मास्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि। समुद्र आयुष्मान्स स्रवन्तीभिरायुष्मास्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि।ततः त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं यद्देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषम्' इति मन्त्रं जपति। यदि पिता कामयेताऽयं कुमारः सर्वमायुरियादिति तदा कुमारमभिमृशेत् 'दिवस्परि–' इत्यनुवाकेन। अथ चतुरो ब्राह्मणान् कुमारस्य चतुर्दिक्षु एकं च मध्ये स्थापयित्वा इममनुप्राणितेति तान् प्रेष्यति। ततः पूर्वादिदिग्वस्थिता ब्राह्मणाः क्रमेणैव कुमारं लक्षीकृत्य चतुरो मन्त्रान्पठन्ति 'प्राणः व्यानः अपान उदानः' मध्यस्थः पञ्चम उपरिष्टादवेक्षमाणो ब्रूयात् 'समानः' इति। ब्राह्मणाभावे स्वयमेव तस्यां दिशि स्थित्वा मन्त्रान्ब्रूयात्। तदा तु प्रैषाभावः। ततो यस्मिन्देशे कुमारो जातस्तं देशं 'वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम्। वेदाहं तन्माता विद्यात्पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतम्' इति मन्त्रेण कुमारमभिमृशति। ततः कुमारस्य मातरम् 'इडाऽसि मैत्रावरुणी वीरे वीरमजीजनथाः। सात्वं वीरवती भव यास्मान्वीरवतोऽकरत्' इति मन्त्रेणाभिमन्त्रयेत्। अथ सूतिकाया दक्षिणं स्तनं प्रक्षाल्य 'इमं स्तनम्' इत्यृचा कुमाराय प्रयच्छति। ततो 'यस्ते स्तनः–' इत्यृचाद्वयेन वामं प्रक्षाल्य प्रयच्छति। ततः कुमारस्य शिरःप्रदेशे जलपूर्णं पात्रम् 'आपो देवेषु जाग्रथ यथा देवेषु जाग्रथ। एवमस्यां सूतिकायां सपुत्रिकायां जाग्रथ' इति मन्त्रेण स्थापयेत्। तदुदपात्रं यावत्सूतिकोत्थानं तावत्तिष्ठेत्। ततः सूतिकागृहद्वारे पूर्वोक्तान्पञ्चभूसंस्कारान्कृत्वाऽग्निं स्थापयेत्। ततः तण्डुलकणमिश्रान्सायं प्रातर्जुहोति। सायमाहुतिद्वयं प्रातश्चेति। तद्यथा—'शण्डामर्का उपवीरः शौण्डिकेय उलूखलः। मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः स्वाहा॥ १॥ आलिखन्ननिमिषः किंवदन्त उपश्रुतिः। हर्यक्षः कुम्भीशत्रुः पात्रपाणिर्नृमणिर्हन्त्रीमुखः सर्षपारुणश्च्यवनो नश्यतादितः स्वाहा॥ २॥ 'इदमग्नये' इत्युभयत्र त्याग इति हरिहरः॥

## नैमित्तिकम्।

अथ नैमित्तिकं यदि कुमारग्रहो बालमभिभवेत्तदा मत्स्यग्रहणजालेनोत्तरीयेण वा तं प्रच्छाद्याङ्के गृहीत्वा वक्ष्यमाणं जपेत्—'कूर्कुरः सकूर्कुरः कूर्कुरो बालबन्धनः। चेचेच्छुनक सृज नमस्ते अस्तु सीसरोलपेतापह्वर तत्सत्यम्। यत्ते देवावरमददुः स त्वं कुमारमेवावृणीथाः। चेचेच्छुनक सृज नमस्ते अस्तु सीसरोलपेतापह्वर तत्सत्यम्॥ यत्ते देवा वरम-

ददुः स त्वं कुमारमेवावृणीथाः । चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर तत्सत्यम् ।। यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ । चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर ' इति ।। ततो न नामयति न रुदति न हृष्यति न ग्लायति । यत्र वयं वदामो यत्र चाऽभिमृशामसि ' इत्यनेन बालमभिमन्त्रयेत् ।। इति जातकर्मादि ।।

---

## नामकरणम् ।

सूतकान्ते सूतिकामुत्थाप्य नामकरणाङ्गतया त्रीन्ब्राह्मणान्भोजयित्वा । शुचिर्देशकालौ स्मृत्वा ' बालस्य बीजगर्भसमुद्भवैनोनाशार्थं नाम करिष्ये ' इति संकल्प्य पुण्याहवाचननान्दीश्राद्धादि कृत्वा नाम कुर्यात् । अत्रायं शिष्टाचारः । पिप्पलपत्रादौ करिष्यमाणनाम लिखित्वा संपूज्य ब्राह्मणानुज्ञातो बालस्य दक्षिणे कर्णे कथयेत् ' चैत्रनामासि ' इति ।।

---

## निष्क्रमणम् ।

अथ निष्क्रमणम् । चतुर्थे मासि शुभे दिने शुचिर्नान्दीश्राद्धं कृत्वा बालकं ' तच्चक्षुः ' इति मन्त्रेण सूर्यं दर्शयति । यदि पिता प्रोषितः पुत्रजन्मोत्तरं गृहे आगच्छति तदा गृहोपस्थानं कुर्यात् । ' गृहा मा विभीत ' इति । ततः पुत्रं दृष्ट्वा ' अङ्गादङ्गात्संभवसि हृदयादधिजायसे । आत्मा वै पुत्र नामाऽसि स जीव शरदः शतम् ' इति जपेत् । ततः 'प्रजापतेष्ट्वा हिंकारेणावजिघ्रामि । सहस्रायुषाऽमुकशर्मन् स जीव शरदः शतम् ' इति मन्त्रेण कुमारस्य मूर्धानं जिघ्रेत् । ततः पुनः ' गवां त्वाहिंकारेणावजिघ्रामि सहस्रायुषाऽमुकशर्मन् जीव शरदः शतम् ' इति मन्त्रेण सकृन्मूर्धानमवजिघ्रति द्विस्तूष्णीम् । ततो बालस्य दक्षिणे कर्णे 'अस्मे प्रयन्धि मघवन्नृजीषिन्निन्द्र रायो विश्ववारस्य भूरेः । अस्मे शतꣳ शरदो जीवसेधा अस्मै वीरान्छश्वत इन्द्र शिप्रिन् ' इति मन्त्रं जपेत् । ततः सव्ये 'इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे । पोषꣳ रयीणामरिष्टिं तनूनाꣳ स्वात्मानं वाचः सुदिनत्वमह्नाम् ' इति जपेत् । कन्यायास्तु मूर्धावघ्राणमात्रं न मन्त्रजपः ।।

---

## अन्नप्राशनम् ।

अथान्नप्राशनम् । पूर्वोक्ते दैवज्ञोदिते मुहूर्ते ' शिशोरस्य बीजगर्भसमुद्भवैनोनिबर्हणार्थमन्नप्राशनमहं करिष्ये ' इति संकल्प्य पुण्याहाद्यभ्युद-

यिकान्तं कृत्वा पञ्चभूसंस्कारचरुश्रपणाद्याज्यभागान्तं पूर्ववत्कुर्यात् । तत्र प्रधानम् । 'देवीं वाचमजयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेष मूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहा' इदं देव्यै वाचे । देवीं वाचमिति मन्त्रं पुनः पठित्वा वाज इत्यमरा त्रिष्टुप् छन्दः अन्नदेवहोमे विनियोगः । 'वाजो नो अद्य प्रसुवाति दानं वाजो देवाꣳ ऋतुभिः कल्पयाति । वाजो हि मा सर्ववीरं जजान विश्वा आशा वाजपतिर्जयेयं स्वाहा' इदं वाचे वाजाय इति त्यागः । इदमाहुतिद्वयमाज्येन । ततः स्थालीपाकेन जुहुयात् । तद्यथा—'प्राणेनान्नमशीय स्वाहा । इदं प्राणाय । अपानेन गन्धानशीय स्वाहा । इदमपानाय । चक्षुषा रूपाण्यशीय स्वाहा । इदं चक्षुषे । श्रोत्रेण यशोऽशीय स्वाहा । इदं श्रोत्राय ॥ एवं चतस्र आहुतीर्हुत्वा स्विष्टकृदादिदक्षिणान्तं समाप्यैकस्मिन्पात्रे सर्वान्रसान्समुद्धृत्य सकृत्तूष्णीं प्राशयेत् 'हन्त' इति मन्त्रेण वा । तत्र काम्यता—तत्र यदि बालस्य वाग्मित्वमिच्छेत्तदा भरद्वाजपक्षिविशेषमांसं प्राशयेत् । यद्यन्नाद्यत्वं तर्हि कपिञ्जलमांसम् । यदि जवत्वं तदा मत्स्यमांसम् । यदि दीर्घायुष्यं तर्हि कृकषामांसम् । कृकषा गृहगोधिका । यदि सर्वाणि तदा सर्वमांसानि प्राशयेत । ततः कर्मसमृद्ध्यर्थं ब्राह्मणभोजनम् ।

इत्यन्नप्राशनम् ॥

## चूडाकरणम् ।

अथ चूडाकरणम् । तत्र कर्तोक्तान्यतमकाले मातृपूजाभ्युदयिके कृत्वा त्रीन्ब्राह्मणान्संभोज्य 'अस्य कुमारस्य बीजगर्भसमुद्भवैनोनिवर्हणबलायुर्वर्चोभिवृद्ध्यर्थं चौलकर्म करिष्ये' इति संकल्प्य शुद्धभूमौ लौकिकाग्निं संस्थाप्य मात्रङ्के कुमारमग्नेः पश्चिमत उपवेश्य ब्रह्मोपवेशनाद्याज्यभागान्तं कृत्वा । शीतोष्णोदके नवनीतघृतदध्यन्यतमं त्रिश्वेतां शलली पृथक् पृथक् निबद्धानि त्रीणि त्रीणि कुशतरुणानि ताम्रपरिष्कृतमायसं क्षुरमानडुहं गोमयं चेत्युपकल्प्य पवित्रकरणादिपर्युक्षणान्तं कृत्वा आघारादिस्विष्टकृदन्तं होमं विधाय संस्रवान्प्राश्य पूर्णपात्रवरयोरन्यतरं ब्रह्मणे दत्त्वा 'उष्णेन वाय उदकेनेह्यदिते केशान्वप' इत्यनेन मन्त्रेण शीतास्वप्सु उष्णा अप आसिच्य नवनीताद्यन्यतमं च तासु प्रक्षिप्य तदुदकमादाय 'सवित्रा प्रसूता दैव्या आप उन्दतु ते तनूं दीर्घायुत्वाय वर्चसे' इत्यनेन मन्त्रेण दक्षिणं शिरःप्रदेशं क्लेदयित्वा त्र्येण्या शलल्या केशान्विनीय 'ओषधे

त्रायस्व' इति मन्त्रेण कुशतरुणान्यन्तर्धाय 'शिवो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मामा हि९ सीः' इत्युपकल्पितक्षुरमादाय कुशतरुणान्तर्हितेषु निर्वर्तयाम्यायुषेन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय' इत्यनेन मन्त्रेण क्षुरमभिनिधाय 'येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान्। तेन ब्रह्माणो वपतेदमस्यायुष्यं जरदष्टिर्यथासत्' इत्यनेन मन्त्रेण सकेशानि कुशतरुणानि प्रच्छिद्यानडुहे गोमयपिण्डे उत्तरतो ध्रियमाणे प्रक्षिप्य एवमेव तूष्णीं वारद्वयं कुर्यात्। एवमेव पश्चिमोत्तरयोः शिरःप्रदेशयोः सकृत्समन्त्रं द्विस्तूष्णीं कुर्यात्। पश्चिमे 'त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् यद्देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषम्' इति छेदनम्। उत्तरतो 'येन भूरिश्चरादिवं ज्योक्च पश्चाद्धि सूर्यम्। तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तये' इति छेदनम्। अन्यदविशिष्टम्। ततो 'यत्क्षुरेण मज्जयता सुपेशसा वप्त्वावावपति केशाञ्छिन्धि शिरो मास्यायुः प्रमोषीः' इत्यन्तेन मन्त्रेण शिरःसमन्तात्प्रदक्षिणं क्षुरं भ्रामयेद्विस्तूष्णीम्। ततस्तेनैवोदकेन समस्तं शिर आप्लाव्याक्षण्वन् परिवप' इत्यनेन मन्त्रेण नापिताय क्षुरं प्रयच्छेत्। ततो नापितः केशान्वपन्यथोक्तं केशशेषकरणं कुर्यात्। अथ सकेशं गोमयपिण्डमुदकादौ प्रक्षिप्याचार्याय वरं दद्यादिति। इयमेवेतिकर्तव्यता केशान्तेऽपि ज्ञेया। इयाँस्तु विशेषः। उष्णोदकासेकमन्त्रे 'उष्णेन वाय उदकेनेह्यदिते केशश्मश्रु' वपनार्थं क्षुरपरिहरणे मुखसहितं शिरः परिहरेत्। मन्त्रे च 'यत्क्षुरेण मज्जयता' इत्यादि 'मास्यायुः प्रमोषीर्मुखम्' इति। स्वाचार्याय च गौर्देयेति॥

---

## उपनयनम्।

अथोपनयनम्। यथोक्तकाले मातृपूजाभ्युदयिके कृत्वा कुमारं वापयित्वा त्रीन्ब्राह्मणान्संभोज्य पञ्चभूसंस्कारान्विधाय लौकिकाग्निं संस्थाप्य कुमारमाचार्यसमीपमानीय तद्दक्षिणतोऽवस्थाप्याचार्येण 'ब्रह्मचर्यमागामिति ब्रूहि' इत्युक्तो बटुः 'ब्रह्मचर्यमागामिति ब्रूयात्। ततो ब्रह्मचार्यसानीति ब्रूहि' इत्युक्तो 'ब्रह्मचार्यसानीति' ब्रूयात्। अथ येनेन्द्रायेति वासः परिधाप्य 'इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनतीम आगात्। प्राणापानाभ्यां बलमादधाना स्वसा देवी सुभगा मेखलेयम्' इति मन्त्रं 'युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति

जायमानः । तं धीरासः कवय उन्नयन्ति स्वाध्यो३ मनसा देवयन्तः' इति वा मन्त्रं पठति । तूष्णीं वा बटोः कटिप्रदेशे मेखलामाबध्य 'यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः' इति मन्त्रं पठतो यज्ञोपवीतं निवेश्य तूष्णीमजिनं परिधाप्य दण्डं दद्यात् । ततो बटुः 'यो मे दण्डः परापतद्वैहायसोऽधिभूम्यां तमहं पुनरादद आयुषे ब्रह्मणे ब्रह्मवर्चसाय' इत्यनेन मन्त्रेण दण्डं परिगृह्णीयात् । अथाचार्यः स्वाञ्जलिं जलेनापूर्य 'आपो हिष्ठा' इति तिसृभिः माणवकाञ्जलिं तेनैव पूरयित्वा 'सूर्यमुदीक्षस्व' इति बटुं वदेत् । बटुश्च 'तच्चक्षुः' इति मन्त्रेण सूर्यमुदीक्षेत । अथाचार्यो बटोर्दक्षिणांसोपरि स्वदक्षिणहस्तं नीत्वा 'मम व्रते हृदयं ते दधामि । मम चित्तमनु चित्तं ते अस्तु । मम वाचमेकमना जुषस्व । बृहस्पतिष्ट्वा नियुनक्तु मह्यम्' इति मन्त्रेण हृदयमालभ्य बटोर्दक्षिणं हस्तं साङ्गुष्ठं गृहीत्वा 'को नामासि' इति वदेत् । बटुः 'अमुकशर्माहं भोः' इति प्रतिवदेत् । ततः 'कस्य ब्रह्मचार्यसि' इत्युक्तो बटुः 'भवतः' इति ब्रूयात् । अथाचार्य 'इन्द्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तवासुकशर्मन्' इति पठित्वा 'प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददामि अद्भ्यस्त्वौषधीभ्यस्त्वा परिददामि द्यावापृथिवीभ्यां त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वेभ्यस्त्वा भूतेभ्यः परिददामि अरिष्ट्या' इति मन्त्रेण 'भूतेभ्यो बटुं त्वा ददामि' प्रदक्षिणीकृत्य स्वोत्तरतो बटावुपविष्टे ब्रह्मोपवेशनादिपर्युक्षणान्तं कृत्वा आद्याः स्विष्टकृदन्ताश्चतुर्दशाज्याहुतीर्हुत्वा हुतशेषं प्राश्य पूर्णपात्रं वरं वा ब्रह्मणे दद्यात् । अथाचार्येण 'ब्रह्मचार्यसि' इत्युक्तो बटुः 'असानि' इति ब्रूयात् । 'अपोऽशान' इत्युक्तः अशानि' इति । 'कर्म कुरु' इत्युक्तः 'करवाणि' इति । 'मा दिवा सुषुप्थाः' इत्युक्तो 'न स्वपानि' इति । 'वाचं यच्छ' इत्युक्तो 'यच्छानि' इति । 'समिधमाधेहि' इत्युक्त 'आदधानि' इति । 'अपोऽशान' इत्युक्तः 'अशानि' इति ब्रूयात् । अथाचार्योऽग्नेरुत्तरतो दक्षिणतो वा प्रत्यङ्मुखायोपविष्टाय तिष्ठते वा पादोपसंग्रहपूर्वकमुपसन्नायाचार्यमीक्षमाणाय स्वयमीक्षिताय वटवे ॐकारव्याहृतिपूर्वकं प्रथमं पच्छः, द्वितीयमर्धर्चशः, तृतीयं सर्वामृचं च पठन् सावित्रीमुपदिशेत् । अथ बटुः पूर्वाभिमुखो दक्षिणहस्तेन 'अग्ने सुश्रवः सुश्रवसं मा कुरु यथा त्वमग्ने सुश्रवः सुश्रवा असि । एवं मां सुश्रवः सौश्रवसं कुरु । यथा त्वमग्ने

देवानां यज्ञस्य निधिपा असि । एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ' इत्येतैः पञ्चभिर्मन्त्रैः परिसमिन्धनप्रक्षेपेणाग्निं संधुक्ष्याऽद्भिः पर्युक्ष्य तिष्ठन् ' अग्नये समिधमाहार्षं बृहते जातवेदसे । यथा त्वमग्ने समिधा समिध्यस एवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासꣳ स्वाहा ' इत्यनेन मन्त्रेणोक्तलक्षणामेकां समिधमग्नावादध्यादनेनैव द्वितीयां तृतीयां चादध्यात् । ' एषा ते अग्ने समित् ' इत्यादिना वा मन्त्रेण । ' अग्नये समिधमाहार्षम् ' इति ' एषा ते अग्ने समित् ' इत्येताभ्यां समुच्चिताभ्यां मन्त्राभ्यां वा एकैकशस्तिस्रः समिध आदध्यात् । अथोपविश्य पूर्ववत् ' अग्ने सुश्रवः ' इत्यादिभिरग्निं संधुक्ष्य पर्युक्ष्य तूष्णीं पाणी प्रताप्य ' तनूपा अग्नेऽसि तन्वं मे पाहि । आयुर्दा अग्नेऽस्यायुर्मे देहि । वर्चोदा अग्नेऽसि वर्चो मे देहि । अग्ने यन्मे तन्वा ऊनं तन्म आपृण । मेधां मे देवः सविता आदधातु मेधां मे देवी सरस्वती आदधातु । मेधां मे अश्विनौ देवावाधत्तां पुष्करस्रजौ ' इति सप्तभिर्मन्त्रैः प्रतिमन्त्रं मुखं निमार्ष्टि । ततः शिष्टाचारात् ' अङ्गानि च म आप्यायताम् ' इत्यनेन शिरःप्रभृतिपादान्तं सर्वाङ्गानि स्पृशेत् । ' वाक्च म आप्यायताम् ' इति मुखम् । ' प्राणश्च म आप्यायताम् ' इति नासारन्ध्रे युगपत् । ' चक्षुश्च म आप्यायताम् ' इति चक्षुषी युगपत् ' श्रोत्रं च म आप्यायताम् ' इति दक्षिणं श्रोत्रं ततोऽनेनैव वामम् । 'यशो बलं च म आप्यायताम्' इति मन्त्रं पठित्वा युगपद्वा स्पृशेत् । ' अथ तन्नो अस्तु त्र्यायुषम् ' इति हृदि स्पृशेत् ।। ततः 'अमुकगोत्रोऽमुकप्रवरोऽमुकशर्माहं भो असुकशर्मंस्त्वामभिवादये ' इत्युक्त्वा गुर्वादिकमभिवादयेत् । ततो गुर्वादिः 'आयुष्मान्भवामुकशर्मन् भो ३' इति प्रत्यभिवादयेत् ।। ततः 'भवति भिक्षां देहि' इति ब्राह्मणो भिक्षेत् । 'भिक्षां भवति देहि' इति राजन्यः । ' भिक्षां देहि भवति ' इति वैश्यः । एवं भिक्षित्वा भैक्षं गुरवे निवेद्याहःशेषं वाग्यतस्तिष्ठेदासीत वेति नियमः । ततः उपास्तमये संध्यामुपास्य पूर्ववदग्निकार्यं कृत्वा वाचं विसृजेत् ।। इत्युपनयनम् ।।

---

## समावर्तनम् ।

अथ समावर्तनम् । तत्राचार्यो मातृपूजाभ्युदयिके कृत्वा बटुना ' भो आचार्योऽहं स्नास्ये' इत्युक्तः 'स्नाहि' इत्युक्त्वा पञ्चभूसंस्कारान्कृत्वा लौ-

किकाग्निं संस्थाप्य ब्रह्मोपवेशनाद्याज्यभागान्तं कृत्वा 'ऋग्वेदमधीत्य स्नाति' तदा 'पृथिव्यै स्वाहा । अग्नये स्वाहा' इति द्वे आज्याहुती जुहुयात्—यदि यजुर्वेदं तदा 'अन्तरिक्षाय स्वाहा । वायवे स्वाहा' इति द्वे । यदि सामवेदं तदा 'दिवे स्वाहा । सूर्याय स्वाहा' इति द्वे । यद्यथर्ववेदं तदा 'दिग्भ्यः स्वाहा' 'चन्द्रमसे स्वाहा' इति द्वे । यद्येकदा वेदचतुष्टयं त्रयं द्वयं वा तदा तद्द्वेदाहुतीर्हुत्वा 'ब्रह्मणे'। 'छन्दोभ्य' इति वा द्वे हुत्वा 'प्रजापतये' इत्याद्याः सप्त तन्त्रेण जुहुयात्। ततो 'ब्रह्मणे, छन्दोभ्यः' इत्याद्या नवाहुतीर्हुत्वा महाव्याहृत्यादिस्विष्टकृदन्ता दशाहुतीर्हुत्वा संस्रवान्प्राश्य पूर्णपात्रवरयोरन्यतरं ब्रह्मणे दक्षिणा दद्यात्। ततो ब्रह्मसंग्रहणपूर्वकं गुरुं नमस्कृत्य परिसमूहनादित्र्यायुष्करणान्तं तस्मिन्नग्नौ समिदाधानं कुर्यात् । ततोऽग्नेरुत्तरतोऽष्टौ कलशान् दक्षिणोत्तरायतान्संस्थाप्य तत्पूर्वभागे प्रागग्रकुशेषूदङ्मुखः स्थित्वा । 'येऽप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूषो मनोहा स्वलोऽविरुजस्तनूदूषुरिन्द्रियहातान्विजहामि यो रोचनस्तमिह गृह्णामि' इति मन्त्रेणाद्यकुम्भादुदकमादाय 'तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसाय' इति मन्त्रेणात्मानमभिषिच्यैवमन्येभ्यः प्रत्येकं समन्त्रकं जलमादाय 'येन श्रियमकृणुता येनावमृशता॑ँ सुराम् । येनाक्ष्यावभ्यषिञ्चता॑ँ यद्वा तदश्विना यशः' इति । आपो हि ष्ठा मयोभुवः । यो वः शिवतमो रसः । तस्मा अरं गमाम वः' इत्येतैश्चतुर्भिर्मन्त्रैः प्रतिमन्त्रमात्मानमभिषिच्य त्रिस्तूष्णीमभिषिञ्चेत् । तत 'उदुत्तमम्' इति मन्त्रेण मेखलां शिरोमार्गेण निःसार्य भूमौ निधायाऽन्यद्वासः परिधायाऽऽचम्य 'उद्यन् भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्प्रातर्यावभिरस्थाद्दशसनिरसि दशसनिं मा कुर्वाविदन्मा गमय' इत्यनेनादित्यमुपस्थाय दधि वा तिलान्वा दक्षिणहस्तमध्यगतसोमतीर्थेन प्राश्य जटालोमनखानि वापयित्वा स्नात्वाऽऽचम्योक्तलक्षणेनौदुम्बरकाष्ठेन 'अन्नाद्याय व्यूहध्व॑ँ सोमो राजाय मागमत् समे मुखं प्रमार्क्षीद्यशसा च भगेन च' इत्यनेन मन्त्रेण दन्तान् क्षालयित्वाऽऽचम्य सुगन्धिद्रव्यमिश्रितन यवादिचूर्णेन तैलसन्नीतेन शरीरमुद्वर्त्य पुनः सशिरस्कं स्नात्वाऽऽचम्य चन्दनाद्यनुलेपनं पाणिभ्या गृहीत्वा मुखं नासिकां च 'प्राणापानौ मे तर्पय चक्षुर्मे तर्पय श्रोत्रं मे तर्पय' इत्यनेन मन्त्रेणालभ्य पाणौ प्रक्षाल्य तदुदकमञ्जलिनादायापसव्यं कृत्वा दक्षिणमुखो भूत्वा 'पितरः शुन्धध्वम्' इत्यनेन मन्त्रेण पितृतीर्थेन निषिच्य यज्ञोपवीती भूत्वोदकमुपस्पृश्य

चन्दनादिना 'सुचक्षा अहमक्षीभ्यां भूयासं सुवर्चा मुखेन शुश्रुत्कर्णाभ्यां भूयासम्' इति मन्त्रेणात्मानमनुलिप्य 'परिधास्यै यशो धास्यै दीर्घायुत्वाय जरदष्टिरस्मि । शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये' इति मन्त्रेणाहतं धौतं वासः परिधाय पूर्वधृतमुपवीतमुत्तार्य जले प्रक्षिप्य पदं नवमुक्तलक्षणमुपवीतं 'यज्ञोपवीतं' इत्यादिना मन्त्रेण परिधाय 'यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती । यशो भगश्चमाविन्दद्यशो मा प्रतिपद्यतामिति । एकं चेत्पूर्वस्योत्तरवर्गेण प्रच्छादयीत । सुमनसः प्रतिगृह्णाति । या आहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय । ता अहं प्रतिगृह्णामि यशसा च भगेन च' इति पुष्पाण्यतः प्रतिगृह्य 'यद्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु । तेन संग्रथिताः सुमनस आबध्नामि यशोमयीं' इति मन्त्रेण शिरसि बद्धा 'युवा सुवासाः' इत्यनयर्चोष्णीषेण शिरो वेष्टयित्वा 'अलंकरणमसि भूयोऽलंकरणं भूयात्' इति मन्त्रेण दक्षिणकर्णे कुण्डलं कृत्वा तेनैव वामकर्णे धृत्वा 'वृत्रस्यासि कनीनकश्च खं विलोक्य' 'बृहस्पतेश्छदिरसि पाप्मनो मामंतर्द्धेहि तेजसो यशसो मामन्तर्द्धेहि' इत्यन्यस्माच्छत्रं प्रतिगृह्य 'प्रतिष्ठे स्थो विश्वतो मा पातम्' इत्युपानहौ युगपत्पादयोः प्रतिमुच्य 'विश्वाभ्यो मानाष्ट्राभ्यस्परिपाहि सर्वतः' इति वैणवं दण्डमादद्यात् । अथाचार्यः स्नातकस्य यमान् त्रिरात्रव्रतानि च श्रावयेत् । स च तानि यथोक्तानि कुर्यात् ॥

इति समावर्तनम् ॥

## विवाहप्रयोगः ।

अथ विवाहः । तत्र पुण्येऽहनि वरपिता मातृपूजाभ्युदयिके कृत्वा सुतं कन्यापितृगृहमानयेत् । ततः कन्यापिता मातृपूजाभ्युदयिके कृत्वा गृहागतं वरं मधुपर्केणार्चयेत् । तत्राच्यान्तिकमानीय 'विष्टरो विष्टरो विष्टरः' इत्यन्येन श्राविते 'प्रतिगृह्यताम्' इत्यर्च्यहस्ते विष्टरं दद्यात् । अथार्च्यः 'वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः । इदं तमभितिष्ठामि योमाकश्चाभिदासति' इत्यनेन मन्त्रेणासनाधो विष्टरं कृत्वा तत्रोपविशेत् । ततोऽर्चकः 'पाद्यं पाद्यं पाद्यम्' इत्यन्येन श्राविते 'प्रतिगृह्यताम्' इति पाद्यार्थोदकमर्च्याय समर्पयेत् । ततोऽर्च्यस्तत्पात्रं भूमौ निधायाञ्जलिना जलमादाय 'विराजो दोहोऽसि विराजो दोहमशीय मयि पाद्यायै विराजो दोहः' इति मन्त्रेण दक्षिणं पादं प्रक्षाल्य तेनैव मन्त्रेण वामं

प्रक्षालयेद्ब्राह्मणः। क्षत्रियवैश्यौ तु पूर्वं सव्यं ततो दक्षिणमिति विशेषः ततोऽर्चकेन पुनः पूर्ववद्दत्तं विष्टरमर्च्यः 'वर्ष्मोऽसि' इत्यादिमन्त्रेण पादयोरधस्तान्निदध्यात्। ततोऽर्चकः 'अर्घोऽर्घोऽर्घः' इत्यन्येन श्राविते 'प्रतिगृह्यताम्' इत्युक्त्वा 'आपः स्थ युष्माभिः सर्वान्कामानवाप्नवानि' इति मन्त्रमुक्तवतेऽर्च्यायार्घं प्रयच्छेत्। ततोऽर्च्योऽर्घं प्रतिगृह्य मूर्धपर्यन्तमानीय 'समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत। अरिष्टा अस्माकं वीरा मापरासेचिमत्पयः' इत्यनेन मन्त्रेण निनयन्नभिमन्त्रयेत्। ततोऽर्चकः 'आचमनीयमाचमनीयमाचमनीयम्' इत्यन्येन श्राविते 'प्रतिगृह्यताम्' इत्युक्त्वाऽर्च्यहस्ते आचमनीयं प्रयच्छेत्। अथार्च्यः प्रतिगृह्य 'आमागन्यशसा सꣳ सृज वर्चसा। तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनाम्' इति मन्त्रेण सकृदाचम्य स्मार्तमाचमनं कुर्यात्॥ ततोऽर्चको 'मधुपर्को मधुपर्को मधुपर्कः' इत्यन्येनोक्ते 'प्रतिगृह्यताम्' इति ब्रूयात्। ततोऽर्च्योऽर्चकहस्तस्थितमुद्घाटितं मधुपर्कं 'मित्रस्य त्वा चक्षुषा प्रतीक्षे' इति मन्त्रेणावेक्ष्य 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि' इति मन्त्रेण सकृदालोड्य तूष्णीं सकृदनामिकाङ्गुष्ठाभ्यामादाय बहिर्निक्षिप्य पुनर्द्विरालोड्य निरीक्ष्य 'यन्मधुनो मधव्यं परमꣳ रूपमन्नाद्यम्। तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्यो न्नादोऽसानि' इति मन्त्रेणानामिकाङ्गुष्ठाभ्यामादाय त्रिः प्राश्नीयात्। 'मधु वाता ऋता यत' इत्यादिभिस्त्रिभिर्ऋग्भिः प्रत्यृचं त्रिः प्राश्नीयाद्वाशेषं शिष्यादिभ्यो दद्यात्सर्वं वा भक्षयेत् प्राक्दिश्यसञ्चरे वा प्रक्षिपेत्। अथाचम्य 'वाङ्म आस्येऽस्तु' इति कराग्रेण मुखं स्पृशेत्। 'नसोर्मे प्राणोऽस्तु' इति दक्षिणवामनासारन्ध्रे। 'अक्ष्णोर्मे चक्षुः' इति दक्षिणोत्तरे चक्षुषी। 'कर्णयोर्मे श्रोत्रमस्तु' इति मन्त्रावृत्त्या दक्षिणोत्तरौ कर्णौ स्पृशेत्। एवं 'बाह्वोर्मे बलमस्तु' इतिदक्षिणोत्तरौ बाहू। 'ऊर्वोर्मे ओजोऽस्तु' इति युगपदूरू। 'अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्तु' इति शिरःप्रभृतिपादान्तं सर्वाङ्गमुभाभ्यां हस्ताभ्यां स्पृशेत्। ततः खड्गहस्तोऽर्चकः 'गौर्गौर्गौरालभ्यताम्' इति ब्रूयात्। अथार्च्यो 'माता रुद्राणां—' इत्यादि 'पाप्माहतः ॐ' इत्युपांशूक्त्वा 'उत्सृजत तृणान्यत्तु' इत्युच्चैः प्रतिब्रूयात्। ततो वर ईशान्यां दिशि चतुर्हस्तायां वेदिकायां लौकिकं निर्मन्थ्यं वाऽग्निं स्थापयित्वा पश्चादग्नेस्तृणतूलकं कटं वा स्थापयेत्॥ ततः कन्यापिता वस्त्र-

चतुष्टयं वराय प्रयच्छेत् । वरश्च तेषु मध्ये ' जरां गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपा वा । शतं च जीव शरदः सुवर्चा रयिं च पुत्राननुसंव्ययस्वायुष्मतीदं परिधत्स्व वासः' इति मन्त्रेणैकं 'या अकृन्तन्नवयं या अतन्वत । याश्च देवीस्तन्तूनभितो ततन्थ । तास्त्वा देवीर्जरसे संव्ययस्वायुष्मतीदं परिधत्स्व वासः ' इत्यपरमिति वासोयुगं कुमारीं परिधाप्य ' परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये ' इत्यनेनैकं ' यशसा मा द्यावापृथिवी यशसेन्द्रबृहस्पती । यशो भगश्च माविदद्यशो मा प्रतिपद्यताम्' इत्यपरमिति वासोयुगं परिदध्यात् । अथ वधूपिता 'परस्परं समञ्जेथाम्' इति संप्रेष्य वधूवरौ समञ्जयति । ततो वरः 'समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ । संमातरिश्वा संधाता समुदेष्ट्री दधातु नौ ' इति पठेत् । अथ कन्यापितोदङ्मुखः कुशजलाक्षतपाणिः 'अमुकगोत्रस्यामुकप्रवरस्याऽमुकशर्मणः प्रपौत्रायामुकशर्मणः पौत्रायामुकशर्मणः पुत्राय' इति वरपक्षे ।'अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्रीममुकशर्मणः पौत्रीममुकशर्मणः पुत्रीम्' इति कन्यापक्षे । एवं पुनर्वाग्द्वयमुक्त्वा 'प्राङ्मुखोपविष्टायामुकगोत्रायामुकप्रवरायाऽमुकशर्मणे प्रत्यङ्मुखोपविष्टाममुकगोत्राममुकप्रवराममुकनाम्नीमिमां कन्यां सालंकारां प्रजापतिदैवत्यां पुराणोक्तशतगुणीकृतज्योतिष्टोमातिरात्रसमफलप्राप्तिकामो भार्यात्वेन तुभ्यमहं संप्रददे' इत्युक्त्वा सकुशाक्षतजलं कन्याहस्ते वरदक्षिणहस्ते वा दद्यात् । वरश्च ' द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु ' इति मन्त्रेण तां प्रतिगृह्य ' कोऽदात् ' इत्यादि कामस्तुतिं पठेत् । अथ कन्यापिता कन्यादानप्रतिष्ठासिद्ध्यर्थं सुवर्णं गोमिथुनं च दक्षिणां दत्त्वा यौतकत्वेन गा महिषीश्च ग्रामादि यथासंभवं दद्यात् ।। ततो वरः । 'यदैषि मनसा दूरं दिशोऽनु पवमानो वा । हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोत्वमुकि ' इत्यनेन मन्त्रेण प्रतिग्रहस्थानादूर्ध्वं गृहीत्वा निष्क्रम्याग्निसमीपमागच्छेत् । अत्रावसरे कश्चिज्जलपूर्णं कुम्भं स्कन्धे निधायाग्नेर्दक्षिणत उत्तरतो वाऽभिषेकपर्यन्तं वाग्यत ऊर्ध्वं तिष्ठेत् ।। ततो वधूपित्रा 'परस्परं समीक्षेथाम्' इति प्रेषितो वरः समीक्षमाणां समीक्षमाणः ' अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः । वीरसूर्देवकामास्योना शन्नो भव द्विपदे शं चतुष्पदे । सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजः ।। सोमोऽददद्गन्धर्वाय गन्धर्वोऽददद-

ग्नये। रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम्। सा नः पूषा शिवतमामैरय सा न ऊरू उशती विहर। यस्यामुशन्तः प्रहराम शेपं यस्यामु कामा बहवो निविष्टै' इति पठित्वा प्रदक्षिणमग्निं परीत्य पश्चादग्नेः पूर्वस्थापिततेजनीकटयोरन्यतरस्मिन्दक्षिणपादमग्नेः कृत्वोपविशेत्। स्वदक्षिणतो वधूं चोपवेश्य ब्रह्मोपवेशनादिचरुवर्जं पर्युक्षणान्तं कर्म कुर्यात्॥ इयांस्तु विशेषः॥ शमीपलाशमिश्रा लाजा अश्मा लोहितमानडुहं चर्म वधूभ्राता शूर्पं दृढपुरुष आचार्याय वरद्रव्यमित्येतावन्ति वस्तून्युपकल्पयेत्। न प्रोक्षेत्। ततः स्रुवमादाय दक्षिणं जान्वाच्य ब्रह्मणान्वारब्धः 'प्रजापतये स्वाहा' इदं प्रजापतये। 'इन्द्राय स्वाहा' इदमिन्द्राय। इत्याघारौ॥ 'अग्नये स्वाहा' इदमग्नये। 'सोमाय स्वाहा' इदं सोमाय। इत्याज्यभागौ॥ ॐ 'भूः स्वाहा' इदमग्नये। ॐ 'भुवः स्वाहा' इदं वायवे। ॐ 'स्वः स्वाहा' इदं सूर्याय। 'त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडो अवया सिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत्स्वाहा' इदमग्नीवरुणाभ्याम्। 'सत्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ। अवयक्ष्व नो वरुणꣳरराणो वीहि मृडीकꣳसुहवो न एधि स्वाहा' इदमग्नीवरुणाभ्याम्। 'अयाश्चाग्ने स्यनभिशस्तिपाश्च सत्यामित्वमया असि। अया नो यज्ञं वहास्यया नो धेहि भेषजꣳस्वाहा' इदमग्नयेऽयसे। 'येते० स्वाहा' इदंवरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यः। 'उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳश्रथाय। अथा वयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा' इदं वरुणाय। ब्रह्मणान्वारब्धो हुत्वा। ततो राष्ट्रभृतो यथा—'ऋताषाडृतधामाग्निर्गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहावाट्' इदमृतासाहे ऋतधाम्नेऽग्नये गन्धर्वाय। 'ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहा' इदमोषधिभ्योऽप्सरोभ्यो मुद्भ्यः। 'सꣳहितो विश्वसामा सूर्यो गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्' इदꣳसꣳहिताय विश्वसाम्ने सूर्याय गंधर्वाय। 'सꣳहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवो नाम ताभ्यः स्वाहा वाट्' इदं सुषुम्णे सूर्यरश्मये चन्द्रमसे गन्धर्वाय। 'सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम ताभ्यः स्वाहा' इदं नक्षत्रेभ्योऽप्सरोभ्यो भेकुरिभ्यः। 'इषिरो विश्वव्यचा वातो गन्धर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा वाट्' इदमिषिराय

विश्वव्यचसे वाताय गन्धर्वाय । 'इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापो-ऽप्सरस ऊर्जो नाम ताभ्यः स्वाहा ' इदमद्भ्योऽप्सरोभ्य ऊर्भ्यः । 'भुज्युः सुपर्णो यज्ञो गन्धर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहावाट् ' इदं भुज्यवे सुपर्णाय यज्ञाय गन्धर्वाय । 'भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसस्तावानाम ताभ्यः स्वाहा ' इदं दक्षिणाभ्योऽप्सरोभ्य-स्तावाभ्यः । 'प्रजापतिर्विश्वकर्मा मनो गन्धर्वः स न इदं ब्रह्मक्षत्रं पातु तस्मै स्वाहावाट् ' इदं प्रजापतये विश्वकर्मणे मनसे गन्धर्वाय । 'प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्य ऋक्सामान्यप्सरस एष्टयो नाम ताभ्यः स्वाहा ' इदमृक्सामभ्योऽप्सरोभ्य एष्टिभ्यः ॥ अथ जयाहोमः ॥ 'चित्तं च स्वाहा' इदं चित्ताय । 'चितिश्च स्वाहा' इदं चित्यै । 'आकूतं च स्वाहा' इदमाकूताय । 'आकूतिश्च स्वाहा' इदमाकूत्यै । 'विज्ञातं च स्वाहा' इदं विज्ञाताय । 'विज्ञातिश्च स्वाहा' इदं विज्ञात्यै । 'मनश्च स्वाहा' इदं मनसे । 'शक्वरीश्च स्वाहा' इदं शक्वरीभ्यः । 'दर्शश्च स्वाहा' इदं दर्शाय । 'पूर्णमासं च स्वाहा' इदं पूर्णमासाय । 'बृहच्च स्वाहा' इदं बृहते । 'रथन्तरं च स्वाहा' इदं रथन्तराय । 'प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाजयेषु । तस्मै विशः समनमन्त सर्वाः स उग्रः स इहव्यो बभूव स्वाहा ' इदं प्रजा-पतये जयानिन्द्राय' ॥ अथाभ्यातानः ॥ 'अग्निर्भूतानामधिपतिः स माव-त्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देव-हूत्यां ५ स्वाहा ' इदमग्नये भूतानामधिपतये । एवं समामवत्वित्येवमादि-स्वाहाकारान्तस्योत्तरत्राप्यनुषङ्गः ॥ 'इन्द्रो ज्येष्ठानामधिपतिः० इद मि-न्द्राय ज्येष्ठानामधिपतये । यमः पृथिव्या अधिपतिः० इदं यमाय पृथिव्या अधिपतये । वायुरन्तरिक्षस्याधिपतिः० इदं वायवेऽतरिक्षस्याधिपतये । सूर्यो दिवोऽधिपतिः० इदं सूर्याय दिवोऽधिपतये । चन्द्रमा नक्षत्राणाम-धिपतिः० इदं चन्द्रमसे नक्षत्राणामधिपतये । बृहस्पतिर्ब्रह्मणोऽधिपतिः० इदं बृहस्पतये ब्रह्मणोऽधिपतये । मित्रः सत्यानामधिपतिः० इदं मित्राय सत्यानामधिपतये । वरुणोऽपामधिपतिः० इदं वरुणायाऽपामधिपतये । समुद्रः स्रोत्यानामधिपतिः० इदं समुद्राय स्रोत्यानामधिपतये । अन्न ५ सा-म्राज्यानामधिपतिः समावत्वस्मिन्ब्रह्मण्यस्मिन्० इदमन्नाय साम्राज्या-नामधिपतये । सोम ओषधीनामधिपतिः० इदं सोमायौषधीनामधिपतये । सविता प्रसवानामधिपतिः० इदं सवित्रे प्रसवानामधिपतये । रुद्रः पशूना-मधिपतिः० इदं रुद्राय पशूनामधिपतये ' । उदकोपस्पर्शनम् । त्वष्टारुद्रा-

णामधिपतिः० इदं त्वष्ट्रे रुद्राणामधिपतये। विष्णुः पर्वतानामधिपतिः०, इदं विष्णवे पर्वतानामधिपतये। मरुतो गणानामधिपतिः स मावत्वस्मिन्०, इदं मरुद्भ्यो गणानामधिपतिभ्यः। 'पितरः पितामहाः परेऽवरे ततास्तता-महा इह मान्वत्वस्मिन्० स्वाहा' इदं पितृभ्यः पितामहेभ्यः परेभ्योऽवरेभ्य-स्ततेभ्यस्ततामहेभ्यः। उदकस्पर्शनम्॥ 'अग्निरैतु प्रथमो देवताना ँ सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात्। तदयं राजा वरुणोऽनुमन्यतां यथेय ँ स्त्री पौत्रमघं न रोदात्स्वाहा' इदमग्नये। 'इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः। अशून्योपस्था जीवतामस्तु माता पौत्रमानन्द-मभिविबुद्ध्यतामिय ँ स्वाहा' इदमग्नये। 'स्वस्ति नो अग्ने दिव आपृथि-व्या विश्वा निधेह्ययथा यजत्र। यदस्यां महि दिवि जातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्र ँ स्वाहा' इदमग्नये। 'सुगन्नु पन्थां प्रदिशन्न एहि ज्यो-तिष्मध्ये ह्यजरन्न आयुः। अपैतु मृत्युरमृतन्न आगाद्वैवस्वतो नो अभयं कृणोतु स्वाहा' इदं वैवस्वताय। 'परं मृत्यो अनुपरे हि पन्थां यस्ते अन्य इतरो देवयानात्। चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजा रीरि-षोमात वीरान्स्वाहा' इदं मृत्यवे। उदकोपस्पर्शनम्॥ ततो वधू-भ्राता पूर्वोपकल्पितान्शमीपलाशमिश्रान्लाजान्शूर्पे धृतानञ्जलिनाऽऽ-दायवध्वञ्जलावावपेत्। ततः प्राङ्मुखी वधूस्तिष्ठन्ती 'अर्यमणं देवं कन्या अग्निमयक्षत। स नो अर्यमा देवः प्रेतोमुञ्चातुमापतेः स्वाहा' इत्यनेन मन्त्रेणाञ्जलिस्थान्लाजान्तृतीयांशं हुत्वा। 'इदम-र्यम्णे' इत्युक्त्वा 'इयं नार्युपब्रूते लाजानावपन्तिका आयुष्मानस्तु मे पति-रेधन्तां ज्ञातयो मम स्वाहा' इत्यनेनाञ्जलिस्थलाजार्धं हुत्वा 'इदमग्नये' इत्युक्त्वा 'इमान् लाजानावपाम्यग्नौ समृद्धिकरणं तव। मम तुभ्यं च संवननं तदग्निरनुमन्यतामिय ँ स्वाहा' इत्यनेन सर्वान्लाजान्हुत्वा 'इदम-ग्नये' इति ब्रूयात्॥ ततो वरः॥ 'गृणामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथा सः। भगो अर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्ह-पत्याय देवाः। अमोऽहमस्मि सा त्वं सा त्वमस्य मो अहम्॥ सा माहम-स्मि ऋक्त्वं द्यौरहं पृथिवी त्वम्॥ तावे हि विवहावहै सह रेतो दधावहै प्रजां प्रजनयावहै पुत्रान्विन्दावहै बहूंस्ते सन्तु जरदष्टयः। संप्रियौ रोचि-ष्णू सुमनस्यमानौ। पश्येम शरदः शतं जीवेम शरदः शत ँ शृणुयाम शरदः शतम्' इत्यनेन मन्त्रेण वध्वा साङ्गुष्ठं दक्षिणकरं गृह्णीयात्॥ ततो वध्वा दक्षिणं पादं धृत्वा 'आरोहेममश्मानमश्मेवत्वं ँ स्थिरा भव। अभि-

तिष्ठ पृतन्यतोऽत्र बाधस्व पृतनायतः ' इति मन्त्रेणाग्नेरुत्तरास्थिताश्मोपरि संस्थाप्य ॥ ' सरस्वति प्रेदमव सुभगे वाजिनीवति । यां त्वा विश्वस्य भूतस्य प्रजयामस्याग्रतः ॥ यस्यां भूत५ समभवद्यस्यां विश्वमिदं जगत् । तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यशः' इति प्रगीय 'तुभ्यमग्ने पर्य-वहन्सूर्यां वहतु नासह । पुनः पतिभ्यो जायां दाग्ने प्रजया सह' इति मन्त्रं पठित्वा वध्वा सहाग्निं परिक्रम्यैवं पुनर्द्विवारं लाजावपनादि परि-क्रमणान्तं कुर्यात् ॥ ततो वधूभ्राता शूर्पकोणप्रदेशेन सर्वान्लाजान्वध्वञ्ज-लावावपेत् । अथोत्थाय वध्वा ' भगायस्वाहा ' इत्यनेन हुत्वा ' इदं भगाय ' इति त्यागे कृते वरस्तयासहाचारात्तूष्णीं चतुर्थं परिक्रमणं कृत्वा ब्रह्मणाऽन्वारब्धः ' प्रजापतयेस्वाहा ' इति हुत्वा ' इदं प्रजापतये ' इति त्यागं कुर्यात् । ततो वधूर्वरेण ' एकमिषे विष्णुस्त्वानयतु ' इत्युक्ते एकं पदमुदग् दद्यात् । ' द्वे ऊर्जे विष्णुस्त्वानयतु ' इत्युक्ते द्वितीयम् । ' त्रीणि रायस्पोषाय विष्णुस्त्वानयतु ' इत्युक्ते तृतीयम् । ' चत्वारि मायो-भवाय विष्णुस्त्वानयतु ' इत्युक्ते चतुर्थम् । 'पञ्च पशुभ्यो विष्णुस्त्वानयतु' इत्युक्ते पञ्चमम् । 'षट्ऋतुभ्यो विष्णुस्त्वानयतु' इत्युक्ते षष्ठम् । 'सखे सप्त-पदा भव सा मामनुव्रता भव विष्णुस्त्वानयतु ' इत्युक्ते सप्तमं पदं दद्यात् ॥ अथ वरः पूर्वमभिषेकार्थं धृतकुम्भादुदकमादाय 'आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम्' इत्यनेन मन्त्रेण वधूमूर्द्धन्यभिषि-च्य पुनरुदकमादाय 'आपोहिष्ठा' इति तृचं पठित्वाऽभिषिच्य 'सूर्यमुदीक्ष-स्व' इति वधूं संप्रेष्य ' तच्चक्षुः०—इत्यादि शृणुयाम शरदः शतम् ' इत्यन्तं मन्त्रं पठित्वा सूर्यमुदीक्षते । तस्या दक्षिणांसस्योपरि हस्तं नीत्वा 'मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं ते अस्तु । मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यम्' इति मन्त्रेण तद्धृदयमालभ्य ' सुमङ्गलीरियं वधूरिमा५ समेत पश्यत । सौभाग्यमस्यै दत्त्वा याथास्तं विपरेतन ' इत्य-नेन तामभिमन्त्र्याचारात्तद्वामभागे उपविश्य तस्याः सीमन्ते वरः सिन्दूरं दद्यात् । अथाग्नेः प्रागुदग्वा पूर्वकल्पिते उत्तरलोम्नि प्राग्ग्रीवे आनडुहे चर्मणि ' इह गावो निषीदन्त्विहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणो यज्ञ इह पूषा निषीदन्तु ' इति मन्त्रेण वधूं दृढपुरुषो वरश्चोत्थाप्यो-पवेशयेत् । ततो वरः—पूर्ववद्यथास्थानमुपविश्य ब्रह्मणान्वारब्धः ' अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते ' इति स्विष्टकृद्धोमं कृत्वा संस्रवान्प्रा-

श्य ब्रह्मणे पूर्णपात्रवरयोरन्यतरं दक्षिणात्वेन दत्वा स्वाचार्याय वरं दत्वा भूयसीं संकल्प्याऽऽदित्येऽस्तमिते 'ध्रुवमीक्षस्व' इति वधूं प्रेष्य 'ध्रुवमसि ध्रुव त्वां पश्यामि ध्रुवैधि पोष्ये मयि मह्यं त्वाऽदाद् बृहस्पतिर्मया पत्या प्रजावती संजीव शरदः शतम्' इति मन्त्रं वाचयित्वा ध्रुवमीक्षयीत ततो दम्पती विवाहादारभ्य त्रिरात्रमक्षारालवणाशिनावधःशायिनौ संवत्सरं द्वादशरात्रं षड्रात्रं त्रिरात्रं वा ब्रह्मचारिणौ स्यातामिति ॥

इति विवाहप्रयोगः ।

चर्मण्वतीतरणिजाशुभसङ्गमस्य<br>
सान्निध्यभाजि कृतशालिनि मध्यदेशे ।<br>
ख्याताभरेह नगरी किल तत्र राजा<br>
राजीवलोचनरतो भगवन्तदेवः ॥ १ ॥

इति श्रीसैमरवंशावतंसमहाराजाधिराजश्रीभगवन्तदेवादिष्टमीमांसकभट्टशङ्करात्मज-भट्टनीलकण्ठकृते भगवन्तभास्करे प्रथमः संस्कारमयूखः समाप्तः ।

# च० पुस्तके दृष्टाः पाठभेदाः ।

पृ. १० पं. २७ दिगित्यस्याग्रे—

वृद्धिश्राद्धारम्भाच्च पूर्वं वैश्वदेवः कार्यः ।

वृद्धावादौ क्षये चान्ते मध्ये दर्शे तु पार्वणे ।
एकोद्दिष्टे निवृत्ते तु वैश्वदेवो विधीयते ॥

इति शाङ्खायनपरिशिष्टात् । इत्यधिकम् ।

पृ. १३ पं. २ कुम्भः इत्यस्याग्रे—

एषु सूर्ये विद्यमाने इत्यर्थः । इत्यधिकम् ।

पृ. १३ पं. ८ ग्रहणम् । इत्यस्याग्रे—

विष्टिर्भद्रा । इत्यधिकम् ।

पृ. १६ पं. २९ यौगपद्य इत्यतः प्राक्—

पित्र्यं पितृणां हितं श्राद्धादिकर्तारम् । इत्यधिकम् ।

पृ. १७ पं. २१ 'प्रत्यविधानात्' इत्यत्र—

प्रवृत्त्यविघातात् ।

पृ. १९ पं. ९ संग्रहे इत्यस्यानन्तरम्—

अत्र ब्राह्मणभोजनसंख्यामाह कल्पतरौ यज्ञपार्श्वः—

गर्भाधानादिसर्वेषु ब्राह्मणान्भोजयेद्दश ।
आवसथ्ये त्रयोविंशदग्न्याधेये शतात्परम् ॥
आग्रयणे प्रायश्चित्तेष्ट्यां ब्राह्मणा दश पञ्च च ।
सहस्रं भोजयेत्सोमे ब्राह्मणानां शतं पशौ ॥
चातुर्मास्येषु चत्वारि तथा पञ्च सुराग्रहे ।
अयुतं वाजपेये चाश्वमेधे तु चतुर्गुणम् ॥

चत्वारि शतानीति संबन्धः । सुराग्रहे सौत्रामण्याम् । चतुर्गुणं प्रयुतमिति ।

पृ. २१ पं. ६ केचिद्वृद्धादनादर इत्यस्य स्थाने—

केचिच्छब्दादनादर इति ।

पृ. २२ पं. ९ इतीत्यस्याग्रे—

पुत्रे इति पुंस्त्वमविवक्षितमनुवाद्यविशेषणत्वात् । पृथ्वीचन्द्रोदये कार्ष्णाजिनिः—

प्रादुर्भावे पुत्रपुत्र्योर्ग्रहणे चन्द्रसूर्ययोः ।
स्नात्वानन्तरमात्मीयान् पितॄञ्छ्राद्धेन तर्पयेत् ॥ इत्यधिकम् ।

पृ. २४ पं. १३ जातकर्मोत्तरं इत्यस्याग्रे—

नामकरणस्येत्यधिकम् ।

पृ. २५ पं. १ व्युष्टेऽतीते । इत्यस्याग्रे—

यत्तु—दशाहे द्वादशाहे वापि जन्मतोऽपि त्रयोदशे ।
षोडशैकोनविंशे वा द्वात्रिंशे वर्णतः क्रमात् ।

इति मदनरत्नधृतबृहस्पतिवचने चतुर्णां वर्णानां पञ्चकाला उक्ताः, नतु ते मदनेन व्यवस्थापिताः । व्यवस्था त्वेवम् । दशाहेऽतीते तथा चैकादशाहद्वादशाहौ ब्राह्मणस्य वाशब्दस्वरसात् । त्रयोदशे इति क्षत्रियस्य सूतकान्तत्वात् । षोडशैकोनविंशौ वैश्यस्य द्वितीयवाशब्दस्वरसात् । द्वात्रिंशत्तमः शूद्रस्य सूतकान्ते भा (?) रूपान्तरत्वादाकाङ्क्षासत्त्वाच्च । एतत्संवादेन नारदोऽपि—

जन्मतो दशमे वापि द्वादशे वापि तत्पुनः ।
विप्राणां नामकर्म स्यादाशौचान्ते तु शेषयोः ॥ इति ।

शेषयोः क्षत्रियवैश्ययोः । तेन विप्रशूद्रयोराशौचमध्येऽपि भवतीति केचित् । अत एव प्रयोगपारिजाते बृहस्पतिवचनमेवं पठितम् ।

द्वादशे दशमे वापि जन्मतो दिवसे शुभे ।
षोडशे विंशतौ चैव द्वाविंशे वर्णतः क्रमात् ।

तेन तन्मते दशमे इति यथाश्रुतमेव । एतेषां च पक्षाणां स्वस्वगृह्यानुसारेण व्यवस्थेति हेमाद्रिमाधवमदनादयः । इत्यधिकम् ।

पृ. २५ पं. १८ तत्र मासनामानि वसिष्ठ आहेत्यस्य स्थाने—

तत्र मासनामान्याह गार्ग्यः—

मासनाम गुरोर्नाम दद्याद्बालस्य वै पिता ।
कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथजनार्दनः ।
उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथाहरिः ।
योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ॥

अत्र मार्गशीर्षादिक्रमः ।

---

१ अयमेव युक्तः पाठः । मूले 'अत्रकेचिद्……उपेक्ष्यम्' इति पाठस्त्वसंगत एव । नहि अत्रेतीदमा वसिष्ठवचनं परामृश्य तत्र मार्गादिक्रमोऽभिधातुं शक्यः । चैत्रादीति श्रवणात् । नापि गार्ग्यवचनं तस्यानुपादानात । लेखकप्रमादात्तद्भ्रंशकल्पनायामपि मार्गादिक्रमस्यैव तत्र वासिष्ठवचनानुरोधेन कल्पयितुं युक्तत्वात्तदुपेक्षाहेतुतया वसिष्ठवचनोपन्यासस्य विरुद्धत्वात ।

पृ. २६ पं. २२–२३ इति । केचिदित्यस्यस्थाने—

'इति मदनरत्नधृतगार्ग्य ( ? वसिष्ठ ) वचनैकवाक्यत्वात् । पितामह-चरणास्तु' इति ।

पृ. २६ पं. २६ तद्वासिष्ठे••••••दुपेक्ष्यमितिपङ्क्तिर्नास्ति ।

पृ. २८ पं. २० आयुषेऽपि वेत्यत्र—

आयुषे पिता ।

पृ. ३१ पं. १० इतीत्यस्याग्रे—

वर्जनीयान्नित्यान्दर्शादीन् । इत्यधिकम् ।

पृ. ३२ पं. ६ नातिव्याहारयेदित्यस्यस्थाने—

नाभिव्याहारयेन् ।

पृ. ३२ पं. २२ 'शरदि वैश्यम्' इतीत्यस्याग्रे—

अत्र च माणवककर्तृकं गुरुसमीपगमनं विधीयत इति प्राञ्चः । पितामहचरणास्तु णिजर्थ(?र्था)विवक्षायां मानाभावात्—आचार्यकर्तृकं माणवकाधिकारिकमुपनयनमेव विधीयते नोपगमनं 'क्लृप्तीर्यजमानं वाचयति' । 'पञ्चभिः पावयति' इत्यत्र यजमानाधिकारिकाध्वर्युकर्तृकवाचनपावनादिवत् । अत एव छान्दोग्योपनिषदि गुरुकर्तृकोपनयनानुकूलव्यापाररूपोपगमनकर्तृकता 'जाबालिर्मातरमामन्त्र्यात्मानमुपनाययितुं गौतममाजगाम' इति । हेमाद्रौ बुधवचस्यपि 'गर्भाष्टमे वर्षे ब्राह्मणमुपनाययेत्' इति । 'एतयान्नाद्यकामं याजयेत्' इत्यत्र तु यज(मा?)नस्य प्रयोज्याध्वर्य्वादिकर्तृत्वे मानाभावाद्यजेः स्वार्थवणिजर्थविशेषणतया परार्थवच्चारणाविधिश्च(?) स्यादिति णिजर्थाविवक्षया यजनमेव विधीयत इत्याहुः । अत्र केचित् । उपनयनशब्देनोपनायनमेवाभिधीयत इति तदयुक्तम् । उपयनविषयकप्रयोजकव्यापारस्योपनयनशब्दावाच्यत्वाल्लक्षणायां मानाभावादिति हेमाद्रिः । एतेन आचार्यसमीपनयनाङ्गको गायत्र्युपदेशः प्रधानं 'गायत्र्या ब्राह्मणमुपनयीत' इति कात्यायनस्मृतौ चोपनयनस्य गायत्र्युपदेशाङ्गत्वदर्शनात् । एवं चोपनयनपदं योगरूढं समिद्दर्शादिपदस्येवाङ्गवाचिनोऽप्युपनयनपदस्य तत्संबन्धेन प्रधानसंज्ञोपपत्तेरित्यपास्तम् । एकत्र योगरूढस्यै(?ढ्योरे)व योगरूढपदप्रवृत्तेः यथा पङ्कजपदे । अत्र तु नयने योगस्य गायत्र्युपदेशे च रूढस्य(?ढेः) सद्भावेन नैकत्रविद्यमानत्वमिति । स्मृत्यर्थसारे तु—आचार्यसमीपनयनमग्निसमीपनयनं वा गायत्रीवाचनं वा प्रधानमित्युक्तम् । इत्यधिकम् ।

पृ. ३३ पं. ३ द्रविणशीलाख्य इत्यस्य स्थाने—

द्रविणशीलाढ्यः ।

पृ. ३३ पं. ७ प्रागेव तदूर्ध्वमित्यस्य स्थाने

प्रागेव न तदूर्ध्वं ।

पृ. ३३ पं. १४ गौणकाल इत्यस्याग्रे—

उपनयनकालस्य परावधिमाहाश्वलायनः । इत्यधिकम् ।

पृ. ३४ पं. ९ निरंशः इत्यस्याग्रे—

तथाचोक्तम्—

राशेः प्रथमभागस्थो निरंशः सूर्य उच्यते ।

अत्रिः—

पराजितेऽतिनीचस्थे नीचे शुक्रे गुरौ तथा ।
व्रतिनं यदि कुर्वीत स भवेद्वेदवर्जितः ॥

राजमार्तण्डः—

नष्टे शुक्रेऽथवा जीवे निरंशे चैव भास्करे ।
उपनीतस्य शिष्यस्य जडत्वं मृत्युरेव च ॥

चण्डेश्वरः—

दाहे दिशां चैव धराप्रकम्पे वज्रप्रपातेऽथ विदारणे वा ।
केतौ तथोल्काशुकरप्रकाशे त्र्यहं न कुर्याद्व्रतमङ्गलादि ॥

इत्यधिकम् ।

पृ. ३४ पं. १७ अनध्यायत्वं वक्ष्यत इत्यस्याग्रे—

लल्लः—व्रतेऽह्नि पूर्वसंध्यायां वारिदो यदि गर्जति ।
तद्दिने स्यादनध्यायो व्रतं तत्र विवर्जयेत् ॥

इति विशेषेण वर्जयेदित्यर्थकेन विवर्जयेदितिपदेन पूर्वसंध्यायां गर्जने दोषाधिक्यं सूच्यते

तथा—पौषादित्रिषु मासेषु कृष्णं चैवाष्टकात्रयम् ।
एका ज्ञेयाश्विने मासि हेमन्ते चतुरष्टकाः ॥
अष्टकाश्च समुद्दिष्टाः सप्तम्यादिदिनत्रयम् ।
नाधीयीत च शास्त्राणि व्रतबन्धं विवर्जयेत् ॥
नचोत्पातहते ऋक्षे व्रतोपनयनं शुभम् । इति ।

नान्दीश्राद्धोत्तरं विशेष उक्तो ज्योतिर्निबन्धे—

नान्दीश्राद्धे कृते पश्चादनध्यायस्त्वकालिकः ।
तदोपनयनं कार्यं व्रतारम्भं न कारयेत् ॥

इदं च येषां तद्दिने एव वेदारंभो विहितस्तान्प्रत्येव नान्येषामिति प्रयोगरत्ने पितामहचरणाः । इत्यधिकम् ।

पृ. ३४ पं. २१ द्वितीयायाः०–मान्यास्त्वित्यन्तस्य स्थाने—

द्वितीयाया विहितत्वात् । अत्रानध्यायपदं नित्यानध्यायपरं न तु नैमित्तिकानध्यायपरं तेषामनित्यत्वेन नित्यानित्यसंयोगविरोधात् । ननु सप्तम्यादिदिनत्रयमिति नवम्या अपि निषेधात् कोऽस्य विषयः । उच्यते–निषेधद्वयवशाद्दोषाधिक्यकल्पनेति केचित् । धर्मप्रकाशे पितामहचरणास्तु । इति ।

पृ. ३४ पं. २९ इत्याहुरित्यस्याग्रे—

कालविशेषोपनीतस्य पुनरुपनयनमाह वसिष्ठः—

पापांशकगते चन्द्रे अरिनीचस्थितेऽपि च ।
अनध्याये चोपनीतः पुनः संस्कारमर्हति ॥

भरद्वाजः—विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे ।
अनध्याये चोपनीतः पुनः संस्कारमर्हति ॥ इति ।

नारदीये तु अपराह्णे चोपनीत इति तृतीयपाद उक्तः । अपराह्णस्त्रिधाविभक्तदिनस्यान्तभागः । तथाच ज्योतिर्मनुः—

सर्वदेशेषु पूर्वाह्णे मुख्यं स्यादुपनायनम् ।
मध्याह्ने मध्यमं प्रोक्तमपराह्णे विगर्हितम् । इति ॥

तन्नामा(?न्माना)नि स्कान्दे—

उर्ध्वं सूर्योदयात्प्रोक्तं मुहूर्तानां तु पञ्चकम् ।
पूर्वाह्णः प्रथमः प्रोक्तो मध्याह्नस्तु ततः परम् ॥
अपराह्णस्त्वतः प्रोक्तो मुहूर्तानां तु पञ्चकम् । इति ।

अत्रानध्यायपदं नित्यनैमित्तिकसाधारणानध्यायपरम् ।

नैमित्तिकमनध्यायं कृष्णे च प्रतिपद्दिनम् ।
मेखलाबन्धने शस्तं चौले वेदव्रतेपि च ।

इति वसिष्ठवचने नैमित्तिकानध्यायकृष्णप्रतिपदादिनित्यानध्यायानां च—

स्वाध्यायवियुजो घस्राः कृष्णप्रतिपदादयः ।
प्रायश्चित्तनिमित्ते तु मेखलाबन्धने मताः ॥

इति कालादर्शादिधृतवृद्धगार्ग्यवचनात्प्रायश्चित्तोपनयनपरतैव नापूर्वोपनयनपरता । अनध्यायपदस्य नित्यानध्यायपरत्वे तु नैमित्तिकान-

ध्यायवदप्रतिपद्यप्यपूर्वोपनयनापत्तेः । एतेन पुनःसंस्कारविधिगतानध्याय-पदस्य नित्यानध्यायपरत्वेनोपपन्नस्यानित्यानध्यायग्राहकत्वासंभवात् । अग्नीषोमीययागोत्कर्षपरतया प्रतीयमानेन 'यदेवादः पौर्णमासं हविः' इति वचनेनाग्नीषोमीयपुरोडाशयागस्यैवोत्कर्षो नाग्नीषोमीयोपांशुयाजस्य नित्याग्नीषोमीयग्रहणायोगादिति परास्तम् । किंच दृष्टान्त एवाग्नीषोमीयपुरोडाशस्यैवोत्कर्षे नित्याग्नीषोमीयसंबन्धो हेतुत्वेन भाष्यतन्त्ररत्नशास्त्रदीपिकादिग्रन्थेषु उक्तः । प्रत्युत विकल्पसंभवान्नोत्कृष्यते आज्यमित्यादि तत्ररत्नग्रन्थस्वारस्यादग्नीषोमीयाज्यस्योत्कर्ष एव प्रतीयत इति ।

यत्तु 'विद्युत्स्तनयित्नुर्वृष्टिश्चापर्तौ यत्र संनिपतेयुरुयहमनध्यायो यावद्भूमिर्युदकेत्येके ' इति धर्मप्रश्नोदाहृतवाक्येऽपर्तौ वर्षे त्रिरात्रमित्युक्तत्वान्माघादिषु वृष्टेर्नियतत्वान्नासावपर्तुरिति तत्र वृष्टौ नानध्यायः। वृष्टिकालो दक्षिणायन एव उदगयनेऽप्यपर इत्यर्थस्य ज्ञापकं महाभारते वैराटपर्वणि बृहन्नडावस्थपार्थवचनमुत्तरं प्रति 'गाण्डीवमेतत्पार्थस्य लोकेषु विदितं धनुः' इति प्रकृत्य—

एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् ।
ततोऽनन्तरमेवाथ प्रजापतिरधारयत् ॥
त्रीणि पञ्चशतं चैव शक्रोऽशीतिं च पञ्च च ।
सोमः पञ्चशतं राजा तथैव वरुणः शतम् ॥
पार्थः पञ्च च षष्टिं च वर्षाणि श्वेतवाहनः । इति ।

अत्र खाण्डवदाहानन्तरलब्धधनुषः पार्थकर्तृकधारणे पञ्चषष्टिवत्सरात्मकवर्षाणां बाधितत्वात्सार्धद्वात्रिंशद्वत्सराः पञ्चषष्टिवर्षशब्देन विवक्षिता इत्यवश्यं वाच्यम्। अन्यथातीतानागतवत्सराभिप्रायव्याख्यानेऽधारयदिति भूतनिर्देशानुपपत्तेरिति । तदयुक्तम् । पञ्चषष्टिवर्षाणीत्यस्योत्तरावधिमात्रसमर्थकत्वात्। 'दृश्यते च लोके पञ्चाशद्वर्षपर्यन्तमध्यापनादि कृतमित्यादयः प्रयोगा उत्तरावधिसमर्थका नहि तत्रोत्पत्त्यादिरूपः पूर्वावधिरपि प्रतीयते येन बाधः स्यात्। किंच दक्षिणायनोत्तरायनयोर्वृष्टिकालत्वे—

अनूराधर्क्षमारभ्य षोडशर्क्षेषु भास्करः ।
यावच्चरति वै तावदकालं मुनयो विदुः ॥
कालवृष्टौ तु तत्कालमकाले तु त्रिरात्रकम् ।
अतिमात्राथवा वृष्टिर्नाधीयीत दिनत्रयम् ॥
तयोस्तु द्विदिनं चैव वृष्टिमात्रे दिनं स्मृतम् ।

इति स्मृतिरत्नावल्यादिधृतगार्ग्यवचने तथा आर्द्रादिज्येष्ठान्तं वर्षर्तुरुक्तस्तत्र वृष्टिः कालवृष्टिरिति स्मृत्यर्थसारे अपर्तौ वर्षे त्रिरात्रमित्येतस्योपनिषद्भाष्ये त्वार्द्रादिज्येष्ठान्तं वर्षर्तुरुक्तस्तत्र वृष्टिकालाकालपरिभाषणवैयर्थ्यापत्तेः । एतदभिप्रायेणैव यस्मिन्देशे यो वर्षाकालस्ततोऽन्यत्रापर्तुरित्यापस्तम्बीयधर्मप्रश्नवाक्यस्य व्याख्याने उज्ज्वलायां प्रथमप्रश्ने तृतीयपटले हरदत्तीयग्रन्थः संगच्छत इति ।

यत्तु यावद्भूमिर्व्युदकेत्येके (इति) धर्मप्रश्न एव पक्षान्तरसत्त्वात्तत्रिरात्रानध्यायस्य नित्यत्वमिति तदप्ययुक्तम् । ईदृङ्नित्यत्वस्याष्टम्याद्यनध्यायेष्वव्यापनं तथा सकलग्रन्थसिद्धनित्यानध्यायत्वं न स्यात् । एतेन 'नापि मनूक्ताकालिकस्य नित्यत्वं, मनुरब्रवीदित्युक्तिर्विकल्पार्थेत्यन्ये' इति मेधातिथिना व्याख्यानादिति परास्तम् । इत्यधिकं दृश्यते ।

पृ. ३९ पं. १३ केचिदित्यस्याग्रे—

वर्ज्यानीति शेषः । इत्यधिकम् ।

पृ. ३६ पं. ४ अशक्याङ्गहीनेनेत्यस्य स्थाने—

अशक्याङ्गहानेनेति ॥

पृ. ३६ पं १४ परः पर इत्यस्याग्रे—

अत्र यद्यपि भ्रातृशब्देन बटोरेव भ्राता प्रतीयते तथापि पितुरेव स ग्राह्यः । तथाच पितामहः—इत्यधिकम् ।

पृ. ३६ पं. १६ इतीत्यस्याग्रे—

ज्ञातयः सपिण्डाः । अग्रजा बटोरपेक्षया गोत्रजेषु सपिण्डेषु तद्भिन्नेषु मध्ये ये अग्रजा वृद्धास्तदुपनयनाचार्यत्वाधिकारिणः ।

यत्तु— असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।

इति योगीश्वरवचनेऽध्यता(?भ्रातॄणा)मधिकारागमः स तु पितृव्याभावविषयक इति केचित् । भगिन्यादिविवाहविषय इति तु युक्तम् । उक्ताधिकार्यभावे शौनकः—

कुमारस्योपनयनं श्रुताभिजनवृत्तवान् ।
तत्या (?) धूतानिःशेषपाप्मा कुर्याद् द्विजोत्तमः ॥ इति ।

सोऽपि स्वशाखीय एव । तथा चाचार्यं कुर्यादित्यधिकृत्य व्यासः—

वेदैकनिष्ठं धर्मज्ञं कुलीनं श्रोत्रियं शुचिम् ।
स्वशाखीयमनालस्यं विप्रं कर्तारमीप्सितम् (?) ॥ इति ।

इति कालादिनिर्णयः । इति पाठान्तरम् ।

पृ. ३७ पं. १ कार्ष्णरौरव इत्यतःप्राक्--

'बस्तछगलका अजे' इत्यमरोक्तेः आजमेव वासः । इत्यधिकम् ।

पृ. ३८ पं. ९ 'एवंच·····न विघ्नः' इत्यस्य स्थाने—

तदसंभवे मदनरत्ने कात्यायनः—

कार्पासक्षौमगोवालशणवल्कतृणोद्भवम् ।
तदसंभवतो धार्यमुपवीतं द्विजातिभिः ॥

असंभवतः असंभवात् । तथाच पूर्वोक्तासंभवे कार्पासं धार्यम् । इति ।

पृ. ३९ पं. १८ उपवीतनिर्णय इत्यस्याग्रे--

एवमुपवीतधारणानन्तरमाचमनमुक्तं जयन्तेन । 'यज्ञोपवीतिनं कृत्वा यथाशास्त्रमाचामयति ' इति । आचमनदेशश्च कारिकायां 'आचान्तमुत्तरेण ' इति आचमनप्रकार उक्तो जयन्तेन । अन्तर्जानुकरः प्रणवहृत् सावित्री(?)बद्धशिखो दक्षिणहस्तं गोकर्णाकारं संहताङ्गुलिं कृत्वा ब्रह्मतीर्थेन वीक्षितमम्बु फेनबुद्बुदविकृतगन्धरसवर्जितं हृद्गमं त्रिः पिबेत् । ऋग्वेदः प्रीयतामिति प्रथमम् । यजुर्वेदः प्रीयतामिति द्वितीयम् । सामवेदः प्रीयतामिति तृतीयम् । पाणी प्रक्षाल्यालोमकौ संवृतावोष्ठौ संहिताङ्गुलिपाण्यङ्गुष्ठमूलेन द्विः परिमृजाति । अथर्ववेदः प्रीयतामिति प्रथमम् । इतिहासपुराणानि प्रीयन्तामिति द्वितीयम् । ततः पाणी प्रक्षाल्य पादौ शिरश्चाभ्युक्षेत् । विष्णुः प्रीयतामिति अपः बाह्वग्रेण(?)इन्द्रः प्रीयतामिति । एवमुपस्थितं बटुं गायत्रीमुपदिशेत् । तदाह कात्यायनः—' सावित्र्या ब्राह्मणमुपनयेत्, त्रिष्टुभा राजन्यं, जगत्या वैश्यं, सर्वेषां वा सावित्रीति। एतदेव स्पष्टमाचष्ट शातातपः तत्सवितुर्वरेण्यमिति सावित्री ब्राह्मणस्य, देवस्य सवितुरिति राजन्यस्य, विश्वारूपाणीति वैश्यस्येति । सा च प्रणवव्याहृतिपूर्वा उपदेष्टव्येत्याह लौगाक्षिः—ॐ भूर्भुवः स्वरित्युक्त्वा तत्सवितुरिति सावित्रीमन्वाह पच्छोर्द्धर्चशः सर्वां सन्ततामिति । सावित्रीग्रहणमितरयोरप्युपलक्षणम् । उपदेशस्थानं वक्ष्यते ।

( अत उत्तरं ३७ पत्रस्थं मेखलाप्रकरणं ततः )

तथाचाश्वलायनः—

त्रिवृता मेखला कार्या त्रिवारं स्यात्समावृता ।
तद्ग्रन्थयस्त्रयः कार्याः पञ्च वा सप्त वा पुनः ॥
वेदत्रयेण वृतोहमिति मन्येत स द्विजः ।
तद्ग्रन्थयस्तदङ्गानि तद्रहस्यानि संस्मरेत् ॥ इति ।

( अत्र दण्डनिर्णयः ततः )

गायत्र्युपदेशस्थानं त्वग्नेरुत्तरदेशः तदुक्तं शाङ्खायनगृह्ये—' सावित्रीत्वेवो(?)त्तरेणाग्निमुपविशतः प्राङ्मुख आचार्यः प्रत्यङ्मुख······' इति। यस्तु कातीयपारस्कराभ्यां विकल्प उक्तः । अथासौ सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय दक्षिणतस्तिष्ठत आसीनायेत्येक इति स कातीयानाम् । बह्वृचानां तु वेदैक्यादुत्तरस्यामेव । एकेग्रहणं षडङ्गमेक इति वदभिमतत्वसूचनाय न विकल्पाय इति केचित् । वस्तुतस्तु बह्वृचानामग्नेः पश्चिमायामेव गायत्र्युपदेशः । तत्र गुरोर्दक्षिणस्यामासीनस्य समिदाधानमुक्त्वा शौनक आह—गुरुरपि अग्नेः पश्चिमभूतले आसीत प्राङ्मुखः शिष्योऽप्याचार्याभिमुखो भवेदिति । तदर्थसंग्रहकृता जयन्तेनाप्युक्तम् । 'अथोभयोरप्यग्नेः पश्चाद्यथोपदेष्टुं शक्यं तथोपविशत्याचार्यः' इति । अत एव वृत्तौ कारिकायां प्रयोगपारिजाते जीर्णे प्रयोगरत्ने च मयि मेधामित्यादिभिः षण्मन्त्रैरग्न्युपस्थानमुक्त्वा दक्षिणं जान्वाच्य विधिवदुपसंगृह्याचार्यं ब्रूयात् 'अधीहि भो' इति प्रैष उक्तः नतूत्तरदेशगमनमुक्तम् । यत्त्विदानींतनप्रयोगरत्ने अग्नेरुत्तरतो गत्वा 'अधीहि भो' इति ब्रूयादित्युक्तं तत्पुनर्दक्षिणस्यां गमनानुक्तेः केनचित्प्रक्षिप्तमित्युन्नीयत इति दिक् ।

इत्युपनयनम् ।

पृ. ४० पं. २० अगमने इत्यस्य स्थाने—

यात्रार्थं गमने

पृ. ४० पं. २३ निमित्तानीत्यस्याग्रे—

अथ जातकर्मादिपुनरुपनयनान्तानां निमित्तानि पराशरः—

यः प्रत्यवसितो विप्रः प्रव्रज्यातो विनिर्गतः ।
अनाशकनिवृत्तश्च गार्हस्थ्यं च चिकीर्षति ॥
चरेत्त्रीणि च कृच्छ्राणि त्रीणि चान्द्रायणानि च ।
जातकर्मादिभिः सर्वैः संस्कृतः शुद्धिमाप्नुयात् ॥

वसिष्ठः—

संन्यस्य दुर्मतिः कश्चित्परावृत्तिं व्रजेद्यति ।
स कुर्यात्कृच्छ्रमश्रान्तः षण्मासान्प्रत्यनन्तरम् ॥

अत्र षाण्मासिकं विप्रस्य, चान्द्रायणत्रयं क्षत्रियस्य, कृच्छ्रत्रयं वैश्यस्येति विज्ञानेश्वरः । देशान्तरे गतस्याध्वदहिके कृते यद्यसौ पुनरायाति तदा विशेषमाह मदनरत्ने वृद्धमनुः—

जीवन्यदि समागच्छेद् घृतकुम्भे निवेश्य च ।
उद्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत् ॥
द्वादशाहं व्रतं कुर्यात्त्रिरात्रमथवास्य तु ।
स्नात्वोद्वहेत्ततो भार्यामन्यां वा तदभावतः । इति । इत्यधिकम् ।

पृ. ४२ पं. २३ गीतवादने इत्यस्याग्रे—

द्यूतं च जनवादं च परीवादं तथानृतम् । इति ।

जनवादं बहुजनसंवादः । इत्यधिकम् ।

पृ. ४२पं. २९

शिखाजटीत्यस्य स्थाने शिखामात्रजटी ।

पृ. ४३ पं. १२ ब्रह्मचारीत्यत्र—

ब्राह्मणो ब्रह्मचारी

पृ. ४४ पं. ९ गुरुरित्यस्याग्रे—

इत्यभिवादनम् । प्रसङ्गादभिवादनीयगुर्वादिस्वरूपं निरूप्यते । इत्यधि० ।

पृ. ४४ पं. १९ संज्ञेत्यस्य स्थाने—

संज्ञासंज्ञि ।

पृ. ४४ पं. २० विप्रसात्वेत्यस्य स्थाने—

विप्रस्यात्र ।

पृ. ४४ पं. २२ सिद्धिरित्यस्याग्रे—

क्षत्रियादिरपि वेदाध्ययनाभावे मनुवचनात्सिद्धिः । एवं च त्रैवर्णिकानां । इति पाठान्तरम् ।

पृ. ४८ पं. १९ इतीत्यस्याग्रे—

पञ्चोक्तानि तेनैव—

वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तरम् ॥

वित्तादिभिर्युक्तो हीनजातिरप्युत्कृष्टजातेर्मान्य इत्यर्थः ।

पृ. ४९ पं. ११ अवरमीमांसेत्यस्य स्थाने—

अध्वरमीमांसा ।

पृ. ४९ पं.१४ नह्याकाश०—अतोत्रेत्यन्तस्य स्थाने—

द्वितियशाखाध्ययनमित्यत्रैकत्वं व्यावर्तकं भवति अतो नात्र एक एव स्वाध्यायोऽध्येतव्य इत्यर्थः किंतु स्वाध्यायोऽध्येतव्य एवेत्यत्यन्तायोगव्यावृत्त्या साधारणो वाक्यार्थः । अत एव वसिष्ठेनोक्तम्—

पृ. ६० पं. १ प्रागग्रानित्यस्याग्रे–

दर्भानिति शेषः । इत्यधिकम् ।

पृ. ६१ पं. २० वेत्तेत्यस्याग्रे–

अद्रोह्यनपराधी । मेधावी धारणावान् । असूयकः परदोषवक्ता । शक्तः शुश्रूषायाम् । आप्तः अप्रतारकः । ज्ञानदो विद्याप्रदः । वित्तदः अर्पणपूर्वमर्थदाता । इत्यधिकम् ।

पृ. ६२ पं. ६ वाचरेदित्यस्य स्थाने–

वारमेत् ।

पृ. ६२ पं. १२ घोरकिल्बिषमित्यस्य स्थाने–

चौरकिल्बिषम् ।

पृ. ६२ पं. १९ इत्यर्थः इत्यस्याग्रे–

एतच्चेत्यधिकम् ।

पृ. ६३ पं. २९ इतीत्यस्याग्रे—

गार्ग्योऽपि–रात्रौ नवसु नाडीषु चतुर्थी यदि दृश्यते ।
रात्रौ यामद्वयादर्वाक् सप्तमी च त्रयोदशी ॥
प्रदोषः स तु विज्ञेयः सर्वविद्याविगर्हितः ।

पृ. ६४ पं. ९ समनन्तरम्–

संग्रहेऽपि–महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम् ।
मध्ये द्वियामयो रात्रौ नाधीयीत कदाचन ॥ इत्यधिकम् ।

पृ. ६४ पं. २६ सायंवेत्यत्र—

सायं वा द्विमुहूर्ता ।

पृ. ६४ पं. २७ यद्यनध्यायेत्यस्य स्थाने—

अनध्यायनिमित्ता ।

पृ. ६४ पं. २८ दृश्येतेत्यर्थ इत्यस्याग्रे–

अत्रापि त्रिमुहूर्ततिथिसत्त्वे सुतरामनध्याय इति सूच्यते । तथा च भविष्ये–उदयेऽस्तमये वाऽपि मुहूर्तत्रयगामि यत् ।
तद्दिनं तदहोरात्रमनध्यायविधौ विदुः ॥
केचिदाहुः क्वचिद्देशे यावत्तद्दिननाडिकाः ।
तावदेव त्वनध्यायो न तन्मिश्रे दिनान्तरे ॥ इति ।

तन्मुहूर्तत्रयगामिदिनं तिथिर्यस्मिन्नहोरात्रे तदहोरात्रमित्यर्थः । दिनान्तरे तिथ्यन्तरे ।

प्रतिपल्लेशमात्रेण कलामात्रेण चाष्टमी ।
दिनं दूषयते सर्वं सुरा गव्यघटं यथा ॥

इति वचनं तत्प्राच्याचारमूलकं ज्ञेयम् । इत्यधिकम् ।

पृ. ६६ पं. २२ तत्कामयतीत्यस्य स्थाने--

तत्कामयते इति ।

पृ. ५५ पं. २३ परिलिखने इत्यस्य स्थाने परिलिखिते ।

पृ. ६६ पं. २६ सवद्रा······इत्यस्य स्थाने--

सर्वराष्ट्रेषु ।

पृ. ६६ पं. १ श्राद्धभागेष्वित्यस्य स्थाने--

वेदभागेषु ।

पृ. ६७ पं. १२ समनन्तरम्—

अहोरात्रानुवृत्तौ वसिष्ठः—

कलायान्यसितान्भक्षान्यच्चान्यच्छ्राद्धिकं भवेत् ।
प्रतिगृह्याप्यनध्यायः ।। इति ।

पृ. ६७ पं. १८ स्वप्नान्तं मेहनादि इत्यस्य स्थाने--

स्वप्नान्तमोदयादिति ।

पृ. ६७ पं. २१।२२ प्राधानस्येत्यस्य स्थाने--

प्राधीतस्य ।

पृ. ६८ पं. १३ मृगमारभ्येत्यस्य स्थाने--

आर्द्रामारभ्य ।

पृ. ६८ पं. २६ नवश्राद्धीयमति इत्यस्य स्थाने--

नवश्राद्धीयामति ।

पृ. ६९ पं. २ स्थाने--

शक्रमुत्थापयेद्राजा विश्वश्रवणवासवैः ।

विश्वं वैश्वदेवमुत्तराषाढा वासवं धनिष्ठा । शक्रध्वजपातकालोऽपि पुराणे—

मासि भाद्रपदे राजन् शक्रयष्टिनिपातनम् । इति ।

पृ. ६९ पं. १९ वसिष्ठेनेत्यस्याग्रे--

यदि हस्ती संवत्सरं व्याघ्रश्चैव तथैति । अत्र व्याघ्रविषयेऽपि प्रथमारम्भो ग्राह्यः ।

उत्तरग्रन्थस्य मुद्रणावसर एव च.पुस्तकलाभात्तत्रस्थपाठान्तराणां मूल एव समावेशः कृत इत्युपरम्यते ।

म. गं. बाक्रे.

श्रीभगवंतभास्करे
मीमांसकश्रीनीलकंठभट्टविरचितः

# आचारमयूखः

( द्वितीयः )

बाक्रे इत्युपाह्वगंगाधरभट्टसुतमहादेवशर्मणा
संशोधितः ।




चौखम्बा संस्कृत प्रतिष्ठान
( प्राच्यभारती के प्रकाशक एवं वितरक )
३८ यू. ए., जवाहरनगर, बंगलो रोड
दिल्ली ११०००७

# आचारमयूखविषयानुक्रमः ।

इत्याचारमयूखविषयानुक्रमः ।

॥ श्रीभगवन्तभास्करे ॥

# आचारमयूखः ।

द्वितीयः २.

## मङ्गलाचरणम् ।

पादौ दिवाकरस्याहमवलम्बे मुहुर्मुहुः ।
यत्पादालम्बितं पद्मं पद्माऽऽरोहति संप्रति ॥ १ ॥

[ जज्ञे पितामहतनोः खलु कश्यपो य-
स्तस्मादजायत मुनिस्तु विभाण्डकाख्यः ।
तं पुत्रिणां धुरमरोपयदृष्यशृङ्ग-
स्तस्यान्वयेऽप्यजनि शृङ्गिवराभिधानः ॥ २ ॥

तस्मिन्वंशे महति वितते संगराख्ये नृपाणां
राजा कर्णः समजनि यथा सागरे शीतरश्मिः ।
कीर्त्या यस्य प्रथिततरया श्रोत्रपात्रेऽभिपूर्णे
कर्णस्यापि प्रविततकथा नावकाशं लभन्ते ॥ ३ ॥

विशोकाख्यदेवस्ततस्तत्सुतोऽभूद्विशोकीकृता येन सर्वा धरित्री ।
ततोऽप्यास राजाऽस्तशत्रुस्ततोऽभूद्रयाख्यो रयेणैव सर्वाहितघ्नः ॥४॥

बभूवाथ वैराटराजस्ततोऽभून्नृपो मेदिनीवल्लभो वीढराजः ।
नरब्रह्मदेवस्ततो मन्युदेवस्ततोऽभून्नृपश्चन्द्रपालाभिधानः ॥ ५ ॥

शिवगणाख्यनृपः समजन्यथो शिवगणाख्यपुरं प्रचकार यः ।
शिवगणेन समः सकलैर्गुणैः शिवशिवप्रथमो गणनासु यः ॥ ६ ॥

रोलिचन्द्र इति तत्तनयोऽभूत्कर्मसेननृपतिस्तमथानु ।
लोकपो नरहरिर्नृपराजो रामचन्द्र इति तत्तनुजातः ॥ ७ ॥

यशोदेवस्ततो जातस्ताराचन्द्रनृपस्ततः ।
चक्रसेनस्ततो राजा राजसिंहनृपो यतः ॥ ८ ॥

ततोऽप्यभूद्भूपतिसाहिदेवः स्वकीर्तिभिर्निर्जितदुग्धसिन्धुः ।
अभूत्ततः श्रीभगवन्तदेवः सदैव भाग्योदयवाञ्छितांशः ॥ ९ ॥

---

१ एतच्चिह्नान्तर्गताः श्लोकाः क. पुस्तके न दृश्यन्ते ।

यद्दानद्रविणाद्रिनिर्जितवपू रत्नाचलो लज्जया
दूरे स्तब्ध इलावृते निविशते नो यत्र पुंसां गतिः ।
किंच त्रस्यदरातिवामनयनानेत्राम्बुभिर्वर्धित-
स्तेजोऽग्निर्वडवामुखोत्थहुतभुक्तुल्यः कथं नो भवेत् ॥ १० ॥
आज्ञप्तस्तेन राज्ञा विबुधकुलमणिर्दाक्षिणात्यावतंसो
भट्टः श्रीनीलकण्ठः स्मृतिषु दृढमतिर्जैमिनीयेऽद्वितीयः ।
आज्ञामादाय मूर्ध्ना सविनयममुना तस्य सर्वान्निबन्धा-
न्दृष्ट्वा सम्यग्विविच्य प्रविततकिरणस्तन्यते भास्करोऽज्यम् ॥
संस्काराचारकालाः समुचितरचनाः श्राद्धनीती विवादो
दानोत्सर्गप्रतिष्ठा जगति जयकराः संगतार्थानुबद्धाः ।
प्रायश्चित्तं विशुद्धिस्तदनु निगदिता शान्तिरेवं क्रमेण
ख्याता ग्रन्थेऽत्र शुद्धे बुधजनसुखदा द्वादशैते मयूखाः ॥ १२ ॥
भगवन्तभास्कराख्ये ग्रन्थेऽस्मिन्शिष्टसंमते च ततः ।
आचारविधिमयूखः प्रतन्यते नीलकण्ठेन ॥ १३ ॥ ]
श्रुतीः स्मृतर्वीक्ष्य पुराणजातं तत्तन्निबन्धानपि सन्निबन्धान् ॥
चिरन्तनाचारचयं च बध्नात्यथाह्निकं संप्रति नीलकण्ठः ॥ १४ ॥
प्रतारकैरादृतमत्र किंचिन्मया तु निर्मूलतया तदुज्झितम् ।
ऊनोक्तिताऽतो नहि तेन किंचित्खपुष्पहीनाऽपचितिर्न हीयते ॥ १५ ॥
समूलनिर्मूलमपि व्यवस्थां विनादृतं यद्विषयस्य कैरपि ।
नानौषधैस्तद्वणिगापणस्थैर्भिषग्वरानुक्तगुणैः समं मतम् ॥ १६ ॥

---

## तत्र परिभाषा ।

कर्मप्रदीपे—यत्रोपदिश्यते कर्म कर्तुरङ्गं न तूच्यते ।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥
यत्र दिङ्नियमो न स्याज्जपहोमादिकर्मसु ।
तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री सौम्याऽपराजिता ॥
तिथितत्त्वे गौतमः—
रात्रावुदङ्मुखः कुर्याद्दैवं कार्यं सदैव हि ।
शिवार्चनं सदाऽप्येवं शुचिः कुर्यादुदङ्मुखः ॥
सदा दिवारात्रौ च । तत्रैव तन्त्रान्तरे—
यत्रैव भानुस्तु वियत्युदेति प्राचीं तु तां वेदविदो वदन्ति ।

ततोऽपरां पूजकपूज्ययोश्च सदागमज्ञाः प्रवदन्ति ता तु ॥

अत्र पूज्यपूजकान्तः प्राची आगमोक्तपूजायामेव, तत्परिभाषाया-मुक्तत्वात् । अन्यत्र तु सूर्योदयोपलक्षितैव ।

छन्दोगपरिशिष्टे—

आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः ।
तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता ॥

उपवीतशिखाबन्धनयोः पुरुषार्थत्वं क्रत्वर्थत्वं चोक्तं तत्रैव—

सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥

मार्कण्डेयपुराणे—

शिरःस्नातश्च कुर्वीत दैवं पित्र्यमथापि वा ।

धर्मप्रकाशे योगयाज्ञवल्क्यः—

आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च ।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥
अविदित्वा तु यः कुर्याद्याजनाध्यापनं जपम् ।
होममन्तर्जलादीनि तस्य चाल्पफलं भवेत् ॥

तत्रैवापस्तम्बः—

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥
त्रिमात्रस्तु प्रयोक्तव्यः कर्मारम्भेषु सर्वशः ।
तिस्रः सार्धाश्च कर्तव्या मात्रास्तत्त्वार्थचिन्तकैः ॥

बुधः—'न्यायागतेन द्रव्येण कर्माणि कुर्यात्' इति । ज्ञानस्य क्रत्वर्थत्वं छान्दोग्योपनिषदि 'यदेव विद्यया करोति श्रद्धया तदेव वीर्यवत्तरं भवति' इति उद्गीथोपासनाप्रकरणाधीतेनाप्यनेन यथा ज्ञानस्य सर्वकर्माङ्गत्वं भवति तथा निरणायि मयाऽध्ययनवादे ।

शाट्यायनिः—

दानमाचमनं होमं भोजनं देवतार्चनम् ।
प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥
आसनारूढपादो वा जान्वोर्वा जङ्घयोस्तथा ।
कृतावसक्थिको यस्तु प्रौढपादः स उच्यते ॥

---

१ योगं त' क. पाठः ।

कर्मप्रदीपे—पित्र्यमन्त्रानुद्रवणे आत्मालम्भे अवेक्षणे ।
अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥
मार्जारमूषकस्पर्शे आक्रुष्टे क्रोधसंभवे ।
निमित्तेष्वत्र सर्वत्र कर्म कुर्वन्नपः स्पृशेत् ॥
तथा च तैलयन्त्रेषु शब्दो यावत्प्रवर्तते ।
तावत्कर्म न कर्तव्यं शूद्रान्त्यपतितस्य च ॥

मार्कण्डेयः—
संकल्पं च यथा कुर्यात्स्नानदानव्रतादिके ।
अन्यथा पुण्यकर्माणि निष्फलानि भवन्ति च ॥

यथा यथावदित्यर्थः ।

ब्राह्मे—ब्रह्मण्याधाय कर्माणि निःसङ्गः कामवर्जितः ।
प्रसन्नेनैव मनसा कुर्वाणो याति तत्पदम् ॥

'यत्करोषि' इति गीताऽपि कर्मणामीश्वरप्रीत्यर्थत्वे प्रमाणम् ।

हारीतः—अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम् ।
नानुष्ठेयं मनुष्यैस्तु तदुक्तं कर्म आचरेत् ॥

वराहपुराणे—
स्नानं संध्यातर्पणादि जपहोमामरार्चनम् ।
उपवासवता कार्यं सायंसंध्याहुतीर्विना ॥

चतुर्विंशतिमते—
इक्षूनपः फलं मूलं ताम्बूलं पय औषधम् ।
भक्षयित्वाऽपि कर्तव्याः स्नानदानादिकाः क्रियाः ॥

॥ इति परिभाषा ॥

---

## अथ प्रबोधः ।

मनुः—
(प्रबोधः ।) ब्राह्मे मुहूर्ते चोत्थाय धर्मार्थावनुचिन्तयेत् ।
कायक्लेशांश्च तन्मूलान्वेदतत्वार्थमेव च ॥

वेदतत्त्वार्थ ईश्वरः 'ध्यायीत परमेश्वरम्' इति कूर्मपुराणात् । 'न्यायप्रतीतोऽर्थः' इति श्रीदत्तः । ब्राह्मो मुहूर्तो रात्रेरुपान्त्यो मुहूर्तः । तथा च प्रयोगपारिजाते पुराणे रात्रिगतमुहूर्तपञ्चदशकं प्रक्रम्य—

---

१ बुध्येत ख. पाठः ।

ब्राह्मो नाभस्वतश्चैव मुहूर्तः क्रमशो निशि । इति ।
रात्रेस्तु पश्चिमो यामो मुहूर्तो ब्राह्म उच्यते ।
इति पितामहोक्तस्तु वेदाभ्यासार्थः ।
अत्र निद्रायां प्रायश्चित्तं स्मृतिरत्नावल्याम्—
ब्राह्मे मुहूर्ते या निद्रा सा पुण्यक्षयकारिणी ।
तां करोति द्विजो मोहात्पादकृच्छ्रेण शुध्यति ॥
शौनकः—अस्तं गच्छति तिग्मांशावव्याधिगत एव यः ।

प्रभाते निद्रितस्य प्रायश्चितम् ।

स्वपेत्स वाग्यतः स्थित्वा समस्तामपि तां निशाम् ॥
प्रातः स्नात्वा शुचिर्भूत्वा 'येन सूर्यादि' पञ्चभिः ।
ऋग्भिर्देवमुपस्थाय सवितारं विशुध्यति ॥
सूर्योदये स्वपेत्सोऽपि पूर्ववत्सकलं दिनम् ।
वाचंयमो भवेत्स्थित्वा चास्तं यातं दिवाकरम् ॥
ऋग्भिस्तु "यस्य ते विश्वे" त्यादिभिः पञ्च पूर्वकाः ।
उत्तराभिश्चतसृभिरुपतिष्ठेत शुद्धये ॥

अत्र स्मरणीयमाह व्यासः—

प्रातः स्मरणम् ।

महर्षिर्भगवान्व्यासः कृत्वेमां संहितां पुरा ।
श्लोकैश्चतुर्भिर्धर्मात्मा पुत्रमध्यापयच्छुकम् ॥
मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि यान्ति यास्यन्ति चापरे ॥
हर्षस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥
ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥
न जातु कामान्न भयान्न लोभा-
द्धर्मं त्यजेज्जीवितस्याऽपि हेतोः ।
धर्मो नित्यः सुखदुःखे त्वनित्ये
जीवो नित्यो हेतुरस्य त्वनित्यः ॥
इमां भारतसावित्रीं प्रातरुत्थाय यः पठेत् ।
स भारतफलं प्राप्य परं ब्रह्माधिगच्छति ॥
स एव—प्रातः स्मरामि भवभीतिमहार्तिशान्त्यै
नारायणं गरुडवाहनमब्जनाभम् ।

ग्राहाभिभूतवरवारणमुक्तिहेतुं
चक्रायुधं तरुणवारिजपत्रनेत्रम् ॥
प्रातर्नमामि मनसा वचसा च मूर्ध्ना
पादारविन्दयुगलं परमस्य पुंसः ।
नारायणस्य नरकार्णवतारणस्य[1]
पारायणप्रणवविप्रपरायणस्य ॥
प्रातर्भजामि भजतामभयंकरं तं
प्राक् सर्वजन्मकृतपापभयापहत्यै ।
यो ग्राहवक्त्रपतिताङ्घ्रिगजेन्द्रघोर-
शोकप्रणाशमकरोद्धृतशङ्खचक्रः ॥
श्लोकत्रयमिदं पुण्यं प्रातः प्रातः पठेन्नरः ।
लोकत्रयगुरुस्तस्मै दद्यादात्मपदं हरिः ॥

सद्धर्मचिन्तामणौ—

प्रातः स्मरामि गणनाथमनाथबन्धुं
सिन्दूरपूर्णपरिशोभितगण्डयुग्मम् ।
उद्दण्डविघ्नपरिखण्डनचण्डदण्ड-
माखण्डलादिसुरनायकवृन्दवन्द्यम् ॥
प्रातर्नमामि चतुराननवन्द्यमान-
मिच्छानुकूलमखिलं च वरं दधानम् ।
तं तुन्दिलं द्विरसनाधिपयज्ञसूत्रं
पुत्रं विलासचतुरं शिवयोः शिवाय ॥
प्रातर्भजाम्यभयदं खलु भक्तशोक-
दावानलं गणविभुं वरकुञ्जरास्यम् ।
अज्ञानकाननविनाशनहव्यवाह-
मुत्साहवर्धनमहं सुतमीश्वरस्य ॥
श्लोकत्रयमिदं पुण्यं सदा साम्राज्यदायकम् ।
प्रातरुत्थाय सततं यः पठेत्प्रयतः पुमान् ॥
स सर्वव्याधिनिर्मुक्तः परं सुखमवाप्नुयात् ॥
प्रातः स्मरामि खलु तत्सवितुर्वरेण्यं
रूपं हि मण्डलमृचो यजुषां[2] निधानम् ।

१ नारकस्येति क. पाठः । २ ऽथ तनुर्यजूंषि ख. पाठः ।

सामानि यस्य किरणाः प्रभवादिहेतुं
ब्रह्माहरात्मकमलक्ष्यमचिन्त्यरूपम् ॥
प्रातर्नमामि तरणिं तनुवाङ्मनोभि-
र्ब्रह्मेन्द्रपूर्वकसुरैर्नुतमर्चितं च ।
वृष्टिप्रमोचनविनिग्रहहेतुभूतं
त्रैलोक्यपालनपरं त्रिगुणात्मकं च ॥
प्रातर्भजामि सवितारमनन्तशक्तिं
पापौघशत्रुभयरोगहरं परं च ।
तं सर्वलोककलनात्मककालमूर्तिं
गोकण्ठबन्धनविमोचनमादिदेवम् ॥
श्लोकत्रयमिदं भानोः प्रातः प्रातः पठेत्तु यः ।
स सर्वव्याधिनिर्मुक्तः परमं सुखमाप्नुयात् ॥
प्रातः स्मरामि शरदिन्दुकरोज्ज्वलाभां
सद्रत्नवत्सकलकुण्डलहारभूषाम् ।
दिव्यायुधोर्जितसुनीलसहस्रहस्तां
रक्तोत्पलाभचरणां भवतीं परेशाम् ॥
प्रातर्नमामि महिषासुरचण्डमुण्ड-
शुम्भासुरप्रमुखदैत्यविनाशदक्षाम् ।
ब्रह्मेन्द्ररुद्रमुनिमोहनलोलशीलां[1]
चण्डीं समस्तसुरमूर्तिमनेकरूपाम् ॥
प्रातर्भजामि भजतामभिलाषदात्रीं
धात्रीं समस्तजगतां दुरितापहन्त्रीम् ।
संसारबन्धनविमोचनहेतुभूतां
मायां परां समधिगम्य परस्य विष्णोः ॥
श्लोकत्रयमिदं देव्याश्चण्डिकायाः पठेन्नरः ।
सर्वान्कामानवाप्नोति विष्णुलोके महीयते ॥
प्रातः स्मरामि भवभीतिहरं सुरेशं
गङ्गाधरं वृषभवाहनमम्बिकेशम् ।
खट्वाङ्गशूलवरदाभयहस्तमीशं
संसाररोगहरमौषधमद्वितीयम् ॥

---

१ शीललोलामिति क. पाठः ।

प्रातर्नमामि गिरिशं गिरिजार्धदेहं
सर्गस्थितिप्रलयकारणमादिदेवम् ।
विश्वेश्वरं विजितविश्वमनोभिरामं
संसाररोगहरमौषधमद्वितीयम् ॥
प्रातर्भजामि शिवमेकमनन्तमाद्यं
वेदान्तवेद्यमनघं पुरुषं महान्तम् ।
नामादिभेदरहितं षड्भावशून्यं
संसाररोगहरमौषधमद्वितीयम् ॥
प्रातः समुत्थाय शिवं विचिन्त्य श्लोकत्रयं येऽनुदिनं पठन्ति ।
ते दुःखजातं बहुजन्मसंचितं हित्वा पदं यान्ति तदेव शंभोः ॥

वामनपुराणे—

ब्रह्मा मुरारिस्त्रिपुरान्तकारी भानुः शशी भूमिसुतो बुधश्च ।
गुरुश्च शुक्रः शनिराहुकेतवः कुर्वन्तु सर्वे मम सुप्रभातम् ॥
सनत्कुमारः सनकः सनन्दनः सनातनोऽप्यासुरिपिङ्गलौ च ।
सप्त स्वराः सप्त रसातलानि कुर्वन्तु सर्वे मम सुप्रभातम् ॥
[ सप्तार्णवाः सप्त कुलाचलाश्च सप्तर्षयो द्वीपवनानि सप्त ।
भूरादिकृत्वा भुवनानि सप्त कुर्वन्तु सर्वे मम सुप्रभातम् ॥
पृथ्वी सगन्धा सरसास्तथापः स्पर्शी च वायुर्ज्वलनं च तेजः ।
नभः सशब्दं महसा सहैव कुर्वन्तु सर्वे मम सुप्रभातम् ॥
इत्थं प्रभाते परमं पवित्रं पठेत्स्मरेद्वा शृणुयाच्च तद्वत् ।
दुःस्वप्ननाशस्त्विह सुप्रभातं भवेच्च नित्यं भगवत्प्रसादात् ॥
पुण्यश्लोको नलो राजा पुण्यश्लोको [3]युधिष्ठिरः ।
पुण्यश्लोका च वैदेही पुण्यश्लोको [2]जनार्दनः ॥
अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते चिरजीविनः ॥
सप्तैतान्संस्मरे[1]न्नित्यं मार्कण्डेयमथाष्टमम् ।
जीवेद्वर्षशतं [4]साग्रमपमृत्युविवर्जितः ॥
अहल्या द्रौपदी सीता तारा मन्दोदरी तथा ।
पञ्चकं ना स्मरेन्नित्यं मानहान्या न बाध्यते ॥

---

१ नित्यमिति ख. पाठः । २ जनार्दनः क. पाठः । ३ युधिष्ठिरः क. पाठः । ४ सोऽपि सर्वव्याधि॰ इति क. पाठः ।

मदनपारिजाते स्कान्दे—

अविमुक्तचरणयुगलं दक्षिणामूर्तेश्च कुक्कुटचतुष्कम् ।
स्मरणमपि वाराणस्या निहन्ति दुःस्वप्नमपशकुनं च ॥

प्रयोगपारिजाते भूप्रार्थना—

समुद्रवसने देवि पर्वतस्तनमण्डले ।
विष्णुपत्नि नमस्तेऽस्तु पादस्पर्शं क्षमस्व नः ॥

कात्यायनः—

श्रोत्रियं सुभगं गा च अग्निमग्निचितिं तथा ।
प्रातरुत्थाय यः पश्येदापद्भ्यः स प्रमुच्यते ॥
रोचनं चन्दनं गन्धान् मृदङ्गं दर्पणं मणिम् ।
गुरुमग्निं रविं पश्येन्नमस्येत्प्रातरेव हि ॥
पापिष्ठं दुर्भगं चान्यं नग्नमुत्कृत्तनासिकम् ।
प्रातरुत्थाय यः पश्येत्तत्कलेरुपलक्षणम् ॥

नग्नं बालकव्यतिरिक्तमिति नृसिंहः ।

॥ इति प्रबोधविधिः ॥

---

## अथ मूत्रपुरीषोत्सर्गविधिः ।

अङ्गिराः—

उत्थाय पश्चिमे रात्रेस्तत आचम्य चोदकम् ।
अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा ॥
कुर्यान्मूत्रपुरीषे तु शुचौ देशे समाहितः ॥ इति ।

तृणे विशेषमाह यमः—

अयज्ञियैरनार्द्रैश्च तृणैः संछाद्य मेदिनीम् । इति ।

पराशरः—ततः प्रातः समुत्थाय कुर्याद्विण्मूत्रमेव च ।
नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः ॥
तिरस्कृत्योच्चरेत्काष्ठं पत्रं लोष्ठं तृणानि वा ।
नियम्य प्रयतो वाचं संवीताङ्गोऽवगुण्ठितः ॥ इति ।

तिरस्कृत्यान्तर्धाय । संवीताङ्ग आच्छादितदेहः । उच्चरेत्पुरीषाद्युत्सृजेदित्यर्थः । अवगुण्ठितः प्रावृतशिराः ।

---

१ चारणस्येति ख. पाठः । २ चितमिति ख. पाठः ।

II-2

विष्णुः—'घ्राणास्ये वाससा समावेष्टयित्वा मृद्धानीं ग्रीवायामासज्योच्चरेत्' इति । मृद्धानीं मृत्तिकाधानार्थं शाटीम् ।

याज्ञवल्क्यः—

दिवा संध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।
कुर्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुखः ॥

कर्णस्तु दक्षिणः ।

कर्त्रङ्गानामनुक्तौ तु दक्षिणाङ्गं भवेत्तथा ।

इति स्मृत्यर्थसारोक्तेः । अङ्गिराः—

कृत्वा यज्ञोपवीतं तु पृष्ठतः कण्ठलम्बितम् ।
विण्मूत्रं तु गृही कुर्याद्यद्वा कर्णे समाहितः । इति ।

सांख्यायनः—

'यद्येकवस्त्रो यज्ञोपवीतं कर्णे कृत्वा मूत्रपुरीषोत्सर्गं कुर्यात्' इति ।

'पवित्रं दक्षिणे कर्णे कृत्वा विण्मूत्रमुत्सृजेत्'

इति हारीतोक्तेः पवित्रमपि दक्षिणे कर्णे स्थाप्यम् ।

दर्भस्थानान्यपरार्के—

नीवीमध्ये तु ये दर्भा ब्रह्मसूत्रे च ये कृताः ।
पवित्रांस्तान्विजानीयाद्ये च कर्णे च दक्षिणे ॥

अत्र विशेषमाह यमः—

प्रत्यङ्मुखस्तु पूर्वाह्णेऽपराह्णे प्राङ्मुखस्तथा ।
उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुखः ॥

यत्तु पूर्वोक्तयाज्ञवल्कीयसामान्यं तदनेन बाध्यते, तस्य मध्याह्ने निशायां च सावकाशत्वात् । यत्त माधवः—'सदैवोदङ्मुखः कुर्यात्' इति देवलवाक्यस्थसदाशब्दात् प्राङ्मुखप्रत्यङ्मुखशब्दौ सूर्यानभिमुखपराविति तच्चिन्त्यं सदाशब्दस्यावश्यकत्वबोधकत्वेनाप्युपपत्तेः । यदपि देवणभट्टः याज्ञवल्क्ययमवाक्यार्थयोर्विकल्पमाह तदपि चिन्त्यम्, सामान्यविशेषशास्त्रयोर्विकल्पायोगात् ।

यत्तु देवलः—

विण्मूत्रमाचरेन्नित्यं संध्यासु परिवर्जयेत् । इति

तन्निरुद्धेतरविषयमिति माधवः ।

मनुः— छायायामन्धकारे च रात्रावहनि वा द्विजः ।

यथासुखमुखः कुर्यात् प्राणबाधाभयेषु च ॥

रात्रौ तु गृहेऽपि कुर्यात् । तदाहापस्तम्बः—'अस्तमिते बहिर्ग्रामा-दाराद्वावसथाद्वा मूत्रपुरीषयोः कर्म वर्जयेत्' इति । आराद्दूरात् ।

मदनरत्ने हारीतः—

उच्चारे मैथुने चैव प्रस्रावे दन्तधावने ।
श्राद्धे भोजनकाले च षट्सु मौनं समाचरेत् ॥

उच्चारः पुरीषोत्सर्गः । प्रस्रावो मूत्रोत्सर्गः ।

आचारप्रदीपे अङ्गिराः—

संध्ययोरुभयोर्जाप्ये भोजने दन्तधावने ।
पितृकार्ये च दैवे च तथा मूत्रपुरीषयोः ॥
गुरूणां संनिधौ दाने योगे चैव विशेषतः ।
एषु मौनं समातिष्ठन्स्वर्गं प्राप्नोति मानवः ॥

स एव—

आहारं तु रहः कुर्याद्विहारं चैव सर्वदा ।
गुप्ताभ्यां लक्ष्म्युपेतः स्यात्प्रकाशे हीयते श्रिया ॥

आपस्तम्बश्च—'नच सोपानत्को मूत्रपुरीषे कुर्यात्' इति ।

सायणीये—

करस्थोदकपात्रश्च[1] कुर्यान्मूत्रपुरीषके ।
तज्जलं मूत्रसदृशं सुरापानेन तत्समम् ॥

प्रयोगपारिजाते—

गृहीत्वा जलपात्रं तु विण्मूत्रं कुरुते यदि ।
तज्जलं मूत्रसदृशं पीत्वा चान्द्रायणं चरेत् ॥
मलमूत्रं त्यजेद्विप्रो विस्मृत्योपवीतधृक् ।
उपवीतं तदुत्सृज्य गृह्यादन्यन्नवं तदा ॥ इति ।

॥ इति मूत्रपुरीषोत्सर्गविधिः ॥

## अथ शौचम् ।

भरद्वाजः—

अथापकृष्य विण्मूत्रे लोष्ठकाष्ठतृणादिना ।
उदस्तवासा उत्तिष्ठेद्दृढं विधृतमेहनः ॥

१ क. नास्ति ।

याज्ञवल्क्योऽपि—

गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥

यम—आहरेन्मृत्तिकां विप्रः कूलात्ससिकतां तथा । इति ।

स एव— वापीकूपतडागेषु नाहरेद्बाह्यमृत्तिकाम् ।
आहरेज्जलमध्यात्तु परतो मणिबन्धनात् ॥

एतदारण्यकविषयम् । तथा च स्मृतिचिन्तामणौ—

अन्तर्जलगता ग्राह्या परतो मणिबन्धनात् ।
आरण्यकेषु त्वेवं स्याद्ग्राम्येष्वाचरणं न तु ॥

मनुः— यस्मिन्देशे तु यत्तोयं या च यत्रैव मृत्तिका ।
सैव तत्र प्रशस्ता स्यात्तया शौचं विधीयते ॥

माथुलः—तीर्थे शौचं न कुर्वीत कुर्वीतोद्धृतवारिणा ।
रत्निमात्रं जलं त्यक्त्वा कुर्याच्छौचमनुद्धृते ।
पश्चात्तच्छोधयेत्तीर्थं त्वन्यथा त्वशुचिर्भवेत् ॥

आह विवस्वान्—

अक्षमात्रप्रमाणास्तु लिङ्गशौचे मृदः स्मृताः ।

दक्षोऽपि—लिङ्गे तु मृत्समाख्याता त्रिपर्वा पूर्यते यया ।

शौनकः—आर्द्रामलकमात्रा वा मूत्रशौचे तु मृत्तिका । इति ।

अङ्गिराः—प्रथमा प्रसृतिर्ज्ञेया द्वितीया च तदर्धिका ।
तृतीया मृत्तिका ज्ञेया त्रिभागकरपूरणी ॥ इति ।

वसिष्ठः—एका लिङ्गे करे तिस्र उभयोर्मृत्तिकाद्वयम् ।
मूत्रशौचं समाख्यातं शुक्रे तु द्विगुणं भवेत् ॥

शौनकः—मूत्रात्तु द्विगुणं शुक्रे मैथुने त्रिगुणं भवेत् ।

विट्शौचे मृत्संख्यामाह दक्षः—

तिस्रोऽपाने दशैकस्मिन्नुभयोः सप्त मृत्तिकाः ।

यत्तु वसिष्ठः—

पञ्चापाने दशैकस्मिन्नुभयोः सप्त मृतिकाः । इति ।

यदपि यमः—

द्वे लिङ्गे मृतिके देये गुदे पञ्च करे दश ।
उभयोः सप्त दातव्याः पुनरेका गुदे तथा ॥ इति ।
तत्-अर्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता ।

द्वितीया च तृतीया च तदर्धार्धा प्रकीर्तिता ॥

इति विष्णूक्तालपपरिमाणाभिप्रायम् ।

यदपि शङ्खः—

मेहने मृत्तिकाः सप्त लिङ्गे द्वे परिकीर्तिते ।

शौचे मृद्ग्रहण-संख्या । एकस्मिन्विंशतिर्हस्ते द्वयोर्ज्ञेयाश्चतुर्दश ॥

तिस्रस्तु मृत्तिका ज्ञेयाः कृत्वा तु नखशोधनम् ।

तिस्रस्तु पादयोर्देयाः शौचकामस्य नित्यशः ॥

एतच्छौचं गृहस्थानां तथा गुरुनिवासिनाम् ।

द्विगुणं स्याद्वनस्थानां यतीनां त्रिगुणं भवेत् ॥ इति ।

तदपि पूर्वोक्तालपपरिमाणलेपबाहुल्ययोः समुच्चये ज्ञेयम् ।

दक्षः— षट्कृत्वो नखशुद्धौ तु देयाः शौचेप्सुना मृदः ।

मनुः— एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ।

त्रिगुणं तु वनस्थानां यतीनां तु चतुर्गुणम् ॥

पितामहः—

न यावदुपनीयन्ते द्विजाः शुद्धास्तथाऽङ्गनाः ।

गन्धलेपक्षयकरं शौचमेषां विधीयते ॥

आदित्यपुराणेऽपि—

स्त्रीशूद्रयोरर्धमानं शौचं प्रोक्तं मनीषिभिः ।

दिवाशौचस्य निश्यर्धं पथि पादो विधीयते ।

आर्तः कुर्याद्यथाशक्ति शक्तः कुर्याद्यथोदितम् ॥

वृद्धपाराशरः—

उपविष्टश्च विण्मूत्रं कर्तुं यस्तु न विन्दति ।

स कुर्यादर्धशौचं तु स्वस्य शौचस्य सर्वदा ॥ इति ।

बौधायनः—

देशं कालं तथाऽऽत्मानं द्रव्यं द्रव्यप्रयोजनम् ।

उपपत्तिमवस्थां च ज्ञात्वा शौचं प्रकल्पयेत् ॥ इति ।

मनुः— यावन्नापैत्यमेध्याक्तो गन्धो लेपश्च तत्कृतः ।

तावन्मृद्वारि चादेयं सर्वासु द्रव्यशुद्धिषु ॥

आश्वलायनः—

लिङ्गशौचं पुरा कार्यं गुदशौचं ततः परम् ॥ इति ।

देवलः— धर्मविद्दक्षिणं हस्तमधः शौचे न योजयेत् ।
तथा च वामहस्तेन नाभेरुर्ध्वं न शोधयेत् ॥

ब्रह्माण्डे—उदङ्मुखो दिवा कुर्याद्रात्रौ चेद्दक्षिणामुखः ॥ इति ।

ऋष्यशृङ्गः—

धाराशौचं न कर्तव्यं शौचशुद्धिमभीप्सुना ।
चुलकेनैव कर्तव्यं हस्तशुद्धिविधानतः ॥

अङ्गिराः—मूत्रोत्सर्गं द्विजः कृत्वा न कुर्याच्छौचमात्मनः ।
मोहाद्भुङ्क्ते त्रिरात्रेण जलं पीत्वा विशुध्यति ॥

अत्र भोजनस्थाने जलपानम् ।

भुञ्जानस्य गुदस्रावे बृहस्पतिः—

पूर्वं कृत्वा च शौचं तु ततः पश्चादुपस्पृशेत् ।
ततः कृत्वोपवासं च पञ्चगव्येन शुध्यति ॥

शौचस्य क्रत्वर्थत्वं पुरुषार्थत्वं चाह दक्षः—

शौचे यत्नः सदा कार्यः शौचमूलो यतो द्विजः ।
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः ॥

---

## अथ शारीरमलशौचम् ।

मनुः— वसा शुक्रमसृङ् मज्जा मूत्रं विट्कर्णविण्नखाः ।
श्लेष्माश्रु दूषिका स्वेदो द्वादशैते नृणां मलाः ॥

दूषिका नेत्रमलम् ।

विण्मूत्रोत्सर्गशुद्ध्यर्थं मृद्वार्यादेयमर्थवत् ।
दैहिकानां मलानां च शुद्धिषु द्वादशस्वपि ॥

बौधायनः—

आददीत मृदः पञ्च षट्सु पूर्वेषु शुद्धये ।
उत्तरेषु तु षट्स्वद्भिः केवलाभिर्विशुध्यति ॥ इति ।

परकीयस्पर्शे देवलः—

मानुषास्थि वसा विष्ठा आर्तवं मूत्ररेतसी ।
मज्जानं शोणितं वाऽपि परस्य यदि संस्पृशेत् ॥
स्नात्वाऽपमृज्य चैलादिनाचम्य स शुचिर्भवेत् ।
तान्येव स्वानि संस्पृश्य पुनः स्यात्परिमार्जनम् ॥

विशेषमाह विष्णुः—'नाभेरधस्तात्प्रबाहुषु च कायिकैर्मलैः सुराभिर्म-

द्यैर्वोपहतो मृत्तोयैस्तदङ्गं प्रक्षालनाच्छुध्येत् अन्यत्रोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य स्नानेन इन्द्रियेषूपहतेपूपोष्य स्नात्वा पञ्चगव्येन'

मनुः— मूत्रे तिस्रः पादयोस्तु हस्तयोस्तिस्र एव तु ।
मृदः पञ्चदशामेध्ये हस्तादीनां विशेषतः ॥
एतदात्मीयमूत्रादिसंस्पर्शन उदाहृतम् ।
परस्य शोणितस्पर्शे रेतोविण्मूत्रजे तथा ।
चतुर्णामपि वर्णानां द्वात्रिंशन्मृत्तिकाः स्मृताः ॥

स एव— ऊर्ध्वं नाभेर्यानि खानि तानि मेध्यानि सर्वशः ।
यान्यधस्तादमेध्यानि देहाच्चैव मलाश्चुताः ॥

यथोक्तशौचाकरणे प्रायश्चित्तमुक्तं स्मृतिरत्नावल्याम्—
गायत्र्यष्टशतं चैव प्राणायामत्रयं तथा ॥ इति ।

यत्तु व्यासः—
अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ इति ।

तद्यथोक्तशौचे कृतेऽप्यात्मसंतोषाभावे द्रष्टव्यम् ।

॥ इति शारीरमलशौचम् ॥

## अथाचमनम् ।

मनुः—

आचमननिमित्तानि । कृत्वा मूत्रं पुरीषं वा खान्याचान्त उपस्पृशेत् ।
वेदमध्येष्यमाणश्च अन्नमश्नंश्च सर्वदा ॥ इति ।

आपस्तम्बः—'मूत्रपुरीषान्नलेपान्नशेषलेपा रेतसश्च यो लेपस्तान्प्रक्षाल्य पादौ चाचम्य प्रयतो भवति'

आचमनान्तरे देवलः—
रेतोमूत्रशकृन्मोक्षे भोजने च परिश्रमे ।
उच्छिष्टं मानवं स्पृष्ट्वा भोज्यं चापि तथाविधम् ॥

आचामेदिति शेषः ।

बृहस्पतिः—
अधोवायुसमुत्सर्गे आक्रन्दे क्रोधसंभवे ।
मार्जारमूषकस्पर्शे प्रहासेऽनृतभाषणे ।

१ पीत्वा योऽध्ये' क. पाठः ।

निमित्तेष्वेषु धर्मार्थं कर्म कुर्वन्नुपस्पृशेत् ॥

कर्म कुर्वन्काकादिदर्शने आचामेत् इति । स्मृत्यर्थसारे ।

आचारादर्शे संवर्तः—

मार्जारं रजकं वेणं धीवरं नटमेव च ।
एतान्दृष्ट्वा नरो मोहादाचामेत्प्रयतोऽपि सन् ॥

कौर्मे— चण्डालम्लेच्छसंभाषे स्त्रीशूद्रोच्छिष्टभाषणे ।
उच्छिष्टं पुरुषं स्पृष्ट्वा भोज्यं चापि तथाविधम् ॥
आचामेदश्रुपाते च लोहितस्य तथैव च ।
अग्नेर्गवामथालम्भे स्पृष्ट्वा प्रयतमेव वा ॥
स्त्रीणामथात्मनः स्पर्शे नीवीं वा परिधाय च ॥ इति ।

आपस्तम्बः—'स्वप्ने क्षवथौ सिंघाणिकायाश्चालम्भे लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालम्भे महापथं गत्वाऽमेध्यं चोपस्पृश्याप्रयतं च मनुष्यं नीवीं परिधायाऽप उपस्पृशेद् आर्द्रं वा शकृदोषधीर्भूमिं वा' क्षवथुः क्षुतम् । सिङ्घाणिका नासामलम् । आर्द्रमिति शकृदादिभिः संबध्यते । शकृद्गोमयम् ।

यमः— उत्तीर्योदकमाचम्य अवतीर्य तथैव च ।

दक्षः— स्नानादनन्तरं तावदुपस्पर्शनमिष्यते ।

प्रजापतिः—

उपक्रमे विशिष्टस्य कर्मणः प्रयतोऽपि सन् ।

आचामेदिति शेषः ।

वसिष्ठः—कृत्वा चावश्यकार्याणि आचामेच्छौचवित्तमः ।

मार्कण्डेयपुराणे—

देवार्चनादिकार्याणि तथा गुर्वभिवादनम् ।
कुर्वीत सम्यगाचम्य तद्वदेव भुजिक्रियाम् ॥

हरीतः—'देवतामभिगन्तुकाम आचामेत्'

शातातपः—

आचामेच्चर्वणे नित्यं मुक्त्वा ताम्बूलचर्वणम् ।
ओष्ठौ विलोमकौ स्पृष्ट्वा वासो विपरिधाय च ॥

॥ इत्याचमननिमित्तानि ॥

बृहस्पतिः—

सकृदाचमन-निमित्तानि।

प्रचरन्नन्नपानेषु यदोच्छिष्टमुपस्पृशेत्।
भूमौ निधाय तद्द्रव्यमाचान्तः प्रचरेत्पुनः।

निधाय त्यक्त्वा।

तैजसविषये कौर्मे—

तैजसं वै समादाय यद्युच्छिष्टो भवेद्द्विजः।
भूमौ निक्षिप्य तद्द्रव्यमाचम्याभ्युक्षयेत्तु तत्॥ इति।

यत्तु हेमाद्रिः—'परिवेषणं कुर्वन्नुच्छिष्टस्पृष्टस्तदन्नपानादिकं भूमौ निधायाचम्य तदभ्युक्ष्य पुनस्तदादाय प्रचरेत्' इत्याह। तन्न, अत्र भूमौ निधानमात्रस्योक्तेः पुनरादाने मानाभावात्।

यत्तु मनुः—

उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथंचन।
अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात्॥ इति।

तल्लघुवस्तुविषयमिति मेधातिथिः। निधानायोग्यवस्त्रादिविषयमिति चन्द्रिकायाम्। तदेतच्चिन्त्यम्।

यद्यमत्रं समादाय भवेदुच्छेषणान्वितः।
अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात्॥
वस्त्रादिषु विकल्पः स्यात्तत्संस्पृष्ट्वा चैव मेव हि।

इति कौर्मवाक्यादेव व्यवस्थोक्तेः। काष्ठपात्रे विशेषमाह निधानं प्रकृत्य बौधायनः—'एतदेव विपरीतममत्रे वानस्पत्ये विकल्पः'

पक्वान्नमादाय मूत्रादिकरणे विशेषमाह मार्कण्डेयः—

पक्वान्नेन गृहीतेन मूत्रोच्चारं करोति यः।
अनिधायैव तद्द्रव्यमङ्के कृत्वा समाश्रितम्।
शौचं कृत्वा यथान्यायमुपस्पृश्य यथाविधि।
अन्नमभ्युक्षयेच्चैव उद्धृत्यार्कस्य दर्शयेत्
त्यक्त्वाग्रमात्रं वा तस्माच्छेषं शुद्धिमवाप्नुयात्॥

यत्तु श्लोकापस्तम्बः—

भूमौ निक्षिप्य तद्द्रव्यं शौचं कृत्वा यथाविधि।
उत्सङ्गापन्नपक्वान्न उपस्पृश्य ततः शुचिः॥ इति।

तदशक्तविषयम् (?)।

अरण्येऽनुदके रात्रौ चोरव्याघ्राकुले पथि ।
कृत्वा मूत्रं पुरीषं तु द्रव्यहस्तो न दुष्यति ॥

इति बृहस्पतिस्मरणात् ।

स्मृत्यर्थसारे—'परिवेषणे रजोदृष्टौ तत्स्पृष्टान्नस्य त्यागः । अन्नाधारे चण्डालसूतिकोदक्यादिस्पृष्टे च त्याग एव । रजकादिस्पृष्टे जलेनाप्लाव्याग्निमर्कं वा स्पृशेत्'। इति सकृदाचमननिमित्तानि ।

द्विराचमननिमित्तान्याह आपस्तम्बः[1]—

द्विराचमननिमित्तानि ।

स्नात्वा पीत्वा क्षुते सुप्ते भुक्ते रथ्योपसर्पणे ।
आचान्तः पुनराचामेद्वासो विपरिधाय च ॥

व्यासः—दाने भोजनकाले च संध्ययोरुभयोरपि ।
आचान्तः पुनराचामेज्जपहोमार्चनेषु च ॥

पैठीनसिः—'कृतमूत्रपुरीषः पञ्चनखाख्यस्नेहं स्पृष्ट्वा आचान्तः पुनराचामेच्चण्डालम्लेच्छसंभाषणे च'

कौर्मे— ओष्ठौ विलोमकौ स्पृष्ट्वा वासो विपरिधाय च ।
रेतोमूत्रपुरीषाणामुत्सर्गेऽशुद्धभाषणे ॥
ष्ठीवित्वाऽध्ययनारम्भे कासश्वासागमे तथा ।
चत्वरं वा स्मशानं वा समागम्य द्विजोत्तमः ।
संध्ययोरुभयोस्तद्वदाचान्तोऽप्याचमेत्पुनः ॥

बौधायनः—

भोजने हवने दाने उपहारे प्रतिग्रहे ।
हविर्भक्षणकाले च तद्द्विराचमनं स्मृतम् ॥

शङ्खः— स्नानभोजनकालेष्वाचान्तः पुनराचमेत् ॥

पैठीनसिः—'कलिलकासश्वासागमने रथ्याचत्वरस्मशानाक्रान्तेष्वाचान्तः पुनराचामेत्'

आचमनापवादमाह याज्ञवल्क्यः—

आचमनापवादः ।

मुखजा विप्रुषो मेध्यास्तथाचमनबिन्दवः ।
श्मश्रु चास्यगतं दन्तसक्तं त्यक्त्वा ततः शुचिः ॥

विप्रुषोऽङ्गेऽनुपलभ्यमानाः ।

नोच्छिष्टं कुर्वते मुख्या विप्रुषोऽङ्गं न यान्ति याः ।

---

[1] याज्ञवल्क्यः क. पाठः ।

इति बोधायनोक्तेः ।

स्मृत्यर्थसारे—

वेदाभ्यासे मुखाज्जाताः शुद्धा एव तु सर्वतः ।

दन्तसक्तस्य निगरणमाह स एव—

परिच्युतेष्ववस्थानान्निगिरन्नेव तच्छुचिः ।

निगरणत्यागयोर्विकल्प इति हेमाद्रिः—

चर्वणे त्वाचामेत् । तथाचाचमनं प्रकृत्य 'चर्वणे नित्यम्' इति विष्णूक्तेः ।

बलात्प्रच्याविते तु देवल आह—

भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत् ।

दन्तलग्नस्य जिह्वास्पर्शे रसोपलब्धौ चाशुचित्वम् । अन्यथा शुचित्वम् 'दन्तवद्दन्तलग्नेषु रसवर्जमन्यत्र जिह्वास्पर्शनातः' इति शङ्खोक्तेः । गौतमस्त्वन्यथाऽऽह—'दन्तश्लिष्टेषु दन्तवदन्यत्र जिह्वाभिस्पर्शनात्प्राक्च्युतेरित्येके' । किंच दन्तलग्नमपि अपहार्यम् ।

दन्तलग्नमसंहार्यं लेपं मन्येत दन्तवत् ।
न तत्र बहुशः कुर्याद्यत्नमुद्धरणे पुनः ।
भवेदाशौचमत्यर्थं तृणवेधाद्व्रणे कृते ।। इति देवलोक्तेः ।

षट्त्रिंशन्मते—

ताम्बूले च फले चैव भुक्तस्नेहावशिष्टके ।
त्वग्भिः पत्रैर्मूलफलैस्तृणकाष्ठमयैस्तथा ।
सुगन्धिभिस्तथा द्रव्यैर्नोच्छिष्टस्तु भवेद्द्विजः ।। इति ।

वसिष्ठः— प्राणाहुतीषु सोमेषु मधुपर्के तथैव च ।
आस्यहोमेषु सर्वेषु नोच्छिष्टो भवति द्विजः ।। इति ।

आस्यहोमेषु दष्टावशिष्टभक्षणेष्विति हेमाद्रिः । आश्वलायनीयैस्तु मधुपर्के आचमनं कार्यमेव एतद्वाक्येन सर्वेषु प्राणाहुत्यादिषु आचमनाभावे सिद्धेऽपि "न सोमेनोच्छिष्टा भवन्ति" इति तत्सूत्रेण तान्प्रति मधुपर्कादिष्वनुच्छिष्टतापरिसंख्यानात् । एष एव वृत्तिकृतोऽप्याशयः ।

।। इति द्विराचमननिमित्तानि ।।

---

## अथाचमनविधिः।

वृद्धपाराशरः—

कृत्वाऽथ शौचं प्रक्षाल्य पादौ हस्तौ च मृज्जलैः।
निबद्धशिखकच्छस्तु द्विज आचमनं चरेत्॥

स्मृत्यर्थसारे—

सौवर्णरौप्यताम्रैस्तु वेणुबिल्वाश्मचर्मभिः।
अलाबुदारुपत्रैस्तु नारिकेरैः कपित्थकैः॥
तृणकाष्ठैर्जलाधारैरन्यान्तरितमृन्मयैः।
वामेनोद्धृत्य वाऽऽचामेदन्यदातुरसंभवे॥

गौतमः—'त्रिश्चतुर्वा अप आचामेत्खानि चोपस्पृशेत्' 'चतुर्वेत्यैच्छिको विकल्पः' इति माधवः। त्रयेणापरितोष इति श्रीदत्तः। फलभूमार्थमिति केचित्। योगी—

त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत्।

अयं च द्विजातिविषयः 'स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः' इति तेनैव स्त्रीशूद्रयोः सकृद्विधानात्।

स एव— अन्तर्जानु शुचौ देशे उपविष्ट उदङ्मुखः।
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत्॥

अत्र—द्विजग्रहणात्स्त्रीशूद्रयोरनियम इति हेमाद्रिः। तथाच ब्राह्मं सर्वं साधारणं, कायदैवे तु ब्राह्मणं प्रत्येव।

तथाच मनुः—

ब्राह्मेण विप्रस्तीर्थेन सर्वकालमुपस्पृशेत्।
कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन॥ इति।

त्रैदशिकं दैवम्।

अत्र नित्यपदात्सर्वदा ब्राह्मेणैव तस्य व्रणाद्युपघाते तूत्तराभ्यामिति व्यवस्थितो विकल्पः। उत्तरयोस्त्वैच्छिकः।

याज्ञवल्क्यः—

कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्॥

बौधायनः—'निर्वपणसंस्रवणलाजाहोमनित्यहोमान्कायतीर्थेन कुर्याद्दैवेन दैविकं च पैतृकं पित्र्येण कमण्डलुस्पर्शनं दधिस्पर्शनं नवान्नप्राशनं-

स्रुग्ग्रहणं दैविकं सौम्येन आग्नेयेन प्रतिग्रहं कुर्यात् ' । अङ्गुलिमूले सौम्यं, करमध्ये आग्नेयम् ।

देवलः— उभयत्र स्थितैर्दर्भैः समाचामति यो द्विजः ।
सोमपानफलं सोऽपि भुक्त्वा यज्ञफलं लभेत् ॥

उभयत्र हस्तद्वये । केवलवामहस्ते निषेधमाह हारीतः—
वामहस्ते कुशान्कृत्वा समाचामति यो द्विजः ।
उपस्पृष्टं भवेत्तेन रुधिरेण मलेन वा ॥ इति ।

विष्णुः— ग्रन्थिर्यस्य पवित्रस्य न तेनाचमनं चरेत् ।

शङ्खः— काशहस्तस्तु नाचामेत्कदाचिद्वेधशङ्कया ।

वेधशङ्कयेति तु ' तेन ह्यन्नं क्रियते ' इति वदर्थवादमात्रम् । दूर्वाहस्तोऽपि वा इति स्मृत्यर्थसारे ।

बौधायनः—'नाङ्गुलीभिर्न सबुद्बुदाभिर्न सफेनाभिर्न क्षाराभिर्नोष्णाभिर्न कलुषाभिरद्भिर्न हसन्न जल्पन्न विलोकयन्न तिष्ठन्न प्रह्वो न प्रणतो न मुक्तशिखो नाबद्धकच्छो न बहिर्जानूपस्पृशेत् नाञ्जलिना पिबेन्नानुद्धृतोदकेनाचामेत् । न तिष्ठन्' इति तु स्थले ।

जले तु विशेषमाह विष्णुः—
जान्वोरूर्ध्वं जले तिष्ठन्नाचान्तः शुचितामियात् ।
जलस्थो जलकृत्येषु स्थलस्थः स्थलकर्मसु ।
उभयोस्तूभयस्थस्तु कर्मस्वधिकृतो भवेत् ॥

हारीतः—आर्द्रवासा जले कुर्यात्तर्पणाचमनं जपम् ।
शुष्कवासाः स्थले कुर्यात्तर्पणाचमनं जपम् ॥

स एव— विवर्णं गन्धवत्तोयं फेनिलं च विवर्जयेत् ।

देवलः— सोपानत्को जलस्थो वा मुक्तकेशोऽथवा पुनः ।
उष्णीषी वापि नाचामेद्वस्त्रेणावेष्ट्य वा शिरः ॥

संवर्तः— अशब्दाभिरनुष्णाभिस्त्यक्ताभिः फेनबुद्बुदैः ।
आपद्गतेन शुद्धिः स्यादुष्णेन शृतपायिनः ॥

आपद्गतेनेति तृतीया षष्ठ्यर्थे बोद्धव्या । तेनापद्गतस्य शृतपायिन उष्णेनाऽपि शुद्धिरित्यर्थः ।

बौधायनः—

---

१ क्षीर क. पाठः ।

पादक्षालनशेषेण नाचामेद्वारिणा द्विजः।
शुद्धाभावे भवेत्किंचित्त्यक्त्वा भूमौ तु तज्जलम्॥

आचारप्रदीपे आपस्तम्बः—

संध्यार्थे भोजनार्थे वा पित्र्यार्थे वा तथैव च।
शूद्राहृतेन नाचामेज्जपादिहवनेषु च॥

यमः— आपः करनखस्पृष्टाः समाचामति यो द्विजः।
सुरां पिबति सुव्यक्तां यमस्य वचनं यथा॥ इति।

आपस्तम्बः—

न वर्षधारास्वाचामेत्तथा च प्रदरोदके।

प्रदरो गर्तः। तत्प्रतिप्रसवमाह वसिष्ठः—'प्रदरादपि गोस्तर्पणात्स्यात्' इति। इदं तु कलौ निषिद्धमिति कलिवर्ज्यनिर्णये भ्रातृचरणाः।

गोतृप्तिशिष्टे पयसि शिष्टैराचमनक्रिया।

इतिकलिनिषिद्धेषु पाठात्।

देवलः— येषु देशेषु यत्तोयं या च यत्रैव मृत्तिका।
तत्र तन्नावमन्येत धर्मस्तत्रैव तादृशः॥ इति।

विष्णुः— न गच्छन्न शयानश्च न स्थितः प्रह्व एव च।
न स्पृशन्न हसञ्जल्पन्न श्वचाण्डालदर्शने॥

गोभिलः—

नान्तरीयैकदेशस्य कृत्वा चैवोत्तरीयताम्॥ इति

आचामेदिति शेषः।

प्रचेताः—'न निर्वासा नान्यत्कुर्वन्नासनपाद आचामेत्'।

पुलस्त्यः—

कण्ठं शिरो वा प्रावृत्य रथ्यापणगतोऽपि वा।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्॥

आचमनात्पूर्वं गण्डूषानाह प्रयोगपारिजाते आचार्यः—

कुर्याद्द्वादश गण्डूषान्पुरीषोत्सर्जने द्विजः।
मूत्रोत्सर्गे तु चतुरो भोजनान्ते तु षोडश।
भक्ष्यभोज्यावसाने तु गण्डूषाष्टकमाचरेत्॥

वामहस्तेनान्वारम्भमाह यमः—

तावन्नोपस्पृशेद्विद्वान् यावद्वामेन न स्पृशेत्।

अपां पर्युक्षणमाह नागदेवीये श्यात्यायनिः—

[ [1]त्रिभिः पर्युक्षणं कुर्यात्पात्रोपरि त्रिभिः सदा ।
बिन्दुं च निक्षिपेन्मध्ये शेषं शुध्यति बिन्दुभिः ॥

विशेषमाह याज्ञवल्क्यः ]—

हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः ।
शुध्येरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥

सकृदिति त्रित्वमात्रापवादकं न तु सर्वेतिकर्तव्यतायाः । तेन सर्वोऽप्यङ्गस्पर्शनादिरूपेतिकर्तव्यता स्त्रीशुद्राभ्यां कर्तव्यैव । अन्तत इति तृतीयार्थे तसिः । तालुगाभिः इति विज्ञानेश्वरः । दन्तगाभिरिति हेमाद्रिः । ओष्ठप्रान्तेनेति श्रीदत्तः । हृद्गानां परिमाणमाहोशनाः—'माषमज्जनमात्रा हृदयंगमा भवन्ति इति ।

ग्रहणे विशेषमाह कण्वः—

आयतं पूर्वतः कृत्वा गोकर्णाकृतिवत्करम् ।
संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः ।
मुक्ताङ्गुष्ठकनिष्ठेन शेषेणाचमनं चरेत् ॥

भरद्वाजः—

देव्याः पादैस्त्रिभिः पीत्वा अब्लिङ्गैर्नवधा स्पृशेत् ।
पुनर्व्याहृतिगायत्र्या शिरोमन्त्रैर्द्विधा स्पृशेत् ॥

बौधायनः—'त्रिः परिमृजेद्द्विरित्येके' इति । ओष्ठाविति शेषः । 'तौ च विलोमकौ' इति हेमाद्रिः ।

शङ्खः— तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम् ।
[2]अङ्गुष्ठानामिकाभ्यां च चक्षुःश्रोत्रे पुनः पुनः ॥
कनिष्ठाङ्गुष्ठयो[3]र्नाभिं हृदयं च तलेन वै ।
[4]सर्वाभिस्तु ततः शीर्षं बाहू चाग्रेण संस्पृशेत् ॥

आश्वलायनः—

जलैः शुद्धैः पिबेद्वेदैश्चतुर्वाऽम्बु शनैर्द्विजः ।
प्रमृजेद्द्विरथर्वेण पुराणैश्चेतिहासकैः ॥

---

१ कुण्डलितः क. नास्ति । २ अङ्गुष्ठस्यानामिकाया योगेन श्रवणं स्पृशेत् । क. पाठः । ३ गेन स्पृशेत्स्कन्धद्वयं ततः । क. पाठः । ४ नाभिं च हृदयं तद्वत्स्पृशेत्पाणितलेन तु । संस्पृशेत्तु ततः शीर्षमयमाचमने विधिः । क. पाठः ।

मुखमङ्गुष्ठमूलेन पृथक्काय उपस्पृशेत् ।
पाणिनाऽधोऽग्निमन्त्रेण अवमृज्याथ संस्पृशेत् ॥
विप्रस्तु नेतराणां तु तन्मुखालम्भनं स्मृतम् ।
सूर्याय दक्षिणे नेत्रे वामे सोमाय वायवे ॥
नासे[1] दिग्भ्यः श्रवणयोर्बाह्वोरिन्द्राय संस्पृशेत् ।
पृथिव्यै पादयोर्जान्वोरन्तरिक्षाय गुह्यके ॥
दिशे नाभ्यां ब्रह्मणे च विष्णवे हृदये तथा ।
शिवायेति शिरस्यन्ते हस्तं प्रक्षालयेत्ततः ॥ इति ।

अगस्त्यसंहितायाम्—

केशवाद्यैस्त्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत्करौ ।
द्वाभ्यामोष्ठौ तु संमृज्य द्वाभ्यामुन्मार्जनं तथा ॥
एकेन हस्तं प्रक्षाल्य पादावपि तथैकतः ।
संप्रोक्ष्यैकेन मूर्धानं ततः संकर्षणादिभिः ॥
आस्यं नासाक्षिकर्णौ[2] च नाभ्युरस्कं भुजौ स्पृशेत् ।
एवमाचमनं कृत्वा साक्षान्नारायणो भवेत् ॥

अत्रैतानि केशवादिकृष्णान्तानि चतुर्विंशतिनामानि चतुर्थ्यन्तानि नमोन्तानि प्रथमैकवचनान्तानि वोच्चार्याणि । केचित्तु संबुध्यन्तान्युच्चारयन्ति तत्रापि विष्णुपदं हरिपदं चाविभक्तिकमेवोच्चारयन्ति । तत्साधूनेव प्रयुञ्जीतेतिवचनाच्चिन्त्यम्[3]

आचमनासंभवे मार्कण्डेयपुराणे—

आचमनासंभवे प्रतिनिधिः । देवतानां पितॄणा च ऋषीणां चैव यत्नतः ।
कुर्वीतालम्भनं वापि दक्षिणश्रवणस्य वा ।
यथाविभवतो ह्येतत्पूर्वाभावे ततः परम् ॥

बौधायनः—' आर्द्रतृणं भूमिं गोमयं वा संस्पृशेत् '

आचमनस्य सर्वकर्माङ्गत्वमुक्तं पुराणसारे—

यः क्रियाः कुरुते मोहादनाचम्यैव नास्तिकः ।
भवन्ति हि क्रियास्तस्य वृथाः सर्वा न संशयः ॥ इति ।

॥ इति आचमनप्रकरणम् ॥

---

१ नासोर्दि° क. पाठः । २ नासां च कर्णौ क. पाठः । ३ नियमार्चि° क. पाठः ।

## अथ दन्तधावनम् ।

अत्रिः— मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः ।
तदार्द्रकाष्ठं शुष्कं वा भक्षयेद्दन्तधावनम् ॥

इदं च शुद्ध्यर्थं न तु स्नानाद्यङ्गम् । 'दन्तान्प्रक्षाल्य स्नायात्' इति छन्दोगपरिशिष्टे तु—'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इतिवत्कालार्थः संयोगः । मदनोऽप्येवम् । इदं च भोजनानन्तरमपि कार्यम् ।

प्रातर्भुक्त्वा च यतवाक् भक्षयेद्दन्तधावनम् ।

इति विष्णूक्तेः । 'भुक्त्वेति यतिपरम्' इति हलायुधीये; सर्वान्प्रतीति श्रीदत्तः । अत्र च कालादिनिषेधो नास्ति ।

भोजने दन्तलग्नादि निर्हृत्याचमनं चरेत् ।

इति देवलोक्तेरुच्छिष्टनिर्हरणस्यावश्यकत्वात् ।

कात्यायनः—

नन्दासु च नवम्यां च दन्तकाष्ठं विवर्जयेत् ।

विष्णुः—नवम्यां चैव द्वादश्यां वर्जयेद्दन्तधावनम् ।
[ [1]श्राद्धाहे जन्मदिवसे विवाहे सुखदुःखयोः ।
व्रते चैवोपवासे च वर्जयेद्दन्तधावनम् ]

व्यासः—

श्राद्धे च यज्ञे नियमे नाद्यात्प्रोषितभर्तृका ।
श्राद्धकर्तृनिषेधोऽयं न तु भोक्तुः कदाचन ॥

नाद्याद्दन्तकाष्ठमिति शेषः ।

आचार्यः—

अष्टम्योश्च चतुर्दश्योः पञ्चदश्यां त्रिजन्मसु ।
व्यतीपाते च संक्रान्त्यां दन्तकाष्ठं न भक्षयेत् ॥
नाद्यादजीर्णवमथुश्वासकासज्वरार्दितः ।
पुरोदयाद्रवेस्त्वद्यान्नोदितेऽस्तमिते रवौ ॥
दीक्षितो ब्रह्मचारी च यतिश्च विधवाऽङ्गना ।
नित्यमद्याद्दन्तकाष्ठममायां तु विवर्जयेत् ॥

त्रिजन्मसु [2]जन्मतदाद्युत्तरभेष्वेति[3] इति केचित् जन्मनवमैकोनविंशतिकेष्विति ज्यौतिषिकाः ।

---

१ कुण्डलितः श्लोकः क. नास्ति । २ जन्मभं क. पाठः । ३ द्वे क. पाठः ।

नृसिंहपुराणे—

प्रतिपद्दर्शषष्ठीषु नवम्यां चैव भारत ।
दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ॥

काष्ठग्रहणात्पर्णादौ न दोषः ।

तथाच व्यासः—

प्रतिपद्दर्शषष्ठीषु नवम्यां दन्तधावनम् ।
पर्णैरन्यत्र काष्ठैस्तु जिह्वोल्लेखः सदैव तु ॥

'तृणपर्णैर्मध्यमानामिकाङ्गुष्ठैर्निषिद्धाहे कुर्युः' इति स्मृत्यर्थसारे ।

व्यासः— अलाभे दन्तकाष्ठानां निषिद्धायां तिथावपि ।
अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् ॥

स्कान्दे— अभ्यङ्गे चोदधिस्नाने दन्तधावनमैथुने ।
जाते च मरणे चैव तत्कालव्यापिनी तिथिः ॥

यमः— चतुर्दश्यष्टमी दर्शः पूर्णिमा संक्रमो रवेः ।
एषु स्त्रीतैलमांसानि दन्तकाष्ठं च वर्जयेत् ॥

वसिष्ठः— शन्यर्कशुक्रवारेषु कुजाहे व्रतवासरे ।
जन्माहे श्राद्धदिवसे दन्तकाष्ठं विवर्जयेत् ॥

यमः— मध्याह्ने[1] स्नानवेलायां भक्षयेद्दन्तधावनम् ।
निराशास्तस्य गच्छन्ति देवताः पितृभिः सह ॥

अत्र 'नोदिते' इत्यनेनैव मध्याह्ननिषेधे सिद्धे पुनर्निषेधो दोषाधिक्यार्थः ।

गोभिलः—

रजस्वला सूतिका च वर्जयेद्दन्तधावनम् ।

स्मृतिमञ्जर्याम्—

रजस्वला चतुर्थेऽह्नि सूतिका दशमेऽहनि ।
स्नानात्पूर्वं बन्धमोक्षे निन्द्येष्वपि चरेदिति ॥

नागदेवीये—

चिरं दन्तेषु केशेषु चिरं मूत्रपुरीषयोः ।
चिरं स्नाने च शीघ्रं च मैथुने शयनेऽशने ॥

व्यासः— प्रक्षाल्य पादौ हस्तौ च मुखं च सुसमाहितः ।
दक्षिणं बाहुमुद्धृत्य कृत्वा जान्वन्तरा ततः ॥

---

१ मध्याह्ने श्राद्धवेलायामिति वा पाठः ।

तिक्तं कषायं च तथा कटुकं कण्टकान्वितम् ।
क्षीरिणो वृक्षगुल्मादेर्भक्षयेद्दन्तधावनम् ॥

'दक्षिणं बाहुमुद्धृत्योपवीतं कृत्वा' इति श्रीदत्तः ।

विष्णुः— कण्टकिक्षीरवृक्षोत्थं द्वादशाङ्गुलमव्रणम् ।
कनिष्ठाङ्गुलिवत्स्थूलं तदग्रकृतकूर्चकम् ॥[1][2]

कौर्मे— मध्याङ्गुलसमस्थूलं द्वादशाङ्गुलसंमितम् ।
सत्वचं दन्तकाष्ठं स्यात्तदग्रेण तु धावयेत् ॥

इदं विषमदन्तस्य इतरस्य तु कनिष्ठाग्रसमस्थूलम् ॥[3]

सुसूक्ष्मं हीनदन्तस्य समदन्तस्य मध्यमम् ।
स्थूलं विषमदन्तस्य त्रिविधं दन्तधावनम् ॥ इति विष्णूक्तेः ।

दन्तकाष्ठमानम् ।

विष्णुः— द्वादशाङ्गुलिकं विप्रे काष्ठमाहुर्मनीषिणः ।
शूद्रविट्क्षत्रजातीनां नवषट्चतुरङ्गुलम् ॥

गर्गः— चतुरङ्गुलमानं तु नारीणां नात्र संशयः । इति ।

नृसिंहपुराणे—

तित्तिणीवेणुपृष्ठं च आम्रनिम्बौ तथैव च ।
अपामार्गश्च बिल्वश्च अर्कश्चौदुम्बरस्तथा ॥
बदरीतिन्दुकस्त्वेते प्रशस्ता दन्तधावने ।
कोविदारः करञ्जश्च कुटजः प्लक्षमालती ॥

गर्गः— सर्जे धैर्यं वटे दीप्तिः करञ्जे विजयो रणे ।
प्लक्षजे चार्थसंपत्तिर्बदर्यां मधुरस्वरः ॥
खदिरे चैव सौभाग्यं बिल्वे तु विपुलं धनम् ।
औदुम्बरे च वाक्सिद्धिर्बन्धूके च दृढा मतिः ॥
सैन्ध्रे[4] च कीर्तिसौभाग्यं पालाशे सिद्धिरुत्तमा ।
कदम्बे सकला लक्ष्मीराम्रे आरोग्यमेव च ॥
अपामार्गे श्रुतिर्मेधाप्रज्ञावाप्तिर्वपुः[5] श्रुतिः ।
आयुः शीलं यशो लक्ष्मीः सौभाग्यं चोपजायते ॥
अर्केण हन्ति रोगांस्तु बीजपूरेण तु व्यथाम् ।
दाडिमे सिन्धुवारे च उटजे कुटजे तथा ॥

दन्तकाष्ठे प्रशस्तवृक्षास्तत्फलं च ।

---

१ ष्ठिकाग्रव॰ क. पाठः । २ कूर्चाग्रं त्वगपर्वकम् क. पाठः । ३ ष्ठिकाग्र॰ क. पाठः । ४ सैध्रे क. पाठः । ५ ॰र्वचः क. पाठः ।

जाती च करमर्दो च दुःस्वप्नं नाशयेदिति ।
ककुभेन तथाऽऽयुष्मान् भवेत्पलितवर्जितः ॥

ककुभः प्रसेवकः ।

आश्वलायनोऽपि—

अपामार्गे सर्वसिद्धिः स्त्रीवश्यत्वं प्रियङ्गुभिः ।
वेणुना चाप्नुयाद्गावो राजवृक्षाज्जयं लभेत् ॥
चूते च नृपवश्यत्वं सौभाग्यं पनसेन तु ।
दीर्घायुर्जम्बुवृक्षेण इष्टां सिद्धिं लभेदयम् ॥
जयं कण्टकवृक्षात्तु बलं वै कङ्कताल्लभेत् ।
आरोग्यं कर्णिकारेण पारन्त्यां शौर्यमुत्तमम् ॥
अशोकेन विशोकः स्याल्लवङ्गाद्ब्रह्मवर्चसम् ।
खादिरादखिलान्भोगाँल्लभेदतिशयं महः ॥
वाग्यतो विमृजेद्दन्तान्मांसं नैव तु पीडयेत् ।
जिह्वामलान्तमुदितं दन्तान्तरितमेव च ॥
राक्षस्यामुत्सृजेत्काष्ठं दिशि निर्मृज्य वै शुचौ ॥

राजवृक्षो राजादनम् ।

वर्ज्यानाह वृद्धयाज्ञवल्क्यः—

इष्टिकालोष्टपाषाणैर्नखैरङ्गुलिभिस्तथा ।
मुक्त्वा चानामिकाङ्गुष्ठौ वर्जयेद्दन्तधावनम् ॥

तथा च—दक्षिणाभिमुखो नाद्यान्नीलं धवकदम्बकौ ।
तिन्दुकेङ्गुदबन्धूकमोचाकरजसिन्धुकम् ।
कार्पासं दन्तकाष्ठं च विष्णोरपि हरेच्छ्रियम् ॥

नीलं नीलीवृक्षः । धवः प्रसिद्धः । मोचा कदली ।

आचार्यः—

दन्तकाष्ठे वर्ज्यवृक्षाः ।

नादण्डं न त्वचा हीनं नाप्रशस्ततरूद्भवम् ।
स्नुहिकिंशुकशाल्मलीकरञ्जादींश्च वर्जयेत् ॥

तथा— कोविदारेङ्गुदांश्चैव शाल्मलीवृक्षसिह्लकाः ।
श्यामाकं पारिभद्रं च गुग्गुलं पिच्छिलं तथा ॥

---

१ कुतेन क. पाठः । २ °दथ क. पाठः । ३ °दिति यशो महत् क. पाठः । ४ मांसान्! मत्यपीडया क. पाठः । ५ वाऽशुचौ क. पाठः । ६ कारजसिह्लकम् क. पाठः । ७ ऽश्वत्थ क. पाठः ।

पूतिगन्धाम्लमधुरं सुशिरं दन्तधावनम् ।
प्रतीचीं दक्षिणाशां च वर्जयेद्दन्तधावने ॥

पूतिगन्धं दुर्गन्धि ।

विष्णुः— न श्लेष्मातकारिष्टविभीतधवधन्वनम् ।
न कोविदारशमीपीलुपिप्पलेङ्गुदगुग्गुलम् ।
न बर्बरनिर्गुण्डीशिग्रुतिलकतीलजम् ॥

हारीतः—'कालेयपलाशकोविदारश्लेष्मातकबिल्वकशाकवृक्षनिर्गुण्डी-शिखण्डीशिरीषमालतीकरवीरबदरीकरञ्जवेणुवर्ज्यम्' इति ।

गर्गः— कुशं काशं पलाशं च शिंशुपं यस्तु भक्षयेत् ।
तावद्भवति चाण्डालो यावद्गङ्गां न पश्यति ॥

व्यासः— पालाशमासनं यानं दन्तकाष्ठं च पादुके ।
वर्जयेत्तु प्रयत्नेन सममश्वत्थमेव च ॥

मार्कण्डेयः—
शाल्मल्यश्वत्थभट्टीनां धवकिंशुकयोरपि ।
कोविदारशमीतालश्लेष्मातकबिभीतकैः ।
वर्जयेद्दन्तकाष्ठं च गुग्गुलं क्रमुकं तथा ॥

वराहमिहिरः—
अज्ञातपूर्वाणि न दन्तकाष्ठान्यद्यान्न पर्णैश्च समन्वितानि ।
न युग्मपर्णानि न पाटितानि न चोर्ध्वशुष्काणि विना त्वचा वा ॥

अत्र कानिचित्सामान्यतो निषिद्धान्यपि कामार्थत्वेन विहितत्वात् तत्कामनावद्भिर्ग्राह्याण्येव । यानि तु केवलं विहितप्रतिषिद्धानि तेषु न तौ पशौ करोतीतिवद्विकल्प इति स्मृतिचन्द्रिकायाम् । विहितालाभेऽप्रतिषिद्धं तदलाभे विहितप्रतिषिद्धमेव ग्राह्यमिति सर्वे । विहितालाभेऽप्रतिषिद्धविहितप्रतिषिद्धयोरैच्छिको विकल्प इत्यपि कश्चित् ।

आश्वलायनः—
नाङ्गुलीभिश्च मृद्भिश्च पर्णैर्लोष्टैश्च भस्मना ।
नायसैश्च तथा लोहैः सर्वैर्दन्तान् मृजेद्द्विजः ॥

शातातपः—
दन्तधावनमङ्गुल्या प्रत्यक्षं लवणं तथा ।
मृत्तिकाभक्षणं चापि तुल्यं गोमांसभक्षणम् ॥

---

१ पिप्पलैशिखण्डी मालतीकरवीरबदरीकरञ्जवेणुवर्जमिति । गर्गः-न गुग्गुलार्जुनबर्बर नि' क. पाठः ।

प्रयोगपारिजाते धर्मसारे—

अङ्गारवालुकापर्णतृणवल्कनखादिभिः ।
न कुर्याद्दन्तकाष्ठं च श्रीकामी हर्षिते दिने ।
न कुर्याद्दन्तकाष्ठं च तैले च शिरसि स्थिते ॥

दिग्विशेषेण फलमाह विष्णुः—

प्राङ्मुखस्य धृतिः सौख्यं शरीरारोग्यमेव च ।
दक्षिणेन तथा कष्टं पश्चिमेन पराजयः ॥
उत्तरेण गवां नाशः स्त्रीणां परिजनस्य च ।
पूर्वोत्तरे तु दिग्भागे सर्वान्कामानवाप्नुयात् ॥

दन्तधावने दिङ्मुखनियमः।

दन्तधावनमन्त्रो नागदेवीये—

अन्नाद्याय व्यूहध्वं सोमो राजायमागमत् ।
स मे मुखं प्रमार्क्ष्यति यशसा च भगेन च ॥

अङ्गिराः—प्रक्ष्याल्य भक्षयेत्काष्ठं प्रक्षाल्यैव तु संत्यजेत् ।
"आयु" रित्यादि मन्त्रोऽयमुक्तः शाखाभिमन्त्रणे ॥ इति ।

मन्त्रः काशीखण्डे—

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।
ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥

दन्तधावनोत्तरं शौनकः—

पश्चाद्द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् ।
स्मृत्वोङ्कारं च गायत्रीं निबध्नीयाच्छिखां ततः ॥ इति ।

अङ्गिराः—पतितान्त्यजपाखण्डिदेवाजीवरजस्वलाः ।
भिषक्पातकिचाण्डाला न प्रेक्ष्या दन्तधावने ॥
शुनकं विड्वराहं च छत्राकं ग्रामकुक्कुटम् ।
अन्यान्नैवेदृशान् पश्येद्द्विजशुद्धौ विचक्षणः ॥ इति ।

देवाजीवो देवलकः । द्विजा दन्ताः ।

॥ इति दन्तधावनम् ॥

---

## अथ पवित्रविधिः ।

व्यासः—कुशैः पूतं भवेत्स्नानं कुशेनोपस्पृशेद्द्विजः ।
कुशेन चोद्धृतं तोयं सोमपानेन संमितम् ॥

यमः— कुशाः काशास्तथा दूर्वा यवा व्रीहय एव च ।
बल्वजाः पुण्डरीकाणि सप्तधा बर्हिरुच्यते ।। इति ।

शङ्खः— कुशाभावे द्विजश्रेष्ठः काशैः कुर्वीत तत्त्वतः । इति ।

कात्यायनः—

मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ।। इति ।

प्रयोगपारिजाते स्मृतिचिन्तामणौ—

मासि मास्याहृता दर्भास्तत्तन्मास्येव चोदिताः । इति ।

मार्कण्डेयः—

शुचिर्भूत्वा शुचौ देशे स्थित्वा पूर्वोत्तरामुखः ।
ओङ्कारेणैव मन्त्रेण कुशान्स्पृष्ट्वा द्विजोत्तमः ।।
विरिञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज ।
दहस्व सर्वपापानि दर्भ स्वस्तिकरो भव ।।
इमं मन्त्रं समुच्चार्य ततः पूर्वोत्तरामुखः ।
हुंफट्कारेण दर्भास्तु सकृच्छित्त्वा समुद्धरेत् ।। इति ।

कात्यायनः—

अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ।।

मार्कण्डेयः—

चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् ।
एकैकन्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् ।।
पवित्रे दर्भसंख्या । त्रिभिर्दर्भैः शान्तिकर्म पञ्चभिः पौष्टिकं तथा ।
चतुर्भिरभिचारांस्तु कुर्वन्कुर्यात्पवित्रकम् ।। इति ।

अत्रिः— ब्रह्मयज्ञे जपे चैव ब्रह्मग्रन्थिर्विधीयते ।
भोजने वर्तुलः प्रोक्त एवं धर्मो न हीयते ।।

हेमाद्रौ— अन्यान्यपि पवित्राणि कुशदूर्वामयानि च ।
हेमात्मकपवित्रस्य कलां नार्हन्ति षोडशीम् ।। इति ।

पारिजाते आचार्यः—

हैमेन सर्वदा सर्वं कुर्यादेवाविचारयन् ।
रौप्यं दक्षप्रदेशिन्यां बिभृयाददीक्षितो द्विजः ।। इति ।

दक्षो दक्षिणः ।

योगयाज्ञवल्क्यः—

अनामिकाधृतं हेम तर्जन्यां रौप्यमेव च।
कनिष्ठिकाधृतं खड्गं तेन पूतो भवेन्नरः॥

प्रयोगपारिजाते संग्रहकारः—

उत्तरीयं योगपट्टं तर्जन्यां रजतं तथा।
न जीवत्पितृकैर्धार्यं ज्येष्ठे[1] भ्रातरि जीवति॥

[ तथा— पादुके चोत्तरीयं च तर्जन्यां रौप्यधारणम्।
न जीवत्पितृकः कुर्याज्ज्येष्ठे भ्रातरि जीवति॥ ]

शारदातिलके—

दारिद्र्यनाशिनी मुद्रा। तानम्रतारसुवर्णानामर्कषोडशखेन्दुभिः।
कृता त्रिशक्तिमुद्रेयं तीव्रदारिद्र्यनाशिनी॥ इति।

तारं रूप्यम्।

अर्चनदीपे—

सोमसूर्याग्निरूपाः स्युर्वर्णा लोहत्रयं तथा।
रौप्यमिन्दुः स्मृतो हेम सूर्यस्ताम्रं हुताशनः॥
लोहभागाः समुद्दिष्टाः स्वराद्यक्षरसंज्ञया।
तैर्लोहैः कारयेन्मुद्रामसंकलितसंगताम्॥
विजयदा मुद्रा। साग्रं सहस्रं संजप्य स्पृष्ट्वा तां जुहुयात्ततः।
तस्यां संपातयेन्मन्त्री सर्पिषा पूर्वसंख्यया॥
निक्षिप्य कुम्भे तां मुद्रामभिषेकोक्तवर्त्मना।
आवाह्य पूजयेद्देवीमुपचारैः समाहितः॥
अभिषिच्य विनीताय दद्यात्तां मुद्रिकां गुरुः।
इयं रक्षा क्षुद्ररोगविषज्वरविनाशिनी॥
व्यालचौरमृगादिभ्यो रक्षां कुर्याद्विशेषतः।
युद्धे विजयमाप्नोति धारयेन्मनुजेश्वरः॥

स्वराद्यक्षराण्येकपञ्चाशत्। तत्र षोडशभागा रूप्यस्य। पञ्चविंशतिस्ताम्रस्य। दश हेम्नः। साग्रमष्टोत्तरं स्पृष्ट्वा संजप्य जुहुयादित्यन्वयः— तस्यां मुद्रायां संपातयेत्। संपातानिति शेषः। संख्या जपस्य आराध्यदेवताया आगमिको वैदिको नाममन्त्रो वा जपहोमयोर्ज्ञेयः। मुद्राघटनादि सर्वमुपरागसमय एव कार्यमिति सांप्रदायिकाः।

---

१ ज्येष्ठो वा विद्यते यदि। क. पाठः। २ क. अधिकम्।

अथाश्वलायनः—

[ हैमेनं सर्वदा सर्वं कुर्यादेवाविचारयन् ।
रौप्यं दक्षप्रदेशिन्यां बिभृयाद्दीक्षितो द्विजः ।। ]
अग्रन्थिकं च हैमं च तथा लोहत्रयोद्भवम् ।
गायत्र्यक्षरवर्गेण गृह्णीयात्ताम्रमुत्तमम् ।।
अनुष्टुभस्तथा रौप्यं त्रिष्टुभः कनकोत्तमम् ।

उच्चाटनादिषु सिद्धिदा मुद्रा ।

गायत्र्यक्षराणि चतुर्विंशतिः । अनुष्टुभो द्वात्रिंशत् । त्रिष्टुभश्चतुश्चत्वारिंशत् ।

शलाकां कारयित्वाऽतोऽभिसृजेदङ्गुलीयकम् ।
एवं लोहत्रयेणैव कृतं रक्षोघ्नमुत्तमम् ।
शुद्ध्यै धार्यं दिवारात्रं त्रयं सममथापि वा ।।
जपेद्वामप्रदेशिन्यां धृत्वा यस्तत्पवित्रकम् ।
उच्चाटनादिसंसिद्ध्यै महापत्सु द्विजोत्तमः ।।

नवरत्नमुद्रामाह बोपदेवः—

हिशुं मुचं प्रमं गोरां नीशं वैके पुगुं मैवुम् ।
प्राच्या रत्नानि खेटाश्च मध्ये माणिक्यमुष्णगोः ।।

अत्र हिशु—मित्याद्यक्षरद्वन्द्वानि हीरकशुक्रादिग्रहप्रतिपादकानि । प्राच्याः प्राचीमारभ्य । ग्रहाः खेटाः । उष्णगू रविः ।

मानसोल्लासे—

अर्केन्दुरक्तज्ञगुरुभृगुमन्दाहिकेतवः ।
माणिक्यं मौक्तिकं चारु विद्रुमं गारुडं पुनः ।।
पुष्परागं लसद्वज्रं नीलं गोमेदकं तथा ।
वैडूर्यं नवरत्नानि मुद्रां तां कल्पयेच्छुभाम् ।।
जपहोमादिकं सर्वं कुर्यात्पूर्वोक्तवर्त्मना ।
यो मुद्रां धारयेदेतां तस्य स्युर्वशगा ग्रहाः ।।

वशीकरणी नवरत्नमुद्रा ।

रक्तो भौमः । अही राहुः ।

।। इति पवित्रविधिः ।।

---

१ श्लोकोऽयं क. नास्तिः । २ ग॰ क. पाठः ।

## अथ स्नानम्।

योगयाज्ञवल्क्यः—

अस्नात्वा नाचरेत्कर्म जपहोमादि किंचन।
लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान्॥
स्विद्यन्ति हि सुषुप्तस्य इन्द्रियाणि स्रवन्ति च।
अङ्गानि समतां यान्ति चोत्तमान्यधमैः सह॥
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः।
स्रवत्येव दिवा रात्रौ प्रातः स्नानं विशोधनम्॥
प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत्।
सर्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम्॥
गुणा दश स्नानपरस्य साधो रूपं च तेजश्च बलं च शौचम्।
आयुष्यमारोग्यमलोलुपत्वं दुःस्वप्ननाशश्च यशश्च मेधा॥
स्नानं नदीदेवखातह्रदेषु च सरस्सु च।
पञ्चपिण्डाननुद्धृत्य न स्नायात्परवारिणि॥ इति।

परसंत्ताकेऽनुत्सृष्टजले मृत्पिण्डपञ्चकोद्धरणाभावे न स्नायादित्यन्तिमार्धार्थः।

मरीचिः—भूमिस्थमुद्धृतं वापि शीतमुष्णमथापि वा।
गाङ्गं पयः पुनात्याशु पापमामरणान्तिकम्॥ इति।

योगयाज्ञवल्क्यः—

भूमिस्थमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम्।
ततोऽपि सारसं पुण्यं तस्मान्नादेयमुच्यते॥
पुण्यतोयानि। तीर्थतोयं ततः पुण्यं ततो गाङ्गं तु सर्वतः॥ इति।

गङ्गावाक्यम्—

नन्दिनी नलिनी सीता मालती च महापगा।
विष्णुपादाग्रसंभूता गङ्गा त्रिपथगामिनी॥
भागीरथी भोगवती जाह्नवी त्रिजटेश्वरी।
द्वादशैतानि नामानि यत्र यत्र जलाशये।
स्नानोद्यतः सदा कुर्यात्तत्र तत्र वसाम्यहम्॥ इति।

देवलः— एकां नदीं समासाद्य नान्यां स्नाने नदीं स्मरेत्।

मार्कण्डेयः—

संकल्पं च यथा कुर्यात्स्नानदानव्रतादिके॥ इति।

यथा यथावदित्यर्थ इति भ्रातृचरणाः ।

शङ्खः— "आपो अस्मान्" इति स्मृत्वा भास्कराभिमुखः स्थितः ।
"इदं विष्णु"र्जपित्वा तु प्रतिस्रोतो निमज्जति ॥

स्नानसंकल्पः । अप्रवाहोदकस्नानं विप्रपादाभिषेचनम् ।
आदित्याभिमुखः कुर्यात्संध्यावन्दनमेव च ॥ इति ।

याज्ञवल्क्यः—
"तत्त्वायामी" तिमन्त्रेण वारुणेन तटे स्थितः ।
"तदुत्तम" मिति स्मृत्वा ह्यवतीर्य जलाशये ।
आवाह्य वरुणं स्नानमाचरेद्विधिपूर्वकम् ॥ इति ।

चतुर्विंशतिमते—
स्नानमब्दैवतैर्मन्त्रैर्वारुणैश्च मृदा सह ।
कुर्याद्व्याहृतिभिर्वाथ "यत्किंचेद" मृचापि वा ॥

शौनकः—स्नात्वाऽऽचान्तो वारिमध्ये त्रिः पठेदघमर्षणम् । इति ।

योगयाज्ञवल्क्यः—
य एव विस्तृतः प्रोक्तः स्नानस्य विधिरुत्तमः ।
असामर्थ्यान्न कुर्याच्चेत्तत्रायं विधिरुच्यते ॥
स्नानमन्तर्जले चैव मार्जनाचमने तथा ।

लघुकल्पः । जलाभिमन्त्रणं चैव तीर्थस्य परिकल्पनम् ॥
अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः ।
स्नानाचरणमित्येतदुपदिष्टं महात्मभिः ॥ इति ।

चतुर्विंशतिमते—
स्नानादनन्तरं तावत्तर्पयेत्पितृदेवताः ।
उत्तीर्य पीडयेद्वस्त्रं संध्याकर्म ततः परम् ॥ इति

तर्पणप्रकारमाह व्यासः—
यज्ञोपवीती देवानां निवीती ऋषितर्पणे ।
प्राचीनावीती पित्र्ये तु स्वेन तीर्थेन भावितः ॥

उशनाः—द्वौ हस्तौ युग्मतः कृत्वा पूरयेदुदकाञ्जलिम् ।
गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥

सुमन्तुः—आकाशे निक्षिपेद्वारि जलस्थो दक्षिणामुखः ।
पितॄणां स्थानमाकाशं दक्षिणा दिक् तथैव च
त्रींस्त्रीञ्जलाञ्जलीन्दद्यादुच्चैरुच्चतरं बुधः ॥

कार्ष्णाजिनिः—

देवतानामृषीणां च जले दद्याज्जलाञ्जलीन्।
असंस्कृतप्रमीतानां स्थले दद्याज्जलं पुनः॥

बौधायनः—

जलाञ्जलित्रयं दद्याद्ये चान्ये संस्कृता भुवि।
असंस्कृतप्रमीतानामेकमेव तटे क्षिपेत्॥

तत्र मन्त्रः—

अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम।
भूमौ दत्तेन तोयेन तृप्ता यान्तु परां गतिम्॥ इति।

भगवान्—

स्नानाङ्गतर्पणं कृत्वा यक्ष्मणे जलमाहरेत्।

तन्मन्त्रस्तु—

यन्मया दूषितं तोयं शारीरमलसंभवात्।
तद्दोषपरिहारार्थं यक्ष्माणं तर्पयाम्यहम्॥

नदीक्षमापनं कौर्मे—

ज्ञानतोऽज्ञानतो वाऽपि यन्मया दुष्कृतं कृतम्।
तत्क्षमस्वाखिलं देवि जगन्मातर्नमोऽस्तु ते॥

ततो दर्भास्त्यजेत्।

विकिरे पिण्डदाने च तर्पणे स्नानकर्मणि।
आचान्तः सम्प्रकुर्वीत दर्भसंत्यजनं बुधः॥ इति स्मृतेः।

विष्णुः— स्नातः शिरो नावधुनेन्नाङ्गेभ्यस्तोयमुद्धरेत्।
न च पूर्वं धृतं वासो न च तैलमुपस्पृशेत्।
स्नात्वा न धावयेद्वस्त्रं न मृज्याद्वाससा मुखम्॥

मार्कण्डेयपुराणे—

अवमृज्यान्न च स्नातो गात्राण्यम्बरपाणिभिः।
न च निर्धूनुयात्केशान्वासश्चैव न निर्धुनेत्॥ इति।

परिधेयवस्त्रे विशेषमाह देवलः—

स्वयं धौतेन कर्तव्याः क्रिया धर्म्या विपश्चिता।
न तु नेजकधौतेन नाहतेन न कुत्रचित्॥ इति।

नेजको रजकः। नाहतेनेति समस्तं पदम्।

---

१ च मे क. पाठः।

भृगुः— ब्राह्मणस्य सितं वस्त्रं नृपते रक्तमुल्बणम् ।
पीतं वैश्यस्य शूद्रस्य नीलं मलवदिष्यते ॥
विकच्छोऽनुत्तरीयश्च नग्नश्चावस्त्र एव च ।
श्रौतं स्मार्तं तथा कर्म न नग्नश्चिन्तयेदपि ॥
नग्नः स्यान्मलवद्वासा नग्नः कौशेयकेवलः ।
नग्नो द्विगुणवस्त्रः स्यान्नग्नो दग्धपटस्तथा ॥
नग्नश्च स्यूतवस्त्रः स्यान्नग्नो ग्रथितवस्त्रकः ।
नग्नश्च बहुवस्त्रः स्यान्नग्नः कौपीनकेवलः ॥
काषायवस्त्रः साक्षाच्च दश नग्नाः प्रकीर्तिताः ॥

ब्राह्मणादिषु प्रशस्तवर्णवस्त्राणि ।

कौशेयमात्रधारण एव नग्नता नतु परिधेयोत्तरीयवासोन्तरसाहित्येऽपि । कौपीने च एवमुभयत्रापि केवलशब्दोपादानस्वरसात् ।

जातूकर्ण्यः—

परिधानाद्बहिः कक्षा निबद्धा ह्यासुरी मता ।
धर्मकर्मणि विद्वद्भिर्वर्जनीया प्रयत्नतः ॥

प्रयोगपारिजाते—

स्नानं कृत्वाऽऽर्द्रवस्त्रं तु ऊर्ध्वमुत्तारयेद्द्विजः ।
आर्द्रवस्त्रमधस्ताच्चेत्पुनःस्नानेन शुध्यति ॥

विष्णुपुराणे—

होमदेवार्चनाद्यासु क्रियासु पठने तथा ।
नैकवस्त्रः प्रवर्तेत द्विजो नाचमने जपे ॥

जाबालिः—

निष्पीडितं धौतवस्त्रं यदा स्कन्धे विनिक्षिपेत् ।
तदासुरं भवेत्कर्म पुनः स्नानं विशोधनम् ॥
वस्त्रं चतुर्गुणीकृत्य निष्पीड्य सदशं तथा ।
वामप्रकोष्ठे निक्षिप्य स्थलस्थश्च द्विराचमेत् ॥
वस्त्रं त्रिगुणितं यस्तु निष्पीडयति मन्दधीः ।
वृथा स्नानं भवेत्तस्य स्नातस्य [1]दशधाम्बुभिः ॥

गोभिलः—

एकवस्त्रो न भुञ्जीत न कुर्याद्देवतार्चनम् ।

---

१ बहुधाम्बुनि क. पाठः ।

शातातपः—

सव्यादंसात्परिभ्रष्टं नाभिदेशे व्यवस्थितम् ।
एकवस्त्रं तु तद्विद्याद्दैवे पित्र्ये च कर्मणि ।

योगयाज्ञवल्क्यः—

अलाभे धौतवस्त्रस्य शाणक्षौमाविकानि च ।
कुतपं योगपट्टं च विवासास्तु न वै भवेत् ।।

उत्तरीयाभावे स्मृत्यन्तरे—

यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ।
तृतीयमुत्तरीयार्थे वस्त्राभावे तदिष्यते ।। इति ।

पारस्करगृह्ये तु—

'एकं चेद्वासो भवति तस्यैवोत्तरवर्गेण प्रच्छादयेत्'[1]

जाबालिः—

स्नात्वा निवस्य वस्त्रं च जङ्घे शोध्ये मृदम्भसा ।
अपवित्रीकृते ते तु कौपीनस्नानवारिणा[3] ।। इति ।

एतद्यतिब्रह्मचारिविषयम् ।

गृह्यपरिशिष्टे—

अथ तीरमेत्य दक्षिणामुखः प्राचीनावीती

ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ।।

इति वस्त्रं निष्पीड्योपवीती अप उपस्पृश्य परिधानीयमभ्युक्ष्य परिधायान्यच्चोत्तरीयमभ्युक्षितं प्रावृत्य द्विराचामेत्' इति ।

वृद्धमनुः—

निष्पीड्य स्नानवस्त्रं तु पश्चात्संध्यां समाचरेत् ।
अन्यथा कुरुते यस्तु स्नानं तस्याफलं भवेत् ।।

मनुः— मनुष्यतर्पणे चैव स्नानवस्त्रनिपीडने ।
निवीती च भवेद्विप्रस्तथा मूत्रपुरीषयोः ।। इति ।

वासोनिष्पीडने निवीतप्राचीनावीतयोर्विकल्पः इति केचित् । गृह्यपरिशिष्टस्याश्वलायनपरत्वात्तेषां प्राचीनावीतमितरेषां निवीतमिति तु नृसिंहः ।

---

१ तं त्रि' ख. पाठः । २ छादयीत क. पाठः । ३ स्नात्ववाससा क. पाठः ।

विष्णुः— ब्रह्मक्षत्रविशां चैव मन्त्रवत्स्नानमिष्यते ।
तूष्णीमेव हि शूद्रस्य स्त्रीणां च कुरुनन्दन ॥ इति ।

दक्षः— प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः ।
यतेस्त्रिषवणं प्रोक्तं सकृत्तु ब्रह्मचारिणः ॥ इति ।

कात्यायनः—

अल्पत्वाद्धोमकालस्य बहुत्वात्स्नानकर्मणः ।
प्रातः संक्षेपतः स्नानं होमलोपो विगर्हितः ॥ इति ।

गृह्यपरिशिष्टे—'अथ स्नानविधिः । तत्प्रातर्मध्याह्ने च कुर्यादेकत्र वा ।
प्रातरेव ब्रह्मचरी । द्विस्त्रिर्वानप्रस्थः । यतिस्त्रिषु सवनेषु ।
गृह्योक्तः । तत्र प्रातः सहगोमयेन कुर्यात् । मृदा मध्यन्दिने । सायं

शुद्धाभिरद्भिः । न प्रातः स्नानात्प्राक् संध्यामुपासीत । प्रातरुत्सृष्टं गोमयमन्तरिक्षस्थं संगृह्य भूमिष्ठं चोपर्यधश्च संत्यज्य तीर्थमेत्य धौतपाणिपादमुख आचम्य संध्योक्तवदात्माभ्युक्षणादि च कृत्वा द्विराचम्य संयतप्राणः कर्म संकल्प्य गोमयं वीक्षितमादाय सव्ये पाणौ कृत्वा व्याहृतिभिस्त्रिधा विभज्य दक्षिणभागं प्रणवेन दिक्षु निक्षिप्योत्तरं तीर्थे क्षिप्त्वा मध्यमम् "मानस्तोके" इत्यृचाऽभिमन्त्र्य "गन्धद्वारा" मित्यृचा मूर्धादिसर्वाङ्गमालिप्य प्राञ्जलिः—

हिरण्यशृङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः ।
यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रतिग्रहः ॥
यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम् ।
तन्न इन्द्रो वरुणो बृहस्पतिः सविता च पुनन्तु माम् ।

इति द्वाभ्याम् "अव ते हेळ" इति द्वाभ्याम् "प्रसंम्राजे बृहदर्चा" इतिसूक्तेन संप्रार्थ्य "याः प्रवतो निवत उद्वत उदन्वतीः" इत्येतया तीर्थमुपस्पृश्यावगाह्य स्नातो द्विराचम्य मार्जयेत् "दम्बयोऽयं त्यध्वभिः" इत्यष्टाभिः "आपोहिष्ठा" इति च नवभिः अथ तीर्थमङ्गुष्ठेन "इमं मे गङ्गे" इति ऋचा त्रिः प्रदक्षिणमालोड्य प्रकाशपृष्ठमम्भोऽघमर्षणसूक्तं त्रिरावृत्त्य निमज्ज्योन्मज्ज्यादित्यमवलोक्य द्वादशकृत्व आप्लुत्य पाणिभ्यां शङ्खमुद्रया योनिमुद्रया चोदकमादाय मूर्ध्नि भूमौ खे बाह्वोरुरसि चात्मानं गायत्र्याऽभिषिच्य "त्वं नो अग्नेवरुणस्य विद्वान्" इतिद्वाभ्याम् "तरत्समन्दीधावति" इति

च सूक्तेन पुनः स्नायात् । मूर्ध्नि चाभिषिञ्चेत् " तद्विष्णोः परमं पदं " " त्वमग्ने रक्षाणो अंहसो " "यत्किंचेदं वरुण दैव्येजने" इत्येता जपेत्। स्रोतोभिमुखः सरित्सु स्नायात् । अन्यत्राऽऽदित्याभिमुखः।

अथ साक्षताभिरद्भिः प्राङ्मुख उपवीती देवतीर्थेन व्याहृतिभिर्व्यस्तसमस्ताभिर्ब्रह्मादीन्देवान्सकृत् सकृत्तर्पयित्वाऽथोदङ्मुखो निवीती सयवाभिरद्भिः प्राजापत्येन तीर्थेन ऋषीन् [तांभि]र्व्याहृतिभिर्द्विर्द्विस्तर्पयित्वाऽथ दक्षिणामुखः प्राचीनावीती पितृतीर्थेन सतिलाभिरद्भिर्व्याहृतिभिरेव सोमः पितृमान् यमोऽङ्गिरस्वान् अग्निष्वात्ताः कव्यवाहन इत्यादीन् त्रिस्त्रिस्तर्पयेत्स्नानाङ्गतर्पणमिति।

शौनकः—"प्रसंम्राजेबृह" त्सूक्तमष्टर्चं वारुणं जपेत्।
"समुद्रादूर्मि" रित्यपां सूक्तमेकादशर्चकम् ॥
"आपो अस्मान्मातर" इत्यृचं च जपेन्नरः।
अवगाह्य निमज्ज्याथ द्विराचम्याभिषेचयेत् ॥
"अम्बयोऽय" मृचोऽष्टौ च "आपोहिष्ठा"ऽऽद्यो नव।
अद्भिः स्नात्वोदके मग्नस्त्रिः पठेदघमर्षणम् ॥
कुर्याद्द्वादशभिः स्नानं सर्वपापप्रणाशनम्।
धन्यं यशस्यमायुष्यमारोग्यं पुष्टिवर्धनम् ॥ इति।

शौनकोक्तः।

॥ इति नित्यस्नानम् ॥

---

## अथ काम्यस्नानम्।

पुलस्त्यः—पुष्ये च जन्मनक्षत्रे व्यतीपाते च वैधृतौ।
अमायां च नदीस्नानं पुनात्यासप्तमं कुलम् ॥
चैत्रकृष्णचतुर्दश्यां यः स्नायाच्छिवसंनिधौ।
न प्रेतत्वमवाप्नोति गङ्गायां च विशेषतः ॥
शिवलिङ्गसमीपे तु मुच्यते सर्वकिल्बिषैः।
ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता।
दशजन्माघहा गङ्गा तेन पापहरा स्मृता ॥ इति।

पुलस्त्योक्तम्।

विष्णुः— सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी।
अरुणोदयवेलायां तस्यां स्नानं महाफलम्।

---

१ नास्ति क. पाठे।

पुनर्वसुबुधोपेता चैत्रमाससिताष्टमी ।
स्रोतस्सु विधिवत्स्नात्वा वाजपेयफलं लभेत् ॥

मत्स्यपुराणे—

मात्स्योक्तम् ।

आषाढादिचतुर्मासं प्रातःस्नायी भवेन्नरः ।
विप्रेभ्यो भोजनं दत्त्वा कार्तिक्यां गोप्रदो भवेत् ॥
स वैष्णवं पदं याति विष्णुव्रतमिति स्मृतम् ॥ इति ।

आषाढादीत्यतद्गुणसंविज्ञानो बहुव्रीहिः ।

आदित्यपुराणे—

आदित्यपुराणोक्तम् ।

कार्तिकं सकलं मासं नित्यस्नायी जितेन्द्रियः ।
जपन्हविष्यभुक् स्नानात्सर्वपापैः प्रमुच्यते ॥
तुलामकरमेषेषु प्रातःस्नायी सदा भवेत् ।
हविष्यं ब्रह्मचर्यं च महापातकनाशनम् ॥ इति ।

मार्कण्डेयः—

मार्कण्डेयोक्तम् ।

श्रीकामः सर्वदा स्नानं कुर्वीतामलकैर्नरः ।
सप्तमीं नवमीं चैव पर्वकालं च वर्जयेत् ॥ इति ।

विष्णुः— बालाश्च तरुणा वृद्धनरनारीनपुंसकाः ।
स्नात्वा माघे शुभे तीर्थे प्राप्नुवन्तीप्सितं फलम् ॥
माघमास्युषसि स्नात्वा विष्णुलोकं स गच्छति ॥

चन्द्रिकायाम्—

दर्शं च पौर्णमासं वा प्रारभ्य स्नानमाचरेत् ।
पुण्यान्यहानि त्रिंशत्तु मकरस्थे दिवाकरे ॥
अप्रावृतशरीरस्तु यः कष्टं स्नानमाचरेत् ।
पदे पदेऽश्वमेधस्य फलमाप्नोति मानवः ॥
अनभ्यङ्गी द्विजो मासं सर्वमेनं नयेद्गृही ।
ततः स्नानावसाने तु भोज्यं द्रव्यं सुसंस्कृतम् ॥
भोजयेद्द्विजदाम्पत्यं भूषयेच्च सुभूषणैः ।
दम्पत्योर्वाससी सूक्ष्मे सप्तधान्यसमन्विते ।
त्रिंशच्च मोदका देयाः शर्करातिलमिश्रिताः ॥

---

१ सर्वेति क. पाठः ।

## अथाश्वत्थच्छायाजलस्नानम् ।

प्रयोगपारिजाते—

पारिजातोक्तम् ।

अश्वत्थीयोदके स्नायाद्गजच्छायेति सोच्यते ।
अमागुरुसमायोगः सूर्यपर्वशताधिकः ।। इति ।

आदित्यपुराणे—

आदित्यपुराणोक्तम् ।

गुरुवारेऽप्यमायां च अश्वत्थछायवारिणा ।
स्नानं प्रयागस्नानेन समं पातकनाशनम् ।।

प्रार्थनामन्त्रः—

जीवो वृहस्पतिः सौरिराचार्यो गुरुरङ्गिराः ।
वाचस्पतिर्देवमन्त्री शुभं कुर्यात्सदा मम ।।
एतैर्नामभिरष्टाभिः प्रार्थयेत्तर्पयेत्तथा ।।

।। इत्यश्वत्थच्छायास्नानम् ।।

## अथ समुद्रस्नानम् ।

भरद्वाजः—

पक्षोपवासफलदा महानद्यः समुद्रगाः ।
मासोपवासफलदः सकृत्स्नातो महोदधिः ।। इति ।

आचार्यः—

समुद्रस्नानकालः ।

समुद्रे पर्वसु स्नायादमायां तु विशेषतः ।
पापैर्विमुच्यते सर्वैरमान्ते स्नानमाचरत् ।।
भृगौ भौमदिने स्नानं समुद्रे च विवर्जयेत् ।
ग्रहणे रविवारे च पुत्रेप्सुर्नैतदाचरेत् ।।

।। इति समुद्रस्नानम् ।।

## अथ नैमित्तिकस्नानम् ।

मनुः— दिवाकीर्तिमुदक्या च पतितं सूतिकां तथा ।

अस्पृश्याः ।

शवं तत्स्पृष्टिनं चैव स्पृष्ट्वा स्नानेन शुध्यति ।। इति ।

दिवाकीर्तिश्चण्डालः ।

संवर्तः— तत्स्पृष्टिनं स्पृशेद्यस्तु स्नानं तस्य विधीयते ।
ऊर्ध्वमाचमनं प्रोक्तं द्रव्याणा प्रोक्षणं तथा ।। इति ।

तदबुद्धिपूर्वस्पर्शे ।

तद्बुद्धिपूर्वसंस्पर्शे द्वयोः स्नानं विधीयते ।

इति संग्रहोक्तेरिति माधवः । बुद्धिपूर्वके तु तृतीयस्यापि स्नानम् ।

उपस्पृशेच्चतुर्थस्तु तदूर्ध्वं प्रोक्षणं स्मृतम् ।

इति मरीच्युक्तेः ।

काष्ठाद्यचेतनान्तरितस्पर्शे तु कौर्मे—

चाण्डालसूतकिशवैः संस्पृष्टं संस्पृशेद्यदि ।
प्रमादात्तत आचम्य जपं कुर्यात्समाहितः ॥
तस्पृष्टस्पर्शिनं स्पृष्ट्वा बुद्धिपूर्वं द्विजोत्तमः ।
आचमेत्तु विशुद्ध्यर्थं प्राह देवः पितामहः ॥ इति ।

प्रचेताः—साक्षात्स्पर्शे तु यत्प्रोक्तं तद्वस्त्रान्तरितेऽपि च । इति ।

चतुर्विंशतिमते—

चितिं च चितिकाष्ठं च यूपं चण्डालमेव च ।
स्पृष्ट्वा देवलकं चैव सचैलो जलमाविशेत् ॥
बौद्धान्पाशुपताञ्जैनाँल्लोकायतिककापिलान् ।
विकर्मस्थान्द्विजान्स्पृष्ट्वा सवासा जलमाविशेत् ॥
कापालिकांस्तु संस्पृश्य प्राणायामोऽधिको मतः ॥ इति ।

कापिलाः सांख्या इति केचित् । लोकायतिककापिलानिति कर्मधारयाल्लोकायतिकैकदेशिन एव कापिला इति हेमाद्रिः ।

स्मृत्यन्तरे—

देवलकलक्षणम् ।

देवार्चनपरो विप्रो वित्तार्थी वत्सरत्रयम् ।
स वै देवलको नाम हव्यकव्येषु गर्हितः ॥ इति ।

स्मृतिरत्नावल्याम्—

शिवं सूर्यं तथा चन्द्रं दुर्गादीरुग्रदेवताः ।
योऽर्चयेत्पणपूर्वं तु सद्यः पतति मानवः ॥

देवसंनिधौ पशुबन्धे च देवलयूपस्पर्शे न स्नानम् ।

अस्पृश्यापवादः ।

न स्नायाद्देवलं यूपं देवस्थाने च बन्धने ।
अन्यदा तावुभौ स्पृष्ट्वा सचैलो जलमाविशेत् ।

इति व्यासोक्तेः ।

---

१ सचैल इति ख. पाठः । २ संग्रहोक्तेः इति क. पाठः ।

व्यासः— महानिशा तु विज्ञेया मध्ययामद्वयं निशि ।

स्नाने निषिद्धकालः ।

तस्यां स्नानं न कुर्वीत काम्यनैमित्तिकादृते ।
प्रदोषे पश्चिमे यामे दिनवत्स्नानमाचरेत् ।। इति ।

मध्ययामयोस्तु विशेषमाहात्रिः—

रात्रौ स्नानं यदि भवेत्पश्यन्नग्निं समाचरेत् ।
स्वर्णाङ्गुलिकरो विप्रो वह्निना वा विना चरेत् ।।

पाराशरः—

अस्पृश्यस्पर्शने जाते अश्रुपाते क्षुरे भगे ।
स्नानं नैमित्तिकं कार्यं दैवपित्र्यविवर्जितम् ।। इति ।

दैवादितर्पणरहितमित्यर्थः ।

स एव— तूर्णीमेवावगाहेत यदा स्यादशुचिर्नरः ।

अशुचेः स्नाने संकल्पादिनिषेधः ।

आचम्य विधिवत्पश्चात्प्रयतः स्नानमाचरेत् ।। इति ।

वृद्धमनुः—

निषिद्धोष्णजलस्नानम् ।

मृते जन्मनि संक्रान्तौ श्राद्धजन्मदिने तथा ।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ।। इति ।

गार्ग्यः— कुर्यान्नैमित्तिकस्नानं शीताद्भिः काम्यमेव च ।
नित्यं यादृच्छिकं चैव यथारुचि समाचरेत् ।। इति ।

।। इति नैमित्तिकस्नानम् ।।

## अथ मलापकर्षस्नानम् ।

मनुः— पक्षादौ च रवौ षष्ठ्यां रिक्तायां च तथा तिथौ ।
तैलेनाभ्यज्यमानस्तु धनायुर्भ्यो विहीयते ।।

गर्गः— पञ्चदश्यां चतुर्दश्यामष्टम्यां रविसंक्रमे ।

अभ्यङ्गे वर्ज्यास्तिथयः ।

द्वादश्यां सप्तमीषष्ठ्योस्तैलस्पर्शं विवर्जयेत् ।।
न च कुर्यात्तृतीयायां त्रयोदश्यां तिथौ तथा ।
नवम्यां च दशम्यां च क्षेममिच्छन्हि पण्डितः ।। इति ।

माधवीये—

वारविशेषेणाभ्यङ्गफलम् ।

संतापः कान्तिरल्पायुर्धनं निर्धनता तथा ।
अनारोग्यं सर्वकामा अभ्यङ्गाद्भास्करादिषु ।।

---

१ 'पैत्र्य' ख. पाठः ।

प्रचेता:—सार्षपं गन्धतैलं च यत्तैलं पुष्पवासितम् ।
अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन ॥ इति ।

याज्ञवल्क्य:—
वृथा तूष्णोदकस्नानं वृथा जाप्यमवैदिकम् ।
वृथा त्वश्रोत्रिये दानं वृथा भुक्तमसाक्षिकम् ॥ इति ।

यम:— नित्यं नैमित्तिकं चैव क्रियाङ्गं मलकर्षणम् ।
तीर्थाभावे तु कर्तव्यमुष्णोदकपरोदकैः ॥
आदित्यकिरणैः पूतं पुनः पूतं च वह्निना ।
आम्नातमातुरस्नाने न प्रशस्तं दृढाङ्गिनाम् ॥ इति ।
आपः स्वभावतो मेध्याः किं पुनर्वह्नितापिताः ।
अतः सन्तः प्रशंसन्ति स्नानमुष्णेन वारिणा ॥

इति याज्ञवल्कीयमप्यातुरपरम् ।

वृद्धमनुः—
संक्रान्त्यां रविवारे च सप्तम्यां राहुदर्शने ।
आरोग्यपुत्रमित्रार्थी न स्नायादुष्णवारिणा ॥ इति ।

॥ इति मलापकर्षस्नानम् ॥

---

अथ कातीयानां मध्याह्नस्नाने विशेषस्तत्सूत्रे—
संकल्पं सूत्रपठनं मार्जनं चाघमर्षणम् ।
देवादितर्पणं चैव पञ्चाङ्गं स्नानमुच्यते ॥

अथातो नित्यस्नानम् । नद्यादौ मृद्गोमयकुशतिलसुमनंस आहृत्योदकान्तं गत्वा शुचौ देशे स्थाप्य प्रक्षाल्य पाणिपादं कुशोपग्रहो बद्धशिखो यज्ञोपवीत्याचम्य "उरुँ ही" ति तोयमामन्त्र्य आवर्तयेत् "ये ते शत" मिति "सुमित्रियान" इत्यपोऽञ्जलिनोदाय "दुर्मित्रिया" इति द्वेष्यं प्रति निषिञ्चेत् । कटिं वस्त्यूरुजङ्घे चरणौ करौ मृदा त्रिस्त्रिः प्राक्षाल्याचम्य नमस्योदकमालभेदङ्गानि मृदा "इदं विष्णु" रिति सूर्याभिमुखो मज्जेत् "आपो अस्मान्" इति स्नात्वा "उदादिभ्य" इति निमज्ज्योन्मज्ज्याचम्य गोमयेन विलिम्पन् "मानस्तोके" इति ततोऽभिषिञ्चेत् "इमं मे वरुण" इति चतसृभिः "माप" "उदुत्तमं" "मुञ्चन्तु" "अवभृथे" त्यंते चैवं निमज्ज्योन्मज्ज्याचम्य दर्भैः पावयेत् "आपोहिष्ठा" इति तिसृभिः "इद-

---

१ संयुताः ख. पाठः । २ मा" ख. पाठः । ३ म्पेत् क. पाठः ।

मापो " " हविष्मतीः " " देवीरापः " इति द्वाभ्याम् " अपो देवा " " द्रुपदादिव " " शं नो देवीः " " अपाश्रसं " " अपोदेवीः " " पुनंतु मा " इतिनवभिः " चित्पतिमा " इत्योंकारेण व्याहृतिभिर्गायत्र्या चादावन्ते चान्तर्जलेऽघमर्षणं त्रिरावर्तयेत् " द्रुपदांवा " " आयंगौः" इत्यृचं प्राणायामं वा सशिरसमोमिति वा विष्णोर्वा स्मरणम् । कातीयानामेतत्सूत्रात्सूर्याभिमुखतैव प्रवाहाभिमुखता त्वन्येषामिति कर्कः । सशिरसमित्यनेनाऽशिरस्कोऽपि प्राणायामोऽस्तीति गम्यत इति हरिहरः।

अथ मध्याह्नसंध्यायां विशेषः—उत्तीर्य धौतवाससी परिधाय मृदोरुकरौ प्रक्षाल्याचम्य त्रिरायस्यासून्पुष्पाण्यम्बुमिश्राण्यूर्ध्वं प्रक्षिप्योर्ध्वबाहुः सूर्यमुदीक्षन् "उद्वयम्" "उदुत्यं" "चित्रं" "तच्चक्षुः" "गायत्र्या" च यथाशक्ति " विभ्राड् " इत्यनुवाकपुरुषसूक्तशिवसंकल्पमण्डलब्राह्मणैरुपस्थाय प्रदक्षिणीकृत्य नमस्कृत्योपविशेद्दर्भेषु । दर्भपाणिः स्वाध्यायं च यथाशक्त्यादावारभ्य वेदम् । ऊरुकरक्षालनं च शुद्ध्यर्थं नानन्तरक्रियमाणसंध्यावन्दनाङ्गं प्राणायामात्प्रागाचमनमपीति हरिहरः । ऊर्ध्वं सूर्याभिमुखं प्रक्षेपश्च[1] प्रणवव्याहृतिपूर्विकया गायत्र्येत्यपि स एव । शिवसंकल्प इति मन्त्रा " यज्जाग्रत " इत्याद्याः षट् । मण्डलब्राह्मणम् " यदेतन्मण्डलं तपति " इत्यादि ।

ततस्तर्पयेद्ब्रह्माणं पूर्वं विष्णुं रुद्रं प्रजापतिं देवाञ्छन्दांसि वेदानृषीन् पुराणाचार्यान् गन्धर्वानितराचार्यान्संवत्सरं च सावयवं देवीरप्सरसो देवानुगान्नागान्सागरान्पर्वतान् सरितो मनुष्यान्यक्षान्रक्षाँसि पिशाचान्सुपर्णान् भूतानि पशून्वनस्पतीरोषधीर्भूतग्रामं चतुर्विधं तृप्यतामित्योंकारपूर्वकम् ।

ततो निवीती मनुष्यान्—

सनकं च सनन्दं च तृतीयं च सनातनम् ।
कपिलं चासुरिं चैव वोढुं पञ्चशिखं तथा ॥

ततोऽपसव्यं तिलमिश्रम्—

कव्यवाडनलस्सोमं यममर्यमणमग्निष्वात्तान्सोमपान्बर्हिषदो यमांश्चैके
एकैकस्य तिलैर्मिश्राँस्त्रींस्त्रीन्दद्याज्जलाञ्जलीन् ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥

जीवत्पितृकोऽप्येतानन्यांश्चेतरः । " उदीरता " " आङ्गिरस "

१ प्रक्षेपे क. पाठः ।

"आयन्तु नः" "ऊर्जं" "पितृभ्यो" "ये चेह" "मधुवाता" इत्यृचं जपन्प्रसिञ्चेत्तृप्यध्वमिति च त्रिः "नमो वः" इत्युक्त्वा मातामहानां चैवम् । गुरुशिष्यर्त्विग्ज्ञातिबान्धवा न तर्पिता देहाद्रुधिरं पिबन्ति । अत्र यद्यपि ब्रह्मादिद्वितीयान्तेषु तर्पयामीति वाक्यशेषो युक्तस्तथापि श्रुतत्वात्तृप्यतामित्येवानुषज्यते । तेन ब्रह्माद्याः प्रथमान्ततयोच्चार्याः ॐ ब्रह्मा तृप्यतामित्येकोनविंशतिवाक्यानि । सावयवमिति सवत्सरविशेषणम् । एवमेव सनकादिसप्तसु । कव्यवाट् चासावनलश्चेत्येकैव देवतेति कर्कहरिहरौ । देवताद्वयमित्यन्ये । यमादिषु चतुर्दशसु यमाय नमस्तर्पयामीत्यादिः प्रयोग इति हरिहरः । अन्यान्पित्रादींस्त्रीन् । इतरो मृतपितृकः "उदीरता" मिति षण्मन्त्रान् "मधुवाता" इति तृचं च जपन्नञ्जलीन्क्षिपेत् । तृप्यध्वमिति च प्रत्येकमुक्त्वा क्षिपेत् "नमो वः पितर" इत्यादीन्षण्मन्त्रानुक्त्वाऽनन्तरं मातामहादींस्तर्पयेत् ।

वासो निष्पीड्याचम्य ब्राह्मवैष्णव-रौद्र-सावित्र-मैत्रावरुणैस्तल्लिङ्गैरर्चयेत् "अदृश्रमस्य" "हंसः" इत्युपस्थाय सूर्यं प्रदक्षिणीकृत्य नमस्कृत्य च दिशश्च देवताश्च उपविश्य ब्रह्माग्निपृथिव्योषधी वाग्वाचस्पति विष्णुमरुद्भ्योऽपांपतये वरुणाय नम इति सर्वत्र । "संवर्चसे" इति मुखं विमृष्टे "देवागातुविदः" इति विसर्जयेत् । एष स्नानविधिः इति ।

---

## अथ गौणस्नानानि ।

वृद्धमनुः—

असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया ।
मन्त्रस्नानादिकं प्रोक्तं मुनिभिः शौनकादिभिः ॥ इति ।

चतुर्विंशतिमते—

आग्नेयं भस्मना स्नानमवगाहस्तु वारुणम् ॥
आपोहिष्ठेति च ब्राह्मं वायव्यं रजसा गवाम् ॥
यत्तु सातपवर्षं तु तत्स्नानं दिव्यमुच्यते ।
स्नानान्येतानि चापत्सु व्याधितस्योदकं विना ॥ इति ।

स्नानप्रतिनिधयः।

प्रयोगपारिजाते—

आपोहिष्ठादिभिर्मान्त्रं मृदालम्भस्तु पार्थिवम् ।
आग्नेयं भस्मना स्नानं वायव्यं गोरजः स्मृतम् ॥

---

१ °सत्तां° क. पाठः । २ गाह्य च क. पाठः ।

यत्तु सातपवर्षं हि स्नानं तद्दिव्यमुच्यते ।
अवगाहो वारुणं स्यान्मानसं विष्णुचिन्तनम् ॥

चतुर्विंशतिमते—अशीतिमते

अशक्तावशिरस्कं यत्स्नानं मन्त्रविधानतः ।
आर्द्रेण वाससा चाङ्गमार्जनं कापिलं स्मृतम् ॥

अथ सारस्वतम्—

विद्वत्सरस्वतीप्राप्त स्नान सारस्वतं विदुः ।

विद्वत्सरस्वती शुद्धोऽसीत्यादिवचः ।

अथ गायत्रम्—

गायत्र्या जलमादाय दशकृत्वोऽभिमन्त्र्य च ।
शिरश्चाङ्गानि सर्वाणि प्रोक्षयेत्तेन वारिणा ॥
स्नानं गायत्रकं नाम सर्वपापप्रणाशनम् ।
अशक्तानां तु जन्तूनां गुरोः पादोदकं शुभम् ॥

तथा— विप्रपादाद्विष्णुपादात्तलस्याः संभृतं जलम् ।
प्रोक्षणात्स्नानमाप्नोति ध्यानस्नानं विशिष्यते ॥
चतुर्भुजं महाकायं शङ्खचक्रगदाधरम् ।
ध्यायीत मनसा विष्णुं स्नानं मानसमीरितम् ॥

एतैस्तु स्नानानुकल्पैर्जपसंध्यावन्दनवेदाध्ययनेष्वेवाधिकारो न श्राद्धदेवपूजादौ ।

प्रातः स्नातुमशक्तस्तु रोगाद्यैर्वा भयाच्च वा ।
पूर्ववस्त्रं परित्यज्य गौणस्नानेन शुध्यति ॥
स च कर्मस्वनर्हः स्याच्छ्राद्धदेवार्चनादिषु ।
जपेत्संध्यां तथा वेदान्सोऽधीयीत यथाविधि ॥

गौणस्नानपूतस्य कर्मविशेषेऽर्हत्वानर्हत्वम् ।

इत्याचार्यस्मृतेः । इति गौणस्नानानि ।

॥ इति स्नानविधिः ॥

---

## अथ तिलकम् ।

ब्रह्मपुराणे—

पर्वताग्रे नदीतीरे रामक्षेत्रे विशेषतः ।
सिन्धुतीरे च वल्मीके तुलसीमूलमाश्रिताः ॥

---

१ मम' क. पाठः ।

मृद एतास्तु संपाद्या वर्जयेदन्यमृत्तिकाः ॥
द्वारवत्युद्भवाद्गोपीचन्दनादूर्ध्वपुण्ड्रकम् ।
कारयेन्नित्यमेवं हि पापं हन्ति दिने दिने ॥
जाह्नवीतीरसंभूतां मृदं मूर्ध्ना बिभर्ति यः ।
बिभर्ति रूपं सोऽर्कस्य तमोनाशाय केवलम् ॥
श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं भवेत् ।
श्रीकरं पीतमित्याहुर्वैष्णवं श्वेतमुच्यते ॥
अङ्गुष्ठः पुष्टिदः प्रोक्तो मध्यमाऽऽयुःकरी भवेत् ।
अनामिकाऽन्नदा नित्यं मुक्तिदा च प्रदेशिनी ।
एतैरङ्गुलिभेदैस्तु कारयेन्न नखैः स्पृशेत् ।

तिलकयोग्यमृत्तिकाः ।

तिलकं प्रक्रम्य स्मृतिचन्द्रिकायां ब्रह्माण्डे—

ललाटे केशवं विद्यान्नारायणमथोदरे ।
माधवं हृदि विन्यस्य गोविन्दं कण्ठकूपके ॥
उदरे दक्षिणे पार्श्वे विष्णुरित्यभिधीयते ।
तत्पार्श्वे बाहुमध्ये तु विन्यसेन्मधुसूदनम् ॥
त्रिविक्रमं कर्णदेशे वामकुक्षौ तु वामनम् ।
श्रीधरं बाहुके वामे हृषीकेशं तु दक्षिणे ॥
पृष्ठदेशे पद्मनाभं ककुद्दामोदरं स्मरेत् ।
द्वादशैतानि नामानि वासुदेवेति मूर्धनि ।
संकर्षणादिभिः कृष्णे शुक्ले चेत्केशवादिभिः ॥ इति ।

तिलकधारणमन्त्राः ।

शौनकः—

उर्ध्वं पुण्ड्रं शिवस्यैवं विष्णोः कुर्युश्च वा बुधाः ।
मूर्ध्नि मूलेन मन्त्रेण शेषं द्वादशनामभिः ॥
स्थानेष्वेषु द्विजः कुर्यात् नमोन्तैः प्रणवेन च ॥ इति ।

स्थानविशेषेणाकारविशेषः स्मर्यते—

निटिले बाहुवच्चैव दण्डवत्कर्णपल्लवे ।
हृदये कमलाकारमुदरे दीपवल्लिखेत् ॥
वेणुपत्रसमाकारं बाहुमध्ये समालिखेत् ।
अधःपृष्ठे स्कन्धदेशे लिखेज्जम्बुफलाकृति ॥

पुण्ड्राकारविशेषाः ।

१ स्नात्वेति ख. पाठः ।

निटिले भाले । प्रमाणं तु—

दशाङ्गुलं प्रमाणं तु ह्युत्तमोत्तममुच्यते ।
नवाङ्गुलं मध्यमं स्यादष्टाङ्गुलमतः परम् ।
सप्तषट्पञ्चभिः पुण्ड्रं मध्यमं त्रिविधं स्मृतम् ।
चतुस्त्रिद्व्यङ्गुलैः पुण्ड्रं कनिष्ठं त्रिविधं भवेत् ॥
ऊर्ध्वं पुण्ड्रमृजुं सौम्यं कनिष्ठाङ्गुलिवत्स्मृतम् ।
नासादिकेशपर्यन्तं प्रयत्नाद्धारयेद्द्विजः ॥

पुण्ड्रप्रमाणानि ।

सत्यव्रतः—

मद्भक्तो धारयेन्नित्यमूर्ध्वपुण्ड्रं विना तु तत् ।
यत्कर्म कारयेन्नित्यं तत्सर्वं निष्फलं भवेत् ॥ इति ।

प्रयोगपारिजाते संग्रहे—

ऊर्ध्वं पुण्ड्रं त्रिपुड्रं वा मध्ये शून्यं प्रधारयेत् ।
शृणु षण्मुख तन्मध्ये उमयाऽहं श्रिया हरिः ॥ इति ।

तत्रैव सारणीये शङ्खः—

शङ्खचक्राद्यङ्कनं च तुलसीदलभक्षणम् ।
यः कुर्यान्नियतं भक्त्या स याति परमां गतिम् ॥
नान्यं देवं नमस्कुर्यान्नान्यं देवं निरीक्षयेत् ।
चक्राङ्कितः सदा तिष्ठेन्मद्भक्तः पांण्डुनन्दन ॥ इति ।

शङ्खादिवचांसि वैदिकमार्गभ्रष्टपराणि ।

वेदमार्गानुयाविनामङ्कननिषेधः ।

शिवकेशवयोरङ्कान्शूलचक्रादिकान्द्विजः ।
न धारयेत मतिमान्वैदिके वर्त्मनि स्थितः ॥

इत्याश्वलायनोक्तेः ।

ब्रह्माण्डे—मृत्तिका चन्दनं चैव भस्म तोयं चतुर्थकम् ।
एभिर्द्रव्यैर्यथाकालमूर्ध्वं पुड्रं सदा भवेत् ॥

कालविशेषेतिलकविशेषः ।

स्नात्वा पुड्रं मृदा कुर्याद्धुत्वा चैव तु भस्मना ।
देवानभ्यर्च्य गन्धेन सर्वपापापनुत्तये ।
जलेन तिलकं कुर्याज्जलान्तः कर्मसिद्धये ॥ इति ।

संग्रहे— न कदाचिन्मृदा तिर्यक् न्यसेदूर्ध्वं न भस्मयेत् ।
अत्र भस्मनोर्ध्वपुंण्ड्रस्य विहितप्रतिषिद्धत्वाद्विकल्पः ।

स च वृद्धाचारतो व्यवस्थित इति नृसिंहः ।

कात्यायनः—

श्राद्धे यज्ञे जपे होमे वैश्वदेवे सुरार्चने ।
धृतत्रिपुण्ड्रः पूतात्मा मृत्युं जयति मानवः ॥

भविष्यपुराणे—

सत्यं शौचं जपो होमस्तीर्थं देवादिपूजनम् ।
तस्य व्यर्थमिदं सर्वं यस्त्रिपुण्ड्रं न धारयेत् ॥ इति ।

भस्मधारणप्रदेशः स्मृतिरत्नावल्याम्—

भस्मधारणस्थानानि ।

ललाटे हृदये नाभौ गलेंऽसे बाहुसंधिषु ।
पृष्ठदेशे शिरस्येवं स्थानेष्वेतेषु धारयेत् ॥

भस्मधारणे मन्त्रानाह पुलस्त्यः—

भस्मधारणविधिः ।

"अग्निरि"त्यादिभिर्मन्त्रैः शुद्धं भस्माभिमन्त्रितम् ।
शिवमन्त्रेण तद्धार्यं मन्त्रेणाष्टाक्षरेण वा ॥
गायत्र्या वाथ देवर्षे मन्त्रेण प्रणवेन वा ।
करोति शिवमन्त्रेण यस्त्रिपुण्ड्रं द्विजोत्तमः ॥
त्र्यक्षः शूलधरः सौम्यः शिवलोके महीयते ॥
अष्टाक्षरेण मन्त्रेण यः करोति त्रिपुण्ड्रकम् ।
विष्णोः पदमवाप्नोति नान्यथा श्रुतिचोदितम् ॥
सौरं पदमवाप्नोति गायत्र्या मुनिसत्तम ।
प्राप्नोति ब्रह्मणो रूपं प्रणवेन न संशयः ॥ इति ।

अग्निरित्यादिमन्त्रास्त्वाथर्वणस्य पिप्पलाद ऋषिः । गायत्री छन्दः । रुद्रो देवता । भस्मशुद्धौ विनियोगः । अग्निरिति भस्म । वायुरिति भस्म । जलमिति भस्म । स्थलमिति भस्म । व्योमेति भस्म । सर्वं ह वा इदं भस्म ।

प्रयोगपारिजाते—

धार्यं भस्म त्रिपुण्ड्रं तु गृहिणा जलसंयुतम् ।
सर्वकालं भवेत्स्त्रीणां यतीनां जलवर्जितम् ॥

भस्मधारणे धारकविशेषेण सजलनिर्जलत्वविशेषः ।

वानप्रस्थस्य कन्यानां दीक्षाहीननृणां तथा ।
मध्याह्नात्प्राक्जलैर्युक्तं परतो जलवर्जितम् ॥
मध्याङ्गुलित्रयेणैव स्वदक्षिणकरस्य तु ।
त्रिपुण्ड्रं धारयेद्विद्वान् सर्वकल्मषनाशनम् ॥ इति ।

स्मृतिरत्नावल्याम्—

मध्यमानामिकाङ्गुष्ठैरनुलोमविलोमतः।
अतिस्वल्पमनायुष्यमतिदीर्घं तपःक्षयः॥

वर्णविशेषे पुण्ड्रप्रमाणविशेषाः।

नेत्रयुग्मप्रमाणेन त्रिपुण्ड्रं धारयेद्द्विजः।
षडङ्गुलप्रमाणेन ब्राह्मणानां त्रिपुण्ड्रकम्॥
नृपाणां चतुरङ्गुल्यं वैश्यानां त्र्यङ्गुलं तथा।
शूद्राणामथ सर्वेषामेकाङ्गुल्यं त्रिपुण्ड्रकम्॥ इति।

तत्रैव— त्रिपुण्ड्रं ब्राह्मणो विद्वान्मनसाऽपि न लङ्घयेत्।
स्मृत्या विधीयते यस्मात्तत्त्यागी पतितो भवेत्॥
त्रिपुण्ड्रेण विना येन विप्रेण यदनुष्ठितम्।
न तद्ध्यानं न तज्ज्ञानं न तद्दानं जपो न सः॥

संग्रहे— ये भस्मधारिणं दृष्ट्वा वाचा निन्दन्ति मानवाः।
तेषां शूद्रेण संभूतिरनुमेया विपश्चिता॥ इति।

[ नारदः— मद्यं पीत्वा गुरुदारांश्च गत्वा
स्वर्णस्तेयं ब्रह्महत्यां च कृत्वा।
भस्मच्छन्नो भस्मशय्याशयानो
रुद्रं ध्यायन्मुच्यते पातकेभ्यः॥ इति। ]

॥ इति तिलकम्॥

## अथ संध्यावन्दनम्।

तस्य च नित्यतामाह मरीचिः—

संध्या येन न विज्ञाता संध्या येनानुपासिता।
जीवमानो भवेच्छूद्रो मृतः श्वा चाभिजायते॥ इति।

शुचित्वसंपादनेन कर्माङ्गतामाह दक्षः—

संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु।
यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत्॥ इति।

अङ्गता च प्रातःसंध्याया एवेति केचित्। युक्तं तु वचनान्तरप्राप्ततत्तत्संध्याकालोत्तरभावितत्तत्कर्माङ्गता संध्यात्रयस्याप्यविशेषात्। अत्रिः—संध्यात्रयं तु कर्तव्यं द्विजेनात्मविदा सदा। इति।

१ °णं तु ख. पाठः। २ क. नास्ति।

अत्र संध्यापदं संध्यासु कर्तव्यत्वात्संधिरूपकालप्राप्तेस्तत्प्रख्यतया कर्मनाम दर्शपूर्णमासादिवत् । तच्च कर्मोपासनाख्यं ध्यानम् । तदेव च प्रधानम्—

संध्यामुपासते ये तु सततं शंसितव्रताः ।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ।

इति फलसंबन्धात् । अतो रणेऽर्जुनादिभिरङ्गेष्वसामर्थ्यात्सूर्योपासनमात्रं प्रधानमकारि इति ।

भारते— ते तथैव महाराज दंशिता रणमूर्धनि ।
संध्यागतं सहस्रांशुमादित्यमुपतस्थिरे ॥ [ इति ।

तथाच ] तैत्तिरीये—" उद्यन्तमस्तं यन्तमादित्यमभिध्यायन्कुर्वन्ब्राह्मणो विद्वान्सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद " इति ।

कुर्वन्गायत्रीजपं भद्रमीप्सितं फलं ब्रह्म वेत्यादि । अज्ञानाज्जीवितां प्राप्तोऽनेन ध्यानेन ब्रह्माप्नोतीत्यर्थः ।

व्यासः— संध्येति सूर्यगं ब्रह्म संधानादविभागतः ।
ब्रह्माद्यैः सकलैर्मूर्तैः स्तम्बान्तैः सच्चिदात्मनः ॥
तस्य दासोऽहमस्मीति सोऽहमस्मीति वा मतिः ।
भवेदुपासकस्येति ह्येवं वहुविदो विदुः ॥

आदित्यस्यैव कालभेदेन नामान्याह स एव—
गायत्रीनाम पूर्वाह्णे सावित्री मध्यमे दिने ।
सरस्वती च सायाह्ने सैव संध्या त्रिपु स्मृता ॥ इति ।

संधिकालोपास्यत्वात्संध्येति माधवः । सम्यग्ध्येयत्वात्संध्येति नृसिंहः । उभयथा ध्येयः सूर्य एव ।

[ वर्णविशेषः ] स्मृत्यन्तरे दर्शितः—
गायत्री तु भवेद्रक्ता सावित्री शुक्लवर्णिका ।
सरस्वती तथा कृष्णा उपास्या वर्णभेदतः ॥ इति ।

तत्रैव— गायत्री ब्रह्मरूपा तु सावित्री रुद्ररूपिणी ।
सरस्वती विष्णुरूपा उपास्या रूपभेदतः ॥ इति ।

व्यासः— न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह ।
सोऽहमस्मीत्युपासीत विधिना येन केनचित् ॥ इति ।

---

१ क. नास्ति । २ 'येष्वाद्ये' क. पाठः । ३ क. नास्ति ।

प्रतिग्रहान्नदोषात्तु पातकादुपपातकात् ।
गायत्री प्रोच्यते यस्माद्गायन्तं त्रायते ततः ॥
सवितृद्योतनात्सैव सावित्री परिकीर्तिता ।
जगतः प्रसवित्री वा वाग्रूपत्वात्सरस्वती ॥ इति ।

व्यासोक्तौ गायत्रीपदस्य मन्त्रे प्रयोगस्तु प्रतिपाद्यादित्यनेन सहा-भेदोपचारादिति नृसिंहः ।

स्मृत्यन्तरे—

गायत्रीं चिन्तयेद्यस्तु हृत्पद्मे समुपस्थिताम् ।
धर्माधर्मविनिर्मुक्तः स याति परमां गतिम् ॥ इति ।

॥ इति संध्यास्वरूपम् ॥

## अथ संध्याकालः ।

धर्मसारे—

उत्तमा तारकोपेता मध्यमा लुप्ततारका ।
अधमा सूर्यसहिता प्रातःसंध्या त्रिधा मता ॥
उत्तमा सूर्यसहिता मध्यमा लुप्ततारका ।
कनिष्ठा तारकोपेता सायंसंध्या त्रिधा मता ॥ इति ।

संध्यायां गौण-मुख्यकालाः ।

अग्निस्मृतौ—

संध्याकालः प्रागुदयाद्विप्रस्य द्विमुहूर्तकः ।
क्षत्रियस्य तदर्धं स्यात्तदर्धं स्याद्विशोऽप्युत ।
तथैवास्तमिते तेषां वैश्यादीनामयं क्रमः ॥ इति ।

वर्णविशेषेण कालविशेषः ।

दक्षः— रात्र्यन्तयामनाडी द्वे संध्याकालोऽयमुच्यते ।
दर्शनाद्रविरेखायास्तदन्तो मुनिभिः स्मृतः ।
अध्यर्धयामादासायं संध्या माध्याह्निकीष्यते ॥ इति ।

॥ इति संध्याकालः ॥

## अथ देशः ।

व्यासः— गृहे त्वेकगुणा संध्या गोष्ठे दशगुणा स्मृता ।
शतसाहस्रिका नद्यामनन्ता विष्णुसन्निधौ ॥
बहिः संध्या दशगुणा गर्तप्रस्रवणेषु च ।
ख्याते तीर्थे शतगुणा ह्यनन्ता जाह्नवीजले ॥

शातातपः—

अनृतं मद्यगन्धं च दिवामैथुनमेव च ।
पुनाति वृषलस्यान्नं बहिः संध्या ह्युपासिता ।। इति ।

विहरणलोपप्रसंगेन बहिर्गमने अवकाशाभावे आहात्रिः—

संध्यात्रयं तु कर्तव्यं द्विजेनात्मविदा सदा ।
उभे संध्ये तु कर्तव्ये ब्राह्मणैस्तु गृहेष्वपि ।। इति ।

।। इति देशः ।।

## अथ प्रयोगः ।

शौनकः—

प्राणानायम्य विधिवद्वाग्यतः संयतेन्द्रियः ।
अथ संध्यामुपासिष्य इति संकल्प्य मार्जयेत् ।।
तिसृभिर्मार्जनं कुर्यात् आपोहीति कुशोदकैः ।
पादे पादे क्षिपेदापो मूर्ध्नि प्रणवसंयुताः ।।

स एव— नासिकामङ्गुलीभिश्च तर्जनीमध्यमादृते ।
सव्येन तु समाकृष्य दक्षिणेन विसर्जयेत् ।।
प्रणवं व्याहृतीः सप्त गायत्रीं शिरसा सह ।
त्रिःपठेदायतप्राणः प्राणायामः स उच्यते ।।
शनैर्नासापुटे वायुमुत्सृजेन्न तु वेगतः ।
न कम्पयेच्छरीरं तु स योगी परमो मतः ।। इति ।

ऋग्विधाने—

नवप्रणवयुक्तेन आपोहिष्ठा त्र्यृचेन तु ।
संवत्सरकृतं पापं मार्जनान्ते विनश्यति ।।

ऋक्त्रये प्रतिपादमादौ प्रणवे सति नव प्रणवाः ।

ब्रह्माप्याह प्रयोग पारिजाते—

आपोहिष्ठादिभिः पादैः शिरस्यंसे च विप्रुषः ।
यस्य क्षयायेत्यधस्तात्क्षिप्त्वाद्भिः परिषेचयेत् ।। इति ।

स एव— धाराच्युतेन तोयेन संध्योपास्तिर्विगर्हिता ।

कथं तर्हीत्यत आह—

नद्यां तीर्थे ह्रदे वापि भाजने मृन्मयेऽपि वा ।
औदुम्बरे च सौवर्णे राजते दारुसंभवे ।
कृत्वा तु वामहस्ते वा संध्योपास्तिं समाचरेत् ।। इति ।

औदुम्बरं ताम्रं, कृत्वेति जलमिति शेषः । पात्राभावे वामहस्तेन न तु पात्रसत्वेऽपि ।

वामहस्ते जलं कृत्वा ये तु संध्यामुपासते ।
सा संध्या वृषली ज्ञेया असुरास्तैस्तु तर्पिताः ॥ इति स्मृतेः ।

गृह्यपरिशिष्टे अथाचमनोदकमादाय "सूर्यश्च" इति पिबेत् सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्तां यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु यत्किंच दुरितं मयि इदमहं मा ममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा इति समन्त्राचमनम् ॥

अथ मध्याह्ने—" आपः पुनंतु " इति समन्त्राचमनम् ।

आपः पुनंतु पृथिवीं पृथिवी पूता पुनातु माम् ।
पुनंतु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम् ॥
यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम ।
सर्वं पुनातु मामापो सतां च प्रतिग्रहं स्वाहा ॥ इत्येवम् ।

सायं विशेषः—सूर्यश्चेतिमन्त्रे सूर्यस्थाने अग्निपदं रात्र्याः स्थाने अहः सत्ये ज्योतिषीति चान्ते जुहुयादिति ।

भगवांश्चाह—

सूर्यश्चेत्यनुवाकेन प्रातःकाले पिबेदपः ।
अग्निश्चेत्यनुवाकेन सायंकाले पिबेदपः ।
आपः पुनंतु मध्याह्ने मन्त्राचमनमाचरेत् ॥ इति ।

सूर्यश्चेति मन्त्रस्य याज्ञवल्क्युपनिषदृषिः सूर्यमन्युमन्युपतयो रात्रिश्च देवता गायत्रीपङ्क्तिविराजश्छन्दांसि रक्षन्तामित्यन्ता गायत्री, दुरितं मयीत्यन्ता पङ्क्तिः "पञ्चपदा पङ्क्तिः" इति श्रुतेः । स्वाहेत्यन्ता दशाक्षरपादद्वयोपेता विराट् दशाक्षराविराट् इति श्रुतेः । प्रकृतिश्छन्द इति मदनः । आपः पुनन्त्वित्यस्य याज्ञवल्क्युपनिषदृषिः पूतो वा आपः पृथिवी ब्रह्मणस्पतिर्ब्रह्मदेवता अष्टपदा अष्टिछन्दः आचमने विनियोगः ।

इति मन्त्राचमनम् ।

---

१ अत्र 'याज्ञवल्क्य उपनिषदृषिः' इति केचित् पठन्ति । केचिच्च तैत्तिरीयाणां महानारायणोपनिषदि सूर्यश्चेत्यादिमन्त्राणामाम्नानात् तस्याश्च याज्ञिक्युपनिषदितिसमाख्यानात्, याज्ञिक्युपनिषदृषिरिति पठन्ति । तत्रापि उपनिषत्पदस्य ऋषिसंज्ञान्तर्गतत्वं चिन्त्यम् । गृह्यपरिशिष्टे तु ब्रह्माऋषिरित्युक्तम् । स्वगृह्योक्तत्वाद्बह्वृचैस्तदेवाश्रयितुं युक्तमिति प्रतिभाति ।

## अथ द्वितीयमार्जनम् ।

कात्यायनः—

प्रणवो भूर्भुवःस्वश्च गायत्री च तृतीयका ।
अब्दैवता ऋचश्चैव चतुर्थमिति मार्जनम् ॥

भगवान्—

प्रणवेन व्याहृतिभिर्गायत्र्या प्रणवाद्यया ।
आपोहिष्ठेतिसूक्तेन मार्जनं हि चतुर्थकम् ॥

प्रजापतिः—

ऋगन्ते मार्जनं कुर्यात्पादान्ते वा समाहितः ।
अर्धर्चान्तेऽथवा कुर्याच्छिष्टानां मतमीदृशम् ॥

## अथ पापनिरसनम् ।

भगवान्—

उद्धृत्य दक्षिणे हस्ते जलं गोकर्णवत्कृते ।
निःश्वासं नासिकाग्रे तु पाप्मानं पुरुषं स्मरेत् ॥
ऋतं चेति त्र्यृचंवाऽपि [ द्रुपदां वा जपेदृचम् ।
दक्षनासापुटेनैव पाप्मानमपसारयेत् ।
तज्जलं नावलोक्याथ वामभागे क्षितौ क्षिपेत् ॥

द्रुपदा च वाजसनेयके—][1]

द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव ।
पूतं पवित्रेणेवाज्यमापः शुद्धं तु मैनसः ॥ इति ।

कात्यायनः—

करेणोत्सृज्य सलिलं घ्राणमासज्य तत्र च ।
जपेदनियतासुर्वा त्रिः सकृद्वाघमर्षणम् ॥ इति ।

आसज्य निरुध्य विकल्पः शक्ताशक्तविषयः

गृह्यपरिशिष्टे—" तदुदकमवीक्षमाणो वामतो भुवि तीव्रपातेन क्षिप्त्वा तं पाप्मानं वज्रहतं सहस्रधा दलितं भावयेत् " इति ।

स्मृत्यन्तरे—

ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् ।
सुरापानहृदायुक्तं गुरुतल्पकटिद्वयम् ॥

---

१ क. नास्ति ।

तत्संयोगपदद्वन्द्वमङ्गप्रत्यङ्ग पातकम् ।
उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ।
खड्गचर्मधरं कृष्णं कुक्षौ पापं विचिन्तयेत् ।। इति ।
।। इति पापपुरुषनिरसनम् ।।

## अथार्घ्यदानम् ।

तच्च अङ्गं न प्रधानं फलसंबन्धाभावात् । गृह्यपरिशिष्टे—अथाचम्य दर्भपाणिः पूर्णमुदकाञ्जलिमुद्धृत्यादित्याभिमुखः स्थित्वा प्रणवव्याहृतिपूर्वया सावित्र्या त्रिर्निवेदयन्नुत्क्षिपेत्तदेवार्घ्यनिवेदनम् । असावादित्यो ब्रह्मेति प्रदक्षिणं परिपतन्परिषिच्याप उपस्पृशेत् इति ।

मध्याह्ने विशेषस्तत्रैव—अथाकृष्णीयया हंसवत्या वा त्रिःसकृद्वार्घ्यमुत्क्षिपेत् ।

आश्वलायनः—

ततस्तिष्ठञ्जलं गृह्य प्राङ्मुखोऽञ्जलिना स्मरेत् ।
स्थानादौ सुस्थितं तेजः स्फटिकज्योतिषा समम् ।।
उत्तीर्य तच्च संप्राप्तं दक्षिणेन यथाञ्जलिम् ।
व्याहृत्यादिजपेन्मंत्रं स्मृत्वैवं परितो रवेः ।।
मन्देहान्युध्यतः क्रूरान्निक्षिपेत्तेष्वथाञ्जलिम् ।
षोडषाक्षरमन्त्रेण पुनराकृष्य सत्वरः ।।
पुनर्जलं गृहीत्वेवं तेजोमन्त्रं च संस्मरन् ।
एवं त्रिवारमावृत्त्य दग्ध्वा तानसुरान्द्विजः ।।
मन्त्रेणाकृष्य तत्तेजः स्थानादौ स्थापयेत्स्मरन् ।
पूर्ववद्वाममार्गेण स्मृत्वा संस्थाप्य चात्मनि ।।
प्रदक्षिणं समावर्त्य जलं गृह्याचमेत्ततः ।। इति ।

स्थानादावाधारमण्डपे नासादक्षिणरन्ध्रेण[1] आधारमण्डपाज्ज्योतिरञ्जलिमागतं मन्देहाख्यराक्षसनाशाय तोयेन सह क्षिप्तं गायत्रीशिरसा नासावामरन्ध्रेण पुनराधारमण्डपे स्थापयामीति सर्वतात्पर्यार्थः ।

शोडशाक्षरमन्त्रमाह व्यासः—

शोडशाक्षरकं ब्रह्म गायत्र्यास्तु शिरः स्मृतम् ।
"ॐ आपोज्योतिः" इत्येष मन्त्रो वै तैत्तिरीयके ।। इति ।

---

१ स्थितं ज्योतिर्नासादक्षिणरन्ध्रेण पुन° क. पाठः ।

संग्रहे— मुक्तहस्तेन दातव्यं मुद्रां तत्र न कारयेत् ।
तर्जन्यङ्गुष्ठयोगे तु राक्षसी मुद्रिका स्मृता ॥
राक्षसी मुद्रिकार्घेण तत्तोयं रुधिरं भवेत् ।
जलेष्वर्घ्यं प्रदातव्यं जलाभावे शुचिस्थले ।
संप्रोक्ष्य वारिणा सम्यक् ततोऽर्घ्यं तु प्रदापयेत् ॥ इति ।

---

## अथ गायत्रीजपः ।

याज्ञवल्क्यः—

जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ।
संध्याप्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात् ॥
सायं प्रत्यङ्मुखासीन आनक्षत्रोदयं जपेत् ।

प्रातस्तु प्राङ्मुखस्तिष्ठन्नासूर्योदयामित्यर्थः ।

गृह्यपरिशिष्टे—"शुचौ देशे दर्भाम्भसोक्षिते दर्भान्संस्तीर्य व्याहृतिभिरुपविश्य प्राणायामत्रयं कृत्वा आत्मानं व्याहृतिभिरभ्युक्ष्य सावित्र्या ऋषिर्दैवतच्छन्दांस्यनुस्मृत्य षड्भिस्तदङ्गमन्त्रैर्यथाङ्गमात्मनि न्यस्यात्मानं तद्रूपं भावयेत्" तद्यथा "तत्सवितु" र्हृदयानम इति हृदये । "वरण्यं" शिरसे स्वाहेति शिरसि । "भर्गो देवस्य" शिखायै वौषडिति शिखायाम् । "धीमहि" कवचायहुमित्युरसि । "धियो यो नो" नेत्रत्रयाय वौषडिति नेत्रललाटेषु न्यस्याथ "प्रचोदयात्" अस्त्रायफडिति करतलेऽस्त्रं प्राचादिषु दशसु न्यसेदेषोऽङ्गन्यासः । एवमप्येके नेच्छन्ति स हि विधिरवैदिक इति । अथ मन्त्रदेवतां ध्यात्वा 'आगच्छ वरदे देवि' इत्यावाह्य तिष्ठन्नर्धनक्षत्रेष्वामण्डलदर्शनान्मन्त्रार्थमनुसंदधानः प्रणवव्याहृतिपूर्विकां सावित्रीं जपेत् ॥ इति ।

भगवान्—

सायं प्रातश्च मध्याह्ने सावित्रीं वाग्यतो जपेत् ।
सहस्रपरमां देवीं शतमध्यां दशावराम् ॥
गायत्रीं संस्मरेद्धीमान्हृदि वा सूर्यमण्डले ।
मनःसंतोषणं शौचं मौनं मन्त्रार्थचिन्तनम् ।
अव्यग्रत्वमनिर्वेदो जपसंपत्तिहेतवः ॥ इति ।

व्यासः—

अष्टोत्तरशतं नित्यं अष्टाविंशतिमेव वा।
विधिना दशकं वाऽपि त्रिकालेषु जपेद्बुधः॥ इति।

जपे आसनान्याह स एव—

कौशेयं कम्बलं चैव अजिनं पट्टमेव च।
दारुजं तालपत्रं वा आसनं परिकल्पयेत्॥
कृष्णाजिने ज्ञानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि।
वशाजिने व्याधिनाशः कम्बले दुःखमोचनम्।
अभिचारे नीलवर्णं रक्तं वश्यादिकर्मणि।
शान्तिके कम्बलं प्रोक्तं सर्वेष्टं चित्रकम्बले॥ इति।

जपे आसनानि।

वशा वन्ध्या सा च मृगी व्याघ्री वा। उपरिस्थितेः

स एव—

वंशासने तु दारिद्र्यं पाषाणे व्याधिसंभवः।
धरण्यां दुःखसंभूतिर्दौर्भाग्यं छिद्रदारुजे।
तृणे धनयशोहानिः पल्लवे चित्तविभ्रमः॥ इति।

उपवेशने मन्त्र उक्तो गायत्रीकल्पे—

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता।
त्वं च धारय मां देवि पवित्रं कुरु चासनम्॥ इति।

ऋष्याद्याह—

पृथिव्या मेरुपृष्ठं तु ऋषिरित्यभिधीयते।
सुतलं छन्द इत्याहुः कूर्मो वै देवता स्मृता।
मेरोरारोहणे तस्य विनियोगः प्रकीर्तितः॥ इति।

विश्वामित्रः—

उत्तमं मानसं जाप्यमुपांशु मध्यमं विदुः।
अधमं वाचिकं प्राहुः सर्वमन्त्रेषु वै द्विजाः॥ इति।

वृद्धमनुः—

वस्त्रेणाच्छाद्य तु करं दक्षिणं यः सदा जपेत्।
तस्य तत्सफलं जप्यं तद्धीनमफलं स्मृतम्॥ इति।

गौतमः— गच्छतस्तिष्ठतो वापि स्वेच्छया कर्म कुर्वतः।
अशुचेर्वा विना संख्यां तत्सर्वं निष्फलं भवेत्॥ इति।

बौधायनः—नाभेरधःसंस्पर्शं कर्मसंयुक्तो वर्जयेदिति ।

हारीतः—

> [१]रजतेन्द्राक्षकैर्माला तथैवाङ्गुलिपर्वभिः ।
> शतं स्याच्छङ्खमणिभिः प्रवालैश्च सहस्रकम् ॥
> स्फटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते ।
> पद्माक्षैर्दशलक्षं तु सौवर्णैः कोटिरुच्यते ।
> कुशग्रन्थ्या च रुद्राक्षैरनन्तफलमुच्यते ॥ इति ।

प्रजापतिः—

> अष्टोत्तरशतं कुर्याच्चतुःपञ्चाशिकां तथा ।
> सप्तविंशतिकां वाऽपि ततो नैवाधिका मता ॥

गोभिलः—

> आयावित्यनुवाकस्य वामदेव ऋषिः स्मृतः ।
> आनुष्टुभं भवेच्छन्दो वाग्देवी देवता स्मृता ।
> आवाहने तु गायत्र्या विनियोगः प्रकीर्तितः ॥

व्यासोऽपि—

> आवाहयेत्तु गायत्रीं सर्वपापप्रणाशिनीम् ।
> आगच्छ वरदे देवि जपे मे सन्निधौ भव ।
> गायन्तं त्रायसे यस्माद्गायत्री तेन सोच्यते ॥ इति ।

सप्तव्याहृतीनां देवताद्याह वृद्धपराशरः—

> अग्निर्वायुस्तथा सूर्यो बृहस्पत्याप एव च ।
> इन्द्रश्च विश्वेदेवाश्च देवताः समुदीरिताः ॥
> गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।
> त्रिष्टुप् च जगती चैव छन्दांस्येतान्यनुक्रमात् ॥
> [२][ भरद्वाजः कश्यपश्च गौतमोऽत्रिस्तथैव च ।
> विश्वामित्रो जमदग्निर्वसिष्ठ ऋषयः क्रमात् ॥ इति ।]

---

## अथोपस्थानम् ।

गृह्यपरिशिष्टे—" जातवेदसे सुनवामसोमं " " तच्छंयोरावृणीमहे " " नमो ब्रह्मणे नमो अस्त्वग्नये " इत्युपस्थाय प्रदक्षिणं दिशः साक्षिपा-

---

१ 'राजतैर्द्राक्षकैः' इति पाठः । २ क. नास्ति.

नत्वाथ संध्यायै सावित्र्यै गायत्र्यै सरस्वत्यै सर्वाभ्यो देवताभ्यश्च नमस्कृत्य ततः—

उत्तमे शिखरे देवि भूम्यां पर्वतमूर्धनि ।
ब्राह्मणैरभ्यनुज्ञाता गच्छ देवि यथासुखम् ।। इति ।

संध्यां विसृज्य 'भद्रन्नो अपि वातयमनः' इत्युक्त्वा शान्तिं च त्रिरुच्चार्य प्रदक्षिणं परिक्रमन्

आसत्यलोकात्पातालादालोकालोकपर्वतात् ।
ये सन्ति ब्राह्मणा देवास्तेभ्यो नित्यं नमो नमः ।।

इति नमस्कृत्य भूमिमुपसंगृह्य गुरून्वृद्धांश्चोपसंगृह्णीयात् । एवं सायम्—" इति ।

मध्याह्नसंध्यायां विशेषस्तत्रैव— "उद्बाहुरुदङ्मुखः "उदुत्यं जातवेदसं" "चित्रं देवानां" इति सूक्ताभ्यामादित्यमुपस्थाय जपमासीनो यथेष्टकालं कुर्यादित्येष संध्याविधिर्व्याख्यातः" इति ।

दैवाद्यदि माध्याह्निकं दिवा न कृतं तत्र विशेषः स्मर्यते—

रात्रौ प्रहरपर्यन्तं दिवाकृत्यानि कारयेत् ।
अवगाहं ब्रह्मयज्ञं सौरजप्यं च वर्जयेत् ।। इति ।

सायंप्रातःकालयोरुपस्थाने विशेषमाह भगवान्—

नमो ब्रह्मण इत्येतां त्रिरुक्त्वाथ दिशो नमेत् ।
इमं मे वरुण तत्वेति सायंकाले विशेषतः ।
मित्रस्य चर्षणी द्वाभ्यां प्रातःकाले विशेषतः ।। इति ।

आश्वलायनस्मृतौ तु—

ऋग्भिश्चतसृभिर्मैत्रैर्गायत्रैरेव बह्वृचः । इत्युक्तम् ।

मैत्रैर्मित्रदैवत्यैः "मित्रस्य चर्षणी धृत" इत्यादिभिरित्यर्थः ।

माधवीये नारायणः—

वारुणीभिरथादित्यमुपस्थाय प्रदक्षिणम् ।। इति ।

भरद्वाजः—

सूतके मृतके वापि प्राणायाममन्त्रकम् ।
तथा मार्जनमन्त्रांस्तु मनसोच्चार्य मार्जयेत् ।।
गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् ।
मार्जनं तु न वा कार्यमुपस्थानं न चैव हि ।। इति ।

गायत्र्यपि दशवारं जप्या ।

आपन्नश्चाशुचिः काले तिष्ठन्नपि जपेद्दश ।

इत्याश्वलायनोक्तेः । आपन्न आपद्ग्रस्तः । अशुचिराशौचवान् । अङ्गान्तरेष्वसामर्थ्येऽपि अर्घ्यप्रक्षेप आवश्यकः

जलाभावे महामार्गे बन्धने त्वशुचावपि ।

उभयोः संध्ययोः काले रजसावार्घ्यमुत्सृजेत् ॥ इति अग्निस्मृतेः ।

अशुचौ आशौच इत्यर्थः ।

अग्निश्चेति अस्यार्थः—मा इति मां मन्युः क्रोधः तदभिमानिनी देवतेत्यौपनिषदाः । मन्युपतयो जितक्रोधाः अग्न्यादयो मा रक्षन्तामित्यन्वयः । शिश्ना शिश्नेन "सुपां सुलुग्" इति डादेशः । इदं पापं तत्कारणं चाहंकारम् अमृतयोनौ मोक्षहेतौ अग्न्याख्ये ज्योतिषि परब्रह्मणि जुहोमि । तदर्थमिदं तोयं स्वाहा मदीये जाठराग्नौ हुतमस्तु । एवं सूर्यश्चेत्यपि ।

आपः पुनन्त्वित्यादि आपः पृथ्वी मच्छरीरम् यच्छरीरं सा पृथ्वीत्यारण्यकात् । साच मामात्मानं पुनातु । किंच ब्रह्मणो वेदस्य पतिः परमात्मा पुनन्तु पुनातु व्यत्ययेन बहुवचनम् । ब्रह्म वेदः पूता पूतमित्यर्थः । "सुपां सुलुक्" इति पूर्वसवर्णः । सर्वं परिहृत्येति शेषः । मां पुनन्तु स्वाहा जाठराग्नौ हुतमस्तु ।

प्रणवसप्तव्याहृतिगायत्रीतच्छिरसां संक्षेपतोऽर्थः कथ्यते—ॐब्रह्म, भवन्त्यस्माद्भूतानीति भूः, भावयति स्थापयति विश्वमिति भुवः, गुणाभावच्छान्दसः । सुष्ठु अर्यते प्राप्यते तदिति स्वः, महः पूज्यं, जन जनने 'तप आलोचने' सत्यं कालत्रयाबाध्यं, सवितुः देवस्य सूर्यस्य, वरेण्यं भजनीयं भर्गः संसारभर्जनात् ज्योतीरूपं धीमहि ध्यायेम । यः स सविता नो धियः प्रचोदयात् प्रेरयेदिति लिङ् । आपः व्यापकं, ज्योतिश्चिद्रूपं, रसः सुखं, अमृतं मोक्षः, ईदृग्ब्रह्मेति ॐ अङ्गीकुर्वे चिन्तयामीति यावत् ।

॥ इति संध्याप्रकरणम् ॥

---

## अथ काम्यजपाः ।

वसिष्ठः—

तमुष्टुहीत्यृचं वापि सद्योजातादि पञ्चकम् ।
पञ्चाक्षरं महामन्त्रं जपेदनुदिनं सुधीः ॥

आयुरारोग्यमैश्वर्यं संततिं पूर्णजीवनम्।
संपत्समृद्धिं सौख्यं च लभते शिवशासनात्॥ इति।

आचार्यः—

वैष्णवैर्वारुणैः सौरैः पावमानीभिरेव च।
क्षपयेदाशु पापानि कामांश्च निखिलाल्लभेत्॥
रौद्रैर्विशेषतो घोरान्ब्रह्महत्यादिकानपि।
क्षपयेत्पौरुषेणापि कामांश्चेयर्ति दुर्लभान्॥

इयर्ति प्राप्नोति।

शतरुद्रेण जप्तेन चास्यवामीयकेन वा।
मोक्षमृच्छत्यसंदेहं किमन्यदधिकं ततः॥ इति।

ऋग्विधाने—

विष्णोर्नुकं जपन्सूक्तं विष्णुरेव भविष्यति।

स्नानकाले जप्यमाह व्यासः—

द्रुपदा नाम गायत्री वेदे वाजसनेयके।
सकृदन्तर्जले जप्त्वा ब्रह्महत्यां व्यपोहति॥ इति।

साच पूर्वमघमर्षणप्रसङ्गेनालेखि।

सुमन्तुः—हंसः शुचिषदित्येतामृचमन्तर्जले जपन् सर्वस्मात्पापात्प्रमुच्यतेऽपि वा व्याहृतीरन्तर्जले जपन्सर्वस्मात्पापात्प्रमुच्यते॥ इति। गौतमः—अपि वा गायत्रीं पच्छोऽर्धर्चशः समस्तामपि त्रिरन्तर्जले जपन्सर्वस्मात्पापात्प्रमुच्यतेऽपि वा प्रणवं त्रिरन्तर्जले जपन्सर्वस्मात्पापात्प्रमुच्यते। इति।

॥ इति काम्यजपाः॥

## अथ होमविधिः।

दक्षः— संध्याकर्मावसाने तु स्वयं होमो विधीयते॥ इति।

अशक्तौ स एवाह—

ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः।
एतैरपि हुतं यत्स्यात्तद्धुतं स्वयमेवहि॥ इति।

विट्पतिर्जामाता।

आश्वलायनः—

स्वयं पत्न्यपि वा पुत्रः कुमार्यन्तेवासी वा।

कात्यायनः—

असमक्षं तु दम्पत्योर्होतव्यं नर्त्विगादिना।
द्वयोरप्यसमक्षं तु भवेद्धुतमनर्थकम्॥

उभयोः संनिधौ मुख्यम् अन्यतरसन्निधावनुकल्पः।

प्रातर्होमकालमाह मनुः—

उदितेऽनुदिते चैव समयाध्युषिते तथा॥ इति।

सायंहोमकालमाह कात्यायनः—

यावत्सम्यङ् न भाव्यन्ते नभस्यृक्षाणि सर्वतः।
लोहितत्वं तु नापैति तावत्सायं तु हूयते॥

यत्त्वाश्वलायनः—

संगवान्तः प्रातः प्रदोषान्तः सायमिति तद्गौणकालपरम्।

यदपि बौधायनः—

आसायं कर्मणः प्रातराप्रातः सायकर्मणः।
आहुतिर्नातिपद्येत पार्वणं पार्वणान्तरात्॥ इति।

तद्गौणतरपरम्। पार्वणं स्थालीपाको, दर्शेष्टिः पौर्णमासेष्टिश्च।

पक्षहोममाह मरीचिः—

शरीरापद्भवेद्यत्र भयाद्वार्तिः प्रजायते।
तथान्यास्वपि चापत्सु पक्षहोमो विधीयते॥ इति।

कात्यायनः—

विहायाग्निं सभार्यश्चेत्सीमामुल्लङ्घ्य गच्छति।
होमकालात्यये तस्य पुनराधानमिष्यते॥

होमश्च स्वगृह्योक्तविधिना बोध्यः।

भरद्वाजः—

होमं वैतानिकं कृत्वा स्मार्तं कुर्याद्विचक्षणः।
स्मृतीनां वेदमूलत्वात्स्मार्तं केचित्पुरा विदुः॥ इति।

याज्ञवल्क्यः—

कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही।
दायकालाहृते वापि श्रौतं वैतानिकाग्निषु॥

वैतानिकाः गार्हपत्यादयः स्मार्तपदं गृह्योक्तकर्मपरम्।

वैवाहिकेऽग्नौ कुर्वीत गार्ह्यं कर्म यथाविधि।
पञ्चयज्ञविधानं च पक्तिचान्वाहिकीं गृही॥

इति मनूक्तेः । अन्वाहिकीं प्रात्याहिकीम् । अन्यत्तु स्मार्तं ग्रहमख-महारुद्रहोममूलशान्त्यादि लौकिकाग्नौ । अत एव विज्ञानेश्वरेण विनायकशान्तौ लौकिकोऽग्निरुक्तः । ग्रहशान्तौ तदीये स्मार्ताग्निलेखने तु मूलं चिन्त्यम् ।

विष्णुः— बहुशुष्केन्धने वाग्नौ सुसमिद्धे हुताशने ।
विधूमे लेलिहाने च होतव्यं कर्मसिद्धये ॥
योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारे चैव मानवः ।
मन्दाग्निरामयावी च दरिद्रश्चाभिजायते ॥ इति ।

॥ इति होमप्रकरणम् ॥

## अथ नित्यदानम् ।

महाभारते—

एकस्मिन्नप्यतिक्रान्ते दिने दानविवर्जिते ।
दस्युभिर्मुषितस्येव युक्तमाक्रन्दितं भृशम् ॥ इति ।

तस्माद्विभवानुसारेण पूगीफलादिकमपि प्रत्यहं देयमिति नृसिंहः ।

## अथ मङ्गलदर्शनम् ।

नारदः— लोकेऽस्मिन्मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ।
हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः ॥

मनुः— अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः ।
दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत्सदा बुधः ॥ इति ।

॥ इत्यष्टधा विभक्तस्याह्न आद्यभागकृत्यम् ॥

## अथ द्वितीयभागकृत्यम् ।

दक्षः— द्वितीये च तथा भागे वेदाभ्यासो विधीयते ॥ इति ।

चतुर्विंशतिमते—

वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ।
तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥ इति ।

कौर्मे— जपेदध्यापयेच्छिष्यान्धारयेद्वा विचारयेत् ।
अवेक्षेत च शास्त्राणि धर्मादीनि द्विजोत्तमः ॥ इति ।

दक्षः— समित्पुष्पकुशादीनां स कालः समुदाहृतः ॥ इति ।

## अथ तृतीयभागकृत्यम् ।

दक्षः— तृतीये च तथा भागे पोष्यवर्गार्थसाधनम् ॥ इति ।

पोष्यवर्गं स एवाह—

माता पिता गुरुर्भार्या प्रजाहीनः समाश्रितः ।
अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः ।
पोष्यवर्गार्थसिद्ध्यर्थं धनमिच्छेत बुद्धिमान् ॥

आत्मनेपदमार्षम् ।

याज्ञवल्क्यः—

कुसूलकुम्भीधान्यो वा त्र्याहिकोऽश्वस्तनोऽपि वा ।
जीवेद्वापि शिलोञ्छेन श्रेयानेषां परः परः ॥ इति ।

स्वकुटुम्बभोजनद्वादशदिनपर्याप्तधान्यस्याधारपात्रं कुसूलम् । षडहपर्याप्तधान्याधारः कुम्भी । वल्लरीणामुपादानं शिलम् । कणोपादानमुञ्छमिति ।

याज्ञवल्क्यः—

न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः ॥ इति ।

नारदः— शुचीनामशुचीनां तु सन्निपातो यथाम्भसाम् ।
समुद्रे समतां याति तथा राज्ञां धनागमः ॥
यथाग्नौ संस्थितं सर्वं शुद्धिमायाति काञ्चनम् ।
एवं प्रतिग्रहाः सर्वे शुचितां यान्ति राजनि ॥ इति ।

एतद्धार्मिकराजप्रतिग्रहपरम् ।

याज्ञवल्क्यः—

कुशाः शाकं पयो मत्स्याः पुष्पं गन्धा दधि क्षितिः ।
मांसं शय्यासनं धानाः प्रत्याख्येयं न वारि च ॥
अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः ।
अन्यत्र कुलटाषण्ढपतितेभ्यस्तथा द्विजः ॥

---

## अथ चतुर्थभागकृत्यम् ।

दक्षः— चतुर्थे तु तथा भागे स्नानार्थं मृदमाहरेत् ।
तिलपुष्पकुशादींश्च स्नायाच्चाकृत्रिमे जले ॥

गृह्यपरिशिष्टे—अथ मध्यंदिने तीर्थमेत्येत्युपक्रम्याथ वरुणप्रार्थनादितर्पणान्तेनोक्तेन विधिना स्नायान्नास्मिन्प्राग्ब्रह्मयज्ञतर्पणाद्वस्त्रं निष्पीडयेत् । अपुत्रादयो ह्यन्ते तथा तर्प्या इति शङ्खः ।

प्रातःसंध्यां सनक्षत्रां मध्यमां स्नानकर्मणि ।
सादित्यां पश्चिमां संध्यामुपासीत यथाविधि ।। इति ।

स्नानकर्मणि कृते सतीति शेषः इति स्मृतिचन्द्रिकायाम् । माध्याह्निकसंध्याप्रकारश्च पूर्वमेवोक्तः ।

---

## अथ पञ्चमहायज्ञाः ।

याज्ञवल्क्यः—

बलिकर्म स्वधा होमः स्वाध्यायाऽतिथिसत्क्रियाः ।
भूतपित्रमरब्रह्ममनुष्याणां महामखाः ।।

आश्वलायनगृह्ये—'अथातः पञ्चमहायज्ञा देवयज्ञो, ब्रह्मयज्ञो, भूतयज्ञः, पितृयज्ञो, मनुष्ययज्ञ इति । तद्यदग्नौ जुहोति स देवयज्ञयः, यत्स्वाध्यायमधीते स ब्रह्मयज्ञः, यद्बलिं करोति स भूतयज्ञः, यत्पितृभ्यो ददाति स पितृयज्ञः, यन्मनुष्येभ्यः स मनुष्ययज्ञ इति तानेतान्यज्ञानहरहः कुर्वीत' इति । वीप्सयैते नित्याः ।।

व्यासः—

वैश्वदेवं प्रकुर्वीत स्वशाखाविहितं ततः ।
संस्कृतान्नैर्हि विविधैर्हविष्यव्यञ्जनान्वितैः ।। इति ।

वैश्वदेवपदं भूतपितृयज्ञानां नाम व्यञ्जनमपि हविष्यमेव घृतादि न तैलादि । तथा च

स एव—जुहुयात्सर्पिषाभ्यक्तं तैलक्षारविवर्जितम् ।। इति ।

कौर्मे— शालाग्नौ लौकिके वाऽपि जले भूम्यामथापि वा ।
वैश्वदेवस्तु कर्तव्यो देवयज्ञः स वै स्मृतः ।। इति ।

लौकिकशालाग्न्योः पाकतो व्यवस्थामाहाङ्गिराः—

यस्मिन्नग्नौ पचेदन्नं तस्मिन्होमो विधीयते । इति ।

अत्र वैश्वदेवशब्दो देवभूतपितृयज्ञानां समुदाये प्रयुज्यते । तत्र होमो देवयज्ञः, बलिर्भूतयज्ञः, स्वधाकारः पितृयज्ञः । एवं च तेनैव पितृयज्ञसिद्धेर्नित्यश्राद्धं नावश्यकम् । अत एव देवलो नित्यश्राद्धं प्रक्रम्य यथाशक्ति तत्कालानाह—

एतेन विधिना श्राद्धं कुर्यात्संवत्सरं सकृत् ।
त्रिश्चतुर्वा यथाश्राद्धं(?)मासे मासे दिने दिने ।। इति ।

एवं दर्शश्राद्धमपि अशक्तौ संवत्सरे सकृदेवेत्याहाश्वलायनः—

मासिकं पार्वणं प्रोक्तमशक्तानां तु वार्षिकम् । इति ।

मासिकं प्रतिमासं कर्तव्यं पार्वणं दर्शश्राद्धम् ।

वैश्वदेवश्चात्मनोऽन्नस्य च संस्कारार्थः "तानेतान्यज्ञानहरहः कुर्वीत" इतिवचनात् । "अथ सायंप्रातः सिद्धस्य हविष्यस्य जुहुयात्" इति वचनाच । एकस्य तूभयत्वे संयोगपृथक्त्वमिति न्यायात् । नच 'प्रतिप्रधानं गुणावृत्तिः' इति न्यायात्प्रतिपाकं तदावृत्तिः स्यात् संध्यावन्दनादिवदविभक्तानां पृथगनुष्ठानं च स्यादिति वाच्यं, "यद्येकस्मिन्काले पुनः पुनरन्नं पच्येत सकृदेव तद्बलिं तत्र कुर्वीताथ यद्येकस्मिन्काले बहुधान्नं पच्येत गृहपतिमहानसादेवैतद्बलिं तत्र कुर्वीत" इति गोभिलोक्तेः । एतच्च सायंप्रातः कार्यम् "अथ सायंप्रातः सिद्धस्य हविष्यस्य जुहुयात्" इति आश्वलायनोक्तेः । उभयत्रासंभवे प्रातरेव द्विरावृत्त्या सह वा कार्यम् यथोक्तं तेनैव—

प्रातरेव द्विरावृत्त्या कुर्याद्वा सह तद्द्विजः ।
सायं वा यदि भुञ्जीयात्तत्कृत्वा ज्ञानतः स्वयम्(?)॥ इति ।

मनुष्ययज्ञस्त्वतिथिपूजा ।

एषामकरणे प्रायश्चित्तमाह व्यासः—

होमान्नदानरहितं न भोक्तव्यं कदाचन ।
अविभक्तेषु संसृष्टेष्वेकेनैव कृतं तु वा ॥
पयोमूलफलैर्वाऽपि पञ्चयज्ञान्समाचरेत् ।
अकृत्वा पञ्चयज्ञांस्तु भुक्त्वा चान्द्रायणं चरेत् ॥ इति ।

आश्वलायनः—

वसतामेकपाकेन विभक्तानामपि प्रभुः ।
एकस्तु चतुरो यज्ञान्कुर्याद्वाग्यज्ञपूर्वकान् ॥

वाग्यज्ञो ब्रह्मयज्ञः ।

अविभक्ता विभक्ताश्च पृथक्पाका द्विजातयः ।
कुर्युः पृथक् पृथग् यज्ञान् भोजनात्प्राग् दिने दिने ॥
पृथगप्येकपाकानां ब्रह्मयज्ञो द्विजन्मनाम् ।
सूतकाद्यैस्त्वशुद्धात्मा न कुर्यान्न च कारयेत् ॥

अत्राविभक्तानां पाकभेदे पृथग्वैश्वदेवानुष्ठानं नाद्रियन्ते शिष्टाः ।

---

१ 'जात्वपि' इति पाठः । २ 'एकपाकाः' इति पाठः । ३ 'पाकैक्ये' इति पाठः ।

पूर्वोक्तसर्वादृतगोभिलवचोविरोधे कतिपयादृताश्वलायनवचसो बाधाद्विकल्प इति केचित्।

यत्तु हरदत्तः—सूतकमध्येऽपि ब्रह्मयज्ञभिन्नाश्चत्वारो न त्याज्याः "तानेतान्यज्ञानहरहः कुर्वीत" इति सूत्रात्। एतस्य हि

सूतके कर्मणां त्यागः संध्यादीनां विधीयते।

इत्यादिना बाधितानां प्रतिप्रसवेनैव सार्थक्यम्। ब्रह्मयज्ञस्तु न भवति "तस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देशः" इति सूत्रात्। तन्न। 'पञ्चयज्ञविधानं तु न कुर्यान्मृतिजन्मनोः।' इति देवलोक्तेः। अहरहः कुर्वीतेति तु संध्यावन्दनादिवन्नित्यत्वमात्रबोधकम्। अत एव स्मृत्यन्तरे—'आपत्रमपि दातव्यं, आकाष्ठमपि जुहुयादाऋचमपि ब्रह्मयज्ञं कुर्यात्' इति।

चतुर्विंशतिमते—

अलाभे येन केनाऽपि फलशाकादिभिर्द्विजः।
पयोदधिघृतैः कुर्याद्वैश्वदेवं स्रुवेण तु।
हस्तेनान्नादिभिः कुर्याददद्भिरञ्जलिना जले॥

परिशिष्टे—

उत्तानेन तु हस्तेन ह्यङ्गुष्ठाग्रेण पीडितम्।
संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः॥ इति।

गृह्यपरिशिष्टेऽपि—

शाकं वा यदि वा पत्रं मूलं वा यदि वा फलम्।
संकल्पयेद्यदाहारस्तेनैव जुहुयादपि॥

स्मृत्यन्तरेऽपि—

कोद्रवं चणकं माषं मसूरं च कुलत्थकम्।
क्षारं च लवणं सर्वं वैश्वदेवे विवर्जयेत्॥

हविष्याभावे क्षारादिभिरपि अग्नेरीशान्यामुष्णे भस्मनि होतव्यमित्याहापस्तम्बः—न क्षारलवणहोमो विद्यते तथा परान्नसंसृष्टस्याहविष्यस्य होम उदीचीनमुष्णं भस्मापोह्य जुहुयात्तद्धुतमहुतं चाग्नौ भवतीति।

वृद्धवसिष्ठः—

अनग्निकस्तु यो विप्रः सोऽन्नं व्याहृतिभिः स्वयम्।
हुत्वा शाकलमन्त्रैश्च शिष्टं काकबलिं हरेत्॥ इति।

बौधायनः—

प्रवासं गच्छतो यस्य गृहे कर्ता न विद्यते ।
पञ्चानां महतामेषां स यज्ञैः सह गच्छति ॥ इति ।

आहात्रिः—

पुत्रो भ्राताऽथवा ऋत्विक् शिष्यश्वशुरमातुलाः ।
पत्नीश्रोत्रिययाज्याश्च दृष्टाश्च बलिकर्मणि ॥

एते च प्रवसतः प्रतिनिधयः ।

ब्रह्मयज्ञस्य पाठप्राप्तां देवयज्ञोत्तरतां बाधते आश्वलायनः—

स गृह्यविधिना कृत्वा ब्रह्मयज्ञं पुरा द्विजः ।
स्वाध्यायतर्पणाभ्यां च गृहमेत्याचरेत्परान् ॥ इति ।

यत्तु बृहस्पतिः—

स चार्वाक् तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः ।
वैश्वदेवावसाने वा नान्यदर्ते निमित्ततः ॥ इति ।

तदाश्वलायनान्यपरं, आश्वलायनानां तर्पणस्योत्तराङ्गत्वेनैव तत्सूत्रात्प्राप्तेरर्वाक्तर्पणादित्यस्य तदितरान्प्रत्येव सार्थक्यात् । तत्साहचर्यात्पश्चाद्वेति वैश्वदेवावसाने चेत्येनदपि तान्प्रत्येव ।

कारिकायाम्—

दर्भान्वहून्शुचौ देशे प्रागग्रान्नास्तृणात्यथ ।
दर्भेषूपवसेत्कर्मण्यत्र प्राङ्मुख एव सन् ॥
कृत्वोपस्थं करे सव्ये उत्ताने प्राग्दिगङ्गुलौ ।
पवित्रे स्थापयेदुक्ते प्रागग्रे दक्षिणेन तु ।
न्यञ्चं प्रागङ्गुले तेन संदध्याद्दक्षिणं करम् ॥ इति ।

तत्रैव— सूक्ताद्यन्यतमं पूर्वमाभिशंसन्ति शक्तितः ।
ओंपूर्वा व्याहृतीस्तिस्रः समस्ताश्च सकृद्वदेत् ।
पच्छस्त्वर्धर्चशः सर्वां सावित्रीं त्रिर्वदेदथ ॥ इति ।

शौनकः—

ततो यावत्प्रतिज्ञातमध्यायं सूक्तमेव वा ।
ऋचं वाप्यन्ततोऽवश्यमधीयीत स्वशक्तितः ॥ इति ।

ऋग्विधाने—

आग्नेयं सूक्तमाद्यं तु पुण्यं ब्रह्मर्षिसंमतम् ।

रायस्पोषकरं धन्यं जपन्विप्रोऽर्थमाप्नुयात् ॥
ऋचं सर्वामिमां जप्त्वा स पूतो नियतः शुचिः।
संहिताफलमाप्नोति ऋग्वेदस्य न संशयः ॥ इति।
तथा— अग्निमीळे जपेत्सूक्तं पापघ्नं श्रीकरं परम्।
पारायणफलं तस्य वेदानां स्यात्सहस्रशः ॥ इति।

आश्वलायनगृह्ये—'स यावन्मन्येत तावदधीत्यैतया परिदधाति' "नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे महते करोमि" इत्येनां च त्रिः पठेत् "नमो ब्रह्मण" इति परिधानीयं त्रिरन्वाह" इति श्रुतेः।

उपवेशनाशक्तौ आश्वलायनगृह्ये—"स यदि तिष्ठन्व्रजन्नासीनः शयानो वा यं यं क्रतुमधीते तेन तेन हास्य क्रतुनेष्टं भवतीति विज्ञायते। तस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देशः" इति द्वावित्यनध्यायान्तरपरिसंख्यार्थम्। केषुचिन्नैमित्तिकानध्यायेषु विशेषमाहापस्तम्बः—'अथ यदि वातो वायात्स्तनयेद्वा विद्योतते वा स्फूर्जेद्वैकां चर्चमेकं वा यजुरेकंवा सामाभिव्याहरेत् भूर्भुवः स्वः सत्यं तपः श्रद्धायां जुहोमि इति ॥

## अथ तर्पणम्।

आश्वलायनगृह्ये—देवतास्तर्पयति प्रजापतिर्ब्रह्मा वेदा देवा ऋषयः सर्वाणिच्छन्दांस्योङ्कारो वषट्कारो व्याहृतयः सावित्री यज्ञा द्यावापृथिवी अन्तरिक्षमहोरात्राणि सांख्याः सिद्धाः समुद्राः नद्यो गिरयः क्षेत्रौषधिवनस्पतिगन्धर्वाप्सरसो नागा वयांसि गावः साध्या विप्रा यक्षा रक्षांसि भूतान्येवमन्तानि। अथ ऋषयः, शतर्चिनो माध्यमो गृत्समदो विश्वामित्रो वामदेवोऽत्रिर्भरद्वाजो वसिष्ठः प्रगाथाः पावमान्यः क्षुद्रसूक्ता महासूक्ता इति। प्राचीनावीती, सुमन्तुजैमिनिवैशंपायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्या जानन्तिबाहविगार्ग्यगौतमशाकल्यबाभ्रव्यमाण्डव्यमाण्डूकेया गर्गीवाचक्नवी वडवाप्रातीथेयी सुलभामैत्रेयी कहोळं कौषीतकं महाकौषीतकं पैङ्ग्यं महापैङ्ग्यं सुयज्ञं सांख्यायनम् ऐतरेयं महैतरेयं शाकलं बाष्कलं सुजातवक्त्रमौदवाहिं महौदवाहिं सौजामिं शौनकमाश्वलायनं ये चान्ये आचार्यास्ते सर्वे तृप्यन्तु प्रतिपुरुषं पितॄंस्तर्पयित्वा' इति। अत्र प्राजापत्याद्या एवमन्तानीत्यन्ता एकोनत्रिंशन्मन्त्राः। अथ ऋषय इति तु न मन्त्रः, शतर्चिन इत्याद्या महासूक्तान्ता द्वादश, सुमन्त्वित्याद्या

ये चान्य इत्यन्ता द्वाविंशतिः ।। ते च तृप्यतु तृप्यतां तृप्यन्त्विति यथायोग्यमध्याहृत्य प्रयोज्याः । एवमन्तानीति भिन्नो मन्त्र इति नारायणवृत्तौ । महासूक्तास्तृप्यन्त्वित्यस्यानन्तरं पूर्वोक्ताः सनकादयः सप्त तर्प्याः । द्यावापृथिवी तृप्येतामिति लोडात्मनेपदं प्रयुञ्जते बहवस्तन्न, धातोः परस्मैपदित्वात् । लिङि तु परस्मैपदं भवेत् । तंत्र तु कारिकाशौनकाद्युक्तस्तृप्यतु तृप्यन्तामिति लोट्प्रायपाठविरोधः । तेन द्यावापृथिवी तृप्यतामित्येव प्रयोज्यमिति भट्टोजिदीक्षिताः । सा च कारिका—

अपां समीपमागत्य तर्पयेदथ देवताः ।
एवमन्तानि तृप्यन्त्वित्यन्तैश्च प्रतिमंत्रकम् ।।
सिञ्चेत्प्रजापतिस्तृप्यत्वित्यपो देवतीर्थतः ।
धातुस्तृप्तिर्यथालिङ्गं मन्त्रान्तेषु प्रयुज्यते ।। इति ।

शौनकोऽपि—मन्त्रैः प्रजापतिस्तृप्यत्वित्यारभ्य यथोदितैः ।
एवमन्तानि तृप्यन्त्वित्येव मन्त्रैर्यथाक्रमम् ।। इति ।

कहोळादिष्वाश्वलायनान्तेषु षोडशसु द्वितीयान्तेषु तर्पयामीति शेषो योज्यो योग्यत्वात् ।

तच्च नित्यमुक्तं प्रयोगपारिजाते स्मृत्यन्तरे—

देवतांश्च मुनींश्चैव पितॄन्यो हि न तर्पयेत् ।
देवादीनामृणी भूत्वा नरकं प्रतिपद्यते ।।

मदनपारिजाते संग्रहे—

अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ।
सव्योत्तराभ्यां पाणिभ्यामथवा तर्पणं भवेत् ।।

सव्यान्वारब्धेन एकेनैव दक्षिणेन पाणिना इति तु आश्वालयनपरं, पाणिभ्यामिति त्वन्यान्प्रतीति व्यवस्थेति केचित् । व्यवस्थामूलं चिन्त्यम् ।

कारिका—प्राचीनावीत्यथेदानीं तर्पयेत्पितृतीर्थतः ।। इति ।

व्यासः—एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः ।
अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रियस्त्वेकैकमञ्जलिम् ।। इति ।

योगयाज्ञवल्क्यः—

सनकश्च सनन्दनस्तृतीयश्च सनातनः ।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ।
एते ब्रह्मशिखास्तर्प्या मनुष्याः परिकीर्तिताः ।। इति ।

एतदाश्वलायनान्यपरम् । तेषां शतर्चिनो द्वादशैव तत्सूत्रोक्तत्वादिति केचित् । सनकादयोऽपि तेषामदृष्टार्थत्वादिति तु युक्तम् । कासुचित्स्त्रीषु विशेषमाह सांख्यायनः—

मातृमुख्यास्तु यास्तिस्रस्तासां त्रींस्त्रीञ्जलाञ्जलीन् ।। इति।
सपत्न्याचार्यपत्नीनां द्वौ द्वौ दद्याज्जलाञ्जलीन् ।। इति।

अत्र विशेषमाह हारीतः—

वसित्वा वसनं शुष्कं स्थले विस्तीर्णबर्हिषि ।
विधिज्ञस्तर्पणं कुर्यान्न पात्रेषु कदाचन ।।
पात्राद्वा जलमादय शुभे पात्रान्तरे क्षिपेत् ।
जलपूर्णेऽथवा गर्ते न स्थले तु विबर्हिषि ।। इति ।

पितामहः—हेमरूप्यमयं पात्रं ताम्रकांस्यसमुद्भवम् ।
पितॄणां तर्पणे पात्रं मृन्मयं तु परित्यजेत् ।। इति ।

शङ्खः— उदकेनोदकं दद्यात्पितृभ्यश्च कदाचन ।
उत्तीर्य च शुचौ देशे कुर्यादुदकतर्पणम् ।। इति ।

अग्निपुराणे—प्रागग्रेषु सुरास्तर्प्या मनुष्याश्चैव मध्यतः ।
पितरो दक्षिणाग्रेषु एकद्वित्रिमिताञ्जलीन् ।। इति ।

मरीचिः—सौवर्णेन च पात्रेण ताम्ररूप्यमयेन वा ।
औदुम्बरेण खड्गेन पितॄणां दत्तमक्षयम् ।। इति ।

विष्णुः— यत्राशुचि स्थलं वा स्यादुदके देवताः पितॄन् ।
तर्पयेत्तु यथाकाममप्सु सर्वं प्रतिष्ठितम् ।। इति ।

योगयाज्ञवल्क्यः—

यद्युद्धृतं निषिञ्चेत्तु तिलान्संमिश्रयेज्जले ।
अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः ।।

अन्यथेति अनुद्धृतेन तर्पण इत्यर्थः ।

गोभिलः— रोमसंस्थांस्तिलान्कृत्वा यस्तु तर्पयते पितॄन् ।
पितरस्तर्पितास्तेन रुधिरेण मलेन च ।। इति ।

स्मृतिभास्करे—

कुशाग्रैस्तर्पयेद्देवान्मनुष्यान्कुशमध्यतः ।
द्विगुणीकृत्यमूलाग्रैः पितॄन्संतर्पयेद्द्विजः ।। इति ।

योगयाज्ञवल्क्यः—

कव्यवालोऽनलः सोमो यमश्चैवार्यमा तथा ।
अग्निष्वात्ताः सोमपाश्च तथा बर्हिषदोऽपि च ।
यदि स्याज्जीवपितृक एतान्विद्यात्ततः पितॄन् ॥ इति ।

अत्र कव्यवालं तर्पयामीति, कव्यवालस्तृप्यतु तृप्यतामिति वा प्रयोगः । एवमनलादिषु ।

अथ पित्रादितर्पणे विशेषमाह बोपदेवः—

तातामबात्रितयं सपत्नजननी मातामहादित्रयं
सस्त्रि स्त्रीतनयादि तातजननीस्वभ्रातरः सस्त्रयः ।
तातामबात्मभगिन्यपत्यधवयुग् जायापिता सद्गुरुः
शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ॥ इति ।

तातामबात्रितयं, पित्रादित्रयं, मात्रादित्रयं, मातामहादित्रयम् । सस्त्रीति सपत्नीकं तर्पयामीति प्रयोज्यम् । अपत्यधवयुगिति सापत्यां सधवां तर्पयामीत्यर्थः ।

क्रमान्तरं प्रघट्टके स्मृत्यन्तरे—

आदौ पिता ततो माता सपत्नजननी तथा ।
मातामहाः सपत्नीकाः स्वपत्नी तदनन्तरम् ॥
सुतभ्रातृपितृव्याश्च मातुलाश्च सभार्यकाः ।
दुहिता भगिनी चैव दौहित्रो भागिनेयकः ।
पितृष्वसा मातृष्वसा श्वशुरो गुरुरर्थिनः ॥ इति ।

प्रयोगपारिजाते संग्रहे—

पितृमातृमातामहाः पितृव्यो भ्रातरः सुतः ।
पितृष्वसा मातुलाश्च तद्भगिन्यः स्वजामयः ॥
भार्याभगिन्यो दुहिता श्वशुरो भावुकाः स्नुषाः ।
श्यालको गुरुराचार्यः स्वामी मित्रं[1] यथाक्रमम् ॥ इति ।

स्वजामयः स्वभगिन्यः । भावुका भगिनीपतयः । एतेषां च क्रमाणामैच्छिको विकल्पः ।

तत्र विशेषमाह यमः—

संबन्धनामगोत्रेण स्वधान्तेन नमोन्ततः ।
वस्वादिरूपं निर्दिश्य तर्पयेत्पितृपूर्वकम् ॥ इति ।

---

१ सुहृदः क. पाठः ।

वसिष्ठः—संबन्धमनुकीर्त्यैव नाम गोत्रमनन्तरम् ।
वस्वादिरूपं संकीर्त्य स्वधाकारेण तर्पयेत् ।। इति ।

अत्रास्मत्पितरममुकशर्माणममुकगोत्रं वसुरूपं स्वधानमस्तर्पयामि इ-
त्यादिप्रयोगः ।

अशक्तौ संक्षेपतर्पणं विष्णुपुराणे—

संक्षिप्ततर्पणम् ।

आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यत्विति ब्रुवन् ।
क्षिपेत्तोयाञ्जलींस्त्रींस्त्रीन्कुर्वन्संक्षेपतर्पणम् ।।

अन्यमञ्जलिमाह कात्यायनः—

' पितृवंश्या मातृवंश्या ये चान्ये मत्त उदकमर्हन्ति तांस्तर्पयामीत्यव-
साना ञ्जलिः ' इति ।

ततः सूर्यायार्घ्यदानमुक्तं विष्णुपुराणे—

दत्त्वा कामोदकं सम्यक् प्रेतेभ्यः श्रद्धयाऽन्वितः ।
आचम्य च ततो दद्यात्सूर्याय सलिलाञ्जलिम् ।।
नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे ।
जगत्सवित्रे शुचये सवित्रे कर्मदायिने ।। इति ।

तत आचम्य हस्तस्थान्कुशांस्त्यजेत् । तथाच रत्नावल्याम्—

विकिरे पिण्डदाने च तर्पणे श्राद्धकर्मणि ।
आचान्तः सन्प्रकुर्वीत दर्भसंत्यजनं बुधः ।। इति ।

तन्मन्त्रोऽपि तत्रैव—

येषां पिता न च भ्राता न पुत्रो नान्यगोत्रिणः ।
ते सर्वे तृप्तिमायान्तु मयोत्सृष्टैः कुशैस्तथा ।। इति ।

ततो भूमौ वस्त्रं निष्पीडयेत् । तथाच भरद्वाजः—

वस्त्रनिष्पीडनविधिः ।

वस्त्रोदकमपेक्षन्ते ये मृता दासकर्मिणः ।
तस्मात्सर्वप्रयत्नेन जलं भूमौ निपातयेत् ।। इति ।

शौनकः—देवादितर्पणं कृत्वा वस्त्रं निष्पीड्य शोधयेत् ।
स्नानार्थं प्रस्थितं विप्रं देवाः पितृगणैः सह ।।
वायुरूपेण तिष्ठन्ति तृषितास्ते जलार्थिनः ।
निराशास्तु निवर्तन्ते वस्त्रनिष्पीडने कृते ।
तस्मान्न पीडयेद्वस्त्रमकृते तर्पणे द्विजः ।। इति ।

---

१ निर्दिश्य क. पाठः ।

## अथ भीष्मतर्पणम् ।

व्यासः— शुक्लाष्टम्यां तु माघस्य दद्याद्भीष्माय यो जलम् ।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति ॥

तत्रायं मन्त्रः—

वैयाघ्रपद्यगोत्राय सांकृत्यप्रवराय च ।
गङ्गापुत्राय भीष्माय प्रदास्येऽहं तिलोदकम् ॥
अपुत्राय ददाम्येतत्सलिलं भीष्मवर्मणे ॥

॥ इति भीष्मतर्पणम् ॥

---

## अथ यमतर्पणम् ।

वृद्धमनुः—दीपोत्सवचतुर्दश्यां काय तु यमतर्पणम् ।
कृष्णाङ्गारचतुर्दश्यामपि कार्यं सदैव च ॥ इति ।

स एव—इहजन्मकृतं पापमन्यजन्मार्जितं च यत् ।
कृष्णाङ्गारचतुर्दश्यां तर्पयंस्तद्व्यपोहति ॥ इति ।

स्मृतिचन्द्रिकायाम्—

यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय ते नमः ॥
चतुर्दशैते मन्त्राः स्युश्चतुर्थ्यन्ता नमोन्तकाः ।
एकैकेन तिलैर्मिश्रांस्त्रींस्त्रीन्दद्याज्जलाञ्जलीन् ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥

श्लोकगौतमः—

यमो निहन्ता पितृधर्मराजो वैवस्वतो दण्डधरश्च कालः ।
प्रेताधिपो दत्तकृतानुसारी कृतान्त एतद्दशभिर्जपन्ति ॥ इति ।

दशभिः आवृत्तिभिः । व्यासः—

तथा कृष्णचतुर्दश्यां यमायेत्यादिसप्तभिः ।
सप्तोदकाञ्जलीन्दद्यात्सर्वपापैः प्रमुच्यते ॥

---

१ स इति ख. पाठः ।

स्कान्दे—दक्षिणाभिमुखो भूत्वा तिलान्सव्ये समाहितः।
देवतीर्थेन देवत्वात्तिलैः प्रेताधिपो यतः॥

स्मृतिसारे तु—
यज्ञोपवीतिना कार्यं प्राचीनावीतिनाऽपि वा।
देवत्वं च पितृत्वं च यमस्याऽपि द्विरूपता॥

॥ इति यमतर्पणम्॥

## अथ तर्पणे तिलनिषेधः।

संग्रहे— नन्दायां भार्गवदिने कृत्तिकासु मघासु च।
भरण्यां भानुवारे च गजच्छायाह्वये तथा॥
अयनद्वितये चैव मन्वादिषु युगादिषु।
पिण्डदानं मृदास्नानं न कुर्यात्तिलतपर्णम्॥

मरीचिः—सप्तम्यां रविवारे च गृहे जन्मदिने तथा।
भृत्यपुत्रकलत्रार्थी न कुर्यात्तिलतर्पणम्॥

बौधायनः—सप्तम्यां रविवारे च मातापित्रोः क्षयेऽहनि।
तिलैर्यस्तर्पणं कुर्यात्स भवेत्पितृघातकः॥

सप्तमीरविविशिष्टं निमित्तमिति केचित् तन्न, विशेषणविशेष्यभावे विनिगमनाविरहात्। कथंचित्तत्सत्त्वेऽपि निमित्तविशेषणमविवक्षितमेव। "यस्योभयं हविरार्तिमाच्छेंत्" इत्यत्रेवोभयत्वं, सप्तमीरविगृहजन्मदिनानामन्येषामपि परस्परविशिष्टानामेव निमित्ततापत्तेश्च अधिकारविशेषश्रुतेश्च भृत्यपुत्रादिकामस्यैवायं निषेधः न तु विधुरापुत्रादेः।

स्मृत्यन्तरे—विवाहव्रतचूडासु वर्षमर्धं तदर्धकम्।
पिण्डदानं मृदास्नानं न कुर्यात्तिलतर्पणम्॥ इति।

बौधायनः—विवाहे चोपनयने चौले सति यथाक्रमम्।
वर्षमर्धं तदर्धं च नेत्येके तिलतर्पणम्॥
संस्कारेषु तथान्येषु जातपुंसवनादिषु।
यावन्मासः समाप्येत तावत्पिण्डांश्च वर्जयेत्।
वृद्धावनन्तरं प्राज्ञस्तथैव तिलतर्पणम्॥ इति।

वृद्धमनुः—संक्रान्त्यादिनिमित्तेषु स्नानाङ्गे तर्पणे तथा ।
तिलप्रतिप्रसवः । तिथिवारनिषेधेऽपि तिलैस्तर्पणमाचरेत् ।। इति ।

कात्यायनः—उपरागे पितुःश्राद्धे पातेऽमायां च संक्रमे ।
निषेधेऽपि हि सर्वत्र तिलैस्तर्पणमाचरेत् ।। इति ।

व्यतीपातो वैधृतेः, पिता च पितृव्यादेरुपलक्षणम् । संक्रातिरयनभिन्नेति पारिजाते ।

।। इति तर्पणप्रकरणम् ।।

---

## अथ देवपूजा ।

कूर्मपुराणे—ब्रह्माणं शंकरं सूर्यं तथैव मधुसूदनम् ।
अन्यांश्चाभिमतान्देवान्भक्त्या त्वक्रोधनो नरः ।
स्वैर्मन्त्रैस्त्वर्चयेन्नित्यं पत्रैः पुष्पैस्तथाम्बुभिः ।।

गन्धपुष्पमात्रं पञ्चोपचाराद्यसंभव इति तिथितत्त्वे ।

नृसिंहपुराणे—
जलदेवं नमस्कृत्य ततो गच्छेद्गृहं बुधः ।
पौरुषेण च सूक्तेन ततो विष्णुं समर्चयेत् ।। इति ।

स्कान्दे— ब्रह्मा कृतयुगे देवस्त्रेतायां भगवान् रविः ।
द्वापरे भगवान्विष्णुः कलौ देवो महेश्वरः ।। इति ।

[ नियमविधिरयं न तु परिसंख्या । एवं सर्वेषु सर्वेषां पूज्यत्वं न निषिध्यते ।

तथाच महाभारते—
कलौ कलिमलध्वंसं सर्वपापहरं हरिम् ।
येऽर्चयन्ति नरा नित्यं तेऽपि वन्द्या यथा हरिः ।। ]

मन्त्रा वैदिका नाममन्त्राश्च । अत एव ब्राह्मे—
ओङ्कारादिकसंयुक्तं नमस्कारान्तसंयुतम् ।
स्वनाम सर्वसत्त्वानां मन्त्र इत्यभिधीयते ।।
अनेनैव विधानेन गन्धपुष्पे निवेदयेत् ।
एकैकस्य प्रकुर्वीत यथोद्दिष्टक्रमेण तु ।। इति ।

---

१ एतदादि यथा हरिरित्यन्तं, अग्रिमकोटिकोटिगुणोत्तरमित्यस्मादग्रे क. पाठे ।

तत्रैव— मन्त्राच्छतगुणं प्रोक्तं भक्त्या लक्षगुणोत्तरम् ।
भक्तिमन्त्रसमेतं तु कोटिकोटिगुणोत्तरम् ॥

## अथ पञ्चायतनस्थापनप्रकारः ।

ज्ञानमालायाम्—

यदा तु शंकरं मध्ये ईशान्यां श्रीपतिं यजेत् ।
आग्नेय्यां च तथा हंसं नैर्ऋत्यां पार्वतीसुतम् ॥
वायव्यां च सदा पूज्या भवानी भक्तवत्सला ।
यदा तु मध्ये गोविन्दमैशान्यां शंकरं यजेत् ॥
आग्नेय्यां गणनाथं च नैर्ऋत्यां तपनं तथा ।
वायव्यामम्बिकां चैव यजेन्मन्त्री समाहितः ॥
सहस्रांशुं यदा मध्ये ईशान्यां पार्वतीपतिम् ।
आग्नेय्यामेकदन्तं[1] च नैर्ऋत्यामच्युतं[2] तथा ।
वायव्यां पूजयेद्देवीं भोगमोक्षैकभूमिकाम् ॥
भवानीं तु यदा मध्ये ईशान्यां माधवं यजेत् ।
आग्नेय्यां पार्वतीनाथं नैर्ऋत्यां गणनायकम् ।
प्रद्योतनं तु वायव्यामाचार्यस्तु प्रपूजयेत् ॥
हेरम्बं तु यदा मध्ये ईशान्यामच्युतं यजेत् ।
आग्नेय्यां पञ्चवक्त्रं तु नैर्ऋत्यां जगदम्बिकाम्[4] ।
वायव्यां द्युमणिं[3] चैव यजेन्मन्त्री ह्यतन्द्रितः ॥
स्वस्थानवर्जिता देवाः शोकदुःखभयप्रदाः ।
तन्मण्डलस्थितो राजा साधकश्च विनश्यति ॥ इति ।

बोपदेवः—

शंभौ मध्यगते हरीनहरभूदेव्यो हरौ शंकरे-
भास्ये नागसुता रवौ हरगणेशाजाम्बिकाः स्थापिताः ।
देव्यां विष्णुहरैकदन्तरवयो लम्बोदरेऽजेश्वरे-
नार्याः शंकरभागतोऽतिसुखदा व्यस्तास्तु ते हानिदाः ॥ इति ।

अत्र पञ्चानामप्येकस्यावाहनादिनमस्कारान्तं पूजाकाण्डं कृत्वा परस्यापीत्येवं काण्डानुसमयः ।

---

१ गजवक्त्रं स्विति क. पाठः । २ माधवं यजेदिति क. पाठः । ३ द्युमणिमिति क. पाठः । ४ जगदम्बां चेति क. पाठः ।

मुख्ये पुष्पाञ्जलिं दत्त्वा गणेशाद्यर्चनं भवेत् ।
गणेश एव मुख्यश्चेत्तत्र सूर्यक्रमाद्भवेत् ॥

इति वचनेन क्रमाभिधानात् । मुख्ये प्रधानदेवतायाम् । पुष्पाञ्जलिशब्देन च तन्दता पूजा लक्ष्यते, पुष्पाञ्जल्यन्तरं वा विधीयते इति शारदातिलकटीकायाम् । युक्तं तु मुख्यत्वोक्त्या तत्प्रतियोगिकाङ्गत्वलाभेन चैकप्रयोगविधिकल्पनं तेन चैककालत्वावगतेः, वैश्वदेवीं कृत्वा प्राजापत्यैश्वरन्तीतिवत्सर्वेषामावाहनं ततः स्थापनमिति पदार्थानुसमय एव । स तु मुख्ये पुष्पाञ्जल्यन्तां पूजां कृत्वाऽङ्गदेवतायाः पूजायां कार्य इति दिक् ।

भविष्यत्पुराणे—

पुष्पैररण्यसंभूतैः पत्रैर्वा गिरिसंभवैः ।
अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः ॥
आत्मारामोद्भवैर्वाऽपि भक्त्या संपूजयेत्सुरान् ॥
कृमिकीटावपन्नानि शीर्णपर्युषितानि च ।
स्वयंपतितपुष्पाणि त्यजेदुपहतानि च ॥

उपहतानि मलादिभिः ।

मुकुलैर्नार्चयेद्देवमपक्वं न निवेदयेत् ।
[फलं च कृमिबद्धं च प्रयत्नात्तद्विवर्जयेत् ॥
अलाभे तु सुपुष्पाणां पत्राण्यपि निवेदयेत् ।]
पत्राणामप्यलाभे तु फलान्यपि निवेदयेत् ॥
फलानामप्यलाभे तु तृणगुल्मौषधीरपि ।
ओषधीनामलाभे तु भक्त्या भवति पूजितः ॥
प्रत्येकमुक्तपुष्पेण दशसौवर्णिकं फलम् ।
स्रजाऽपि नृपशार्दूल तदेव द्विगुणं भवेत् ॥

विष्णुधर्मोत्तरे—

धर्मार्जितधनक्रीतैर्यः कुर्यात्केशवार्चनम् ।
उद्धरिष्यत्यसंदेहं सप्त पूर्वास्तथा परान् ॥ इति ।

इदं विप्रातिरिक्तपरम् ।

समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् ।
शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्पतत्यधः ॥

---

१ क. नास्ति २ स्रग्भिश्चेति क. पाठः । ३ संदेहादिति क. पाठः

इति भविष्ये ब्राह्मणग्रहणात् इति भ्रातृचरणाः। लक्षपुष्पार्चनादौ तु क्रयक्रीतमपि देयमिति मन्त्रकोशकारः।

समित्पुष्पकुशादीनि वहन्तं नाभिवादयेत्।
तद्धारी चैव नान्यान्हि निर्माल्यं तद्धवेत्तयोः॥

तथा— देवोपरि धृतं यच्च वामहस्ते धृतं च यत्।
अधोवस्त्रधृतं यच्च जलेऽन्तः क्षालितं च यत्।
देवतास्तन्न गृह्णन्ति पुष्पं निर्माल्यतां गतम्॥ इति।

नित्यपूजार्थं परोपवनादेरपि ग्राह्यम्। न च तच्चौर्यम्।

देवतार्थं च कुसुममस्तेयं मनुरब्रवीत्।

इति वचनात्। पूजार्थं पुष्पादि न याचेत।

याचितैः पत्रपुष्पाद्यैर्यः करोति ममार्चनम्।

इति वाराहे तस्यापराधिषु गणितत्वात्।

भविष्यत्पुराणे—

प्रहरं तिष्ठते जाती करवीरमहर्निशम्।
तुलस्यां बिल्वपत्रेषु जलजेषु च सर्वशः॥
न पर्युषितदोषोऽस्ति मालाकारगृहेषु च।
मुद्गराणि कदम्बानि रात्रौ देयानि भास्करे॥
कनकानि कदम्बानि रात्रौ देयानि शंकरे।
दिवा चान्यानि पुष्पाणि दिवा रात्रौ च मल्लिकाः॥

तत्रैव— जाती शमी कुशाः कङ्कु मल्लिकाः करवीरजम्।
नागपुन्नागकाशोकरक्तनीलोत्पलानि च॥
चम्पकं बकुलं चैव पद्मं बिल्वं पवित्रकम्।
एतानि सर्वदेवानां विहितानि समानि च॥

कङ्कु कुब्जकम्। नागो नागकेशरम्।

पाटला च शमीपत्रं दुर्गायास्तु हिताहितम्।

विहितं प्रतिषिद्धं चेत्यर्थः।

कुन्दं पलाशकुसुमं दूर्वा च शिवपूजने।
कुमुदं कुङ्कुमं द्रोणं तगरं सूर्यपूजने॥

विहितनिषिद्धमित्यर्थः। कुङ्कुममत्र पुष्पम्।

अवकः कर्णिकारस्तु किङ्किरातो हरेस्तथा।

किङ्किरातः पीताम्रकः।

तिलकं मालती वाणस्तुलसी भृङ्गराजकम् ।
तमालं शिवदुर्गार्थे निषिद्धं विहितं भवेत् ।

बाण: करस(म)ला इति प्रसिद्धः ।

जयः काशः श्वेतपद्मं श्वेतमन्दारकं तथा ।
दुर्गायाश्चैव विष्णोश्च निषिद्धं विहितं भवेत् ॥

जयो जयन्ती ।

अगस्तिरतिमुक्तश्च तिरीटं च हरे हरौ ।
अपामार्गस्य पुष्पं च दुर्गायाश्च हिताहितम् ॥

अतिमुक्तो माधवीलता । तिरीटं लोध्रम् ।

धत्तूरं शिंशपापुष्पं मन्दारश्चापराजिता ।
सूर्यविष्ण्वोर्न विहितं दमनं शिवसूर्ययोः ॥

अथ शिवे निषिद्धानि—

केतकी चातिमुक्तश्च कुन्दो यूथो मदन्तिका ।
शिरीषसर्जबन्धूककुसुमानि विवर्जयेत् ॥
अङ्कोलपत्रकुसुमं करञ्जेन्द्रतरूद्भवम् ।

सर्जः शालः । इन्द्रतरुः सिन्धुवारः ।

शिवे विवर्जयेत्कुन्दमुन्मत्तं च तथा हरौ ।
देवीनामर्कमन्दारौ सूर्यस्य तगरं तथा ॥ इति ।

विष्णुः । अर्कनिषेधो दुर्गेतरदेवीविषयः, दुर्गापूजाधिकारे करवीरार्कपुष्पैरित्युक्तत्वात् ।

विष्णौ तु, विष्णुः—नोग्रगन्धीनि नागन्धीनि पुष्पाणि न कण्टकितम् । कण्टकितमपि शुक्लसुगन्ध्यमपि दद्यात् । न रक्तं दद्यात् । रक्तमपि कुङ्कुमजं जलजं च दद्यात् । अजलजमपि पाटलानि संध्याकरवीरपारिभद्रशमीपत्रपलाशाशोककुशवर्ज्यं न दद्यात् ।

विष्णुधर्मोत्तरे—'कुटजशाल्मलीपुष्पं शैरीषं[1] ककचं धत्तूरं कृष्णपुष्पार्कं च विष्णौ निषिद्धम्'

नृसिंहपुराणे—माला योग्यताराहित्ये सति निर्माल्यं भवतीत्युक्तं, तुलसीचन्दनादीनां च न निर्माल्यतेत्युक्तं, तेन प्रातःकालेऽप्यपनयने[2] न दोषः ।

---

१ शिरीषमिति क. पाठः । २ नयत इति क. पाठः ।

## अथ विहितानि !

तत्र सूर्यस्य भविष्यत्पुराणे—

मालती मल्लिका चैव दूर्वा काशोऽतिमुक्तकः।
पाटलाकरवीराणि जपा जयन्तिरेव च ॥
चम्पको रोतकः कन्दो वाणो बर्बरमल्लिका।
अशोककर्णिकारौ च तथैव चाटरूषकः ॥
शतपत्राणि चान्यानि बकुलं च विशेषतः।
अगस्तिकिंशुकौ तद्वत्पूजार्थं भास्करस्य च ॥

विहितानीति शेषः।

---

## अथ पत्राणि।

विल्वपत्रं शमीपत्रं भृङ्गराजस्य पत्रकम्।
तमालपत्रं च हरेः सद्यस्तुष्टिकरं रवेः ॥
तुलसी कालतुलसी तथा रक्तं च चन्दनम्।
केतकीपत्रकुसुमं सदैव तपनप्रियम् ॥

---

## अथ शिवे।

करवीरो वकश्चैव अर्क उन्मत्तकस्तथा।
पाटला बृहती चैव तथा च गिरिकर्णिका ॥
तथा काशस्य पुष्पाणि मन्दारश्चापराजिता।
शमीपुष्पाणि चान्यानि कुब्जकं शिखिनी तथा ॥
अपामार्गस्तथा पद्मं शमीपत्रं सरोचकम्।
चम्पकोशीरतगरं तथा वै नागकेसरम् ॥
पुन्नागं किङ्किरातं च द्रोणपुष्पं तथा शुभम्।
शिंशपोदुम्वरश्चैव जपा मल्ली तथैव च ॥
पुष्पाणि यज्ञवृक्षस्य तथा बिल्वं प्रियं शुभे।
कुङ्कुमस्य च पुष्पाणि तथा वैकङ्कतस्य च ॥
नीलं च कुमुदं चैव तथा रक्तोत्पलानि च।
सुरभीणि च सर्वाणि स्थलजान्यौदकानि च।

गृह्णामि शिरसा देवि यो मे भक्त्या निवेदयेत् ॥

शिखिनी मयूरशिखा।

नीलोत्पलसहस्रस्य यो मालां संप्रयच्छति।
शिवाय विधिवद्भक्त्या तस्य पुण्यफलं शृणु ॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च।
वसेच्छिवपुरे श्रीमाञ्शिवतुल्यपराक्रमः ॥

अर्ककरवीरधत्तूरादिपुष्पदानफलं न लिखितं ग्रन्थगौरवभयात्। सामान्यफलं शिवलोकप्राप्तिः।

---

## अथ दुर्गायाः।

देवीपुराणे—शृणु शुक्र प्रवक्ष्यामि पुष्पाध्यायं समासतः।
ऋतुकालोद्भवैः पुष्पैर्मल्लिकाजातिपुष्पकैः ॥
सितरक्तैस्तथा पुष्पैः पद्मैश्च पाण्डुरैस्तथा।
किंशुकैस्तगरैश्चैव किङ्किरातैः सचम्पकैः ॥
बकुलैश्चैव मन्दारैः कुन्दपुष्पैस्तिरीटकैः।
करवीरार्कपुष्पैश्च शैंशिपैश्चापराजितैः ॥
सितरक्तैस्तथा पीतैः कृष्णैश्चैव चतुर्विधैः।
धत्तूरकादिपुष्पैश्च बन्धूकागस्तिसंभवैः ॥
मदनैः सिन्धुवारैश्च सुरभिः कु(भिम ?)रुबकैस्तथा।
लताभिर्ब्रह्मवृक्षस्य दूर्वाकन्दैः सुशोभनैः ॥
मञ्जरीभिः कुशानां च बिल्वपत्रैः सुशोभनैः।
रक्तान्वितैस्तथा सर्वैर्जलजैः स्थलसंभवैः ॥
पत्रैः पुष्पैर्यथान्यायं सर्वौषधिमयैः शुभैः।
धान्यानां सर्वपत्रैश्च पुष्पैश्चैव प्रपूजयेत् ॥

बिल्वपत्रैः पूजने राजसूयफलम्। करवीरस्रजा अग्निष्टोमफलम्। बकुलस्रजा वाजपेयफलम्। द्रोणस्रजा राजसूयफलम्। एवमन्यत्।

अथ विष्णोः। नरसिंहपुराणे—

मल्लिका मालती जाती केतक्याऽशोकचम्पकैः।
पुन्नागनागबकुलैः पद्मकैरुत्पलादिभिः।
एतैरन्यैश्च कुसुमैः प्रशस्तं पूजनं हरेः ॥

वामनपुराणे—जाती शताह्वा सुमना कुन्दं चाम्बुपुटस्तथा।

बाणं च चम्पकाशोकं करवीरं च यूथिका ।।
पारिभद्रं पाटला च बकुलं गिरिशालिनी ।
तिलकं जासुवनजं पीतजं तगरं त्वपि ।।
एतानि हि प्रशस्तानि कुसमान्यच्युतार्चने ।
सुरभीणि तथा[1]न्यानि वर्जयित्वा तु केतकीम् ।

केतकीं धत्तूरमिति केचित् । वनकेतकीत्यपरे । शताह्वाऽशोक इति प्रसिद्धः । सुमनाः सुवर्णजातिः । अम्बुपुटः कर्णिकारः । जासुवनजं जपा । गिरिशालिनी श्वेतकुटजम् ।

---

## अथ पत्राणि ।

अपामार्गस्य प्रथमं भृङ्गराजमतः परम् ।
तस्माच्च खादिरं श्रेष्ठं शमीपत्रं ततः परम् ।।
दूर्वापत्रं तथा श्रेष्ठं ततोऽपि कुशपत्रकम् ।
तस्माद्दमनकं श्रेष्ठं [2]ततो बिल्वस्य पत्रकम् ।।
बिल्वपत्रादपि हरेस्तुलसीपत्रमुत्तमम् ।
एतेषां तु यथालाभं पत्रैर्यश्चार्चयेद्धरिम् ।।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ।।

[3]नरसिंहपुराणे—

कृष्णमूर्धनि विन्यस्ता तुलसीपत्रमञ्जरी ।
सुवर्णकोटिपुण्यानां पुण्यं यच्छत्यतोऽधिकम् ।।

तुलसीरोपणमन्त्रः—

महाप्रसादजननी सर्वसौभाग्यवर्धिनी ।
आधिव्याधिहरा नित्यं तुलसि त्वं नमोऽस्तु ते ।।
द्रोणपुष्पे तथैकस्मिन्साधकाय निवेदिते ।
दश दत्त्वा सुवर्णानि तत्फलं लभते नरः ।।
अगस्तिकुसुमैर्देवं योऽर्चयेच्च जनार्दनम् ।
दर्शनात्तस्य देवर्षे नरकान्को नु यास्यति ।
द्रोणपुष्पं खादिरं च शमीबिल्वबकं तथा ।।

वकं बकुलम् ।

नन्द्यावर्तं करवीरं तथा श्वेतं च किंशुकम् ।

---

१ इमानीति क. पाठः । २ बिल्वपत्रं ततः परमिति क. पाठः । ३ नृसिंहे क. पाठः ।

कुशपुष्पं तमालं च चम्पकाशोककेतकी ॥
त्रिसंध्यं मालतीपुष्पं त्रिसंध्यं श्वेतजा तु या ।
कुन्दं च शतपुष्पं च मल्लिकाजातिपुष्पकम् ।
पूर्वपूर्वसहस्रेभ्योऽधिकं स्यादुत्तरोत्तरम् ॥
जातीपुष्पसहस्रेण यच्छेन्मालां सुशोभनाम् ।
विष्णवे विधिवद्भक्त्या तस्य पुण्यफलं शृणु ॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
वसेद्विष्णुपुरे श्रीमान्विष्णुतुल्यपराक्रमः ॥
मञ्जरी सहकारस्य केशवोपरि नारद ।
यच्छन्ति ते महात्मानो गोकोटिफलभागिनः ॥
पुरन्ध्रिपुष्पं यो दद्यादेकमप्यथ पण्डितः ।
तिलपात्रप्रदानस्य फलमाप्नोत्यसंशयम् ॥

पुरन्ध्रिः पूर्वदेशे 'पङ्कुः' इति प्रसिद्धा ।

॥ इति पुष्पाध्यायः ॥

---

## अथ पूजायतनानि ।

अग्निपुराणे—अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च ।
षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम् ॥

स्कान्दे— कामासक्तोऽथवा क्रुद्धः शालग्रामशिलार्चनात् ।
भक्त्या न यदि वाऽभक्त्या कलौ मुक्तिमवाप्नुयात् ॥
वैवस्वतभयं नास्ति तथाच कलिकालजम् ।
यः कथां कुरुते विष्णोः शालग्रामशिलाग्रतः ॥
शालग्रामशिलायास्तु प्रतिष्ठा नैव विद्यते ।
महापूजां तु कृत्वादौ पूजयेत्तां ततो बुधः ॥ इति ।

शिवायतनं भारते—
सदा तं यजते यस्तु श्रद्धया मुनिपुंगव ।
लिङ्गे वा स्थण्डिले वाऽपि शंकरं विधिपूर्वकम् ।
युगदोषं विनिर्जित्य रुद्रलोके प्रमोदते ॥ इति ।

भविष्ये—बाणलिङ्गानि राजेन्द्र ख्यातानि भुवनत्रये ।
न प्रतिष्ठा न संस्कारस्तेषामावाहनं तथा ॥ इति ।

हेमाद्रौ— ब्राह्मणैर्वासुदेवस्तु नृपैः संकर्षणस्तथा ।

प्रद्युम्नः पूज्यते वैश्यैरनिरुद्धस्तु शूद्रजैः ॥ इति ।

विष्णुधर्मोत्तरे—

पञ्चवक्त्रो वासुदेवः षड्भिः प्रद्युम्नकः स्मृतः ।
संकर्षणः सप्तवक्त्रोऽनिरुद्ध एकादशैः स्मृतः ॥
चत्वारो ब्राह्मणैः पूज्यास्त्रयो राजन्यजातिभिः ।
वैश्यैर्द्वावेव संपूज्यौ तथैकः शूद्रजातिभिः ॥ इति ।

यत्तु स्मृत्यन्तरे—

एकमूर्तिर्न पूज्यैव गृहिणा भूतिमिच्छता ।
अनेकमूर्तिसंपन्नः सर्वान्कामानवाप्नुयात् ॥

तत्काम्यपूजापरं त्रैवर्णिकपरं वा, शूद्रस्यैकविधानात् ।

यदपि— शालग्रामाः समाः पूज्या [ विषमा न कदाचन ।
समेषु द्वितयं नेष्टं विषमेष्वेकमेव हि ॥ इति ।

तत्र पादत्रयं विप्रपरं, तत्राप्याद्यार्धे चत्वारो ब्राह्मणैः पूज्याः ] इत्यस्यैवार्थमनुवदति । तृतीयपादस्तु अनेकमूर्तिसंपन्न इत्यनेकताप्राप्तौ द्वयोर्निषेधकम् । अन्त्यपादस्तु शूद्रपरः ।

यत्तु विष्णुधर्मोत्तरे—

शालिग्रामशिलां वापि चक्राङ्कितशिलां तथा ।
ब्राह्मणः पूजयेन्नित्यं क्षत्रियादिर्न पूजयेत् ॥

तत्क्षत्रियादिरादिर्यस्येति मध्यमपदलोपिबहुव्रीहिगर्भेण तद्गुणसंविज्ञानबहुव्रीहिणा शूद्रपरम् । तथाचापस्तम्बः—

प्रणवोच्चारणाच्चैव शालग्रामशिलार्चनात् ।
ब्राह्मणीगमनाच्चाऽपि शूद्रश्चाण्डालतां व्रजेत् ॥

एतदपि शूद्रस्य स्पर्शसहितपूजानिषेधार्थम् ।

ब्राह्मणस्यैव पूज्योऽहं शुचेरप्यशुचेरपि ।
स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको मम ॥ इति लैङ्गोक्तेः ।
स्त्रीणामनुपनीतानां शूद्राणां च नराधिप ।
स्पर्शने नाधिकारोऽस्ति विष्णोर्वा शंकरस्य च ॥ इति ।
शूद्रो वाऽनुपनीतो वा स्त्रीवाऽपि पतितोऽथवा ।
केशवं वा शिवं वापि स्पृष्ट्वा नरकमश्नुते ॥

---

१ क. नास्ति ।

इति च बृहन्नारदीयाच्चेति भट्टचरणाः । स्त्रीशूद्रयोः साक्षात्पूजानिषेधकमिति तु युक्तम् । अत एव पाद्मे—

ब्राह्मणक्षत्रवैश्यानां त्रयाणां मुनिसत्तम ।
अधिकारः स्मृतः सद्भिः शालग्रामशिलार्चने ॥
स्त्रीशूद्रपतितादीनां षण्ढादीनां विकर्मणाम् ।
नैवाधिकारो विज्ञेयः शालग्रामशिलार्चने ॥
दीक्षायुक्तैस्तथा शूद्रैर्मद्यपानविवर्जितैः ।
कर्तव्यं ब्राह्मणद्वारा शालग्रामशिलार्चनम् ॥ इति ।

तत्रैव— द्वारकाशैलसंभूतं यस्तोयं पिबते कलौ ।
पापानि तस्य नश्यन्ति शतजन्मार्जितान्यपि ॥
धृते शिरसि पीते च सर्वास्तुष्यन्ति देवताः ।
प्रायश्चित्तं हि पापानां कलौ पादोदकं हरेः ॥ इति ।

शिलैव शैलं स्वार्थेऽण् । द्वारकाशिलातोयपानविधेः सापि शालग्रामेण सह पूज्येति केचित् । तत्तोयपानमात्रं पूजायां तु मानाभाव इत्यपरे ।

अथ विष्णोर्गन्धपुष्पादि विष्णुधर्मोत्तरे—

कलौ यच्छन्ति ये विष्णोस्तुलसीकाष्ठचन्दनम् ।
विष्णुप्रीतिकरं मर्त्या उत्तरां यान्ति ते भुवम् ॥
योऽर्चयेन्मालतीपुष्पैर्न भूयः स्तनपो भवेत् ।
अहो मुष्टास्ते नष्टास्ते पतिताः कलिकन्दरे ।
यैर्नार्चितो हरिर्भक्त्या कमलैरसितैः सितैः ॥ इति ।

पाद्मे— कार्तिके केतकीपुष्पं येन दत्तं हरेः कलौ ।
दीपदानं च देवर्षे तारितं तेन वै कुलम् ॥ इति ।

अथ पूजेतिकर्तव्यता आग्नेयपुराणे—

अर्चनं संप्रवक्ष्यामि विष्णोरमिततेजसः ।
यत्कृत्वा मुनयः सर्वे परं निर्वाणमाप्नुयुः ॥
आनुष्टुभस्य सूक्तस्य त्रिष्टुबन्तस्य देवता ।
पुरुषो यो जगद्बीजं ऋषिर्नारायणः स्मृतः ॥
प्रथमां विन्यसेद्वामे द्वितीयां दक्षिणे करे ।
तृतीयां वामपादे च चतुर्थीं दक्षिणे न्यसेत् ॥
पञ्चमीं वामजानौ च षष्ठीं वै दक्षिणे न्यसेत् ।

II-7

सप्तमीं वामकट्यां तु अष्टमीं दक्षिणे तथा ॥
नवमीं नाभिमध्ये तु दशमीं हृदये तथा ।
एकादशीं कण्ठमध्ये द्वादशीं वामबाहुके ॥
त्रयोदशीं दक्षिणे तु तथैवास्ये चतुर्दशीम् ।
अक्ष्णोः पञ्चदशीं चैव विन्यसेन्मूर्ध्नि षोडशीम् ॥
यथा देहे तथा देवे न्यासं कृत्वा यथाविधि ।
न्यासेन तु भवेत्सोऽपि स्वयमेव जनार्दनः ॥
एवं न्यासविधिं कृत्वा पश्चात्पूजां समाचरेत् ।
पूर्वमावाहयेद्देवमासनं तु द्वितीयया ॥
पाद्यं तृतीयया चैव चतुर्थ्याऽर्घ्यं प्रदापयेत् ।
पञ्चम्याऽऽचमनं दद्यात्षष्ठ्या स्नानं समाचरेत् ॥
सप्तम्या तु ततो वासोऽप्यष्टम्या चोपवीतकम् ।
नवम्या चन्दनं दद्याद्दशम्या पुष्पमेव च ॥
एकादश्या तथा धूपं द्वादश्या दीपमेव हि ।
नैवेद्यं तु त्रयोदश्या नमस्कारे चतुर्दशी ।
प्रदक्षिणे पञ्चदशी वर्जने षोडशी तथा ॥

वर्जने विसर्जने ।

स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनं तथा ।
हुत्वा षोडशभिर्मन्त्रैः षोडशान्नस्य चाहुतीः ॥
पुनः षोडशभिर्मन्त्रैर्दद्यात्पुष्पाणि षोडश ।
तच्च सर्वं जपेद्भूयः पौरुषं सूक्तमेव च ।
षण्मासात्सिद्धिमाप्नोति ह्येवमेव समर्चयेत् ॥ इति ।

यत्तु भागवते—

उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने ।
अस्थिरायां विकल्पः स्यात्स्थण्डिले च भवेद्द्वयम् ॥ इति ।

यदपि स्कान्दे—

शालग्रामार्चने नैव आवाहनविसर्जने ।
शालग्रामे हि भगवान् समुद्भूतः सदा हरिः ॥

इत्यावाहनविसर्जने निषिद्धे तत्र तदृचो विनियोगो मन्त्रराजविधौ—

आवाहनऋचा दद्यात्पूर्वं पुष्पाञ्जलिं हरेः ।
तस्यैवोन्मुखताप्राप्त्यै यागे चोद्वासने ऋचा ।

अन्ते पुष्पाञ्जलिं दद्याद्यागसंपूर्तिसिद्धये ।। इति ।

तत्रैव— प्रतिमापट्टयन्त्राणां नित्यं स्नानं न कारयेत् ।
कारयेत्पर्वदिवसे यथा मलनिवारणम् ।। इति ।

वस्त्रमपि न प्रत्यहं नियमेन नूतनमेव समर्पणीयम् ।

वस्त्रमभ्युक्षणाच्छुद्धेदपरं तु दिने दिने ।

इति तत्त्वसागरोक्तेः । अपरं पुष्पादि ।

तत्रैव—यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठन्ति देवताः ।
न निर्माल्यं भवेत्तावत्स्वर्णरूप्यविभूषणम् ।। इति ।

बौधायनः—'अथातो' [ महादेवस्या ][1]ऽहरहः परिचर्याविधिं व्याख्यास्यामः । स्नात्वा शुचौ देशे गोमयेनोपलिप्य प्रतिकृतिं कृत्वाक्षतपुष्पै[2]र्यथालाभमर्चयेत् । सहपुष्पोदकेन महादेवमावाहयेत् ॐ भूः महादेवमावाहयामि, ॐ भुवः महादेवमावाहयामि, ॐ स्वः महादेवमावाहयामि, इत्यावाह्य आयातु भगवान् महादेव इत्यथ स्वागतेनाभिनन्दति । स्वागतमनुना स्वागतं भगवते महादेवाय तत्स्वासनं श्लक्ष्णमास्ताम् भगवान् महादेव इत्यत्र कूर्चं ददाति भगवतोऽयं कूर्चो दर्भमयस्त्रिवृद्धरितः सुवर्णस्तं जुषस्वेति । अत्र स्थानानि कल्पयामि । अग्रतो ब्रह्मणे कल्पयामि दक्षिणतः स्कन्दाय कल्पयामि विनायकाय कल्पयामि पश्चिमतः । स्थूलाय कल्पयाम्युत्तरतः उमायै कल्पयामि नन्दिकेश्वराय कल्पयामीति कल्पयित्वाथ सावित्र्या पात्रमभिमन्त्र्य प्रक्षाल्य त्रिरपः पवित्रमध्य आनीय सहपवित्रेणादित्यं दर्शयेत् । ॐमृतमिति स्नानम् । ॐ स्वरिति रुद्रेण पाद्यं दद्यात् । प्रणवेनार्घ्यम् । अथ व्याहृतिभिर्निर्माल्यं व्यपोह्योत्तरतश्चण्डाय नमः इत्यथैनं स्नापयित्वा "आपोहिष्ठा मयोभुवः" इति तिसृभिः "हिरण्यवर्णाः शुचयः पावका" इति चतसृभिः "पवमानः सुवर्जनः" इत्येतेनानुवाकेन स्नापयित्वाद्भिस्तर्पयति । भवं देवं तर्पयामि । शर्वं देवं तर्पयामि । ईशानं देवं तर्पयामि । पशुपतिं देवं तर्पयामि । रुद्रं देवं तर्पयामि । उग्रं देवं तर्पयामि । भीमं देवं तर्पयामि । महान्तं देवं तर्पयामि । इति तर्पयित्वाऽथैतानि वस्त्रयज्ञोपवीतान्याचमनीयान्युदकेन व्याहृतिभिर्दत्त्वा व्याहृतिभिः प्रदक्षिणमुदकं परिषिच्य "नमस्ते रुद्रमन्यव" इति गन्धं दद्यात् । "सहस्राणि सहस्रशः"

१ क. नास्ति । २ कुसमिति ख. पाठः ।

इति पुष्पं दद्यात्। "ईशानं त्वा भुवनानामधिश्रियम्" इति चाक्षतान्दद्यात्। सावित्र्या धूपं, उद्दीप्यस्वेति दीपं, "देवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्" भगवते महादेवाय जुष्टं चरुं निवेदयामीति नैवेद्यम्। अथाष्टभिर्नामधेयैरष्टौ पुष्पाणि दद्यात्। भवाय देवाय नमः। शर्वाय देवाय नमः। ईशानाय देवाय नमः। पशुपतये रुद्राय उग्राय देवाय नमः। भीमाय देवाय नमः। महते देवाय नमो ब्रह्मणे नमो विष्णवे नमः। स्कन्दाय नमः। [ पिनाकाय नमः। शूराय शूराय महाकालाय नन्दिकेश्वराय नमः। इति चरुशेषेणाऽष्टाभिर्नामधेयैरष्टाहुतीर्जुहोति। भवाय देवाय स्वाहेत्यष्टाभिर्हुत्वाऽथ शिष्टैर्गन्धमाल्यैर्ब्राह्मणानलंकृत्याथैनमृग्यजुःसामभिः स्तुवन्ति " सहस्राणि सहस्रशः " इत्यनुवाकं जपित्वा अन्यांश्च रौद्रान्मन्त्रान्यथाशक्त्या एकैकं भूर्भुवःस्वर्महरों भगवते महादेवाय च। रुद्रस्योद्वासकाले ॐ महादेवमुद्वासयामीति रुद्रमुद्वास्य। ]

प्रयातु भगवानीशः सर्वलोकनमस्कृतः।
अनेन हविषा तृप्तः पुनरागमनाय च।

पुनः संदर्शनाय च। इति प्रतिमास्थानेषु अप्स्वग्नावाहनविसर्जनवर्जं सर्वं समानम्। महत्स्वत्ययनमाचक्षते इत्याह भगवान् बौधायनः इति।

कौर्मे— न विष्ण्वाराधनात्पुण्यं विद्यते कर्म वैदिकम्।
तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम्॥
अथवा देवमीशानं भगवन्तं सनातनम्।
आराधयेन्महादेवं भावपूतो महेश्वरम्।
मन्त्रेण रुद्रगायत्र्या प्रणवेनाथवा पुनः॥

रुद्रगायत्री "तत्पुरुषाय विद्महे" इत्याद्या।

ईशानेनाथवा रुद्रं त्र्यम्बकेन समाहितः।
पुष्पैः पत्रैरथाद्भिर्वा चन्दनाद्यैर्महेश्वरम्॥
तथोंनमः शिवायेति मन्त्रेणानेन वा यजेत्।
नमस्कुर्यान्महादेवं ऋतं सत्यमितीश्वरम्॥
निवेदयीत चात्मानं यो ब्राह्मणमितीश्वरे।
प्रदक्षिणं द्विजः कुर्यात्पञ्च ब्रह्माणि वा जपेत्।
ध्यायीत देवमीशानं व्योममध्यगतं शिवम्॥ इति।

---

१ क. नास्ति।

स्कान्दे— अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम्।
शालग्रामस्य संसर्गात् सर्वं याति पवित्रताम्॥ इति।

कौर्मे— यो मोहादथवाऽऽलस्यादकृत्वा देवतार्चनम्।
भुङ्क्ते स याति नरकं सूकरेष्वभिजायते॥ इति।

शिववाक्यं स्कान्दे—
विप्रस्य तु सदैवाहं शुचेरप्यशुचेरपि।
गृह्णन्बलिं प्रहृष्यामि विप्राणामिव दर्शनात्॥

बलिं पूजाम्।

तथा— शूद्रः कर्माणि यो नित्यं स्वीयानि कुरुते प्रिये।
तस्याहमर्चां गृह्णामि चन्द्रखण्डविभूषिते॥

तथा— नमोन्तेन शिवेनैव स्त्रीणां पूजा विधीयते।

एवकारः प्रणवपरिसंख्यार्थः। तथा नृसिंहतापनीये—'सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय नेच्छन्ति'।

भविष्येऽपि—स्वाहा प्रणवसंयुक्तं शूद्रे मन्त्रं ददद्द्विजः।
शूद्रो नरकमाप्नोति ब्राह्मणः शूद्रतामियात्॥

रुद्रयामले—न प्राचीमग्रतः शंभोर्नोदीचीं शक्तिसंश्रिताम्।
न प्रतीचीं यतः पृष्ठमतो दक्षं समाश्रयेत्॥

पूजकः शंभोः पूजार्थं प्राचीमवस्थितये न समाश्रयेत्, पञ्चवक्त्रपक्षे यतः संहारकं वक्त्रं प्राच्यामवस्थितम्। एकवक्त्रपक्षे तु सुतराम्। शक्तिर्देवी, दक्षं दक्षिणाम्, इदं वचनं सूर्योपलक्षितदिग्विषयमेव। वक्ष्यमाणा आवरणपूजाऽप्येतदनुसारेणैव। पूज्यपूज्यकान्तःप्राच्यास्तु नायं विषयः बाधात्।

लिङ्गपुराणे—विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया।
पूजितोऽपि महादेवो न तस्य स्यात्फलप्रदः॥
तस्मान्मृदाऽपि कर्तव्यं ललाटेऽपि त्रिपुण्ड्रकम्॥

संवत्सरप्रदीपे—
त्रिपुरस्य वधे काले रुद्रस्याक्ष्णोर्यतः स्रुताः।
अश्रूणां बिन्दवस्ते तु रुद्राक्षा ह्यभवन् भुवि॥

स्कान्दे—पञ्चवक्त्रः स्वयं रुद्रः कालाग्निर्नाम नामतः।

---

१ स्पर्शात् क. पाठः।

अगम्यागमनाच्चैव अभक्ष्यस्य च भक्षणात्।
मुच्यते सर्वपापेभ्यः पञ्चवक्त्रस्य धारणात्॥

ॐ नम इति प्रत्येकमष्टोत्तरशतं जप्त्वा शीताम्भसा प्रक्षाल्य धारणीयम्।

विना मन्त्रेण यो धत्ते रुद्राक्षं भुवि मानवः।
स याति नरकं घोरं यावदिन्द्राश्चतुर्दश॥ इति तत्रैवोक्तेः।

[ बोपदेवः—

रुद्राक्षान्कण्ठदेशे दशनपरिमितान्मस्तके विंशती द्वे
षट्षट् कर्णप्रदेशे करयुगलकृते एकमेकं शिखायाम्।
वक्षस्यष्टाधिकं यः कलयति शतकं स स्वयं नीलकण्ठः ]

अथ पार्थिवपूजा नन्दिपुराणे—

आयुष्मान्बलवान्श्रीमान्पुत्रवान्धनवान्सुखी।
वरमिष्टं लभेल्लिङ्गं पार्थिवं यः समर्चयेत्।
तस्मात्तु पार्थिवं लिङ्गं ज्ञेयं सर्वार्थसाधकम्॥

भविष्ये—मृद्भस्मनोः शकृत्पिण्डं ताम्रकांस्यमयं तथा।
कृत्वा लिङ्गं सकृत्पूज्यं वसेत्कल्पायुषं दिवि॥
राज्यवित्तप्रदं लिङ्गं स्फाटिकं सर्वकामदम्।
नर्मदागिरिजं श्रेष्ठमन्यदपि हि लिङ्गवत्।
कृत्वा पूजय विप्रेन्द्र लप्स्यसे चेहितं फलम्।

लिङ्गवल्लिङ्गाकारम्।

तिथितत्त्वे—अक्षादल्पपरिमाणं न लिङ्गं कुत्रचिन्नरः।
कुर्वीताङ्गुष्ठतो ह्रस्वं न कदाचित्समाचरेत्॥

अङ्गुष्ठनस्तद्बृहत्पर्वग्रन्थितः।

अङ्गुष्ठाङ्गुलिमानं तु यत्र यत्रोपदिश्यते।
तत्र तत्र बृहत्पर्वग्रन्थिभिर्मिनुयात्सदा॥

इति छन्दोगपरिशिष्टात्।

शिवधर्मे—सहस्रमर्चयेल्लिङ्गं निरयं स न गच्छति।
रुद्रलोकमवाप्नोति भुक्त्वा भोगाननुत्तमान्॥

तथा— वालुकानि च लिङ्गानि पार्थिवानि च कारयेत्।
सहस्रपूजनात्सोऽपि लभते वाञ्छितं फलम्॥

१ क. नास्ति।

देवीपुराणे— मृदाहरणसंघट्टप्रतिष्ठाह्वानमेव च ।
स्नपनं पूजनं चैव विसर्जनमतः परम् ॥
हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् ।
पशुपतिः शिवश्चैव महादेव इति क्रमात् ॥

अत्रानुष्ठानम्—ॐ हराय नम इति मृदाहरणम् । ॐ महेश्वराय नम इति संघट्टनम् । ॐ शूलपाणे इह सुप्रतिष्ठितो भवेति प्रतिष्ठा ।

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं
रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् ।
पद्मासीनं समन्तात्स्तुतमरगणैर्व्याघ्रकृत्तिं वसानं
विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥

इति ध्यात्वा पिनाकधृगिहागच्छेत्यावाह्य । ॐ पशुपतये नम इति स्नपनम् । एवं पाद्यम् । ॐ नमः शिवाय नम इति । एवमर्घ्यादिना पूजयेत् । विसर्जनात्पूर्वं भविष्योत्तरपुराणोक्तं स्वभावप्रसिद्धैशान्यादिषु अष्टदिक्षु वामावर्तेन पूजनम् । यथा ॐ शर्वाय क्षितिमूर्तये नमः, ॐ भवाय जलमूर्तयेनमः, ॐ रुद्राय अग्निमूर्तये नमः, ॐ उग्राय वायुमूर्तये नमः, ॐ भीमाय आकाशमूर्तये नमः, ॐ पशुपतये यजमानमूर्तये नमः, ॐ महादेवाय सोममूर्तये नमः ॐ ईशानाय सूर्यमूर्तये नमः ।

मूर्तयोऽष्टौ शिवस्यैताः पूर्वादिक्रमयोगतः
आग्नेय्यन्ताः प्रयोज्यास्तु वेद्यां लिङ्गे शिवं यजेत् ॥

ततः ॐ महादेव क्षमस्वेति संहारमुद्रया विसर्जयेत् ॥ इति ।

नन्दिपुराणे—गोभूहिरण्यवस्त्रादिबलिपुष्पनिवेदने ।
ज्ञेयो नमःशिवायेति मन्त्रः सर्वार्थसाधकः ॥
सर्वमन्त्राधिकश्चायमोंकाराद्यः षडक्षरः ।
तन्मन्त्रजापी तत्कर्मरतस्तद्गतमानसः ।
निष्कामो पुरुषो राजन्स रुद्रपदमश्नुते ॥

पञ्चाक्षरमुपक्रम्य भविष्ये—
अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
महापातकसंयुक्तो मन्त्रस्यास्य जपे यथा ।
अधिकारी भवेत्सर्व इति वेदेऽब्रवीच्छिवः ॥ इति ।

---

१ [illegible] क. पाठः । २ अग्नेय्येताः क. पाठः ।

तस्यार्थः—पूर्वोक्तयथापदानुरोधाद्यथाधिकारी भवेत्तथाब्रवीदित्यर्थः।

तथा— सर्वेषामेव पात्राणां वरं पात्रं महेश्वरः।
पतन्तं त्रायते यस्मादतीव नरकार्णवात् ॥
शिवमुद्दिश्य यद्दत्तं सर्वकारणकारणम्।
तदनन्तफलं दातुर्भवतीति किमद्भुतम् ॥
दत्त्वा नैवेद्यवस्त्रादीन्नाददीत कदाचन।
त्यक्तव्यं शिवमुद्दिश्य तदाऽऽदाने न तत्फलम् ॥

आदाने ग्रहणे।

शिवधर्मे—तस्मात्पुष्पैः फलैः पत्रैस्तोयैरपि च यत्फलम्।
तदनन्तफलं ज्ञेयं भक्तिरेवात्र कारणम् ॥

तत्रैव— लिङ्गानुलेपनं कार्यं दिव्यगन्धैः सुगन्धिभिः।
वर्षकोटिशतं दिव्यं शिवलोके महीयते ॥

शिवधर्मे—तस्मात्पुष्पप्रदानेन लिङ्गेषु प्रतिमासु च।
अशीतिवर्षकोटीनां दुर्गतिं न नरो व्रजेत् ॥

स्कान्दे—शुष्काण्यपि च पत्राणि श्रीवृक्षस्य सदैव हि ॥

प्रदातव्यानीति शेषः।

भविष्ये—धत्तूरकैश्च यो लिङ्गं सकृत्पूजयते नरः।
स गोदानफलं प्राप्य शिवलोके महीयते ॥
[ बि[1]ल्वपत्रैरखण्डैश्च लिङ्गं पूजयते सकृत्।
सर्वपापविनिर्मुक्तः शिवलोके महीयते ॥ ]

तथा— सर्वकामप्रदं बिल्वं दारिद्र्यस्य विनाशनम्।
बिल्वपत्रात्परं नास्ति येन तुष्यति शंकरः ॥

तथा— केशकीटादिविद्धानि निशि पर्युषितानि च।
स्वयंपतितपुष्पाणि त्यजेत्परहृतान्यपि ॥

तथा— देवदारुसमेतं च सर्जश्रीवासकुन्दुरम्।
श्रीफलं चाज्यसंमिश्रं दग्ध्वाऽऽप्नोति परां गतिम् ॥

सर्जः शालरसः। श्रीवासः सरलद्रवः। कुन्दुरुः शैलेयमिति स्मार्तः। सल्लकीनिर्यास इति दामोदरः।

एभ्यः सौगन्धिकं धूपं षट्सहस्रगुणोत्तरम्।

---

१ क. नास्ति।

अगरुं शतसाहस्रं द्विगुणं वा सिताङ्गुलम्।
गुग्गुलं घृतसंयुक्तं साक्षाद्गृह्णाति शंकरः॥

तथा— तैलेनाऽपि हि यो दद्यात् घृताभावेन मानवः।
तेन दीपप्रदानेन शिववद्राजते भुवि॥

नन्दिकेश्वरे—अथ भक्त्या शिवः पूज्यो नैवेद्यमुपकल्पयेत्।
यद्यदेवात्मनः श्रेयस्तदीशाय प्रकल्पयेत्॥

भविष्ये तु— शालितण्डुलप्रस्थं तु कुर्यादन्नं सुसंस्कृतम्।
शिवाय तुं चरुं दद्याच्चतुर्दश्यां समाहितः॥

शैवसर्वस्वे स्कान्दे—
एकमाम्रफलं पक्वं यः शंभोर्विनिवेदयेत्।
वर्षाणामयुतं भोगैः शिवलोके महीयते॥
एवं मोचाफलं पक्वं यः शिवाय निवेदयेत्।
सर्वभक्ष्यमहाभोगैः शिवलोके महीयते॥

मोचा कदली। शिवपुराणे—
नैवेद्यं घृतसंयुक्तं मधुपर्कं निवेदयेत्।
अग्निष्टोमस्य यज्ञस्य फलमाप्नोति मानवः॥
परिपक्वं सुसंसृष्टमाज्यसिक्तं सुसंस्कृतम्।
शिवाय मांसं दत्त्वा तु शृणु यत्फलमाप्नुयात्॥
अशेषफलदानेन यत्फलं परिकीर्तितम्।
तत्फलं प्राप्नुयान्नित्यं सर्वं मांसनिवेदनात्॥

[ शिवधर्मे ]—लिङ्गवेदी भवेद्देवी लिङ्गं साक्षान्महेश्वरः।
तयोः संपूजनात्स्यातां देवी देवश्च पूजितौ॥

देवीपुराणे—सव्यं व्रजेत्ततोऽसव्यं प्रणालं नैव लङ्घयेत्।
एकीभूतमना रुद्रे यः कुर्यात्त्रिः प्रदक्षिणम्॥
छिन्नस्तेन भवेद्ग्रन्थिर्न तस्य पुनरुद्भवः।

भविष्ये—जानुभ्यां चैव पाणिभ्यां शिरसा च विचक्षणः।
कृत्वा प्रणामं देवेशे सर्वान्कामानवाप्नुयात्॥

लिङ्गपुराणे—गन्धधूपनमस्कारैर्मुखवाद्यैश्च सर्वशः।
यो मामर्चयते तत्र तदा तुष्याम्यहं सदा॥

---

१ तं क.पाठः। २ सर्वभक्ष्यमहा° क.पाठः। ३ वर्षाणामयुतैर्भो०क. पाठः। ४ क. नास्ति।

महाभारते— सर्वलक्षणहीनोऽपि युक्तो वा सर्वपातकैः ।
सर्वं तरति तत्पापं भावयञ्शिवमात्मना ॥

राघवभट्टधृतम्—अधोमुखे वामहस्तेऊर्ध्वास्यं दक्षहस्तकम् ।
क्षिप्ताङ्गुलीरङ्गुलीभिः संयुज्य परिवर्तयेत् ।
प्रोक्ता संहारमुद्रेयमर्पणे तु प्रशस्यते ।

अर्पणे आत्मनीति शेषः ।

स्कान्दे— निर्माल्यं यो हि मद्भक्त्या शिरसा धारयिष्यति ।
अशुचिर्भिन्नमर्यादो नरः पापसमन्वितः ॥
नरके पच्यते घोरे तिर्यग्योनौ च संभवेत ।
ब्रह्महाऽपि शुचिर्भूत्वा निर्माल्यं यस्तु धारयेत् ।
तस्य पापं महच्छीघ्रं नाशयिष्ये महाव्रतैः ॥

शुचिः स्नानादिनेत्यर्थः । एवं च—

स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा आप्लुतः शुचिः ॥

इति कालिकापुराणीयमशुचिविषयमनुपनीतविषयं [1]चेति स्मार्तः ।

बह्वृचगृह्यपरिशिष्टे—

अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामशिलास्पर्शात्सर्वं याति पवित्रताम् ॥ इति कौर्मे ।

[ [2]कृत्यमहार्णवे शिवागमे लिङ्गपूजायां गुणफलसंबन्धः ।

लवणेन च सौभाग्यं पार्थिवं सार्वकामिकम् ।
अनेकफलदं भूरिसैकतं परिकीर्तितम् ॥
ग्रामदं तिलपिष्टोत्थं तुषोत्थं मारणे स्मृतम् ।
अन्नोत्थमन्नदं प्रोक्तं गुडोत्थं शान्तिवर्धनम् ॥
गन्धोत्थं गुणदं भूरिशर्करोत्थं सुखप्रदम् ।
वंशाङ्कुरोत्थं वश्यार्थं गोमयं सर्वरोगहृत ॥
वंशाद्धि संभवं लिङ्गं सर्वशत्रुनिबर्हणम् ।
आसुरीलवणोत्थं तु सर्वलोकवशंकरम् ॥
स्तम्भने रजनीपिष्टसंभवं लिङ्गमुत्तमम् ।
तण्डुलोद्भवपिष्टस्य लिङ्गं सर्वसुखप्रदम् ॥
दधिदुग्धोद्भवं लिङ्गं कीर्तिग्रामाज्यवर्धनम् ।

---

१ वेति क. पाठः । २ एतदादिशालग्रामशिलापरीक्षान्तं क. नास्ति ।

दूर्वागुडूचीसंभूतमपमृत्युनिवारणम् ॥
इक्षुवृक्षोद्भवं लिङ्गमुच्चाटनकरं परम् ॥
आगमोक्तनियोगं तु ज्ञात्वा सम्यग्विचक्षणः।
वस्तुमात्रस्य कुर्वीत लिङ्गं तत्तत्फलाप्तये ॥
वार्क्षं वित्तप्रदं लिङ्गं स्फाटिकं सर्वकामिकम्।
आयुष्यं हीरजं ज्ञेयं रोगहृन्मौक्तिकोद्भवम् ॥
सुखकृत्पुष्परागोत्थं वैडूर्यं शत्रुदर्पहृत्।
पद्मरागं च लक्ष्मीदमैन्द्रनीलं यशःप्रदम् ॥
महाभूतिप्रदं हैमं राजतं भूतिवर्धनम्।
आरकूटं तथा कांस्यं शुल्वं सामान्यभुक्तिदम् ॥
त्रपुसीसायसं लिङ्गं शत्रूणां नाशने हितम्।
विद्यार्थी लिङ्गसाहस्रं कामार्थी शतपञ्चकम् ॥
सुहृत्कामः सहस्रं तु वस्त्रार्थी शतमष्टकम्।
उच्चाटनपरं चैवमथोक्तं च सहस्रकम् ॥
मारणार्थी सप्तशतं मोहार्थी शतमष्टकम्।
स्तम्भनं तु तदर्धेन मारणे तु तदर्थकम् ॥
निगडान्मुक्तिकामस्तु सहस्रं तु समाचरेत्।
महाराजभये पञ्चसहस्रं सर्वकामदम् ॥
एकं पापहरं प्रोक्तं द्विलिङ्गं कार्यसिद्धिम्।
त्रिलिङ्गं सर्वकामानां कारणं परमाद्भुतम ॥
लिङ्गानामयुतं वापि महाराजभयं हरेत्।
कारागृहविमुक्त्यर्थमनन्तं कारयेद्बुधः ॥
डाकिन्यादिभये प्राप्ते सहस्रं कारयेत्तदा।
सहस्राणां पञ्चशतं पुत्रकामेन कारयेत् ॥
कृत्वा नित्यं विधानेन सगुणं पुत्रमाप्नुयात्।
लक्षमेकं तु लिङ्गानां यः करोति नरो भुवि।
शिव एव भवेन्नित्यं नात्र कार्या विचारणा ॥

एतेषां च प्रतिष्ठापूजादि सर्वं प्रतिष्ठामयूखे वक्ष्यते।

॥ इति लिङ्गप्रकृतिद्रव्यभेदेन फलभेदः ॥

## अथ पञ्चसूत्रलिङ्गम् ।

सिद्धान्तशेखरे—

लिङ्गमस्तकविस्तारं पूजाभागसमं नयेत् ।
नाहं तत्त्रिगुणं कुर्यान्नाहवत्पीठविस्तृतिम् ॥
पूजांशत्रिगुणं कुर्यादुन्नतं पठिमुत्तमम् ।
वृत्तं वा चतुरस्रं वा मध्ये कण्ठसमन्वितम् ॥
द्विगुणं लिङ्गनाहाच्च कण्ठनाहं समाचरेत् ।
त्रिमेखलमधश्चोर्ध्वे समं वाऽथ द्विमेखलम् ॥
लिङ्गमस्तकविस्तारं षड्भागं विभजेत्ततः ।
मेखलामेकभागेन कुर्यात्खातं च तत्समम् ॥
लिङ्गदैर्ध्यसमं कुर्यात्प्रणालं पीठबाह्यतः ।
विस्तारं तत्समं मूले तदर्धं च तदग्रतः ॥
जलमार्गः प्रकर्तव्यस्तस्य मध्ये त्रिभागतः ।
कुर्यात्पीठार्धदीर्घं वा प्राणालं च शिवागमात् ॥ इति ।

पूजा शलाका । आभोग उच्चता । नाहः पुष्टता । अयमाशयः—लिङ्गमस्तकव्यासो लिङ्गोच्चतासमः । व्यासत्रिगुणो नाहः । तावानेव पीठव्यासः । पीठं च वृत्तं चतुरस्रं वा । प्रणालिका च लिङ्गव्यासवन्मूले विस्तृता । अग्रे तदर्धा तद्द्विगुणा सार्धा वा दीर्घेति चन्द्रिकायाम् ।

॥ इति लिङ्गपरिमाणम् ॥

---

चमत्कारचिन्तामणौ—

नार्च्या गृहेऽश्मजामूर्तिश्चतुरङ्गुलतोऽधिका ।
न वितस्त्यधिका धातुसंभवा श्रेय इच्छता ॥ इति ।

## अथ शालग्रामशिलापरीक्षा ।

विष्णुरहस्ये—गण्डकी सरितां पुण्या चक्रतीर्थं च तत्र च ।
शालग्रामाभिधं क्षेत्रं तत्र तेषां समुद्भवः ॥
द्वारदेशे समे चक्रे दृश्येते नान्तरीयके ।
वासुदेवः स विज्ञेयः शुक्लाभश्चातिशोभनः ॥
द्वे चक्रे एव संलग्ने पूर्वभागे तु पुष्कलः ।
संकर्षणः स विज्ञेयो रक्ताभश्चैव सर्वतः ॥
प्रद्युम्नः सूक्ष्मचक्रस्तु श्यामवर्णस्तथैव च ।

सुशिरच्छिद्रवहुलो दीर्घाकारः सुशोभनः ॥
अनिरुद्धश्च नीलाभो वर्तुलश्चातिशोभनः ।
अतसीपुष्पसंकाशो बिन्दुना परिशोभितः ॥
परितो वर्तुलश्चैव वामनः परिकीर्तितः ।
बिन्दुत्रयसमायुक्तः शङ्खचक्रान्वितो मुखे ॥
तत्तल्लक्षणसंयुक्तो धनुर्वलयपञ्चकः ।
दीर्घदक्षिणक्षामास्यो मत्स्याकृतिसमीपगः ॥
कूर्ममूर्तिर्गर्भवक्त्रौ दुर्लभः सर्वकामदः ।
वनमालाङ्किता श्यामा वर्तुलाचातिशोभना ॥
श्रीवत्सकौस्तुभाभ्यां च बिन्दुना परिशोभिता ।
सा चैवं देवदेवस्य पूजनीया महीक्षिता ॥
वराहशक्तिलिङ्गस्तु चक्रे च विषमे स्थिते ।
इन्द्रनीलनिभः स्थूलस्त्रिरेखालाञ्छितः शुभः ॥
कपिलो नारसिंहस्तु वहुचक्रस्तथोन्नतः ।
वामपार्श्वे स्थिते चक्रे कृष्णवर्णे सबिन्दुके ॥
लक्ष्मीनृसिंहो विख्यातो भुक्तिमुक्तिप्रदायकः ।
पारिजातध्वजी वज्री वर्तुलः स्यात्सुशोभनः ॥
पुरुषोत्तमः स विज्ञेयः सर्वसौभाग्यदायकः ।
रेखाद्वितयसंयुक्तः पद्मचिह्नित एव च ॥
श्यामो नारायणो देवो नाभिचक्रस्तथोन्नतः ।
ध्वजवज्राङ्कुशोपेतश्चतुश्चक्रश्च वर्तुलः ॥
गदाकृतिस्तथा रेखातल्लक्ष्मीर्मध्यदेशतः ।
लक्ष्मीनारायणो देवो ह्यभीष्टफलदः शुभः ॥
चतुश्चक्रः सूक्ष्मरन्ध्रो वनमालाङ्कितोदरः ।
लक्ष्मीनारायणः प्रोक्तो भुक्तिमुक्तिफलप्रदः ॥
अनन्तचक्रैर्वहुभिश्चिह्नैरप्युपलक्षितः ।
अनन्तः स तु विज्ञेयः सर्वपूजाफलप्रदः ॥
नानावर्णोऽनन्तः स्यान्नागभोगेन चिह्नितः ।
कृष्णवर्णस्तथा विष्णुः स्थूलचक्रः सुशोभनः ॥
गदाकृतिस्तथा रेखा दृश्यते मध्यदेशतः ।
श्रीधरस्तु तथा देवश्चिह्नितो वनमालया ॥

कदम्बमुकुलाकारः सर्वसिद्धिफलप्रदः।
त्रिविक्रमो महादेवः श्यामवर्णो महाद्युतिः ॥
वामपार्श्वे तथा चक्रे रेखा चैव तु दक्षिणे।
मधुसूदनः स विज्ञेय एकचक्रो महाद्युतिः ॥
स्निग्धवर्णोऽव्रणश्चैव वर्तुलश्च सुशोभनः।
श्यामलश्च महासूक्ष्मो दधिबिन्दुसमन्वितः ॥
दधिवामन इत्युक्तः पशुपुत्रधनप्रदः।
वामपार्श्वे तथा चक्रे रेखा चैव तु दक्षिणे ॥
पीतवर्णो धनुःपर्शुलाङ्गलाङ्कितशोभितः।
वामेतरे च रामश्च सर्वमृत्युहरः शुभः ॥
परमेष्ठी तु शुक्लाभः पद्मचक्रसमन्वितः।
वर्तुलस्तु तथा पीतः पृष्ठे तु सुषिरः स्मृतः ॥
हयग्रीवोऽङ्कुशाकारो रेखापद्मसमीपगः।
बहुरेखासमाकीर्णः पक्षे नीलमथापि वा ॥
कृष्णवर्णः समाख्यातो महासारस्वतप्रदः।
चतस्रो यत्र दृश्यन्ते रेखाः पार्श्वसमीपगाः ॥
द्वे चक्रे मध्यदेशे तु सा शिला तु चतुर्मुखी।
कूर्मचक्रे महाभागे श्वेताभा गोखुरान्विता ॥
शिवनाभिरिति ख्याता भुक्तिमुक्तिफलप्रदा।
चक्रं तु केवलं यत्र पङ्कजेन समन्वितम् ॥
लाञ्छनं वनमालायाः श्रिया युक्तः स्थितो हरिः।
एकं चक्रं शिरोदेशे नानावर्णं मुखे तथा ॥
सुदर्शनमिति ज्ञेयं सर्वपापप्रणाशनम्।
चतुश्चक्रः श्यामवर्णो भवेद्देवो जनार्दनः ॥
वैकुण्ठो मणिवर्णाभश्चक्रमेकं तथाम्बुजम्।
द्वारोपरि तथा रेखा पूजयेत्तं सुखप्रदम् ॥
गोविन्दः पुण्डरीकाक्षः कृष्णवर्णो महाद्युतिः।
दक्षिणे तु गदाचक्रे वामे पर्वतलाञ्छनम्।
अर्धचन्द्राकृतिर्देवो हृषीकेशः स उच्यते ॥

अथ तन्महिमा लिङ्गपुराणे—

लिङ्गकोटिसहस्रैस्तु पूजितैर्यत्फलं भवेत्।

तत्फलं कोटिगुणितं शालिग्रामशिलार्चने ॥
शालिग्रामसमीपे तु क्रोशमात्रं समन्ततः ।
कीटकोऽपि मृतो याति वैकुण्ठभवनं नरः ॥

तथा— शालग्रामशिलाचक्रं यो दद्याद्दानमुत्तमम् ।
भूचक्रं तेन दत्तं स्यात्सशैलवनकाननम् ॥

शिववाक्यम्—
अनर्हं मम नैवेद्यं पत्रं पुष्पं फलं जलम् ।
शालग्रामशिलासंगात्सर्वं याति पवित्रताम् ॥
शालग्रामशिलायां तु सदा श्रीविष्णुपूजनम् ।
नित्यं सन्निहितस्तत्र शालग्रामे जगद्गुरुः ॥

सदा सन्निहित इत्यनेन प्रतिष्ठादिकं नास्तीत्युच्यते ।

अपूज्या उक्ताः—
कपिला कर्बुरा भग्ना बहुचक्रैकचक्रिका ।
वृहन्मुखी वृहच्चक्रा लग्नचक्राऽथवा पुनः ॥
अधोमुखी भग्नचक्रा पूजिता दुःखदायिनी ।
अविज्ञाता च वक्रा च रूक्षा स्थूलाऽतिदुःखदा ॥ इति ।

॥ इति शालग्रामशिलापरीक्षा ॥ ]

अथ गुरुपूजा मात्स्ये—
तत्रोपदेष्टारमपि पूजयेच्च ततो गुरुम् ।
न पूज्यते गुरुर्यत्र नरैस्तत्राफला क्रिया ॥

शिवपुराणे—
वस्त्राभरणमाल्यानि शयनान्यासनानि च ।
प्रियाणि चात्मनो यानि तानि देयानि वै गुरोः ॥ इति ।

---

## अथ वैश्वदेवविधिः ।

नृसिंहपुराणे—पौरुषेण च सूक्तेन ततो विष्णुं समर्चयेत् ।
वैश्वदेवं ततः कुर्याद्बलिकर्म तथैव च ॥ इति ।

शातातपः—वैश्वदेवः प्रकर्तव्यः पञ्चसूनापनुत्तये । इति ।

सूना हिंसास्थलम् ।

यमः— पञ्चसूना गृहस्थस्य वर्तन्तेऽहरहः सदा ।
कण्डणी पेषणी चुल्ली जलकुम्भ अवस्करः ॥ इति ।

कण्डणी उलूखलमुसलादि । अवस्कर उत्करः । उपस्कर इति पाठे शूर्पचालन्यादि ।

वृद्धवसिष्ठः—अनग्निकस्तु यो विप्रः सोऽन्नं व्याहृतिभिः स्वयम् ।
हुत्वा शाकलमन्त्रैस्तु शिष्टाद्भूतबलिं हरेत् ॥

अनग्निको भार्याऽभावेन श्रौतस्मार्ताग्निपरिग्रहाधिकारशून्यः ।

कर्मप्रदीपे— अग्न्यादिर्गौतमेनोक्तो होमः शाकल एव च ।
अनाहिताग्नेरप्येष युज्यते बलिभिः सह ॥

अग्न्यादिरग्निवाय्वादिदैवत्यभूरादिव्याहृतिकरणकः । अपिरेवकारार्थे ।

विष्णुः— प्रजापतिहविर्हुत्वा पूजयेदतिथिं ततः ।

प्रजापतिहविरिति "प्रजापतये स्वाहा" इति हुत्वेत्यर्थः। पूजयेदिति तु स्वकालीनमनुष्ययज्ञानुवादमात्रं न तु होमोत्तरं तद्विधिः । ज्योतिष्टोमे शाकलहोमाङ्गभूता "देवकृतस्यैनसोऽवयजनमसि" इत्याद्याः षट् शाकलमन्त्राः कातीयानां प्रसिद्धाः ।

आश्वलायनगृह्ये—'अथ सायंप्रातः सिद्धस्य हविष्यस्य जुहुयात् अग्निहोत्रदेवताभ्यः सोमाय वनस्पतयेऽग्नीषोमाभ्यामिन्द्राग्निभ्यां द्यावापृथिवीभ्यां धन्वन्तरय इन्द्राय विश्वेभ्यो देवेभ्यो ब्रह्मणे स्वाहेति । सायंशब्दो रात्रिपरः, प्रातःशब्दोऽहःपरः । सिद्धस्य पक्वस्य अग्निहोत्रदेवताभ्य इति । सायमग्निः प्रातः सूर्यः, प्रजापतिरुभयत्र । सोमाय वनस्पतय इत्येकाहुतिः वनस्पतिशब्दस्य यौगिकत्वेन विशेष्यापेक्षत्वेनासमासंस्थसन्निहितसोमपदान्वयात् । यथा " त्वाष्ट्रं पात्नीवतमालभेत " इत्यत्र पात्नीवतशब्दस्य त्वाष्ट्रपदान्वयः। अग्निर्बृहस्पतिः सोमो वनस्पतिरित्यादौ वनस्पतेर्गुणत्वदर्शनाच्च विश्वेभ्यो देवेभ्य इत्यप्येकैवाहुतिः विश्वशब्दस्य सर्वनाम्नो बुद्धिस्थापेक्षत्वेन सन्निहितदेवशब्दान्वयात् । एवं दशाहुतयो भवन्ति । वृत्तिकृतो नारायणस्याप्ययमेवाशयः। इत्येष देवयज्ञः ।

भूतयज्ञमाह स एव—अथ बलिहरणमेताभ्यश्चैव देवताभ्योऽद्भ्य ओषधिवनस्पतिभ्यो गृहाय गृहदेवताभ्यो वास्तुदेवताभ्य इन्द्रायेन्द्रपुरुषेभ्यो यमाय यमपुरुषेभ्यो वरुणाय वरुणपुरुषेभ्यः सोमाय सोमपुरुषेभ्य इति प्रतिदिशं, ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्ये, विश्वेभ्यो देवेभ्यः सर्वेभ्यो भूते-

---

१ अन्नं व्याहृतिभिरिति क. पाठः । २ नरय क. पाठः । ३ थैकाहुतिरित्याहुः क. पाठः ।

भ्यो दिवाचारिभ्य इति दिवा, नक्तंचारिभ्य इति नक्तं, रक्षोभ्य इत्युत्तरतः। अथानन्तरमेताभ्यः पूर्वोक्ताभ्यो दशभ्यः। चकारो वक्ष्यमाणसमुच्चये।

उदगिन्द्राद्बलेरिन्द्रपुरुषेभ्यो बलिं हरेत्।

इति कारिकोक्तेः इन्द्रादिप्रधानदेवतोत्तरदेशेषु तत्पुरुषेभ्यो बलिः। पूर्वोक्तदशाहुतिदेवताकान्बलीन् प्राक्संस्थान् दत्त्वा किंचित्स्थलं त्यक्त्वा ऽद्भ्य इत्यादिभ्यो बलीन्दत्त्वाऽन्तराले प्रागादिषु इन्द्रादिभ्यस्तत्पुरुषेभ्यश्च दत्त्वा तन्मध्ये ब्रह्मणे तच्चतुर्दिक्षु ब्रह्मपुरुषादिभ्यो दद्यात्। प्रथमं दिवाचारिभ्यो बल्युक्तेर्वैश्वदेवः प्रातरारभ्यः इति वृत्तौ। इति भूतयज्ञः॥

पितृयज्ञमाह—स्वधा पितृभ्य इति प्राचीनावीती शेषं दक्षिणा निनयेत्। [1]शेषग्रहणादानन्तर्यं परप्रयुक्तं च द्रव्यं लभ्यते। दक्षिणा दक्षिणस्यां दिशि "दक्षिणादाच्"॥ इति पितृयज्ञः॥

इदमेव कर्मत्रयं वैश्वदेवशब्दवाच्यं [देवभूतयज्ञयोर्विश्वेदेवसंबन्धेन तत्प्रख्यानात् पितृयज्ञस्य तच्छेषप्रतिपादकत्वेन तदङ्गत्वाच्च।]

कारिका—गृहस्थो वैश्वदेवाख्यं कर्म प्रारभते दिवा।
तन्त्रं नास्त्यत्र भगवद्वृत्तिकारवचो यथा॥
औपासनाग्निमन्यं वा समिध्याथ हविर्भुजम्।
पर्यूह्य परिषिच्याग्निमलंकृत्य च पूर्ववत्॥
हविष्यं पक्वमादध्यादधिश्रित्यानले च तत्।
प्रोक्ष्योद्वास्य घृताभ्यक्तं हृदि सव्यं निधाय च॥
हुत्वा हस्तेन सूर्यायेत्यादिभिर्दशभिस्ततः।
प्रजापतिपदस्योक्तिर्वैश्वदेवे न तु स्मृतिः॥
पर्यूहनोक्षणे कुर्याद्देवयज्ञोऽयमीरितः।
एतैर्भुवि बलीन्दत्त्वा प्राक्संस्थानान्निरन्तरान्॥
मुक्त्वाऽन्तरालं प्राक्संस्थानद्भ्य इत्यादिभिर्हरेत्।
इहाऽपि भवति स्वाहाकारो न पितृयज्ञके॥
अद्भ्यो हृताद्बलेः प्रत्यगिन्द्रायेति बलिं हरेत्।
यमायेत्यन्तरालस्य हरेद्दक्षिणतो बलिम्॥
याम्याद्बलेरुदग्याम्यपुरुषेभ्यो बलिं हरेत्।
प्राग् ब्रह्मणो बलेर्हुत्वा वरुणायेति मन्त्रतः॥

१ कख' क. पाठः। २ क. नास्ति।

II-8

तस्मादुदक् तु वरुणपुरुषेभ्यो बलिं हरेत् ।
सोमायेत्यन्तरालस्य हरेदुत्तरतो बलिम् ॥
सौम्याद्बलेरुदक्सोमपुरुषेभ्यो बलिं हरेत् ।
जयन्तस्त्वाह स्वाहान्तैर्बलीन्दत्त्वा निरन्तरान् ॥
मुक्त्वाऽन्तरालमिन्द्रादिदिग्देवानां बलीन्हरेत् ।
इन्द्रादिबलितः पूर्वं प्राच्यां स्यात्पौरुषो बलिः ॥
अन्तराले बलीन्हृत्वा शिष्टैर्मन्त्रैरतः परम् ।
रक्षोभ्य इति सर्वस्माद्बलिमुत्तरतो हरेत् ॥
भूतयज्ञोऽयमुदितः प्राचीनावीत्यतः परम् ।
स्वधा पितृभ्य इत्युक्त्वा दक्षिणस्यां तु निर्वपेत् ॥ इति ।

अयं च नराकारः संपद्यते । चक्राकारमप्याह ।

शौनकः—चक्राकारेण यो विप्रः सदा भूतबलिं हरेत् ।
सर्वपापविनिर्मुक्तो विष्णुसायुज्यमाप्नुयात् ॥ इति ।

अथ गृहबलिः ।

शौनकः—देवयज्ञान्नशेषात्तु गृहद्वारादिषु क्षिपेत् ।
चण्डालपतितादिभ्यो भूतयज्ञान्नशेषतः ।
पितृयज्ञान्नशेषेण वायसेभ्यो बलिं हरेत् ॥ इति ।

गृह्यपरिशिष्टे—"अथास्य शेषेण गृहदेवतानां बलीन्द्वारे पितामहाय प्रकीले रुद्रायाऽथ गृहप्राच्यादिप्रतिदिशं सनवग्रहायेन्द्राय बलभद्राय यमविष्णुभ्यां स्कन्दवरुणाभ्यां सोमसूर्याभ्यामश्विभ्यां वसुभ्यो नक्षत्रेभ्योऽथ मध्ये वास्तोष्पतये ब्रह्मणे प्रागादिभित्तिमूलेषु सिद्ध्यै वृद्ध्यै श्रियै कीर्त्यै वरुणायोदधानेऽश्विभ्यां दृषदुपलयोर्द्यावापृथ्वीभ्यामुलूखलमुसलयोरथ निष्क्रम्य भूमावप आसिच्य श्वचाण्डालपतितभूतवायसेभ्योऽन्नं भूमौ विकिरेद्ये भूताः प्रचरन्ति दिवा बलिमिच्छन्तो वितुदस्य प्रेष्ठाः । तेभ्यो बलिं पुष्टिकामो ददामि मयि पुष्टिं पुष्टिपतिर्ददातु इति । रात्रौ चेन्नक्तं बलिमिति ब्रूयादथ प्रक्षालितपाणिपाद आचम्य "शान्ता पृथिवी शिवमन्तरिक्षम्" इति जप्त्वाऽन्यानि च स्वस्त्ययनानि । ततो मनुष्ययज्ञपूर्वकं भुञ्जीत ॥ इति ।

---

## अथ मनुष्ययज्ञः ।

मनुः— अतिथिभ्योऽन्नदानं तु नृयज्ञः स तु पञ्चमः । इति ।

मार्कण्डेयपुराणे—

आचम्य च ततः कुर्यात्प्राज्ञो द्वारावलोकनम् ।
मुहूर्तस्याष्टमं भागमुद्वीक्ष्यो ह्यतिथिर्भवेत् ॥
न मित्रमतिथिं कुर्यान्नैकग्रामनिवासिनम् ।
अज्ञातकुलनामानं तत्काले समुपस्थितम् ॥
बुभुक्षुमागतं श्रान्तं याचमानमकिंचनम् ।
ब्राह्मणं प्राहुरतिथिं संपूज्यः शक्तितो बुधैः ॥ इति ।

कौर्मे— हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः ।
दद्यादतिथये नित्यं बुध्येत परमेश्वरम् ॥ इति ।

अतिथिं परमेश्वरं भावयेदित्यर्थः ।

मनुः— ग्रासमात्रं भवेद्भिक्षा अग्रं ग्रासचतुष्टयम् ।
अग्रं चतुर्गुणीकृत्य हन्तकारो विधीयते ॥ इति ।

पराशरः—दद्याच्च भिक्षात्रितयं परिव्राड्ब्रह्मचारिणौ ।
इच्छया च ततो दद्याद्विभवे सत्यवारितम् ॥ इति ।

माधवीये पुराणे—

यत्फलं सोमयागेन प्राप्नोति धनवान् द्विजः ।
सम्यक्पञ्चमहायज्ञैर्दरिद्रस्तदवाप्नुयात् ॥ इति ।

व्यासः— पञ्चयज्ञांस्तु यो मोहान्न करोति गृहाश्रमी ।
तस्य नायं च न परो लोको भवति धर्मतः ॥ इति ।

---

## अथ कात्यायनीयो वैश्वदेवानुष्ठानप्रयोगः ।

पञ्चमहायज्ञनिमित्तं मातृपूजापूर्वकमाभ्युदयिकश्राद्धं कृत्वा वैश्वदेवार्थं पाकं विधाय समुद्धृत्याभिघार्य पश्चादग्नेः प्राङ्मुख उपविश्य दक्षिणं जान्वाच्य मणिकोदकेनाग्निं पर्युक्ष्यौदनमादाय ब्रह्मणे स्वाहा इदं ब्रह्मणे, प्रजापतये स्वाहा इदं प्रजापतये, गृह्याभ्यः स्वाहा इदं गृह्याभ्यः, कश्यपाय स्वाहा इदं कश्यपाय, अनुमतये स्वाहा इदमनुमतये, इति पञ्चाहुतीर्दत्त्वा मणिकसमीपे हुतशेषेणान्नेन पर्जन्याय नमः इदं पर्जन्याय, अद्भ्यो नम इदमद्भ्यः, पृथिव्यै नमः इदं पृथिव्यै इति प्राक्संस्थमुदक्संस्थं वा बलिं दत्त्वा दक्षिणोत्तरयोर्द्वारशाखयोर्यथाक्रमं धात्रे नमः इदं धात्रे, विधात्रे नमः इदं विधात्रे, इति बलिद्वयं दत्त्वा प्रागादिक्रमेण वायवे नमः इदं वायवे, इति प्रतिदिशं बलिचतुष्टयं दत्त्वा प्राच्यै दिशे नमः इदं प्राच्यै,

दक्षिणायै दिशे नमः इदं दक्षिणायै, प्रतीच्यै दिशे नमः इदं प्रतीच्यै, उदीच्यै दिशे नमः इदम् उदीच्यै, इति दिग्भ्यश्च बलिं दत्त्वा तदन्तराले ब्रह्मणे नमः इदं ब्रह्मणे, अन्तरिक्षाय नमः इदमन्तरिक्षाय, सूर्याय नमः इदं सूर्याय इति बलित्रयं दत्त्वा तदुत्तरतो विश्वेभ्यो देवेभ्यो नमः इदं विश्वेभ्यो देवेभ्यः, विश्वेभ्यो भूतेभ्यो नमः इदं विश्वेभ्यो भूतेभ्यः इति बलिद्वयं दत्त्वा तयोरप्युत्तरतः उषसे नम इदमुषसे, भूतानां पतये नम इदं भूतानां पतये, इति बलिद्वयं दत्त्वा ब्रह्मादिबलीनां दक्षिणतः प्राचीनावीती दक्षिणामुखः पितृभ्यः स्वधा नम इति मन्त्रेण पात्र्यवशिष्टान्नेनैकं बलिं दत्त्वा पात्रीं प्रक्षाल्य "यक्ष्मैतत्ते निर्णेजने नमः" इति निर्णेजनजलं वायव्यां दिश्युत्सृज्येदं यक्ष्मणे इत्युक्त्वा

ऐन्द्रवारुणवायव्याः सौम्या वै[1] नैरृतास्तथा ।
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयाऽर्पितम् ॥

इदं वायसेभ्यः ।

द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ ।
ताभ्यां पिण्डं प्रदास्यामि स्यातामेतावहिंसकौ ॥

इदं श्वभ्यः ।

देवा मनुष्याः पितरो वयांसि सिद्धाश्च यक्षोरगदैत्यसंघाः ।
प्रेताः पिशाचास्तरवः समस्ता ये चान्नमिच्छन्ति मयाद्य दत्तम् ॥

इदं देवादिभ्यः ।

पिपीलिकाः कीटपतङ्गिकाद्या बुभुक्षिताः कर्मनिबन्धबद्धाः ।
तृप्त्यर्थमन्नं हि मया प्रदत्तं तेषामिदं ते मुदिता भवन्तु ॥

इदं पिपीलिकादिभ्यः ।

इति काकादिबलीन्बहिर्दत्त्वा पादौ प्रक्षाल्याचम्यातिथिप्राप्तौ पादप्रक्षालनपूर्वकं गन्धमाल्यादिभिरभ्यर्च्यान्नं परिविष्य हन्त तेऽन्नमिदं मनुष्याय इति संकल्प्य दद्यात् । इति दिक् ।

॥ इति कातीयानां वैश्वदेवः ॥ इति पञ्चमहायज्ञाः ॥

## अथ भोजनम् ।

व्यासः—पञ्चार्द्रो भोजनं कुर्यात्प्राङ्मुखो मौनमास्थितः ।
हस्तौ पादौ तथैवास्यमेषु पञ्चार्द्रता मता ॥ इति ।

१ ये क. पाठः । २ पशवो ख. पाठः ।

आश्वमेधिके—आर्द्रपादस्तु भुञ्जीत प्राङ्मुखश्चासने शुचौ ।
पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः ॥ इति ।
बौधायनः—उपलिप्ते समे स्थाने शुचौ श्लक्ष्णासनान्विते ।
चतुरस्रं त्रिकोणं वा वर्तुलं चार्धचन्द्रकम् ॥
कर्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम् ॥
पैठीनसिः—सौवर्णे राजते ताम्रे पद्मपत्रपलाशयोः ।
भाजने भोजनं कुर्वन्त्रिरात्रफलमश्नुते ॥
एक एव तु यो भुङ्क्ते विमले कांस्यभाजने ।
चत्वारि तस्य वर्धन्ते आयुः प्रज्ञा यशो बलम् ॥ इति ।
पद्मपलाशपत्रग्रहणं गृहस्थभिन्नपरम् ।
ताम्रपात्रे न भुञ्जीत भिन्नकांस्ये मलाविले ॥
पलाशपद्मपत्रेषु गृही भुक्त्वैन्दवं चरेत् ।
ब्रह्मचारियतीनां तु चान्द्रायणफलं भवेत् ॥

इति वृद्धमनुव्यासोक्तेरिति मदनादयः । पलाशो वल्लीपलाश इति स्मृत्यर्थसारे । कांस्यपात्रं गृहिमात्रपरम् ।
ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम् ।
यती च ब्रह्मचारी च विधवा च विवर्जयेत् ॥

इति प्रचेतस उक्तेः । पात्रं प्राणाहुतिग्रहणोत्तरं यन्त्रादौ स्थाप्यम् ।
न्यस्तपात्रस्तु भुञ्जीत पञ्च ग्रासान्महामुने ।
शेषमुद्धृत्य भोक्तव्यं पित्रर्थे तु न चोद्धरेत् ॥

इति व्यासोक्तेः । न्यस्तपात्रः भूमिन्यस्तपात्रः । उद्धृत्य यन्त्रादौ स्थाप्य । पित्रर्थे श्राद्धे भूमितो नोद्धरेदित्यर्थ इति मदनादयः ।

तथाच ब्रह्मपुराणे—
पित्र्ये कर्मणि भुञ्जानो भूमौ पात्रं न चालयेत् ॥ इति ।
[ तत्रैव—अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः ।
अस्माकं नित्यमस्त्वेतदिति भक्त्याथ वन्दयेत् ॥ इति । ]

गोभिलः—'अथातः प्राणाहुतिकल्पः व्याहृतिभिर्गायत्र्याभिमन्त्र्य ऋतं त्वा सत्येन परिषिञ्चामि इति सायं । सत्यं त्वर्तेन परिषिञ्चामि, इति प्रातः' इत्यादि । तदनन्तरं कृत्यमुक्तं भविष्यत्पुराणे—
भोजनात्किंचिदन्नाग्रं धर्मराजाय वै बलिम् ।

---

भुञ्जीयात् क. पाठः । १ क. नास्ति ।

दत्त्वाथ चित्रगुप्ताय प्रेतेभ्यश्चेदमुच्चरेत् ॥
यत्र क्वचन संस्थानां क्षुत्तृष्णोपहतात्मनाम् ।
प्रेतानां तृप्तयेऽक्षय्यमिदमस्तु यथासुखम् ॥ इति ।

तदनन्तरं कृत्यमाह याज्ञवल्क्यः—
अपोशनेनोपरिष्टादधस्तादश्नता तथा ।
अनग्नममृतं चैव कार्यमन्नं द्विजातिना[1] ॥ इति ।

कौर्मे— अमृतोपस्तरणमसीत्यपोशानक्रियां चरेत् ॥ इति ।

शौनकः—स्वाहान्ताः प्रणवाद्याश्च नाम्ना मन्त्राश्च वायवः ।
तर्जनीमध्यमाङ्गुष्ठलग्ना प्राणाहुतिर्भवेत् ॥
मध्यमानामिकाङ्गुष्ठैरपाने जुहुयात्ततः ।
कनिष्ठानामिकाङ्गुष्ठैर्व्याने च जुहुयात्ततः ॥
तर्जनीं तु बहिः कृत्वा उदाने जुहुयाद्धविः ।
समाने सर्वहस्तेन स(मु?मा)दायाहुतिर्भवेत् ॥
जिह्वयैव ग्रसेदन्नं दशनेन न संस्पृशेत् ॥ इति ।

जिह्वाग्रसने च विशेष उक्त आश्वमेधिके—
यथा रसं न जानाति जिह्वा प्राणाहुतौ नृप ।
तथा समाहितः कुर्यात्प्राणाहुतिमतन्द्रितः ॥ इति ।

विष्णुपुराणे—
अश्नीयात्तन्मना भूत्वा भुञ्जीतमधुरं रसम् ।
लवणाम्लौ तथा मध्ये कटुतिक्तादिकांस्ततः ॥
प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये च कठिनाशनः ।
अन्ते पुनर्द्रवाशी तु बलारोग्यैर्न मुञ्चति ॥

[[2]आपस्तम्बः]—
अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः ।
द्वात्रिंशत्तु गृहस्थस्य ह्यमितं ब्रह्मचारिणः ॥ इति ।

वृद्धमनुः—[[3]पीत्वापोशानमश्नीयात्पात्रदत्तमगर्हितम् ।
भार्याभृतकदासेभ्य उच्छिष्टं शेषयेत्ततः ॥ इति ।

पुलस्त्यः—]भोजनं तु न निःशेषं कुर्यात्प्राज्ञः कथंचन ।
अन्यत्र दधिसक्त्वाज्यपललक्षीरमध्वपः ॥ इति ।

---

१ द्विजातये क. पाठः । २ क. नास्ति । ३ क. नास्ति ।

पललं तिलमिश्र ओदनः ।

मनुः—सायंप्रातर्द्विजातीनामशनं श्रुतिचोदितम् ।
नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ॥ इति ।

अत्र पूर्वार्धे कालद्वयविशिष्टभोजनक्रियाया एव नियमविधेः । षोडशर्तुर्निशाः स्त्रीणां तस्मिन्युग्मासु संविशेत् ॥ इतिवत् ।

अतः सत्यां बुभुक्षायां सति चान्ने भोजनमकुर्वन् प्रत्यवैतीति विज्ञानेश्वरः । सायंप्रातरेवेति कालान्तरपरिसंख्येति हरदत्तः । इयं च तदुपपत्तिः । नेयं त्रिदोषा कालान्तरस्य विध्यप्राप्तत्वेन शास्त्रप्राप्तबाधरूपदोषाभावात् । पञ्च पञ्चनखा भक्ष्या इत्यत्रेव शशादिभिन्नश्वादिपञ्चनखभक्षणस्य रागप्राप्तत्वेन तद्बाधेऽपि दोषाभावः । स्वार्थहानिपरार्थकल्पनादोषद्वयवती लक्षणा तु नान्तरेत्याद्येकवाक्यतानुरोधेनाङ्गीकार्या । सोढा च 'जातपुत्रः कृष्णकेशोऽग्निमादधीत' इत्यत्र वयोविशेषस्य 'अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि' इत्यत्र च संधिदेशस्य लक्षणा वाक्यभेदभिया तत्र तत्र तन्त्रे । सायंप्रातर्भुञ्जीतैवेति नियमविधौ हि मध्येऽपि भोजनस्य प्राप्तत्वेन तन्निषेधार्थं नान्तरेत्यादि पृथग्वाक्यं स्यादिति । अहं तु ब्रुवे—नान्तरेत्यादिकमेव विधिप्रत्यययुक्तत्वादन्तरालकालनिषेधकम् । पूर्वार्धे त्वर्थवादोऽन्त्यपादश्च । तद्गतावेव सायंप्रातःशब्दावन्तराशब्दार्थनिरूपकौ 'संदिग्धेषु वाक्यशेषात्' इतिन्यायात् 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति' इत्यत्रेवान्तराशब्दार्थस्य पुरोडाशाविति । एवं च सायंप्रातःपदयो रात्रिमध्याह्नलक्षणाऽपि युक्ता ।

उपास्य पश्चिमां संध्यां हुत्वाग्निं समुपास्य च ।
भृत्यैः परिवृतो भुक्त्वा नातितृप्तोऽथ संविशेत् ॥

'मध्यंदिनो मनुष्याणां,' 'मध्यंदिने मनुष्या अशनमभ्यवहरन्ति' इत्यादिवाक्यप्राप्तानुवादत्वात् । पूर्वमतद्वये तु विधौ लक्षणातिक्लिष्टेतिं दिक् ।

भोजने च पञ्चग्रासभक्षणान्तं मौननियमः ततस्त्वनियमः ।
पञ्चग्रासान्महामौनं प्राणाद्याप्यायनं महत् ॥

इति वृद्धमनूक्तेः । पुराणे—
स्नास्यतो वरुणः शक्तिं जुह्वतोऽग्निः श्रियं हरेत् ।
भुञ्जतो मृत्युरायुष्यं तस्मान्मौनं त्रिषु स्मृतम् ॥ इति ।

१ ग्नींस्तानु° क. पाठः ।

अत्र विशेषः पृथ्वीचन्द्रोदये स्मृतिरत्नावल्याम्—

यवीयान्सपिता यश्च भुक्त्वा श्राद्धिकभोजनम् ।
प्राणाग्निहोत्रादन्यत्र नासौ मौनं समाचरेत् ॥ इति ।
मौनी वाप्यथवाऽमौनी प्रहृष्टः संयतेन्द्रियः ।
भुञ्जीत विधिवद्विप्रो न चोच्छिष्टानि वापयेत् ॥ इति ।

न प्रकिरेदित्यर्थः ।

पैठीनसिः—लवणं व्यञ्जनं चैव घृतं तैलं तथैव च ।
लेह्यं पेयं च विविधं हस्तदत्तं न भक्षयेत् ॥ इति ।

स एव—दर्व्या देयं घृतान्नं तु समस्तव्यञ्जनानि तु ।

तथा—उदकं यच्च पकान्नं यो दर्व्या दातुमिच्छति ।
स भ्रूणहा सुरापश्च स स्तेनो गुरुतल्पगः ॥ इति ।

शातातपः—हस्तदत्तानि चान्नानि प्रत्यक्षलवणं तथा ।
मृत्तिकाभक्षणं चैव गोमांसाशनवत्स्मृतम् ॥ इति ।

आश्वमेधिके—उदक्यामपि चण्डालं श्वानं कुक्कुटमेव च ।
भुञ्जानो नैव पश्येत्तु तदन्नं तु परित्यजेत् ॥
केशकीटावपन्नं च मुखमारुतवीजितम् ।
अन्नं तद्राक्षसं विद्यात्तस्मात्तत्परिवर्जयेत् ॥

शातातपः—अभ्यासनोपविष्टश्च यो भुङ्क्ते प्रथमं द्विजः ।
बहूनां पश्यतां सोऽज्ञः पङ्क्त्या हरति किल्बिषम् ॥

गोभिलः—एकपङ्क्त्युपविष्टानां विप्राणां सहभोजने ।
यद्येकोऽपि त्यजेत्पात्रं नाश्नीयुरितरेऽप्यनु ॥
मोहात्तु भुङ्क्ते यस्तत्र तप्तसांतपनं चरेत् ।
भुञ्जानेषु तु विप्रेषु यस्तु पात्रं परित्यजेत् ।
भोजने विघ्नकर्ताऽसौ ब्रह्महाऽपि तथोच्यते ॥ इति ।

इदं च गुरुभिन्ने आचान्ते उत्थिते वा बोध्यम् । तदाहोशनाः—अगुरुभिराचमनोत्थानं चेति पङ्क्तिस्थानां भोजननिषेधकप्रयोजकमिति शेषः । अयं च निषेधो युगान्तरपरः । 'उच्छिष्टस्याऽपि वर्जनम्' इति कलिनिषिद्धेषु पाठादिति केचित् । तन्न, एकस्मिन्नुत्थितेऽपीतरपात्रस्थान्नस्योच्छिष्टत्वाभावेन तद्वर्जनाप्रसक्तेः । वस्तुतस्तु उच्छिष्टस्यापवर्जनमिति पाठः । तदर्थस्तु अपवर्जनं दानम् । तत्तु " ब्राह्मणायोदङ्ङुच्छिष्टं

प्रयच्छेत्" इति मधुपर्के प्रसक्तं कलौ निषिध्यते । निरणायि चेदं भ्रातृचरणैः कलिवर्ज्यविवेके ।

बृहस्पतिः—न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन ।
न पादौ न शिरो वस्तिं न पदा भाजनं स्पृशेत् ॥ इति ।

आदित्यपुराणे—
नोच्छिष्टो ग्राहयेदाज्यं जग्ध्वा शिष्टं न संत्यजेत् ।
शूद्रभुक्तावशिष्टं तु नाद्याद्भाण्डस्थितं त्वपि ॥

ब्रह्मपुराणे—
यस्तु पाणितले भुङ्क्ते यच्च फूत्कारसंयुतम् ।
प्रसृताङ्गुलिभिर्यश्च तस्य गोमांसवच्च तत् ॥
नाजीर्णे भोजनं कुर्यात्कुर्यान्नातिबुभुक्षितः ।
नार्द्रवासा नार्द्रशिरा देवालयगतोऽथवा ॥
न प्रसारितपादस्तु पादरोपितपाणिमान् ।
न वेष्टितशिराश्चापि नोत्सङ्गकृतभाजनः ॥
ग्रासशेषं न चाश्नीयात्पीतशेषं पिबेन्न च ।
शाकमूलफलेक्षूणां दन्तच्छेदैर्न भक्षयेत् ॥
बहूनां भुञ्जतां मध्ये नाश्नीयाच्च त्वरान्वितः ।
वृथा न विकिरेदन्नं नोच्छिष्टश्च क्वचिद्व्रजेत् ॥

वृद्धमनुः—न पिबेन्न च भुञ्जीत द्विजः सव्येन पाणिना ।
नैकहस्तेन च जलं शूद्रेणावर्जितं पिबेत् ॥
पिबतो यत्पतेत्तोयं भाजने मुखनिःसृतम् ।
अभोज्यं तद्भवेदन्नं भोक्ता भुञ्जीत किल्बिषम् ॥
पीतावशेषितं तोयं ब्राह्मणो न पुनः पिबेत् ।
पिबेद्यदि हि तत्तोयं द्विजश्चान्द्रायणं चरेत् ॥ इति ।

कौर्मे— नार्धरात्रे न मध्याह्ने नाजीर्णे नार्द्रवस्त्रधृक् ।
न भिन्नभाजने चैव न भूम्यां न च पाणिषु ॥
नोच्छिष्टो घृतमादद्यान्न मूर्धानं स्पृशन्नपि ।
न ब्रह्म कीर्तयन्वापि न निःशेषं न भार्यया ।
नान्धकारे न चाकाशे न च देवालयादिषु ॥ इति ।

भार्ययेति सहयोगे तृतीया ।

शातातपः—उद्धृत्य वामहस्तेन यत्तोयं पिबति द्विजः ।

सुरापानेन तत्तुल्यं मनुराह प्रजापतिः ॥

अत्रिः— तोयं पाणिनखस्पृष्टं ब्राह्मणो न पिबेत्कचित्।
सुरापानेन तत्तुल्यमित्येवं मनुरब्रवीत् ॥

याज्ञवल्क्यः—

संधिन्यनिर्दशावत्सागोपयः परिवर्जयेत्।
औष्ट्रमेकशफं स्त्रैणमारण्यकमथाविकम् ॥ इति।

औष्ट्रमिति विकारमात्रे तद्धितः तेनोष्ट्रसंबन्धि मांसाद्यपि [1]निषिद्धम्। गौतमः—'गोश्च क्षीरमनिर्दशायाः सूतकेऽजामहिष्योश्च नित्यमाविकमपेयमौष्ट्रमैकशफं च स्यन्दिनीयमसूसंधिनीनां विवत्सायाश्च' इति। अत्र विवत्साया गोरेव वर्ज्यं न महिष्यादेरपि गोत्वसमवायिवयोविशेषस्यैव वत्सपदशक्यत्वेन महिष्यादेरपत्ये तदप्रसक्तेः। एतेन 'विवत्सागवादिः' इति हरदत्तीयमादिपरं परास्तम्। स्यन्दिनी प्रस्नवत्स्तनी। यमसूर्यमलजननी। संधिनी सगर्भा, सायं प्रातर्वातिक्रम्य या दुग्धे सा वा योजितान्यवत्सा वा। अन्त्यव्याख्याने विवत्सापदं पुनरुक्तमिति केचित् तन्न, तदर्थयोः परस्परव्यभिचारात्। विज्ञानेश्वरोऽप्येवमेवाभिप्रैति।

श्लोकगौतमः—

कलहभ्रमणग्रावचक्रस्योलूखलस्य च।
एतेषां निनदो यावत्तावत्कालमभोजनम् ॥

कात्यायनः—

चण्डालपतितोदक्यावाक्यं श्रुत्वा द्विजोत्तमः।
भुञ्जीत ग्रासमात्रं तु दिनमेकमभोजनम् ॥

[ बृहस्पतिः]—

अप्येकपङ्क्त्यां नाश्नीयाद्ब्राह्मणैः स्वजनैरपि।
को हि जानाति किं कस्य प्रच्छन्नं पातकं भवेत् ॥
एकपङ्क्त्युपविष्टानां दुष्कृतं यद्दुरात्मनाम्।
सर्वेषां तत्समं तावद्यावत्पङ्क्तिर्न भिद्यते ॥
अग्निना भस्मना चैव स्तम्भेन सलिलेन च।
द्वारेणैव च मार्गेण पङ्क्तिभेदो बुधैः स्मृतः ॥ इति।

पराशरः—यो वेष्टितशिरा भुङ्क्ते यो भुङ्क्ते दक्षिणामुखः।
वामपादकरः स्थित्वा तद्वै रक्षांसि भुञ्जते ॥ इति।

---

१ वर्ज्यम् क. पाठः। २ क. नास्ति।

वामपादे करो यस्येत्यर्थः । स्थित्वाऽनुपविश्य ।

मनुः—आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः ॥ इति ।

दक्षिणामुखभोजननिषेधस्तु नित्यभोजनपरः ।

## अथ भोजनोत्तराङ्गानि ।

देवलः—भुक्तोच्छिष्टं समादाय सर्वस्मात्किंचिदाचमन् ।
उच्छिष्टभागधेयेभ्यः सोदकं निर्वपेद्भुवि ॥ इति ।

तत्र मन्त्रः—

रौरवेऽपुण्यनिलये पद्मार्बुदनिवासिनाम् ।
उच्छिष्टोदकमिच्छूनामक्षय्यमुपतिष्ठताम् ॥ इति ।

व्यासः—'ततस्तृप्तः सन्नमृतापिधानमसीत्यपः प्राश्य तस्माद्देशान्मनागपसृत्य विधिवदाचामेत्' इति ।

श्लोकगौतमः—

गण्डूषस्याथ समये तर्जन्या वक्त्रचालनम् ।
कुर्वीत यदि मूढात्मा रौरवे नरके पतेत् ॥ इति ।

तथा— तस्मिन्नाचमनं कुर्याद्यत्र भाण्डेऽथ भुक्तवान् ।
यद्युत्तिष्ठति नाचान्तो भुक्त्वानासनात्ततः ।
स्नानं सद्यः प्रकुर्वीत सोऽन्यथाऽप्रयतो भवेत् ॥ इति ।

व्यासः—हस्तं प्रक्षाल्य गण्डूषं यः पिबेदविचक्षणः ।
स देवांश्च पितॄंश्चैव ह्यात्मानं चैव घातयेत् ॥ इति ।

कौर्मे— आचान्तः पुनराचामेदायंगौरितिमन्त्रतः ।
द्रुपदां वा त्रिरावृत्य सर्वपापप्रणाशिनीम् ॥
प्राणानां ग्रन्थिरसीत्यालभेद्धृदयं ततः ।
आचम्याङ्गुष्ठमानीय पादाङ्गुष्ठे तु दक्षिणे ॥
निःस्रावयेद्धस्तजलमूर्ध्वहस्तः समाहितः ।
हुतानुमन्त्रणं कुर्यात्श्रद्धायामितिमन्त्रतः ॥
अष्टाक्षरेण स्वात्मानं योजयेत् ब्रह्मणेति हि ।
सर्वेषामेव यागानामात्मयागः परः स्मृतः ।
योऽनेन विधिना कुर्यात्स याति ब्रह्मणः पदम् ॥ इति ।

विष्णुपुराणे—विष्णुरत्ता तथैवान्नं परिणामश्च वै तथा ।

सत्येन तेन वै भुक्तं जीर्यत्वन्नमिदं तथा ॥
इत्युच्चार्य स्वहस्तेन परिमृज्यात्तथोदरम्।
अनायासप्रदायीनि कुर्यात्कर्माण्यतन्द्रितः ॥ इति।

अत्रिः— आचान्तोऽप्यशुचिस्तावद्यावत्पात्रमनुद्धृतम्।
उद्धृतेऽप्यशुचिस्तावद्यावन्नोन्मृज्यते मही ॥
भूमावपि हि लिप्तायां तावत्स्यादशुचिः पुमान्।
आसनादुत्थितस्तस्माद्यावन्न स्पृशते महीम् ॥ इति।

मार्कण्डेयः—
भूयोऽप्याचम्य कर्तव्यं ततस्ताम्बूलभक्षणम्। इति।

वसिष्ठः—सुपूगं च सुपत्रं च चूर्णेन च समन्वितम्।
अदत्त्वा द्विजदेवेभ्यस्ताम्बूलं वर्जयेद्बुधः ॥
एकपूगं सुखारोग्यं द्विपूगं निष्फलं भवेत्।
अतिश्रेष्ठं त्रिपूगं च ह्यधिकं नैव दुष्यति ॥
पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसंभवः।
जीर्णपर्णं क्षिपेदायुः शिरा बुद्धिविनाशिनी ॥
तस्मादग्रं च मूलं च शिरां चैव विशेषतः।
जीर्णपर्णं[1] वर्जयित्वा ताम्बूलं खादयेद्बुधः ॥ इति रविः।

## अथ भोजनोत्तरं कृत्यम्।

दक्षः— इतिहासपुराणाद्यैः षष्ठसप्तमकौ नयेत्।
अष्टमे लोकयात्रा तु बहिःसंध्या ततः पुनः ॥

यमः— रवेरस्तमयात्पूर्वं घटिकैका यदा भवेत्।
सायंसंध्यामुपास्याथ कुर्याद्धोमं च पूर्ववत् ॥

दीपकालः संग्रहे—
रवेरस्तं समारभ्य यावत्सूर्योदयो भवेत्।
यस्य तिष्ठेद्गृहे दीपस्तस्य नास्ति दरिद्रता ॥
आयुर्दः प्राङ्मुखो दीपो धनदः स्यादुदङ्मुखः।
प्रत्यङ्मुखो दुःखदोऽसौ हानिदो दक्षिणामुखः ॥

संध्यावन्दनं पूर्वमुक्तं तत्र विशेषमाह।

व्यासः— जपेद्वारुणमन्त्रांस्तु इमंमेवरुणादिकान्।

१ चूर्णपर्णं क. पाठः।

चतुर्मन्त्रान्विशेषज्ञः संध्याफलमवाप्नुयात् ॥

संध्यावन्दनाकरणे जमदग्निः—

एकाहं चाप्यतिक्रम्य संध्यावन्दनकर्म च ।
अहोरात्रोषितो भूत्वा गायत्र्याश्चायुतं जपेत् ॥
द्विरात्रे द्विगुणं प्रोक्तं त्रिरात्रे त्रिगुणं भवेत् ।
त्रिरात्रात्परतश्चेत्स्याच्छूद्र एव न संशयः ॥

कालातिक्रमे पारिजाते गौतमः—

संध्याकाले त्वतिक्रान्ते स्नात्वाऽऽचम्य यथाविधि ।
जपेदष्टशतं देवीं ततः संध्यां समाचरेत् ॥ इति ।

वसिष्ठस्तु—

कालातिक्रमणे चैव त्रिसंध्यमपि सर्वदा ।
चतुर्थार्घ्यं प्रकुर्वीत भानोर्व्याहृतिसंपुटम् ॥

यमस्तु— प्राणायामत्रयं प्रातः संगवे त्रिगुणं चरेत् ।
मध्याह्ने त्रिगुणं प्रोक्तमपराह्णे चतुर्गुणम् ।
सायाह्ने पञ्चगुणकं संध्यातिक्रमणे भवेत् ॥
यदा "दीध्येति" मन्त्रं वै सप्तवारं जपेद्यदि ।
अकाले कुर्वतः कर्म काले काले कृतानि तु ॥

भवन्तीति शेषः । श्राद्धभोजने तु गर्गः—

दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुक् द्विजः ।
ततः संध्यामुपासीत शुद्ध्येत्तु तदनन्तरम् ॥

इदं तु संध्याधिकारार्थं न तु श्राद्धभोजनप्रायश्चित्तमिति नृसिंहः । प्रायश्चित्तमेवेत्यन्ये, तत्तु गुरुप्रायश्चित्तान्तराशक्ताविति ।

## अथ सायंहोमकालः ।

कात्यायनः—

सूर्येऽस्तशैलं संप्राप्ते षड्भिः षड्भिरिहाङ्गुलैः ।
प्रादुष्करणमग्नीनां प्रातर्भासां च दर्शनात् ॥

तथा — यावत्सम्यङ् न भाव्यन्ते नभस्युक्षाणि सर्वतः ।
न च लोहितमायाति तावत्सायं च हूयते ॥ इति ।

---

१ °त्र्या वाऽयु° क. पाठः ।

## अथ स्वापः।

गार्ग्यः— शुचिदेशं विविक्तं तु गोमयेनोपलेपयेत्।
वैदिकैर्गारुडैर्मन्त्रैरभिमन्त्र्य स्वपेत्ततः ॥
मङ्गल्यं पूर्णकुम्भं च शिरःस्थाने निधापयेत्।
आधौतशुष्कपादस्तु स्वाचान्तः शयने शुचौ ॥
अभीष्टदेवतां स्मृत्वा संविशेन्मङ्गलध्वनौ।
रात्रिसूक्तं जपेद्रात्रौ रात्रिक्षामो[1] भवेन्नरः ॥

[ क्षामः शान्तः। ]

तथा— पूर्वरात्रे व्यतीते तु स गच्छेद्रतिमन्दिरम्।
पादौ प्रक्षालयेत्पूर्वं पश्चाच्छय्यां समाविशेत् ॥
धौतवस्त्रं च ताम्बूलं संयोगे च शुभावहम् ॥

---

## अथ स्त्रीकृत्यम्।

भर्तुः पादौ नमस्कृत्य पश्चाच्छय्यां समाविशेत्।

---

## अथ रतिः।

संस्मृत्य प[2]रमात्मानं पत्नीजङ्घे प्रसारयेत्।
योनिं स्पृष्ट्वा जपेत्सूक्तं "विष्णुर्योनिं" प्रजापतेः।
रेतः सिञ्चेत्ततो योन्यां तस्माद्गर्भं बिभर्ति सा ॥ इति।

याज्ञवल्क्यः—षोडशर्तुर्निशाः स्त्रीणां तस्मिन्युग्मासु संविशेत्।
ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रस्तु[3] वर्जयेत्।
यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन् ॥ इति।

कौर्मे— ऋतुकालाभिगामित्वं स्वदारेषु रतान्मनः।
पर्ववर्ज्यं गृहस्थस्य ब्रह्मचर्यमुदाहृतम् ॥ इति।

एवंप्रकारेण गच्छतः श्राद्धादौ न ब्रह्मचर्यक्षतिदोष इति मिताक्षरायाम्। पञ्चदशदिनपर्यन्तं गमनाभावेऽन्त्यदिने च श्राद्धप्रसक्तौ तद्दिने गच्छतो दोषाभावपरमिति हेमाद्रिः। प्रमाणं त्वत्र चिन्त्यम्।

मनुः— तासामाद्याश्चतस्रस्तु निन्दितैकादशी तथा।
त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः ॥ इति।

तथा— अष्टम्यां च चतुर्दश्यां दिवा पर्वणि मैथुनम्।

---

१ क. नास्ति। २ च रमानाथं क. पाठः। ३ च क. पाठः।

कृत्वा सचैलं स्नात्वा तु वारुणीभिश्च मार्जयेत् ॥

मनुः— अमावास्याष्टमी चैव पौर्णमासी चतुर्दशी ।
ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः ॥ इति ।

तथा— स्त्रीणां तु प्रेक्षणात्स्पर्शाद्धास्यश्रृङ्गारभाषणात् ।
स्पन्दते ब्रह्मचर्यं च न दारेष्वृतुसंगमात् ॥ इति ।

तथा— ऋतौ तु गर्भं शङ्कित्वा स्नानं मैथुनिनः स्मृतम् ।
अनृतौ तु यदा गच्छेच्छौचं मूत्रपुरीषवत् ॥ इति ।

विष्णुः— कृतपादादिशौचस्तु भुक्त्वा सायं ततो गृही ।
गच्छेच्छय्यामस्फुटितामपि दारुमयीं नृप ॥ इति ।

गच्छेच्छय्यां शयनार्थमित्यर्थः । शयने विधिमाह हारीतः—'सुप्रक्षालितचरणः सर्वतो रक्षां कृत्वोदकपूर्णघटादिमङ्गलोपेत आत्माभिरुचितामनुपहताम् "सूत्रामाण"मिति पठन् शय्यामधिष्ठाय रात्रिसूक्तं जप्त्वा विष्णुं नमस्कृत्य 'सर्पापसर्प भद्रं ते' इत्येतत् श्लोकद्वयं जप्त्वेष्टदेवतास्मरणं कृत्वा समाधिमास्थायान्यांश्च वैदिकान्मन्त्रान्सावित्रीं जप्त्वा मङ्गलं शुचि शङ्खं च शृण्वन् दक्षिणाशिराः स्वपेत्' इति ।

विष्णुपुराणे—

रात्रिसूक्तं जपेत्स्मृत्वा देवांश्च सुखशायिनः ।
नमस्कृत्वाऽव्ययं विष्णुं समाधिस्थः स्वपेन्निशि ॥ इति ।

सुखशायिनो देवा गोभिलेन प्रदर्शिताः—

अगस्तिर्माधवश्चैव मुचुकुन्दो महामुनिः ।
कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः ॥ इति ।

दक्षिणशिरा इति प्रदर्शनार्थम् । तथा विष्णुपुराणे—

प्राच्यां दिशि शिरः शस्तं याम्यायामथवा नृप ।
सदैव स्वपतः पुंसो विपरीतं तु रोगदम् ॥ इति ।

हारीतोऽपि—'न तिर्यगुदकप्रत्यक्शिराः कोणशिराः पश्चिमशिरा उत्तरशिराश्च' इति । दिग्विशेषेण फलविशेष उक्तो मार्कण्डेये—

प्राक्शिरःशयने विद्याद्धनमायुश्च दक्षिणे ।
पश्चिमे प्रबला चिन्ता हानिमृत्युरथोत्तरे ॥

स्थलविशेषे दिग्विशेषमाह गार्ग्यः—

स्वगृहे प्राक्शिराः शेते श्वाशुर्ये दक्षिणाशिराः ।

प्रत्यक्शिराः प्रवासे तु न कदाचिदुदक्शिराः ॥ इति ।

तथा— यानिकानि च पुष्पाणि यत्किंचिदनुलेपनम् ।
अलक्ष्मीपरिहारार्थं नित्यं कुरु युधिष्ठिर ॥

शयने वर्ज्यस्थानान्याह मार्कण्डेयः—

शून्यालये स्मशाने च एकवृक्षे चतुष्पथे ।
महादेवालये वापि मातृवेश्मनि न स्वपेत् ॥
न यक्षनागायतने स्कन्दस्यायतने तथा ।
कुलच्छायासु च तथा शर्करालोष्टपांसुषु ॥
न स्वपेच्च तथा दर्भे विना दीक्षां कथंचन ।
धान्यगोधनविप्राणां गुरूणां च तथोपरि ॥
नाकाशे सर्वतः शून्ये न च चैत्यद्रुमे तथा ॥ इति ।

निषिद्धशय्योक्ता विष्णुपुराणे—

न विशालां न वा भग्नां नासमां मलिनां तथा ।
न च दन्तमयीं शय्यामधितिष्ठेदनास्तृताम् ॥

न तु जन्तुमयीमित्यपि क्वचित्पाठः । दन्तमयीं मृतहस्तीदन्तमयीमित्यर्थः ।

तथाच तत्रैव—

मृतदन्तमये विद्युद्दग्धे दर्भे पलाशजे ।
न शयीत नरो धान्ये शयने पञ्चदारुजे ॥
पञ्चदारूणि चोक्तानि चूतजम्बूद्रुमास्तथा ।
अश्मपीठोत्थिताश्चैव घटसिक्ततरूस्तथा ॥
करिभग्नकृते चैव न शयीत क्वचिन्नरः ॥ इति ।

स्वापकालमाह दक्षः—

प्रदोषपश्चिमौ यामौ वेदाभ्यासे न योजयेत् ।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ॥ इति ।

तथा— निद्रासमयमासाद्य ताम्बूलं वदनात्त्यजेत् ।
पर्यङ्कात्प्रमदां भालात्पुण्ड्रं पुष्पाणि मस्तकात् ॥

॥ इति शयनविधिः ॥

यदेतदुक्तमाह्निकमेतदकरणे प्रत्यवाय उक्तः कौर्मे—

इत्येतदखिलं प्रोक्तमहन्यहनि वै द्विजाः ।

---

१ वगृहे ख. पाठः । १ च क. पाठः ।

ब्राह्मणानां कृत्यजातमपवर्गफलप्रदम् ॥
नास्तिक्यादथवाऽऽलस्याद्ब्राह्मणो न करोति यः ।
स याति नरकान्घोरान्काकयोनौ च जायते ॥
नान्यो विमुक्तये पन्था मुक्त्वाऽऽश्रमविधिं स्वकम् ।
तस्मात्कर्माणि कुर्वीत तुष्टये परमेष्ठिनः ॥ इति ।

---

## स्वप्नफलानि ।

अथ रात्रौ स्वप्नफलनिर्णयः । तत्रादौ स्वप्नदर्शनावस्थामाह वैद्यः —

सर्वेन्द्रियव्युपरतौ मनोऽनुपरतं यदा ।
विषयेभ्यस्तदा स्वप्नं नानारूपं प्रपश्यति ॥

स च स्वप्नो द्विविधः, इष्टफलोऽनिष्टफलश्चेति । तत्र सामान्यत इष्टफलो यथा—

नदीसमुद्रतरणमाकाशगमनं तथा ।
भास्करोदयनं चैव प्रज्वलन्तं हुताशनम् ॥
ग्रहनक्षत्रताराणां चन्द्रमण्डलदर्शनम् ।
हर्म्यस्यारोहणं चैव प्रासादशिरसोऽपि वा ।
एवमादीनि संदृश्य नरः सिद्धिमवाप्नुयात् ॥
स्वप्ने तु मदिरापानं वसामांसस्य भक्षणम् ।
क्रिमिविष्ठानुलेपं च रुधिरेणाभिषेचनम् ॥
भोजनं दधिभक्तस्य श्वेतवस्त्रानुलेपनम् ।
रत्नान्याभरणादीनि स्वप्ने दृष्ट्वा प्रसिध्यति ॥
देवविप्रध्वजच्छत्रतुषपङ्कजपार्थिवान् ।
शुक्लपुष्पाम्बरधरान्प्रशस्ताभरणाङ्गनाः ॥
वृषेभपर्वतक्षीरिफलिवृक्षाधिरोहणम् ।
दर्पणामिषमाल्याप्तिस्तरणं च महाम्भसाम् ॥
दृष्ट्वा स्वप्नेऽर्थलाभः स्याद्व्याधिमुक्तश्च जायते ॥ इति ।

सामान्यतोऽनिष्टफलो यथा—

यूपकिंशुकवल्मीकपारिभद्राधिरोहणम् ।
तैलकार्पासपिण्याकलोहावाप्तिर्विपत्तये ॥
विवाहकरणं स्वप्ने रक्तस्रग्वस्त्रधारणम् ।
स्रोतसाहरणं नेष्टं पक्वमांसस्य भोजनम् ॥ इति ।



II-9

तदेवं द्विगुणस्यापि स्वप्नस्य दर्शनकालभेदेन फलभेदः स्वप्नाध्याये—

स्वप्नास्तु प्रथमे यामे संवत्सरविपाकिनः ।
द्वितीये चाष्टभिर्मासैस्त्रिभिर्मासैस्त्रियामके ॥
चतुर्थयामे यः स्वप्नो मासेन फलदः स्मृतः ।
अरुणोदयवेलायां दशाहेन फलं भवेत् ।
गोविसर्जनवेलायां सद्य एव फलं भवेत् ॥ इति ।

अथ विशेषत इष्टफलाः स्वप्नाः—

यस्तु पश्यति वै स्वप्ने राजानं कुञ्जरं हयम् ।
सुवर्णं वृषभं गां वा कुटुम्बं तस्य वर्धते ॥
आरोहणं गोवृषकुञ्जराणां प्रासादशैलाग्रवनस्पतीनाम् ।
विष्ठानुलेपो रुदितं मृतं वा स्वप्नेष्वगम्यागमनं च धन्यम् ।
क्षीरिणं फलिनं वृक्षमेकाकी योऽधिरोहति ।
तत्रस्थः स विबुध्येत धनं शीघ्रमवाप्नुयात् ॥
यस्य श्वेतेन सर्पेण ग्रस्यते दक्षिणः करः ।
सहस्रलाभस्तस्य स्यादपूर्णे दशमे दिने ॥
उरगो वृश्चिको वाऽपि जले ग्रसति यं नरम् ।
विजयं चार्थसिद्धिं च पुत्रं तस्य विनिर्दिशेत् ॥
प्रासादं शैलमारुह्य समुद्रं तरते नरः ।
अपि दासकुले जातो राजा भवति वै ध्रुवम् ॥
यस्तु मध्ये तडागस्य भुङ्क्ते च घृतपायसम् ।
अखण्डपुष्करे पत्रे तं विद्यात्पृथिवीपतिम् ॥
बलाकां कुक्कुटीं क्रौञ्चीं दृष्ट्वा यः प्रतिबुध्यति ।
कुलजां लभते कन्यां भार्यां स प्रियवादिनीम् ॥
निगडैर्बध्यते यस्तु बाहुपाशेन वा पुनः ।
पुत्रो वा जायते तस्य धनं शीघ्रमवाप्नुयात् ॥
आसने शयने याने शरीरे वाहने गृहे ।
ज्वलमाने विबुध्येत तस्य श्रीः सर्वतोमुखी ॥
आदित्यमण्डलं स्वप्ने चन्द्रं वा यदि पश्यति ।
व्याधितो मुच्यते रोगादरोगी श्रियमाप्नुयात् ॥
रुधिरं पिबति स्वप्ने सुरां वापि तथा नरः ।
ब्राह्मणो लभते विद्यामितरो लभते धनम् ॥

शुक्लाम्बरधरा नारी शुक्लगन्धानुलेपना ।
अवगूहति यं स्वप्ने श्रियं तस्य विनिर्दिशेत् ॥
पादुकोपानहौ छत्रं लब्ध्वा यः प्रतिबुध्यते ।
असिं वा निर्मलं तीक्ष्णं साध्वन्नं तस्य निर्दिशेत् ॥
रथाङ्गं वृषसंयुक्तमेकाकी यः प्ररोहति ।
तत्रस्थः स विबुध्येत धनं शीघ्रमवाप्नुयात् ॥
दधिलाभे भवेदर्थो घृतलाभे ध्रुवं यशः ।
घृताशने ध्रुवः क्लेशो यशस्तु दधिभक्षणे ॥
आन्त्रैस्तु वेष्टितो यो वै नगरेऽपि गृहेऽपि वा ।
गृहे माण्डलिको राजा नगरे पार्थिवो भवेत् ॥
मानुषाणि च मांसानि स्वप्नान्ते यस्तु पश्यति ।
हरितानि तु पक्वानि शृणु तस्य च यत्फलम् ॥
पद्भक्षणे शतं लाभः सहस्रं बाहुभक्षणे ।
राज्यं शतसहस्रं वा भवेद्वै शीर्षभक्षणे ॥

सर्वाणि शुक्लान्यपि शोभनानि कार्पासतक्रोदनभस्मवर्ज्यम् ।
सर्वाणि कृष्णान्यतिनिन्दितानि गोहस्तिदेवद्विजवाजिवर्ज्यम् ॥

क्षीरं पिबति यः स्वप्ने सफेनं दोहने कृते ।
सोमपानं भवेत्तस्य भुक्त्वा भोगानशेषतः ॥
दधि दृष्ट्वा भवेत्प्रीतिर्गोधूमैश्च धनागमः ।
यवाद्यज्ञागमं विन्द्याल्लाभं सिद्धार्थकादपि ॥
नागपत्रं लभेत् स्वप्ने कर्पूरमगरुं तथा ।
चन्दनं पाण्डुरं पुष्पं तस्य श्रीः सर्वतोमुखी ॥ इति ।

॥ इति विशेषत इष्टफलाः स्वप्नाः ॥

अथ विशेषतोऽनिष्टफलाः स्वप्नाः । तत्र शौनकः—

अथ स्वप्नानि वक्ष्यन्ते दुर्निमित्ताद्भुतानि तु ।
आदित्यं वाथ चन्द्रं वा विगतच्छविकं तथा ॥
पतन्तं वाथ नक्षत्रं तारकादींश्च वा यदि ।
वीक्षेत मानवः स्वप्ने मरणं शोकमाप्नुयात् ॥

स्वप्नाध्याये—

अशोकं करवीरं वा पलाशं वाथ पुष्पितम् ।
स्वप्नान्ते यस्तु पश्येत नरः शोकमवाप्नुयात् ॥

नावमारोहयेद्यस्तु नदीनां च समुत्तरे ।
प्रवासं निर्दिशेत्तस्य शीघ्रं च पुनरागमम् ॥
रक्ताम्बरधरा नारी रक्तगन्धानुलेपना ।
अवगूहति यं स्वप्ने मृत्युं तस्य विनिर्दिशेत् ॥
तैलेनाभ्यक्तकायस्तु पयसा तु घृतेन वा ।
स्नेहेन वा तथान्येन व्याधिं तस्य विनिर्दिशेत् ॥
केशा यस्य विशीर्यन्ते यदि दन्ताः पतन्ति वा ।
अर्थनाशो भवेत्तस्य पुत्रो वा यदि नश्यति ॥
खरोष्ट्रमाहिषरथमेकाकी यः प्ररोहति ।
तत्रस्थः स तु बुध्येत मृत्युं शीघ्रमवाप्नुयात् ॥
कर्णनासाकरादीनां छेदनं पङ्कमज्जनम् ।
पतनं दन्तकेशानां पक्वमांसस्य भक्षणम् ॥
खरोष्ट्रमाहिषं यानं तैलाभ्यङ्गं च मृत्यवे ॥

इति विशेषतोऽनिष्टफलाः स्वप्नाः ।

॥ इति स्वप्नफलनिर्णयः ॥

---

## स्वस्थारिष्टानि ।

अथ स्वस्थारिष्टानि—

अरुन्धतीं ध्रुवं चैव विष्णोस्त्रीणि पदानि च ।
आयुर्हीना न पश्यन्ति चतुर्थं मातृमण्डलम् ॥
देहेऽप्यरुन्धती जिह्वा ध्रुवो नासाग्रमुच्यते ।
भ्रुवोर्मध्यगतं मध्यं तारका मातृमण्डलम् ॥
आकीर्णश्रवणे यस्य न घोषं शृणुयात्तथा ।
नभोमन्दाकिनीमिन्दोश्छायां नेक्षेद्गतायुषः ॥
पांसुपङ्कादिषु न्यस्तं खण्डं यस्य पदं भवेत् ।
पुरतः पृष्ठतोऽवापि सोऽष्टौ मासान्न जीवति ॥
स्नानाम्बुलिप्तगात्रस्य यस्यास्यं प्राक् प्रशुष्यति ।
गात्रेष्वार्द्रेषु सर्वेषु सोऽर्धमासं न जीवति ॥

---

## दुःस्वप्नशान्तिः ।

अथ दुःस्वप्नशान्तिमाह शौनकः—

एवमादीनि चान्यानि श्रुत्युक्तानि बहूनि[1] च ।
स्वप्नोत्पातानि चैतेषां कालरात्र्यधिदेवता ॥
पूजाविधानं पूर्वोक्तं कुर्यादत्रापि यत्नतः ।

पूर्वोक्तमिति रात्रिसूक्तकल्पवदित्यर्थः । रात्रिसूक्तकल्पश्च ग्रन्थगौरवभयान्न लिखितः ।

होमं कुर्यात्प्रयत्नेन रात्रावेव द्विजोत्तमः ।
उक्तेनैव विधानेन सघृतं पायसं हुनेत् ॥

उक्तेन विधानेनेति स्वगृह्योक्तविधानेनेत्यर्थः ।

प्रत्यृचं पायसं हुत्वा रात्रिव्यख्यदिति क्रमात् ।
अष्टोत्तरशतं हुत्वा सूक्तेनानेन वित्तमः ॥

स्वप्नाधिपतिमन्त्रेण कालरात्रनाममन्त्रेणेत्यर्थः ।

ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ।
पूर्वोक्तमभिषेकं यत्तदत्रापि विधीयते ॥

पूर्वोक्तं ग्रहयज्ञोक्तमित्यर्थः ।

गुरवे दक्षिणां दद्याद्वस्त्रहेम पशूनपि ॥
यद्यस्ति दक्षिणाभावोऽप्यशक्तो होमकर्मणि ।
हिरण्यं दक्षिणां दद्यात्तदानीमेव वा बुधः ॥
वस्त्रकुम्भादि सकलं तद्धोत्रे प्रतिपादयेत् ।
ब्राह्मणान्भोजयेच्छक्त्या सुशीलान्वेदपारगान् ॥
भक्ष्यैश्च पायसाद्यैश्च रत्नानि सुबहूनि च ।
अनेन विधिना यस्तु शान्तिं कुर्वीत शक्तितः ।
तस्य वर्षशतायुष्यं भवत्येव न संशयः ॥ इति ।

चर्मण्वतीतरणिजाशुभसंगमस्य
सान्निध्यभाजि कृतिशालिनि मध्यदेशे ।
ख्याता भरेह नगरी भुवि तत्र राजा
राजीवलोचनरतो भगवन्तदेवः ॥[2]

इतिश्रीसेंगरवंशावतंसमहाराजाधिराजश्रीभगवन्तदेवोद्योजितेन मीमांसापारावारपारीणधुरीणभट्टशंकरभट्टात्मजभट्टनीलकण्ठकृते भगवन्तभास्करे आचारमयूखो द्वितीयः समाप्तः ।

---

१ °न्यपि क. पाठः । २ इदं पद्यं क. पुस्तके नास्ति ।

भगवंतभास्करे

मीमांसकश्रीनीलकण्ठभट्टविरचितः

# समयमयूखः

( तृतीयः )

आक्रेइत्युपाह्वमहादेवशर्मणा लेलेइत्युपाह्वव्यंकटेशशास्त्रिणाच संशोधितः ।



## चौखम्बा संस्कृत प्रतिष्ठान

( प्राच्यभारती के प्रकाशक एवं वितरक )

३८ यू. ए., जवाहरनगर, बंगलो रोड

दिल्ली ११०००७

# समयमयूखस्थविषयाणामनुक्रमणिका ।

---

इति समयमयूखस्थविषयाणामनुक्रमणिका.

# समयमयूखः ।

तृतीयः ३.

॥ श्रीगणेशाय नमः ॥

यो लीलया संतनुतेऽत्र विश्वं तत्पालयत्यात्मनि विश्वरूपे ।
लयं नयत्याशु च पूर्णरूपः शिवं तनोत्वाशु रविर्ममासौ ॥ १ ॥

[ जंज्ञे पितामहतनोः खलु कश्यपो य-
स्तस्मादजायत मुनिस्तु विभाण्डकाख्यः ।
तं पुत्रिणं सुरगुरूपम ऋष्यश्रृङ्गस्तस्या-
न्वयेऽप्यजनि शृङ्गिवराभिधानः ॥ २ ॥

तस्मिन्वंशे महति वितते सङ्गराख्ये नृपाणां
राजा कर्णः समजनि यथा सागरे शीतरश्मिः ।
कीर्त्या यस्य प्रथिततरया श्रोत्रजातेऽभिपूर्णे
कर्णस्यापि प्रविततकथा नावकाशं लभन्ते ॥ ३ ॥

विशोकाख्यदेवस्ततस्तत्सुतोऽभूद्विशोकीकृता येन सर्वा धरित्री ।
ततोप्यास राजा सुतोऽभूद्रयाख्यो रयेणैव सर्वाहितज्ञः प्रसिद्धः ॥४॥

बभूवाऽथ वैराटराजस्ततोऽभून्नृगो मेदिनीवल्लभो मीढुराजः ।
नरब्रह्मदेवस्ततो मन्युदेवस्ततोऽभून्नृपश्चन्द्रपालाभिधानः ॥ ५ ॥

शिवगणाख्यनृपः समजन्यथो शिवगणाख्यपुरं प्रचकार यः ।
शिवगणेन समः सकलैर्गुणैः शिव शिव प्रथमो गणनासु यः ॥ ६ ॥

रोलिचन्द्र इति तत्तनयोऽभूत्कर्मसेननृपतिस्तमथानु ।
लोकपो नरहरिर्नृपराजो रामचन्द्र इति तत्तनुजातः ॥ ७ ॥

यशोदेवस्ततो जातस्ताराचन्द्रनृपस्ततः ।
चक्रसेनस्ततो राजा राजसेननृपो यतः ॥ ८ ॥

ततोऽप्यभूद्भूपतिसाहिदेवः स्वकीर्तिभिर्निर्जितदुग्धसिन्धुः ।

---

१ एते श्लोका अधिका दृश्यन्ते क पुस्तके—

अभूत्ततः श्रीभगवन्तदेवः सदैवभाग्योदयवान्क्षितीशः ॥ ९ ॥
यद्दानद्रविणाद्विनिर्जितवपू रत्नाकरो लज्जया
दूरे स्तब्ध इलावृते निविशते नो यत्र पुंसां गतिः ।
किंच त्रस्यदरातिवामनयनानेत्राम्बुभिर्वर्द्धित-
स्तेजोग्निर्वडवामुखोत्थहुतभुक्तुल्यः कथं नो भवेत् ॥ १० ॥
आज्ञप्तस्तेन राज्ञा विबुधकुलमणिर्दाक्षिणात्यावतंसो
भट्टः श्रीनीलकण्ठः स्मृतिषु दृढमतिर्जैमिनीयेऽद्वितीयः ।
आज्ञामादाय मूर्ध्ना सविनयममुना तस्य सर्वान्निबन्धान्दृष्ट्वा
सम्यग्विचार्य त्रिजगति भगवद्भास्करस्तन्यतेऽयम् ॥ ११ ॥ ]
श्रुतीः स्मृतीर्वीक्ष्य पुराणजातं तत्तन्निबन्धानपि सन्निबन्धान् ।
श्रीशङ्करस्यात्मजनीलकण्ठस्तिथ्यादिकृत्यं विवृणोति सर्वम् ॥ १२ ॥
प्रतारकैराहृतमत्र किञ्चिन्मया तु निर्मूलतया तदुज्झितम् ।
ऊनोक्तिताऽतो[1] नहि तेन काचित्खपुष्पहीनाऽपचितिर्न हीयते ॥ १३ ॥
समूलनिर्मूलमपि व्यवस्थां विनादृतं[2] यद्विषयस्य कैरपि ।
नानौषधैस्तद्वणिगापणस्थैर्भिषग्वरानुक्तगुणैः समं स्मृतम् ॥ १४ ॥
संस्काराचारकालाः[3] श्राद्धं नीतिर्विवाददाने च ।
अत्रोत्सर्गः प्रतिष्ठा प्रायश्चित्तं विशुद्धिशान्ती च ॥ १५ ॥

## तिथिसामान्यनिर्णयः ।

तिथिर्द्वेधा पूर्णा खण्डा च । तत्राद्या स्कान्दे—

प्रतिपत्प्रभृतयः सर्वा उदयादोदयाद्रवेः ।
संपूर्णा इति विख्याता हरिवासरवर्जिताः ॥

हरिवासर एकादशी । तत्र वेधान्तरं वक्ष्यते । तद्भिन्ना खण्डा । तस्या वेधमाह पैठीनसिः—

---

१ जनोक्तिजातो इति पाठान्तरम् । २ मतमिति पाठान्तरम् । ३ संस्काराचारकालाः समुचितरचना श्राद्धनीतिर्विवादो दानोत्सर्गप्रतिष्ठा जगतिजयकराः सङ्गतार्थानुबद्धाः । प्रायश्चित्तं विशुद्धिस्तदनु निगदिता शान्तिरेवं क्रमेणख्याता ग्रन्थेऽत्र शुद्धे बुधजनसुखदा द्वादशैते मयूखाः । अयं श्लोको दृश्यते आर्यास्थाने । अयं चाधिकः भगवन्तभास्कराख्ये ग्रन्थेऽस्मिन्च्छिष्टसंमते च ततः ॥ समयस्थविधिर्मयूखः प्रतन्यते नीलकण्ठेन ॥ इति ।

पक्षद्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम् ।
त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः ॥ इति ।

अत्र 'पूर्वया तिथ्योदयोत्तरमुत्तरया चोदयात्पूर्वं त्रिमुहूर्तया वेधो विधीयते' इति केचित् । निबन्द्धृणां तु सर्वेषां दिनमध्य एव पूर्वोत्तर-तिथ्योस्त्रिमुहूर्त्तयोः प्रवेशे वेधोऽभिमतः । वक्ष्यमाणशिवरहस्यविष्णुधर्मोत्तरादिवाक्यात् । सर्वथाऽहोरात्रद्वयगामिनी तिथिः संदिग्धत्वान्निर्णेया । सा च कर्माङ्गतया विहितैव न निषिद्धा । तथा च वृद्धगार्ग्यः—

विधिः पूज्यतिथौ तत्र निषेधः कालमात्रकः ॥ इति ।

यत्तु दक्षः—

त्रिमुहूर्ता न कर्त्तव्या या तिथिः क्षयगामिनी ।
द्विमुहूर्तापि कर्तव्या या तिथिर्वृद्धिगामिनी ॥ इति ।

अत्रापिशब्दस्य पूर्वार्द्धेऽप्यन्वयान्न त्रिमुहूर्त्तत्यागे द्विमुहूर्त्तग्रहणे च तात्पर्यम् । किन्तु द्विमुहूर्त्तस्यानुकल्पत्वे । अत एव शिवरहस्येऽपि—

यां प्राप्यास्तमुपैत्यर्कः सा चेत्स्यात्त्रिमुहूर्तगा ।
धर्मकृत्येषु सर्वेषु संपूर्णां तां विदुर्बुधाः ॥ इति ।

तेन विष्णुधर्मोत्तरे—

उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ ।
द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्यकव्ययोः ॥ इति ।

द्विमुहूर्त्तग्राह्यतोक्तिरनुकल्प एव । उदिते भानौ द्विमुहूर्त्तं दैवतम् अस्तमिते अस्तं गन्तुमारब्धेऽह्नस्त्रिमुहूर्त्तं पित्र्यमित्यर्थः । अह्न इत्यन्वयादस्तमित आदिकर्मणि क्तः । 'व्रतोपवासनियमे घटिकैकाऽपि या भवेत् । उदिते सा तिथिस्तत्र विपरीता तु पैतृके' इत्यादीनि । पाद्मानि वचनानि तु वैश्वानराधिकरणन्यायेन त्रिमुहूर्त्तवेधमेव स्तुवन्तीति माधवादयः । एकादशीपराणीति तु युक्तम् । अन्त्यपादस्यौचित्ये न स्तुत्यर्थः । कासुचित्तिथिषु निषेधप्रयोजको वेधः । स्कान्दे—

नागो द्वादशनाडीभिर्दिक् पञ्चदशभिस्तथा ।
भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् ॥ इति ।

नागः पञ्चमी । दिग्दशमी । भूतश्चतुर्दशी इति वेधः । तत्र विहिता तिथिर्विभक्तविभागेन षोढा । 'पूर्वेद्युरेव कर्मकालगा परेद्युरेव उभयोः

नोभयोः उभयोरंशेन । तत्रापि साम्येन वैषम्येण च' इति । तत्रान्यतरदिने कर्मकालगा चेत्सैव ग्राह्या ।

यो यस्य विहितः कालस्तत्कालव्यापिनी तिथिः ॥
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥

इति गार्ग्योक्तेः । अत एवाहोरात्रसाध्य उपवासादौ याऽहोरात्रगा सैव ग्राह्या । तदभावे त्वन्यतरगा ।

दिवारात्रिव्रतं यच्च एकमेकतिथौ गतम् ।
तस्यामुभययोगिन्यामाचरेत्तद्व्रतं व्रती ॥

इति स्मृतेश्च । वैषम्येण कर्मकालस्पर्शेऽधिका ग्राह्या । उभयोर्नोभयोः साम्येनैकदेशे उभयोरित्येतेषु पक्षेषु निर्णयो निगमे—

युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः ।
रुद्रेण द्वादशी युक्ता चतुर्दश्या च पूर्णिमा ॥
प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलम् ।
एतद्व्यस्तं महादोषं हन्ति पुण्यं पुराकृतम् ॥ इति ।

युग्मं द्वितीया, अग्निस्तृतीया, युगं चतुर्थी, भूतं पञ्चमी, षट् षष्ठी, मुनिः सप्तमी, वसुरष्टमी, रन्ध्रं नवमी, रुद्र एकादशी । तिथ्योर्युग्मं द्वितीया तृतीयायुता तृतीया च तद्युतेति । एवं चतुर्थीपञ्चम्यादीना युग्मानि । अत्र दशम्यपि पूर्वविद्धा ग्राह्या । तथा च स्कान्दे—

दशमी चैव कर्तव्या सदुर्गा द्विजसत्तम ॥ इति ।

त्रयोदशी पूर्वविद्धा ग्राह्या । तथा च ब्रह्मवैवर्ते—

त्रयोदशी तु कर्तव्या द्वादशीसहिता मुने ॥ इति ।

यत्तु—षष्ठ्यष्टम्यप्यमावास्या कृष्णपक्षे चतुर्दशी ।
एताः परयुताः पूज्याः पराः पूर्वेण संयुताः ॥

इति युग्मवाक्यं तदप्येतत्संवाद्येव । यत्तु—

प्रतिपत्सद्वितीया स्याद्द्वितीया प्रतिपद्युता ॥ इति ।

यच्च—चतुर्थीसंयुता या च सा तृतीया फलप्रदा ।
चतुर्थी च तृतीयायां महापुण्यफलप्रदा ॥ इति ।

तदेतद्विरुद्धम् । अनयोश्च पक्षभेदेन व्यवस्थोक्ता विष्णुधर्मोत्तरे—

१ इत्यधिकम् ।

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥ इति ।

कर्मकालव्याप्तौ तूपक्रमगा ।

यो यस्य विहितः कालः कर्मणस्तदुपक्रमे ।
विद्यमानो भवेदङ्गं नोज्झितोपक्रमेण तु ॥

इति वचनात् । अयं च युग्मवाक्यकृतो निर्णयो दैव एव कर्मणि । पित्र्ये तु पूर्वोक्तपक्षेषु—

खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् ।
खर्वदर्पौ परौ पूज्यौ हिंसा स्यात्पूर्वकालिकी ॥

इति उशनसो वचसा निर्णयः । खर्वः साम्यं, दर्पो वृद्धिः, हिंसा-क्षयः । एते च खर्वादयः क्वचित्पूर्वतिथ्यपेक्षया ग्राह्यतिथेरेव । क्वचिद्ग्राह्यमपेक्ष्योत्तरोत्तरतिथेरिति तत्र तत्र वक्ष्यामः । तथा चनिगमे—

द्वितीयादिकयुग्मानां पूज्यता नियमादिषु ।
एकोद्दिष्टादिवृद्ध्यादौ ह्रासवृद्ध्यादिचोदना ॥ इति ।

अत्राद्यमादिपदं तिथ्यन्तराणामुपादानार्थं, द्वितीयं सकलदैवकर्मणां, तृतीयं पार्वणस्य, चतुर्थं वृद्धिरादौ येषामित्यतद्गुणसंविज्ञानबहुव्रीहिणा सर्वदैवश्राद्धानां, मुख्यवृद्धिश्राद्धस्य तिथ्यप्रयुक्तत्वेन तन्निर्णयानुपयोगात् । वृद्धिपदं स्वनिमित्तकश्राद्धलक्षकम् । पञ्चमं साम्यस्य । 'ह्रासवृद्ध्यादिचोदना' खर्वदर्पादिवाक्यमित्यर्थः ।

यत्तु देवलः—

यां तिथिं समनुप्राप्य उदयं याति भास्करः ।
सा तिथिः सकला ज्ञेया स्नानदानजपादिषु ॥ इति ।

यदपि स्कान्दे—

यां तिथिं समनुप्राप्य यात्यस्तं पद्मिनीपतिः ।
सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु ॥ इति ।

तत्पूर्वोत्तरग्राह्यत्वसाधकानां युग्मखर्वशुक्लकृष्णादिवचसामुपोद्बलकम् ।

एतदपवादः स्कान्दे—

मन्वादौ च युगादौ च ग्रहणे चन्द्रसूर्ययोः ।
व्यतीपाते वैधृतौ च तत्कालव्यापिनी क्रिया ॥

अभ्यङ्गे चोदधिस्नाने दन्तधावनमैथुने ।
जाते च मरणे चैव तत्कालव्यापिनी तिथिः ॥

इति विरुद्धवचोऽव्यवस्था ।

---

## अहर्विभागः

अन्हः सामान्यतो विभागमाह व्यासः—

मुहूर्तत्रितयं प्रातस्तावानेव तु सङ्गवः ।
मध्याह्नस्त्रिमुहूर्त्तः स्यादपराह्णोऽपि तादृशः ॥
सायाह्नस्त्रिमुहूर्त्तः स्यात्सर्वकर्मबहिष्कृतः ॥ इति ।

पूर्वाह्णमध्याह्नापराह्ण इति त्रेधा विभागस्य क्वचित् पूर्वाह्णोऽपराह्ण इति द्वेधाविभागस्य च पर्वनिर्णयादौ उपयोगो वक्ष्यते ।

## अथैकभुक्तम् ।

देवलः—दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत् ।
एकभक्तमिति प्रोक्तं न्यूनं ग्रासत्रयेण तु ॥

दिनार्द्धोत्तरं सामान्यतोऽप्युक्तः कालो मध्याह्नान्तावधिरेव ।

मध्याह्नव्यापिनी ग्राह्या एकभक्तव्रते तिथिः ॥

इति बौधायनोक्तेः । अत्र पूर्वोक्तषट्पक्षेषु उत्तरदिने एव कर्मकालव्याप्तौ अधिकस्पर्शे चोत्तराऽन्यथा पूर्वैवेति माधवादयः ।

## अथ नक्तम् ।

व्यासः—त्रिमुहूर्तः प्रदोषः स्याद्भानावस्तंगते सति ।
नक्तं तत्र प्रकुर्वीत इति शास्त्रस्य निश्चयः ॥

यत्तु—सायंसन्ध्या त्रिघटिका ह्यस्तादुपरिभास्वतः ॥

इति स्कान्दोक्तसन्ध्यायां मार्कण्डेयेन—

चत्वारीमानि कर्माणि सन्ध्यायां परिवर्जयेत् ।
आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम् ॥

इति भोजनं निषिद्धं तद्रागप्राप्तं न वैधं नक्तभोजनं, विधिस्पृष्टे निषेधानवकाशात् । एतेन पर्वादिरात्रिभोजननिषेधोऽप्यत्र प्रत्युक्तः ।

प्रदोषव्याप्त्यभावे स्कान्दे—

प्रदोषव्यापिनी न स्याद्दिवा नक्तं विधीयते ।

आत्मनो द्विगुणा छाया मन्दीभवति भास्करे ॥
तन्नक्तं नक्तमित्याहुर्न नक्तं निशि भोजनम् ।
एवं ज्ञात्वा ततो विद्वान् सायाह्ने तु भुजिक्रियाम् ॥
कुर्यान्नक्तव्रती नक्तं फलं भवति निश्चितम् ॥ इति ।

सौरनक्ते—

त्रिमुहूर्तस्पृगेवाह्नि निशि चैतावती तिथिः ।
तस्यां सौरं भवेन्नक्तमहन्येव तु भोजनम् ॥

स्मृत्यन्तरे विशेषः—

यतिश्च विधवा चैव कुर्यात्तत्सदिवाकरम् ।
सदिवाकरं तु तत्प्रोक्तमन्तिमे घटिकाद्वये ॥ इति ।

इति नक्तनिर्णयः ।

---

## अयाचितनिर्णयः ।

अथाऽयाचितं निर्णीयते । तच्च याचितभोजननिषेधरूपमयाचितं भोक्ष्य इति व्रतरूपं वा । तस्य च फलमुक्तं माधवीये स्मृत्यन्तरे—

अयाचिताशी मितभुक् परां सिद्धिमवाप्नुयात् ॥ इति ।

अत्र विशेषवचनाभावादुपवासवन्निर्णय इति केचित् । तन्न ।

एकभक्ताऽयाचितयोर्या विंशद्घटिकावधिः ।
सा तिथिः सर्वदा ज्ञेया नक्ते सायाह्नसङ्गता ।

इति शार्ङ्गधरीये नारदीयोक्तेः ।

---

## व्रतोपयोगिनिर्णयः

अथ प्रसङ्गाद्व्रतविषये किञ्चिदुच्यते । सत्यव्रते—

उदयस्था तिथिर्या हि न भवेद्दिनमध्यभाक् ।
सा खण्डा न व्रतानां स्यादारम्भश्च समापनम् ॥ इति ।

ब्रह्मयामले—

दिनभद्रा यदा रात्रौ रात्रिभद्रा यदा दिवा ।
न त्याज्या शुभकार्येषु प्राहुरेवं पुरातनाः ॥

व्रतखण्डेऽग्निपुराणे—

व्रीहिषष्टिकमुद्गाश्च कलायाः सलिलं पयः ।

श्यामाकाश्चैव नीवारा गोधूमाद्या व्रते हिताः ॥

तथा—कूष्माण्डालाबुवार्त्ताकपालक्यज्योत्स्निकास्त्यजेत् ।
चरुर्भैक्ष्यं सक्तुकणाः शाकं दधि घृतं मधु ॥
श्यामाकाः शालिनीवारा यावकं मूलतण्डुलम् ।
हविष्यं व्रतनक्तादावग्निकार्यादिके हितम् ॥
मधुमांसं विहायाऽन्यद्व्रते च हितमीरितम् ।

ज्योत्स्निका कोशातकी । हितं विहितम् । मधु मद्यम् । छन्दोगपरिशिष्टे कात्यायनः—

हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरादीन्सर्वाभावेऽपि वर्जयेत् ॥

भविष्योत्तरे—

हैमन्तिकं सितास्विन्नं धान्यं मुद्गा यवास्तिलाः ।
कलापकङ्गुनीवारवास्तुकं हिलमोचिका ॥
षष्टिकाः कालशाकं च मूलकं केमुकेतरत् ।
कन्दः सैन्धवसामुद्रे लवणे दधिसर्पिषी ॥
पयोऽनुद्धृतसारं च पनसाम्रहरीतकी ।
पिप्पली जीरकं चैव नागरङ्गाह्वतिन्तिणी ॥
कदलीलवलीधात्रीफलान्यगुडमैक्षवम् ।
अतैलपक्वं मुनयो हविष्याणि प्रचक्षते ॥

सर्पिः पयश्चात्र गव्यम् । अतैलपक्वमित्येतत् कथितहविष्याणामेव विशेषणम् । व्रताधिकारे सुमन्तुः—

विहितस्याननुष्ठानमिन्द्रियाणामनिग्रहः ।
निषिद्धसेवनं नित्यं वर्जनीयं प्रयत्नतः ॥ इति ।

विष्णुधर्मेषु—

असकृज्जलपानं च दिवास्वापं च मैथुनम् ।
ताम्बूलचर्वणं मांसं वर्जयेद्व्रतवासरे ॥ इति ।

मांसनिषेधः पारणादिने—'पारणान्तं व्रतं ज्ञेयम्' इत्युक्तेः । नतु प्रधानदिने प्रसक्त्यभावात् ॥

---

१ मद्यु घ. ङ. पाठः ।

वर्जयेत्पारणे मांसं व्रताहेऽप्यौषधं सदा ।

इत्युक्तेश्च ।

अष्टैतान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥

इत्यौषधरूपमपि मांसं व्रताहे वर्जयेदित्यर्थः ।

देवलः—असकृज्जलपानाच्च सकृत्ताम्बूलचर्वणात् ।

उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात् ॥

अशक्तौ तु स एव—

अत्यये चाम्बुपानेन नोपवासः प्रणश्यति ॥ इति ।

अत्यये प्राणात्यये । वृद्धवसिष्ठः—

उपवासे तथा श्राद्धे न कुर्याद्दन्तधावनम् ।
दन्तानां काष्ठसंयोगो हन्ति सप्तकुलानि च ॥

पैठीनसिः—

अलाभे वा निषेधे वा काष्ठानां दन्तधावने ।
पर्णादिना विशुद्ध्येत जिह्वोल्लेखः सदैव च ॥ इति ।

हारीतः—'पतितपाखण्डिनास्तिकादिसंभाषणानृताश्लीलादिकमुपवासादिषु वर्जनीयम्' इति ।

अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् ।

व्यासः—अलाभे दन्तकाष्ठानां निषिद्धायां तथा तिथौ ।

कौर्मे—बहिर्ग्रामान्त्यजान्सूतिं पतितं च रजस्वलाम् ।

न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे ।

विष्णुरहस्ये—

स्मृत्यालोकनगन्धादिस्वादनं परिकीर्तनम् ।
अन्नस्य वर्जयेत्सर्वं ग्रासानां चाभिकाङ्क्षणम् ॥
गात्राभ्यङ्गं शिरोऽभ्यङ्गं तांबूलं चानुलेपनम् ।
व्रतस्थो वर्जयेत्सर्वं यच्चान्यद्बलरागकृत् ॥ इति ।

मैथुनं चाष्टाङ्गम् । तथा च—

स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ।

एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥ इति ।

देवलः—स्त्रीणां तु प्रेक्षणात्स्पर्शात्ताभिः संकथनादपि ।
विपद्यते ब्रह्मचर्यं न दारेष्वृतुसंगमात् ॥[1][2]

इत्यपि क्वचित्पाठः । विष्णुधर्मोत्तरे—

तज्जपस्तवनध्यानं तत्कथाश्रवणादिकम् ।
तदर्चनं च तन्नामकीर्त्तनं श्रवणादयः ॥
उपवासव्रतामेते[3] गुणाः प्रोक्ता मनीषिभिः ॥

तच्छब्देनोपास्या देवता व्रतदेवता वा ।

देवलः— ब्रह्मचर्यमहिंसा च सत्यमामिषवर्जनम् ।
व्रतेष्वेतानि चत्वारि कर्तव्यानीह सूरिभिः ॥

आमिषं मांसम् ।

आमिषं दृतिपानीयं गोवर्ज्जं क्षीरमामिषम् ।
मसूरमामिषं सस्ये फले जम्बीरमामिषम् ॥
आमिषं शुक्तिकाचूर्णमारनालं तथामिषम् ।

इति स्मृत्यन्तरोक्तम् । पद्मपुराणे—

अष्टैतान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥

पयःपानादीनामव्रतघ्नत्वं स्त्रीबालाद्यत्यन्तपीडितव्रतविषयम् ।

सर्वभूतभयं चैव प्रमादो गुरुशासनम् ।
अव्रतघ्नानि पठ्यन्ते सकृदेतानि शाश्वतः ॥

सर्वभूतभयं सर्वेभ्यो भूतेभ्यो भयम् ।

व्रतादौ परान्नभोजननिषेधो देवीपुराणे—

व्रते च तीर्थेऽध्ययने श्राद्धेऽपिच विशेषतः ।
परान्नभोजनाद्देवि यस्यान्नं तस्य तत्फलम् ॥ इति ।

हेमाद्रौ पाद्मे—

गर्भिणी सूतिकादिश्च कुमारी वाऽथ रोगिणी ।
यदा शुद्धा तदाऽन्येन कारयेत्प्रयता स्वयम् ॥ इति ।

---

१ संगमात् इति । २ स्वदारेषु । ३ कृतामिति क. पाठः ।

मदनरत्ने छागलेयः—

पूर्वं व्रतं गृहीत्वा यो नाचरेत्काममोहितः ।
जीवन्भवति चाण्डालो मृतः श्वा चाभिजायते ॥

गारुडे— क्रोधात्प्रमादाल्लोभाद्वा व्रतभङ्गो भवेद्यदि ।
दिनत्रयं न भुञ्जीत मुण्डनं शिरसोऽथवा ॥ इति ।

प्रायश्चित्तोत्तरमतिक्रान्तानुष्ठानं कार्यम् ।

प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत् ॥

इति वायुपुराणोक्तेः ॥

इति व्रतोपयोगिप्रकरणम् ।

---

## प्रतिपन्निर्णयः ।

अथ प्रतिपदमारभ्य क्रमेण सर्वतिथीनां निर्णयस्तत्कृत्यं चोच्यते । तत्रादौ प्रतिपन्निर्णीयते । तत्र प्रतिपदपराह्णव्यापिनी चेत् शुक्लपक्षे पूर्वा ग्राह्या 'प्रतिपद्यमावास्या' इति युग्मवाक्यात् । मदनरत्ने स्कान्देऽपि 'प्रतिपत्संमुखी कार्या या भवेदापराह्णिकी' इति । दीपिकाऽपि 'शुक्ला स्यात्प्रतिपत्तिथिः प्रथमतश्चेत्सा पराह्णे भवेत्' इति । तदभावे तूक्तं माधवेन 'तदभावे तु सायाह्नव्यापिनी परिगृह्यते' इति । कृष्णपक्षे परा ग्राह्या । तदुक्तं दीपिकायाम्—कृष्णातूत्तरतोऽखिलेति ।

अथ चैत्रकृष्णप्रतिपत्कृत्यं भविष्योत्तरे—

चैत्रे मासि महाबाहो पुण्या प्रतिपदा परा ।
या तस्यां श्वपचं स्पृष्ट्वा स्नानं कुर्यान्नरोत्तमः ॥
न तस्य दुरितं किञ्चिन्नाधयो व्याधयो नृप ।

तथा— कृत्वा चावश्यकार्याणि संतर्प्य पितृदेवताः ।
वन्दयेद्धोलिकाभूतिं[1] सर्वदुष्टोपशान्तये ॥

मन्त्रः— वन्दितासि सुरेन्द्रेण ब्रह्मणा शङ्करेण च ।
अतस्त्वं पाहि नो देवि भूते भूतिप्रदा भव ॥ इति ।

पुराणसमुच्चयेपि—

वृत्ते तुषारसमये सितपञ्चदश्यां
प्रातर्वसन्तसमये समुपस्थिते च ॥

---

१ धूलिं पाठः । ध. ङ.

सम्प्राश्य चूतकुसुमं सह चन्दनेन
सत्यं हि पार्थ पुरुषोथ समाः सुखी स्यात् ॥

पञ्चदश्यामतीतायां प्रातर्भक्षयेदित्यर्थः ।

ये पिबन्ति वसन्ताद्ये चूतपुष्पं सचन्दनम् ॥
सत्यं हृत्स्थस्य कामस्य पूजनं क्रियते जनैः ।

इति भविष्योत्तरात् । वसन्ताद्ये चैत्रप्रतिपदि । मन्त्रः—

चूतमग्र्यं वसन्तस्य माकन्द कुसुमं तव ।
सचन्दनं पिबाम्यद्य सर्वकामार्थसिद्धये[1] ॥

भविष्ये—ततः प्रातर्द्वितीयायां पुत्रमित्रादिसंयुतः ।
नृपतिर्वितते देशे वितानवरशोभिते ॥
उपवेश्यासने रम्ये पौरजानपदैः सह ।
सिन्दूरकुङ्कुमैः क्षोदपट्टवासैः सचन्दनैः ॥
विकीर्य लोकांस्ताम्बूलैः संमान्य च पृथक् पृथक् ।
नृत्यगीतविनोदैश्च कुर्यात्काममहोत्सवम् ॥
एवं कुर्वन्नवाप्नोति यावत्संवत्सरं सुखम् ॥ इति ।

इदं तु पूर्वविद्धायामेव ।

वत्सरादौ वसन्तादौ बलिराज्ये तथैव च ।
पूर्वविद्धैव कर्त्तव्या प्रतिपत्सर्वदा बुधैः ॥

इति वृद्धवसिष्ठवाक्यात् । चैत्रशुक्लप्रतिपदपि वत्सरारम्भे उदयव्यापिनी ग्राह्या । तदुक्तं माधवीये ब्राह्मे—

चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि ।
शुक्लपक्षे समग्रं तु तदा सूर्योदये सति ॥ इति ।

दिनद्वये उदयव्याप्तावव्याप्तौ वा पूर्वैव पूर्वोक्तवृद्धवसिष्ठवाक्यात् ।

वत्सरादौ वसंतादौ बलिराज्ये तथैव च ।
पूर्वं विद्धैव कर्त्तव्या प्रतिपत्सर्वदा बुधैः ॥ इति ।

तत्र तैलाभ्यङ्ग उक्तस्तेनैव—

वत्सरादौ वसन्तादौ बलिराज्ये तथैव च ।
तैलाभ्यङ्गमकुर्वाणो नरकं प्रतिपद्यते ॥ इति ।

---

१ कामदम् ङ. पाठः ।

अत्र शकादिश्रवणमुक्तं ज्योतिःशास्त्रे—

शकवत्सरभूपमन्त्रिणां रसधान्येश्वरमेघपतीनाम् ।
श्रवणात्पठनाच्च वै नृणां शुभतां यात्यशुभं सह श्रिया ॥ इति ।

चैत्रस्य मलमासत्वे तैलाभ्यङ्गशकश्रवणादि शुद्ध एव कार्यम् । यद्यपि वत्सरवसन्तयोः प्रवृत्तिर्जाता तथापि तत्प्रयुक्तकृत्यम्—

षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः ।
पूर्वमर्द्धं परित्यज्य कर्त्तव्या चोत्तरे क्रिया ॥

इति वचनादुत्कृष्योत्तर एव कार्यम्[1] । नवरात्ररामनवम्यादिवत् । तथाऽत्र विशेषो भविष्ये—

अतीते फाल्गुने मासि प्राप्ते चैत्रमहोत्सवे ।
पुण्येऽह्नि विप्रकथिते प्रपादानं समारभेत् ॥ इति ।
ततश्चोत्सर्जयेद्विद्वान्मन्त्रेणानेन मानवः ।
प्रपेयं सर्वसामान्या भूतेभ्यः प्रतिपादिता ॥
अस्याः प्रदानात्पितरस्तृप्यन्तु हि पितामहाः ।
अनिवार्यं ततो देयं जलं मासचतुष्टयम् ॥
प्रपां दातुमशक्तेन विशेषाद्धर्ममीप्सुना ।
प्रत्यहं धर्मघटको वस्त्रसंवेष्टिताननः ॥
ब्राह्मणस्य गृहे देयः शीतामलजलः शुचिः ।

तत्र मन्त्रः—

एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः ।
अस्य प्रदानात्सकला मम सन्तु मनोरथाः ॥
अनेन विधिना यस्तु धर्मकुम्भं प्रयच्छति ।
प्रपादानफलं सोऽपि प्राप्नोतीह न संशयः ॥ इति ।

ज्येष्ठशुक्लप्रतिपदि दशहरारम्भः । काशीखण्डे—

ज्येष्ठे मासि सिते पक्षे प्राप्य प्रतिपदं तिथिम् ।
दशाश्वमेधिके स्नात्वा मुच्यते सर्वपातकैः ॥
एवं सर्वासु तिथिषु क्रमस्नायी नरोत्तमः[2] ।
आ शुक्लपक्षदशमीं प्रतिजन्माघमुत्सृजेत् ॥ इति ।

---

१ वचनेन पूर्वमासकृत्यस्योत्तरमासे कर्तव्यत्वाभिधानादिति घ. पाठः । २ नरो भवेत् ।

अथाश्विनशुक्लप्रतिपदि नवरात्रारम्भः । तदुक्तं हेमाद्रौ धौम्येन—

आश्विने शुक्लपक्षे तु कर्त्तव्यं नवरात्रकम् ।
प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत् ॥

तत्र पूर्वाह्णव्यापिनी ग्राह्या—

आश्विनस्य सिते पक्षे नवरात्रमुपोषितः ।
सुस्नातस्तिलतैलेन पूर्वाह्णे पूजयेच्छिवाम् ॥

इति देवीपुराणे तस्य कर्मकालतोक्तेः—

कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।

इत्यनेन कर्मकालव्यापिन्यामेव कर्त्तव्योक्तेः । नचात्रोपवासानुरोधेन निर्णयः । तस्य नवरात्रमुपोषितः पूजयेत् इत्यादिदेवीपुराणादौ 'नखानि निकृन्तति स्नाति' इत्यादिवत्फलसंस्कारत्वेन पूजाङ्गत्वावगमात् । अतः प्रधानभूतपूजाकालपूर्वाह्णव्यापित्वेनैव निर्णयः । पूजायास्तु प्राधान्यं फलसंबन्धात् । सा च स्कान्दे—

आश्विने मासि मेघान्ते महिषासुरमर्दिनीम् ।
देवीं संपूजयित्वा ये अर्द्धरात्रेऽष्टमीषु च ॥
क्रीडन्ति विविधैर्भोगैर्देवलोके सुदुर्लभे ।
नाधयो व्याधयस्तेषां न च शत्रुभयं भवेत् ॥ इति ।

कालिकापुराणे—

कृत्वैवं परमामायुर्निर्वृत्तिं त्रिदिवौकसः ।
एवमन्यैरपि सदा देव्याः कार्यं प्रपूजनम् ॥
विभूतिमतुलां लब्धुं चतुर्वर्गप्रदायकम् ।

पूजयेदित्यधिकृत्य भविष्योत्तरेऽपि—

भवानीतुष्टये पार्थ संवत्सरसुखाय च ।
भूतप्रेतपिशाचानां नाशाय चोत्सवाय च ॥ इति ।

अकरणे प्रत्यवायोपि कालिकापुराणे—

यो मोहादथवालस्याद्देवीं दुर्गां महोत्सवे ।
न पूजयति दुष्टात्मा द्वेषाद्वाप्यथ भैरव ॥
क्रुद्धा भगवती तस्य कामानिष्टानि हन्ति वै ।

---

१ क. ख. ग. अधिकम् ।

तथा देवीपुराणे—

पूजयित्वाऽऽश्विने मासि विशोको जायते नरः ।
वर्षेवर्षे विधातव्यं पूजनं च विसर्जनम् ॥ इति ।

यत्तु गोविन्दार्णवे देवीपुराणे—

शरत्काले महापूजा क्रियते या च वार्षिकी ।
सा कार्योदयगामिन्यां न तिथेस्तत्र युग्मता ॥ इति

तत्रोदयगामित्वमपि प्रायः पूर्वाह्णव्यापित्व एव भवतीति न विरोधाशङ्का । युग्मता युग्मवाक्यानुरोधेन निर्णय इत्यर्थः । वार्षिकीत्यनेन संवत्सरस्यादौ चैत्रशुक्लप्रतिपद्युपक्रम्य नवम्यन्ता पूजाऽभिधीयते । ततश्च शरद्वसन्तयोस्तुल्य एव दुर्गोत्सवः कार्यः । यानि तु—

यो मां पूजयते नित्यं द्वितीयादिगुणान्विताम् ।
प्रतिपच्छारदे ज्ञात्वा सोऽश्नुते सुखमव्ययम् ॥
यदि कुर्यादमायुक्ता प्रतिपत्स्थापने मम ।
तस्य शापायुतं दत्वा भस्मशेषं करोम्यहम् ॥
आग्रहात्कुरुते यस्तु कलशस्थापनं मम ।
तस्य संपद्विनाशः स्याज्ज्येष्ठः पुत्रो विनश्यति ॥

तथा— न दर्शकलया युक्ता प्रतिपच्चण्डिकार्चने ।
उदये द्विमुहूर्तापि ग्राह्या सोदयगामिनी ॥
या चाऽऽश्वयुजि मासे स्यात्प्रतिपद्भद्रयान्विता ।
शुद्धमम्बार्चनं तस्यां शतयज्ञफलप्रदम् ॥

इत्यमायोगनिषेधकानि, यानिच—

द्वितीयाशेषसंयुक्ता प्रतिपच्चण्डिकार्चने ।
मोहादथोपदेशाद्वा कृतं पुत्रविनाशकम् ॥
आरम्भे नवरात्रस्य द्वितीया त्रुटिसंयुता ।
न केवलं तिथिं हन्ति वेधात्सा पुत्रसंपदम् ॥

इत्यादीनि द्वितीयायोगनिषेधकानि तान्युभयविधान्यपि सर्वाणि निर्मूलानि । समूलत्वेऽपि परस्परं सत्प्रतिपक्षत्वादनिर्णायकानि । चन्द्रप्रकाशे—

प्रातरावाहयेद्देवीं प्रातरेव प्रवेशयेत् ।
प्रातः प्रातश्च संपूज्य प्रातरेव विसर्जयेत् ॥

इत्युक्तम् । सति संभवे प्रतिपदः आद्यं नाडीषोडशकं त्यक्त्वा कलशं स्थापयेत् ।

आद्याः षोडश नाडीस्तु लब्ध्वा यः कुरुते नरः ।
कलशस्थापनं तत्र ह्यरिष्टं जायते ध्रुवम् ॥

इति देवीपुराणवचनात् । कलशस्थापने वैधृतिचित्रादियोगनिषेधकानि वचनानि तानि निर्मूलानि ।

यथा—

भद्रायुता चेत्प्रतिपत्तु लभ्यते विरुद्धयोगैरपि सङ्गता सती ।
सैवापराह्णे विबुधैर्विधेया स्त्रीपुत्रराज्यादिविवृद्धिहेतुः ॥ इति ।

कलशस्थापनं तु दिवैव कार्यम् । न रात्रौ । तदुक्तं मात्स्ये—

न रात्रौ स्थापनं कार्यं न च कुंभाभिषेचनम् ॥ इति ।

अत्र त्रिरात्रमप्युक्तं धौम्येन—

त्रिरात्रं चापि कर्तव्यं सप्तम्यादि यथाक्रमम् ॥ इति ।

अथ विस्तरेण नवरात्रकृत्यं देवीपुराणे—

कन्यासंस्थे रवौ शक्र शुक्लामारभ्य नन्दिकाम् ।
अयाची त्वथवैकाशी नक्ताशी वाऽथ वाय्वदः ॥
प्रातःस्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः ।
जपहोमसदायुक्तः कन्यकां भोजयेन्मुदा ॥

शिवश्च शिवा च शिवौ तयोः पूजकः । नन्दा च प्रतिपदेव प्रथमोपस्थितत्वात् । भविष्ये—

त्रिरात्रं चापि कर्तव्यं सप्तम्यादि यथाक्रमम् ।

तत्र प्रतिपदि पूर्वाह्णे तिलतैलेन स्नातो यजमानो गणपतिं संपूज्य देशकालौ निर्दिश्य नवमीपर्यन्तमुपवासाद्यन्यतरनियमोपेतो दुर्गापूजनममुकफलकामः करिष्ये इति संकल्पयेत् । ततः कदलीस्तम्भवस्त्रादिमण्डिते गृहे चतुरस्रचतुर्हस्तवेदिकोपरि सर्वतोभद्रादिमण्डलं विधाय तत्र 'महीद्यौः' इत्यादिवरुणपूजान्तं कलशस्थापनं कुर्यात् । सौवर्णादिप्रतिमापूजार्थम् 'पूज्या मण्डलकुम्भस्थाः' इति देवीपुराणात् । मृन्मयादिका तु कलशस्य पश्चादासने स्थाप्या । वेदिकोणेष्वपि चत्वारः कलशाः स्थाप्याः ।

चतुरः कलशान्यस्तु दद्याद्देवगृहे नरः ।
चतुःसमुद्रवलयां स तु भुङ्क्ते वसुन्धराम् ।

इति विष्णुधर्मोत्तरात् । प्रतिमा च हेमादिमयी । देवीपुराणे—

हैमराजतमृद्धातुशैलचित्रार्पिताऽपि वा ।
खड्गे शूलेऽर्चिता देवी सर्वकामफलप्रदा ॥

मृन्मयीं प्रतिमां कृत्वा बिल्वे वा यस्तु पूजयेत् ।
आत्मवित्तानुसारेण स लभेन्मौक्तिकं फलम् ॥ इति ।

प्रतिमालक्षणं मत्स्यपुराणे—

जटाजूटसमायुक्तामर्द्धेन्दुकृतलक्षणाम् ।
लोचनत्रयसंयुक्तां पद्मेन्दुसदृशाननाम् ॥
अतसीपुष्पवर्णाभां सुप्रतिष्ठां सुलोचनाम् ।
नवयौवनसंपन्नां सर्वाभरणभूषिताम् ॥
सुचारुदर्शनां तद्वत्पीनोन्नतपयोधराम् ।
त्रिभङ्गस्थानसंस्थानां महिषासुरमर्दिनीम् ॥
त्रिशूलं दक्षिणे दद्यात्खड्गं चक्रं तथैव च ।
तीक्ष्णं बाणं तथा शक्तिं वामतोऽपि [1]निवेशयेत् ॥
खेटकं पूर्णचापं च पाशमङ्कुशमूर्द्धजम् ।
घण्टां वा परशुं वापि वामतः सन्निवेशयेत् ॥
अधस्तान्महिषं तद्वद्विशिरस्कं प्रदर्शयेत् ।
शिरश्छेदोद्भवं तद्वद्दानवं खड्गपाणिनम् ॥
हृदि शूलेन निर्भिन्नं निर्यदन्त्रविभूषितम् ।
रक्तरक्तीकृताङ्गं च रक्तविस्फारितेक्षणम् ॥
वेष्टितं नागपाशेम भ्रुकुटीभीषणाननम् ।
सपाशवामहस्तेन धृतकेशं च दुर्गया ॥
वमद्रुधिरवक्त्रं च देव्याः सिंहं प्रदर्शयेत् ।
देव्यास्तु दक्षिणं पादं समं सिंहोपरिस्थितम् ॥
किञ्चिदूर्ध्वं तथा वाममङ्गुष्ठं महिषोपरि ।
स्तूयमानं च तद्रूपममरैः सन्निवेशयेत् ॥ इति ।

---

१ क्रमादधः पाठः । घ. ङ. ख. २ निबोधत पाठः । घ. ङ. ख.

ध्यानमप्येवम्—

एहि दुर्गे महाभागे रक्षार्थं मम सर्वदा ।
आवाहयाम्यहं देवि[१] सर्वकामार्थसिद्धये ॥
अस्यां मूर्तौ समागच्छ स्थितिं मत्कृपया कुरु ।
रक्षां कुरु सदा भद्रे विश्वेश्वरि नमोऽस्तु ते ॥

इत्यावाहनम् ‘ भगवति दुर्गे इहागच्छ इह तिष्ठ इह संनिधेहि स्थिरा भव सुप्रसन्ना भव ’ इत्यपि पठन्ति । पूजादिमन्त्रश्च ‘ कुर्याद्देव्याश्च मन्त्रेण ’ इत्यभिधाय—

जयन्ती मङ्गला काली भद्रकाली कपालिनी ।
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ।
अनेनैव तु मन्त्रेण जपहोमादि कारयेत् ।

इति पुराणोक्तेः ।

तल्लिङ्गैः पूजयेन्मन्त्रैः सर्वदेवान्समाहितः ॥

इति अग्निपुराणाद्वैदिक आगमिको वा । ‘नाम्ना सर्वं समापयेत् ’ इति साधारणवाक्यात्प्रणवादिचतुर्थ्यन्तनमोन्तनाममन्त्रो वा । स्कान्दे तु—

दुर्गमे दुस्तरे कार्ये भवदुःखविनाशिनि ।
पूजयामि सदा भक्त्या दुर्गां दुर्गार्त्तिनाशिनीम् ॥
अनेनैव तु मन्त्रेण जपहोमादि कारयेत् ।

इत्युक्तम् । छत्रचामरादिभी राजोपचारैः पूजा । तदन्ते प्रणम्य देवीं प्रार्थयेदनेन मन्त्रेण—

महिषघ्नि महामाये चामुण्डे मुण्डमालिनि ।
द्रव्यमारोग्यविजयं देहि देवि नमः सदा ॥
भूतप्रेतपिशाचेभ्यो रक्षोभ्यश्च महेश्वरि ।
देवेभ्यो मानुषेभ्यश्च भयेभ्यो रक्ष मां सदा ॥
सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥
रूपं देहि यशो देहि भगं भगवति देहि मे ।
पुत्रान्देहि धनं देहि सर्वान्कामान्प्रदेहि मे ॥ इति ।

ततो दुर्गामन्त्रं वैदिकमागमिकं वा जपेत् । दुर्गाग्रतो जपेन्मन्त्रमेकचित्तः समाहित ’ इति देवीपुराणात् । यद्वा—

१ वीं पाठः घ. ।

माहात्म्यं भगवत्यास्तु पुराणादिषु कीर्तितम् ।
पठेच्च शृणुयाद्वापि सर्वकामसमृद्धये ॥

तथा— एकोत्तराभिवृद्धया तु नवमीं यावदेव हि ।
चण्डीपाठं जपेच्चैव जापयेद्वा विधानतः ॥

वाराहीतन्त्रे—

सङ्कल्पितस्तोत्रपाठे सङ्ख्यां कृत्वा पठेत्सुधीः ।

तत्रैव— चण्डीपाठफलं देवि शृणुष्व गदतो मम ।
एकावृत्त्यादिपाठानां यथावत्कथयामि ते ॥
सङ्कल्पपूर्वं संपूज्य न्यस्याङ्गेषु मनून्सकृत् ।
पाठाद्बलिप्रदानाच्च सिद्धिमाप्नोति मानवः ॥
उपसर्गोपशान्त्यर्थं त्रिरावृत्तं पठेन्नरः ।
ग्रहोपशान्तौ कर्त्तव्यं पञ्चावृत्तं वरानने ॥
महाभये समुत्पन्ने सप्तावृत्तं समुन्नयेत् ।
नवावृत्ताद्भवेच्छान्तिर्वाजपेयफलं लभेत् ॥
राजवश्याय भूत्यै च रुद्रावृत्तमुदीरयेत् ।
अर्कावृत्ते काम्यसिद्धिर्वैरहानिश्च जायते ॥
मन्वावृत्ताद्रिपुर्वश्यस्तथा स्त्री वश्यतामियात् ।
सौख्यं पञ्चदशावृत्ताच्छ्रियमाप्नोति मानवः ॥
कलावृत्त्या पुत्रपौत्रधनधान्यागमं विदुः ।
राज्ञां भीतिविमोक्षाय वैरस्योच्चाटनाय च ॥
कुर्यात्सप्तदशावृत्तं तथाष्टदशकं प्रिये ।
महारणविमोक्षाय विंशावृत्तं पठेत्सुधीः ॥
पञ्चविंशावर्त्तनात्तु भवेद्बन्धविमोक्षणम् ।
सङ्कटे समनुप्राप्ते दुश्चिकित्स्यामये तथा ॥
जातिध्वंसे कुलोच्छेदे आयुषो नाश आगते ।
वैरिवृद्धौ व्याधिवृद्धौ धननाशे तथा क्षये ॥
तथैव त्रिविधोत्पाते तथाचैवातिपातके ।
कुर्याद्यत्नाच्छतावृत्तं ततः संपद्यते शुभम् ॥
श्रेयोवृद्धिः शतावृत्ताद्राज्यवृद्धिस्तथा परा ।
मनसा चिन्तितं देवि सिद्ध्येदष्टोत्तराच्छतात् ॥

शताश्वमेधयज्ञानां फलमाप्नोति सुव्रते ।
सहस्रावर्त्तनाल्लक्ष्मीरावृणोति स्वयं स्थिरा ॥
भुक्त्वा मनोरथान्कामान्नरो मोक्षमवाप्नुयात् ।
यथाश्वमेधः[1] क्रतूनां देवानां च यथा हरिः ॥
स्तवानामपि सर्वेषां तथा सप्तशतीस्तवः ।
अथवा बहुनोक्तेन किमेतेन वरानने ।
चण्ड्याः शतावृत्तिपाठात्सर्वाः सिद्धयन्ति सिद्धयः ॥ इति ।

पाठश्च नारायणादीन्नमस्कृत्य कार्यः ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥

इतिवचनात् । जयशब्दार्थश्च भविष्यपुराणे—

अष्टादशपुराणानि रामस्य चरितं तथा ।
विष्णुधर्मादिशास्त्राणि शिवधर्माश्च भारत ॥
कार्ष्णं च पञ्चमो वेदो यन्महाभारतं स्मृतम् ।
शैवाश्च धर्मा राजेन्द्र मानवोक्ता महीपते ॥
जयेति नाम एतेषां प्रवदन्ति मनीषिणः ॥ इति ।

पाठप्रकारश्च मात्स्ये—

प्रणवं चाऽऽदितो जप्त्वा स्तोत्रं वा संहितां जपेत् ।
अन्ते च प्रणवं दद्यादन्यथा विफलं भवेत् ॥
शुद्धेनानन्यचित्तेन पठितव्यं प्रयत्नतः ।
न कार्यासक्तमनसा कार्यं स्तोत्रस्य वाचनम् ॥
आधारे स्थापयित्वा तु पुस्तकं प्रजपेत्सुधीः ।
हस्तसंस्थापनादेव यस्मादल्पफलं भवेत् ॥
स्वयं च लिखितं यत्तु कृतिना लिखितं च यत् ।
अब्राह्मणेन लिखितं तच्चापि विफलं भवेत् ॥

कृती लेखकः । तदुपजीवीत्यर्थः ।

ऋषिच्छन्दादिकं न्यस्य पठेत्स्तोत्रं विचक्षणः ।
सङ्कल्पिते स्तोत्रपाठे जपसङ्ख्यां पठेत्सुधीः ॥
अध्यायं प्राप्य विरमेन्नतु मध्ये कदाचन ।

---

१ 'क्रतूनामश्वमेधश्च' इत्यपि पाठ. ।

कृते विरामे मध्ये तु अध्यायादि पठेत्पुनः ।

इति । श्रवणं ब्राह्मणादेव कार्यम्—

ब्राह्मणं वाचकं विन्द्यान्नान्यवर्णजमादरात् ।
श्रुत्वान्यवर्णजाद्राजन् वाचकान्नरकं व्रजेत् ॥

इति भविष्यत्पुराणात् । यद्यपि देवीपुराणे जपपूजादिवद्धोमोऽपि प्रत्यहमुक्तस्तथापि अष्टम्यां नवम्यामेव वा कार्यः । ब्रह्मपुराणे 'तत्राष्टम्यां भद्रकालीत्युपक्रम्य होमैर्ब्राह्मणतर्पणैः' इत्यष्टमीकृत्यमध्ये पाठात् ।

नवम्यां बलिदानं च कर्त्तव्यं वै यथाविधि ।
जपं होमं च विधिवत्कुर्यात्तत्र विभूतये ॥

इति कालिकापुराणात् शिष्टाचाराच्च बलिदानमप्यष्टमीनवम्योरेव ।

पुनः पूजां तथाऽष्टम्यां विशेषेण समाचरेत् ॥
जागरं च स्वयं कुर्याद्बलिदानं महानिशि ।
प्रभूतबलिदानं च नवम्यां विधिवच्चरेत् ॥

इतिकालिकापुराणवचनात् । अत्र यद्यपि शिष्टपरिगृहीतकालिकापुराणादिषु मद्यस्वगात्ररुधिरपशुघातादिकमुक्तं तथापि ब्राह्मणस्य न भवति ।

मद्यं दत्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते ।
स्वगात्ररुधिरं दत्वा ब्रह्महत्यामवाप्नुयात् ॥

इति कालिकापुराण एव निषेधात् । सात्विकी जपयज्ञाद्यैर्नैवेद्यैश्च निरामिषैरित्येतत्प्रकारकसात्विकपूजाया भगवद्गीतादिषु ब्राह्मणाधिकारिकताया एवोक्तेः । पशुबलिदानस्य तु 'विजयार्थं नृपोत्तमः' इति राजपुरस्कारेणैव विहितत्वाच्च । अतो माषभक्तादिना तेन बलिदान कार्यम्—

माषकुल्माषमांसाद्यैर्देयो दिक्षु बलिर्निशि ।
कूष्माण्डमिक्षुदण्डश्च मद्यं मांसं तथैव च ॥
एते बलिसमा ज्ञेयास्तृप्तौ छागसमाःस्मृता ॥

इतिकालिकापुराणात् ।

---

१ मद्यमासव एव चेति पाठः । २ मता इति पाठः घ. ङ. ।

## अथ कुमारीपूजा ।

देवीपुराणे । ब्रह्मोवाच—

न तथा तुष्यते शक्र होमदानजपादिना ।
कुमारीपूजनेनात्र यथा देवी प्रसीदति ॥

अत्र नवरात्रे ।

शुक्लाष्टमीचतुर्दश्योर्नवम्यां च विशेषतः ॥

इति प्रसङ्गादन्यत्रापि तद्विधानम् । कुमारीपूजने विशेषो मदनरत्ने स्कान्दे—

एकैकां पूजयेत्कन्यामेकवृद्ध्या तथैव च ।
द्विगुणां त्रिगुणां वाऽपि प्रत्येकं नवकं तु वा ॥
एकवर्षा तु या कन्या पूजार्थं तां विवर्जयेत् ।
गन्धपुष्पफलादीनां प्रीतिस्तस्या न विद्यते ॥
द्विवर्षकन्यामारभ्य दशवर्षावधि क्रमात् ।

यथोक्तालाभे तु देवीपुराणे—

विवाहानन्तरं कन्यां कन्यात्वमुपजायते ।
तावत्संपूज्यते कन्या यावत्पुष्पं न दृश्यते ॥ इति ।

पूजामन्त्रस्तु स्कान्दे—

मन्त्राक्षरमयीं लक्ष्मीं मातृणां रूपधारिणीम् ।
नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम् ॥
जगत्पूज्ये जगद्वन्द्ये सर्वशक्तिस्वरूपिणि ।
पूजां गृहाण कौमारि जगन्मातर्नमोऽस्तु ते ॥
एवमभ्यर्चनं कुर्यात्कुमारीणां प्रयत्नतः ।
कञ्चुकैः श्वेतवस्त्रैश्च गन्धपुष्पाक्षतादिभिः ॥
नानाविधैर्भक्ष्यभोज्यैर्भोजयेत्पायसादिभिः ।

अत्रापूज्यकन्यास्वरूपमुक्तं तत्रैव—

हीनाधिकाङ्गीं कुष्ठीं च विनाशिकुलसंभवाम् ।
ग्रन्थिस्फुटितसर्वाङ्गीं रक्तपूयव्रणाङ्किताम् ॥
जात्यन्धां केकरां काणीं कुरूपां तनुरोमशाम् ।
संत्यजेद्रोगिणीं कन्यां दासीगर्भसमुद्भवाम् ॥ इति ।

विनाशि संततिशून्यम् । ग्रन्थयः कूर्परजान्वाद्याः । तनुश्चासौ

रोमशा चेति कर्मधारयः । देवीगृहे दीपा अहोरात्रं प्रज्वलनीयाः । मत्स्यपुराणे—

गीतवादित्रनिर्घोषं देवस्याग्रे च कारयेत् ।
घण्टा भवेदशक्तस्य सर्ववाद्यमयी यतः ॥ इति ।

पूजा च प्रत्यहं त्रिकालं कार्या 'त्रिकालं शिवपूजक' इति पूर्वोक्त-देवीपुराणात् ।

---

## बिल्वशाखापूजा ।

ज्योतिःशास्त्रे सप्तम्यां बिल्वशाखापूजोक्ता—

आश्विनस्य सिते पक्षे सुमुहूर्त्तेन सप्तमी ।
तस्यां च पत्रिकापूजा कर्त्तव्या न(वा?र)नायकैः ॥
प्रशस्तां सफलां बिल्वशाखामाहृत्य पूजयेत् ॥ इति ।

अथ बोधनप्रकारः । तत्कालो लिङ्गपुराणे—

कन्यायां कृष्णपक्षे तु पूजयित्वारभेद्दिवा ।
नवम्यां बोधयेद्देवीं महाविभवविस्तरैः ॥

भविष्ये—

षष्ठ्यां बिल्वतरौ बोधं सायंसन्ध्यासु कारयेत् ।

देवीपुराणे—

ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां बिल्वाभिमन्त्रणम् ॥

'बिल्ववृक्षायनमः' इति बिल्वतरुं संपूज्य बिल्ववृक्षे जयन्तीत्यादि च दुर्गे इहागच्छेत्यादिना दुर्गामावाह्य पूजयित्वा गीतवाद्यघोषपुरस्सरं देवीं विबोधयेत् । मन्त्रस्तु—

रावणस्य वधार्थाय रामस्यानुग्रहाय च ।
अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा ॥
इषे मासि सिते पक्षे नवम्यां मार्गयोगतः ।
श्रीवृक्षे बोधयामि त्वां यावत्पूजां करोम्यहम् ॥ इति ।

षष्ठ्यां तु इष इत्यादेः स्थाने—

अहमप्याश्विने षष्ठ्यां सायाह्ने बोधयाम्यतः ॥ इति ।

ततो बिल्वतरोरामन्त्रणम् । मन्त्रस्तु—

मेरुमन्दारकैलासहिमवच्छिखरे गिरौ ।
जातः श्रीफलवृक्ष त्वमम्बिकायाः सदा प्रियः ॥
श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतन ।
नेतव्योऽसि मया वृक्ष पूज्यो दुर्गास्वरूपतः ॥

इति अपरेद्युः पुनरपि संपूज्य कृताञ्जलिः प्रसादयेत् ।

बिल्ववृक्ष महाभाग सर्वदा शंकरप्रिय ।
गृहीत्वा तव शाखां तु दुर्गापूजां करोम्यहम् ॥
शाखाछेदोद्भवं दुःखं न च कार्यं त्वया प्रभो ॥ इति ।

ततः फलयुतामपराजितादिग्गतामेकां शाखां छेदयेद्वानस्पत्येन मन्त्रेण । क्वचित्तु 'छिन्धि फट् ॐ हूं फट् स्वाहा' इतिमन्त्रः । ततः शाखां गृह आनीय 'बिल्वशाखायैनमः' इति पूजयित्वा बिल्वशाखायां मृन्मयप्रतिमायां वा देवीमावाहनपुरःसरं पूजयित्वा माषभक्तादि बलिं च दत्वा दोलादिना शाखां प्रतिमां च पूजागृहद्वारदेशे स्थापयित्वा माषभक्तादिबलिं दत्वा पूजागृहस्थानि भूतानि 'भूतेभ्योनमः' इति गन्धादिभिः संपूज्य—

भूताः प्रेताः पिशाचाश्च ये वसन्त्यत्र भूतले ।
ते गृह्णन्तु मया दत्तो बलिरेष प्रसाधितः ॥
पूजिता गन्धपुष्पाद्यैर्बलिभिस्तर्पितास्तथा ।
देशादस्माद्विनिःसृत्य पूजां पश्यन्तु मत्कृताम् ॥

भूतेभ्य एष माषभक्तबलिर्नमम इति बलिं दत्वा

अपसर्पन्तु ते भूता ये भूता भूमिपालकाः ॥
भूतानामविरोधेन पूजाकर्म करोम्यहम् ।

'फट्' इति तान्यपसारयेत् ।

स्थितेषु तत्र भूतेषु नैवेद्यं मण्डलं तथा ।
विलुम्पन्ति महालुब्धा न च गृह्णन्ति देवताः ॥
तस्माद्यत्नेन कर्त्तव्यं भूतानामपसारणम् ।

इति कालिकापुराणात् । सर्षपादींश्च विकिरेत् । ततः पुनः शाखायां प्रतिमायां च देवीं संपूज्य गीतवाद्यादिपुरस्सरं पूजागृहं प्रवेश्य—

आरोपितासि दुर्गे त्वं मृन्मये श्रीफलेऽपि च ।
स्थिरा नितान्तं भूत्वा मे गृहे त्वं कामदा भव ।

इति पूजागृहे स्थापयेत् । ततः प्राणप्रतिष्ठां कृत्वा—

आवाहयाम्यहं देवीं मृन्मये श्रीफलेऽपि च ।
कैलासशिखराद्देवि विन्ध्याद्रेर्हिमपर्वतात् ॥
आगत्य बिल्वशाखायां चण्डिके कुरु सन्निधिम् ।

भगवति दुर्गे इहागच्छ इत्युभयोरावाह्य—

स्थापितासि मया देवि श्रीफले मृन्मयेऽपि च ।
आयुरारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते ॥

भगवति दुर्गे इह तिष्ठ इति स्थापयित्वा—

दुर्गे दुर्गस्वरूपासि सुरतेजोमहाबले ।
सदाऽऽनन्दकरे देवि प्रसीद मम सिद्धये ॥
एह्येहि भगवत्यम्ब शत्रुक्षयजयप्रदे ।
भक्तितः पूजयामि त्वां दुर्गे देवि सुरार्चिते ॥
पल्लवैश्च फलोपेतैः पुष्पैश्च सुमनोहरैः ।
पल्लवे संस्थिते देवि पूजये त्वां प्रसीद मे ॥
दुर्गे देवि इहागच्छ सान्निध्यमिह कल्पय ।
यज्ञभागान्गृहाण त्वं योगिनीकोटिभिः सह ॥

इति कृताञ्जलिः पठेत् । ततो जयन्तीत्यादिदुर्गायै नमः इदं पाद्यं पुष्पगन्धाक्षतकुङ्कुमदधिदूर्वाकुशतिलबिल्वपत्रसहितजलेनार्घ्यमाचमनीयं पञ्चामृतस्नानीयं पुनराचमनीयं वस्त्रं पुनराचमनीयानुलेपनादि दत्वा 'ॐ दुर्गायै नमः' इति पुष्पाञ्जलित्रयं दद्यात् । ततः—

अमृतोद्भवश्रीवृक्षोत्थं शङ्करस्य सदा प्रियम् ।
बिल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि ॥ इतिबिल्वपत्रम्,
ब्रह्मविष्णुशिवादीनां द्रोणपुष्पं सदाप्रियम् ।
तत्ते दुर्गे प्रयच्छामि सर्वकामार्थसिद्धये ॥

इति द्रोणपुष्पं च निवेद्य जयन्ती इत्यादिना पुष्पधूपदीपनैवेद्यपुनराचमनीयताम्बूलानि दत्वा पूजासाद्गुण्यार्थं दक्षिणां दत्वा स्तुतिभिः स्तुत्वा प्रणम्य बद्धाञ्जलिः प्रार्थयेत ।

महिषघ्नि महामाये चामुण्डे मुण्डमालिनि ।
द्रव्यमारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते ॥

कुङ्कुमेन समालब्धे चन्दनेन विलेपिते ।
बिल्वपत्रकृतापीडे दुर्गेऽहं शरणङ्गतः ॥

'सर्व मङ्गलेति' 'रूपंदेहि' इति च श्लोकं पठेत् । बलिं च दद्यात् । एवमेव महाष्टम्यामपि देवीपूजनं विशेषतस्त्वर्द्धरात्रे जागरणं च राजा विजयरूपकामोऽर्द्धरात्रे विशेषपूजापूर्वकं बलिं दद्यात्,

तदर्धयामिनीशेषे विजयार्थं नृपोत्तमः ॥
पश्चाव्दं लक्षणोपेतं गन्धधूपस्रगर्चितम् ।
विधिवत्कालि कालीति जप्त्वा खड्गेन घातयेत् ॥

इति देवीपुराणात् । पश्चाब्दं महिषमजं वा । तत्रैव शस्त्रादिपूजनं च कुर्यात् । महानवम्यामेवमेव पूजा बलिदानं होमश्च होममन्त्रश्च जयन्ती इत्यादिः ।

अनेनैव तु मन्त्रेण जपहोमादि कारयेत् ।

इति देवीपुराणात् । होम द्रव्यं च तत्रैवोक्तम्—

पूजयेत्तिलहोमैश्च दधिक्षीरघृतादिभिः । इति ॥

केचित्तु 'प्रतिश्लोकं च जुहुयात्पायसं तिलसर्पिषा' इति रहस्यग्रन्थवचनात् सप्तशतीस्तवेन प्रतिश्लोकं तिलसर्पिर्मिश्रपायसेन होमं कुर्वन्ति ।

राज्ञा त्वश्वपीडाशान्तये ब्रह्मपुराणोक्ता रैवन्तपूजाऽपि कार्या । स च वडवारूपायामुखायां सूर्यादुत्पन्नो वाजिगणाधिपतिः । पूजामन्त्रः शालिहोत्रे—

नमो देवाधिदेवाय तुरङ्गबलचारिणे ।
सूर्यपुत्राय देवाय तुरङ्गसहिताय च ॥
तुरङ्गपरिषद्यस्य नृगजो परिधावति ।
साश्वमश्वाधिपं रक्ष सतूणं त्वां व्रजाम्यहम् ॥
मन्त्रेणानेन रेवन्तं पाद्याद्यैरर्चयेत्सुधीः ।

दशम्यां प्रातः पूजां विधाय विसर्जयेत्—

संपूज्य प्रेषणं कुर्याद्दशम्यां शावरोत्सवैः ।

इति भविष्यपुराणात्,

ततः संप्रेषिता देवी दशम्यां शाबरोत्सवैः ।

१ पा इति पाठभेदः घ. २ शबरो इति पाठः घ.

इति कालिकापुराणाच्च । एवं पूजां विधाय प्रणम्य—

दुर्गां शिवां शान्तिकरीं ब्रह्माणीं ब्रह्मणः प्रियाम् ।
सर्वलोकप्रणेत्रीं च प्रणमामि सदा शिवाम् ॥
मङ्गलां शोभनां शुद्धां निष्कलां परमां कलाम् ।
विश्वेश्वरीं विश्वमातां चण्डिकां प्रणमाम्यहम् ॥
सर्वदेवमयीं देवीं सर्वरोगभयापहाम् ।
ब्रह्मेशविष्णुनमितां प्रणमामि सदा उमाम् ॥
विन्ध्यस्थां विन्ध्यनिलयां दिव्यस्थाननिवासिनीम् ।
योगिनीं योगमातां च चण्डिकां प्रणमाम्यहम् ॥
ईशानमातरं देवीमीश्वरीमीश्वरप्रियाम् ।
प्रणतोऽस्मि सदा दुर्गां संसारार्णवतारिणीम् ॥
य इदं पठति स्तोत्रं शृणुयाद्वापि यो नरः ।
स मुक्तः सर्वपापेभ्यो दुर्गया सह मोदते ॥

इत्यादिभिः स्तोत्रैः स्तुत्वा बद्धाञ्जलिर्महिषघ्नीत्यादिश्लोकचतुष्टयेन प्रार्थ्य—

विधिहीनं क्रियाहीनं भक्तिहीनं यदर्चितम् ।
पूर्णं भवतु तत्सर्वं त्वत्प्रसान्महेश्वरि ॥

इति प्रसाद्य 'क्षमस्व' इत्युक्त्वा एकपुष्पम् 'ॐ दुर्गायै नमः' इत्यैशान्यां निक्षिपन्विसृज्य—

उत्तिष्ठ देवि चण्डेशि शुभां पूजां प्रगृह्य च ।
कुरुष्व मम कल्याणमष्टाभिः शक्तिभिः सह ॥
गच्छ गच्छ परं स्थानं स्वस्थानं देवि चण्डिके ।
व्रज स्रोतोजले वृद्ध्यै तिष्ठ गेहे च भूतये ॥

इत्युत्थाप्य गीतवाद्यब्रह्मघोषपुरस्सरं स्रोतोजलसमीपं नीत्वा—

दुर्गे देवि जगन्मातः स्वस्थानं गच्छ पूजिते ।
संवत्सरे व्यतीते तु पुनरागमनाय वै ॥
इमां पूजां मया देवि यथाशक्त्या निवेदिताम् ।
रक्षणार्थं समादाय व्रज स्वस्थानमुत्तमम् ॥

इति प्रवाहयेत् । ततो देवीपूजास्थाने शान्तिकलशोदकेन ब्राह्मणै-

रभिषिक्तस्तेभ्यो दक्षिणां दत्वा ब्राह्मणान् भोजयित्वा बन्धुभिः सार्द्धं भुञ्जीत ।

---

## अथ लोहाभिसारिकं कर्म ।

भविष्योत्तरे—

जयाभिलाषी नृपतिः प्रतिपत्प्रभृति क्रमात् ।
लोहाभिसारिकं कर्म कारयेद्यावदष्टमीम् ।।
प्रागुदक्प्रवणे देशे पताकाभिरलङ्कृतम् ।
मण्डपं कारयेद्दिव्यं नवसप्तकरं शुभम् ।।
आग्नेय्यां कारयेत्कुण्डं हस्तमात्रं सुशोभनम् ।
मेखलात्रयसंयुक्तं योन्याऽश्वत्थदलाभया ।।
राजचिह्नानि सर्वाणि शस्त्राण्यस्त्राणि यानि च ।
आनीय मण्डपे तानि सर्वाण्येवाधिवासयेत् ।।
ततस्तु ब्राह्मणः स्नातः शुक्लाम्बरधरः शुचिः ।
ॐकारपूर्वकैर्मन्त्रैस्तल्लिङ्गैर्जुहुयाद्घृतम् ।।
शस्त्रास्त्रमन्त्रैर्होतव्यं पायसं घृतसंयुतम् ।
हुतशेषं तुरङ्गाणां गजानामुपहारयेत् ।।
बद्धप्रतिसरान्पश्च गजाश्वान्समलङ्कृतान् ।
भ्रामयेन्नगरे नित्यं नन्दिघोषपुरःसरान् ।।
प्रत्यहं नृपतिः स्नात्वा संपूज्य पितृदेवताः ।
पूजयेद्राजचिह्नानि फलमाल्यविलेपनैः ।।
हुतशेषं प्रदातव्यमौपनायनिकेऽनले ।
लोहनामाऽभवत्पूर्वमसुरः सुमहाबलः ।।
स देवैः समरे क्रुद्धैर्बहुधा शकलीकृतः ।
तदङ्गसंभवं सर्वं लोहं यद्दृश्यते क्षितौ ।।
तस्याभिहरणाद्राज्ञो विजयः समुदाहृतः । इति ।।

पूजामन्त्रश्च तत्रैव—

---

१ जने पाठः । घ. ग.

छत्रस्य— यथाऽम्बुदश्छादयति शिवायेमां वसुन्धराम् ।
तथा छादय राजानं विजयारोग्यवृद्धये ॥

चामरस्य—
शशाङ्ककरसङ्काश क्षीरडिण्डीरपाण्डुर ।
प्रोत्सारयाशु दुरितं चामराऽमरभूषण ॥

ध्वजस्य—शक्रकेतो महावीर्य सुपर्णस्त्वय्युपाश्रितः ।
पतत्रिराड्वैनतेयस्तथा नारायणध्वजः ॥
काश्यपेयोऽमृताहर्ता नागारिर्बलवाहनः ।
अप्रमेयो दुराधर्षो रणे देवारिसूदनः ॥
गरुत्मान्मारुतगतिस्त्वयि सन्निहितः स्थितः ।
शस्त्रवर्मायुधान्योधान् रक्ष त्वं च रिपून्दह ॥

पताकायाः—
हुतभुग्वसवो रुद्रा वायुः सोमो महर्षयः ।
नागकिन्नरगन्धर्वा यक्षभूतगणा ग्रहाः ॥
प्रमथाश्च सहाऽऽदित्यैर्भूतेशा मातृभिः सह ।
शक्रसेनापतिः स्कन्दो वरुणश्चाश्रितास्त्वयि ॥
प्रदहन्तु रिपून्सर्वान् राजा विजयमृच्छतु ।
यानि प्रयुक्तान्यरिभिर्दूषणानि समंततः ॥
एतानि सर्वशत्रूणां हतानि तव तेजसा ।
कालनेमिवधे यद्वद्यद्वत्त्रिपुरघातने ॥
हिरण्यकशिपोर्युद्धे युद्धे देवासुरे तथा ।
शोभितासि तथैवाद्य शोभस्व समयं स्मर ॥
नीलाम्बरामिमां दृष्ट्वा नश्यन्त्वाऽशु ममारयः ।

दुन्दुभेः—दुन्दुभे त्वं सपत्नानां घोषाद्धृदयकम्पनः ।
भव भूमिपसैन्यानां तथा त्वं जयवर्द्धनः ॥
यथा जीमूतघोषेण प्रहृष्यन्ति सुबर्हिणः ।
तथाऽस्तु तव शब्देन हर्षोऽस्माकं जयावहः ॥

शङ्खस्य—पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानां च मङ्गलम् ।
विष्णुना विधृतो नित्यमतः शान्ति प्रयच्छ मे ॥

---

१ त्वं धृतो पाठः ।

शिबिकान्दोलिकयोः—

महेन्द्रनिर्मिते दिव्ये देवराजादिसेविते ।
शिबिके पाहि मां नित्यं सदा त्वं सन्निधौ भव ॥

सिंहासनस्य—

विजयो जयदो जेता रिपुघाती शुभङ्करः ।
दुःखहा धर्मदः शान्तः सर्वारिष्टविनाशनः ॥
एते वै सन्निधौ यस्मात्तव सिंहा महाबलाः ।
तेन सिंहासनेति त्वं वेदैर्मन्त्रैश्च गीयसे ॥
त्वयि स्थितः शिवः साक्षात्त्वयि शक्रः सुरेश्वरः ।
त्वयि स्थितो हरिर्देवस्त्वदर्थं तप्यते तपः ॥
नमस्ते सर्वतोभद्र भद्रदो भव भूपतेः ।
त्रैलोक्यं जय सर्वत्र सिंहासन नमोऽस्तु ते ॥

अश्वस्य—गन्धर्वकुलजातस्त्वं मा भूयाः कुलदूषकः ।
ब्रह्मणः सत्यवाक्येन सोमस्य वरुणस्य च ॥
तेजसा चैव सूर्यस्य मुनीनां तपसा सदा ।
रुद्रस्य ब्रह्मचर्येण पवनस्य बलेन च ॥
प्रभावाच्च हुताशस्य वर्द्धस्व त्वं तुरङ्गम ।
स्मर त्वं राजपुत्रोऽसि कौस्तुभं च मणिं स्मर ॥
सुरासुरैर्मथ्यमानक्षीरोदादमृतादिभिः ।
जात उच्चैःश्रवाः पूर्वं तेन जातोऽसि तत्स्मर ॥
यां गतिं ब्रह्महा गच्छेन्मातृहा पितृहा तथा ।
भूम्यर्थेऽनृतवादी च क्षत्रियश्च पराङ्मुखः ॥
सूर्याचन्द्रमसौ वायुर्यावत्पश्यन्ति दुष्कृतम् ।
व्रजाश्व तां गतिं क्षिप्रं तच्च पापं भवेत्तव ॥
विकृतिं यदि गच्छेथा युद्धाध्वनि तुरङ्गम ।
रिपून्विजित्य समरे सह भर्त्रा सुखी भव ॥

गजस्य— कुमुदैरावणः पद्मः पुष्पदन्तोऽथ वामनः ।
सुप्रतीकोऽञ्जनो नील एतेऽष्टौ देवयोनयः ॥
तेषां पुत्राश्च पौत्राश्च वनान्यष्टौ समाश्रिताः ।
मंद्रो[1] भद्रो गजश्चैव राजसङ्कीर्ण एव च ॥

---

१ मन्दो पाठः । घ. ङ.

वने वने प्रसूतास्ते यूथानि सुमहान्ति च ।
पान्तु त्वां वसवो रुद्रा आदित्याः समरुद्गणाः ॥
भर्त्तारं रक्ष नागेन्द्र स्वामी च प्रतिपाल्यताम् ।
अवाप्नुहि जयं युद्धे गमने स्वस्ति नो व्रज ॥

कनकदण्डस्य—

प्रोत्सारणाय दुष्टानां साधुसंग्रहणाय च ।
ब्रह्मणा निर्मितश्चासि व्यवहारस्य सिद्धये ॥
यशो देहि सुखं देहि जयदो भव भूपतेः ।
ताडयाशु रिपून्सर्वान् हेमदण्ड नमोऽस्तु ते ॥

छुरिकायाः—

सर्वायुधानां प्रथमं निर्मितासि पिनाकिना ।
शूलायुधाद्विनिष्कृष्य कृत्वा मुष्टिग्रहं शुभम् ॥
चण्डिकायै प्रदत्तासि सर्वदुष्टनिबर्हिणि ।
तया विस्तारिता चासि देवानां प्रतिपादिता ॥
सर्वसत्वाङ्गभूतासि सर्वाशुभनिबर्हिणी ।
क्षुरिके रक्ष मां नित्यं शान्ति यच्छ नमोऽस्तु ते ॥

कट्टारकस्य—

रक्षाङ्गानि गजान्रक्ष रक्ष वाजिधनानि च ।
मम देहं सदा रक्ष कट्टारक नमोऽस्तु ते ॥

धनुषः— सर्वायुधमहामात्र सर्वदेवारिसूदन ।
चाप मां समरे रक्ष साकं सायकसत्तमैः ॥
धृतं कृष्णेन रक्षार्थं संहारार्थं हरेण च ।
त्रयीमूर्त्तिगतं तेजो धनुरस्त्रं नमाम्यहम् ॥

वर्मणः— शर्मप्रदस्त्वं समरे वर्म सैन्ये यशोऽद्य मे ।
रक्ष मां रक्षणीयोऽहं तापनेय नमोऽस्तु ते ॥

कुन्तस्य—प्रास तापय शत्रूंस्त्वमनया लोकमायया ।
गृहाण जीवितं तेषां मम सैन्यं च रक्षय ॥

खड्गस्य— असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः ।
श्रीगर्भो विजयश्चैव धर्मधारस्तथैव च ॥
इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा ।

नक्षत्रं कृत्तिका तुभ्यं गुरुर्देवो महेश्वरः ॥
हिरण्यं च शरीरं ते धाता देवो जनार्दनः ।
पिता पितामहो देवस्त्वं मां पालय सर्वदा ॥
इयं येन धृता क्षोणी हतश्च महिषासुरः ।
तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः ॥
लोहाभिसारिकं कर्म कृत्वैवं मन्त्रपूर्वकम् ।
जयं प्राप्नोति नृपतिः सर्वान्कामान्समश्नुते ॥

इतिलोहाभिसारिकम्

---

अत्र सूतके विशेषो विश्वरूपनिबन्धे—

आश्विने शुक्लपक्षे तु प्रारब्धे नवरात्रके ॥
शावाशौचे समुत्पन्ने क्रिया कार्या कथं बुधैः ।
देवीपूजा च कर्त्तव्या पशुयज्ञविधानतः ॥
सूतके पूजनं प्रोक्तं दानं चैव विशेषतः ।
देवीमुद्दिश्य कर्त्तव्यं तत्र दोषो न विद्यते । इति ॥
सूतके पारणं कुर्यान्नवम्यां होमपूर्वकम् ।
तदन्ते भोजयेद्विप्रान्दानं दद्याच्च शक्तितः ॥

तदन्ते सूतकान्त इत्यर्थः । तथा—

मलमासे न कर्त्तव्यं नवदुर्गोत्सवव्रतम् ।
अस्तंगते गुरौ शुक्रे सिंहस्थे विबुधाधिपे ॥
देवीपूजनमुद्दिष्टं स्थविरे बालके तथा ।
आद्यारम्भे विरामः स्याद्द्वितीयादौ न चिन्तयेत् । इति ॥

तथा स्त्रीणां विशेष उक्तो गारुडे—

गन्धालङ्कारताम्बूलपुष्पमालानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम् ॥

इति दिक् । इति नवरात्रकृत्यम् ।

---

## कार्तिकशुक्लप्रतिपन्निर्णयः ।

कार्तिकशुक्लप्रतिपत्पूर्वविद्धा ग्राह्या,

पूर्वविद्धा प्रकर्त्तव्या शिवरात्रिर्बलेर्दिनम् ।

इति वृद्धयमोक्तेः । माधवोपि—

बल्युत्सवं च पूर्वेद्युरुपवासवदाचरेत् ।

इति । पूर्वविद्धायामित्यर्थः इह तैलाभ्यङ्ग आवश्यकः । तथा च वृद्धवसिष्ठः—

वत्सरादौ वसन्तादौ बलिराज्ये तथैव च ।
तैलाभ्यङ्गमकुर्वाणो नरकं प्रतिपद्यते ।। इति ।।

अत्र विशेषः स्कान्दे—

मन्त्रः— प्रातर्गोवर्द्धनः पूज्यो द्यूतं चापि समाचरेत् ।
पूजनीयास्तथा गावस्त्याज्ये वाहनदोहने ।।
गोवर्द्धन धराधार गोकुलत्राणकारक ।
बहुबाहुकृतच्छाय गवां कोटिप्रदो भव ।।

अथ गोपूजनमन्त्रः—

या लक्ष्मीर्लोकपालानां धेनुरूपेण संस्थिता ।
घृतं वहति यज्ञार्थे मम पापं व्यपोहतु ।।
अग्रतः सन्तु मे गावो गावो मे सन्तु पृष्ठतः ।
गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ।। इति ।
ततोऽपराह्णसमये पूर्वस्यां दिशि भारत ।
मार्गपालीं प्रबध्नीयात्तुङ्गस्तम्भेऽथ पादपे ।।
कुशकाशमयीं दिव्यां लम्बकैर्बहुभिर्मुने ।

मन्त्रः— मार्गपालि नमस्तेऽस्तु सर्वलोकसुखप्रदे ।।
विधेयैः पुत्रदाराद्यैः पुनरेहि व्रतस्य मे ।
मार्गपालीतलेनेत्थं यान्ति गावो गजा वृषाः ।।
राजानो राजपुत्राश्च ब्राह्मणाः शूद्रजातयः ।
मार्गपालीं समुल्लंघ्य नीरुजः स्युः सुखान्विताः ।। इति ।

भविष्ये—

कृत्वैतत्सर्वमेवेह रात्रौ दैत्यपतेर्बलेः ।
पूजां कुर्यान्नृपः साक्षाद्भूमौ मण्डलके शुभे ।।
बलिमालिख्य दैत्येन्द्रं वर्णकैः पञ्चरङ्गकैः ।
गृहस्य मध्यशालायां विशालायां ततोऽर्चयेत् ।।
लोकश्चापि गृहस्यान्तः शय्यायां शुक्लतण्डुलैः ।
संस्थाप्य बलिराजानं फलैः पुष्पैश्च पूजयेत् ।।

मन्त्रस्तु—बलिराज नमस्तुभ्यं देवदानववन्दित ।

इन्द्रशत्रोऽमरराते विष्णुसान्निध्यदो भव ॥ इति ॥

तत्रैव ब्राह्मे[1]—

तस्माद्द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैः ।
तस्मिन्द्यूते जयो यस्य तस्य संवत्सरं जयः ॥
पराजयो विरुद्धश्च लाभनाशकरो भवेत् ।
दयिताभिश्च सहितैर्नेया सा च भवेन्निशा ॥ इति ।

इति प्रतिपन्निर्णयः ।

---

## अथ द्वितीया ।

सा तु परैव । युग्माग्नीति वचनात्,

एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी ।
त्रयोदशी अमावास्या उपोष्याः स्युः परान्विताः ॥

इति विष्णुधर्मोत्तराच्च । अत्र विशेषः स्कान्दे—

आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता ।
तस्यां रथे समारोप्य रामं वै भद्रया सह ॥
यात्रोत्सवं प्रवर्त्याथ प्रीणयेत द्विजान्बहून् । भद्रा सुभद्रा ।
श्रावणकृष्णद्वितीया बृहत्तपोच्यते ।

सा पूर्वविद्धा ग्राह्या । तदाह संवर्त्तः—

कृष्णाष्टमी बृहत्तपा सावित्री वटपैतृकी ।
कामत्रयोदशी रम्भा उपोष्याः पूर्वसंयुताः ॥ इति ।

उपोष्याः सेवनीया इति ।

कार्त्तिकशुक्लद्वितीया यमद्वितीयोच्यते । साऽपराह्णव्यापिनी ग्राह्या । कर्मकालवाक्यात् । तदुक्तं स्कान्दे—

ऊर्जे शुक्लद्वितीयायामपराह्णेऽर्चयेद्यमम् ।
स्नानं कृत्वा भानुजायां यमलोकं न पश्यति ॥
ऊर्जे शुक्लद्वितीयायां पूजितस्तर्पितो यमः ।
वेष्टितः किङ्करैर्हृष्टैस्तस्मै यच्छति वाञ्छितम् ॥

भविष्योत्तरेऽपि[2]—

कार्त्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर ।

---

१ महाशत्रु पाठः घ. ङ. २ 'तत्रैव' इति पाठः क्वाचित्को ।

यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः ।।
अतो यमद्वितीयेयं त्रिषु लोकेषु विश्रुता ।
अस्यां निजगृहे विप्र न भोक्तव्यं ततो नरैः ।।
स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् ।
दानानि च प्रदेयानि भगिनीभ्यो विशेषतः ।।
स्वर्णालङ्कारवस्त्रान्नपूजासंस्कारभोजनैः ।
सर्वा भगिन्यः संपूज्या अभावे प्रतिपन्नकाः ।।

अभावे भगिनीप्रतिपन्नकास्तत्स्थानीयाः ।

ब्रह्माण्डेऽपि—

या तु भोजयते नारी भ्रातरं युग्मके तिथौ ।
अर्चयेच्चापि ताम्बूलैर्न सा वैधव्यमाप्नुयात् ।
भ्रातुरायुःक्षयो राजन्न भवेत्तत्र कर्हिचित् ।। इति ।

इति द्वितीयानिर्णयः ।

---

## अथ तृतीयासामान्यनिर्णयः ।

सा तु परैव । तदुक्तं विष्णुधर्मोत्तरे—

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।
अमावास्या तृतीया च ता उपोष्याः परान्विताः ।।

रम्भाव्रते तु पूर्वैव । तदुक्तं ब्रह्मवैवर्त्ते—

रम्भाख्यां वर्जयित्वैकां तृतीयां द्विजसत्तम ।
अन्येषु शुभकार्येषु गणयुक्ता प्रशस्यते ।। इति ।

गणश्चतुर्थी । रामदोलोत्सवश्चैत्रशुक्लतृतीयायाम् । दोलोत्सवो रामार्चनचन्द्रिकायाम् । गारुडे—

मधौ शुक्लतृतीयायां जानकीरमणं प्रभुम् ।
राजोपचारैः संपूज्य मासमान्दोलयेत्कलौ ।।
दक्षिणाभिमुखं देवं दोलमानं सुरेश्वरम् ।
सुपूजितं सकृद्दृष्ट्वा सर्वपापैः प्रमुच्यते ।।
चैत्रे मासि सिते पक्षे तृतीयायां रमापतिम् ।
दोलारूढं समभ्यर्च्य मासमान्दोलयेत्कलौ ।।
दोलारूढं प्रपश्यन्ति ये कृष्णं मधुमाधवे ।
अपराधसहस्रैस्तैर्मुक्तास्ते नात्र संशयः ।।

दोलारूढस्य देवस्य येऽग्रे कुर्वन्ति जागरम् ।
सर्वपुण्यफलावाप्तिर्निमिषे निमिषे भवेत् ॥

सैव गौरीतृतीया इयमेव च गौरींतृतीयोच्यते। तत्र मुहूर्त्तमात्रा परयुता ग्राह्या । वचनन्त्वग्रे वक्ष्यते । मदनरत्ने स्कान्दे विशेषः—

तृतीयायां यजेद्देवीं शङ्करेण समन्विताम् ।
कुङ्कुमागरुकर्पूरमणिवस्त्रसुगन्धकैः ॥
स्रग्गन्धधूपदीपैश्च दमनेन विशेषतः ।
आन्दोलयेत्ततो वत्स शिवोमातुष्टये सदा ॥ इति ।

## त्रिलोचनयात्रा ।

वैशाखशुक्लतृतीयायां त्रिलोचनयात्रोक्ता काशीखण्डे—

राधशुक्लतृतीयायां स्नात्वा पैपिल्लिके ह्रदे ।
संतर्पयेत्पितॄन् देवांस्त्रिलोचनमथार्चयेत् ॥ इति ।

सैव अक्षयतृतीया । इयमेवाक्षयतृतीयोच्यते । तदुक्तं भविष्ये—

यात्वेषा कुरु शार्दूल वैशाखे तु महातिथिः ।
तृतीया साऽक्षया लोके गीर्वाणैरभिवन्दिता ॥
यत्किञ्चिद्दीयते दानं स्वल्पं वा यदि वा बहु ।
तत्सर्वमक्षयं यस्मात्तेनेयमक्षया स्मृता ॥ इति ।

इयमेव युगादिः । सा पूर्वाह्णव्यापिनी ग्राह्या । तदुक्तं नारदीये—

द्वे शुक्ले द्वे तथा कृष्णे युगादी कवयो विदुः ।
शुक्ले पूर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके ॥ इति ।

अत्र विशेषो गोविन्दार्णवे देवीपुराणे—

तृतीयायां तु वैशाखे रोहिण्यृक्षे प्रपूज्य च ।
उदकुम्भप्रदानेन शिवलोके महीयते ॥

कलशदानमन्त्रस्तु—

एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः ।
अस्य प्रदानात्तृप्यन्तु पितरोऽपि पितामहाः ॥
गन्धोदकतिलैर्मिश्रं सान्नं कुम्भं सदक्षिणम् ।
पितृभ्यः संप्रदास्यामि अक्षय्यमुपतिष्ठतु ॥ इति ।

---

१ हरितालिकानिर्णये । २ " पैलिप्पिले " पाठः । ङ.

एतदसंभवे तिलतर्पणं वा कार्यमित्युक्तं तत्रैव विष्णुपुराणे—

पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समाः सहस्रं रहस्यमेतन्मुनयो वदन्ति ॥ इति ।

तथा चात्र मलमासे सति विशेषश्चन्द्रिकायाम्—

यौगादिकं मासिकं च श्राद्धं चापरपक्षिकम् ।
मन्वादिकं तैर्थिकं च कुर्यान्मासद्वयेऽपि च ॥

अपरपक्षो नाम कृष्णपक्षोऽत्र गृह्यते । मलमासे महालयस्य निषेधात् ॥

ज्येष्ठशुक्लतृतीया रम्भातृतीयोच्यते । सा पूर्वा ग्राह्या । तदुक्तं माधवीये स्कान्दे—

बृहत्तपा तथा रम्भा सावित्री वटपैतृकी ।
कृष्णाष्टमी च भूता च कर्तव्या संमुखी तिथिः ॥ इति ।

सम्मुखी नाम सायाह्नव्यापिनीत्यर्थः । ब्रह्मवैवर्तेऽपि—

रम्भाख्यां वर्जयित्वैकां तृतीयां द्विजसत्तम ।
अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यते ॥ इति ।

गणश्चतुर्थी ।

भाद्रकृष्णतृतीयायां विशालाक्षीयात्रोक्ता काशीखण्डे—

भाद्रकृष्णतृतीयायामुपवासपरैर्नृभिः ।
कृत्वा जागरणं रात्रौ विशालाक्षीसमीपतः ॥ इति ।

अत्र रात्रिव्यापिनी ग्राह्या । रात्रौ जागरणविधानात् ।

भाद्रशुक्लतृतीया हरितालिकोच्यते । सा मुहूर्तमात्राऽपि परयुता ग्राह्या ।

तदाह वामनः—

मुहूर्तमात्रसत्वेऽपि दिने गौरीव्रतं परे ।
शुद्धाधिकायामप्येवं गणयोगप्रशंसनात् ॥ इति ।

चतुर्थीयुक्तायां तु फलाधिक्यमाह माधवीये आपस्तम्बः—

चतुर्थीसहिता या तु सा तृतीया फलप्रदा ।
अवैधव्यकरा स्त्रीणां पुत्रपौत्रप्रवर्द्धिनी ॥

द्वितीयायोगे प्रत्यवायमप्याह—स एव ।

द्वितीयाशेषसंयुक्तां या करोति विमोहिता ।
सा वैधव्यमवाप्नोति प्रवदन्ति मनीषिणः ॥ इति ।

आश्विनकृष्णतृतीयायां ललितादेव्या यात्रोक्ता काशीखण्डे—

इषे कृष्णतृतीयायां ललितां प्रतिपूज्य वै ।
नारी वा पुरुषो वापि स लभेद्वाञ्छितं फलम् ॥ इति ।

इति तृतीयानिर्णयः ।

---

## अथ चतुर्थी ।

सा परविद्धा ग्राह्या । 'युगभूतानाम्' इति युग्मवाक्यात् । माधवीये वृद्धवसिष्ठोऽपि—

एकादशी तथा षष्ठी अमावास्या चतुर्थिका ।
उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः ॥ इति ।

सर्वासु चतुर्थीषु ढुण्ढियात्रोक्ता काशीखण्डे—

कुर्यात्प्रतिचतुर्थीह यात्रां विघ्नेशितुः सदा ।
ब्राह्मणेभ्यस्तदुद्देशाद्देया वै मोदका मुदा ॥ इति ।

लैङ्गे—

अङ्गारकचतुर्थ्यां ये स्नात्वोत्तरवहाम्भसि ।
अभ्यर्च्याऽङ्गारकेशानं नमस्यन्ति नरोत्तमाः ॥
न तेषां ग्रहपीडा च कदाचित्क्वापि जायते ॥ इति ।

नागचतुर्थी तु मध्याह्नव्यापिनी परविद्धा ग्राह्या । तदाह गोविन्दार्णवे देवलः—

युगं मध्यन्दिने यत्र तत्रोपोष्य फणीश्वरान् ।
क्षीरेणाप्याय्य पञ्चम्यां पूजयेत्प्रयतो नरः ॥ इति ।

युगं चतुर्थी । विनायकव्रते तृतीयायुतैव । तदुक्तं तत्रैव—

चतुर्थी तु तृतीयायां महापुण्यफलप्रदा ।
कर्तव्या व्रतिभिर्वत्स गणनाथसुतोषिणी ॥

श्रावणकृष्णचतुर्थी सङ्कष्टचतुर्थीत्युच्यते सा चन्द्रोदयव्यापिनी ग्राह्या । तदुक्तं स्कान्दे—

श्रावणे बहुले पक्षे चतुर्थ्यां च विधूदये ।
तस्मिन्दिने व्रतं कार्यं सङ्कष्टाख्यं सुरेश्वरि ॥ इति ।

दिनद्वये चन्द्रोदये सत्वेऽसत्वे वा पूर्वैव । 'मातृविद्धो गणेश्वरः' इति वचनात् । भाद्रकृष्णचतुर्थ्यां बहुलाव्रतम् । तत्र पूर्वैव । तदुक्तं गोविन्दार्णवे पुराणसमुच्चये—

गौर्याश्चतुर्थी वटधेनुपूजा दुर्गार्चनं दुर्भरहोलिके च ।
वत्सस्य पूजा शिवरात्रिरेताः परान्विता घ्नन्ति नृपं सराष्ट्रम् ॥ इति ।

गणेशचतुर्थी वरदचतुर्थीत्युच्यते । सा मध्याह्नव्यापिनी पूर्वविद्धा ग्राह्या । पूर्वदिने मध्याह्नव्याप्त्यभावे परैव । तदुक्तं माधवीये बृहस्पतिना ।

चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते ।
मध्याह्नव्यापिनी चेत्स्यात्परतश्चेत्परेऽहनि ॥ इति ।

स्मृत्यन्तरेऽपि—

मातृविद्धा प्रशस्ता स्याच्चतुर्थी गणनायके ।
मध्याह्ने परतश्चेत्स्यान्नागविद्धा प्रशस्यते ॥ इति ।

सिद्धिविनायकव्रतेऽपि मध्याह्नव्यापिनी ग्राह्या ।

'प्रातःशुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृप' इति पूजायास्तत्काल-त्वात् । उभयदिने मध्याह्नव्याप्त्यभावे व्याप्तिसत्त्वे वा पूर्वैव । 'मातृ विद्धा प्रशस्यते' इति वाक्यात् । इयं च रविभौमाभ्यां युक्ता महती-त्युच्यते । तदुक्तं गोविन्दार्णवे वाराहे—

भाद्रे शुक्लचतुर्थी या भौमेनार्केण वा युता ।
महती साऽत्र विघ्नेशमर्चित्वेष्टं लभेन्नरः ॥ इति ।

अस्यां चन्द्रं न पश्येत् । तदाह तत्रैव मार्कण्डेयः—

भाद्रे मासि सिते पक्षे चतुर्थी स्वातियोगिनी ।
मिथ्याभिशापं कुरुते दृष्टचन्द्रा न संशयः ॥

पराशरोऽपि—

कन्यादित्ये चतुर्थ्यां तु शुक्ले चन्द्रस्य दर्शनम् ।
मिथ्याभिदूषणं कुर्याद्रात्रौ पश्येन्न तं सदा ॥

अत्र रात्रिग्रहणाद्दिवादर्शने न दोष इति । रात्रावेव चन्द्रप्राधान्यात् । तद्दोषशान्त्यर्थं तत्रैव पुराणान्तरम् ।

ततश्चतुर्थ्यां रात्र्यां यः प्रमादाद्वीक्ष्य मानवः ।
पठेत्पौराणिकं वाक्यं प्राङ्मुखो वाप्युदङ्मुखः ॥
सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः ।
सुकुमारक मारोदीस्तव ह्येष स्यमन्तकः ॥ इति ।

वरदचतुर्थीत्वं चास्या विवृतं तत्रैव—

सुरासुरानाप्नुवतो गणेशं भक्तिपूर्वकम् ।

तस्यां प्रादाद्वरं यस्मात्तस्माद्वरचतुर्थिका ॥ इति ।

माघशुक्लचतुर्थी तिलचतुर्थी । तदुक्तं काशीखण्डे—

माघशुक्लचतुर्थ्यां तु नक्तव्रतपरायणाः ।
ये त्वां ढुण्ढेऽर्चयिष्यन्ति तेऽर्च्याः स्युरसुरद्रुहाम् ॥
विधाय वार्षिकीं यात्रां चतुर्थीं प्राप्य तापसीम् ।
शुक्लांस्तिलान्गुडैर्बद्ध्वा प्राश्नीयाल्लड्डुकान्व्रती ॥

तापसीं माघीम् । अत्र नक्तग्रहणात्प्रदोषव्यापिनी ग्राह्येति दिक् ।

इति चतुर्थी निर्णयः ।

---

## अथ पञ्चमी ।

सा चतुर्थीयुतैव ग्राह्या । ' युगभूतानाम् ' इति युग्मवचनात् ।

पञ्चमी सप्तमी चैव दशमी च त्रयोदशी ।
प्रतिपन्नवमी चैव कर्तव्या संमुखी तिथिः ॥

इति पैठीनसिवचनात् । संमुखी सायाह्नव्यापिनी । ब्रह्मवैवर्तेऽपि—

प्रतिपत्पञ्चमी भूतसावित्री (?) वटपूर्णिमा ।
नवमी दशमी चैव नोपोष्याः परसंयुताः ॥ इति ।

माधवीये स्कान्देऽपि—

पञ्चमी च तथा कार्या चतुर्थीसंयुता विभो ॥ इति ।

मात्स्ये—

ब्रह्मणो यो दिनस्यादिः कल्पादिः संप्रकीर्तितः ।
वैशाखस्य तृतीया या या कृष्णा फाल्गुनस्य च ॥
पञ्चमी चैत्रमासस्य तथैवान्त्या तथापरा ।
शुक्ला त्रयोदशी माघे कार्तिकस्य तु सप्तमी ॥
नवमी मार्गशीर्षस्य सप्तैताः संस्मराम्यहम् ।
कल्पानामादयो ह्येता दत्तस्याऽक्षयकारकाः ॥

अत्रैताः शुक्लाः पौर्वाह्णिक्यः कृष्णा आपराह्णिक्य इति युगादिवद्व्यवस्था ।

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥ इतिवाक्यात् ।

अत्र पक्षविशेषानुपादाने शुक्लो ज्ञेयः । श्रावणशुक्लपञ्चमी नागपञ्चमीत्युच्यते । सा परविद्धा ग्राह्या । तदुक्तं चमत्कारचिन्तामणौ—

पञ्चमी नागपूजायां कार्या षष्ठीसमन्विता ।
तस्यां तु तुषिता नागा इतरा सचतुर्थिका । इति ॥

प्रतापमार्तण्डे स्मृत्यन्तरेऽपि—

श्रावणे पञ्चमी शुक्ला संप्रोक्ता नागपञ्चमी ।
तां परित्यज्य पञ्चम्यश्चतुर्थीसहिता हिताः ॥ इति ॥

अत्र कर्तव्यमुक्तं काशीखण्डे—

यः स्नातो नागपञ्चम्यां कुण्डे वासुकिसंज्ञके ।
न तस्य विषसंसर्गो भवेत्सर्पसमुद्भवः ॥
कर्तव्या नागपञ्चम्यां यात्रा वर्षासु तत्र वै ।
नागाः प्रसन्ना जायन्ते कुले तस्यापि सर्वदा ॥ इति ।

गोविन्दार्णवे भविष्येऽपि—

श्रावणे मासि पञ्चम्यां शुक्लपक्षे नराधिप ।
द्वारस्योभयतो लेख्या गोमयेन विषोल्बणाः ॥
पूजयेद्विधिवत्क्षीरदधिदूर्वाङ्कुरैः कुशैः ।
गन्धपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः ॥
ये तस्यां पूजयन्तीह नागान्भक्तिपुरस्सराः ।
न तेषां सर्पतो वीर भयं भवति कुत्रचित् ॥ इति ।

भाद्रशुक्लपञ्चमी ऋषिपञ्चमीत्युच्यते ॥ तदुक्तं ब्राह्मे—

नभस्ये शुक्लपक्षे तु यदा भवति पञ्चमी ।
नद्यादिके तदा स्नात्वा कृत्वा नियममेव च ॥
ब्राह्मणी क्षत्रिया वैश्या शूद्रा वाऽपि वरानने ।
कृत्वा नैमित्तिकं कर्म गत्वा निजगृहं पुनः ॥
वेदिं सम्यक् प्रकुर्वीत गोमयेनोपलिप्य ताम् ।
रङ्गवल्लिसमायुक्तां नानापुष्पोपशोभिताम् ॥
तत्र सप्तऋषीन्दिव्यान्भक्तियुक्ता प्रपूजयेत् ॥ इति ।

तत्र पञ्चमी पूर्वयुता ग्राह्येति मदनरत्ने । युग्मवाक्यात् ॥ माधवीयेऽप्येवम् । आश्विनस्य शुक्लपञ्चम्यामुपाङ्गललिताव्रतम् । तद्यद्यपि महानिबन्धेष्वनुक्तं तथाप्यतिप्रचारत्वान्निर्णीयते । तत्र पञ्चमी मध्याह्नव्यापिनी ग्राह्या, तत्रैव पूजाविधानात् । माधवीये स्मृत्यन्तरेपि—

पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः ॥ इति ।

मार्गशीर्षशुक्लपञ्चम्यपि नागपञ्चमी—

शुक्ले मार्गशिरे पुण्या श्रावणे या च पञ्चमी ।
स्नानदानैर्बहुफला नागलोकप्रदायिनी ।। इति हेमाद्रौ स्कान्दात् ।।

इयमपि परयुतैव ग्राह्या । पञ्चमी नागपूजायां कार्या षष्ठीसमन्विता इति पूर्वोक्तवचनात् ।।

इति पञ्चमीनिर्णयः ।

---

## अथ षष्ठी ।

सा तु सर्वेपूपवासव्रतादिषु स्कन्दव्रतातिरिक्ता सप्तमीयुतैव ग्राह्या । 'षण्मुन्योः' इति युग्मवाक्यात् । माधवीये स्कान्देऽपि—

नागविद्धा न कर्तव्या षष्ठी चैव कदाचन ।
सप्तमीसंयुता कार्या षष्ठी धर्मार्थचिन्तकैः ।। इति ।

अत्र पञ्चमीवेधः षण्मुहूर्तात्मको ज्ञेयः । 'नागो द्वादशनाडीभिर्दूषयत्युत्तरां तिथिम्' इतिवचनात् । तेन षण्मुहूर्तन्यूनपञ्चमीयोगे पूर्वैव । अस्यामेव रविवासरयोगे लोलार्कयात्रोक्ता काशीखण्डे—

कृतानि यानि पापानि नरैः संवत्सरादपि ।
नश्यन्ति क्षणतस्तानि षष्ठ्यर्के लोलदर्शनात् ।।

लोलो लोलार्कः । वार्षिकयात्राप्युक्ता तत्रैव—

मार्गशीर्षस्य सप्तम्यां षष्ठ्यां वा रविवासरे ।
विधाय वार्षिकीं यात्रां नरः पापात्प्रमुच्यते ।। इति ।

आषाढशुक्लषष्ठी स्कन्दषष्ठीत्युच्यते । सा पञ्चमीयुता ग्राह्या । तदुक्तं स्कान्दे—

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिश्चतुर्दशी ।
एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ।। इति ।

भाद्रकृष्णषष्ठी योगविशेषेण कपिलाषष्ठीत्युच्यते । तदुक्तं पुराणसमुच्चये—

भाद्रे मास्यसिते पक्षे भानौ चैव करेस्थिते ।
पाते कुजे च रोहिण्यां सा षष्ठी कपिला भवेत् ।।
संयोगे तु चतुर्णां तु निर्दिष्टा परमेष्ठिना ।। इति ।

मार्गशुक्ला चम्पाषष्ठी । तस्यां खण्डेरायाख्यमल्लारिपूजा ब्राह्मणभोजनादि मल्लारिमाहात्म्ये दाक्षिणात्येषु प्रसिद्धम् । अस्यां योगविशेषस्तत्रैवोक्तः ।

मार्गे भाद्रपदे शुक्ला षष्ठी वैधृतिसंयुता ।
रविवारेण संयुक्ता सा चम्पेतीह कीर्तिता ।। इति ।

तथा— मार्गशीर्षेऽमले पक्षे षष्ठ्यां वारेंऽशुमालिनः ।
शततारागते चन्द्रे लिङ्गं स्याद्दृष्टिगोचरम् ।। इति ।

इयं च योगविशेषेण पूर्वा परा वा ग्राह्या । तदभावे सप्तमीयुता कार्या । पूर्वोक्तसामान्यनिर्णयादिति दिक् ।

इति षष्ठीनिर्णयः ।

---

## अथ सप्तमी ।

सा सर्वत्र पूर्वैव । ' षण्मुन्योः ' इति युग्मवचनात् । स्कान्देऽपि—

षष्ठ्या युता सप्तमी च कर्तव्या तात सर्वदा ।। इति ।

वैशाखशुक्लसप्तम्यां गङ्गापूजोक्ता ब्राह्मे—

वैशाखे शुक्लसप्तम्यां जह्नुना जाह्नवी स्वयम् ।
क्रोधात्पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् ।
तां तत्र पूजयेद्देवीं गङ्गां गगनमेखलाम् ।। इति ।

अत्र पूर्वाह्णव्यापिनी ग्राह्या । दिनद्वये साम्येन पूर्वाह्णगामिन्यां पूर्वा, सामान्यनिर्णयात् । आश्विनशुक्लसप्तमी देवीपूजायां परयुता ग्राह्या—

युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया ।
रवेरुदयमीक्षन्ते न तासु तिथियुग्मता ।।

इति प्रतापमार्तण्डे भविष्योक्तेः । वर्षवृद्धिर्जन्मतिथिः ।

अत्रैव मूलनक्षत्रे पुस्तकस्थापनमुक्तं रुद्रयामले—

मूलऋक्षे सुराधीश पूजनीया सरस्वती ।
पूजयेत्प्रत्यहं देव यावद्वैष्णवमृक्षकम् ।।
नाध्यापयेन्न च लिखेन्नाधीयीत कदाचन ।। इति ।
पुस्तके स्थापिते देवि विद्याकामो द्विजोत्तमः ।

सङ्ग्रहेऽपि—

आश्विनस्य सिते पक्षे मेधाकामः सरस्वतीम् ।।
मूलेनाऽऽवाहयेद्देवीं श्रवणेन विसर्जयेत् ।

माघशुक्लसप्तमी रथसप्तमीत्युच्यते । साऽरुणोदयव्यापिनी स्नानादौ ग्राह्या—

सूर्यग्रहणतुल्या तु शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ।

इति चन्द्रिकायां विष्णूक्तेः । प्रयागे यदि लभ्येत कोटिसूर्यग्रहैः समा ॥ इति । स्मृत्यन्तराच्च । दिनद्वयेऽरुणोदये चेत्पूर्वैव 'षण्मुन्योः' इति युग्मवाक्यात् । अत्र कृत्यं भविष्ये—

सौवर्णे राजते ताम्रे भक्त्याऽलाबुमये तथा ।
तैलेन वर्तिर्दातव्या महारजनरञ्जिता ॥
समाहितमना भूत्वा दत्त्वा शिरसि दीपकम् ।
भास्करं हृदये ध्यात्वा इमं मन्त्रमुदीरयेत् ॥
नमस्ते रुद्ररूपाय रसानां पतये नमः ।
वरुणाय नमस्तेऽस्तु हरिवास नमोऽस्तु ते ॥
जले परिहरेद्दीपं ध्यात्वा संतर्प्य देवताः ॥ इति ।

महारजनं कुसुम्भम् । परिहरेत् मुञ्चेत् । काशीखण्डे विशेषः—

लोलार्के रथसप्तम्यां स्नात्वा गङ्गासिसङ्गमे ।
सप्तजन्मकृतैः पापैर्मुक्तो भवति तत्क्षणात् ॥ इति ।

इयं च षष्ठी रविवासरयोगेऽतिफलदा ।

षष्ठी च सप्तमीयोगे वारश्चेदंशुमालिनः ॥
योगोऽयं पद्मको नाम सहस्रार्कग्रहैः समः ॥

इति स्मृतिचन्द्रोदये गर्गोक्तेः ॥

अर्घ्यमन्त्रश्च काशीखण्डे—

यदाजन्मकृतं पापं मया सप्तसु जन्मसु ।
तन्मे रोगं च शोकं च माकरी हन्तु सप्तमी ॥ इति ।

इति सप्तमी ।

## अथाष्टमीसामान्यनिर्णयः ।

सा कृष्णा पूर्वा, शुक्ला परा ग्राह्या—

शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता ॥ इति ।
कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्वविद्धैव कर्तव्या परविद्धा न कुत्रचित् ॥ इति ।
उपवासेषु राजेन्द्र एष धर्मः सनातनः ।

इति नैगमात् । सर्वास्वष्टमीषु भैरवयात्रा काशीखण्डे—

अष्टम्यां च चतुर्दश्यां रविभूमिजवासरे ।
यात्रां च भैरवीं कृत्वा नरः पापैः प्रमुच्यते ।। इति ।

तत्रैव— अष्टम्यां च चतुर्दश्यां भौमवारे विशेषतः ।
संपूज्य सततं कार्या दुर्गां दुर्गार्तिनाशिनीम् ।। इति ।

चैत्रशुक्लाष्टम्यां विशेषस्तत्रैव—

चैत्राष्टम्यां महायात्रां भवान्याः कारयेत्सुधीः ।
अष्टाधिकाः प्रकर्तव्याः शतकृत्वः प्रदक्षिणाः ।। इति ।

इयं च परयुता ग्राह्या । युग्मवचनात् । श्रावणकृष्णाष्टमी द्वेधा । जन्माष्टमी जयन्ती च । तत्र केवला जन्माष्टमी । रोहिणीयुक्ता जयन्ती । तत्राद्योक्ता स्कान्दे—

अष्टमी श्रावणे मासि कृष्णपक्षे यदा भवेत् ।
कृष्णजन्माष्टमी ज्ञेया महापातकनाशिनी ।। इति ।

पुराणान्तरेऽपि—

श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् ।
रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुताम् ।। इति ।

जयन्ती तूक्ता वह्निपुराणे—

कृष्णाष्टम्यां भवेद्यत्र कलैका रोहिणी यदि ।
जयन्ती नाम सा प्रोक्ता उपोष्या सा प्रयत्नतः ।। इति ।

स्कान्देऽपि—

प्राजापत्येन संयुक्ता अष्टमी तु यदा भवेत् ।
श्रावणे बहुले सा तु सर्वपापप्रणाशिनी ।।
जयं पुण्यं च कुरुते जयन्तीं तां विदुर्बुधाः ।। इति ।

शैवपुराणे शिववाक्यम्—

शृणु वत्स प्रवक्ष्यामि अष्टमीभेदनिर्णयम् ।
श्रावणे कृष्णपक्षस्य घटिषष्टिर्यदा भवेत् ।।
तदा जन्माष्टमी ख्याता संपूर्णा सा प्रकीर्तिता ।
रोहिणीऋक्षसंयुक्ता जयन्ती सा तु कथ्यते ।।
जयन्ती यदि लभ्येत तत्र पुण्यं न गण्यते ।। इति ।

पाद्मे— प्रेतयोनिगतानां तु प्रेतत्वं नाशितं नरैः ।
यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता ।।

किं पुनर्बुधवारेण सोमेनापि विशेषतः ।
किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा ॥ इति ।

सोमः सोमवार इति केचित् । युक्तं तु चन्द्रोदय इति । 'अर्धरात्रे तु योगोऽयं तारापत्युदये सति' इति विष्णुधर्मोत्तरैकमूलकल्पनालाघवात् । तत्र जन्माष्टमी नित्या ।

ये न कुर्वन्ति जानन्तः कृष्णजन्माष्टमीव्रतम् ।
ते भवन्ति नराः प्राज्ञ व्याला व्याघ्राश्च कानने ॥

इति स्कान्देऽकरणेऽनिष्टश्रुतेः ।

श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् ।
न करोति महाप्राज्ञ व्यालो भवति कानने ॥

इति भविष्ये ।

जयन्त्यपि नित्या काम्या च । तत्र नित्या स्कान्दे—

शूद्रान्नेन तु यत्पापं शवहस्तस्थभोजने ।
तत्पापं लभते कुन्ति जयन्तीविमुखो नरः ॥
न करोति यदा विष्णोर्जयन्तीसंभवं व्रतम् ।
यमस्य वशमापन्नः सहते नारकीं व्यथाम् ॥

इत्यकरणे प्रत्यवायश्रवणात् । काम्याप्युक्ता स्कान्दे—

महाजयार्थं कुरुतां जयन्तीं मुक्तयेऽथवा ।
धर्ममर्थं च कामं च मोक्षं च मुनिपुंगव ॥
ददाति वाञ्छितानर्थान् ये चान्येऽप्यतिदुर्लभाः ।

इति फलविशेषश्रवणात् ।

अस्मिंश्च व्रते उपवासः पूजा चेत्युभयं प्रधानम्—

जन्माष्टमीदिने प्राप्ते येन भुक्तं द्विजोत्तम ॥
त्रैलोक्यसम्भवं पापं तेन भुक्तं न संशयः ।

इति स्कान्दात्,

अर्द्धरात्रे तु रोहिण्यां यदा कृष्णाष्टमी भवेत् ।
तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम् ॥
सोपवासो हरेः पूजां कृत्वा तत्र न सीदति ॥

इति भविष्यपुराणाच्च फलसम्बन्धावगमादिति नव्याः । तन्न, चित्रोद्भिद्भिरपेक्षफलसम्बन्धात्प्रयोगभेदापत्तेः । ननु पूर्वोदाहृतेषु वाक्येषु गौरवपरिजिहीर्षया केवलं फलसम्बन्ध एव क्रियते ।

श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् ।
न करोति नरो यस्तु भवति ब्रह्मराक्षसः ॥

इत्यादिकालविधायकेषु भविष्यत्पुराणादिवचनेषु कृष्णजन्माष्टमीव्रतशब्देनोभयोरुपादानात् दर्शपूर्णमासराजसूयादिवत्प्रयोगैक्यमिति चेन्न । प्रातिस्विकवाक्यैः पृथक्फलसम्बन्ध उद्भिच्चित्रादिवत्परस्परनैरपेक्ष्येणेतिकर्तव्यताया अप्यन्वयाद्भिन्न एव प्रयोगविधिः कल्प्यते । एवं चैकशब्दोपादानमपि 'य इष्टा पशुना सोमेन' इत्यादिवन्न विरुध्यते । अस्तु पृथक्प्रयोगतेतिचेन्न, अनन्तरस्वकृतव्रतानुष्ठानपद्धतौ एकप्रयोगलेखनविरोधात् । तस्मात् 'सोपवासो हरेः पूजाम्' इत्यनन्तरोपन्यस्ते

मासि भाद्रपदेऽष्टम्यां कृष्णपक्षेऽर्द्धरात्रके ।
शशाङ्के वृषराशिस्थे ऋक्षे रोहिणिसंज्ञके ॥
योगेऽस्मिन्वसुदेवाद्धि देवकी मामजीजनत् ।
तस्मान्मां पूजयेत्तत्र शुचिः सम्यगुपोषितः ॥

इत्यादावुपवासस्य गुणत्वप्रतीतेः स 'दृतो धावति'इत्यादिवत्फलिसंस्कारः । पूजैव प्रधानम् । एवं चोपवासस्य पारार्थ्ये निर्ज्ञाते यस्तद्वाक्ये फलोल्लेखः स केवलः स्तावक एव पर्णतादिवत् । 'अङ्गे फलश्रुतिरर्थवादः' इतिन्यायात् ।

ननु— वासुदेवं समुद्दिश्य सर्वपापप्रशान्तये ।
उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम् ॥
अथ कृष्णाष्टमीं देवीं नभश्चन्द्रं सरोहिणिम् ।
अर्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनि ॥

इतिभविष्यदुक्ते संकल्पवाक्ये उपवासस्य कर्तव्यत्वेनोल्लेखात्सोऽपि प्रधानमिति चेन्न । अङ्गत्वेऽप्युपवासस्य 'क्रियां क्रियासंबन्धिनं वा प्रकाशयन्मन्त्रः करणत्वं भजते' इतिन्यायात् क्रियासंबन्ध्युपवासप्रकाशकत्वेनापि मन्त्रस्य करणत्वोपपत्तेः । उपवासेनेति उपलक्षणे तृतीया । उपवासस्य पूजाकरणत्वासंभवात् । ननु पूर्वोदाहृतयोः पूजाफलसंबन्धबोधकवाक्ययोरकरणे निन्दार्थवादादेरभावात्कथं व्रतस्य नित्यत्वोद्घोष इतिचेन्न । उक्तयुक्तया पूजाया एव फलसंबन्धे पूर्वोदाहृतेषु 'श्रावणे बहुले पक्षे' इत्यादिवाक्येषु कृष्णजन्माष्टमीव्रतशब्देन पूजाया ग्रहणात् युक्तोऽकरणनिन्दार्थवादश्रवणान्नित्यत्वोद्घोषः इति । तस्मादुपवासोऽङ्गं पूजैव तु प्रधानम् ।

अस्याश्च पूजायाः काल उक्तो विष्णुधर्मोत्तरे—

रोहिणीसहिता कृष्णा मासि भाद्रपदेऽष्टमी ।
सप्तम्यामर्द्धरात्राधःकलयाऽपि यदा भवेत् ॥
तत्र जातो जगन्नाथः कौस्तुभी हरिरीश्वरः ।
तमेवोपवसेत्कालं तत्र कुर्याच्च जागरम् ॥
अर्द्धरात्रे तु योगोऽयं तारापत्युदये तथा ।
नियतात्मा शुचिः स्नातः पूजां तत्र प्रवर्तयेत् ॥ इति ।

वसिष्ठस्तु स्पष्टमर्द्धरात्रस्य मुख्यकालत्वमाह—

अष्टमी रोहिणीयुक्ता निश्यर्द्धे दृश्यते यदि ।
मुख्यकालः स विज्ञेयस्तत्र जातो हरिः स्वयम् ॥ इति ।

मुख्यस्य प्रधानस्य कालो मुख्यकालः । अत्र केवलाष्टमी चतुर्द्धा । पूर्वेद्युरेव निशीथव्यापिनी परेद्युरेव उभयेद्युः नोभयेद्युश्चेति । तत्र प्रथमद्वितीयपक्षयोः कर्मकालव्यापित्वेनासंदिग्धैव । अन्त्ययोरपि पक्षयोः प्रातः सङ्कल्पकाले सत्वादाधिक्याच्च परैव । ब्रह्मवैवर्तेऽपि—

वर्जनीया प्रयत्नेन सप्तमीसंयुताऽष्टमी ॥ इति ।

रोहिणीयुतापि चतुर्द्धा पूर्वेद्युरेव निशीथयोगवती, परेद्युरेव तादृशी, उभयेद्युः, नोभयेद्युश्चेति । तत्र पूर्वेद्युर्निशीथयुता पूर्वैव—

कार्या विद्धापि सप्तम्या रोहिणीसहिताष्टमी ।

इति पाद्मात् ।

सप्तमीसंयुताष्टम्यां निशीथे रोहिणी यदि ।
भविता साऽष्टमी पुण्या यावच्चन्द्रदिवाकरौ ॥

इति वह्निपुराणात् ।

जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत् ॥

इति गारुडाच्च । भविष्ये विष्णुधर्मोत्तरे च—

रोहिण्यामर्द्धरात्रे च यदा कृष्णाष्टमी भवेत् ।
तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम् ॥
प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी ।
सोपवासो हरेः पूजां कृत्वा तत्र न सीदति ॥
अर्द्धरात्रे तु योगोऽयं तारापत्युदये तथा ।
रोहिणीसहिता कृष्णा मासि भाद्रपदेऽष्टमी ॥
अर्द्धरात्रादधश्चोर्ध्वं कलयापि यदा भवेत् ।
तत्र जातो जगन्नाथः कौस्तुभी हरिरीश्वरः ॥

तथा— सोमयोगे तु रोहिण्यां निशीथे राजसत्तम।
समजायत गोविन्दो बालरूपी चतुर्भुजः।
तस्मात्तं पूजयेत्तत्र निशीथे राजसत्तम ॥ इति।

अवशिष्टेषु त्रिषु पक्षेषु परदिन एव व्रतम्। तदुक्तं ब्रह्मवैवर्ते—
वर्जनीया प्रयत्नेन सप्तमी सहिताऽष्टमी।
सऋक्षाऽपि न कर्तव्या सप्तमीसंयुताऽष्टमी ॥ इति।

स्कान्दे—सप्तमीसहिताष्टम्यां भूत्वा ऋक्षं द्विजोत्तम।
प्राजापत्यं द्वितीयेऽह्नि मुहूर्तार्द्धं भवेद्यदि।
तदाऽष्टयामिकं ज्ञेयं प्रोक्तं व्यासादिभिः पुरा ॥

पाद्मे— मुहूर्तेनापि संयुक्ता संपूर्णा साऽष्टमी भवेत्।
किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा ॥ इति।

यदा तु पूर्वेद्यू रोहिणीरहिता निशीथगा च तिथिः परेद्युः रोहिणीसहिता निशीथास्पृक्च तदा पूर्वैव ग्राह्या। कर्मकालशास्त्रस्य सर्वापेक्षया प्राबल्यस्य सर्वग्रन्थसिद्धत्वात्। रोहिणीयोगे तु प्राशस्त्यात्फलातिशयमात्रं न तु तस्य निर्णयोपयोगिता। नवमीबुधवारवत्।

अन्यथा—प्रेतयोनिगतानां तु प्रेतत्वं नाशितं नरैः।
यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता ॥
किं पुनर्बुधवारेण सोमेनापि विशेषतः।
किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा ॥

इति पाद्मवचसा पूर्वेद्युरर्द्धरात्रे वर्तमानां सरोहिणीमप्यष्टमीं त्यक्त्वा बुधनवमीयुता परैव कार्याऽऽपद्येत।

यत्तु पुनर्नव्याः। सत्यं कर्मकालशास्त्रं सर्वापेक्षया प्रबलं तथापीयमस्मिन्व्रते परैव ग्राह्येत्येवंविधेन प्रातिस्विकेन शास्त्रेण बाध्यते। अत एव विष्णुरहस्ये—
प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी।
मुहूर्तमपि लभ्येत सोपोष्या सा महाफला ॥ इति।

वह्निपुराणेऽपि—
कृष्णाष्टम्यां भवेद्यत्र कलैकाऽरोहिणी स्मृता।
जयन्ती नाम सा प्रोक्ता उपोष्यैव प्रयत्नतः ॥

स्कान्दे— उदये चाष्टमी किञ्चिन्नवमी सकला यदि।

भवेत्तु बुधसंयुक्ता प्राजापत्यर्क्षसंयुता ॥
अपि वर्षशतेनापि लभ्यते यदि वा नवा ॥ इति ।

ब्रह्मवैवर्ते—

दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणीकला ।
रात्रियुक्तां प्रकुर्वीत विशेषेणेन्दुसंयुताम् ॥

इति प्रातिस्विकशास्त्रस्य कर्मकालशास्त्रापेक्षया प्राबल्यं माधवाचार्यादिभिर्व्यवस्थापितमेवेत्याहुः । तदपि न, तदेव हि प्रातिस्विकं शास्त्रं कर्मकालबाधकं यदनन्यथासिद्धं भवति । संभवति त्वस्य न्याय्योऽन्योऽर्थः । तथाहि—यत्तावद्ब्रह्मवैवर्तीयं तत्र 'इन्दुसंयुताम्' इत्यस्य 'सोमेनापि विशेषत' इत्यनेनैकमूलकल्पनालाघवलिप्सया सोमवारपरत्वान्नास्य दिवावच्छेदेन रात्र्यवच्छेदेन वा रोहिणीकलायोगाभावे निशीथगा ग्राह्येत्ययमर्थः । निशीथगमकशब्दाभावात् । किन्तु सोमवारयुक्ता विशेषेणाधिक्येन रात्रियुक्ता ग्राह्येति । एवं चोभयदिने निशीथस्पर्शाभावे सोमवाराधिकरात्रिव्याप्तेर्निर्णायकत्वमुक्तं भवति । यद्वा । 'इन्दुसंयुताम्' इत्यस्य निशीथपरत्वेऽपि रात्रिपदेनैवाधिकरात्रिं लक्षयित्वाहोरात्रावच्छेदेन कलयाऽपि रोहिणीयोगाभावेऽधिकरात्रिव्यापिनीं कुर्वीतेत्युक्त्वा विशेषेणेत्यादिना तदपोद्यते । सत्यपि रोहिणीयोगे इन्दुसंयुतैव ग्राह्येति । अथवा निशीथस्य मुहूर्तमात्रात्मकत्वादुभयदिने वैषम्येण निशीथस्पर्शेऽहोरात्रे रोहिणीयोगाभावे च विशेषेणाधिक्येनेन्दुसंयुक्ता निशीथगा ग्राह्या । अधिकनिशीथव्यापिनीति यावत् । रोहिणीयोगे त्वधिकनिशीथव्यापिनीमपि विहाय स्वल्पनिशीथयोगिनीं रोहिणीयुक्तामेव कुर्वीतेति । यच्च स्कान्दम् 'उदये चाष्टमी किञ्चित्' इति । तत्राप्युदयशब्दस्य 'तारापत्युदये सति' इत्याद्येकमूलकल्पनालाघवलिप्सया चन्द्रोदयपरतैवाङ्गीकार्या न सूर्योदयपरता । यदि त्वेवं न व्याख्यायते ततो यथाश्रुतवाक्यबलाद्यदा पूर्वेद्युर्निशीथेऽष्टमीमात्रसत्वमुत्तरेद्युश्च निशीथास्पर्शिन्यष्टमी रोहिणीयुक्तापि च सती यदा बुधयुक्ता तदैवोत्तरा स्यात् न तु तदभावे 'यावद्वचनं वाचनिकम्' इतिन्यायात् । यदि तु बुधाभावेऽपि रोहिणीमात्रवशादेवोत्तरोच्यते तदा रोहिणीयोगाभावेऽपि बुधमात्रसद्भावादुत्तरा स्यात् । अन्यतराभावेऽप्येतद्वचनप्रवृत्तेः स्वीकारादृक्षयोगवद्वारयोगस्यापि प्राशस्त्यहेतुत्वाच्च । अतोऽर्द्धजरती-

यापत्तिः । किंच यथा पूर्वेद्युर्निशीथेऽष्टमीमात्रसत्वे उत्तरेद्युश्च निशीथात्पूर्वमृक्षयोगे बुधसत्वे च एतद्वचनादुत्तरेद्युर्व्रतमेवं पूर्वेद्युर्निशीथे सर्क्षाष्टमीसत्वे बुधाधिक्यादुत्तरेद्युर्व्रतापत्तिः । प्रपञ्चिता चैतद्वचोव्याख्या द्वैतनिर्णये गुरुभिः । यच्च विष्णुरहस्यस्थं यदपि वह्निपुराणस्थं तत्र मुहूर्तपदं निशीथाख्यमुहूर्तपरं कलापदं तद्वर्तिकलापरमिति न विरोधः । वस्तुतस्त्वेतद्वाक्यद्वयमुभयदिनेऽनिशीथेऽष्टमीव्याप्तावव्याप्तावेकदेशव्याप्तौ वा सावकाशम् । अतो न कर्मकालव्याप्तिबाधकम् । तस्मात्कर्मकालशास्त्राबाधात्पूर्वैव ग्राह्या । यदि तु जयन्तीव्रतं जन्माष्टमी व्रताद्भिन्नं तदा तद्भवतु परेऽहनि । न तु जन्माष्टमीव्रतम् ।

यत्तु माधवाचार्यैर्जयन्तीव्रतेन जन्माष्टमीव्रतस्य प्रसङ्गसिद्धिरभ्यधायि । तन्न । कालभेदात् । योऽपि च तैरेव नामभेदान्निमित्तभेदाद्रूपभेदाच्छुद्धमिश्रत्वभेदान्निर्देशभेदाच्च कर्मभेद उक्तः सोऽप्ययुक्तः । कर्मनामधेयभेदे हि स्यात्कर्मभेदः । नह्यत्र जयन्तीशब्दः कर्मनाम किंतु रोहिणीसहिताया अष्टम्याः । 'रोहिणी च यदा कृष्णपक्षेऽष्टम्यां द्विजोत्तम । जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिः' इति विष्णुधर्मोत्तरात् । यदपि रूपभेदादित्युक्तं तत्र रूपशब्देन धात्वर्थभेदो गुणभेदो वाभिप्रेतः । नाद्यः । कर्मभेदसाधकतयाऽऽमिक्षाधिकरणोपन्यासासंगतेः । नह्यामिक्षाधिकरणे धात्वर्थभेदाद्भेदः सिध्यति । नान्त्यः । उत्पत्तिशिष्टस्य गुणस्य वाक्यान्तरे श्रवणात् । निमित्तभेदशुद्धमिश्रत्वभेदनिर्देशभेदानां तु कर्मभेदकत्वं न क्वापि व्युत्पादितम् ।

ननु— जन्माष्टमी जयन्ती च शिवरात्रिस्तथैव च ।
पूर्वं विद्धैव कर्तव्या तिथिभान्ते च पारणम् ॥

इति भृगुवाक्येऽनन्यपरपुनःश्रवणलक्षणादभ्यासादेव भेद इति चेन्न, एतस्य वचसो जन्माष्टमीमत्स्यादिजयन्त्यनुवादेन पूर्वविद्धत्वगुणमात्रविधायकत्वेनाप्युपपत्तेः । अथ पूर्वोदाहृतेषु वाक्येषूपवसेत्पूजयेच्चेत्यपर्यायधातुनिष्पन्नाख्यातरूपाच्छब्दान्तरादेव भेद इष्यते । तत्र शब्दान्तरेणोपवासपूजयोर्भेदेऽप्युपवासस्य पूजाङ्गत्वस्य प्राक्स्थापितत्वेन न स्वातन्त्र्येण कालनिर्णयप्रयोजकत्वम् । प्रकरणान्तराद्भेद इति चेन्न । उपलभ्यमानस्मृतिपुराणादिषु असन्निध्यनुपलम्भात् । यदि स्यात्तदा किमितीमं राजमार्गं विहाय शुद्धमिश्रत्वादि कुमार्गो माधवाचार्यैराश्रि-

येत । एवमपि स्वमात्रसाक्षिकत्वेन प्रकरणान्तराद्भेदे समाश्रीयमाणे भवतु जयन्तीव्रतं परेऽहनि । जन्माष्टमीव्रते तु सत्यपि उत्तरदिने निशीथाव्यापिन्या अष्टम्या रोहिणीयोगे पूर्वदिने च केवलाया निशीथयोगे पूर्वैव ग्राह्येति दिक् ।

---

## अथ जन्माष्टमीव्रतप्रयोगः ।

व्रतपूर्वदिने दन्तधावनं कृत्वोपवासदिने प्रातः—

सूर्यः सोमो यमः कालः संध्ये भूतान्यहः क्षपा ।
पवनो दिक्पतिर्भूमिराकाशं खचरा नराः ॥
ब्राह्मं शासनमास्थाय कल्पध्वमिह सन्निधिम् ।

इत्युक्त्वा—सफलपुष्पाक्षतजलपूर्णताम्रपात्रमादाय मासाद्युल्लिख्यामुकफलकामः पापक्षयकामो वा कृष्णप्रीतये कृष्णजन्माष्टमीव्रतमहं करिष्ये ।

तथा— वासुदेवं समुद्दिश्य सर्व पापप्रशान्तये ।
उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम् ॥
अद्य कृष्णाष्टमीं देवीं नभश्चन्द्रसरोहिणीम् ।
अर्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनि ॥
एनसो मोक्षकामोऽस्मि यद्गोविन्दमयोनिजम् ।
तन्मे मुञ्चतु मां त्राहि पतितं शोकसागरे ॥
आजन्ममरणं यावद्यन्मया दुष्कृतं कृतम् ।
तत्प्रणाशय गोविन्द प्रसीद पुरुषोतम ।

इत्युक्त्वा पात्रस्थं जलं क्षिपेत् । ततः कदलीस्तम्भवासोभिराम्रपल्लवयुतसजलपूर्णकलशैर्दीपैः पुष्पमालादिभिर्युतमगुरुधूपितमग्निखड्गकृष्णछागरक्षामणिद्वारन्यस्तमुसलादियुतं मङ्गलोपेतं षष्ठया देव्या युतं देवक्याः सूतिकागृहं विधाय तस्य समन्ताद्भित्तिषु सकुसुमाञ्जलीन् देवगन्धर्वादीन् खड्गचर्मधरवसुदेवदेवकीनन्दयशोदागर्गगोपीगोपान् कंसनियुक्तान्गोधेनुकुञ्जरान् यमुनां तन्मध्ये कालियमन्यच्च तत्कालीनं गोकुलचरितं यथासंभवं लिखित्वा सूतिकागृहमध्ये प्रच्छदपटावृत्तं मञ्चकं स्थापयित्वा मध्याह्ने नद्यादिजले तिलैः स्नात्वाऽर्द्धरात्रे 'सपरिवारश्रीकृष्णपूजां करिष्ये' इति संकल्प्य—

काञ्चनी राजती ताम्री पैत्तली मृण्मयी तथा ।
वार्क्षी मणिमयी चैव वर्णकैर्लिखिता तथा ॥

इत्युक्तान्यतमेन प्रतिमां विधायाग्न्युत्तारणं कृत्वा प्रतिमाकपोलौ स्पृष्ट्वा तद्देशस्थाने तत्तद्देवतानां मूलमन्त्रं प्रणवादिचतुर्थ्यन्तं नाम च 'अस्मै देवत्वं सङ्ख्यायै(?)स्वाहा' इति मन्त्रं पठन्प्राणप्रतिष्ठां कुर्यात् । अस्मा इत्यस्य स्थाने तत्तद्देवतानाम ग्राह्यम्—

गायद्भिः किन्नराद्यैः सततपरिवृता वेणुवीणानिनादैः
शृङ्गारादर्शकुन्तप्रवरकृतकरैः किङ्करैः सेव्यमाना ॥
पर्यङ्के स्वास्तृते या मुदिततरमुखी पुत्रिणी सम्यगास्ते
सा देवी देवमाता जयति सुवदना देवकी दिव्यरूपा ॥

इति देवकीम्,

मां चापि बालकं सुप्तं पर्यङ्के स्तनपायिनम् ।
श्रीवत्सवक्षसं शान्तं नीलोत्पलदलच्छविम् ॥

इति श्रीकृष्णं च ध्यात्वा 'ॐनमो देव्यै श्रियै' इति श्रियं देवकीसहितं वसुदेवं यशोदासहितं नन्दं श्रीकृष्णसहितं बलदेवं चण्डिकां च नमोन्तैर्नाममन्त्रैः पूजयेत् । तत्र मन्त्राः—

योगेश्वराय देवाय योगानां पतये विभो ।
योगोद्भवाय नित्याय गोविन्दाय नमोनमः ॥ स्नाने ।
यज्ञेश्वराय यज्ञाय तथा यज्ञोद्भवाय च ।
यज्ञानां पतये नाथ गोविन्दाय नमोनमः ॥ धूपादौ ।
विश्वेश्वराय देवाय तथा विश्वोद्भवाय च ।
विश्वस्य पतये तुभ्यं गोविन्दाय नमोनमः ॥ नैवेद्ये ।

गारुडे तु—यज्ञाय यज्ञेश्वराय यज्ञपतये यज्ञसम्भवाय गोविन्दाय नमोनमः इत्यर्घम्, सर्वेषां यज्ञपदानां स्थाने योगपदान्युक्त्वायमेव मन्त्रः । स्नाने, विश्वाय विश्वेश्वराय इत्याद्युक्त्वा नैवेद्ये, धर्मायधर्मेश्वराय इत्यादिस्वाहान्त, स्तिलहोमे विश्वाय विश्वेश्वराय इत्यादिः शयने, सोमाय सोमेश्वराय इत्यादिश्चन्द्रपूजायामिति मन्त्रा उक्ताः । ततो गव्यघृतेनाग्नौ वसोर्द्धारा क्वचिद्गुडघृतेनेति । ततो जातकर्मनालच्छेदषष्ठीपूजानामकर्माणि संक्षेपेण कार्याणि । ततश्चन्द्रोदये रोहिणीयुतं चन्द्रं स्थण्डिले प्रतिमायां वा नाममन्त्रेण संपूज्य—

शङ्खे तोयं समादाय सपुष्पकुशचन्दनम् ।
जानुभ्यां धरणीं गत्वा चन्द्रायार्घ्यं निवेदयेत् ।।
क्षीरोदार्णवसंभूत अत्रिगोत्रसमुद्भव ।
गृहाणार्घ्यं शशाङ्केमं रोहिण्या सहितो मम ।। इति ।

ततः— ज्योत्स्नायाः पतये तुभ्यं ज्योतिषां पतये नमः ।
नमस्ते रोहिणीकान्त सुधावास नमोऽस्तु ते ।।
नभोमण्डलदीपाय शिरोरत्नाय धूर्जटेः ।
कलाभिर्वर्द्धमानाय नमश्चन्द्राय चारवे ।। इति प्रणमेत् ।।

ततः— अनघं वामनं शौरिं वैकुण्ठं पुरुषोत्तमम् ।
वासुदेवं हृषीकेशं माधवं मधुसूदनम् ।।
वाराहं पुण्डरीकाक्षं नृसिंहं दैत्यसूदनम् ।
दामोदरं पद्मनाभं केशवं गरुडध्वजम् ।।
गोविन्दमच्युतं कृष्णमनन्तमपराजितम् ।
अधोक्षजं जगद्बीजं सर्गस्थित्यन्तकारिणम् ।।
अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमम् ।
नारायणं चतुर्बाहुं शङ्खचक्रगदाधरम् ।।
पीताम्बरधरं नित्यं वनमालाविभूषितम् ।
श्रीवत्साङ्कं जगत्सेतुं श्रीकृष्णं श्रीधरं हरिम् ।।
शरणं तु प्रपद्येऽहं सर्वकामार्थसिद्धये ।
प्रणमामि सदा देवं वासुदेवं जगत्पतिम् ।।

इति मन्त्रैः प्रणम्य ।

त्राहि मां सर्वलोकेश हरे संसारसागरात् ।
त्राहि मां सर्व पापघ्न दुःखशोकार्णवात्प्रभो ।।
सर्वलोकेश्वर त्राहि पतितं मां भवार्णवे ।
देवकीनन्दन श्रीश हरे संसारसागरात् ।।
त्राहि मां सर्वदुःखघ्न रोगशोकार्णवाद्धरे ।
दुर्गतांस्त्रायसे विष्णो ये स्मरन्ति सकृत्सकृत् ।।
सोऽहं देवातिदुर्वृत्तस्त्राहि मां शोकसागरात् ।
पुष्कराक्ष निमग्नोऽहं मायाविज्ञानसागरे ।।

त्राहि मां देवदेवेश त्वत्तो नान्योऽस्ति रक्षिता ।
यद्बाल्ये यच्च कौमारे यौवने यच्च वार्द्धके ॥
तत्पुण्यं वृद्धिमाप्नोतु पापं हर हलायुध ।

इति मन्त्रैः प्रार्थयेत् । ततः स्तोत्रश्रवणपुराणश्रवणादिना जागरणं कृत्वा द्वितीयेऽन्हि प्रातःकालीनं नित्यं कृत्वा पूर्ववद्देवं पूजयित्वा ब्राह्मणान् भोजयित्वा तेभ्यः सुवर्णधेनुवस्त्रादि 'कृष्णो मे प्रीयताम्' इति दत्वा—

यं देवं देवकी देवी वसुदेवादजीजनत् ।
भौमस्य ब्रह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नमः ॥
सुजन्मवासुदेवाय गोब्राह्मणहिताय च ।

शान्तिरस्तु शिवं चास्तु इत्युक्त्वा प्रतिमामुद्वास्य तां ब्राह्मणाय दत्वा पारणां कृत्वा व्रतं समापयेत् । 'सर्वाय सर्वेश्वराय सर्वपतये सर्वसंभवाय गोविन्दाय नमोनमः' इति पारणायाम् । 'भूताय भूतपतये नमः' इत्यादि समापने मन्त्रः । उद्यापनं त्वनुक्तत्वान्नास्ति—

एवं यथोक्ततिथौ व्रतं कृत्वा परदिने पारणं कुर्यात् ।
अष्टम्यामथ रोहिण्यां न कुर्यात् पारणं क्वचित् ॥
हन्यात्पुराकृतं कर्म उपवासार्जितं फलम् ।
तिथिरष्टगुणं हन्ति नक्षत्रं च चतुर्गुणम् ॥
तस्मात्प्रयत्नतः कुर्यात्तिथिभान्ते च पारणम् । इति ।

तत्र दिवसे उभयान्ते पारणमितिमुख्यः कल्पः । एकतरान्तस्त्वनुकल्पः । तत्र यदि तिथिनक्षत्रयोरन्यतरस्य चान्तो रात्रा भवति तदा तद्रात्रौ न कुर्यात्किन्तु दिवैव—

सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते ।
अन्यथा पुण्यहानिः स्याद्दते धारणपारणात् ॥

इति ब्रह्मवैवर्ते निषेधात् ।

अन्यतिथ्यागमो रात्रौ तामसस्तैजसो दिवा ।
तामसे पारणं कुर्वंस्तामसीं गतिमश्नुते ॥

इति गरुडपुराणाच्च । यत्तु केनचिदुक्तं तिथिनक्षत्रयोगादिवापारणस्यासम्भवे रात्रावपि कुर्यात् । तदुक्तं माधवीये स्मृत्यन्तरे—

तिथ्यृक्षयोर्यदा छेदो नक्षत्रान्तमथापि वा ।

अर्द्धरात्रेऽपि तत्कुर्यात्पारणं त्वपरेऽहनि ॥ इति ।

ब्रह्माण्डपुराणेपि—

न रात्रौ पारणं कुर्यादृते वै रोहिणीव्रतात् ।
तत्र निश्यपि तत्कुर्याद्वर्जयित्वा महानिशाम् ॥

इति । पूर्वोदाहृतं सामान्यवाक्यद्वयं जन्माष्टमीपारणातिरिक्तपारणपरमिति । तन्न । ब्रह्माण्डीयवचने तावदपिशब्दश्रवणात् 'अपि वेदान्तगं रणे' इति वत्स्वार्थत्यागेनोभयान्तादरः प्रतीयते न रात्रिविधिः । एवं च स्तुत्यर्थत्वे संभवति न सामान्यवचनबाधकत्वमेतस्य युज्यते । यदपि 'तिथ्यृक्षयोः' इति वचनं तत्रापि एकं पदमेकत्रान्वितमन्यत्र विना बलवदनुपपत्त्या नान्वेति इति न्यायात् । अर्द्धरात्रे यदोभयान्तस्तदा वचनान्तरबोधितदिन एव पारणं कुर्यान्न त्वर्द्धरात्रे पारणमित्येवंपरम् । न्यायश्चायं तृतीये सिद्धः । 'यथाचमसमन्यांश्चमसाश्चमसिनो भक्षयन्ति । अथैतस्यहारियोजनस्य सर्व एव लिप्सन्ति' इत्यत्र चमसिपदस्य हारियोजनान्वयानभ्युपगमात् । किञ्च त्वयापि हि परेऽहनीत्यस्याविवक्षाऽङ्गीक्रियत एव । अन्यथा तृतीयदिने पारणापत्तिः । यदप्यत्र माधवेनोक्तम्–अर्द्धरात्रशब्देन रात्रिमात्रं गृह्यत इति तदपि प्रमाणाभावेनैवापास्तम् । यद्यविवक्षा तदा दिनस्यैव ग्रहणौचित्यात् । तस्मादस्मदुक्त एव पक्षः श्रेयान् । तत्र शक्त उभयान्तेऽशक्तस्त्वन्यतरान्ते उत्सवान्ते वा—

'तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्वीत पारणम्' इति कालादर्शादिनिबन्धवचनात् । उत्सवान्ते जागराद्युत्सवान्ते ।

---

## दूर्वाष्टमी ।

भाद्रशुक्लाष्टमी दूर्वाष्टमी । भविष्ये—

शुक्लाष्टमी तिथिर्या तु मासि भाद्रपदे भवेत् ।
दूर्वाष्टमी तु सा ज्ञेया नोत्तरा सा विधीयते ॥ इति ।

इयं च पूर्वविद्धा । तदुक्तं वृहद्यमेन—

श्रावणी दुर्गनवमी दूर्वा चैव हुताशिनी ।
पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनम् ॥ इति ।

अत्र स्त्रीणामेवाधिकारो न पुंसाम्—

या न पूजयते दूर्वां मोहादिह यथाविधि।
जन्मानि त्रीणि वैधव्यं लभते नात्र संशयः।
तस्मात्संपूजनीया सा प्रतिवर्षं वधूजनैः॥

इति चन्द्रप्रकाशे पुराणसमुच्चयेऽकरणे वैधव्यरूपानिष्टश्रुतेः। अतएव नित्यमपीदम्। इदं तु व्रतं भाद्रशुक्ले अगस्त्योदयसंभावनायां भाद्रकृष्णाष्टम्यां कार्यम्—

शुक्ले भाद्रपदे मासि दूर्वासंज्ञा तथाष्टमी।
सिंहार्के एव कर्तव्या न कन्यार्के कदाचन।
सिंहस्थे चोत्तमा सूर्येऽनुदिते मुनिसत्तमे॥

इति गोविन्दार्णवे स्कान्दात्। अत्र कृत्यमुक्तं मदनरत्ने भविष्यपुराणे—

शुचौ देशे प्रजातायां दूर्वायां ब्राह्मणोत्तम।
स्थाप्य लिङ्गं ततो गन्धैः पुष्पैर्धूपैः समर्चयेत्॥
दध्यक्षतैर्द्विजश्रेष्ठ अर्घ्यं दद्यात्त्रिलोचने।
दूर्वाशमीभ्यां विधिवत्पूजयेच्छ्रद्धया युता॥

तत्र मन्त्रः—

त्वं दूर्वेऽमृतजन्मासि वन्दितासि सुरासुरैः।
सौभाग्यं सन्ततिं देहि सर्वकार्यकरी भव॥
यथा शाखाप्रशाखाभिर्विस्तृतासि महीतले।
तथा ममापि सन्तानं देहि त्वमजरामरम्॥ इति।

भक्ष्यनियमोऽपि भविष्ये—

अनग्निपक्वमश्नीयाद्दन्नं दधि फलं तथा।
अक्षारलवणं ब्रह्मन्नश्नीयान्मधुनान्वितम्॥ इति।

इयं च ज्येष्ठामूलशून्यरौहिणमुहूर्तव्यापिनी ग्राह्या—

मुहूर्त्ते रौहिणेऽष्टम्यां पूर्वा वा यदि वा परा।
दूर्वाष्टमीति सा कार्या ज्येष्ठां मूलं च वर्जयेत्॥

इति पुराणसमुच्चयात्। दिनद्वये रौहिणज्येष्ठामूलयोगे तदभावे वा पूर्वैव। 'श्रावणी दुर्गनवमी' इतिपूर्वोक्तवाक्यात्।

अत्रैव ज्येष्ठापूजनं लैङ्गे—

कन्यार्के याऽष्टमी शुक्ला ज्येष्ठर्क्षे महती स्मृता ।
अलक्ष्मीपरिहाराय ज्येष्ठां तत्र प्रपूजयेत् ॥

तथा— मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठर्क्षसंयुते ।
यस्मिन्कस्मिन्दिने कुर्याज्ज्येष्ठायाः परिपूजनम् ॥

इतिस्कान्दोक्तेः । इयं ज्येष्ठायोगवशेन ग्राह्या । नक्षत्रयोगाभावे तु परैव । पूर्वेद्यू रात्रौ नक्षत्रयोगे तु पूर्वैव । तथा च तत्रैव—

नवमीसहिता कार्या अष्टमी नात्र संशयः ।
मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठर्क्षसंयुते ॥
रात्रिर्यस्मिन्दिने कुर्याज्ज्येष्ठायाः परिपूजनम् ॥ इति ।

तत्रैव— यस्मिन्दिने भवेज्ज्येष्ठा मध्याह्नादूर्ध्वमप्यणुः ।
तस्मिन्हविष्यं पूजा च न्यूना चेत्पूर्ववासरे ॥ इति ।

निर्णीतपूजादिनात्पूर्वदिनेऽनुराधायामावाहनम् । उत्तरदिने मूले च विसर्जनम् । तथाच स्कान्दे—

मैत्रेणावाहयेद्देवीं ज्येष्ठायां तु प्रपूजयेत् ।
मूले विसर्जयेद्देवीं त्रिदिनं व्रतमुत्तमम् ॥ इति ।

महालक्ष्मीयात्राप्यस्यामेवोक्ता काशीखण्डे—

महालक्ष्म्यष्टमीं प्राप्य तत्र यात्रा कृता नृणाम् ।
संपूजितेह विधिवत्पद्मा सद्म न मुञ्चति ॥

व्रतवन्तस्तु एतदारभ्याश्विनकृष्णाष्टमीपर्यन्तं षोडशदिनानि प्रत्यहं यात्रां कुर्युरिति शिष्टाः । अत्र व्रतमुक्तं पुराणसमुच्चये—

श्रियोऽर्चनं भाद्रपदे सिताष्टमी
प्रारभ्य कन्यामगते च सूर्ये ।
समापयेत्तत्र तिथौ च याव-
त्सूर्यस्तु पूर्वार्द्धगतो युवत्याः ॥ इति ।

कन्यामगते सिंहस्थे सूर्ये प्रारम्भः युवत्याः कन्यायाः पूर्वार्द्धे सूर्येऽवस्थिते सति समाप्तिरित्यर्थः । प्रथमारम्भ एवायं नियमः षोडशवार्षिके तत्प्रयोगगतद्वितीयादिवर्षे तु न नियमः । एतच्चार्द्धरात्रातिक्रमवर्तिन्यामष्टम्यां कार्यम्—

अर्द्धरात्रमतिक्रम्य वर्तते योत्तरा तिथिः ।
तदा तस्यां तिथौ कार्यं महालक्ष्मीव्रतं सदा ॥

इतिचन्द्रप्रकाशे स्मृत्यन्तरात्—

आश्विनशुक्लाष्टमी महाष्टमीत्युच्यते । तथाच ब्रह्मपुराणे—

तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी ।
प्रादुर्भूता महाघोरा योगिनीकोटिभिर्वृता ।
अतोऽत्र पूजनीया सा तस्मिन्नहनि मानवैः ॥ इति ।

तत्र आश्विनशुक्लपक्षे । इयं चाष्टमी नवमीयुता ग्राह्या । तथा च देवीपुराणे—

सप्तमीवेधसंयुक्ता यैः कृता तु महाष्टमी ।
पुत्रदारधनैर्हीना भ्रमन्तीह पिशाचवत् ॥

मदनरत्ने स्मृतिसङ्ग्रहेऽपि—

शरन्महाष्टमी पूज्या नवमीसंयुता सदा ।
सप्तमीसंयुता नित्यं शोकसन्तापकारिणी ॥
जम्भेन सप्तमीयुक्ता पूजिता तु महाष्टमी ।
इन्द्रेण निहतो जम्भस्तस्माद्दानवपुङ्गवः ॥
तस्मात्सर्वप्रयत्नेन सप्तमीसहिताष्टमी ।
वर्जनीया प्रयत्नेन मनुजैः शुभकाङ्क्षिभिः ॥
सप्तमी कलया यत्र परतश्चाष्टमी भवेत् ।
तेन शल्यमिदं प्रोक्तं पुत्रपौत्रक्षयप्रदम् ॥
पुत्रान्हन्ति पशून्हन्ति हन्ति राष्ट्रं सराजकम् ।
हन्ति जातानजातांश्च सप्तमीसहिताष्टमी ॥ इति ।

ब्रह्मवैवर्ते—

शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता ॥ इति ।

वसुरन्ध्रयोरिति युग्मवचनम् । अत्र त्रिमुहूर्तन्यूनापि सप्तमी वर्जनीया-प्रयोजिका, न त्रिमुहूर्तैव । तथाच ब्रह्मपुराणे—

सप्तमीशल्यसंयुक्ता वर्जनीया सदाऽष्टमी ।
स्तोकाऽपि सा तिथिः पुण्या यस्यां सूर्योदयो भवेत् ॥ इति ।

स्तोका कलाकाष्ठादिमात्राऽपीत्यर्थः । इयमेव भौमयुताऽतिप्रशस्ता ।

अष्टम्यामुदिते सूर्ये दिनान्ते नवमी भवेत् ।
कुजवारो भवेत्तत्र पूजनीया प्रयत्नतः ॥

इति मदनोक्तस्मृत्यन्तरात् । नवमीयुक्तालाभे तु सप्तमीयुतैव कार्या । तत्पुराण्येव—

सप्तम्याऽपि युता कार्या मूलेनापि विशेषतः ।

इत्यादीनि वचनानि । नवरात्राशक्तौ त्रिरात्राद्युक्तं देवीपुराणे—

नवरात्रव्रतेऽशक्तस्त्रिरात्रं चैकरात्रकम् ।
व्रतं चरति यो भक्तस्तस्मै दास्यामि वाञ्छितम् ॥ इति ।

केवलाष्टम्युपवासस्तु पुत्रवता न कार्यः ।

उपवासं महाष्टम्यां पुत्रवान्न समाचरेत् ॥
यथा तथा वा पूतात्मा व्रती देवीं प्रपूजयेत् ।

इति कालिकापुराणात् ।

मार्गशीर्षकृष्णाष्टम्यां काशीखण्डे काशीवासनिर्विघ्नतासिद्ध्यर्थंकालभैरवपूजोक्ता ।

कृत्वा च विविधां पूजां महासंभारविस्तरैः ।
नरोमार्गासिताष्टम्यां वार्षिकं विघ्नमुत्सृजेत् ॥ इति ।

तत्रैव— तीर्थे कालोदके स्नात्वा कृत्वा तर्पणमत्वरः ।
विलोक्य कालराजानं निरयादुद्धरेत्पितॄन् ॥ इति ।

उपोषणमप्युक्तमस्यामेव काशीखण्डे—

मार्गशीर्षासिताष्टम्यां कालभैरवसन्निधौ ।
उपोष्य जागरं कुर्वन्सर्वपापैः प्रमुच्यते ॥ इति ।

अत्रोपोषणाङ्गतयाऽर्घ्यदानमपि कार्यमिति शिवरहस्ये । अत्रोपवासजागरणयोः प्रधानयोरहोरात्रसाध्यत्वेनाहोरात्रयुताष्टमी ग्राह्या—

अहोरात्रव्रतं यच्च एकमेकतिथौ गतम् ।
तस्यामुभययोगिन्यामाचरेत्तद्व्रतं व्रती ॥

इति स्मृतेः । यदा तु पूर्वदिने सायाह्ने उत्तरे प्रदोषे तुल्या तदा पूर्वैव—रुद्रव्रतेषु सर्वेषु कर्तव्या संमुखी तिथिः । इति ब्रह्मवैवर्तात् । यत्तु कश्चित् उपोषणस्यांगभूतमर्घ्यदानमितिस्थितम् इति, शिवरहस्यादुपोषणमेव प्रधानं न जागरणमिति । तत्तुच्छम् , अर्घ्यदानस्योपोषणाङ्गत्वेऽपि जागरणे तत्त्वायोगात् । यदपि 'मध्याह्ने संस्थिते रवौ' इत्युपक्रम्य—

तदोग्ररूपादनघान्मत्तः श्रीकालभैरवः ।
आविरासीत्ततो लोकान् भीषयन्नखिलानपि ॥

इति शिवरहस्ये मध्याह्ने कालभैरवाविर्भावात्तद्व्यापिनी ग्राह्येति कश्चित्तदपि तुच्छम् । शिवरहस्ये मध्याह्नोत्तरं कृत्तिवासेश्वरं प्रापुर्देवा बिल्वादिसाधना इत्यादिना भूयः कर्मकलापमुक्त्वा भैरवाविर्भावं चोक्त्वा अनुपदमेव सूर्योऽप्यस्तमुपागमत् इत्युक्तं, तत्र मध्याह्नेऽपराह्णे सायाह्ने वाविर्भावानिश्चयात् । अस्तु वा मध्याह्न आविर्भावस्तथापि तत्कालीनग्राह्यतायां मानाभावः । नह्याविर्भावकालीना ग्राह्येति वाक्यमस्ति किञ्चित् । जन्माष्टम्यादौ तु पूजाख्यकर्मकालत्वेन निशीथव्यापिनी ग्राह्येत्युक्तं, न जन्मकालतयेति संक्षेपः ।

माघशुक्लाष्टम्यां भीष्मतर्पणं श्राद्धं चोक्तम् । हेमाद्रौ पाद्मे—

माघे मासि सिताष्टम्यां सतिलं भीष्मतर्पणम् ।
श्राद्धं च ये नराः कुर्युस्ते स्युः सन्ततिभागिनः ॥ इति ।

तर्पणमन्त्रस्तु भारते—

भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः ।
आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम् ॥
वैयाघ्रपादगोत्राय सांकृत्यप्रवराय च ।
अपुत्राय ददाम्येतज्जलं भीष्माय वर्मणे ॥
वसूनामवताराय शन्तनोरात्मजाय च ।
अर्घ्यं ददामि भीष्माय आबाल्यब्रह्मचारिणे ॥ इति ।

पाद्मे— ब्राह्मणाद्याश्च ये वर्णा दद्युर्भीष्माय नो जलम् ।
संवत्सरकृतं तेषां पुण्यं नश्यति सत्तम ॥ इति ।

इदं च जीवत्पितृकोऽपि कुर्यात् निषेधाभावात् । यत्तु, 'सपितुः पितृकृत्येषु नाधिकारः कथंचन' इतिनिषेधः, स पित्र्यकर्मपर इति दिक् ।

इत्यष्टमीनिर्णयः

---

## अथ नवमी ।

सा तु पूर्वा, वसुरन्ध्रयोः इति युग्मवचनात् । ब्रह्मवैवर्तेऽपि—

अष्टम्या नवमी विद्धा कर्तव्या फलकाङ्क्षिभिः ।
न कुर्यान्नवमीं तात दशम्या तु कदाचन ॥ इति ।



III-5

चैत्रे शुक्ला रामनवमी सा परविद्धा मध्याह्नव्यापिनी ग्राह्या । तदुक्तमगस्तिसंहितायाम्—

चैत्रे शुद्धा तु नवमी पुनर्वसुयुता यदि ।
सैव मध्याह्नयोगेन महापुण्यतमा भवेत् ॥ इति ।
नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः ।
उपोषणं नवम्यां वै दशम्यां पारणं भवेत् ॥

इति वचनाच्च । तत्रैव—

चैत्रे मासि नवम्यां तु जातो रामः स्वयं हरिः ।
पुनर्वस्वृक्षसंयुक्ता सा तिथिः सर्वकामदा ॥
श्रीरामनवमी प्रोक्ता कोटिसूर्यग्रहाधिका ।
तथा— केवलापि सदोपोष्या नवमीशब्दसंग्रहात् ॥
तस्मात्सर्वात्मना सर्वैः कार्यं वै नवमीव्रतम् ।
उपोषणं जागरणं पितॄनुद्दिश्य तर्पणम् ॥
तस्मिन्दिने तु कर्तव्यं ब्रह्म प्राप्तुमभीप्सुभिः ।

अत्र पूर्वदिन एव मध्याह्नव्यापिनी चेत्पूर्वा, दिनद्वये तद्व्याप्तावव्याप्तावेकदेशसमव्याप्तौ च सनक्षत्रा चेत्पूर्वाऽन्यथोत्तरेति । अष्टमीविद्धानिषेधादिति ।

तत्रैव— यस्तु रामनवम्यां तु भुङ्क्ते मोहाद्विमूढधीः ।
कुम्भीपाकेषु घोरेषु पच्यते नात्र संशयः ॥

इति प्रत्यवायश्रुतेर्नित्यं फलश्रुतेश्च काम्यं रामनवमीव्रतम् ।

यत्तु—तद्भक्तानामेव नित्यमिति, तन्न । सङ्कोचे मानाभावात् । जन्माष्टमीशिवरात्र्यादिव्रतेऽपि तथात्वापत्तेः ।

## अथ व्रतपद्धतिः ।

व्रतपूर्वदिने सायं दन्तधावनं व्रतदिने च प्रातः ।

सूर्यः सोमो यमः कालः सन्ध्ये भूतान्यहः क्षपा ॥
पवनो दिक्पतिर्भूमिराकाशं खचरा नराः ।
ब्राह्मं शासनमास्थाय कल्पध्वमिह संनिधिम् ॥

इत्युक्त्वा फलपुष्पाक्षतसहितजलपूर्णं वा ताम्रपात्रं गृहीत्वा मासाद्युल्लिख्य पापक्षयकामोऽमुककामो वा श्रीरामचन्द्रप्रीतये श्रीरामनवमीव्रतमहं करिष्ये—

उपोष्ये नवमीत्वद्य यामेष्वष्टसु राघव ।
तेन प्रीतो भव त्वं भोः संसारात्राहि मां हरे ॥

इत्युक्त्वा पात्रस्थं जलं क्षिपेत् । ततः—शक्तितो हैमीं रामप्रतिमामग्न्युत्तारणपूर्वकं कपोलौ स्पृष्ट्वा मूलमन्त्रप्रणवादिचतुर्थ्यन्तं नाम रामाय देवत्वसङ्ख्यायै स्वाहेति च मन्त्रं पठन् प्राणप्रतिष्ठां कुर्यात् ।

ततः— कोमलाङ्गं विशालाक्षमिन्द्रनीलसमप्रभम् ।
दक्षिणाङ्गे दशरथं पुत्रावेक्षणतत्परम् ॥
पृष्ठतो लक्ष्मणं देवं सच्छत्रं कनकप्रभम् ।
पार्श्वे भरतशत्रुघ्नौ तालवृन्तकरावुभौ ॥
अग्रे व्यग्रं हनूमन्तं रामानुग्रहकाङ्क्षिणम् ।

इति ध्यात्वा षट्कोणमध्ये पूजयेत् । श्रीरामप्रतिमासमीपे षट्कोणमध्ये कौशल्यां दशरथं च पूजयेत् । षट्कोणकोणेषु रां हृदयाय नमः । रीं शिरसे स्वाहा । रूं शिखायै वषट् । रैं कवचायहुम् । रौं नेत्रत्रयाय वौषट् । रः अस्त्रायफडिति हृदयादीनि षट् । षट्कोणबाह्याष्टदलकमलदलमूलेषु हनूमन्तं सुग्रीवं भरतं बिभीषणं लक्ष्मणमङ्गदं शत्रुघ्नं जाम्बवन्तं च, दलमध्येषु धृष्टिं जयन्तं विजयं सुराष्ट्रं राष्ट्रवर्द्धनमकोपं धर्मपालं सुमन्तं च, दलाग्रेषु इन्द्रं, अग्निं यमं निर्ऋतिं वरुणं वायुं कुबेरं ईशानं चाष्टौ लोकपालान्, तदग्रे, वज्रं, शक्तिं, दण्डं, खड्गं, पाशम्, अङ्कुशं, गदां, शूलं चेति तेषामायुधानि च पूजयेत् । श्रीरामपूजायां मूलमन्त्रः, वैदिको वा वैष्णवः, प्रणवादिचतुर्थ्यन्तं नमोऽन्तं नाम्ना वा मन्त्रः ।

इन्द्रोऽग्निश्च यमश्चैव नैर्ऋतो वरुणोऽनिलः ।
कुबेर ईशो ब्रह्मादिर्दिक्पालाः स्नापयन्तु ते ॥ इति स्नाने ॥
रामस्य जननी चासि रामात्मकमिदं जगत् ।
अतस्त्वां पूजयाम्यद्य लोकमातर्नमोऽस्तु ते ॥

इति कौशल्यापूजायाम् । ॐ नमो दशरथायेति दशरथपूजायाम् । इतरेषां तु मूलमन्त्राः प्रणवादिचतुर्थ्यन्तनमोऽन्तनामानि वा ।

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुदिने मेषं गते पूषणि ॥

निर्दग्धुं निखिलाः पलाशसमिधो मध्यादयोध्यारणे-
शाविर्भूतमसूत पूर्वविभवं यत्किञ्चिदेकं महः ॥

इति । मध्याह्ने जन्मभावना । वाद्यादिवादनं च पुष्पांजलिपूर्वकम् ।

फलपुष्पाम्बुसंपूर्णं गृहीत्वा शङ्खमुत्तमम् ॥
अशोकरत्नकुसुमैर्युक्तं च तुलसीदलैः ।
दशाननवधार्थाय धर्मसंस्थापनाय च ॥
दानवानां विनाशाय दैत्यानां निधनाय च ।
परित्राणाय साधूनां जातो रामः स्वयं हरिः ॥
गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितो मम ॥

इति मन्त्रेणार्घ्यं दद्यात् ।

पुष्पाञ्जलिं पुनर्दत्त्वा यामे यामे ह्यतन्द्रितः ।
पूजयन्विधिवद्भक्त्या दिवारात्रं नयेद्बुधः ॥ इति ॥

ततः—स्तोत्रपाठपुराणश्रवणादिना रात्रौ जागरणं कृत्वा द्वितीयेऽह्नि प्रातःकालीनं नित्यं कृत्वा पूर्ववदेव श्रीरामं परिवारदेवताश्च संपूज्य विप्रान्संभोज्य श्रीरामः प्रीयतामिति तेभ्यः सुवर्णधेनुवस्त्रादि दत्त्वा प्रतिमामुद्वास्य तां विप्राय दत्त्वा पारणां कृत्वा व्रतं समापयेत् ।

---

आश्विनशुक्लनवमी महानवमीत्युच्यते ।

तदुक्तं प्रतापमार्तण्डे लैङ्गे—

दुर्गापूजासु नवमी मूलाद्यृक्षत्रयान्विता ।
महती कीर्तिता तस्यां दुर्गां महिषमर्दिनीम् ॥ इति ।

पूजयेदिति शेषः । तत्र पूर्वविद्धा ग्राह्या युग्मवचनात् ।

बृहद्यमोऽपि—

श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी ।
पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनम् ॥ इति ।

अस्यामेव दुर्गापूजनहोमबलिदानादि कार्यमिति राजमार्तण्डे—

नवम्यां तु जपं होमं समाप्य विधिवद्बलिम् ॥ इति ।

ब्रह्मवैवर्तेऽपि—

अत्रापराह्णिके काले बलिदानं प्रशस्यते ।
दशमीं वर्जयेत्तत्र नात्र कार्या विचारणा ॥ इति ।

तेन नवम्यामुपक्रम्य नवम्यामेव समापयेत् । गौडनिबन्धेऽप्येवम्—

केचिद्दुर्गाष्टम्यामारभ्य नवम्यां समापयन्ति तत्र मूलं शिष्टाचार एव।
अत्र डामरतन्त्रे विशेषः—

पायसं सर्पिषा युक्तं तिलैः शुक्लैर्विमिश्रितम् ॥
होमयेद्विधिवद्भक्त्या दशांशेन नृपोत्तम ।
रुद्राध्याये यथा होमं मन्त्रेणानेन साधयेत् ॥

रुद्रयामलेऽपि—

प्रधानद्रव्यमुद्दिष्टं पायसान्नं तिलांस्तथा ।
किंशुकैः सर्षपैः पूगैर्लाजादूर्वाङ्कुरैरपि ॥
यवैर्वा श्रीफलैर्दिव्यैर्नानाविधफलैरपि ।
रक्तचन्दनखण्डैश्च गुग्गुलैश्च मनोहरैः ॥
प्रतिश्लोकं च जुहुयात्सर्वद्रव्याणि च क्रमात् ॥ इति ।

यत्तु केचित्—

अष्टम्यां जागरं कुर्यान्नवम्यां पारणं तथा ।
दशम्यां च विसर्गः स्यादभिषेकश्च माधवे ॥

इति रुद्रयामलात्—

नवम्यां च विशालाक्ष कार्या होमादिकाः क्रियाः ।
पारणं चैव कुर्वीत देवीपूजनपूर्वकम् ॥
दशम्या मिश्रिता यत्र पारणे नवमी भवेत् ।
सप्तजन्मकृतं पुण्यं तत्क्षणादेव नश्यति ॥

तथा— यो मोहात्पारणं कुर्याद्दशमे दिवसे विभो ।
तद्राष्ट्रं नाशमायाति दुर्भिक्षादि भयं भवेत् ॥
नृपहीनं भवेद्राष्ट्रं दशम्यां पारणे कृते ।
तस्मात्तु पारयेद्देव नवम्यां भक्तितत्परः ॥
नवम्यां पारिता देवी कुलवृद्धिं प्रयच्छति ।
दशम्यां पारिता देवी कुलनाशं करोति वै ॥
तस्मात्तु पारणं कुर्यान्नवम्यां विबुधाधिप ।

इति देवीपुराणादेश्च नवम्यामेव नवरात्रपारणमित्याहुः । तन्न—

एवं च विन्ध्यवासिन्यां नवरात्रोपवासतः ।
एकभक्तेन नक्तेन स्वशक्त्याऽयाचितेन वा ॥
अथवा नवनक्तैश्च नवरात्रं समापयेत् ॥

इति भविष्यादिवचोभिरुपवासादिषु शक्त्या विहितस्य नवतिथ्या-

धिकरणत्वस्य बाधापत्तेः । अस्मिन्वाक्ये एकभक्तादिशब्दसमभिव्याहारेण 'नवरात्रं समापयेत्' इति नामधेयान्तरसत्वाच्च नवतिथिरूपगुणविधिरेव युक्तो नवरात्रोपवास इति न नामधेयम् । नवमीपारणविधायकानि दशमीनिषेधकानि च पूर्वोक्तानि वचांसि तु महानिबन्धादिष्वदर्शनात्प्रायो निर्मूलान्येव । समूलत्वेऽपि तेषां पूर्वेद्युरष्टमीविद्धत्वेन नवमीप्रयुक्त उपवासे जाते परेद्युश्चावशिष्टकिञ्चिन्नवमीसत्वे नवम्यन्तः पारणविधायकत्वं नतु प्राप्तोपवासबाधकत्वम् । एवं च 'सर्वेषामुपवासानां प्रातरेव हि पारणम्' इतिवचोवगतावशिष्टनवम्यन्तःपारणस्योपोष्य तिथ्यन्तपारणविधिना बाधितस्य प्रतिप्रसवविधित्वेनैषां लाघवम् । अन्यथाऽप्राप्तविधितया गौरवात्[1] । अतश्च दशम्यां पारणं न कार्यमित्येतेषामनुवादकत्वमेव न विधायकत्वम् । *तिथिवृद्धौ ह्रासे वा नवम्यां पूजोपवासादि कार्यमेव ।

> आश्विने शुक्लपक्षे तु कर्तव्यं नवरात्रकम् ।
> प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत् ॥

इति हेमाद्रौ धौम्योक्तेः । यावच्छब्दोऽभिव्याप्तौ ।

> नवम्यां पूर्ववत्पूजा कर्तव्या भूतिमिच्छता ।
> दक्षिणां वस्त्रयुग्मं च आचार्याय निवेदयेत् ॥

इति मात्स्यात् ।

> उत्तरेण नवम्यां तु बलिना पूजयेच्छिवाम् ।
> श्रवणेन दशम्यां तु प्रणिपत्य विसर्जयेत् ॥

इति देवीपुराणात् । तत्रैव—

> महानवम्यां पूजेयं स्वर्गमोक्षप्रदायिनी ॥

इत्युक्तेश्च । अष्टम्यां दशम्यां वा समाप्तौ त्वेतद्वचोबाधः स्यात् । नचैकतिथिक्षये 'आश्विने प्रतिपन्मुख्याः पुण्यास्तु तिथयो नव' इत्यादिदेवीपुराणीयनवतिथिरूपकालविधिविरोधः, सावनाष्टदशदिनापत्तावपि चान्द्रतिथिनवसङ्ख्याया अबाधात् । चान्द्रप्रतिपदादीनामेव तिथिपदशक्यत्वाच्च । वस्तुतस्तु 'प्रतिपदादिक्रमेणैव यावच्च नवमी भवेत्' इत्यादिपूर्वोक्तानेकवचनैर्नवमीपर्यन्तं व्रतानुष्ठानोक्त्या च तिथिनव-

---

१ गौरवमिति पाठः । * तिथिवृद्धावित्यारभ्य नवसंख्यानित्यप्राप्तैवेति दिगित्यन्तो पाठः पुस्तकान्तरे न दृश्यते ।

सङ्ख्यायाः प्रचयशिष्टत्वेन विध्यभावान्नाङ्गत्वम् । यथा 'दश दशैकं चमसमनुभक्षयन्ति' इति दशचमसेषु दशब्राह्मणविधिना 'शतं ब्राह्मणाः सोमान्भक्षयन्ति' इति शतसङ्ख्यायाः प्रचयशिष्टतयाऽनुवादः । यथा वा प्रातिस्विकसमिदादिविधिसिद्धायाः 'पञ्च प्रयाजा इज्यन्ते' इति पञ्चतायाः । येषु तु वचस्सु 'नवरात्राभिधं कर्म नक्तव्रतमिति स्थितिः' इति । 'आश्विने शुक्लपक्षे तु नवरात्रव्रतं शुभम्' इत्यादिव्रतशब्दसामानाधिकरण्यं तत्रापि कादाचित्कविधित्सितनवसङ्ख्यारूपगुणप्राप्तावपि नामधेयमेव नवरात्रपदं, दृष्टं च तथा वाजपेये कादाचित्कसुराग्रहविधानेऽपि नामधेयत्वम् । वस्तुतस्तु चान्द्रतिथिगतनवसङ्ख्या नित्यप्राप्तैवेति दिक् । विस्तरश्चात्र तातचरणकृते द्वैतनिर्णये बोध्यः । पारणं तु सूतकेऽपि कार्यम् । तदुक्तं रुद्रयामले—

सूतके पारणं कुर्यान्नवम्यां होमपूर्वकम् ।। इति ।

एवं स्त्रीभिरपि रजोदर्शनमध्येऽपि कार्यम् । तदाह सत्यव्रतः—

प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् ।
न तत्रापि व्रतस्य स्यादुपरोधः कदाचन ।। इति ।

एतच्च सधवापरं ज्ञेयम् । विधवायास्तु त्रिरात्रमध्ये भोजननिषेधादिति केचित्तन्न । निषेधस्य रागप्राप्तभोजनगोचरत्वेन वैधपारणविषयत्वायोगात् । वस्तुतस्तु रजस्वलाया विधवायास्त्रिरात्रमध्ये भोजननिषेध एव खपुष्पायमाण इति दिक् ।

इति नवमीनिर्णयः ।

---

## अथ दशमीसामान्यनिर्णयः ।

संपूर्णा दशमी कार्या परया पूर्वयाथवा ।
युक्ता न दूषिता यस्मादिति सा सर्वतोमुखी ।।

इत्यङ्गिरःस्मृतेः । अयं च विकल्पो व्यवस्थितः

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ।।

इति वचोन्तरात् । माधवोऽप्येवम् । यत्तु हेमाद्रिः—दिनद्वये कर्मकालव्याप्त्यभावे ऐच्छिको विकल्प इत्याह तन्न, शास्त्रतो व्यवस्थासंभवे ऐच्छिकत्वायोगात् । उपवासे तु सर्वमते पूर्वैव—

नागविद्धा तु या षष्ठी शिवविद्धा तु सप्तमी ।
दशम्येकादशीविद्धा नोपोष्या सा कथञ्चन ॥

इति शिवरहस्योक्तेः । यत्तु प्रतापमार्तण्डे स्कान्दे—

दशमी चैव कर्तव्या सदुर्गा द्विजसत्तम ।

इति तदप्युपवासपरम् ।

ज्येष्ठशुक्लदशमी दशहरा ।

ज्येष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ।
हरते दशपापानि तस्माद्दशहरा स्मृता ॥

भविष्ये—ज्येष्ठे शुक्लदशम्यां तु भवेद्भौमदिनं यदि ।
ज्ञेया हस्तर्क्षसंयुक्ता सर्वपापहरा तिथिः ॥
एतानि दशपापानि हर त्वं देवि जाह्नवि ।
दशपापहरा गङ्गा तस्माद्दशहरा स्मृता ॥
तस्यां स्नानं प्रकुर्वीत दानं चैव विशेषतः ॥

इति हेमाद्रौ ब्राह्मोक्तेः । दशपापानि चाह मनुः—

पारुष्यमनृतं चैव पैशुन्यं चापि सर्वशः ।
असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥
अदत्तानामुपादानं हिंसा चैवाऽविधानतः ।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥
परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च त्रिविधं कर्म मानसम् ॥ इति ।

स्कान्देपि—

ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः ।
व्यतीपाते गरानन्दे कन्याचन्द्रे वृषे रवौ ॥
दशयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यते ॥ इति ।

इयं च योगविशेषवशात्पूर्वा परा वा ग्राह्या । काशीखण्डे—

दशाश्वमेधिके स्नात्वा सर्वपापैः प्रमुच्यते ।
लिङ्गं दशाश्वमेधेशं दृष्ट्वा दशहरातिथौ ॥
दशजन्मार्जितैः पापैस्त्यज्यते नात्र संशयः ।

स्कान्दे—यां काञ्चित्सरितं प्राप्य दद्याद्दर्भतिलोदकम् ।
मुच्यते दशभिः पापैः स महापातकोपमैः ॥

यदा ज्येष्ठो मलमासो भवति तदा मलमास एव कार्यम् । तदाह हेमाद्रौ ऋष्यशृङ्गः—

दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु ।
उपाकर्ममहाषष्ठ्योर्हेतदिष्टं वृषादितः ॥ इति ।

---

आश्विनशुक्लदशमी विजयादशमीत्युच्यते । सा तु शमीपूजायात्रादौ[1] नक्षत्रोदयव्यापिनी ग्राह्या ।

तदुक्तं रत्नकोशे—

ईषत्सन्ध्यामतिक्रान्तः किञ्चिदुद्भिन्नतारकः ।
विजयो नाम कालोऽयं सर्वकार्यार्थसाधकः ॥ इति ।

चिन्तामणावपि—

आश्विनस्य सिते पक्षे दशम्यां तारकोदये ।
स कालो विजयो ज्ञेयः सर्वकार्यार्थसिद्धये ॥

दिनद्वये तद्व्याप्तौ पूर्वैव—

या पूर्णा नवमीयुक्ता तस्यां पूज्याऽपराजिता ।
क्षेमार्थं विजयार्थं च पूर्वोक्तविधिना नरैः ॥
नवमीशेषयुक्तायां दशम्यामपराजिता ।
ददाति विजयं देवी पूजिता जयवर्द्धिनी ॥
एकादश्यां न कुर्वीत पूजनं चापराजितम् ॥

इति स्कान्दोक्तेः । तत्रैव—

दशमीं यः समुल्लङ्घ्य प्रस्थानं कुरुते नरः ।
तस्य संवत्सरं राज्ये न क्वापि विजयो भवेत् ॥ इति ।

दिनद्वये तारकोदयकालाभावे परदिने एकादशमुहूर्ते यात्रा कार्या—

आश्विनस्य सिते पक्षे दशम्यां सर्वराशिषु[2] ।
सायंकाले शुभा यात्रा दिवा वा विजयक्षणे ॥
एकादशो मुहूर्तोऽपि विजयः परिकीर्तितः ।
तस्मिन्सर्वैर्विधातव्या यात्रा विजयकाङ्क्षिभिः ॥

इति भृगूक्तेः । परदिन एकादशमुहूर्तव्याप्त्यभावेऽपि श्रवणयोगश्चे-त्तदैव यात्रा कार्या पूजा तु पूर्वदिन एव—

---

१ यात्रादि कार्यम् पाठः क. ग. । २ ' सर्व रात्रिषु ' इति पाठः ।

उदये दशमी किञ्चित्संपूर्णैकादशी यदि ।
श्रवणर्क्षं यदा काले सा तिथिर्विजयाभिधा ॥

इति मदनरत्ने दक्षोक्तेः ।

श्रवणर्क्षे तु पूर्णायां काकुत्स्थः प्रस्थितो यतः ।
उल्लङ्घयेयुः सीमानं तद्दिनर्क्षे ततो नराः ॥

इति भविष्योक्तेश्च । अत्र कृत्यं भविष्ये—

शमीं सलक्षणोपेतामीशानाशाप्रतिष्ठिताम् ।
संप्रार्थ्य तां च संपूज्य ईशानीसंमुखो भवेत् ॥
शमी शमयते पापं शमी लोहितकण्टका ।
धारयत्यर्जुनास्त्राणि रामसंवाददायिनी ॥
करिष्यमाणयात्रायां यथाकालं सुखं मम ।
तत्र निर्विघ्नकर्त्री त्वं भव श्रीरामपूजिते ॥
गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदम् ।
गीतवादित्रनिर्घोषैरानयेत्स्वगृहं प्रति ॥
ततो भूषणवस्त्रादि धारयेत्स्वजनैः सह ॥

इति दिक् ।

इति दशमीनिर्णयः ।

---

## अथ एकादशीसामान्यनिर्णयः ।

### अथ उपवासविचारः ।

तत्रोपवासो नित्यः काम्यश्च । तत्राद्यमाह सनत्कुमारः—

न करोति हि यो मूढ एकादश्यामुपोषणम् ।
स नरो नरकं याति रौरवं तमसा वृतम् ॥ इति ।

गारुडे— उपोष्यैकादशी नित्यं पक्षयोरुभयोरपि ॥ इति ।

काम्यस्तु कौर्मे—

यदीच्छेद्विष्णुसायुज्यं श्रियं सन्ततिमात्मनः ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥ इति ।

स्कान्देऽपि—

यदीच्छेद्विपुलान्भोगान्भक्तिं चात्यन्तदुर्लभाम् ।
एकादश्यामुपवसेत्पक्षयोरुभयोरपि ॥ इति ।

## अथ उपवासाधिकारी ।

कात्यायनः—

अष्टवर्षाधिको मर्त्यो ह्यशीतिन्यूनवत्सरः ।
एकादश्यामुपवसेत्पक्षयोरुभयोरपि ॥ इति ।

अष्टवर्षाधिकइत्युपनयनोत्तरत्वस्योपलक्षणम् 'अपि वा वेदतुल्यत्वादुपायेन प्रवर्त्तेरन्' इति षष्ठे स्थापितत्वात् । एतच्च गृहस्थव्यतिरिक्तपरम् । तदुक्तं कौर्मे—

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही ॥ इति ।

भविष्येऽपि—

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
ब्रह्मचारी च नारी च शुक्लामेव सदा गृही ॥ इति ।

नारी विधवा, ब्रह्मचारिसाहचर्यात् । सधवायास्तु पक्षद्वयेऽपि निषेधः ।

पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत् ।
आयुष्यं हरते भर्तुः सा नारी नरकं व्रजेत् ॥

इति विष्णूक्तेः ।

नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् ।
पतिं शुश्रूषते या तु तेन स्वर्गे महीयते ॥

इति मनूक्तेश्च । तथा—

यद्देवेभ्यो यच्च पित्रादिकेभ्यः
कुर्याद्भर्ताभ्यर्चनं सत्क्रियां च ।
तस्य ह्यर्द्धं सा फलं नान्यचित्ता
नारी भुङ्क्ते भर्तृशुश्रूषयैव ॥ इति ।

भर्त्राज्ञया तु सधवाया अप्यधिकारोऽस्त्येव—

भार्या पत्युर्मते चैव व्रतादीनाचरेत्सदा ॥

इति कात्यायनोक्तेः । चातुर्मास्यान्तर्गता तु कृष्णापि गृहिणोपोष्या

शयनीबोधिनीमध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ।

---

१ त्वर्धमिति पाठः क. ख. ङ.

इति पाद्मात् । एतच्चापुत्रिगृहिविषयम् । पुत्रवतस्त्वत्रापि निषेधः ।

सङ्क्रान्त्यामुपवासं च कृष्णैकादशिवासरे ।
चन्द्रसूर्यग्रहे चैव न कुर्यात्पुत्रवान् गृही ॥

इति नारदोक्तेः ।

आदित्येऽहनि सङ्क्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।
पारणं चोपवासं च न कुर्यात्पुत्रवान् गृही ॥
तत्प्रयुक्तोपवासस्य निषेधोऽयमुदाहृतः ।
प्रयुक्त्यन्तरयुक्तस्य न विधिर्न निषेधनम् ॥

इति जैमिनिस्मृतेश्च । स्मृत्यन्तरेऽपि—

विधवाया वनस्थस्य यतेश्चैकादशीद्वये ।
उपवासो गृहस्थस्य शुक्लायामेव पुत्रिणः ॥ इति ।

हेमाद्रिरप्येवम् । काम्यायां कृष्णापवादमाह नारदः—

पुत्रवांश्च सभार्यश्च बन्धुयुक्तस्तथैव च ॥
उभयोः पक्षयोः काम्यं व्रतं कुर्यात्तु वैष्णवम् ॥ इति ।

वैष्णवैस्तु कृष्णाप्युपोष्येत्याह स एव—

नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः ।
पक्षे पक्षे च कर्तव्यमेकादश्यामुपोषणम् ॥
सपुत्रश्च सभार्यश्च स जनो भक्तिसंयुतः ।
एकादश्यामुपवसेत्पक्षयोरुभयोरपि ॥

तत्रैकादशी द्वेधा । शुद्धा दशमीविद्धा च । आद्या गारुडे—

उदयात्प्राग्यदा विप्र मुहूर्तद्वयसंयुता ।
संपूर्णैकादशी ज्ञेया तत्रैवोपवसेद्गृही ॥ इति ।

गृही वैष्णवः । स्मार्तविषये तु तत्रैव—

आदित्योदयवेलायामारभ्य षष्टिनाडिकाः ।
संपूर्णैकादशी नाम कार्या धर्मफलेप्सुभिः ॥ इति ।

दशमीविद्धापि द्वेधा । अरुणोदयवेलायां सूर्योदये च दशमीसत्त्वेन । तत्राऽऽद्या भविष्यपुराणे—

अरुणोदयकाले तु दशमी यदि दृश्यते ।
सा विद्धैकादशी तत्र पापमूलमुपोषणम् ॥

---

१ अरुणोदये सूर्योदये इति पाठः क. ख. ग.

तथा— अरुणोदयवेलायां दिशागन्धो भवेद्यदि ।
दुष्टं तत्तु प्रयत्नेन वर्जनीयं नराधिप ॥

दिशा दशमी ।

दशमीशेषसंयुक्तो यदि स्यादरुणोदयः ।
नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतम् ॥

इत्यादिभिर्वाक्यैररुणोदये दशमीसत्त्व एकादशी विद्धा । यदपि सौरधर्मेषु—

आदित्योदयवेलायां या मुहूर्तद्वयान्विता ।
सैकादशी तु संपूर्णा विद्धान्या परिकीर्तिता ॥ इति ।

तदप्यरुणोदयवेलायां दशमीसत्त्व एकादश्या विद्धत्वपरं, मुहूर्तद्वयस्यारुणोदयपरिमाणत्वात् । अत एव हेमाद्रौ स्मृतिः—

निशिप्रान्ते तु यामार्द्धे देववादित्रवादने ।
सारस्वतानध्ययने चारुणोदय उच्यते ॥ इति ।

यामार्द्धमपि मुहूर्तद्वयमेव । यत्तु—

उदयात्प्राक्चतस्रस्तु नाडिका अरुणोदयः ॥ इति ।

तदपि द्वात्रिंशद्घटिकारात्रिमानपक्षे मुहूर्तद्वयस्य तावत्परिमाणत्वादुक्तमिति तातचरणाः । यदपि ब्रह्मवैवर्तीयम् ।

चतस्रो घटिकाः प्रातररुणोदयनिश्चयः ।
चतुष्टयविभागोऽत्र वेधादीनां किलोदितः ॥
अरुणोदयवेधः स्यात्सार्द्धं तु घटिकात्रयम् ।
अतिवेधो द्विघटिकः प्रभासंदर्शनाद्रवेः ॥
महावेधोऽपि तत्रैव दृश्यतेऽर्कों न दृश्यते ।
तुरीयस्तत्र विहितो योगः सूर्योदये सति ॥

इत्यरुणोदयवेधातिवेधमहावेधयोगसंज्ञाकरणमर्वाग्दोषातिशयार्थम् । सार्द्धं तु घटिकात्रयं चतस्रो घटिकाः इति द्विमुहूर्तरूपानुगतव्यवहारार्थं, तावत्परिमाणस्यापि मुहूर्तद्वयस्य रात्रिमानवशेन कदाचित्संभवान्मुहूर्तद्वयारुणोदयपरमेव । यत्तु ब्रह्मवैवर्ते—

अर्द्धरात्रे तु केषां चिद्दशम्या वेध इष्यते ।
कपालवेध इत्याहुराचार्या ये हरिप्रियाः ॥ इति ।

तत्कैमुतिकरीत्या अरुणोदयवेधनिन्दार्थमिति माधवः । तत्त्वं तु पूर्वचतुर्यामेषु व्रतसङ्कल्पपूजावर्जनार्थमित्यनुपदमेव वक्ष्यते । यदपि—

नागो द्वादशनाडीभिर्दिक्पञ्चदशभिस्तथा ।
भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् ॥

इति स्कान्दे । तद्व्यवस्थोक्ता निगमे—

सर्वप्रकारवेधोऽयमुपवासस्य दूषकः ।
सार्द्धसप्तमुहूर्तैस्तु योगोऽयं बाधते व्रतम् ॥ इति ।

व्रतमुपवासभिन्नमिति माधवः । तत्रारुणोदयवेधो वैष्णवपरः, तद्वाक्ये वैष्णवग्रहणात् । परिशेषात्सूर्योदयवेधो वैष्णवभिन्नपरः । त एव स्मार्त्त-पदेन व्यवह्रियन्ते ग्रन्थेषु । वैष्णवलक्षणं तु गारुडे—

वैखानसाद्यागमोक्तदीक्षां प्राप्तो हि वैष्णवः ।

माधवीये स्कान्देऽपि—

परामापदमापन्नो हर्षे वा समुपस्थिते ।
नैकादशीं त्यजेत्सोऽपि यस्य दीक्षास्ति वैष्णवी ॥

अन्यच्च— विष्ण्वर्पिताखिलाचारः स हि वैष्णव उच्यते ।

भविष्येऽपि—

यथा शुक्ला तथा कृष्णा यथा कृष्णा तथोत्तरा ।
तुल्ये ते मन्यते यस्तु स हि वैष्णव उच्यते ॥

तत्र शुद्धैकादशी चतुर्द्धा । अधिकैकादशिका । अधिकद्वादशिका । उभयाधिका । अनुभयाधिका चेति । एवं विद्धापि । शुद्धायामेकाद-श्याधिक्ये नारदः—

संपूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी ।
द्वादश्यां लङ्घनं कार्यं त्रयोदश्यां तु पारणम् ॥

इति माधवाद्यनुसारिणः । वस्तुतस्तु वैष्णवानां शुद्धाधिकोनद्वादशि-कोदाहरणस्य ज्योतिःशास्त्रेऽप्रसिद्धत्वान्नारदवचनं निष्कामस्मार्तविषयं ज्ञेयम् । तेन वैष्णवानां शुद्धा त्रिविधैव । तादृशस्मार्त प्रत्येवेदृग्विषये शक्तस्योपवासद्वयमाह बृहद्यमः—

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
लुप्यते द्वादशी तत्र उपवासः कथं भवेत् ।
उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः ॥ इति ।

विष्णुप्रीणनतत्परा वैष्णवाः । शुद्धाया द्वादशीमात्राधिक्ये परेद्युरुप-वासः । तथा च भागवतादितन्त्रे ।

संपूर्णैकादशी त्याज्या परतो द्वादशी यदि ।

उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम् ॥

शुद्धायामेवैकादशीमात्राधिक्ये तदितरस्मार्त्तान्प्रति तु स्कान्दे—

प्रथमेऽहनि संपूर्णा याप्यहोरात्रसंयुता ।
द्वादश्यां तु तथा तात दृश्यते पुनरेव च ।
पूर्वा कार्या गृहस्थैश्च यतिभिश्चोत्तरा विभो ॥ इति ।

एतच्च परेद्युर्द्वादश्यभावपरम् । गारुडेऽपि—

पुनः प्रभातसमये घटिकैका यदा भवेत् ।
तत्रोपवासो विहितो वनस्थस्य यतेस्तथा ।
विधवायाश्च तत्रैव परतो द्वादशी न चेत् ॥ इति ।

शुद्धायां द्वादशीमात्राधिक्ये तु नारदः—

न्वेदेकादशी विष्णौ द्वादशी परतः स्थिता ।
उपोष्यैकादशी तत्र यदीच्छेत्परमं पदम् ॥ इति ।

विष्णौ द्वादश्यां । उभयाधिक्ये तु शुद्धा विद्धा च सर्वैः परैव कार्या ।

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
सर्वैरेवोत्तरा कार्या परतो द्वादशी यदि ॥

इति गारुडात् । यत्तु हेमाद्रौ पाद्मे—

विद्धाप्यविद्धा विज्ञेया परतो द्वादशी न चेत् ।
अविद्धापि च विद्धा स्यात्परतो द्वादशी यदि ॥ इति ।

तदप्युभयवृद्धौ ज्ञेयम् । अनुभयाधिक्ये त्वसन्देह एव । विद्धैकादश्याधिक्ये तु प्रचेताः—

एकादशी विवृद्धा चेच्छुक्ले कृष्णेऽविशेषतः ।
उत्तरां तु यती कुर्यात्पूर्वामुपवसेद्गृही ॥ इति ।

अरुणोदयविद्धायां 'द्वादशीमात्राधिक्ये तु परेद्युरुपोष्या । तदाह व्यासः—

एकादशी यदा लुप्ता परतो द्वादशी भवेत् ।
उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिम् ॥'

इति माधवः । तन्न । तत्र लोपपदस्य सूर्योदयास्पर्शाख्येऽवमे प्रसिद्धया सूर्योदयगतदशमीविद्धायामेतद्वचनप्रवृत्तेः । अतो नेदं शुद्धन्यूनाधिकद्वादशिकायामुत्तरदिन उपवासविधायकम् । यदपि कैश्चिदलुप्तेति छित्वेदमेतत्परतया योजितं तच्चिन्त्यम् । अकारप्रश्लेषे मानाभावात् । दिनक्षये तु पुत्रवद्गृहस्थेनोपवासो न कार्यः । तदाह पितामहः—

एकादश्यां दिनक्षये उपवासं करोति यः ।
तस्य पुत्रा विनश्यन्ति मघायां पिण्डदो यथा ॥ इति ।

दिनक्षयस्तु पाद्मे—

द्वौ तिथ्यन्तावेकवारे यस्मिन्स स्याद्दिनक्षयः ॥ इति ।

दिनक्षये च उपवासस्य निषेधः स निराहारस्यैव । तथा च वायवीये—

उपवासनिषेधे तु भक्ष्यंकिञ्चित्प्रकल्पयेत् ।
न दुष्यत्युपवासेन उपवासफलं लभेत् ।

एवं कृष्णैकादश्यादावपि गृहस्थस्य ।

तत्रैव—नक्तं हविष्यान्नमनोदनं वा
फलं तिलाः क्षीरमथाम्बु वाज्यम् ॥
यत्पञ्चगव्यं यदिवाऽपि वायुः
प्रशस्तमत्रोत्तरमुत्तरं च ॥ इति ।

व्रते विशेषः स्मृत्यन्तरे—

दशम्यादि महीपाल त्रिदिनं परिवर्जयेत् ।
गन्धताम्बूलपुष्पादि स्त्रीसंभोगं महायशाः ॥

स्त्रीसंभोगनिषेधस्तु ऋतुकालादन्यत्रेति आह्निकान्त उक्तम् ।

स्कान्दे—कांस्यं मांसं मसूरं च क्षौद्रं चानृतभाषणम् ।
पुनर्भोजनमायासं दशम्यां परिवर्जयेत् ॥

कौर्मे— कांस्यं मांसं मसूरं च चणकान्कोरदूषकान् ।
शाकं मधु परान्नं च त्यजेदुपवसन् स्त्रियम् ॥

मात्स्ये— कांस्यं मांसं सुरां क्षौद्रं तैलं वितथभाषणम् ।
व्यायामं च प्रवासं च दिवास्वापं च मैथुनम् ॥
तिलपिष्टं मसूरं च दशम्यादिषु वर्जयेत् ।

दशमीं प्रकृत्य नारदीये—

अक्षारलवणाः सर्वे हविष्यान्ननिषेविणः ।
अवनीतलपशयनाः प्रियासङ्गविवर्जिताः ॥

अन्यत्रापि—

दशम्यामेकभक्तं तु कुर्वीत नियतेन्द्रियः ।
आचम्य दन्तकाष्ठं तु खादेत तदनन्तरम् ॥
ततश्चानन्तरं विप्रब्रह्मचारी जितेन्द्रियः ।

रात्रिं नयेत्ततः पश्चात्प्रातः स्नात्वा समाहितः ॥
उपवासं तु संकल्प्य मन्त्रपूतं जलं पिबेत् ।

दशम्यामेकभक्तं तु काम्यैकादशीपरम् ।

सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे ।
उपवासफलं प्रेप्सुर्जह्याद्भुक्तचतुष्टयम् ॥
अथ नित्योपवासी चेत्सायं प्रातर्भुजिक्रियाम् ।
वर्जयेद्भक्तिमान् विप्रः संप्राप्ते हरिवासरे ॥

इति विष्णूक्तेः,

दशम्यामेकभुक्तस्तु मांसमैथुनवर्जितः ।
एकादशीमुपवसेत्पक्षयोरुभयोरपि ॥
देवतास्तस्य तुष्यन्ति कामितं चास्य सिद्ध्यति ॥

इति देवलोक्तेश्च । अन्येपि दिनत्रयनियमा नित्यव्रते नावश्यकाः । तथा च ब्रह्मवैवर्ते—

इति विज्ञाय कुर्वीतावश्यमेकादशीव्रतम् ।
विशेषनियमाशक्तोऽह्नोरात्रं भुक्तिवर्जितः ॥ इति ।

कात्यायनोऽपि—

शक्तिमांस्तु पुनः कुर्यान्नियमं सविशेषणम् ॥ इति ।

ब्रह्मवैवर्ते—

प्राप्ते हरिदिने सम्यग्विधाय नियमं निशि ।
दशम्यामुपवासस्य प्रकुर्याद्वैष्णवं व्रतम् ॥

देवलः—

गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासं तु गृह्णीयाद्यथा संकल्पयेद्बुधः ॥

औदुम्बरं ताम्रमयम् । यथासंकल्पयेद्यथाकामं फलमुल्लिखेदित्यर्थः । वाराहे 'इत्युच्चार्य ततो विद्वान् पुष्पाञ्जलिमथार्पयेत्' । इत्युच्चार्य संकल्प्येत्यर्थः ।

अष्टाक्षरेण मन्त्रेण त्रिर्जप्तेनाभिमन्त्रितम् ।
उपवासफलं प्रेप्सुः पिबेत्पात्रगतं जलम् ॥

पूर्वोक्तकपालवेधे तु विशेषो नारदीये—

दशम्यां सङ्गदोषेण अर्द्धरात्रात्परेण तु ॥
वर्जयेच्चतुरो यामान्सङ्कल्पार्चनयोः सदा ।

विद्धोपवासेऽनश्नंस्तु दिनं त्यक्त्वा समाहितः ॥
रात्रौ संपूजयेद्विष्णुं संकल्पं तु तदा चरेत् ।

पूजाप्रकारश्च ब्राह्मे—

एकादश्यामुभे पक्षे निराहारः समाहितः ।
नानापुष्पैर्मुनिश्रेष्ठ विचित्रं मण्डपं शुभम् ॥

कृत्वेति शेषः ।

स्नात्वा सम्यग्विधानेन सोपवासो जितेन्द्रियः ।
संपूज्य विधिवद्विष्णुं श्रद्धया सुसमाहितः ॥
पुष्पैर्गन्धैस्तथा धूपैर्दीपैर्नैवेद्यकैः परैः ।
उपचारैर्बहुविधैर्जपहोमैः प्रदक्षिणैः ।
स्तोत्रैर्नानाविधैर्दिव्यैर्गीतवाद्यमनोहरैः ।
दण्डवत्प्रणिपातैश्च जयशब्दैस्तथोत्तमैः ॥
एवं संपूज्य विधिवद्रात्रौ कृत्वा प्रजागरम् ।
याति विष्णोः परं स्थानं नरो नास्त्यत्र संशयः ॥ इति ।

विशेषो बृहन्नारदीये—

पञ्चामृतेन संस्नाप्य एकादश्यां जनार्दनम् ।
द्वादश्यां पयसा स्नाप्य हरिसारूप्यमश्नुते ॥ इति ।

सूतकादौ तु वाराहे—

सूतके च नरः स्नात्वा प्रणम्य मनसा हरिम् ।
एकादश्यां न भुञ्जीत व्रतमेवं न लुप्यते ।
मृतकेऽपि न भुञ्जीत एकादश्यां सदा नरः ॥ इति ।

स्त्रीणां रजोदर्शने त्वाह माधवीये ऋष्यशृङ्गः—

संप्रवृत्तेऽपि रजसि न त्याज्यं द्वादशीव्रतम् ॥ इति ।

एकादश्यां श्राद्धप्राप्तौ त्वाह माधवीये स एव—

उपवासो यदा नित्यः श्राद्धं नैमित्तिकं यदा ।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम् ॥ इति ।

उपवासासामर्थ्ये त्वाह माधवीये मार्कण्डेयः—

एकभक्तेन नक्तेन तथैवायाचितेन च ।
उपवासेन दानेन न निर्द्वादशिको भवेत् ॥

हेमाद्रौ पुराणे—

उपवासासमर्थश्चेदेकं विप्रं तु भोजयेत् ।
तावद्धनानि वा दद्याद्भुक्तश्चेद्द्विगुणं तथा ॥
सहस्रसंमितां देवीं जपेद्वा प्राणसंयमान् ।
कुर्याद्द्वादशसङ्ख्याकान्यथाशक्त्यातुरो नरः ॥

व्रताकरणे प्रायश्चित्तं स्मृत्यन्तरे—

अर्के पर्वद्वये रात्रौ चतुर्दश्यष्टमी दिवा ।
एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत् ॥ इति ।

## निर्जलैकादशी ।

ज्येष्ठशुक्लैकादशी निर्जला ।

ज्येष्ठे मासि नृपश्रेष्ठ या शुक्लैकादशी भवेत् ।
निर्जलं समुपोष्यात्र जलकुम्भान्सशर्करान् ।
प्रदाय विप्रमुख्येभ्यो मोदते विष्णुसन्निधौ ॥

इतिस्कान्दोक्तेः ।

## विष्णुशयनव्रतम् ।

आषाढशुक्लैकादश्यां विष्णुशयनम् ।

ब्राह्मे— एकादश्यां तु शुक्लायामाषाढे भगवान्हरिः ।
भुजङ्गशयने शेते क्षीरार्णवजले सदा ॥

स्वापविधिर्भविष्ये—

महापूजां ततः कुर्याद्देवदेवस्य चक्रिणः ।
जातीकुसुममालाभिर्मन्त्रेणानेन पूजयेत् ॥
सुप्ते त्वयि जगन्नाथ जगत्सुप्तं भवेदिदम् ।
विबुद्धे च विबुध्येत प्रसन्नो मे भवाच्युत ॥ इति ।

---

## चातुर्मास्यव्रतम् ।

अत्रैव चातुर्मास्यव्रतारम्भ उक्तो महाभारते—

आषाढे तु सिते पक्षे एकादश्यामुपोषितः ।
चातुर्मास्यव्रतं कुर्याद्यत्किञ्चिन्नियतो नरः ॥ इति ।

व्रतानि चातुर्मास्यप्रकरणे वक्ष्यन्ते । चातुर्मास्यव्रतारम्भस्य कालान्तरमपि ब्रह्मवैवर्ते—

एकादश्यां तु गृह्णीयात्संक्रान्तौ कर्कटस्य च ।

आषाढ्यां वा नरो भक्त्या चातुर्मास्यव्रतक्रियाम् ॥ इति ।

व्रतग्रहणप्रकारो भविष्ये—

प्रभाषेताग्रतो विष्णोः कृताञ्जलिपुटस्तथा ।
चतुरो वार्षिकान्मासान्देवस्योत्थापनावधि ॥
इमं करिष्ये नियमं निर्विघ्नं कुरु मेऽच्युत ।
इदं व्रतं मया देव गृहीतं पुरतस्तव ॥
निर्विघ्नं सिद्धिमायातु प्रसादात्तव केशव ।
गृहीतेऽस्मिन्व्रते देव पञ्चत्वं यदि मे भवेत् ॥
तदा भवतु संपूर्णं त्वत्प्रसादाज्जनार्दन ।

गार्ग्यः— न शैशवं न मौढ्यं च शुक्रगुर्वोर्न वा तिथेः ।
खण्डत्वं चिन्तयेच्चातुर्मास्यव्रतविधौ नरः ॥ इति ।

एतद्द्वितीयाद्यारम्भे प्रथमारम्भस्तु न भवतीति कश्चित् । तत्तुच्छम् । व्यवस्थायां मानाभावात् । यदपि हेमाद्रौ चातुर्मास्यव्रतप्रकरणे भविष्ये—

असंक्रान्तं तथा मासं दैवे पित्र्ये च कर्मणि ।
मलमासमशौचं च वर्जयेन्मतिमान्नरः ॥ इति ।

तदारम्भसमाप्त्योरन्तरालमासे व्रताननुवृत्तिसिध्यर्थमिति केचित् । युक्तं तु—

श्रावणे वर्जयेच्छाकं दधि भाद्रपदे त्यजेत् ।
दुग्धमाश्वयुजे मासि कार्तिके द्विदलं त्यजेत् ॥ इति ।

श्रावणादिमासविशेषव्रताननुवृत्त्यर्थत्वम् । 'स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले' इतिवचनात् । चातुर्मास्यव्रतानि त्वन्तरा मलमासेऽप्यनुवर्तन्त एवेति परे । नित्यानामारम्भः काम्यानां तु वर्जनमिति युक्तम् ।

एकादश्यामाशौचे पौर्णिमायां कर्कसङ्क्रान्तौ वाऽऽरभेत । त्रितयत्राप्याशौचे नारम्भ एव—

आरब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥

इतिविष्णूक्तेः । यत्त्वर्चनदीपिकायां स्कान्दे—

अशुचिर्वा शुचिर्वाऽपि यदि स्त्री यदि वा पुमान् ।
व्रतमेतन्नरः कृत्वा मुच्यते सर्वपातकैः ॥ इति ।

तदारम्भोत्तरं बोध्यम् ।

## परिवर्तनं हरेः ।

भाद्रशुक्लैकादश्यां विष्णोरङ्गपरिवर्तनमुक्तं भविष्योत्तरे—

प्राप्ते भाद्रपदे मासि एकादश्यां दिने सिते ।
कटिदानं भवेद्विष्णोर्महापातकनाशनम् ।। इति ।

कटिदानमङ्गपरिवर्तनम् ।

## देवोत्थापनविधिः ।

कार्तिकशुक्लैकादश्यां देवस्योत्थापनमुक्तं हेमाद्रौ पाद्मे—

एकादश्यां तु शुक्लायां कार्तिके मासि केशवम् ।
प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः ।। इति ।

उत्थापनविधिर्भविष्ये—

तथैव देवदेवस्य स्नानपूर्वं महद्भवेत् ।
महापूजां ततः कृत्वा देवमुत्थापयेत्सुधीः ।।

रामार्चनचन्द्रिकायाम्—

इदं विष्णुरनेनाम्बुतल्पादुत्थापयेत्प्रभुम् ।

पौराणमन्त्रः—

महेन्द्ररुद्राग्निकुबेरसूर्यसोमादिभिर्वन्दित वन्दनीय ।
बुध्यस्व देवेश जगन्निवास मन्त्रप्रभावेण सुखेन देव ।।
इयं तु द्वादशी देव प्रबोधाय विनिर्मिता ।
त्वयैव सर्वलोकानां हितार्थं शेषशायिना ।।
उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते ।
त्वयि सुप्ते जगन्नाथ जगत्सुप्तं भवेदिदम् ।।
उत्थिते चेष्टते सर्वमुत्तिष्ठोत्तिष्ठ माधव ।
गता मेघा वियच्चैव निर्मलं निर्मला दिशः ।।
शारदानि च पुष्पाणि गृहाण मम केशव ।। इति ।

ततस्तदग्रे व्रतं समापयेत् । मन्त्रश्च निर्णयामृते—

इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो ।
शून्यं संपूर्णतां यातु त्वत्प्रसादाज्जनार्दन ।। इति ।

यत्तु वाराहे—

आषाढमासे द्वादश्यां सर्वशान्तिकरं शुभम् ।

इत्यादिना द्वादश्यां शयनादिकमुक्तम् । तन्मिथुनार्क एव

आभाकाद्येषु मासेषु मिथुने माधवस्य च ।
द्वादश्यां शुक्लपक्षे च प्रस्वापावर्तनोत्सवः ॥

इति भविष्योक्तेः । तत्रैव—

आभाकासितपक्षेषु मैत्रश्रवणरेवती ।
आदिमध्यावसानेषु प्रस्वापावर्तनोत्सवाः ॥ इति ।

रेवतीत्यत्र सप्तमीलोपः । उत्सवो जागरः । मात्स्ये—

निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्तनम् ।

निशादौ नक्षत्रपादयोगानामभावे नक्षत्रमात्रयोगोऽपि ग्राह्यः 'पादयोगो यदा न स्यादृक्षेणाऽपि सदा भवेत्' इति वाराहपुराणात् ।

द्वादश्यामृक्षसंयोगे पादयोगो न कारणम् ।

इति विष्णुधर्मोत्तराच्च । द्वादश्यामेकदेशेनापि नक्षत्रयोगाभावे एकादश्यां त्रयोदश्यां वा प्रस्वापादि कार्यम् ।

अप्राप्ते द्वादशीमृक्षे उत्थानशयने हरेः ।
पादयोगेन कर्त्तव्यं नाहोरात्रं विचिन्तयेत् ।

इति जीमूतवाहनोदाहृतवचनात् । एवं च द्वादश्यां निशाद्यादरेऽन्यतिथौ च नक्षत्रपादयोगादरे नियते सति यदा द्वादशीषु निशादेरन्यत्र तत्तदृक्षभागयोगोऽन्यतिथौ च तदितरनक्षत्रस्यैव योगः तदा द्वादशीषु संन्ध्यायां प्रस्वापादि ।

द्वादश्यां सन्धिसमये नक्षत्राणामसंभवे ।
आभाकासितपक्षेषु शयनावर्तनादिकम् ॥

इति वाराहवचनात् । सन्धिसमय इति शयनादावन्वेति । सन्धिसमयश्च सायंसन्ध्यैव ।

रेवत्यन्तो यदा रात्रौ द्वादश्यां च समागतः ।
तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीम् ॥

इति जीमूतवाहनोदाहृतवचनात् । आषाढकार्तिकपौर्णमास्योरपि स्वापप्रबोधावाह यमः—

क्षीराब्धौ शेषपर्यङ्के आषाढ्यां संविशेद्धरिः ।
निद्रां त्यजति कार्तिक्यां तयोः संपूजयेद्धरिम् ॥
ब्रह्महत्यादिकं पापं क्षिप्रमेव व्यपोहति ॥ इति ।

यत्त्वाषाढस्येयं कार्तिकस्येयमिति स्वविषयेऽप्यौत्सर्गिकानुकरणेनाषाढीकार्त्तिकीपदे एकादशीपरे एवेति । तदयुक्तम्—

आषाढशुक्लपक्षान्ते भगवान्मधुसूदनः ।
भोगिभोगे निजां मायां योगनिद्रां समाप्नुयात् ॥

इति विष्णुधर्मोत्तरात् । यदपि द्वादशीपदमेकादशीपरमिति तदपि न, प्रमाणाभावात् । एतेषां च पक्षाणां यथासंप्रदायं व्यवस्था । श्रीरामस्य तु पारणोत्तरं द्वादशीमध्ये त्रयोदशीमध्ये वा पूर्वरात्रौ स्वापोत्सवः ।

पारणाहे पूर्वरात्रौ घण्टादीन्वादयन्मुहुः ।
विधाय महतीं पूजां विष्णुमभ्यर्च्य वैष्णवान् ॥

इति रामार्चनचन्द्रिकोक्तेः । शिष्टास्तु सर्वदेवानामपि पारणोत्तरमेव रात्रौ कुर्वन्ति । यत्तु मोहचूडोत्तरे—

मिथुनस्थे यदा भानुरमावास्याद्वयं स्पृशेत् ।
द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥ इति

तदुत्तरवर्षगतकर्कार्कस्वापपरमिति माधवः—

मेषादिमिथुनान्तेषु यदा दर्शद्वयं भवेत् ।
अब्दान्तरे तदावश्यं कर्कटार्के हरिः स्वपेत् ॥
कर्कटादित्रिके वापि यदा दर्शद्वयं भवेत् ।
अब्दान्तरे तदावश्यं मिथुनार्के हरिः स्वपेत् ॥

इति वाराहमिहिरोक्तेः । भविष्ये—

श्रावणे वर्जयेच्छाकं दधि भाद्रपदे तथा ।
दुग्धमाश्वयुजे मासि कार्तिके द्विदलं त्यजेत् ॥ इति ।
मूलपत्रकरीराग्रफलकाण्डविरूढकाः ।
त्वक्पुष्पं कवकं चेति शाकं दशविधं स्मृतम् ॥ इति ।

करीरं वंशांकुरः विरूढिकास्तिनिन्यः । कवकं शिलीन्ध्रम् ।
द्विदलं च स्कान्दे—

माषमुद्गमसूराश्च चणकाश्च कुलत्थकाः ।
निष्पावा राजमाषाश्च आढक्यो द्विदलं स्मृतम् ॥ इति ।

इत्येकादशीनिर्णयः ।

---

## अथ द्वादशी ।

सा च पूर्वा । रुद्रेण द्वादशी युक्ता इति युग्मवचनात् । माधवीये स्कान्दे—

---

१ शाकपदं दशसुयोगरूढम् ।

द्वादशी च प्रकर्तव्या एकादश्या युता प्रभो । इति ।

एकादशीपारणविषये माधवीये—

कलाद्वयं त्रयं वाऽपि द्वादशीं न त्वतिक्रमेत् ।
पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता ॥ इति ।

अल्पद्वादश्यां विशेषः स्कान्दे—

यदा भवेदतीवाल्पा द्वादशी पारणादिने ।
उषःकाले द्वयं कुर्यात्प्रातर्माध्याह्निकं च तत् ॥ इति ।

तत्र कथञ्चित्पारणासंभवे त्वाह देवलः—

सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत्कथम् ।
अद्भिस्तु पारणं कुर्यात्पुनर्भुक्तं न दोषकृत् ॥ इति ।

सङ्कटं त्रयोदशीनिमित्तकं श्राद्धस्नानदानादिकमन्यद्वा किञ्चित् । द्वादश्यामल्पायामिति शेषः । सर्वथा द्वादश्यभावे तूक्तं नारदीये ।

त्रयोदश्यां तु शुद्धायां पारणं पृथिवीफलम् ।
शतयज्ञाधिकं वाऽपि नरः प्राप्नोत्यसंशयम् ॥ इति ।

अत्र हरिवासरस्वरूपं तद्वर्जनं चोक्तं निर्णयामृते विष्णुधर्मोत्तरे—

द्वादश्याः प्रथमः पादो हरिवासरसंज्ञितः ।
अतिक्रम्य तु कर्तव्यं पारणं विष्णुतत्परैः ॥ इति ।

चैत्रशुक्लद्वादश्यां दमनकारोपणमुक्तमगस्त्यसंहितायाम् ।

द्वादश्यां चैत्रमासस्य शुक्लायां दमनोत्सवः ।
बौधायनादिभिः प्रोक्तः कर्तव्यः प्रतिवत्सरम् ॥

तत्र प्रथमं देवप्रार्थना—

क्रियालोपविघातार्थं यत्त्वया विहितं प्रभो ।
न मे विघ्नो भवेदत्र कुरु नाथ दयां मयि ॥
सर्वथा सर्वदा विष्णो मम त्वं परमा गतिः ।
देव त्वामुपवासेन तोषयामि जगत्पते ॥
कामक्रोधादयोऽप्येते न मे स्युर्व्रतघातकाः ।
अद्यप्रभृति देवेश यावद्वैशेषिकं दिनम् ॥
तावद्रक्षा त्वया कार्या सर्वस्यास्य नमोऽस्तु ते ।
एवं विज्ञाप्य देवेशं गुरुपादौ प्रणम्य च ॥
प्रातः स्नात्वा समभ्यर्च्य देवेशं विधिवन्नरः ।
गच्छेद्दमनकारामं सेकादृश्यां सुशोभितम् ॥

क्रमेणादाय तत्रैव पूजयेच्चन्दनादिना ।
नेष्यामि राजपूजार्थमिति संप्रार्थ्य तं नमेत् ॥
उत्पाट्य पञ्चगव्येन प्रोक्ष्य प्रक्षाल्य वारिणा ।
धौतेन वाससाऽऽच्छाद्य निधाय पटले नवे ॥

पटले वंशादिपात्रे । घण्टापुरुषसूक्तादिस्वनैः स्वगृहमानयेत् । ततो गृहमागत्य देवं प्रार्थयेत्—

आमन्त्रितोऽसि देवेश पुराणपुरुषोत्तम ।
प्रातस्त्वां पूजयिष्यामि सान्निध्यं कुरु केशव ॥
क्षीरोदधिमहानागशय्यासंस्थितविग्रह ।
प्रातस्त्वां पूजयिष्यामि सन्निधौ भव ते नमः ॥
निवेदयाम्यहं तुभ्यं प्रातर्दमनकं शुभम् ।
सर्वथा सर्वदा विष्णो नमस्तेऽस्तु प्रसीद मे ॥
इत्थमामन्त्र्य दत्त्वाऽथ तस्मै पुष्पाञ्जलिं पुनः ।
पूजितं तद्दमनकं कुम्भस्योपरि संस्थितम् ॥
अस्त्रेण सर्वतो रक्षेत्कवचेनावगुण्ठयेत् ।
रक्षेद्वा चक्रमन्त्रेण नृहरेर्मनुनाऽथ वा ॥

ततो ब्राह्मणान्गुरून्प्रणम्य गीतवाद्यादिभी रात्रौ जागरणं कुर्यात्, ततः प्रातरुत्थाय स्नानाद्याह्निकं नित्यपूजां च कृत्वा नैमित्तिकं कुर्यात्—तद्यथा पूर्वदिनाधिवासितं दमनकं दूर्वादलसहितं गृहीत्वा—

ॐ देवदेवजगन्नाथ वाञ्छितार्थप्रदायक ।
हृदिस्थान्पूरयन्कामान्मम कामेश्वरीप्रिय ॥
इदं दमनकं देव गृहाण मदनुग्रहात् ।
इमां सांवत्सरीं पूजां भगवन्परिपूरय ॥

इति मूलमन्त्रसंपुटितेन मन्त्रेण देवाय दमनकमर्पयेत् । तत उत्तर-प्रार्थना—

मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः ।
इयं सांवत्सरी पूजा तवास्तु गरुडध्वज ॥
वनमालां यथा देव कौस्तुभं सततं हृदि ।
तद्वद्दामनकीं मालां पूजां च हृदये वह ॥
जानताऽजानता वाऽपि न कृतं यत्तवार्चनम् ।

तत्सर्वं पूर्णतां यातु त्वत्प्रसादाद्रमापते ॥
जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन ।
यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥

इति देवं प्रार्थयित्वा दण्डवत्प्रणम्य भूषणवस्त्रादिभिर्गुरुं सपूज्य नत्वा ब्राह्मणान्भोजयेत्। स्वयं च पारणं कुर्यात्। इति दमनकारोपणम्।

पारणाहे द्वादश्यलाभे तत्रैव—

पारणाहे न लभ्येत द्वादशी घटिकापि वा ।
तदा त्रयोदशी ग्राह्या पवित्रदमनार्पणे ॥

तथा—माधवे दमनारोपः स्यान्मधौ विघ्नितो यदि ।
वैशाख्यां श्रावणे नागे कर्तव्यं दमनार्पणम् ॥ इति ।

माधवे वैशाखे । तद्द्वादश्यामित्यर्थः । नागे पञ्चम्याम् ।

---

ज्येष्ठशुक्लद्वादश्यां वटसावित्रीव्रतारम्भ उक्तो भविष्ये—

ज्येष्ठे मासि सिते पक्षे द्वादश्यां रजनीमुखे ।
व्रतं त्रिरात्रमुद्दिश्य दिवारात्रिं स्थिरा भवेत् ॥ इति ।

---

आषाढशुक्लद्वादश्यां तप्तमुद्राधारणमाथर्वणश्रुतौ—

तद्विष्णोः परमं पदं ये गच्छन्ति हि लाञ्छिताः । इति ।

नारदीये—

अग्निनैव तु संयुक्तं चक्रमादाय वैष्णवः ।
धारयेत्सर्वगात्राणां विष्णुसायुज्यमश्नुते ॥ इति ।

तच्छूद्रविषयम् । न ब्राह्मणादेः

यथा श्मशानजं काष्ठमनर्हं सर्वकर्मसु ।
तथा चक्राङ्कितो विप्रः सर्वकर्मसु गर्हितः ॥

इत्याश्वलायनोक्तेः ।

द्विजं तु तप्तमुद्रादिलिङ्गाङ्किततनुं नरः ।
संभाष्य रौरवं याति यावदिन्द्राश्चतुर्दश ॥

इति नारदीयात् । तथा—

शङ्खचक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा ।
स शूद्रवद्बहिःकार्यः सर्वस्माद्द्विजकर्मणः ॥ इति ।

शैवपुराणेऽपि—

शङ्खचक्राद्यङ्कनं च गीतनृत्यादिकं तथा ।
एकजातेरयं धर्मो न जातु स्याद्द्विजन्मनः ॥ इति ।

एतेषां च विधिनिषेधानां वैष्णवावैष्णवपरतया व्यवस्थेति केचित् । बहवस्तु द्विविधानामपि निर्मूलतामाहुः ।

---

श्रावणे शुक्लद्वादश्यां पवित्रारोपणमुक्तं रामार्चनचन्द्रिकायां—

श्रावणस्य सिते पक्षे द्वादश्यां शौनकादिभिः ।
उक्तः सदा प्रकर्तव्यः पवित्रारोपणोत्सवः ॥

पाद्मे— ऊर्ज्जे व्रतं मधौ दोला श्रावणे तन्तुपूजनम् ।
चैत्रे च दमनारोपमकुर्वाणो व्रजत्यधः ॥
पवित्रारोपणं विघ्नाच्छ्रावणे न भवेद्यदि ।
कार्तिक्यवधि शुक्लार्के कर्तव्यमिति नारदः ॥

शुक्लार्कः शुक्लद्वादशी ।

हेमरूप्यमयैः सूत्रैस्तथा कौशेयपद्मजैः ।
कुशैः काशैश्च कार्पासैर्ब्राह्मण्या कर्तितैः शुभैः ॥
कन्यया वा पवित्रं स्यान्न पौंश्चल्यादिभिः कृतैः ।
स्नात्वा त्रिगुणितं सूत्रं त्रिगुणीकृत्य शोधयेत् ॥
पृथक् पृथक् पञ्चगव्यैरद्भिः प्रक्षालयेत्ततः ।
मूलेनाष्टोत्तरशतगायत्र्या रामसंज्ञया ॥
शङ्खोदकेनाभिमन्त्र्य पवित्राणि विनिर्ममेत् ।
तत्रोत्तमं पवित्रं तु षष्ट्या सह शतैस्त्रिभिः ॥
सप्तत्या सहितं द्वाभ्यां पवित्रं मध्यमं स्मृतम् ।
साशीतिना शतेनैव कनिष्ठं तत्समाचरेत् ॥
अष्टोत्तरतदर्द्धार्द्धेनवसूत्रीकृतेन वा ।
जानूरुनाभिपर्यन्तमुत्तमादित्रयं भवेत् ॥

अष्टोत्तरसहस्रेण विंशोत्तरयुतेन सप्तत्या वा वनमाला शतं पञ्चाशत्षट्त्रिंशद्ग्रन्थिभिरुत्तमा षट्त्रिंशच्चतुर्दशद्वादशभिरिति केचन । चतुर्विंशद्द्वादशाष्टाभिरित्येके । अङ्गुष्ठपर्वतदर्द्धतदर्द्धपरिमिता ग्रन्थिरुत्तमादेः । स्नात्वा विज्ञापयेद्देवम्—

क्रियालोपविघातार्थे यत्त्वया विहितं विभो ।
मयैतत्क्रियते देव तव तुष्ट्यै पवित्रकम् ॥

न मे विघ्नो भवेदत्र कुरु नाथ दयां मयि ।
सर्वथा सर्वदा विष्णो मम त्वं परमा गतिः ॥
उपवासेन त्वां देव तोषयामि जगत्पते ।
कामक्रोधादयोऽप्येते न मे स्युर्व्रतघातकाः ॥
अद्यप्रभृति देवेश यावद्वैशेषिकं दिनम् ।
तावद्रक्षा त्वया कार्या सर्वस्यास्य नमोऽस्तु ते ॥
कुम्भं पुण्याम्बुनाऽऽपूर्य सर्वतोभद्रके शुभे ।
स्थापयेत्पुरतो विष्णोस्तत्र सूत्राणि पूजयेत् ॥
सांवत्सरस्य यागस्य पवित्रीकरणाय मे ।
विष्णुलोकात्पवित्राद्य आगच्छेह नमोऽस्तु ते ॥
सर्वाभरणचित्राङ्ग सर्वदेवनमस्कृत ।
लावण्यरूपसंपन्न सर्वकर्तः प्रजापते ॥
सर्वमात्मेश सूत्रेऽस्मिन्सान्निध्यं कुरु ते नमः ।
सर्वरत्नोज्वलाकार ब्रह्माण्डब्रह्मरोचिषः ॥
मुकुटोत्तमसर्वाङ्गशिरःसूत्र इहैहि माम् ।
इह ते जगतः कीर्तिः सर्वलावण्यदायिनी ॥
श्रीसूत्र नित्यकल्याण सान्निध्यं कुरु ते नमः ।
मुनिभिर्मन्त्रयेदेतैः पूजयेन्मूलमन्त्रतः ॥
अथ देवकरे विद्वान् गन्धसूत्रसमुद्भवम् ।
वितस्तिमानकं दोरं बध्नीयान्मङ्गलात्मकम् ॥
संवत्सरकृता चार्चा संपूर्णा फलदाऽस्तु मे ।
पवित्रारोपणे चैव सान्निध्यं कुरु ते नमः ॥
विष्णुतेजोद्भवं रम्यं सर्वपातकनाशनम् ।
सर्वकामप्रदं देव तवाग्रे धारयाम्यहम् ॥

इतिमन्त्रः ।

नीराजयेत्ततो देवं मङ्गलाघोषपूर्वकम् ।
मन्त्रेणाथ सुरेशानं देवदेवं तु मन्त्रयेत् ॥
आमन्त्रिताऽसि देवेश पुराणपुरुषोत्तम ।
प्रातस्त्वां पूजयिष्यामि सान्निध्यं कुरु केशव ॥
क्षीरोदधिमहानागशय्यावस्थितविग्रह ।
प्रातस्त्वां पूजयिष्यामि सन्निधौ भव ते नमः ॥

निवेदयाम्यहं तुभ्यं प्रातरेतत्पवित्रकम् ।
सर्वथा सर्वदा विष्णो नमस्तेऽस्तु प्रसीद मे ॥
निपतेद्दण्डवद्भूमौ क्षिप्त्वा पुष्पाञ्जलिं ततः ।
ब्राह्मणेभ्यो नमस्कृत्य गुरुपादौ प्रणम्य च ।
गीतमङ्गलनिर्घोषैः कुर्याज्जागरणं ततः ॥

इत्यधिवासनम् ।

अपरेद्युर्नित्यपूजां विधाय—

ततो मङ्गलनिर्घोषैः शङ्खतूर्यादिनिःस्वनैः ।
गन्धदूर्वाक्षतैर्युक्तं दद्याद्देवाय सूत्रकम् ॥
राम राम नमस्कार्य गृहाणेदं पवित्रकम् ।
पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् ॥
पवित्रं च कुरुष्वाद्य यन्मया दुष्कृतं कृतम् ।
शुद्धो भवाम्यहं देव त्वत्प्रसादात्सुरेश्वर ॥
मूलसंपुटितो ह्येष पवित्रारोपणे मनुः ।
अङ्गाद्यावृतिदेवेभ्यस्ततो दद्यात्स्वनामभिः ॥
नैवेद्यं तु महापूर्वं ततो दद्याच्च भक्तितः ।
नीराजयेत्ततो देवं रमाकान्तं समङ्गलम् ॥
संवीज्य चामरैः पुण्यैर्दर्पणं दर्शयेत्ततः ।
प्रार्थयेद्देवदेवेशं मन्त्रैरेभिर्यथाविधि ॥
मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः ।
इयं सांवत्सरी पूजा तवास्तु गरुडध्वज ॥
वनमालां यथा देव कौस्तुभं सततं हृदि ।
तद्वत्पवित्रपूजां च हृदये वह केशव ॥
जानताऽजानता वाऽपि यत्कृतं तु त्वदर्चनम् ।
केनचिद्विघ्नदोषेण परिपूर्णं तदस्तु मे ॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं नृकेसरिन् ।
यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥
अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
दासोऽयमिति मां मत्वा क्षमस्व मधुसूदन ॥
ततः पवित्रं गुरवे दद्याद्गन्धादिपूर्वकम् ।
अथैनं पूजयेद्भक्त्या स्वर्णवस्त्रानुलेपनैः ॥

ब्राह्मणान्वैष्णवांश्चैव गन्धपुष्पादिनाऽर्चयेत् ।
मासं पक्षमहोरात्रं त्रिरात्रं धारयेत्तथा ॥
देवे तं सूत्रसन्दर्भं देशकालविवक्षया ।
प्रत्यहं स्नानकार्यादौ सूत्राण्युत्तार्य कारयेत् ॥
अथान्ते देवमभ्यर्च्य ततः सूत्रं विसर्जयेत् ।
सांवत्सरीं शुभां पूजां संपाद्य विधिवन्मम ॥
व्रजेदानीं पवित्र त्वं विष्णुलोकं विसर्जितम् ।
यावद्देवपवित्राणि तावत्तिष्ठेत्समाहितः ।
ब्रह्मचारी हविष्याशी देवपूजापरायणः ॥

## श्रवणद्वादशी ।

भाद्रशुक्लद्वादशी श्रवणद्वादशी । सा चैकादशीयुतैव, तदुक्तं मात्स्ये—

द्वादशी श्रवणस्पृष्टा स्पृशेदेकादशीं यदि ।
स एव वैष्णवो योगो विष्णुशृङ्खलसंज्ञितः ॥
तस्मिन्नुपोष्य विधिवन्नरः सङ्क्षीणकल्मषः ।
प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिदुर्लभाम् ॥ इति ।

द्वादश्यां श्रवणाभावे तु नारदीये—

यदा न प्राप्यते ऋक्षं द्वादश्यां वैष्णवं क्वचित् ।
एकादशी तदोपोष्या पापघ्नी श्रवणान्विता ॥ इति ।

द्वादश्यामेव श्रवणयोगे तु भविष्ये—

एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् ।
नचात्र विधिलोपः स्यादुभयोर्दैवतं हरिः ॥ इति ।

विधिलोप एकादशीपारणहानिकृतः । अशक्तौ तु मात्स्ये—

द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं यदि ।
उपोष्यैकादशीं तत्र द्वादश्यां पूजयेद्धरिम् ॥ इति ।

अत्र कृत्यमुक्तं भविष्योत्तरे—

मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता ।
सर्वकामप्रदा पुण्या उपवासे महाफला ॥
सङ्गमे सरितां स्नात्वा द्वादशीं समुपोषितः ।
समग्रं समवाप्नोति द्वादशद्वादशीफलम् ॥

विष्णुधर्मोत्तरे—

या राम श्रवणोपेता द्वादशी महती तु सा ।
तस्यामुपोषितः स्नातः पूजयित्वा जनार्दनम् ॥
प्राप्नोत्ययत्नाद्धर्मज्ञ द्वादशद्वादशीफलम् ।
दध्योदनयुतं तस्यां जलपूर्णघटं द्विज ॥
वस्त्रसंवेष्टितं दत्त्वा छत्रोपाहनमेव च ।
न दुर्गतिमवाप्नोति गतिमग्र्यां च विन्दति ।
अक्षय्यस्थानमाप्नोति नात्र कार्या विचारणा ॥ इति ।

पारणे तु विशेषो नारदीये—

तिथिनक्षत्रयोगे तु उपवासो यदा भवेत् ।
पारणं तु न कर्तव्यं यावन्नैकस्य संक्षयः ॥ इति ।

अत्र वरुणासङ्गमे स्नानमुक्तं लैङ्गे—

अतः परं तु संसेव्यं गङ्गावरुणसङ्गमम् ।
श्रवणद्वादशीयोगे बुधवारो यदा भवेत् ।
तदा तस्मिन्नरः स्नात्वा संनिहत्य फलं लभेत् ॥ इति ।

---

## वत्सद्वादशी ।

कार्तिककृष्णा वत्सद्वादशी । सा पूर्वविद्धा । 'रुद्रेण द्वादशी युक्ता' इति युग्मवाक्यात्

वत्सपूजा वटैश्चैव कर्तव्या प्रथमेऽहनि ।

इतिस्मृत्यन्तराच्च । भविष्यत्पुराणे—

सवत्सां तुल्यवर्णां च शीलिनीं गां पयस्विनीम् ।
चन्दनादिभिरालिप्य पुष्पमालाभिरर्चयेत् ॥
अर्घं ताम्रमये पात्रे कृत्वा पुष्पाक्षतैस्तिलैः ।
पादमूले तु दद्याद्वै मन्त्रेणानेन पाण्डव ॥
क्षीरोदार्णवसंभूते सुरासुरनमस्कृते ।
सर्वदेवमये मातर्गृहाणार्घ्यं नमोऽस्तु ते ॥
ततो माषादिसंसिद्धान्वटकान्विनिवेदयेत् ।
सुरभि त्वं जगन्माता देवी विष्णुपदे स्थिता ।
सर्वदेवमये ग्रासं मया दत्तमिमं ग्रस ॥

ततः— सर्वदेवमये देवि सर्वदेवैरलङ्कृते ।

मातर्ममाभिलषितं सफलं कुरु नन्दिनि ॥

इति प्रार्थयेत् । तत्रैव—

तद्दिने तैलपक्वं च स्थालीपक्वं युधिष्ठिर ।
गोक्षीरं गोघृतं चैव दधि तक्रं च वर्जयेत् ॥ इति ।

अत्रैव द्वादश्यादिषु विशेषो नारदीये—

आश्विने कृष्णपक्षे तु द्वादश्यादिषु पञ्चसु ।
तिथिषूक्तः पूर्वरात्रौ नृणां नीराजनाविधिः ॥
नीराजयेयुर्देवांस्तु विप्रान्गांश्च तुरङ्गमान् ।
ज्येष्ठान् श्रेष्ठान् जघन्यांश्च मातृमुख्याश्च योषितः ॥ इति ।

अयं चाश्विनोऽमावास्यान्तः ।

## चातुर्मास्यसमाप्तिः ।

कार्तिकशुक्लद्वादश्यां चातुर्मास्यव्रतसमाप्तिरुक्ता महाभारते—

चतुर्थो गृह्य वै चीर्णं चातुर्मास्यव्रतं नरैः ।
कार्तिके शुक्लपक्षे तु द्वादश्यां तत्समापयेत् ॥ इति ।

मन्त्रस्तु—इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो ।
न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जनार्दन ॥ इति ।

---

## अथ सर्वद्वादशीकृत्यं तन्नियमाश्च ।

कात्यायनः—

प्रातः स्नात्वा हरिं पूज्य उपवासं समर्पयेत् ।
अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ॥
प्रसादसुमुखो नाथ ज्ञानदृष्टिप्रदो भव ।
पारणं तु ततः कुर्याद्यथा संभवमागतः ॥ इति ।

बृहन्नारदीये—

ब्राह्मणान्भोजयेच्छक्त्या प्रदद्याद्दक्षिणां तथा ।
ततः स्वबन्धुभिः सार्द्धं नारायणपरायणः ।
कृतपञ्चमहायज्ञः स्वयं भुञ्जीत वाग्यतः ॥ इति ।

भोजने तु विशेषः स्कान्दे—

कृत्वा चैवोपवासं तु योऽश्नाति द्वादशीदिने ।
नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनम् ॥ इति ।

तत्र वर्ज्यानि ब्रह्माण्डे—

कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणम् ।
व्यायामं च प्रवासं च दिवास्वापमथाञ्जनम् ॥
तिलपिष्टं मसूरं च द्वादशैतानि वैष्णवः ।
द्वादश्यां वर्जयेन्नित्यं सर्वपापैः प्रमुच्यते ॥

तथा— कांस्यं मांसं सुरां द्यूतं व्यायामं क्रोधमैथुने ।
हिंसामत्यन्तलौल्यं च तैलं निर्माल्यलङ्घनम् ।
द्वादश्यां द्वादशैतानि वैष्णवः परिवर्जयेत् ॥

बृहस्पतिरपि—

दिवानिद्रां परान्नं च पुनर्भोजनमैथुने ।
क्षौद्रं कांस्यामिषे तैलं द्वादश्यामष्ट वर्जयेत् ॥

कात्यायनः—

द्वादश्यां पारणं कुर्याद्वर्जयित्वा ह्युपोदकीम् । इति ।

सर्वं चैतत्काम्यव्रतपरम् ।

पुनर्भोजनमध्वानं भारमायासमैथुने ।
उपवासफलं हन्युर्दिवानिद्रा च पञ्चमी ॥

तथा— कांस्यं मांसं मसूरं च चणकाः कोरदूषकाः ।
शाकं मधु परान्नं च हन्युरष्टाविमे फलम् ॥

इत्यादौ फलग्रहणात् । स्कान्दे—

कलाद्वयं त्रयं वापि द्वादशी यत्र दृश्यते ।
स्नात्वार्चनादिकं कर्म तदा रात्रौ विधीयते ॥

अरुणोदयपरश्चात्र रात्रिशब्दः । तथा च नारदीये—

अल्पायामपि विप्रेन्द्र द्वादश्यामरुणोदये ।
स्नात्वार्चनक्रियाः कार्या जपहोमादिसंयुताः ॥ इति ।

होमादिशब्देन चात्र स्मार्तमेव कर्म गृह्यते नतु श्रौतम् । स्मृत्या श्रौतकालबाधायोगात् । पाद्मेऽपि—

यदा भवति अल्पापि द्वादशी पारणादिने ।
उषःकाले द्वयं कुर्यात्प्रातर्माध्याह्निकं तदा ॥ इति ।
महाहानिकरी ह्येषा द्वादशी लङ्घिता नरैः ।
करोति धर्महरणमस्नातेव सरस्वती ॥ इति ।

भूयस्यामपि द्वादश्यां मध्याह्निकापकर्षो भवत्येव ।

सर्वेषामुपवासानां प्रातरेव हि पारणम् ॥

इत्युक्तेः । भोजनमध्याह्निकयोश्च वाचनिकक्रमसद्भावात् । एवमुक्तयमनियमलोपे । यमः—

मानसे नियमे लुप्ते स्मरेद्विष्णुमनामयम् ॥ इति ।

याज्ञवल्क्यः—

यदि वाग्यमलोपः स्यात्स्नानदानादिकर्मसु ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेन्त्रा विष्णुमव्ययम् ॥ इति ।

विष्णुधर्मोत्तरे—

असंभाष्यान्हि संभाष्य तुलस्यतसिकादलम् ।
आमलक्याः फलं वाऽपि पारणे प्राश्य शुध्यति ॥
इदं चोदाहरेत्सम्यक् कृत्वा तत्प्रणवं नमः ।
शारीरमन्तःकरणोपघातं वाचश्च विष्णुर्भगवानशेषम् ॥
शमं नयत्वस्तु ममेह शर्म पायादनन्ते हृदि सन्निविष्टे ।
अन्तःशुद्धिं बहिःशुद्धिं शुद्धो धर्ममयोऽच्युतः ॥
स करोतु ममैतस्मिन् शुचिरेवास्मि सर्वदा ।
बाह्योपघातानघान्बौद्धांश्च भगवानजः ॥
शमं नयत्वनन्तात्मा विष्णुश्चेतसि संस्थितः ।
एतत्संभाष्य जप्तव्यं पाषण्डिभिरुपोषितैः ॥ इति ।

वैष्णवे—

तस्यावलोकनात्सूर्यं पश्येत मतिमान्नरः ।
नमः शुचिषदेत्युक्त्वा इति ।
तस्य पाषण्ड्यादेः । तस्य स्पर्शेऽपि तत्रैव—
संस्पर्शे तु बुधः स्नात्वा शुचिरादित्यदर्शनात् ॥

विष्णुरहस्ये—

श्राद्धोपवासदिवसे खादित्वा दन्तधावनम् ।
गायत्र्या शतसंपूतमम्बु प्राश्य विशुद्ध्यति ॥ इति ।
रजस्वलां च चण्डालं महापातकिनं तथा ।
सूतिकां पतितं चैव उच्छिष्टं रजकादिकम् ॥

इत्युपक्रम्य बृहन्नारदीये—

व्रतादिमध्ये शृणुयाद्येषां ध्वनिमुत्तमः ।

अष्टोत्तरसहस्रं तु जपेद्वै वेदमातरम् ।

वेदमाता गायत्री । कात्यायनः—

मिथ्यावादे दिवा स्वापे बहुशोम्बुनिषेवणे ।
अष्टाक्षरं व्रती जप्त्वा शतमष्टोत्तरं शुचिः ॥ इति ।

अष्टाक्षरम् 'ॐ' नमो नारायणाय इति । शङ्खः—

कृत्वा स्तेयं प्राणिहिंसां यथार्हं शास्त्रचोदितम् ।
प्रायश्चित्तं व्रती कुर्याज्जपेन्नाम्नां शतत्रयम् ॥ इति ।

पैठीनसिः—

ताम्बूलचर्वणे स्त्रीणां भोगे मांसनिषेवणे ।
व्रतलोपो भवेत्कुर्यादष्टाक्षरमनोर्जपम् ॥ इति ।

कात्यायनः—

रेतःसंक्रमणात्स्त्रीणां भोगोऽन्यत्र क्षयः स्मृतः ।
जपोऽष्टाक्षरमन्त्रस्य नाम्नां शततत्रयस्य च ॥ इति ।

रेतःसंक्रमणमृतुकालगमनम् । तदात्मकात्स्त्रीसंभोगादन्यत्र संभोगे व्रतस्य क्षय इत्यर्थः । देवलोऽपि, 'न दारेष्वृतुसङ्गमात्' इति ।

इति द्वादशी ।

---

## अथ त्रयोदशी ।

सा तु शुक्ला पूर्वा कृष्णोत्तरा ग्राह्या । 'शुक्ला त्रयोदशी पूर्वा परा कृष्णा त्रयोदशी इति माधवोक्तेः' । दीपिकाऽपि 'त्रयोदशी तिथिः पूर्वा सितेऽथाऽसिते पश्चात् ।' इति ।

अत्र प्रदोषव्रतं ब्रह्मोत्तरखण्डे—

पक्षद्वये त्रयोदश्यां निराहारो भवेद्दिवा ।
घटिकात्रिरस्तमयात्पूर्वं स्नानं समाचरेत् ॥
शुक्लाम्बरधरो भूत्वा वाग्यतो नियमान्वितः ।
कृतसन्ध्याजपविधिः शिवपूजां समारभेत् ॥ इति ।

अत्र प्रदोषव्यापिनी ग्राह्या । तत्रैव पूजाविधानात् । दिनद्वये प्रदोषव्यापित्वेऽव्यापित्वे वा पूर्वैव । तथा च सुमन्तुः—

त्रयोदशी तु कर्तव्या द्वादशीसहिता मुने ॥ इति ।

इदं च कृष्णपक्षे मन्दवासरे प्रशस्तम्—

मन्दवारे प्रदोषोऽयं दुर्लभः सर्वदेहिनाम् ।

तत्रापि दुर्लभस्तस्मिन् कृष्णपक्षे समासतः ॥

इति । तत्रैवोक्तत्वात् । चैत्रकृष्णत्रयोदश्यामलभ्ययोगः स्कान्दे—

वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी
गङ्गायां यदि लभ्येत सूर्यग्रहशतैः समा ॥
शनिवारसमायुक्ता सा महावारुणी स्मृता ।
शुभयोगसमायुक्ता शनौ शतभिषा यदि ॥
महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् ।
तिथिकृत्ये च कृष्णादि व्रते शुक्लादिरेव च ॥ इति ।

ब्राह्मोक्तेरत्र कृष्णादिमासः। नचास्य व्रतत्वं व्रतपदतत्प्रकरणाद्यभावात्। कार्तिककृष्णत्रयोदश्यां दीपदानमुक्तं चन्द्रप्रकाशे । स्कान्दे—

कार्तिकस्यासिते पक्षे त्रयोदश्यां निशामुखे ।
यमदीपं बहिर्दद्यादपमृत्युर्विनश्यति ॥ इति ।

बहिर्ग्रामाद्बहिरिति केचित् । गृहाद्बहिरित्यपरे । मन्त्रस्तु—

मृत्युना पाशदण्डाभ्यां कालश्यामलया सह ।
त्रयोदश्यां दीपदानात्सूर्यजः प्रीयतां मम ॥

इति दिक् ।

इति त्रयोदशी ।

---

## अथ चतुर्दशी ।

सा तु कृष्णा पूर्वा शुक्लोत्तरा ग्राह्या । 'चतुर्दश्या च पूर्णिमा इति युग्मवाक्यात्—

तृतीयैकादशी षष्ठी शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता ॥

इति नारदीयात् ।

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्वविद्धा तु कर्तव्या परविद्धा न कर्हिचित् ॥

इत्यापस्तम्बोक्तेश्च । तत्र सर्वासु चतुर्दशीषु वीरेश्वरपूजोक्ता स्कान्दे—

विधायैव जागरणं नरो वीरेशमर्चयेत् ।
भूतायां नैव गृह्णाति शरीरं पाञ्चभौतिकम् ॥

चैत्रकृष्णचतुर्दश्यां केदारकुण्डोदकपानमुक्तं तत्रैव—

चैत्रकृष्णचतुर्दश्यामुपवासं विधाय च ।
केदारोदकपानेन यथा तत्र फलं लभेत् ॥ इति ।

चैत्रशुक्लचतुर्दशी रात्रिव्यापिनी ग्राह्येति केचित्—

मधोः श्रावणमासस्य या तु शुक्ला चतुर्दशी ।
सा रात्रिव्यापिनी ग्राह्या परा पूर्वाह्णगामिनी ॥

इति बौधायनवचनात् ।

निशि भ्रमन्ति भूतानि शक्तयः शूलभृद्यतः ।
अतस्तत्र चतुर्दश्यां सत्यां तत्पूजनं भवेत् ॥

इति ब्रह्मवैवर्ताच्च । तातचरणास्तु—

तृतीयैकादशी षष्ठी शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता ॥ इति ।

नारदेन शुक्लचतुर्दशी परविद्धोक्ता,

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्वविद्धा तु कर्तव्या परविद्धा न कर्हि चित् ॥

इत्यापस्तम्बेन च कृष्णा पूर्वोक्ता । अपराह्णव्यापित्वे तूभे अपि पूर्वविद्धे एव च,

चतुर्दशी तु कर्तव्या त्रयोदश्या युता विभो ।
मम भक्तैर्महाबाहो भवेद्या चापराह्णिकी ॥ इति ।
दर्शविद्धा न कर्तव्या राकाविद्धा कदाचन ।

इति स्कान्दोक्तेः । मधोः श्रावणमासस्येति बौधायनीये तु—परापूर्वाह्णगामिनीत्येव विधीयते न रात्रिव्याप्ता ग्राह्येत्यपि । उभयविधौ वाक्यभेदप्रसङ्गात् । किन्तु स्कान्दवाक्यप्राप्तं पूर्वविद्धत्वमनूद्यते, तद्धि रात्रिव्यापित्व एव भवति । रात्रिव्यापिनीति विधिः, पूर्वाह्णगामिनीत्यनुवाद इति चेन्न । मधुश्रावणशुक्लचतुर्दशीभिन्नानां पूर्वाण्हव्यापिनीनां ग्रहणस्याप्राप्तेः । अतो लक्षणया रात्रिव्यापिनीत्यनेन पूर्वविद्धत्वमनूद्यते इत्याहुः । रात्रिव्यापिनीत्येतत्पूर्वविद्धापरम् । तच्च सायाह्णव्यापित्वे भवति । पूर्वविद्धा च रात्रिव्यापिन्येव भवति । एवं च पूर्वविद्धत्वे परविद्धत्वे वा प्राप्ते मधोः श्रावणमासस्येति वचो नियमविधिर्भवति । पूर्वविद्धत्वाभावे केवलरात्रिमात्रव्यापित्वे त्वपूर्वविधित्वं स्यात्तच्च नियमविधेर्गुर्विति शास्त्रसिद्धम् । सा रात्रिव्यापिनी—

त्येतत्पूर्वविद्धापरमिति तु मम प्रतिभाति । अस्यामेव पशुपतीश्वरपूजोक्ता तत्रैव—

चैत्रशुक्लचतुर्दश्यामुपोषणपरायणः ।
पूजयित्वा पशुपतिं रात्रौ जागरणं तथा ॥ इति ।

वैशाखशुक्लचतुर्दशी नृसिंहजयन्ती । तदुक्तं गोविन्दार्णवे ब्राह्मे—

'शुक्लपक्षे चतुर्दश्यां मासि माधवसंज्ञके ।
प्रादुर्भूतो नृपश्चास्यस्तस्मात्तां समुपोषयेत् ' ॥

माधवो वैशाखः । नृपश्चास्यो नृसिंहः । इयं च प्रदोषव्यापिनी ग्राह्या—

वैशाखस्य चतुर्दश्यां सोमवारेऽनिलर्क्षके ।
अवतारो नृसिंहस्य प्रदोषसमये द्विजाः ॥

इति स्कान्दात् ।

दिनद्वये प्रदोषव्याप्तावेकदेशसमव्याप्तौ च परा ।

अनङ्गेन समायुक्ता न सोपोष्या चतुर्दशी ॥
धनापत्यैर्वियुज्येत तस्मात्तां परिवर्जयेत् ।

इति तत्रैव निषेधात् । वैषम्येणैकदेशयोगे आधिक्यवती । अत्रैवोङ्कारेश्वरयात्राप्युक्तं काशीखण्डे—

माघशुक्लचतुर्दश्यामद्यापि क्षेत्रवासिनः ।
तत्र यात्रां प्रकुर्वन्ति महोत्सवपुरस्सराः ॥
तत्र जागरणं कृत्वा चतुर्दश्यामुपोषिताः ।
प्राप्नुवन्ति परं स्थानं यत्र कुत्रापि ते मृताः ॥ इति ।
ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सर्वतः ।
तानि वैशाखभूतायामागत्योङ्कृतिदर्शने ॥ इति ।

भाद्रपदशुक्लचतुर्दश्यामनन्तव्रतं, तत्रोदयव्यापिनी ग्राह्या—

तथा भाद्रपदस्यान्ते चतुर्दश्यां द्विजोत्तम ।
पौर्णमास्यां समायोगे व्रतं चानन्तकं चरेत् ॥

इति गोविन्दार्णवे भविष्योक्तेः ।

मुहूर्तमपि चेद्भाद्रे पौर्णमास्यां चतुर्दशी ।
संपूर्णां तां विदुस्तस्यां पूजयेद्विष्णुमव्ययम् ॥

इति स्कान्दाच्च । मुहूर्तमपीति त्रिमुहूर्तप्रशंसापरम् । माधवोऽप्येवम् ।

दिनद्वये उदयव्यापित्वे संपूर्णत्वात्पूर्वैव । कार्तिककृष्णचतुर्दशी नरकचतुर्दशी । तत्र चन्द्रोदये अभ्यङ्गः कार्यः । तदुक्तं हेमाद्रौ भविष्ये—

अश्वयुक्कृष्णपक्षस्य चतुर्दश्यां विधूदये ।
तिलतैलेन कर्तव्यं स्नानं नरकभीरुणा ॥ इति ।

अश्वयुक्त्वं चामावास्यान्तमासाभिप्रायेण । अत एव हेमाद्रौ भविष्ये—

कार्तिके कृष्णपक्षे तु चतुर्दश्यामिनोदये ।
अवश्यमेव कर्तव्यं स्नानं नरकभीरुणा ॥ इति ।

इनः सूर्यः । इनश्चन्द्र इति व्याचक्षाणस्तु भ्रान्त एव । अत एव 'चतुर्दश्यां दिनोदये.' इति प्राचां पुस्तकेषु पाठः । अत्र च यथाचारं व्यवस्थेति केचित् । परे दिनेनपदयोश्चन्द्रे लक्षणेत्याहुः ।

पूर्वविद्धचतुर्दश्यां कार्तिकस्य सितेतरे ।
पक्षे प्रत्यूषसमये स्नानं कुर्यात्प्रयत्नतः ॥

इति स्कान्दादाचाराच्च । वस्तुतस्तु चन्द्रोदयो मुख्यः कालः । सूर्योदयो गौणः । उत्तरभावित्वात् । अत एव मण्डनः । स्वकालादुत्तरो गौण कालः सर्वस्य कर्मणः इति । एवं च दाक्षिणात्यशिष्टाचारोऽप्यनुगुणो भवति । एवं चाभ्यङ्गे मुख्या चन्द्रोदयव्यापिनी । दिनद्वये तद्व्याप्तौ पूर्वा । पूर्वोक्तस्कान्दात् । दिनद्वये व्याप्त्यभावेऽपि पूर्वैव । गौणकाले सत्वात् । तत्राप्यभावेऽपि पूर्वैव—

तिथ्यादौ तु भवेद्यावान् ह्रासो वृद्धिः परेऽहनि ।
तावान् ग्राह्यः स पूर्वेद्युरदृष्टोऽपि स्वकर्मणि ॥

इति वाक्येन त्रयोदश्यन्ते चतुर्दशीह्रासप्रक्षेपेण चन्द्रोदये पारिभाषिकचतुर्दशीसद्भावात् । अत एव चन्द्रप्रकाशे—

त्रयोदशी यदा प्रातः क्षयं याति चतुर्दशी ।
रात्रिशेषे त्वमावास्या तदाभ्यङ्गे त्रयोदशी ॥ इति ।

ब्राह्मे— तैले लक्ष्मीर्जले गङ्गा दीपावल्याश्चतुर्दशीम् ।
प्रातःस्नानं तु यः कुर्याद्यमलोकं न पश्यति ॥ इति ।

पाद्मे— अपामार्गमथो तुम्बी प्रपुन्नाटमथापरम् ।
भ्रामयेत्स्नानमध्ये तु नरकस्य क्षयाय वै ॥

मन्त्रस्तु—

सीतालोष्ठसमायुक्तसकण्टकदलान्वित ।
हर पापमपामार्ग भ्राम्यमाणः पुनः पुनः ।। इति ।

तर्पणमुक्तं मदनरत्ने भविष्ये—

ततश्च तर्पणं कार्यं धर्मराजस्य नामभिः ।
यमाय धर्मराजाय मृत्यवे चान्तकाय च ।।
वैवस्वताय कालाय सर्वभूतक्षयाय च ।
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।।
वृकोदराय चित्राय चित्रगुप्ताय ते नमः । इति ।
यज्ञोपवीतिना कार्यं प्राचीनावीतिनाऽथवा ।।
देवत्वं च पितृत्वं च यमस्यास्ति द्विरूपता ।। इति ।
जीवत्पिताऽपि कुर्वीत तर्पणं यमभीष्मयोः ।

इति पाद्मोक्तेर्जीवत्पितुरप्यत्राधिकारः ।

ततः प्रदोषसमये दीपान्दद्यान्मनोरमान् ।
ब्रह्मविष्णुशिवादीनां भवनेषु मठेषु च ।।
प्राकारोद्यानवापीषु प्रतोलीपूटजेषु च ।
मन्दुरासु विविक्तासु हस्तिशालासु चैव हि ।। इति ।

लैङ्गे—ततः प्रेतचतुर्दश्यां भोजयित्वा तपोधनान् ।
शैवविप्रांस्त्वथ परान् शिवलोके महीयते ।।
दानं दत्वा तु तेभ्यश्च यमलोकं न गच्छति ।
माषपत्रस्य शाकेन भुक्त्वा तत्र दिने नरः ।।
प्रेतश्चतुर्दशीकाले सर्वपापैः प्रमुच्यते ।। इति ।

कार्तिके शुक्ला वैकुण्ठचतुर्दशी ।

वर्षे वै हेमलम्बाख्ये मासे श्रीमति कार्तिके ।
शुक्लपक्षे चतुर्दश्यामरुणाभ्युदयं प्रति ।।
महादेवतिथौ ब्राह्मे मुहूर्ते मणिकर्णिके ।
स्नात्वा विश्वेश्वरो देव्या विश्वेश्वरमपूजयत् ।।
संक्षेपं ज्योतिषस्तस्य प्रतिष्ठाख्यं तदाकरोत् ।
स्वयमेव स्वमात्मानं चरन्पाशुपतव्रतम् ।। इति ।

तथा— ततः प्रभाते विमले कृत्वा पूजां महाद्भुताम् ।
कुण्डपाणेर्महानाम्नि वनेऽस्मिन्कृतपारणः ।।

श्रीमद्भवानीसदनं संप्रविश्येदनुत्तमम् ॥

इति सनत्कुमारसंहितोक्तेः । अत्र परकृतिसरूपेणानेनार्थवादेन स्नात्वा विश्वेश्वरः पूज्य इतिविधिः कल्प्यते । ततः प्राभातिकपारणाविधेश्च पूर्वदिन उपवासः, स च चतुर्दशीयुक्तारुणोदयवत्यहोरात्रे कार्यः काशीखण्डे—

कार्तिकस्य चतुर्दश्यां विश्वेशं यो विलोकयेत् ।
स्नात्वा चोत्तरवाहिन्यां न तस्य पुनरागतिः ॥ इति ॥

## पिशाचमोचनयात्रा ।

मार्गशुक्लचतुर्दश्यां पिशाचमोचनयात्रोक्ता काशीखण्डे—

मार्गशुक्लचतुर्दश्यां कपर्दीश्वरसन्निधौ ।
स्नात्वाऽन्यत्रापि मरणान्न पैशाच्यमवाप्नुयुः ॥
इमां सांवत्सरीं यात्रां ये करिष्यन्ति मानवाः ।
तीर्थप्रतिग्रहात्पापान्निस्तरिष्यन्ति ते नराः ॥ इति ॥

## अथ शिवरात्री ।

स्कान्दे—माघस्य कृष्णपक्षे या तिथिश्चैव चतुर्दशी ।
शिवरात्रिस्तु सा ख्याता सर्वपापनिषूदिनी ॥ इति ॥

तच्च शिवरात्रिव्रतं नित्यं काम्यं च—

परात्परतरं नास्ति शिवरात्रिः परात्परम् ।
न पूजयति भक्त्येदं रुद्रं त्रिभुवनेश्वरम् ॥
जन्तुर्जन्मसहस्रेषु भ्रमते नात्र संशयः ॥

इति तत्रैवाऽकरणेऽनिष्टश्रुतेर्नित्यम् ,

शिवं च पूजयित्वा यो जागर्ति च चतुर्दशीम् ।
मातुः पयोधररसं न पिबेत्स कदाचन ॥
मम भक्तस्तु यो देवि शिवरात्रिमुपोषकः ।
गणत्वमक्षयं दिव्यमक्षयं शिवशासनम् ॥
सर्वान् भुक्त्वा महाभोगान्मृतो भूयो न जायते ॥

इति तत्रैव फलश्रुतेः काम्यम् ।

शिवरात्रिव्रतं नाम सर्वपापप्रणाशनम् ।
आचण्डालमनुष्याणां भुक्तिमुक्तिप्रदायकम् ॥

इति ईशानसंहितोक्तेः । तथा—

उपवासप्रभावेन बलादपि च जागरात् ।
शिवरात्रेस्तथा तस्य लिङ्गस्यापि प्रपूजया ॥
अक्षयाँल्लभते लोकान् शिवसायुज्यमाप्नुयात् ॥

इति नागरखण्डोक्तेरुपवासजागरणपूजाः प्रधानानि । यत्तु सह्याद्रिखण्डे—

स्वयं च लिङ्गमभ्यर्च्य सोपवासः सजागरः ।
अजानन्नपि निष्पापो निषादो गणतां गतः ॥

इत्युपवासजागरणयोः कर्तृगुणत्वश्रवणं तदर्थवादगतत्वेन न तयोः प्राधान्यं विहन्ति । तत्र चतुर्दशी निशीथव्यापिनी ग्राह्या—

माघकृष्णचतुर्दश्यामादिदेवो महानिशि ।
शिवलिङ्गमभूत्तत्र कोटिसूर्यसमप्रभः ॥
तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः ॥

इति ईशानसंहितायाम् । नारदीयसंहितायामपि—

अर्द्धरात्रयुता यत्र माघकृष्णचतुर्दशी ।
शिवरात्रिव्रतं तत्र वाजिमेधफलं लभेत् ॥ इति ।

स्कान्देऽपि—

महतामपि पापानां दृष्टा वै निष्कृतिः पुरा ।
न दृष्टा कुर्वतां पुंसां कुहूयुक्तां तिथिं शिवाम् ॥

इति दर्शयोगस्य निन्द्यत्वाच्च । स्मृत्यन्तरेऽपि—

भवेद्यत्र त्रयोदश्यां भूतव्याप्ता महानिशा ।
शिवरात्रिव्रतं तत्र कुर्याज्जागरणं तथा ॥ इति ।

ईशानसंहितायामपि—

व्याप्यार्द्धरात्रं यस्यां तु लभ्यते या चतुर्दशी ।
तस्यामेव व्रतं कार्यं मत्प्रसादार्थिभिर्नरैः ॥
पूर्वेद्युर्वा परेद्युर्वा महानिशि चतुर्दशी ।
व्याप्ता सा दृश्यते यस्यां तस्यां कुर्याद्व्रतं नरः ॥
लिङ्गाविर्भावकाले तु व्याप्ता ग्राह्या चतुर्दशी ।
तदूर्ध्वाधोन्विता भूता सा कार्या व्रतिभिः सदा ॥
मम प्रियकरी ह्येषा माघकृष्णचतुर्दशी ।

महानिशान्विता या तु तत्र कुर्यादिदं व्रतम् ॥ इति ।

दिनद्वये निशीथव्याप्तावव्याप्तौ वा परैव—

आदित्यास्तमये काले अस्ति चेद्या चतुर्दशी ।
तद्रात्रिः शिवरात्रिः स्यात्सा भवेदुत्तमोत्तमा ॥

इति कामिकात्,

प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी ।
रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत् ॥

इति स्मृत्यन्तरात्,

दिवारात्रिव्रतं यच्च एकमेकतिथौ गतम् ।
तस्यामुभययोगिन्यामाचरेत्तद्व्रतं व्रती ॥

इति स्मृतेः प्रदोषव्याप्त्याधिक्याच्च । पूर्वदिन एव प्रदोषनिशीथोभयव्याप्तौ पूर्वैव—

त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः ।
जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी ॥

इति स्कान्दात् । परेद्युरेव तादृशी चेत्सैव । 'निशाद्वये चतुर्दश्यां पूर्वा त्याज्या परा शुभा' इति कामिकात् । यदा पूर्वेद्युर्निशीथे परेद्युश्च प्रदोषे तदा पूर्वेद्युरेव—

अर्द्धरात्रात्पुरस्ताच्चेज्जयायोगो यदा भवेत् ।
पूर्वविद्धैव कर्तव्या शिवरा ः शिवप्रिया ॥

इति पाद्मोक्तेः । यत्तु एतस्मादेववचनाद्दिनद्वयेऽपि निशीथव्याप्तौ पूर्वैवेति हेमाद्रिमदनौ तन्न, एतस्य वचस उत्तरदिने निशीथव्याप्त्यभावेऽप्युपपत्तेः । उत्तरगतदिनप्रदोषनिशीथोभयव्याप्त्या दिवारात्रिव्रतमिति पूर्वोक्तवचसः सङ्कल्पकालस्य च बाधायोगात् । माधवाचार्यास्तातचरणाश्चैवम् । अयमेव निर्णयः प्रतिमासशिवरात्रावपि ।

आदौ मार्गशिरे मासि दीपोत्सवदिने तथा ।
गृह्णीयान्माघमासे वा द्वादशैवमुपोषयेत् ॥

इति हेमाद्रौ स्कान्दे चतुर्दश्यन्तरे प्रारभ्य द्वादशानामप्याचरणविधानात् प्रतिमासं कार्यम् । चतुर्दशाब्दं चेदं कार्यम् । तथा च हेमाद्रौ कालान्तरे—

चतुर्दशाब्दं कर्तव्यं शिवरात्रिव्रतं शुभम् ॥ इति ।

इयं च रविभौमयोः शिवयोगे चातिप्रशस्तेति माधवीये स्कान्दे—

माघकृष्णचतुर्दश्यां रविवारो यदा भवेत् ।
भौमो वाथ भवेद्देवि कर्तव्यं व्रतमुत्तमम् ॥
शिवयोगस्य योगे वै तद्भवेदुत्तमोत्तमम् ॥ इति ।

भविष्ये—माघमासे चतुर्दश्यां रविवारो यदा भवेत् ।
माघमासे चतुर्दश्यां कृष्णपक्षे समाहिताः ॥
कृत्तिवासेश्वरं लिङ्गमर्चयन्ति शिवं शुभम् ।
ते यान्ति परमं स्थानं सदाशिवमनामयम् ॥ इति ।

पारणं तु तिथिमध्य एव कार्यम् । तथा च माधवीये स्कान्दे—

उपोषणं चतुर्दश्यां चतुर्दश्यां च पारणम् ।
कृतैः सुकृतलक्षैश्च लभ्यते वाऽथवा न वा ॥
ब्रह्माण्डोपरि मध्ये तु यानि तीर्थानि सन्ति वै ।
संस्नातानि भवन्तीह भूतायां पारणे कृते ॥
तिथीनामेव सर्वासामुपवासव्रतादिषु ।
तिथ्यन्ते पारणं कुर्याद्विना शिवचतुर्दशीम् ॥ इति ।

यत्तु— जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च ।
पूर्वविद्धैव कर्तव्या तिथिभान्ते च पारणम् ॥ इति,

स्कान्दे च—

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्दशी ।
एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ॥ इति,

तद्गौणकालपरम् ।

स्वकालादुत्तरो गौणः कालः सर्वस्य कर्मणः ।

इति मण्डनोक्तेः ।

इति चतुर्दशी ।

## अथ पूर्णिमासामान्यनिर्णयः ।

सा तु सावित्र्यतिरिक्ता सर्वा परैव ।

भूतविद्धा न कर्तव्या दर्शःपूर्णा कदाचन ॥
वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम् ।

इति ब्रह्मवैवर्तात् । सर्वास्वपि पूर्णिमासु अमावास्यावत् श्राद्धं नित्यम् । तथा च पितामहः—

अमावास्याव्यतीपातपौर्णमास्यष्टकासु च ।
विद्वान् श्राद्धमकुर्वाणो नरकं प्रतिपद्यते ।। इति ।

## चैत्रपूर्णिमायां दमनकपूजा ।

चैत्रपौर्णमास्यां विशेषो वायवीये ।

संवत्सरकृतार्चायाः साफल्यायाखिलान् सुरान् ।।
दमनेनार्चयेच्चैत्र्यां विशेषेण सदाशिवम् । इति ।।

मेषस्थे रवौ याऽमावास्या तदन्ते चान्द्रे या पौर्णमासी सा चैत्री । एतत्क्रमेणान्या अपि । तदुक्तं हरदत्तेन—

मेषादिस्थे सवितरि यो यो दर्शः प्रवर्तते ।
चान्द्रमासास्तत्तदन्ताश्चैत्राद्या द्वादश स्मृताः ।।
तेषु या पौर्णमासी च सा सा चैत्र्यादिका स्मृता ।
कादाचित्केन योगेन नक्षत्रस्येति निर्णयः ।। इति ।

अथ वैशाखपौर्णमास्यां विशेषः, तत्र जाबालिः—

शृतान्नमुदकुम्भं च वैशाख्यां च विशेषतः ।
निर्दिश्य धर्मराजाय गोदानफलमाप्नुयात् ।।

शृत, पक्कम् ।

ज्येष्ठपूर्णमास्यां वटसावित्रीव्रतं भविष्ये—

ज्येष्ठे मासि सिते पक्षे पौर्णमास्यां तथा व्रतम् ।
चीर्णं पुरा महाभक्त्या कथं ते न मया नृप ।। इति ।

इयं पूर्वविद्धा ग्राह्या युग्मवाक्यात् । ब्रह्मवैवर्तेऽपि—

प्रतिपत्पञ्चमी भूतः सावित्रीव्रतपूर्णिमा ।
दशमी नवमी चैव नोपोष्याः परसंयुताः ।।

आषाढी पूर्णमासी तु कोकिला व्रतोपक्रमे सन्ध्याकालव्यापिनी ग्राह्या—

आषाढपूर्णमास्या तु सन्ध्याकाले ह्युपस्थितं ।
संकल्पयेन्मासमेकं श्रावणे प्रत्यहं त्विदम् ।।

इति भविष्योक्तेः ।

व्यासपूजा तत्रैव । व्यासपूजायां त्वौदयिकी ग्राह्या । तथा च विश्वेश्वरपद्धतौ—

त्रिमुहूर्ताधिकं ग्राह्यं पर्व क्षौरप्रणामयोः ।। इति ।

अत्रैवाऽषाढेश्वरयात्रा पूजाचोक्ता काशीखण्डे—

उदीच्यां भारभूतेशमाषाढीशं समर्चयेत् ।
आषाढ्यां पञ्चदश्यां वै न पापैः परितप्यते ॥
कृत्वा सांवत्सरीं यात्रामनेना जायते नरः । इति ॥

अनेनाः निष्पापः ।

## पवित्रार्पणम् ।

श्रावणी पौर्णमासी पवित्रार्पणादौ पूर्वविद्धा ग्राह्या । तदाह बृहद्यमः—

श्रावणी दुर्गनवमी दूर्वा चैव हुताशिनी ।
पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनम् ॥ इति ।

वेधस्त्रिमुहूर्तात्मको ज्ञेयः । तदुक्तं स्कान्दे—

यां तिथिं समनुप्राप्य यात्यस्तं पद्मिनीपतिः ।
सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्तैव या भवेत् ॥ इति ।

## उपाकर्म ।

अथोपाकर्म । याज्ञवल्क्यः—

अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ।
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥ इति ।

हस्तेन युक्तायां पञ्चम्यामिति स्मृतिचन्द्रिकायाम् । दिनान्तरेऽपि हस्तेन युक्त इति हेमाद्रिः । श्रवणश्रावण्योरिवेदमेव युक्तम् । एवमेव स्मृत्यर्थसारेऽपि । ओषधीनामप्रादुर्भावेऽपि बह्वृचगृह्यकारिकायाम् ।

अध्यायानामुपाकर्म श्रावण्यां श्रवणेन तु ।
अवृष्ट्यौषधयस्तस्मिन्मासे तु न भवन्ति चेत् ॥
तथा भाद्रपदे मासि श्रवणेन करोति तत् । इति ।

श्रावणीविषयेऽत्र श्रवणं धनिष्ठायुतं ग्राह्यम् ।

श्रवणेन तु यत्कर्म उत्तराषाढसंयुतम् ।
संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति ॥
धनिष्ठासंयुते कुर्याच्छ्रावणं कर्म यद्भवेत् ।

इति व्यासोक्तेः । गर्गः—

पर्वण्योदयिके कुर्युः श्रावणीं तैत्तिरीयकाः ।
बह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रान्तिवर्जिते ॥ इति ।

तत्र तैत्तिरीया औदयिके पर्वणि कुर्युरन्ये तु याजुषाः पूर्वविद्धे एव ।

श्रावणी दुर्गनवमी दूर्वा चैव हुताशिनी ।
पूर्वविद्धैव कर्तव्या शिवरात्रिर्बलेर्दिनम् ॥

इति वचनात् ( इति ) हेमाद्रौ । तैत्तिरीयकपदं याजुषमात्रोपलक्षण तेनसर्वेऽप्यौदयिके, श्रावणीदुर्गनवमी इत्यादि वचस्तु पवित्रारोपणादिकृत्यान्तरविषयमुपाकर्माङ्गभूताभ्युदयिकविषयं चेति निर्णयामृते । तत्रोपलक्षणत्वे मानं चिन्त्यम् । पर्वश्रवणगतयोरेव ग्रहणसंक्रान्त्योः पर्युदासप्रयोजकता तत्सामानाधिकरण्येन श्रुतत्वात्, न तिथ्यन्तरनक्षत्रान्तरगतयोरपि । तेन चतुर्दशीप्रतिपदुत्तराषाढाधनिष्ठादौ ग्रहणे संक्रान्तौ वा पर्वणि श्रवणे चोपाकर्म कार्यमेव । स्मृतिमहार्णवे—

संक्रान्तिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत् ।
उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः ॥ इति ।

वाजसनेयिपदं बह्वृचानामप्युलक्षणम् । 'पञ्चम्यां हस्तेन वा' इति तत्सूत्रात् । ग्रहसंक्रान्तिनिषेधोऽत्रार्धरात्रादर्वागिति प्रयोगपारिजाते वृद्धमनुः—

यद्यर्धरात्रादर्वाक्तु ग्रहः संक्रम एव वा ।
नोपाकर्म तदा कुर्याच्छ्रावण्यां श्रवणेऽपि वा ॥ इति ।

कात्यायनोऽपि—

अर्द्धरात्रादधस्ताच्चेत्संक्रान्तिर्ग्रहणं तदा ।
उपाकर्म न कुर्वीत परस्ताच्चेन्न दोषकृत् ॥ इति ।

'परेऽहनि' इत्यपि क्वचित्पाठः । तदा परेऽहन्यपि निषेधः ।

---

## सामगोपाकर्मकालः ।

सामगानां कालविशेषमाह गर्गः—

सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः ।
छन्दोगा मिलिताः कुर्युरुत्सर्गं स्वस्वछन्दसाम् ॥
शुक्लपक्षे तु हस्तेन उपाकर्माऽपराह्णिकम् ॥ इति ।

'सिंहे रवौ' इत्युपाकर्मणाऽपि संबध्यते । यत्तु स्मृत्यन्तरे—

वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ ।
उपाकर्म न कर्तव्यं कर्तव्यं सिंहयुक्तके ॥

इति तच्छन्दोगपरम् । यदपि बृहस्पतिः—

नर्मदोत्तरभागे तु कर्तव्यं सिंहयुक्तके ।
कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणे ॥ इति ।

तदपि तान्प्रत्येव देशविशेषेण सिंहकर्कव्यवस्थापरम् । एवं हि लाघवं भवति । यत्सिंहे कार्यमनूद्यते तन्नर्मदोत्तरभाग इति । एवं च तान्प्रत्येव दक्षिणभागे कदा कार्यमित्याकाङ्क्षिते कर्कट इत्याकाङ्क्षितविधिर्भवति । बह्वृचादीन्प्रति तु अप्राप्तसिंहादिविधेर्गौरवमनाकाङ्क्षितविधिश्च स्यात् । एककोटिसिंहमात्रप्राप्तावपि कोट्यन्तरकर्कटाप्राप्तौ च व्यवस्थाविधिः सङ्गच्छत एव । "पाठतो द्वितीयस्थाने तनूनपात्प्रयाजप्राप्तौ नाराशंसस्य चाप्राप्तौ वासिष्ठादीनां नाराशंसो द्वितीयः प्रयाजस्तनूनपादन्येषामितिवत्" इति तातचरणाः । कात्यायनः—

उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणि ॥

पराशरः—

उपाकर्म तथोत्सर्गः प्रसवाहोत्सवाष्टकाः ।
मासवृद्धौ परे कार्या वर्जयित्वा तु पैतृकम् ॥ इति ।

परे उत्तरे मासि । प्रसवाहोत्सवो जातेष्ट्यादिः । संग्रहे—

गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्धकेऽपि वा ।
तथाधिमाससंसर्पमलमासादिषु द्विजाः ॥
प्रथमोपाकृतिर्न स्यात्कृतं कर्म विनाशकृत् ॥ इति ।

अत्राधिमाससंसर्परूपौ मलमासौ ग्राह्यौ न तु मलमासोऽत्र क्षयः । तत्रोपाकर्मणः प्राप्त्यभावात् । आदिशब्देनातिचारादयः । अत्राधिमासादौ प्रथमोपाकर्मनिषेधः प्रत्यवायातिशयद्योतको न तु द्वितीयादिप्रयोगप्राप्त्यर्थः नित्यस्यापि सगतिकस्यापि मले कर्तुमशक्यत्वात् । कात्यायनादिभिः सर्वप्रयोगसाधारण्येन निषेधाच्च । यद्वा, सामगानामधिमासे कर्तव्यतयोपाकृतेर्विहितत्वेनायं प्रथमोपाकृतिनिषेधः सामगविषय एव । यत्तु कश्यपः—

गुरुशुक्रतिरोधाने वर्जयेच्छ्रुतिचोदितम् ।
इत्याह भगवानत्रिः श्रावणं तु विशेषतः ॥ इति ।

तदपि प्रथमोपाकर्मपरम् । यत्तु ऋष्यशृङ्गः—

दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु ।
उपाकर्ममहापष्ठ्योर्होतदिष्टं नृपादितः ॥

इति छन्दोगान्प्रति । तेषां सिंहकर्कोपजीवनेन विहितस्योपाकर्मणोऽग्रिममासेऽसंभवात् । कात्यायनः—

प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः ।
क्रियते छन्दसां तेन पुनराप्यायनं भवेत् ॥
अयातयामैश्छन्दोभिर्यत्कर्म क्रियते द्विजैः ।
क्रीडमानैरपि सदा तत्तेषां सिद्धिकारणम् ॥

कौर्मे— श्रावणस्य तु मासस्य पौर्णमास्यां द्विजोत्तमाः ।
आषाढ्यां प्रौष्ठपद्यां वा वेदोपाकरणं स्मृतम् ॥

अत्राऽषाढी बौधायनपरैव । 'श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य' इति तत्सूत्रादिति दीपिकायाम् । युक्तं चेदं 'सामान्यविधिरस्पष्टः संह्रियेत विशेषतः' इति न्यायात् । यत्तु माधवीये निर्णयामृते, उपाकरणमनूद्य मासमात्रं विधीयते । उपाकर्म तु सर्वशाखाप्रत्ययमेकं कर्मेति न्यायेनैकमेव । तेन बह्वृचसामगयोरप्याषाढगतश्रवणहस्तयोरुपाकर्म पौर्णमासीपदं त्ववयुत्यानुवाद इति तन्न, उपसंहारे सत्याषाढ्या अन्यान्प्रत्यप्रवृत्तेः । पौर्णमासीपदादवयुत्यानुवादायोगाच्च ।

गोभिलः—पर्वण्यौदयिके कुर्युःश्रावणे तैत्तिरीयकाः ।
बह्वृचाः श्रवणर्क्षे तु हस्तर्क्षे सामवेदिनः । इति ॥

औदयिक इति श्रवणहस्ताभ्यामपि संबध्यते । औदयिकं पर्व विशिनष्टि स एव,

श्रावणी पौर्णमासी तु सङ्गवात्परतो यदि ।
तदा त्वौदयिकी ग्राह्या नान्या त्वौदयिकी भवेत् । इति ।

परिशिष्टे—

धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितम् ।
श्रावणं कर्म कुर्वीरन्नृग्यजुः सामपाठकाः ।

त्वाष्ट्रं चित्रा । प्रचेताः—भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव तु इति । एतद्याजुषपरम् । छन्दोगानां विशेषमाह गोभिलः—

अध्यायानामुपाकर्म कुर्यात्कालेऽपराह्णिके ।
पूर्वाह्णे तु विसर्गः स्यादिति वेदविदो विदुः ॥ इति ।

'उपाकृत्याधीयीत' इति तु सूत्रादिमे उत्सर्जनोपाकर्मणी ग्रहणाध्ययनाङ्गे । ग्रहणाध्ययनं तु ब्रह्मचारिण एव 'अधीत्य स्नायात्, इति स्मृत्या

ऽध्ययनप्राक्कालीनत्वानगतेः । अतो ब्रह्मचारिण एवेमे इति केचित् । तन्न, स्नातकस्यापि ग्रहणाध्ययनसंभवात् ।

वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा ।
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत् ।

इति याज्ञवल्क्यवाक्येन 'समावृत्तो ब्रह्मचारिकल्पेन यथान्यायमितरे जायोपेयेत्येके ' इत्याश्वलायनसूत्रेण च स्नानोत्तरमपि तद्विधानात् । अधीयीतेत्यनुवृत्तिः । समावृत्तः अकृतविवाहः, ब्रह्मचारिकल्पस्त-न्नियमजातम् । इतरे ब्रह्मचारिणः । जायोपेतो गृहस्थः एवं च त्रयोऽप्य-धिकारिण इति । माधवोऽप्येवम् । यत्तु हेमाद्रिः—'जायोपेयी ' इति पपाठ समावृत्तो जायोपेयीति विशेषणविशेष्यभावेन च व्याचष्टे । तन्न, व्यवहितान्वयात्समावृत्तपदवैयर्थ्यापाताच्च । हरदत्तस्तु—उपा-कृत्याधीयीतेत्यध्ययनपदेन ग्रहणधारणब्रह्मयज्ञपारायणाद्यर्थोच्चारणमात्रं गृह्यते, न ग्रहणाध्ययनमात्रम् । तेन तद्गतां ब्रह्मचारिगृहस्थवान-प्रस्थानां त्रयाणामप्ययं धर्मः । ' जायोपेया ' इति च पाठः । तत्र च समावृत्तो ब्रह्मचारिकल्पेन इति प्राप्तं ब्रह्मचर्यं स्मृतौ प्रतिप्रसूयते । जाया उपेया गम्येति । मनुस्मृतिटीकायां नारायणीयायामप्येवम् । नारायणवृत्तौ तु ' अथातोऽध्यायोपाकर्म ' इति सूत्रव्याख्याने ' यस्मा-द्ब्रह्मयज्ञाध्ययनं नित्यमत उपाकर्मावश्यकम् ' इत्यादिना ब्रह्मयज्ञाङ्गता-प्युक्ता । अतः सर्वैरपि कार्यम् । अत एव जीर्णप्रयोगरत्ने गोभिलः—

उपाकर्मोत्सर्जनं च वनस्थानामपीष्यते ।
धारणाध्ययनाङ्गत्वाद्गृहिणां ब्रह्मचारिणाम् ॥ इति ।

उपाकर्मण आद्यप्रयोगे च वृद्धिश्राद्धमङ्गमिति नारायणवृत्तौ । 'अत्रा-ध्याप्यैरन्वारब्धोऽध्येष्यमाण ' इत्याश्वलायनादिसूत्राच्चतुरवत्तपञ्चावत्ता-द्यभिन्नकल्पानां विश्वामित्रजामदग्न्यादीनामपि सहाधिकारः । 'वसिष्ठ-शुनकात्रिवध्र्यश्वराजन्यानां नाराशंसो द्वितीयः प्रयाजस्तनूनपादन्येषा-म्, इति नाराशंसद्वितीयप्रयाजवतो राज्ञस्तनूनपाद्द्वितीयप्रयाजव-तश्च काश्यपादेः पुरोहितस्य ' एतेन राजपुरोहितौ सायुज्यकामौ यजे-ताम् ' इति विहितकुलाययाग इव । तत्रापि समानकल्पयोरेव राजपुरो-हितयोरधिकारोऽस्त्विति चेत् । एतदधिकरणस्य तुल्यकल्पाधिकाराधि-करणापवादतया भाष्यादौ प्रतिपादितत्वात् । अत एव कार्ष्णाजिनिः—

उपाकर्मणि चोत्सर्गे यथाकालं समेत्य तु ।
ऋषीन्दर्भमयान्कृत्वा पूजयेत्तर्पयेत्ततः ॥ इति ।

व्यासः—ऋषीणामर्चनं सर्वं कर्तव्यं च निवीतिना ॥ इति ।

कार्ष्णाजिनिः—
वेदारम्भणतः पूर्वं सक्तुप्राशनतः परम् ।
नवयज्ञोपवीतानि दद्याद्वै धारयेत्ततः ॥ इति ।

गालवः—कृत्वा यज्ञोपवीतानि नवानि वसुधाधिप ।
हुत्वाऽग्नौ गुरवे दत्त्वा पितृभ्यो धारयेत्ततः ॥ इति ।

पितृभ्य इत्यत्रापि दत्त्वेत्यनुषज्यते । वायवीये—
उपाकर्मणि विप्रेभ्यो दद्याद्यज्ञोपवीतकम् ।
आयुष्मान् जायते तेन कर्मणा मानवो भुवि ॥

ब्रह्मचारिणो विशेषः, कालादर्शे—
मौञ्जीं यज्ञोपवीतं च नवं दण्डं च धारयेत् ।
अजिनं कटिसूत्रं च नवं वस्त्रं तथैव च ।

अत्र विशेषः कारिकायाम्—
पश्चाद [ ग्रेषु ग्रेस्तु ] दर्भेषु प्रागग्रेपूपविश्य च ।
आसिच्यापः शरावादौ दर्भांस्तत्र निधाय च ॥
प्रागग्रदर्भगर्भास्ते कुर्युर्ब्रह्माञ्जलीनथ ।
सव्याहृति जपन्त्युच्चैः सावित्रीं ब्रह्मयज्ञवत् ॥
त्रिरभ्यस्येयुरोङ्कारं व्याहृतीश्चात्र कर्मणि ।

गोभिलः—उत्सर्जनं च वेदानामुपाकरणकर्म च ।
अकृत्वा वेदजप्येन फलं प्राप्नोति मानवः ॥

इत्युपाकर्मनिर्णयः ।

## अथोत्सर्जनम् ।

मनुः—पुष्ये तु छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः ।
माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि ॥ इति ।

व्यवस्थितश्चायं विकल्पः,
श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान् ।

इति तेनैवोक्तत्वात् । पूर्वाह्णे प्रथमेऽहनि, इत्युभयत्र संबध्यते । एवं च यदा श्रावण्यामुपाकर्म तदा पौषमासशुक्लप्रतिपदि पूर्वाह्णे उत्सर्जनम् ।

यदा तु प्रौष्ठपद्यामुपाकर्म तदा माघशुक्लप्रतिपत्पूर्वाह्णे इति चन्द्रिकादयः। विज्ञानेश्वरयोगिनस्तु पूर्वाह्ण इत्येव पदं पुष्येऽन्वेति न तु शुक्लपक्षादि। पौषमासस्य रोहिण्यामष्टकायामथापि वा इति तत्र कालविशेषस्योक्तत्वादित्याहुः। युक्तं तु 'पूर्वाह्णे वैदिकं कर्म' इति पूर्वाह्णस्यापि प्राप्तेर्न तस्यापि विधानम्। एवं च यदा पौषरोहिण्यष्टक्योरेवोत्सर्जनं तदार्धपञ्चमानित्यत्रार्द्धशब्दश्चन्द्रार्द्धमौलिरित्यादिवत्खण्डवचन एव। अनियतत्वं च बौधायनोक्तेः। श्रावण्यां पौर्णमास्यामाषाढ्यां वा उपाकृत्य तैष्यां माघ्यां वा उत्सृजेत् इति। वसिष्ठेनाप्युक्तम्—अर्धपञ्चमासानधीत्योत्सृजति अर्द्धषष्ठान्वा इति। यत्तु कात्यायनः—

उपाकृत्योदगयने ततोऽधीयीत धर्मवित्।
उत्सर्गश्चैक एवैषां तैश्च प्रौष्ठपदेऽपि वा॥ इति।

तत्र प्रौष्ठपदपदं सिंहोपलक्षकम्। तच्छन्दोगपरमेव।

सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः।
छन्दोगा मिलिताः कुर्युरुत्सर्गं सर्वछन्दसाम्॥

इति गार्ग्यवचनात्। खादिरगृह्ये—पुष्ये तूत्सर्जनं कुर्यादुपाकर्मदिनेऽथवा' इति। कालान्तरमप्युक्तम्। एतदनुकूलैव श्रुतिः। 'स्वाध्यायमधीतेऽब्दम् इति। अत एव उत्सर्जनशब्देन कालोपलक्षणम्। पूर्वोक्तस्यायं वचनार्थः। सामगानां द्वे उपाकर्मणी। एकं सिंहार्कहस्ते, परं मकरार्कहस्ते, तत्र पूर्वं ग्रामगेयसामाध्ययनार्थम्। अपरं च आरण्यगेयसामाध्ययनार्थम्। अत एवोपाकृत्योदगयन इति। उपाकर्मद्वयविधानाच्चोत्सर्जनद्वयप्राप्ते उत्सर्गश्चैक एवैषामित्यर्थवत्। अत्र ऋषिपूजा तर्पणं च कार्यम्। तथा च स्मृतिचन्द्रिकायां पुराणम्—

उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च।
ऋषीन्दर्भमयान्कृत्वा पूजयेत्तर्पयेत्ततः॥

आश्वलायनैस्तु माघ्यामेव कार्यम्। 'अध्यायोत्सर्जनं माघ्यां पौर्णमास्यां विधीयते' इति कारिकोक्तेः। अनुकल्पस्तु पूर्वं खादिरगृह्योक्तेर्ज्ञेयः। उत्सर्जनोत्तरं कार्यं मनुराह—

अत ऊर्ध्वं तु छन्दांसि शुक्लेषु नियतः पठेत्।
वेदाङ्गानि तु सर्वाणि कृष्णपक्षे तु संपठेत्॥

कारिकायां तु विशेषः—

अत आरभ्य षण्मासान्षडङ्गानि त्वधीयते ।
शुक्ले वेदमधीयीत कृष्णेऽङ्गानीति केचन ॥ इति ।

तैत्तिरीयाणां विशेषमाहापस्तम्बः—'तैष्यां पौर्णमास्यां रोहिण्यां वा विरमेदर्द्धपञ्चमांश्चतुरो मासान् इत्येके' इति । अत्र नदीनां रजोदोषो नेत्याह गार्ग्यः—

उपाकर्मणि चोत्सर्गे रजोदोषो न विद्यते ।

इत्युत्सर्जनम् ।

## सर्पबलिः श्रवणाकर्म च ।

श्रावण्यामेव रात्रौ सर्पबलिस्तैत्तिरीयाणाम् । 'श्रावण्यां पौर्णमास्यां स्थालीपाकः' इति सूत्रात् । आश्वलायनैस्तु श्रवणाकर्म कार्यम् । इदं प्रदोषव्यापिन्यां पौर्णमास्यां कार्यम् । प्रदोषस्य कर्मकालत्वात् ।

कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः ।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥

इति वाक्यात् । दिनद्वये तद्व्याप्तावव्याप्तौ च उत्तरदिने, विकृतित्वात् । एवं सर्पबलिरपि एतस्यामेव पौर्णमास्याम् । तत्राप्येवमेव निर्णयः ।

## आश्वयुजीकर्म ।

आश्विनपौर्णमास्यामावर्तनप्राक्सन्धिमति प्रकृतिविकृतिप्रयोगपर्याप्ते पर्वणि केवलस्मार्ताग्निमतां बह्वृचानामाश्वयुजीकर्माग्रयणपार्वणस्थालीपाकाः समानतन्त्राः ।

'पाकयज्ञान्समासाद्य एकाज्यानेकबर्हिषः ।
एकस्विष्टकृतः कुर्यान्नानापि सति दैवते' ॥

इति तत्सूत्रात् । 'दर्शेष्टेः परमुक्तमाग्रयणकं प्राक्पौर्णमासाच्च तत्' इति दीपिकादिलेखस्त्वेतत्सूत्रागोचरश्रौतपरः इष्टिपदात् । आश्वलायनान्यपरो वा । व्रीह्याग्रयणमस्यामेव 'श्यामाकैः प्रस्तरः कार्यो नाग्रयणम्' इति नारायणवृत्तौ प्रयोगरत्ने च । तत्र प्रस्तरशब्दस्य यूपादिशब्दवत्संस्कारवाचित्वाद्दर्शपूर्णमासिकलवनादियुक्तं प्रस्तरं कृत्वाऽऽज्यपात्रादुत्तरत आसाद्य प्राकृतकार्याबाधार्थं तस्मिन् जुहूमासादयेत् ।

## कार्तिकेयदर्शनं त्रिपुरोत्सवश्च ।

कार्तिकपौर्णमास्यां कार्तिकेयदर्शनमुक्तं काशीखण्डे—

कार्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम् ।
सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ॥ इति ।

त्रिपुरोत्सवोऽप्यत्रोक्तो भविष्ये—

पौर्णमास्यां तु सन्ध्यायां कर्तव्यस्त्रिपुरोत्सवः ।
दद्यादनेन मन्त्रेण सुदीपांश्च सुरालये ॥
कीटाः पतङ्गा मशकाश्च वृक्षा
जले स्थले ये विचरन्ति जीवाः ।
दृष्ट्वा प्रदीपं नहि जन्मभागिनो
भवन्ति सत्यं श्वपचापि विप्राः ॥ इति ।

---

## होलिकोत्सवः ।

फाल्गुनपौर्णमास्यां होलिकोत्सवः । नृपं प्रति नारदवचो भविष्ये—

अद्य पञ्चदशी शुक्ला फाल्गुनस्य नराधिप ।
अभयं चैव लोकानां दीयतां परमेश्वर ॥
यथा ह्यशङ्किता लोका रमन्ति च हसन्ति च ।
दारुजानि च खण्डानि गृहीत्वा सुसमुत्सुकाः ॥
योधा इव विनिर्यान्तु शिशवः संप्रहर्षिताः ।
सञ्चयं शुष्ककाष्ठानामुपलानां च कारयेत् ॥
तत्राग्निं विधिवद्धुत्वा रक्षोघ्नैर्मन्त्रवित्तमैः ।
ततः किलकिलाशब्दैस्तालशब्दैर्मनोहरैः ॥
तेन शब्देन सा पापा होमेन च निराकृता ॥

सा ढोण्ढाख्या राक्षसी । तत्रैव—

सर्वदुष्टापहो होमः सर्वरोगोपशान्तिदः ।
क्रियतेऽस्यां द्विजैः पार्थ तेन सा होलिका स्मृता ॥ इति ।
तमग्निं च परिक्रम्य गायन्तु च हसन्तु च ।
जल्पन्तः स्वेच्छया लोका निःशङ्का यस्य यन्मनः ॥

तत्र पूर्णिमा प्रदोषव्यापिनी ग्राह्या । तदुक्तं तत्रैव—

सायाह्ने होलिकां कुर्यात्पूर्वाह्णे क्रीडनं गवाम् ॥ इति ।

सायाह्नोऽत्र प्रदोषः । तथा च तत्रैव—

तपस्यपूर्णमास्यां तु रजन्यां होलिकोत्सवः ॥ इति ।

चन्द्रप्रकाशे नारदोऽपि—

प्रतिपद्भूतभद्रासु यार्चिता होलिका दिवा ।
संवत्सरं च तद्राष्ट्रं पुरं दहति साद्भुतम् ॥
प्रदोषव्यापिनी ग्राह्या पूर्णिमा फाल्गुनी सदा ।
तस्यां भद्रामुखं त्यक्त्वा पूज्या होला निशामुखे ॥ इति ।

निशागमे तु पूज्येत होलिका सर्वतोमुखैः' इति पृथ्वीचन्द्रोदये दुर्वाससो वचनाच्च । दिनद्वये प्रदोषव्याप्तौ परैव

भद्रायां दीपिता होली राष्ट्रभङ्गं करोति वै ।
नगरस्य च नैवेष्टा तस्मात्तां परिवर्जयेत् ॥ इति ।

पूर्वदिने भद्रायुक्तत्वेन पुराणसमुच्चयोक्तनिषेधात् । पूर्वदिने प्रदोषव्यापिनी न परदिने चेत्तदा पूर्वेद्युरेव रात्रौ भद्रां विहाय कार्या ।

दिनार्द्धात्परतो या स्यात्फाल्गुनी पूर्णिमा यदि ।
रात्रौ भद्रावसाने तु होलिकां तत्र पूजयेत् ॥

इति भविष्योत्तरात्,

राका यामद्वयादूर्ध्वं चतुर्दश्यां यदा भवेत् ।
होलां भद्रावसाने तु निशीथान्तेऽपि दीपयेत् ॥

इति पुराणसमुच्चयात् । यत्तु,

भद्रायां विहितं कार्यं होलिकायाः प्रपूजनम् । इति

यच्च,

मध्यरात्रमतिक्रम्य विष्टेः पुच्छं यदा भवेत् ।
प्रदोषे ज्वालयेदग्निं सुखसौभाग्यदायकम् ॥
प्रदोषान्मध्यरात्रान्तं होलिकापूजनं शुभम् ॥

इति च कैश्चिदलेखि तदनाकरम् । यदा तु पूर्वरात्रौ प्रदोषव्याप्त्यभावः तत्सत्वेऽपि वा भद्रारहितः कालो न प्राप्यते, उत्तरदिने च प्रदोषे पूर्णिमाभावः, तदा भद्रापुच्छे कार्यम् । तथा च लल्लः—

पृथिव्यां यानि कार्याणि शुभानि त्वशुभानि च ।
तानि सर्वाणि सिध्यन्ति विष्टिपुच्छे न संशयः ॥ इति ।

भद्रापुच्छं तु ज्योतिःशास्त्रे प्रसिद्धम् । अस्मिन्नेव विषय उत्तरदिने पूर्णिमा सार्द्धयामत्रयमिता ततोधिका प्रतिपदश्च वृद्धिस्तदा पूर्णिमोत्तरं प्रतिपदि प्रदोषे होलिका कार्या न तु पूर्वेद्युर्विष्टिपुच्छे ।

सार्द्धयामत्रयं पूर्णा द्वितीये दिवसे यदा ।
प्रतिपद्वर्द्धमाना तु तदा सा होलिका स्मृता ॥

इति भविष्योक्तेः। या तूत्तरदिने प्रदोषैकदेशेऽस्ति पूर्वरात्रौ च भद्रारहिता नैव लभ्यते सा सुतरामुत्तरैव । यदा पूर्वरात्रिर्भद्राव्याप्ता उत्तरदिने प्रदोषे च चन्द्रग्रहणं तदा तत्र स्नात्वा च कार्यम् । स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेत्, इति वचनात् । फाल्गुनो मलमासश्चेत् शुद्धमासि होलिका कार्या । 'स्पष्टमासविशेषाख्यविहितं वर्जयेन्मले' इति वचनात् । होलिकापूजामन्त्रस्तु—

असृक्पाभयसंत्रस्तैः कृता त्वं होलि बालिशैः ।
अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा भव ॥

इति दिक् ।

इति पूर्णिमानिर्णयः ।

## अमानिर्णयः विशेषश्च ।

अथामावास्या । सा सर्वत्र व्रतोपवासादावुत्तरा । 'प्रतिपद्यप्यमावास्या' इति युग्मवाक्यात् । 'अमावास्या तृतीया च ता उपोष्याः परान्विताः' इति स्मृतेश्च । 'भूतविद्धा त्वमावस्या न ग्राह्या मुनिपुङ्गवैः' इति स्कान्दे पूर्वनिषेधाच्च । अस्यां सोमवासरयोगे कपिलधारातीर्थे श्राद्धमुक्तं काशीखण्डे—

अमासोमसमायोगे श्राद्धं यद्यत्र लभ्यते
तीर्थे कपिलधारेऽस्मिन् गयया पुष्करेण किम् ।
दिव्यान्तरिक्षभौमानि यानि तीर्थानि सर्वशः ॥
तान्यत्र निवसिष्यन्ति दर्शे सोमदिनान्विते ।

## कुशग्रहणम् ।

भाद्रामावास्याया कुशग्रहणमुक्तम् । हारीतः—

मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥ इति ।

## लक्ष्मीपूजनम् । उल्कादर्शनम् ।

कार्तिकामावास्यायां कृत्यमुक्तमादित्यपुराणे—

दिवा तत्र न भोक्तव्यमृते बालातुराज्जनात् ।
प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम् ॥
दीपवृक्षास्तथा कार्याः शक्त्या देवगृहेषु च ।

ब्राह्मणान्भोजयित्वाऽऽदौ संभोज्य च बुभुक्षितान् ॥
अलङ्कृतेन भोक्तव्यं नववस्त्रोपशोभिना ॥ इति ।

अत्रामावास्यायां ज्योतिर्निबन्धेऽपि—

तुलाराशौ सहस्रांशौ प्रदोषे भूतदर्शयोः ।
उल्काहस्ता नराः कुर्युः पितॄणां मार्गदर्शनम् ॥ इति ।

अत्र प्रदोषस्य कर्मकालत्वोक्तेः पूर्वेद्युरेव तद्व्याप्तौ पूर्वैव । उत्तरेद्युरेवोभयेद्युर्वा तथात्व उत्तरैव । भविष्ये कृत्वा तु पार्वणश्राद्धमित्युक्त्वा 'ततोऽपराह्णसमये' इत्यादीनां दीपदानादेरुक्तत्त्वाद्दर्शश्राद्धोत्तरमेव तत्कर्तव्यमिति न भ्रमितव्यम् । नह्यत्रानयोः क्रमो विधीयते । किन्त्वखण्डामाया एव प्रायो व्यवहार्यत्वेन प्राप्तत्वादनूद्यते । उभयदिने तद्व्याप्त्यभावे पूर्वैव । गौणकाले सत्वात् ।

## अर्धोदयः । अमत्रदानम् ।

अथार्द्धोदयः । भारते—

अमार्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः ।
अर्द्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः ॥
दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचन ।

धर्माब्धौ तु—पौषमाघयोर्मध्यवर्तिनीत्यर्थ इत्येके । अमान्तमासे पौषस्य पूर्णिमान्तमासे माघस्य चेत्यर्थ इत्यपरे । सर्वथा पौषपौर्णमास्युत्तराऽऽमावास्येत्यर्थः । निर्णयसिन्धौ पौषमाघयोर्मध्यवर्तिनी पौर्णमास्युत्तराऽऽमावास्येत्यर्थ इति भट्टाः । तेन पौषमाघमध्यवर्तिनी अमान्तपौषकृष्णामा इत्यर्थः । किञ्चिन्न्यूनं महोदयः इति चतुर्थपादं केचित्पठन्ति, तन्निर्मूलमिति निर्णयसिन्धुकाराः । तथा च 'दिवैव योगः' इत्यर्धमन्यनिबन्धेष्वभावान्निर्णयामृतमात्रोक्तेर्निर्मूलमेव, तेन हेमाद्र्यादिमते रात्रावपि भवतीति निर्णयसिन्धौ त एव वदन्ति ।

स्कान्दे—अर्द्धोदये तु संप्राप्ते सर्वं गङ्गासमं जलम् ।
शुद्धात्मानो द्विजाः सर्वे भवेयुर्ब्रह्मसंमिताः ॥
यत्किञ्चिद्दीयते दानं तद्दानं मेरुसंनिभम् ॥ इति ।

तत्रैव— चतुःषष्टिपलं मुख्यममत्रं तत्र कारयेत् ।
चत्वारिंशत्पलं वाथ पञ्चविंशतिमेव वा ॥
निधाय पायसं तत्र पद्ममष्टदलं लिखेत् ।

पद्मस्य कर्णिकायां तु कर्षमात्रं सुवर्णकम् ॥
तदभावे तदर्द्धं वा तदर्द्धं वापि धारयेत् ।
कृत्वा तु तण्डुलैः शुद्धैः पद्ममष्टदलं शुभम् ॥
अमत्रं स्थापयेत्तत्र ब्रह्मविष्णुशिवात्मकम् ।
तेषां प्रीतिकरार्थाय श्वेतमाल्यैः सुशोभनैः ॥
वस्त्रादिभिरलङ्कृत्य ब्राह्मणाय निवेदयेत् ।
मन्त्रश्च—सुवर्णपायसामत्रं यस्मादेतत्त्रयीमयम् ।
आपत्तेस्तारकं यस्मात्तद्गृहाण द्विजोत्तम ॥ इति ।
समुद्रमेखलां पृथ्वीं सस्यदातुश्च यत्फलम् ।
तत्फलं लभते मर्त्यः कृत्वा दानममत्रकम् ॥ इति ।
अमत्रं पात्रम् ।

---

## फाल्गुनकृष्णाऽमावास्या अन्ये यागाश्च ।

फाल्गुनामावास्यायां रुद्रादिपूजा लैङ्गे, फाल्गुनप्रक्रमे—
अमावास्यायां पूज्याश्च रुद्रोभिर्ब्राह्मणास्तथा ।
मांसौदनैः पोलिकाभिः पूज्यश्चात्मा सबान्धवः ॥ इति ।
शङ्खः— अमावास्या तु सोमेन सप्तमी भानुना सह ।
चतुर्थी भूमिपुत्रेण सोमपुत्रेण चाष्टमी ॥
चतस्रस्तिथयो ह्येताः सूर्यग्रहणसंनिभाः ।
स्नानं दानं तथा श्राद्धं सर्वं तत्राक्षयं भवेत् ॥ इति ।
तत्रैव—

## व्यतीपातयोगः ।

श्रवणाद्यर्कयोगे व्यतीपातः,
श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तकैः ।
अमा चेद्रविवारेण व्यतीपातः स उच्यते ॥
तत्र जप्तं हुतं दत्तं सर्वं कोटिगुणं भवेत् ॥ इति ।
नागदैवतमाश्लेषा । मस्तकं मृगशीर्षम् ।

---

## श्राद्धविषयेऽमानिर्णयः ।

अथ श्राद्धे अमावास्यानिर्णयः । छन्दोगपरिशिष्टे—
पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तृतीयेंऽशे नातिसन्ध्यासमीपतः ॥ इति ।

पिण्डः पिण्डपितृयज्ञः तमनु आह्रियते तत्पिण्डान्वाहार्यकम् । पिंड-पितृयज्ञानन्तरभावीति यावत् । राजनि चन्द्रे तस्मिन् क्षीणे अमावास्याया मित्यर्थः । अत्र यद्यपि 'पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणाम-पराह्णः पितृणाम्' इति श्रुत्यालोचनया त्रेधा विभक्तदिनान्त्यभाग एव प्रतीयते, तथापि,

सायाह्नस्त्रिमुहूर्तः स्याच्छ्राद्धं तत्र न कारयेत् ।
राक्षसी नाम सा प्रोक्ता गर्हिता सर्वकर्मसु ॥

इति नियमात् सायाह्नस्य श्राद्धकालत्वे प्रतिषिद्धेऽर्थादेकादशद्वादश मुहूर्तयोस्तत्कालत्वं सिद्ध्यति । यत्तु दीपिकायां हेमाद्रिसिद्धान्त उक्तः 'त्रिधांशितदिनस्यान्त्येऽपराह्णे चरेत्' इति सोऽप्येतत्परतयैव कथंचि-द्व्याख्येयः । माधवीयमपराह्णपदमप्येवम् । 'अष्टमुहूर्ताख्यकुतपे आरम्भः । नवमे रौहिणे समाप्तिः' इति तु एकोद्दिष्टविषयम् । 'कुतपप्रथमे भागे एकोद्दिष्टमुपक्रमेत् । आवर्तनसमीपे वा तत्रैव नियतात्मवान्' इति व्यासोक्तिः ।

आरभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः ।
विधिज्ञो विधिमास्थाय रौहिणं तु न लङ्घयेत् ॥

इति श्लोकगौतमोक्तेश्च । यत्तु नारदेन—

मध्याह्नस्त्रिमुहूर्तं तु यदा चरति भास्करः ।
स कालः कुतपो नाम पितॄणां दत्तमक्षयम् ॥

इति मुहूर्तत्रयात्मकत्वं कुतपस्योक्तम् 'त एकोद्दिष्टं तु मध्याह्न' इत्या-दिना मुहूर्तत्रयात्मकमध्याह्नस्यैकोद्दिष्टकालतया विधानेऽष्टमनवममुहूर्त-योश्च तत्कालतया विनियोगेऽवशिष्टस्य सप्तमस्योपयोगाकाङ्क्षायां गौण-कालपरत्वमिति । यत्तु मात्स्ये—

अष्टमे भास्करो यस्मान्मन्दीभवति सर्वदा ।
तस्मादनन्तफलदस्तत्रारम्भो विशिष्यते ॥
ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयम् ।
मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते ॥ इति ।

तदेकोद्दिष्टपार्वणकालक्रोडीकाराभिप्रायम् । पार्वणे त्वेकादशद्वादश-मुहूर्तयोरेव मुख्यकालत्वं न मुहूर्तत्रयस्य । तत्र वैषम्येण एकदेशन्यासौ स्मृत्यन्तरे—

अपराह्णद्वयव्यापिन्यमावास्या यदा भवेत् ।
तत्राल्पत्वमहत्त्वाभ्यां निर्णयः पितृकर्मणि ॥ इति ।

अधिका ग्राह्येत्यर्थः । साम्येन एकदेशव्याप्तौ उभयापराह्णव्याप्तौ च खर्वदर्पादिना निर्णयः ।

खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् ।
खर्वदर्पौ परौ पूज्यौ हिंसा स्यात्पूर्वकालिकी ॥

इति व्याघ्रवचनम् । खर्वः साम्यम् । दर्पो वृद्धिः । हिंसा क्षयः । तथा च शिवराघवसंवादेऽपि—

अमावास्या तु या हि स्यादपराह्णद्वयेऽपि सा ।
क्षये पूर्वा परा वृद्धौ साम्येऽपि च परा स्मृता ॥ इति ।

स्मृत्यन्तरे—

तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूर्मता ।
साम्ये चैव कुहूर्ज्ञेया वेदवेदाङ्गवेदिभिः ॥ इति

पूर्वा सिनीवाली उत्तरा कुहूः । 'दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूर्मता' इति व्यासोक्तेः । दिनद्वये कालास्पर्शे जाबालिः—

अपराह्णद्वयाव्यापी यदि दर्शस्तिथिक्षये ।
आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता ॥ इति ।

आदिशब्दात्स्त्रीशूद्रयोरपि ग्रहणम् ॥

सिनीवाली द्विजैः कार्या साग्निकैः पितृकर्मणि ।
स्त्रीभिः शूद्रैः कुहूर्ज्ञेया तथा चानग्निकैर्द्विजैः ॥

इति लौगाक्षिवचनात् ।

इति विशेषतिथयो निर्णीताः ।

---

## अथ इष्टिकालः ।

सा च पर्वप्रतिपत्सन्धौ कार्या । तदाह गोभिलः—'पक्षान्ता उपवस्तव्याः पक्षादयो यष्टव्याः सन्धिमभितो यजेत' इति । उपवासोऽन्वाधानम् । तत्रातिसूक्ष्मतरे सन्धौ यागानुष्ठानस्याशक्यत्वात् । पूर्वदिने पर्वणि आरम्भ उत्तरदिने च प्रतिपदि यागसमाप्तिः । तथाच श्रुतिः—

'पूर्वेद्युरग्निं गृह्णाति उत्तरमहर्यजति ॥ इति '।

पूर्वेद्युरिध्माबर्हिः करोति । यज्ञमेवारभ्य गृहीत्वोपवसति ' इति । तथाच—

उपास्मिञ्छ्वो यक्ष्यमाणे देवता वसन्ति ।
य एवं विद्वानग्निमुपस्तृणाति ।। इति ।

तत्र पर्वणोंऽशत्रयमन्वाधानकालः । तच्चतुर्थांशसहितं प्रतिपदोंऽशत्रयं यागकालः । न संपूर्णं पर्वान्वाधानस्य । नापि संपूर्णा प्रतिपद्यागस्य । तथा च लौगाक्षिः—

त्रीनंशानौपवस्तस्य यागस्य चतुरो विदुः ।
द्वावंशावुत्सृजेदन्त्यौ यागे च व्रतकर्मणि ।। इति ।

प्रतिपत्पर्वणोरन्त्यावंशौ यागोपवासयोस्त्याज्यौ, इत्यर्थः । तत्र यागकालमाह वृद्धशातातपः—

पर्वणो यश्चतुर्थोंश आद्याः प्रतिपदस्त्रयः ।
यागकालः स विज्ञेयः प्रातर्युक्तो मनीषिभिः ।। इति ।

प्रातस्तदवच्छिन्न इत्यर्थः, 'न यष्टव्यं चतुर्थांशे' इति कातीयं तु द्वितीयपादार्थमेवानुवदति । अत्र पर्वप्रतिपदोः संपूर्णत्वे सन्देह एव नास्ति । खण्डत्वे तु तयोर्निर्णयमाह गोभिलः—

आवर्तने यदा सन्धिः पर्वप्रतिपदोर्भवेत् ।
तदहर्याग इष्येत परतश्चेत्परेऽहनि ।। इति ।
पर्वप्रतिपदोः सन्धिरर्वागावर्तनाद्यदि ।
तस्मिन्नहनि यष्टव्यं पूर्वेद्युस्तदुपक्रमः ।।
आवर्तनात्परः सन्धिर्यदि तस्मिन्नुपक्रमः ।
परेद्युरिष्टिरित्येष पर्वद्वयविनिश्चयः ।। इति ।

आवर्तनं दिनमध्यम् । अत्र पर्वापेक्षया यावती प्रतिपदो वृद्धिः क्षयो वा तदर्द्धमानेन पर्वणो ह्रासं वृद्धिं वा कल्पयित्वा सन्धिर्निर्णेयः । तथा च कात्यायनः—

परेऽह्नि घटिका न्यूनास्तथैवाभ्यधिकाश्च याः ।
तदर्धकृत्या पूर्वस्मिन् ह्रासवृद्धी प्रकल्पयेत् ।। इति ।

लौगाक्षिरपि—

तिथेः परस्या घटिकास्तु याः स्यु-
र्न्यूनास्तथा वाभ्यधिकास्तु तासाम् ।
अर्द्धं वियोज्यं च तथा प्रयोज्यं
ह्रासे च वृद्धौ प्रथमे दिने तत् ।। इति ।

अत्र केचिद्यदि चतुर्दशी दशदण्डा पर्व च पञ्चदशदण्डमितं प्रतिपत्तु एकोनविंशतिदण्डा तदा प्रतिपद्वृद्धेरर्धं दण्डद्वयं पर्वान्ते प्रक्षिपन्ति; एवं यदि चतुर्दशी पञ्चविंशतिदण्डा पर्वैकोनविंशतिदण्डं प्रतिपच्चतुर्दशदण्डा तदा प्रतिपद्ह्रासार्द्धं सार्द्धघटिकाद्वयं पर्वान्ते (?) क्षिपन्ति तदयुक्तम् , ईदृशे विषये पर्वापेक्षया प्रतिपदो ह्रासस्य वृद्धेर्वाऽभावात् । प्रत्युत वृद्ध्युदाहरणे ह्रास एवास्ति ह्रासोदाहरणे च वृद्धिरिति । नहि घटिकान्यूनाधिक्यभावेन ह्रासवृद्धी भवतः । किन्तु चतुर्दश्युत्तरं यावत्यः पर्वघटिकास्तत आधिक्ये न्यूनत्वे वा प्रतिपदो ह्रासवृद्धी इत्येवमालोच्य सन्धिर्निर्णयः ।

अत्र दिनद्वये पूर्वोदाहृतशातातपोक्तयागकालसत्त्वे कस्मिन्दिने याग इत्याकाङ्क्षायां सन्धिशास्त्रं निर्णायकम् । दिनद्वये यागकालासत्त्वेऽपराह्णसन्धौ च प्रतिपच्चतुर्थांशस्य गौणकालतामाह वृद्धशातातपः—

सन्धिर्यत्रापराह्णे स्याद्यागं प्रातः परेऽहनि ।
कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति ।। इति ।

यदि तु 'न यष्टव्यं चतुर्थेंऽशे' इति निषेधः स्यान्न स्यात्तदा गौणकालत्वम् 'अयज्ञिया वै माषा वरटाश्चणकाः कोद्रवाः' इति प्रतिनिधिवर्जनवत् , नत्वसौ निषेधः प्रागनुवादत्वसमर्थनात् । एकस्मिन्दिने यागकालस्पर्शोऽधिकोऽन्यत्राल्पस्तदापि सन्धिशास्त्रमेवाऽऽदर्तव्यं नाधिक्यम् । तस्य 'भूयसां स्यात्सधर्मत्वम्' इति न्यायमात्रत्वेन सन्धिनिर्णायकत्वबोधकवचोबाधकत्वायोगात् । यदा प्रतिपद्दिने पञ्चधाविभक्तदिनचतुर्थभागरूपापराह्णव्यापिद्वितीयाप्रवेशेन चन्द्रदर्शनं तदा चतुर्दश्यामन्वाधानं सन्धिदिने च यागः । तथा च वृद्धवसिष्ठः—

आदित्येऽस्तमिते चन्द्रः प्रक्षीण उदियाद्यदि ।
प्रतिपद्यतिपत्तिः स्यात्पञ्चदश्यां यजेत्तदा ।।

अस्तमिते अस्तासन्ने । बौधायनवृद्धशातातपौ—

त्रिमुहूर्ता द्वितीया चेत्प्रतिपद्यापराह्णिकी ।

---

१ 'सत्त्वेऽसत्त्वेचेदं संधिशास्त्रं निर्णायकम् । अमुमेवार्थं वृद्धशातातपोऽनुवदति संधिर्यत्रा' इति पाठः । २ दिनद्वये यागकालासत्त्वे संधिशास्त्रप्रवृत्तावपराह्णसंधिवशादुत्तरदिने चतुर्थांशे गौणकाल एव यागप्राप्त्यैतदनुवादक-कुर्वाण-इतिपदस्वरसोऽप्येवम् । यदि तु 'न य' इति पाठः ।

अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात् ॥

कात्यायनः—

यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते ।
तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये ॥

एतानि वचनान्यपराह्णेऽमाप्रतिपत्सन्धिपराणि इति हेमाद्रिः । तन्न । तन्मते ह्येतद्वचनगतापराह्णपदस्य द्वेधाविभक्तदिनान्त्यदलवाचित्वात्तत्र सूर्यास्तात्प्राक्त्रिमुहूर्तादिद्वितीयाप्रवेशेन चन्द्रदर्शने सति रात्रिसन्धावपि परदिने यागनिषेधापत्तेः । नचापराह्णसन्धिशास्त्रेणैव कैमुतिकन्यायेन रात्रिसन्धावपि परदिने यागसिद्धौ,

अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते ।
उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते ॥

इति रात्रिसन्धिशास्त्रमनर्थकं स्यात्, अतश्चन्द्रदर्शननिषेधबाधकतयैव रात्रिसन्धिशास्त्रं सार्थकमिति वाच्यम् । अपराह्णशब्देन योगवृत्त्याहर्वर्त्यावर्तनोत्तरभागाभिधानेन रात्रिसन्धौ कैमुतिकन्यायेन तच्छास्त्राप्रवृत्तेः । अतो विनिगमनाविरहादेतानि वचनान्यावर्तने ततः पूर्वमुत्तरं वाऽमाप्रतिपत्सन्धौ प्रवर्तन्ते नापराह्णसन्धावेवेति युक्तम् । एष एवानन्तभाष्यदेवभाष्यशतपथशाङ्खायनभाष्याणामाशयः । त्रिमुहूर्तशास्त्रस्य तु पञ्चधाविभक्तदिनचतुर्थभागरूपापराह्णव्यापिद्वितीयाविषयत्वम्; एवं च 'सोमदर्शनात्' इति हेतूक्तिः संगच्छते, न तु सायाह्ने त्रिमुहूर्तमात्रसत्त्वे, तत्र चन्द्रदर्शनव्यभिचारात् । यत्तु केचित्, चन्द्रदर्शनमेव यागनिषेधप्रयोजकं न त्रिमुहूर्तद्वितीयाप्रवेश इति । तन्न । त्रिमुहूर्तेत्यादिपूर्वार्द्धस्य पाक्षिकानुवादकत्वापत्तेः । एतच्च दिवासन्धावेव प्रवर्तते न रात्रिसन्धौ, अग्रिमदिने तावतः क्षयस्यासंभवात् । एतद्व्रतोऽपराह्णशब्दोऽपि यौगिकः सन्दिनद्वितीयभागपर इति चेन्न । अपराह्णपदवैयर्थ्यापत्तेः । यौगिकपारिभाषिकयोः परिभाषासार्थक्याय पारिभाषिकग्रहणस्यैव युक्तत्वाच्च । सन्धिनिर्णये तु द्वेधाविभक्तदिनपूर्वापरभागरूपयोः पूर्वाह्णापराह्णशब्दयोर्मध्याह्नशब्दस्य च यौगिकत्वमेव । पूर्वोक्तगोभिलवाक्ये आवर्तनपदस्यार्वागावर्तनात्परतश्चेत्यनयोः पदयोः स्वरसात् । यत्त्वेतत्प्रकरणे,

---

१ °नैव सिद्धे परत्र यागानुष्ठाने रात्रिसंधिशास्त्रानर्थक्यापत्तेः । इति पाठः ।

आवर्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परम् ।
मध्याह्नस्तु तयोः सन्धिर्यदावर्तनमुच्यते ॥

इति तद्गोभिलोक्तमेव यौगिकार्थमनुवदति नत्वपूर्वां परिभाषां विधत्ते, येन त्रिमुहूर्तवाक्यमपि द्वेधाविभक्तदिनापरभागरूपमपराह्णमुपजीवेत् । अतो दिनमध्ये यदा कदाचित्सन्धौ परदिने पञ्चधाविभक्तदिनचतुर्थभागरूपसकलापराह्णव्यापिद्वितीयासत्त्वे चतुर्दश्यामन्वाधानं सन्धिदिने च याग इति । एष एव निर्णयामृतमदनपारिजातयोराशयो लक्ष्यते । यत्तु माधवादयः 'यजनीयेऽह्नि' इति पूर्वोक्तकातीयबौधायनवचोभ्यां चन्द्रदर्शननिषेधः कातीयबौधायनपर एव नाश्वलायनापस्तम्बादिपर इति, तन्न, उक्तस्मृतिवाक्ययोः सर्वविषयत्वेन सङ्कोचे मानाभावात् । होलाकानये हि गृह्यसूत्राणामपि सर्वपरतोक्ता किं पुनः स्मृतीनां कात्यायनबौधायनापस्तम्बाश्वलायनादिस्मृत्युक्तक्रत्वर्थत्वम्। अन्यथा पुरुषार्थानामपि धर्माणां तत्तच्छाखीयान्प्रति सङ्कोचापत्तिश्च । अत एव माधवोदाहृता स्मृतिः "पर्वणोंऽशे चतुर्थे तु कर्तव्येष्टिर्द्विजोत्तमैः । द्वितीयासहितं यस्मादूषयन्त्याश्वलायनाः" । इति सङ्गच्छते ।

इष्टिसमाप्तिश्च प्रतिपन्मध्य एव न पर्वमध्ये—

प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते ।
पुनः प्रणीय कृत्स्नेष्टिः कर्तव्या यागवित्तमैः ॥ इति गार्ग्योक्तेः ।

पौर्णमास्यां सद्यस्कालतामाह कात्यायनः—

सन्धिश्चेत्सङ्गवादूर्ध्वं प्राक्पर्यावर्तनाद्रवेः ।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः ॥ इति ।

आपस्तम्बः—'पौर्णमास्यामन्वाधानपरिस्तरणोपवासाः सद्यो वा सद्यस्कालायाः सर्वं क्रियते' इति ।

भाष्यार्थसंग्रहेऽपि—

अन्वाहितिश्चास्तरणोपवासाः
पूर्वेद्युरेते खलु पौर्णमास्याम् ।
आवर्तनात्प्राग्यदि पर्वसन्धि-
स्तदैव यागः क्रियते समस्तः ॥ इति ।

मण्डनः—आधानानन्तरा पूर्णमासी चेन्मलमासगा ।
तस्यामारंभणीयादीन्न कुर्वीत कदाचन ॥ इति ।

साऽत्र मलमासोत्तरं शुद्धकाले कार्या । तत्र कालातिक्रमनिमित्ता विभ्रष्टेष्टिरप्यादौ कार्या तत आरंभ इति केचित् । तन्न । पुरुषापराधकृतविहितकालातिक्रमरूपविभ्रष्टेष्टिनिमित्ताभावात् । एवं प्रकृतीष्टेः कालो निर्णीतः ।

---

## विकृतिनिर्णयः ।

विकृतिकालोऽपि श्रुतौ 'यदीष्ट्या यदि पशुना यदि सोमेन यजेत सोऽमावास्यायां पौर्णमास्यां वा' इति । पौर्णमासीकालीनोपांशुयाजाग्नीषोमीयादिविकाराणां पौर्णमास्यामेवाऽमावास्याकालीनसान्नाय्यादिविकाराणां चामावास्यायामेवेति व्यवस्थाप्राप्तावव्यवस्थार्थमिदं वचनम्; पौर्णमास्याममावास्यायामिति विधेयकालगतैकत्वस्य विवक्षितत्वेन एकस्यां पौर्णमास्यामेकस्याममावास्यायां साङ्गप्रयोगोपादानात्सद्यस्कालीनत्वार्थं चेति निरणायि तन्त्ररत्ने । न चेष्टिपशुसोमानामनेकेषामुद्देश्यत्वात्तन्निमित्तामावास्यापौर्णमास्योर्द्वयोर्विधेयत्वात्तन्निमित्तश्च वाक्यभेदः स्यादिति वाच्यम् । इष्टिपशुसोमेष्वनुगतस्य यागत्वस्यैकस्योद्देश्यतावच्छेदकस्यामावास्यापौर्णमास्यनुगतस्य च पर्वत्वस्य विधेयतावच्छेदकस्यैकस्य सद्भावात्तस्य परिहर्तुं शक्यत्वात् ।

प्रकृतिविकृत्योरेककालसन्निपाते निर्णयमाह कात्यायनः—

> आवर्तनात्प्राग्यदि पर्वसन्धिः
> कृत्वा तु तस्मिन्प्रकृतिं विकृत्याः ॥
> तदैव यागः, परतो यदि स्यात्
> तस्मिन्विकृत्याः प्रकृतेः परेद्युः ॥ इति ।

तत्र इष्ट्येत्यादिश्रुत्या साङ्गाया विकृतेः पर्वणि विधानादावर्तनपर्वसन्धावपि पर्वणोऽधिकरणत्वश्रुतेः, 'कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः' इति स्मृतेश्च प्रकृतिविकृतिपर्याप्तपर्वसत्वेन तद्दिन एवोभयोः कर्तव्यत्वे प्राप्ते क्रमः पूर्वार्द्धे विधीयते । प्रकृतेः पूर्वत्वादपूर्वमन्ते स्यादिति वचनमेतत्परमेव । प्रयोगद्वयपर्याप्तपर्वासत्वेप्येतद्वचःप्रवृत्त्यङ्गीकारे तु श्रुतपर्वाधिकरणत्वबाधः । न च कृत्वा तु तस्मिन्प्रकृतिं विकृत्या इति प्रकृतिप्रयोगसमाप्त्युत्तरमेव विकृतेः कर्तव्यत्वावगमेन प्रतिपद-

---

१ इतः प्रभृति दिगन्तो ग्रन्थः लिखितपुस्तके नास्ति ।

धिकरणकप्रकृत्यन्त्यपदार्थोत्तरमेव विकृतिर्न ततः प्रागिति वाच्यम् । श्रुतपर्वाधिकरणकत्वबाधापत्तेः । किञ्चान्त्यपदार्थव्यतिरिक्ताया एव प्रकृतेः पर्वाधिकरणत्वेन विकृत्यैककालत्वात्तादृश्या एव काङ्क्षितः क्रमविधिः । 'सन्धिमभितो यजेत' इतिवचनात्प्रकृतिसमाप्तेः प्रतिपदि कर्तव्यत्वेन तन्मध्ये विकृतिसंभवेऽपि न किञ्चिद्बाधकम् । 'न कर्मणि कर्मारम्भः' इत्यत्र तु न श्रुतिर्मूलं किं तु प्रयोगप्राशुभावभङ्गप्रसङ्गः । स चात्र प्रतिपत्प्रतीक्षया विकृत्यननुष्ठानेऽप्यावश्यकः । 'अन्यस्य तन्त्रे वितते' इत्यादि राणकोदाहृतं लिङ्गदर्शनमप्येवं व्याख्येयम् । अन्यथा दर्शस्य पौर्णमासस्य वा प्रयोगस्य मध्येऽग्निहोत्रानुष्ठानं न स्यात् , न स्याच्चान्ततः पर्वद्वयसाध्यतन्महाप्रयोगमध्ये काम्यादीनामन्येषामपि कर्मणामतस्तादृशपर्वसत्व एव क्रमविधिः । तदभावे आवर्तनप्राक्सन्धावपि पूर्वदिन एव विकृतिः । सन्धिदिने तु प्रकृतिमात्रं, तन्त्ररत्नग्रन्थोऽप्येतत्पर एव । उत्तरार्द्धे तु न कोऽपि विरोध इति दिक् ।

## पशौ कालनिर्णयः ।

पशौ कालनिर्णयमाह गोविन्दार्णवे कात्यायनः—

> अर्द्धादह्नो भवति नियतः पर्वसन्धिः परस्ता-
> त्कृत्वा तस्मिन्नहनि तु पशुं सद्य एव ध्यहं वा ।
> आरभ्याथ प्रकृतिरथ चेत्पर्वसन्धिः पुरस्ता-
> त्कृत्वा तस्मिन्प्रकृतिमथ तु स्यात्पशुः सद्य एव ॥

## आग्रयणकालः ।

आग्रयणकालानाहापस्तम्बः 'वर्षासु श्यामाकैर्यजेत शरदि व्रीहिभिर्वसन्ते यवैः' इति । वार्तिककारोऽपि, 'यजेत्पूर्वं पूर्णमासादूर्ध्वं दर्शान्नवेज्यया' इति । नवेज्या, आग्रयणेष्टिः । दीपिकायाम् 'दर्शेष्टाः परमुक्तमाग्रयणकं प्राक् पौर्णमास्याश्च तत्' इति । संपूर्णे दर्शे विशेषमाह लौगाक्षिः—

> पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः ।
> पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः ॥ इति ।

पक्षान्तमन्वाधानम् । अन्वाहार्यं दर्शश्राद्धमिति दिक् । इतीष्टिकालः ।

## पिण्डपितृयज्ञः ।

अथ पिण्डपितृयज्ञः। तत्र श्रुतिः । 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति' इति। अत्र "यः परमो विप्रकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी यः परमः सन्निकर्षः साऽमावास्या" इति गोभिलोक्तेः, अमावास्यापदं यद्यपि सूर्याचन्द्रमसोः परमसन्निकर्षवत्सन्त्यक्षणे शक्तं तथापि तत्र कर्मानुष्ठानाशक्तेस्तद्वदहोरात्रं लक्षयति। अत एव "यदहश्चन्द्रमसं न पश्यन्ति तदहः पिण्डपितृयज्ञेन चरन्ति" इति सूत्रम्, "यदैवैष न पुरस्ताद्ददृशे न पश्चादथ पितृभ्यो निर्वपति" इति च श्रुतिः सङ्गच्छते। अतोऽमावास्यातिथेरपराह्णे व्याप्त्यभावेऽप्यन्त्यक्षणावच्छिन्नाहोरात्र एव पितृयज्ञः पूर्वदिनापराह्णव्याप्तेस्त्वनादर इत्याश्वलायनापस्तम्बसूत्रवृत्तिभाष्यकाराः। यौक्तिकं तु अमावास्याशब्दस्य प्रयोगस्तावत्तिथिविशेषे सर्वजनीनो निर्विवादः। तत्र च एकदेशवर्तिनोऽपि परमसन्निकर्षस्य संभवत्येव प्रवृत्तिनिमित्तत्वं चक्रिपद इव चक्रस्य वैश्वदेवपद इव च विश्वेषां देवानाम्। यद्यपि तिथिविशेषे लक्षणा तथापि निरूढत्वात्सैव युक्ता नाहोरात्रे आधुनिकी। चन्द्रादर्शनं तु अमायुक्ताऽपराह्णवत्यहोरात्रेऽप्यविशिष्टम्। ईदृगहोरात्रपूर्वभाव्युषःकालीनं तु चन्द्रदर्शनं पूर्वाऽहोरात्रवर्तित्वान्न विरुद्धम्। अथ पुरस्तात्पदसार्थक्याय तदेव निरुद्धं तदा पश्चात्पदसार्थक्याय सन्ध्युत्तराहोरात्रगतमपि तत्तथा स्यात्। अतोऽपराह्णयुक्तैवामावास्या ग्राह्या न तु सन्धेराग्रह इति। अपराह्णस्त्वत्र 'पञ्चधा विभक्तदिनोपान्त्यो भागः' इति वृत्तिकारोक्त एव। दिनद्वयेऽपराह्णस्पर्शाभावे तु पूर्वदिन एव तत्र स्मृत्यापादितचन्द्रक्षयस्योत्तरदिने च तादृश्याश्चन्द्रवृद्धेः सत्त्वात्। यथाह हारीतः—

> चतुर्दश्यष्टमे भागे क्षीणो भवति चन्द्रमाः ।
> अमावास्याष्टमे भागे पुनः किल भवेदणुः ॥ इति ।

'पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितृणाम्' इत्यस्य पितृयज्ञप्रकरणे पाठात् त्रेधाविभक्तदिनान्त्यभागस्तु युक्तः। हारीतवचस्तु उपवासपरम्। तं प्रकृत्य 'यदहरेवैष न पुरस्तान्न पश्चाद्दृश्येत तदहरुपवसेत्' इति श्रुतेः। यायजूकास्तु वृत्तिभाष्याद्युक्तं सन्धिमदहोरात्रं प्रायः पञ्चधा विभागं च अनुरुध्याचरन्ति। तत्र कातीयानां तावत्पितृयज्ञो दर्शयागाङ्गं तत्पूर्वदिन एव तत्कार्यम्। न तु नियमेना-

मायुक्त एवापराह्णे । 'पूर्वेद्युः पितृभ्यो यज्ञं निष्क्रीणीयोत्तरमहर्देवान्यजन्ति' इति श्रुतेः । अमावास्यायामपराह्ण इत्यमावास्यापदस्य कर्मपरत्वाच्च । पितृयज्ञोऽङ्गं न वेति तु वादान्तरमिति । तैत्तिरीयादीनां तु निर्विगानं सन्धिमत्येवाहोरात्रेऽनुष्ठानमिति । आश्वलायनानां तु सर्वाधानिनां तावद्दक्षिणाग्निकपितृयज्ञोत्तरं पृथगेव पार्वणम् 'पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः । पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः' इति वाक्यात् । पक्षान्तमन्वाधानम् । अन्वाहार्यकं पार्वणश्राद्धम् । तत्र च निरग्निकवद्द्विप्रपाणौ होमः । तथा च परिशिष्टम्—'पर्व अमावास्या तत्र भवं पार्वणं तदाहिताग्निः पिण्डपितृयज्ञं कृत्वा करोत्यनाहिताग्निस्तु तदितरेण व्यतिषज्य' इति । आहिताग्निपार्वणे च पिण्डपितृयज्ञकल्पाभावात्तदभ्यनुज्ञया पाणिष्वेवेति ब्राह्मणानां पाणिषु होम इति च । आहिताग्निः सर्वाधानी, अनाहिताग्निस्त्वर्धाधानी केवलस्मार्ताग्निमान्वेति सांप्रदायिकाः । अनयोस्तु यौक्तिककालनिर्णयपक्षे सर्वदा श्राद्धपितृयज्ञयोस्तत्रविशेषरूपो व्यतिषङ्ग एव । कालैक्यात् । अग्नौकरणं च स्मार्ताग्नौ । आव्यवृत्तिसंप्रदाये तु संपूर्णे पर्वणि व्यतिषङ्ग एव । कालैक्यादेव । खण्डपर्वणि तु पूर्वदिने पितृयज्ञीयचरुश्रपणादिसकलेतिकर्तव्यताकं श्राद्धम् । परदिने तु पितृयज्ञः, कालभेदेन तन्त्रन्यायाप्रवृत्तेः । एतेन पूर्वदिन एव व्यतिषङ्ग इत्यपास्तम् । कालभेदादेव । 'पिण्णयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः' इति क्रमानुरोधेन पृथगनुष्ठानमप्यपास्तम् । एकदिनीयेष्वेव ह्ययं क्रमविधिः । आकाङ्क्षितनियमविधिसंभवे भिन्नदिनीयेष्वनाकाङ्क्षितापूर्वविधानायोगात् । एवं च यद्यपि पूर्वदिने वार्षिकादिषु चरुश्रपणादिका सर्वा पितृयज्ञेतिकर्तव्यताऽऽपाततो भवति, तथापि 'यद्यदन्नमुपभुक्तं तत्तत्स्थालीपाकेन सह पिण्डार्थमुद्धृत्य' इति सूत्रव्याख्यार्थस्य—'नात्रापूर्वः स्थालीपाकश्चोद्यते सर्वश्राद्धेषु प्रसङ्गादनिष्टं चैतत् । तेनानुवाद एवायम् । यत्र तेन स्थालीपाको विहितस्तत्र तेन भुक्तशेषेण च पिण्डनिपरणम् । यत्र तु स्थालीपाकविधिर्नास्ति तत्र भुक्तशेषेणैव केवलेन निपरणं भवति । आचार्येणाष्टौ श्राद्धान्युक्तानि—

आन्वष्टक्यं च पूर्वेद्युर्मासि मास्यथ पार्वणम् ।

---

१ अर्धाधानि-केवलस्मार्ताग्निमतोः ।

काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम् ॥

तत्र पूर्वेषु चतुर्षु स्थालीपाकादन्नमुद्धृत्याग्नौकरणम् । अग्निसमीपे स्थालीपाकेन भुक्तशेषेण च पिण्डनिपरणम् । पिण्डपितृयज्ञकल्पस्य तेषु विद्यमानत्वात् । तच्च साधितमेव प्राक् । उत्तरेषु चतुर्षु भोजनार्थादन्नमुद्धृत्य घृताक्तं कृत्वा पाणिहोमः । ब्राह्मणसमीपे भुक्तशेषमात्रेण पिण्डनिपरणम् । तेषु स्थालीपाकविध्यभावात् पिण्डपितृयज्ञकल्पप्राप्त्यभावाच्च । तत्रार्घाल्लेखा तदभ्युक्षणं सकृदाच्छिन्नावस्तरणं लेखां त्रिरुदकेनेत्यादि पत्नीप्राशनान्तं च भवति । 'अग्निं प्रत्येयात्' इति तु न भवति । अन्यच्चातिप्रणयनादि सर्वं न भवति—'इति वृत्तिग्रन्थस्यालोचने तु लेखाकरणादिकैव भवति न चरुश्रपणादिका ।—युक्तं चेदमुक्तमिति केचित्, चरुश्रपणादिप्राप्तौ मानाभावात्। 'अथाग्नौ जुहोति यथोक्तं पुरस्तात्' इति सूत्रमतिदेशार्थमितिचेन्न 'उद्धृत्य घृताक्तमन्नमभ्यनुज्ञापयत्यग्नौ करिष्ये करवै करवाणीति वा प्रत्यभ्यनुज्ञा क्रियतां कुरुष्व कुर्विति' सूत्रोत्तरमथेत्यादि सूत्रमुक्तमतो यथोक्तमित्याद्युद्धरणोत्तरकालीनानेव मेक्षणावदानादीनतिदिशति न प्राक्कालीनानपि श्रपणादीन् । यत्तु 'यद्यदन्नमुपभुक्तं तत्तत्स्थालीपाकेन सह पिण्डार्थमुद्धृत्य' इति सूत्रं तत्रापि स्थालीपाकस्योद्धरण एव कर्मत्वेनान्नसाहित्यं न पिण्डार्थत्वेऽपि । उद्धरणे तु तस्य प्रतिपाद्यत्वमेव। करणं तूपभुक्तसजातीयमेवान्नम् । अतो न पिण्डदानमपि चरुश्रपणप्रयोजकम्—। वस्तुतस्तु, सर्वश्राद्धेष्वग्निप्रणयनादिपितृयज्ञेतिकर्तव्यता प्राप्नोत्येव; 'आन्वष्टक्यं च पूर्वेद्युः' इत्याद्युक्त्वा 'चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते' इत्याचार्येण पितृयज्ञातिदेशप्रसज्यमानाग्नेः श्राद्धान्तरे परिसङ्ख्यानात् 'पितृब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि' इति त्वनुवादकं । विधाने, वाक्यभेदात्, 'अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्' इति मानवेन पाणिप्राप्तेश्च । अभावस्त्वपरिग्रहनाशदेशान्तरेष्विव परिसङ्ख्यायामप्यविशिष्टः। अष्टत्वं तु गृह्योक्तत्वोपाधिकम् । एवमुत्तरार्द्धोक्तं चतुष्टमपि । प्राप्तपरिसङ्ख्यात्वेऽपीयं न त्रिदोषा 'अत्रह्येवावपन्ति' इत्यत्रैवैवशब्देन 'पञ्च पञ्च नखा भक्ष्या' इत्यत्रेव पञ्चपदेनात्रापि चतुःपदेन श्रुत्यैव परिसङ्ख्यानात् । न च परिसङ्ख्यापकानुवादकयोर्वैपरीत्यम्, अग्न्यभावनिमित्तकस्य पाणेः साग्निकर्तृकेऽन्वष्टक्यादि-

चतुर्थप्राप्तेः साग्नीनामित्यस्यानुवादत्वायोगात् । अग्नेः परिसङ्ख्यायां च तत्साध्यं चरुश्रपणादि दूरनिरस्तमेव ।

इति भगवन्तभास्करे समयमयूखे इष्ट्यादिकालनिर्णयः ।

---

## अथ ग्रहणनिर्णयः ।

वृद्धगार्ग्यः—

पूर्णिमाप्रतिपत्सन्धौ राहुः संपूर्णमण्डलम् ।
ग्रसते चन्द्रमर्कं च दर्शप्रतिपदन्तरे ॥

वृद्धवसिष्ठः—

गवां कोटिप्रदानेन सम्यग्दत्तेन यत्फलम् ।
गङ्गास्नाने तत्फलं स्याद्राहुग्रस्ते निशाकरे ॥
दिवाकरे पुनस्तत्र दशसंख्यमुदाहृतम् ॥ इति ।

भारते— गङ्गास्नानं तु कुर्वीत ग्रहणे चन्द्रसूर्ययोः ।
महानदीषु चान्यासु स्नानं कुर्याद्यथाविधि ॥

दक्षः 'उषस्युषसि यत्स्नानं सन्ध्यायामुदिते रवौ । चन्द्रसूर्योपरागे च प्राजापत्येन तत्समम्' इति । उपरागो ग्रहणम् । गङ्गाया अलाभेऽन्यासु स्नानादि कुर्यादित्यर्थः । महानद्यो ब्राह्मे—

'गोदावरी भीमरथी तुङ्गभद्रा च वेणिका ।
तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्तिताः ॥
भागीरथी नर्मदा च यमुना च सरस्वती ।
विशोका च वितस्ता च विन्ध्यस्योत्तरतः स्मृताः' ॥

महानद्यसंभवे शङ्खः—

वापीकूपतडागेषु गिरिप्रस्रवणेषु च ।
नद्यां नदे देवखाते सरसीषूद्धृताम्भसि ॥
उष्णोदकेन वा स्नायाद्ग्रहणे चन्द्रसूर्ययोः ॥

इह पूर्वपूर्वाभावे उत्तरोत्तरोऽनुकल्पः । उक्तं च मार्कण्डेयेन—

शीतमुष्णोदकात्पुण्यमपारक्यं परोदकात् ।
भूमिष्ठमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम् ॥
ततोऽपि सारसं पुण्यं ततः पुण्यं नदीजलम् ।
तीर्थतोयं ततः पुण्यं महानद्यम्बु पावनम् ॥
ततस्ततोऽपि गङ्गाम्बु पुण्यं पुण्यस्ततोऽम्बुधिः ।

व्यासोऽपि—

सर्वं गङ्गासमं तोयं सर्वे व्याससमा द्विजाः ।
सर्वं भूमिसमं दानं ग्रहणे चन्द्रसूर्ययोः ॥

उष्णोदकमातुरविषयम् ,

आदित्यकिरणैः पूतं पुनः पूतं च वह्निना ।
अतो व्याध्यातुरः स्नायाद्ग्रहणेष्णवारिणा ॥ इति व्याघ्रोक्तेः ।
स्नानाकरणे प्रत्यवाय उक्तो वृद्धवसिष्ठेन
ग्रहणे सङ्क्रमे चैव न स्नायाद्यदि मानवः ।
सप्तजन्मसु कुष्ठी स्याद् दुःखभागी न संशयः ॥

मुक्तिस्नानाकरणेऽपि प्रत्यवायः । तथाच ब्रह्मवैवर्ते—

विमुक्ते यदि न स्नायाच्चन्द्रसूर्यग्रहे तथा ।
तस्य स्यात्तावदाशौचं यावदन्यः परो ग्रहः ॥ इति ।

---

## ग्रहणेषु मासनदीविशेषाणां पुण्यत्वम् ।

मासभेदेन नदीनां पुण्यत्वं देवीपुराणे—

कार्तिके ग्रहणं श्रेष्ठं गङ्गायमुनसङ्गमे ।
मार्गे तु ग्रहणं प्रोक्तं देविकायां महामुने ॥
पौषे तु नर्मदा पुण्या माघे सन्निहिता शुभा ।
फाल्गुने वरणा पुण्या चैत्रे पुण्या सरस्वती ॥
वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा ।
ज्येष्ठे तु कौशिकी पुण्या आषाढे तापिका नदी ।
श्रावणे सिन्धुनामा तु तथा भाद्रे तु चन्द्रिका ॥
आश्विने सरयूः श्रेष्ठा तथा पुण्या तु नर्मदा ॥ इति ।

---

## ग्रहणविशेषे नदीविशेषः क्षेत्रविशेषश्च ।

तत्रैव— गोदावरी महापुण्या चन्द्रे राहुसमन्विते ।
सूर्ये तु राहुणाग्रस्ते तमोभूते महामुने ॥
नर्मदातोयसंस्पर्शात्कृतकृत्या भवन्ति ते ॥

क्षेत्रविशेषोऽपि—

गङ्गा कनखलं पुण्यं प्रयागः पुष्करं तथा ।
कुरुक्षेत्रं महापुण्यं राहुग्रस्ते दिवाकरे ॥

अत्र श्राद्धमुक्तं महाभारते—

सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने ।
अकुर्वाणस्तु नास्तिक्यात्पङ्के गौरिव सीदति ॥

पङ्कः कर्दम इत्यर्थः । इत्याद्यकरणे दोषः । तच्चामेन कार्यम् ।

आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा ।
आमश्राद्धं ततः कुर्याच्छूद्रः कुर्यात्सदैव हि ॥

इति शातातपोक्तेः । अत्र रात्रावपि स्नानाद्याह देवलः—

यथा स्नानं च दानं च सूर्यस्य ग्रहणे दिवा ।
सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते ॥

अत्राऽशौचिनोऽपि स्नानाद्याह वृद्धवसिष्ठः—

सूतके मृतके चैव न दोषो राहुदर्शने ।
तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ॥

रजस्वलाविषये विशेषः क्वचित्स्मर्यते—

स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।
पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥

व्रतं रजस्वलाव्रतम् । इदं च नाद्रियन्ते शिष्टाः ।

---

## वारविशेषे फलविशेषः ।

वारविशेषे फलातिशयमाह व्यासः—

रविग्रहः सूर्यवारे सोमे सोमग्रहस्तथा ।
चूडामणिरितिख्यातस्तदानन्तफलं भवेत् ॥
वारेष्वन्येषु यत्पुण्यं ग्रहणे चन्द्रसूर्ययोः ।
तत्पुण्यं कोटिगुणितं ग्रासे चूडामणौ स्मृतम् ॥ इति ।

षट्त्रिंशन्मते—

सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।
स्नात्वा कर्माणि कुर्वीत शृतमन्नं विवर्जयेत् ॥

पक्वमन्नं त्याज्यं ग्रहणोत्तरमपि न भुञ्जीतेत्यर्थः । क्वचित्पयआद्येषु प्रतिप्रसवः—

आरनालं तथा क्षीरं किलाटं घृतसक्तवः ।
स्नेहपक्वं च तैलं च न कदाचित्प्रदुष्यति ॥

तथा— आरनालं पयस्तक्रं दधि तैलाज्यपाचितम् ।
मणिकस्थोदकं चैव न दुष्येद्राहुदर्शने ॥

इयं च सूतकोक्तिः स्नानार्था नान्यकर्मत्यागार्था । तदुक्तं व्याघ्रपादेन—

'स्मार्तकर्मपरित्यागो राहोरन्यत्र सूतके' इति ।

शिवरहस्ये—सूर्येन्दुग्रहणं यावत्तावत्कुर्याज्जपादिकम् ।
न स्वपेन्न च भुञ्जीत स्नात्वा भुञ्जीत मुक्तयोः ॥ इति ।

फलविशेषोऽपि ब्रह्मपुराणे—

उपमर्दे लक्षगुणं ग्रहणे चन्द्रसूर्ययोः ।
मध्ये कोटिगुणं पुण्यं मुक्तिकाले त्वनन्तकम् ॥ इति ।

उपमर्दः स्पर्शः । दानमुक्तं महाभारते—

अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ।
पात्रभूताय विप्राय भूमिं दद्यात्सदक्षिणाम् ॥

यद्यपि पूर्वं 'सर्वे व्याससमा द्विजा' इत्युक्तं तथापि तद्ब्राह्मणस्तु-त्यर्थं दानस्यावश्यकत्वार्थं च, न तु पात्रत्यागेन यस्मै कस्मै चिद्दानप्र-तिपादनार्थम् । पात्रलक्षणं दानमयूखे वक्ष्यते ।

अनुकल्पमाह बौधायनः—

श्रोत्रियोऽश्रोत्रियो वाऽपि पात्रं वाऽपात्रमेव वा ।
विप्रब्रुवोऽपि वा विप्रो ग्रहणे दानमर्हति ॥ इति ।

भारते— भूमिर्गावः सुवर्णं वा धान्यं वा यद्यदीप्सितम् ।
तत्सर्वं ग्रहणे देयमात्मनः श्रेय इच्छता ॥

पुण्यकालमाह जाबालिः—

सङ्क्रान्तौ पुण्यकालस्तु षोडशोभयतः कलाः ।
चन्द्रसूर्योपरागे च यावद्दर्शनगोचरः ॥ इति ।

अत्र केचित् । 'राहुदर्शने स्नायाद्दानं च कुर्यात् इत्यादिभिर्वाक्यै-र्दर्शने स्नानादि विधीयते । दर्शनं चाक्षुषम् । तच्च स्वकीयमेव निमित्तम् । परकीयदर्शनस्य परं प्रति निमित्तत्वाभावात् । एवं चायमर्थः संपद्यते । स्वयं ग्रहणे दृष्टे स्नानादि कर्तव्यं न मेघावृते' इत्याहुः । तदयुक्तम्, एवमन्धस्य स्नानादि न स्यात् । तथा—

नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥

इति वाक्येन स्नातकानां ग्रहणदर्शने प्रतिषिद्धे तेषां स्नानादि न स्यात् । यदि परं तत्रेष्टापत्तिः क्रियते तथा सति-

सूर्यग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा ।
तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचित् ॥

इति निषेधोऽनुपपन्नः स्यात् । रात्रौ सूर्यग्रहस्य दिवा चन्द्रग्रहणस्य च दर्शनाभावेन स्नानादेरप्राप्तत्वात् । किंच यदि दृष्टं ग्रहणं स्नानादेर्निमित्तं तथा सत्युद्देश्यस्य ग्रहणस्य विशेषणं दर्शनं न विवक्षितं स्यात् । 'तस्योभयं हविरार्तिमार्छेत्' इत्यत्रेव हविष उभयत्वम् । अतः केवलं ग्रहणमेव निमित्तमिति वक्तव्यम्, तच्च ज्ञातमेव, सर्वनिमित्तानां ज्ञातानामेव नैमित्तिकप्रयोजकत्वमिति विज्ञानेश्वरादिभिस्तत्र तत्र निरूपितत्वात् । तच्च ज्ञानं शास्त्रीयमेव न लौकिकम् । न चैवं द्वीपान्तरे जातं द्वीपान्तरेऽपि प्रयोजकं स्यादिति वाच्यम् । द्वीपान्तरे जातस्य द्वीपान्तरे रात्रिदिनजातत्वेनाप्रयोजकत्वात् । क्वचिद्देशे दृष्टं देशान्तरे च मेघच्छन्नं तु भवत्येव प्रयोजकम् । न च 'राहुदर्शने' इत्यनेन चाक्षुषमेव दर्शनं ग्राह्यमिति वाच्यम् । 'अष्टमी रोहिणीयुक्ता निश्यर्धे दृश्यते यदि' इत्यादिषु शास्त्रदृष्टेऽपि दृशिप्रयोगदर्शनात् । तेन प्रत्यक्षदर्शनमेव स्नाननिमित्तमिति केषांचित्प्रलापः शास्त्रन्यायविरुद्ध उपेक्षणीयः । ग्रस्तास्तविषये मनुः—

चन्द्रसूर्यग्रहे नाऽद्याद्द्यात्स्नात्वा विमुक्तयोः ।
अमुक्तयोरस्तगयोर्दृष्ट्वा स्नानं परेऽहनि ॥

भृगुरपि—

ग्रस्तावेवास्तमानं तु रवीन्दू प्राप्नुतो यदि ।
तदा परेद्युरुदये स्नात्वाऽभ्यवहरेन्नरः ॥ इति ।

वेधमाह व्यासः—

नाद्यात्सूर्यग्रहात्पूर्वमह्नि सायं शशिग्रहात् ।
ग्रहकाले च नाश्नीयात्स्नात्वाऽश्नीयाद्विमुक्तयोः ॥
मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा ।

विशेषमाह वृद्धवसिष्ठः—

ग्रहणं तु भवेदिन्दोः प्रथमादधि यामतः ।
भुञ्जीतावर्तनात्पूर्वं पश्चिमे प्रथमादधः ॥

रवेस्त्वावर्तनादूर्ध्वमर्वागेव निशीथतः।
चतुर्थे प्रहरे चेत्स्याच्चतुर्थप्रहरादधः॥

रात्रौ प्रथमयामोत्तरं ग्रहणं चेन्मध्याह्नात्पूर्वं भुञ्जीत। रात्र्यन्तयामे चेद्रात्रिप्रथमयामात्पूर्वं भुञ्जीत। दिनतृतीयप्रहरे चेद्रविग्रहस्तदा पूर्वदिनस्यार्द्धरात्रात्प्राग्भुञ्जीत। अह्नश्चतुर्थप्रहरे चेद्रविग्रहणं तदा रात्रेश्चतुर्थप्रहरादधो भुञ्जीत। इदं च न रात्रिभोजनपरं किन्तु सूर्यग्रहे पूर्वं यामचतुष्टयं त्याज्यम्, चन्द्रग्रहे यामत्रयमित्येवंपरमितिमाधवः। तथा च वृद्धगौतमः—

सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम्।
चन्द्रग्रहे तु यामांस्त्रीन्बालवृद्धातुरैर्विना॥

बालादिविषये मात्स्ये—

अपराह्णे न मध्याह्ने मध्याह्ने न तु सङ्गवे।
भुञ्जीत सङ्गवे चेत्स्यान्न पूर्वं भुञ्जिमाचरेत्॥

शशिग्रहे यामत्रयापवादमाह वृद्धवसिष्ठः—

ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत्॥ इति।

वेधान्तरं हेमाद्रौ—

त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम्।
माङ्गल्येषु च सर्वेषु ग्रहणे चन्द्रसूर्ययोः॥ इति।

अन्यत्रापि,

द्वादश्यादिस्तृतीयान्तो वेध इन्दुग्रहे स्मृतः।
एकादश्यादिकः सौरेश्चतुर्थ्यन्तः प्रकीर्तितः॥

इदं संपूर्णग्रहे। खण्डग्रहे तूभयोर्दिनत्रयम् 'त्र्यहं खण्डग्रहे तयोः' इति वचनात्। अत्र काम्योपवासे दक्षः—

अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः।
अहोरात्रोषितः स्नात्वा सर्वपापैः प्रमुच्यते॥ इति।

पुत्रवद्गृहस्थस्य तु न भवति।

सङ्क्रात्यामुपवासं च कृष्णैकादशिवासरे।
चन्द्रसूर्यग्रहे चैव न कुर्यात्पुत्रवान्गृही॥ इति।

अत्र हेमाद्रिः। 'यदा शशिनो ग्रस्तोदयः सूर्यस्य ग्रस्तास्तो वा तदा पुत्रवद्गृहिणा उपवासो न कर्तव्यः।'

सायाह्ने ग्रहणं चेत्स्यादपराह्णे न भोजनम् ।
अपराह्णे न मध्याह्ने मध्याह्ने न तु सङ्गवे ॥

इति मार्कण्डेयवाक्यस्यैतत्परत्वादित्याह । माधवस्तु, तस्याप्यभोजनमित्याह । युक्तं चैतत् । 'तत्प्रयुक्तोपवासस्य निषेधोऽयमुदाहृतः' इति वाक्यशेषेण विहितकाम्योपवासस्यैव निषेधो नानुषङ्गप्राप्तस्य 'नानुषङ्गगतो ग्राह्यो यतो नित्यमुपोषणम्' इति वाक्यात् । ननु तत्प्रयुक्तत्वं न तदुद्देशेन विहितत्वम्, किंतु तद्धेतुकत्वमात्रम् । तद्धेतुकत्वं चानुषङ्गप्राप्तेऽप्युपवासेऽस्तीति चेदुच्यते । इह व्रतरूपोपवासस्यैव प्रतिषेधो नानुषङ्गप्राप्तस्य । तत्रैवोपवासशब्दस्य शक्तत्वात् । अन्यथा 'उपवासव्रतं चरेत्' इत्यादिषु व्रतशब्दसाहचर्यात्सङ्कल्पसिद्धावपि केवलोपवासविधिषु सङ्कल्पासिद्धेः । भोजनद्वयनिवृत्तावुपवासशब्दस्तु लाक्षणिकः । गौणमुख्ययोर्मुख्यस्यैव ग्रहणौचित्यात् ।

## ग्रहणभोजने प्रायश्चित्तम् ।

ग्रहणभोजने प्रायश्चित्तमुक्तं कात्यायनेन—

चन्द्रसूर्यग्रहे भुक्त्वा प्राजापत्येन शुद्ध्यति ।
तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुद्ध्यति ॥ इति ।

तस्मिन्दिने पूर्वोक्तिप्रतिपादितयामात्मकवेधमध्य इति ।

इति ग्रहणनिर्णयः ।

---

## अथ सङ्क्रान्तिनिर्णयः ।

नागरखण्डे—

रवेः सङ्क्रमणं राशौ सङ्क्रान्तिरिति कथ्यते ।

वसिष्ठः—अयने द्वे विषुवे द्वे च चतस्रः षडशीतयः ।
चतस्रो विष्णुपद्यश्च सङ्क्रान्त्यो द्वादश स्मृताः ॥
झषकर्कटसङ्क्रान्ती द्वे तूदग्दक्षिणायने ।
विषुवती तुलामेषौ तयोर्मध्ये ततोऽपराः ॥
कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः ।
षडशीतिमुखाः प्रोक्ताः षडशीतिगुणाः फलैः ॥
वृषवृश्चिककुम्भेषु सिंहे चैव यदा रविः ।
एतद्विष्णुपदं नाम विषुवादधिकं फलम् ॥ इति ।

वारर्क्षविशेषतः पुनरासां सप्तधात्वमुक्तं देवीपुराणे—

मन्दा मन्दाकिनी ध्वाङ्क्षी घोरा चैव महोदरी ।
राक्षसी मिश्रिता प्रोक्ता सङ्क्रान्तिः सप्तधा नृप ॥
सूर्ये घोरा विधौ ध्वाङ्क्षी भौमवारे महोदरी ।
बुधे मन्दाकिनी नाम मन्दा सुरपुरोहिते ॥
मिश्रिता शुक्रवारे स्याद्राक्षसी तु शनैश्चरे ।

तथा—मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा ।
क्षिप्रे ध्वाङ्क्षी विजानीयादुग्रे घोरा प्रकीर्तिता ॥
चरैर्महोदरी ज्ञेया क्रूरैर्ऋक्षैश्च राक्षसी ।
मिश्रिता चैव निर्दिष्टा मिश्रितर्क्षैश्च सङ्क्रमे ॥ इति ।

ध्रुवाणि, रोहिण्युत्तरात्रयम् । मृदूनि, रेवतीचित्रानुराधामृगाः । क्षिप्राणि, अश्विनीहस्तपुष्याः । उग्राणि, पूर्वात्रयं भरणी मघा च । चराणि, धनिष्ठापुनर्वसुश्रवणस्वातीशततारकाः । क्रूराणि, ज्येष्ठार्द्राश्लेषामूलानि । मिश्रिते, विशाखा कृत्तिका । आसु च पुण्यतमः कालस्तत्रैवोक्तः—

त्रि चतुः पञ्च सप्ताष्ट नव द्वादश एव च ।
क्रमेण घटिका ह्येतास्तत्पुण्यं पारमार्थिकम् ॥ इति । (?)

वसिष्ठः—सङ्क्रान्तिसमयः सूक्ष्मो दुर्ज्ञेयः पिशितेक्षणैः ।
तद्योगाच्चाप्यधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रिताः ॥ इति ।

'अधस्त्रिंशदूर्ध्वं च त्रिंशत्' इति केचित् । वस्तुतस्तु 'अधः पञ्चदशोर्ध्वं च पञ्चदश' इति । एवं त्रिंशदिति ज्ञेयम् ।

तथा च देवीपुराणे—

अतीतानागतो भोगो नाड्यः पञ्चदश स्मृताः ॥ इति ।

सङ्क्रान्तौ विहितप्रतिषिद्धस्नानदानाध्ययनादेः पालनं भोगः ।

जाबालः—

सङ्क्रान्तौ पुण्यकालस्तु षोडशोभयतः कलाः ॥ इति ।

कलाः नाड्यः । एषां वसिष्ठादिवाक्यानामविशेषात्सर्वसङ्क्रान्तिपरत्वम् । अत्र चाल्पकालोक्तिः पुण्यातिशयोक्त्यर्था न पुनर्नियमार्था ।

अत एव शातातपः—

या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः ॥ इति ।

वसिष्ठः—मध्ये तु विषुवे पुण्यं प्राग्विष्णौ दक्षिणायने ।
षडशीति मुखेऽतीते अतीते चोत्तरायणे ॥ इति ।

'अत्र चशब्दादुत्तरायणेऽनागतेऽपि पुण्यम्' इति हेमाद्रिः। तत्र प्रमाणं विमृश्यम्।

ब्रह्मवैवर्ते—

त्रिंशत्कर्कटके नाड्यो मकरे तु दशाधिकाः॥ इति।

स्कान्दे—कुलीरे विंशदेवाद्या मकरे त्रिंशदुत्तमाः॥ इति।

कुलीरः कर्कटः। वसिष्ठः—

त्रिंशत्कर्कटके नाड्यो मकरे विंशतिः स्मृताः॥ इति।

गौतमः—अर्वाक् षोडश नाड्यस्तु परतः षोडशैव तु।

ता एव दक्षिणे पूर्वा अतीते चोत्तरायणे॥ इति।

अत्रापि न्यूनाधिकघटिकानां पूर्ववद् व्यवस्था विज्ञेया।

वसिष्ठः—

वर्तमाने तुलामेषे नाड्यस्तूभयतो दश॥ इति।

बौधायनोऽपि—

पुण्यं विषुवति प्रोक्तं दश पूर्वा दशापराः॥ इति।

वसिष्ठः—षडशीत्यां व्यतीतायां षष्टिरुक्ता तु नाडिकाः॥ इति।

'षडशीत्याख्यानां चतसृणां सङ्क्रान्तीनामेकैकस्याः पञ्चदश पञ्चदशेत्येवं षष्टिनाड्यः पुण्याः' इति हेमाद्रिः।

तथा च स्कान्दे—

षडशीतिमुखेऽतीते नाड्यः पञ्चदश स्मृताः॥ इति।

केचित्तु 'अष्टिरुक्तास्तु नाडिकाः' इति पाठं कल्पयन्ति। अष्टिः षोडश तच्छन्दसः षोडशाक्षरपादत्वादिति। तत्रैव—

युगान्तेषु तु षड्विप्र षडशीतिमुखे तथा॥ इति।

तथा षडित्यर्थः। वसिष्ठः—

पुण्यकालो विष्णुपद्याः प्राक् पश्चादपि षोडश॥ इति।

ब्रह्मवैवर्ते—

विषुवे षण्मुहूर्तं स्यात्षडशीतिमुखे त्रयम्।

तथा विष्णुपदे त्रीणि पुण्यानि कवयो विदुः॥ इति।

एवमुक्तन्यूनाधिकपक्षाः पुण्यपुण्यतरपुण्यतमत्वेन व्यवस्थाप्याः।

या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः॥

इति पूर्वोदाहृतशातातपवाक्यात्। पूर्वभोगिन्यां सूर्योदयोत्तरमुत्तर-

भोगिन्यां तदस्तात्पूर्वमव्यवधानेन सङ्क्रान्तौ जायमानायां दिवावच्छेदेन स्नानादिपर्याप्तकालो न लभ्यते तदा पूर्वभागावच्छिन्नस्योत्तरभागावच्छिन्नस्य वा संपूर्णदिवसस्यैव पुण्यत्वं न तु प्रशस्तकालवत्योः पूर्वोत्तररात्र्योः ।

अह्नि सङ्क्रमणे कृत्स्नमहः पुण्यं प्रकीर्तितम् ।
रात्रौ सङ्क्रमणे भानोर्दिनार्द्धं स्नानदानयोः ॥

इति वृद्धवसिष्ठवाक्यात् । अत्र पूर्वार्द्धे कृत्स्नस्याह्नः पुण्यत्वविधानादेव रात्रौ स्नानादि प्रतिषिध्यते । अन्यथा सर्वसङ्क्रान्तिसाधारणपूर्वोत्तरपुण्यत्वविधानादेव तत्सिद्धेरेतस्य वैयर्थ्यापत्तेः । पूर्वभागप्रशस्तस्योत्तरस्य च तस्य विषयो मध्याह्नादिसङ्क्रम एव । तत्राहन्येव प्रशस्तयोस्तयोः संभवादिति । गोभिलः—

रात्रौ सङ्क्रमणे भानोर्दिवा कुर्यात्तु तत्क्रियाम् ।
पूर्वस्मात्परतो वापि प्रत्यासत्तेश्च तत्फलम् ॥
अर्द्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया ।
ऊर्ध्वं सङ्क्रमणे चोर्ध्वमुदयात्प्रहरद्वयम् ॥
पूर्णे चेदर्द्धरात्रे तु यदा सङ्क्रमते रविः ।
प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ ॥ इति ।

मध्याह्न आवर्तनम् । तत्रोदयश्च पूर्वोत्तरदिनयोः सन्निधानलाभात् । दिनद्वयमप्यर्द्धमेव ज्ञेयम् ।

रात्रौ सङ्क्रमणे भानोर्दिनार्द्धं स्नानदानयोः ।

इति वसिष्ठेन सामान्यतो रात्रिसङ्क्रमे दिनार्द्धपुण्यत्वस्यैवोक्तत्वात् । गार्ग्यः—

काले न्यूनेऽर्द्धरात्रे तु यदा सङ्क्रमणं भवेत् ।
तदहः पुण्यमिच्छन्ति गार्ग्यगालवगौतमाः ॥

देवीपुराणे—

संपूर्णे ह्यर्द्धरात्रे तु उदयेऽस्तमयेऽपि च ।
मानार्द्धं भास्करं पुण्यमपूर्णे शर्वरीदले ॥

संपूर्णे अर्द्धरात्रे निशीथ इत्यर्थः । अपूर्णे शर्वरीदले सायंप्रातःसन्ध्योत्तरपूर्वभागयोरित्यर्थः । योगेन लक्षणया वा भास्करो दिवसः । निशीथे सायंप्रातःसन्ध्ययोस्तदुत्तरपूर्वभागयोश्च सङ्क्रमणे दिनार्द्धं पुण्यमित्यर्थः । कस्य दिनस्यार्द्धमित्यपेक्षायामुक्तं तत्रैव—

अर्द्धरात्रे त्वसंपूर्णे दिवा पुण्यमनागतम् ।
संपूर्ण उभयोर्ज्ञेयमतिरेके परेऽहनि ॥

अत्राऽसंपूर्णार्द्धरात्रशब्देन सायंसन्ध्या निशीथपूर्वभागश्च गृह्यते । तत्र सङ्क्रमणेऽनागतमतीतमित्यर्थः । तद्दिवामानार्द्धं पुण्यं तस्योत्तरं संनिधानात् । संपूर्णेऽर्द्धरात्रे निशीथ इत्यर्थः । तत्र सङ्क्रमणे उभयोः पूर्वोत्तरदिनयोरुत्तरपूर्वमानार्द्धे पुण्ये । अतिरेकेऽर्द्धरात्रात्परतः प्रातः-सन्ध्यायां वा सङ्क्रमणे परेऽहनि आद्यं मानार्द्धं पुण्यमित्यर्थः । संपूर्ण उभयोरित्यत्र व्यवस्थाप्युक्ता तत्रैव—

आदौ पुण्यं विजानीयाद्यद्यभिन्ना तिथिर्भवेत् ।
अर्द्धरात्रे व्यतीते तु विज्ञेयमपरेऽहनि ॥ इति ।

पूर्वदिनोत्तरार्द्धवर्तितिथ्याऽर्द्धरात्रिसङ्क्रमणकालीना तिथिर्यद्यभिन्ना स्यात्तदा तदित्यर्थसिद्धम् । व्यतीते त्वर्द्धरात्रे पूर्वदिने तिथ्यभेदेऽपि परेद्युरेवेति । यदा त्वर्द्धरात्रतिथिर्दिनद्वयार्द्धयोरपि स्यात्तदा पूर्वभोगि-नीषु पूर्वदिनोत्तरार्द्धमुत्तरभोगिनीषूत्तरदिनाद्यर्द्धमुभयभोगिनीष्वैच्छिको विकल्पः । एवमयनातिरिक्तसर्वरात्रिसङ्क्रमणे दिनार्द्धपुण्यत्वे स्थिते,

विष्णुपद्यां धनुर्मीननृयुकन्यासु वै यदा ।
पूर्वोत्तरगतं रात्रौ भानोः सङ्क्रमणं भवेत् ॥
पूर्वाह्णे पञ्चनाड्यश्च पुण्याः प्रोक्ता मनीषिभिः ।
अपराह्णे च पञ्चैव श्रौते स्मार्ते च कर्मणि ॥

इति यद्गाम्यं तत्पुण्यातिशयदर्शनार्थम् । केचित्तु—

आसन्नसंक्रमं पुण्यं दिनार्द्धं स्नानदानयोः ।
रात्रौ सङ्क्रमणे भानोर्विषुवत्ययने दिने ॥

इति वैशेषिकयज्ञपार्श्ववचनात् सामान्यविषयं दिनार्द्धवचनं विषुव-द्विषयमित्याहुः । विषुवति सङ्क्रमे रात्रौ सति दिनार्द्धमयने तु दिनमिति वाक्यार्थः । वस्तुतस्तु यद्यत्र विषुवति दिनार्द्धपुण्यत्वविधिः स्यात्तदा स्या-त्तथा । नत्वेवं किंतु विषुवति सामान्यवाक्यप्राप्तमर्थमनूद्य अयने दिनार्द्धा-पवादेन संपूर्णदिनस्य पुण्यत्वं विधीयते । यद्वा, आद्यपादत्रयेण सर्वसङ्क्रा-न्तिषु सामान्यवाक्यप्राप्तमर्थमनूद्यायने ( विषुवति च ? ) दिनार्द्धापवा-दत्वेन संपूर्णदिनस्य पुण्यत्वं विधीयते । यद्वा, आद्यपादत्रयेण सर्वसङ्क्रा-न्तिषु सामान्यवाक्यतो दिनार्द्धपुण्यत्वं विधायान्त्यपादेन विषुवत्यय-

नयोः संपूर्णदिनपुण्यत्वं विधीयत इति। यद्वा, भानोरयने रात्रौ जाते सति दिने दिनमध्ये दिनार्धं पुण्यमित्येवान्वेति नत्वासन्नसङ्क्रममिति।

अत एव भविष्योत्तरे—

मिथुनात्कर्कसङ्क्रान्तिर्यदि स्यादंशुमालिनः।
प्रभाते वा निशीथे वा कुर्यादहनि पूर्वतः॥
कार्मुकं तु परित्यज्य झषं संक्रमते रविः।
प्रदोषे वार्द्धरात्रे वा स्नानं दानं परेऽहनि॥ इति।

बौधायनोऽपि—

अस्तंगते सवितरि मकरं याति भास्करः।
प्रदोषे वार्द्धरात्रे वा स्नानं दानं परेऽहनि॥
अर्द्धरात्रे तदूर्ध्वं वा सङ्क्रान्तौ दक्षिणायने।
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः॥ इति।

अहं तु ब्रुवे, अदिन इति छेदः। अयने रात्रौ जाते सति अदिने रात्रावेव पुण्यमिति तदर्थः। तच्च नागरतैलङ्गादि परं, तेषां तथाचारात्। अत एव माधवः—

कर्कटे मकरे रात्रौ तथाचारादनुष्ठितिः॥ इति।

माधवस्तु 'दिने' इति दिवेति वा पाठमभिप्रेत्य विषुवति रात्रौ जाते दिनार्द्धं पुण्यमयने तु रात्रौ संक्रमणे सति दिवा दिनार्द्धं पुण्यं कर्कटे पूर्वार्द्धं मकरे तूत्तरार्द्धमिति व्याचख्यौ।

ननु बौधायनीये अस्तंगते इत्यनेन प्रदोषार्द्धरात्रयोर्लब्धत्वात्पृथग्ग्रहणमनर्थकमिति चेन्न। अस्तंगतइत्युक्ते दिनान्तरस्य पुण्यतोक्तिः प्रत्यासत्तेरपररात्रिविषयिण्येव स्यात्तद्वारणाय प्रदोषार्द्धरात्रग्रहणस्य सार्थक्यात्।

धनुर्मीनावतिक्रम्य कन्यां च मिथुनं यदा।
पूर्वापरविभागेन रात्रौ सङ्क्रमते रविः॥
दिनान्ते पञ्च नाड्यस्तु तदा पुण्यतमाः स्मृताः।
उदये च तथा पञ्च दैवे पित्र्ये च कर्मणि॥ इति।

'रात्रौ धनुरतिक्रम्य पूर्वभागे सङ्क्रमे उदये पञ्च नाड्यः। तथा रात्रौ मिथुनमतिक्रम्यापरभागे संक्रमे दिनान्ते पञ्च नाड्यः' इति सामान्यतो बौधायनवाक्येन पुण्यप्राप्तौ पुण्यतमत्वबोधकम्। तेन मकरे सूर्यास्तादूर्ध्वं यदा कदाचिज्जाते उत्तरदिनपूर्वार्द्धं पुण्यम्। 'आद्याः

पञ्च घटिकाः पुण्यतमाः । कर्के चोदयात्पूर्वं यदा कदाचिज्जाते पूर्वदिन एवोत्तरार्धं पुण्यम् । आद्याः पञ्च घटिकाः पुण्यतमाः' इति बौधायनवाक्यकृतनिर्णयानुरोधेन स्कान्दं भङ्क्त्वा व्याचख्युस्तातचरणाः । केचित्तु, अत्रातिक्रमणरूपा सङ्क्रमणरूपा चेति द्वे क्रिये तत्र धनुरादीनामतिक्रमणक्रियायां कर्मत्वे एतद्वाक्यस्यायनविषुवपरतया बौधायनभविष्योत्तरवचोविरोधः स्यात् । स्याच्च प्रधानसङ्क्रमणक्रियाकर्माध्याहारः । अतो धनुरादीनां प्रधानसङ्क्रमणक्रियायामेव कर्मत्वम् । अतिक्रमणक्रियायां तु वृश्चिकादीनाम् । तेन तत्पदानामेवाध्याहारः । अतो वृश्चिककुम्भसिंहवृषातिक्रमेण धनुरादिषडशीतिसङ्क्रमणपरमेतद्वाक्यं नायनविषुवपरं तेन न कोऽपि विरोध इत्याहुः । वस्तुतस्तु बौधायनेनायनयोर्विप्रकृष्टदिने पुण्यत्वोक्तावपि स्कान्देन सन्निकृष्टदिनेऽपि पुण्यता बोध्यते तेन उभयदिनेऽपि समुचिते पुण्यकाले न कोऽपि विरोधः । तेन स्कान्दस्य स्वारसिक्येव व्याख्या युक्तेति मम प्रतिभाति ।

इति सङ्क्रान्तिनिर्णयः ।

---

## अथ सङ्क्रान्तिकृत्यम् ।

नागरखण्डे—

रवेः संक्रमणं राशौ सङ्क्रान्तिरिति कथ्यते ।
स्नानदानतपःश्राद्धहोमादिषु महाफला ॥

आपस्तम्बः—

अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ।
अहोरात्रोषितः स्नात्वा सर्वपापैः प्रमुच्यते ॥

एतच्च पुत्रवद्गृहस्थातिरिक्तविषयम् ।

आदित्येऽहनि सङ्क्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।
उपवासो न कर्तव्यो गृहिणा पुत्रिणा तथा ॥

इति तस्य तत्र उपवासनिषेधात् । यस्तु रवेर्ग्रस्तास्तादावहोरात्रभोजननिषेधः स पुत्रवन्तमपि गोचरयति । एतद्वचनाप्रवृत्तेः । इदं हि वचनं, 'नियमो व्रतमस्त्री तच्चोपवासादिपुण्यकम्' इति कोशादुपवासस्य व्रतरूपत्वावगमाद्विहित एव व्रतात्मक उपवासे प्रवर्तते न तु निषेधप्रवृत्तिमात्रेणाहोरात्रे भोजनाभावमात्रे, तस्य व्रतरूपत्वाभावादिति द्वैतनिर्णये तातचरणाः ।

शातातपः—रविसङ्क्रमणे प्राप्ते न स्नायाद्यस्तु मानवः ।
सप्तजन्मातिरोगी स्यान्निर्धनश्चैव जायते ॥
सङ्क्रान्तौ यानि दत्तानि हव्यकव्यानि दातृभिः ।
तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि ॥ इति ।

वसिष्ठः—अयनेषु च यद्दत्तं षडशीतिमुखेषु च ।
चन्द्रसूर्योपरागे च दत्तं भवति चाक्षयम् ॥
अयने कोटिपुण्यं च लक्षं विष्णुपदीफलम् ।
षडशीतिसहस्रं तु षडशीत्यां स्मृतं बुधैः ॥
शतमिन्दुक्षये दानं सहस्रं तु दिनक्षये ।
विषुवे शतसाहस्रं व्यतीपाते त्वनन्तकम् ॥

वृद्धवसिष्ठः—

अयने विषुवे चैव त्रिरात्रोपोषितः पुमान् ।
स्नात्वा योऽर्चयते भानुं सर्वकामफलं लभेत् ॥

ब्रह्मपुराणे—

शुक्लपक्षे तु सप्तम्यां यदा सङ्क्रमते रविः ।
महाजया तदा चैव सप्तमी भास्करप्रिया ॥
स्नानं दानं तपो होमः पितृदेवादिपूजनम् ।
सर्वं कोटिगुणं पुण्यं तपनेन महौजसा ॥
तस्यां यो मानवो भक्त्या घृतेन स्नापयेद्दिनम् ।
सोऽश्वमेधफलं प्राप्य ततः सूर्यपुरं व्रजेत् ॥
पयसा स्नापयेद्यस्तु भास्करं भक्तिमान्नरः ।
विमुक्तः सर्वपापेभ्यो याति सूर्यसलोकताम् ॥
मयैषा कथिता पुण्या सप्तमी त्रिपुरान्तक ।
यामुपोष्य नरो भक्त्या अचलान्मंगलान्लभेत् ॥

सङ्क्रान्तिविशेषेण देयविशेषमाह विश्वामित्रः ।

मेषसङ्क्रमणे भानोर्मेषदानं महाफलम् ।
वृषसङ्क्रमणे दानं गवां प्रोक्तं तथैव च ॥
वस्त्रान्नपानयानानि मिथुने विहितानि तु ।
घृतधेनुप्रदानं तु कर्कटे परिशस्यते ॥
ससुवर्णं पात्रदानं सिंहे च विहितं सदा ।
कन्याप्रवेशे वस्त्राणां सुरभीणां तथैव च ॥

तुलाप्रवेशे धान्यानां बीजानामेव चोत्तमम् ।
कीटप्रवेशे वस्त्राणां वेश्मनां दानमेव च ॥

कीटो वृश्चिकः ।

धनुःप्रवेशे वस्त्राणां यानानां च महाफलम् ।
झषप्रवेशे दारूणां दानमग्नेस्तथैव च ॥
कुम्भप्रवेशे दानं तु गवामम्बुतृणस्य च ।
मीनप्रवेशे ह्यम्लानमाल्यानां दानमुत्तमम् ॥
दानान्यथैतानि मया द्विजेन्द्र
प्रोक्तानि काले तु नरः प्रदत्वा ।
प्राप्नोति कामं मनसस्त्वभीष्टं
तस्मात्प्रशंसन्ति हि कालदानम् ॥

स्कान्दे—धेनुं तिलमयीं राजन् दद्याद्यश्चोत्तरायणे ।
सर्वान्कामानवाप्नोति विन्दते परमं सुखम् ॥

विष्णुधर्मोत्तरे—

उत्तरे त्वयने विप्रा वस्त्रदानं महाफलम् ।
तिलपूर्वमनड्वाहं दत्वा रोगैः प्रमुच्यते ॥

कालिकापुराणे—

कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् ।
एतानि पञ्च रत्नानि न्यसेद्देवस्य मूर्द्धनि ॥
रत्नानां चाप्यभावे तु कर्षं कर्षार्द्धमेव वा ।
सुवर्णं योजयित्वा तु तस्मिन्नेवोत्तरायणे ॥
विधिवच्च तथाभ्यर्च्य गव्येनाज्येन भूरिणा ।
प्रक्षाल्य मर्दयित्वा तु प्रदद्याद्घृतकम्बलम् ॥
दत्त्वा चोपस्करं भूयो ब्राह्मणान्यतिभिः सह ।
संयोज्य दक्षयित्वा तु कल्पयेदनिवारितम् ॥

कुलिशं हीरकम् । दक्षयित्वा दक्षिणया संपूज्य । कल्पयेद्भोजनमिति शेषः ।

उपोष्य सर्वमेवैतत्कुर्याद्भक्तिपुरःसरः ।
पञ्चगव्यं तिलैर्युक्तं पीत्वा वै पारयेत्स्वयम् ॥
तिलैः स्नानं प्रकुर्वीत तैरेवोद्वर्तनं बुधः ।
देवतानां पितॄणां च उभाभ्यां तर्पणं तथा ॥

पारयेत्पारणं कुर्यात् । तिलस्नानपारणयोर्नात्र क्रमो विवक्षितः। उभाभ्यामिति तादर्थ्ये चतुर्थी ।

होमं तैश्च प्रकुर्वीत सर्वदैवोत्तरायणे ।
तान्वै देवाय विप्रेभ्यो हाटकेन समं ददेत् ॥
यत्नादेव करोत्येवं चित्तं शम्भौ निवेश्य यः ।
उत्तरायणमासाद्य नरः कस्मात्स शोचते ॥

इति सङ्क्रान्तिकृत्यम् ।

---

## अथ पक्षः ।

स च द्विविधः शुक्लः कृष्णश्च । चन्द्रकलावृद्ध्युपलक्षितः पक्षः शुक्लः । चन्द्रकलाक्षयोपलक्षितः पक्षः कृष्णः । स तु दैवे शुक्लः । पित्र्ये कृष्णः । तदाह माधवः—

दैवे मुख्यः शुक्लपक्षः कृष्णः पित्र्ये विशिष्यते । इति ।

श्रुतिः—तौ पूर्वपक्षश्चापरपक्षश्च भवेताम् । पूर्वपक्षं देवा अन्वसृज्यत । अपरपक्षं त्वसुरा इति ।

इति पक्षनिर्णयः ।

---

## अथ मासः ।

स च मस्यते परिमीयते चन्द्रवृद्धिक्षयादिनेति व्युत्पन्नेन मासशब्देन रूढ्याऽभिधेयः। स च त्रेधा। चान्द्रः सावनः सौरश्चेति। तदुक्तं माधवीये ब्रह्मसिद्धान्ते—

चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः ।
एकराशौ रविर्यावत्कालं मासः स भास्करः ॥ इति ।

'नाक्षत्रमपि मासं केचिदिच्छन्ति' इति माधवीये मदनरत्ने च । एतेषां व्यवस्थामाह ज्योतिर्गर्गः—

सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः ।
आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते ॥

तत्र ब्राह्मणस्य चान्द्र एव मुख्यः । तदुक्तं ब्रह्मसिद्धान्ते—

अमावास्यापरिच्छिन्नो मासः स्याद्ब्राह्मणस्य तु ।
संक्रान्तिपौर्णमासीभ्यां तथैव नृपवैश्ययोः ॥

पितामहोऽपि—

दैवे कर्मणि पित्र्ये च मासश्चान्द्रमसः स्मृतः ।

यतिधर्मप्रकरणे तु 'ऋतुसन्धिषु वापयेत्' इति वचनात् पूर्णिमायां वपनं कुर्वन्ति । तस्माद्दर्शान्तत्वपूर्णिमान्तत्वयोः समो विकल्पो दृश्यते । अनुष्ठाने तु तत्र तत्र वचनविशेषाच्छिष्टाचाराच्च व्यवस्था द्रष्टव्येति माधवः । [अत्र कर्मव्यवस्थावचः शूद्रादीन्प्रति सावकाशम् । वर्णव्यवस्थापकमपि विवाहाब्दिकादिभिन्ने कर्मणि । तेन बाध्यबाधकभावे विनिगमनाविरहाद्विवाहे विप्रस्याऽऽब्दिकादिश्राद्धे च क्षत्रियस्य सौरचान्द्रयोर्विकल्प एव । न चैवं द्विविधवाक्यानर्थक्यं तदभावेऽपि विकल्पसिद्धेरिति वाच्यम् । वचनद्वयाभावे चान्द्रस्य मुख्यत्वात्सौरादीनां च गौणत्वात् 'मुख्यामुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति न्यायेन चान्द्र एव स्यान्न विकल्पः । तर्हि सौरस्यैव विधिस्तद्बाधाय साधकोऽस्तु न चान्द्रस्येति चेन्न, मुख्यस्यापि चान्द्रस्य वचनेन बाधे 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्र श्रुत्या मुख्येन्द्रबाधेन गौणगार्हपत्यवत्सौरस्यैव नियमः स्यात् । अतः उभयसार्थक्याय विकल्प एव युक्त इति केचित् । तन्न । व्यवस्थासम्भवे विकल्पायोगात् । सा चैवम् । विप्रादीनां साक्षान्मासविशेषे विध्ययोगात्तदधिकारिकं कर्म लक्षणीयम् । कर्मतो व्यवस्थाविधौ तु श्रुत्युपात्त एव विवाहादौ सौरविधिः । तेन विवाहादौ सौर एव शीघ्रं प्रवर्तते, न चान्द्रः । यथा । 'यदाऽऽहवनीये जुहोति' इत्यत्र सामान्यवाचिजुहोतिना लक्षणया पदहोमव्यक्तेरुपस्थितिर्मन्थरा 'पदे जुहोति' इत्यत्र तु द्राक् । अतः पदेनाऽऽहवनीयस्य बाधस्तस्मान्न विकल्पः । कर्मव्यवस्थैव तु बलीयसी विवाहादौ सौर एवेति] दर्शान्तानां पूर्णिमान्तानां च मासविशेषाणां चैत्रादिसंज्ञा नक्षत्रप्रयुक्ताः 'सास्मिन्पौर्णमासीतिसंज्ञायाम्' इत्यनुशासनात् । तेन यस्मिन्मासे पौर्णिमा चित्रायुता स चैत्रः । एवं वैशाखादयोऽपि । [अतः सम्भवत्पौर्णमासीयोगेष्वमान्तेऽव्वेव चैत्रादिपदं मुख्यम् । पौर्णिमान्तसौरयोस्तु गौणम् । एवं मासपदमपि । 'इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्तितः । अग्नीषोमौ स्थितौ मध्ये समाप्तौ पितृसोमकौ' इति शक्तिग्राहकवाक्यात् ।]

इति मासनिर्णयः ।

---

१ कुण्डलितौ पाठौ लिखितपुस्तकयोरेव दृश्यते ।

## अथ चैत्रकृत्यम् ।

भविष्योत्तरे—

चैत्रे त्रिरात्रं नक्ताशी नद्यां स्नात्वा ददाति यः ।
राजा पञ्च पयस्विन्यो दरिद्राय कुटुम्बिने ॥
न जायते पुनरसौ जीवलोके कदाचन ।

तत्रैव—चैत्रे मासे तु संप्राप्ते यः कुर्यान्नक्तभोजनम् ।
पिष्टं तु पयसा युक्तं भुञ्जानः शालिसम्भवम् ॥
पूजयेत्पार्वतीं शक्त्या कृत्वा वै चन्दनस्य च ।
गन्धपुष्पोपहारैश्च विंशार्द्धभुजसंमिताम् ॥
देवीं ज्वालामुखीनाम्नीं कुङ्कुमागरुचन्दनैः ।
धूपं सागरुकर्पूरं भगवत्यै निवेदयेत् ॥

वामनपुराणे—

चैत्रे मासि विचित्राणि शयनान्यासनानि च ।
विष्णोः प्रीत्यर्थमेतानि देयानि ब्राह्मणेष्वपि ॥

मात्स्ये—वर्जयित्वा मधौ यस्तु दधिक्षीरघृताक्षतम् ।
दद्याद्वस्त्राणि सूक्ष्माणि रसवस्त्रयुतानि च ।
संपूज्य विप्रमिथुनं गौरी मे प्रीयतामिति ॥

इति चैत्रकृत्यम् ।

---

## अथ वैशाखकृत्यम् ।

विष्णुस्मृतौ—

तुलामकरमेषेषु प्रातःस्नायी भवेन्नरः ।
हविष्यं ब्रह्मचर्यं च महापातकनाशनम् ॥ इति ।

---

## वैशाखस्नानम् ।

पद्मपुराणे—

वैशाखे विधिना स्नानं देवनद्यादिके बहिः ।
हविष्यं ब्रह्मचर्यं च भूशय्या नियमस्थितिः ॥
व्रतं दानं दमो देवि मधुसूदनपूजनम् ।
अपि जन्मसहस्रोत्थं पापं दहति दारुणम् ॥ इति ।

तथा— मधुमासस्य शुक्लायामेकादश्यामुपोषितः ।

पञ्चदश्यां च भो वीर मेषसंक्रमणे तु वा ॥
वैशाखस्नाननियमं ब्राह्मणानामनुज्ञया ।
मधुसूदनमभ्यर्च्य कुर्यात्सङ्कल्पपूर्वकम् ॥

मन्त्रस्तु—वैशाखं सकलं मासं मेषसंक्रमणं रवेः ।
प्रातः सनियमः स्नास्ये प्रीयतां मधुसूदनः ॥
मधुहन्तुः प्रसादेन ब्राह्मणानामनुग्रहात् ।
निर्विघ्नमस्तु मे पुण्यं वैशाखस्नानमन्वहम् ॥
माधवे मेषगे भानौ मुरारे मधुसूदन ।
प्रातःस्नानेन मे नाथ फलदो भव पापहन् ॥

इत्युच्चार्य विधिवत्स्नायात् । एवं स्नानाशक्तौ तत्रैव—
त्रयोदश्यां चतुर्दश्यां वैशाख्यां वा दिनत्रये ।
अपि सम्यग्विधानेन नारी वा पुरुषोऽपि वा ॥
प्रातः स्नातः सनियमः सर्वपापैः प्रमुच्यते ॥ इति ।

तथा— कण्डूय पृष्ठतो गां तु स्नात्वा पिप्पलतर्पणम् ।
कृत्वा गोविन्दमभ्यर्च्य न दुर्गतिमवाप्नुयात् ॥

पिप्पलतर्पणम् पिप्पलमूलसेचनम् । अर्चनेऽपि विशेषस्तत्रैव—
माधवं सकलं मासं लक्ष्मीं योऽर्चयते नरः ।
त्रिसन्ध्यं मधुहन्तारं नास्ति तस्य पुनर्भवः ॥ इति ।

भारते— निर्झरेदेकभक्तेन वैशाखे यो जितेन्द्रियः ।
प्रातःस्नायी नरः स्त्री वा ज्ञातीनां श्रेष्ठतां व्रजेत् ॥

वामनपुराणे—
वैशाखेऽप्यूषलवणं वर्जयित्वा च गोप्रदः ।
भूत्वा विष्णुपदे कल्पं स्थित्वा राजा भवेदिह ॥

नृसिंहप्रसादे पद्मपुराणे—
तीर्थे वाऽनुदिनं स्नानं तिलैर्यत्पितृतर्पणम् ।
दानं धर्मघटादीनां मधुसूदनपूजनम् ।
माधवे मासि कुर्वीत मधुसूदनतुष्टिदम् ॥

अपरार्के वामनपुराणे—
गन्धाश्च माल्यानि तथा वैशाखे सुरभीणि च ।
देयानि द्विजमुख्येभ्यो मधुसूदनतुष्टये ॥

उद्यापनं च तत्रैवोक्तम्—

मासमेकं बहिः स्नात्वा नद्यादौ विमले जले ।
एकादश्यां वा द्वादश्यां पौर्णमास्यामथापि वा ॥
उपोष्य नियतो भूत्वा कुर्यादुद्यापनं बुधः ।
मण्डपं कारयेदादौ कलशं तत्र विन्यसेत् ॥
निष्केण वा तदर्द्धेन तदर्द्धेनाथ वा पुनः ।
शक्त्या वा कारयेदेवं सौवर्णं लक्षणान्वितम् ॥
लक्ष्मीयुतं जगन्नाथं पूजयेदासने बुधः ।
भूषणैश्चन्दनैः पुष्पैर्दीपैर्नैवेद्यसञ्चयैः ॥
एवं संपूज्य विधिवद्रात्रौ जागरणं चरेत् ।
श्वोभूते कृतमैत्रोऽथ ग्रहवेद्यां ग्रहान्यजेत् ॥
होमं कुर्यात्प्रयत्नेन पायसेन विचक्षणः ।
तिलाज्येन यवैर्वापि सर्वैर्वापि स्वशक्तितः ॥
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ।
प्रतद्विष्णुरनेनैव इदं विष्णुरनेन वा ॥
व्रतसंपूर्तिसिध्यर्थमेकां धेनुं पयस्विनीम् ।
पादुकोपानहौ छत्रं गुरवे व्यजनं तथा ॥
शय्यां सोपस्करां दद्यादीपिकां दर्पणं तथा ।
ब्राह्मणान्भोजयेत्रिंशत्तेभ्यो दद्याच्च दक्षिणाम् ॥
कलशाञ्जलपूर्णांश्च तेभ्यो दद्याद्यवांस्तथा ।
एवं कृते माधवस्य उद्यापनविधौ शुभे ॥
फलमाप्नोति सकलं विष्णुसायुज्यमाप्नुयात् ।

वैशाखस्य मलत्वेऽपि तत्रैव स्नानादि समाप्यमितिहेमाद्रिमदनरत्नौ । तथा च काठकगृह्ये—

आरब्धं मलमासात्प्राग्यत्काम्यमसमापितम् ।
संप्राप्ते मलमासेऽपि तत्समाप्यमसंशयम् ॥ इति ।

इति वैशाखोद्यापनविधिः ।

---

## अथ ज्येष्ठकृत्यम् ।

भविष्योत्तरे—

पिष्टेन पङ्कजं कृत्वा ज्येष्ठे मासि सवेदकम् ।
पुष्पैः संपूज्य गन्धाढ्यैर्नानावस्त्रविभूषितैः ।
वर्षकोटियुगं साग्रं सूर्यलोके महीयते ॥

पङ्कजो ब्रह्मा। वामनपुराणे—

उदकुम्भांश्च धेनुं च तालवृन्तं स चन्दनम्।
त्रिविक्रमस्य प्रीत्यर्थं दातव्यं ज्येष्ठमासि च॥

इति ज्येष्ठकृत्यम्।

---

## अथ आषाढकृत्यम्।

वामनपुराणे—

उपानद्युगलं छत्रं लवणाऽऽमलकानि च।
आषाढे मानसप्रीत्यै दातव्यानीह भक्तितः॥

भारते— आषाढमेकभक्तेन स्थित्वा मासमतन्द्रितः।
बहुधान्यो बहुधनो बहुपुत्रश्च जायते॥

इति आषाढकृत्यम्।

---

## अथ चातुर्मास्यव्रतानि।

भविष्योत्तरे—

स्त्री वा नरो वा मद्भक्तो धर्मार्थं सुदृढव्रतः।
गृह्णीयान्नियमानेतान्दन्तधावनपूर्वकम्॥
तेषां फलानि वक्ष्यामि तत्कर्तॄणां पृथक् पृथक्।
कटुतैलपरित्यागाच्छत्रुनाशमवाप्नुयात्॥

तथा—योगाभ्यासी भवेद्यस्तु स ब्रह्मपदमाप्नुयात्।
कट्वम्लतिक्तमधुरक्षारकाषायसञ्चयम्॥
यो वर्जयेत्स वैरूप्यं दौर्गन्ध्यं नाप्नुयात्क्वचित्।
ताम्बूलवर्जनाद्भोगी रक्तकण्ठश्च जायते॥
मधुरस्वरो भवेद्राजन् पुरुषो गुडवर्जनात्।
तैलस्य वर्जनाद्राजन्सुन्दराङ्गः प्रजायते॥
घृतत्यागाच्च लावण्यं सर्वस्निग्धतनुर्भवेत्।
फलत्यागाच्च मतिमान्बहुपुत्रश्च जायते॥
शाकपत्राशनाद्भोगी अपक्वादोऽमलो भवेत्।
पादाभ्यङ्गपरित्यागाच्छिरोभ्यङ्गविवर्जनात्॥
दीप्तिमान्दीप्तकिरणो यक्षो द्रव्यपतिर्भवेत्।
दधिदुग्धतक्रनियमो गोभक्तो गोपतिर्भवेत्॥
इन्द्रातिथित्वमाप्नोति स्थालीपाकस्य वर्जनात्।

लभते सन्ततिं दीर्घां तैलपक्वविवर्जनात् ॥
भूमौ प्रस्तरशायी च वीरो मुनिवरो भवेत् ।
सदा मुनिः सदा योगी मधुमांसस्य वर्जनात् ॥

तथा—एकान्तरोपवासेन ब्रह्मलोके महीयते ।
मौनव्रती भवेद्यस्तु तस्याज्ञाऽस्खलिता भवेत् ॥
भूमौ भुङ्क्ते सदा यस्तु स पृथिव्याः पतिर्भवेत् ।
नमो नारायणायेति जपन्यज्ञफलं लभेत् ॥
पादाभिवन्दनाद्विष्णोर्लभेद्गोदानजं फलम् ।
विष्णुपादाब्जसंस्पर्शाद्धितपापात्प्रमुच्यते ॥
पादोदकाभिषेकाद्धैगङ्गास्नानं दिने दिने ।
विष्णुदेवकुले कार्ये उपलेपनमार्जने ॥
कल्पस्थायी भवेद्राजा स नरो नात्र संशयः ।
प्रदक्षिणाशतं यस्तु करोति स्तुतिपाठकः ॥
हंसयुक्तविमानेन स वै विष्णुपुरं व्रजेत् ।
गीतवाद्यकरो विष्णोर्गान्धर्वं लोकमाप्नुयात् ॥
नित्यं शास्त्रसमाख्यानाल्लोकान् यस्तु प्रबोधयेत् ।
व्यासस्तुष्यति तस्याशु विष्णुलोकं स गच्छति ॥
कृत्वा प्रदक्षिणां विष्णोर्लोकमप्सरसां व्रजेत् ।
तीर्थेषु स्नपनाद्विष्णोर्निर्मलं ज्ञानमाप्नुयात् ॥
पञ्चगव्याशनात्पार्थ चान्द्रायणफलं लभेत् ।
अयाचितेन प्राप्नोति पुत्रधर्मानशेषतः ॥
षष्ठान्नकालभोक्ता यः कल्पस्थायी भवेद्दिवि ।
शिलोञ्छेन तु भुञ्जानः प्रयागस्नानमाप्नुयात् ।
पर्णेषु यो नरो भुङ्क्ते कुरुक्षेत्रफलं लभेत् ॥
यामद्वयं जलत्यागान्न रोगैरभिभूयते ।
गुडवर्जी नरो दद्यात्तद्भृतं ताम्रभाजनम् ॥
सहिरण्यं नृपश्रेष्ठ लवणस्याप्ययं विधिः ।

**ब्रह्मवैवर्ते—**

एकभक्तं नरः कृत्वा नित्यस्नायी दृढव्रतः ।
योऽर्चयेच्चतुरो मासान्वासुदेवं स नाकभाक् ॥
यस्तु सुप्ते हृषीकेशे नक्तमाचरते व्रती ।

वस्त्रयुग्मं नरो दत्त्वा शिवलोके महीयते ॥
अपूपवर्जनं कृत्वा भोजने व्रतमाचरेत् ।
कार्तिके स्वर्णगोधूमान्वस्त्रं दत्त्वाश्वमेधभाक् ॥
अन्नं दत्त्वा च विप्राय ब्रह्मलोकमवाप्नुयात् ।
एकान्तरोपवासेन विष्णुपूजनतत्परः ॥

एकान्तरोपवासः उपवासद्वयान्तरितनक्तः ।

गां दत्त्वा वासुदेवस्य लोके संपूज्यते नरः ।
यस्तु सुप्ते हृषीकेशे क्षितिशायी भवेन्नरः ॥
शय्यां सोपस्करां दत्त्वा इन्द्रलोके महीयते ।
वार्षिकांश्चतुरो मासान् मद्यं मांसं च यस्त्यजेत् ॥
स्वर्णदो हरिमुद्दिश्य स भवेद्वेदवित्तमः ।
क्षपयेत्कृच्छ्रपादेन आषाढादिचतुष्टयम् ॥
विष्णुपूजनकृन्मर्त्यः स भवेत्तन्निकेतनः ।

व्रतान्ते कृत्यं तत्रैव—

समाप्तौ भोजयेद्विप्रान् भक्त्या दद्याच्च दक्षिणाम् ।

तथा—समाप्ते गोयुगं दद्याद्दत्त्वा विप्रायभोजनम् ॥

तथा—समाप्तौ गोवृषं दद्याद्वस्त्रं काञ्चनसंयुतम् ॥

तथा—व्रतान्ते च तथा दद्याद्गामेकां च पयस्विनीम् ।

तथा—वस्त्रयुग्मं समाप्तौ तु वस्त्रं दद्याद्द्विजातये ॥ इति ।

तथा—व्रतान्ते विप्रमिथुनं पूज्य धेनुसमन्वितान् ।
वृषान्हिरण्मयान्दद्यात्सोऽश्वमेधफलं लभेत् ॥

एतेषां च पक्षाणां शक्तितो व्यवस्था । चातुर्मास्ये निषिद्धान्युक्तानि भविष्योत्तरे—

सुप्ते यस्मिन्निवर्तंते क्रियाः सर्वाः शुभोदयाः ।
विवाहव्रतबन्धादि चूडासंस्कारवीक्षणम् ॥
यज्ञा गृहप्रवेशाश्च प्रतिष्ठा देवभूभुजाम् ।
पुण्यानि यानि कर्माणि न स्युः सुप्ते जगत्पतौ ॥

वीक्षणमपूर्वदेववीक्षणम् । पुण्यानि कर्माणि ज्योतिष्टोमादीनि ।

इति चातुर्मास्यविधिः ।

---

## अथ नदीनां रजोदोषः ।

तत्र तावन्नद्यो द्विविधाः । महत्योऽल्पाश्चेति । तथा च ब्रह्मपुराणे—

गोदावरी भीमरथी तुङ्गभद्रा च वेणिका ।
तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्तिताः ।।
भागीरथी नर्मदा च यमुना च सरस्वती ।
विशोका च वितस्ता च विन्ध्यस्योत्तरतः स्थिताः ।।
द्वादशैता महानद्यो देवर्षिक्षेत्रसंभवाः ।

एतदन्या अल्पाः । ततोऽप्यल्पा गर्ताः । तथा च स्मृत्यन्तरे—

धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते ।
न ता नदीशब्दवहा गर्तास्ते परिकीर्तिताः ।।

तत्र महतीषु भविष्योत्तरे—

आदौ तु कर्कटे देवि महानद्यो रजस्वलाः ।
त्रिदिनं तु चतुर्थेऽह्नि शुद्धाः स्युर्जाह्नवी यथा ।। इति ।

देवलः—गङ्गा च यमुना चैव प्लक्षजाता सरस्वती ।
रजसा नाभिभूयन्ते ये चान्ये नदसंज्ञिताः ।।
शोणसिंधुहिरण्याक्षाः कोकलोहितघर्घराः ।
शतद्रुश्च नदाः सप्त पावनाः परिकीर्तिताः ।।

स्मृतिसंग्रहे—

तपनस्य सुता गङ्गा गौतमी च सरस्वती ।
रजसा नाभिभूयन्ते वेणा च नदसंज्ञिताः ।।

निगमः—गङ्गा धर्मद्रवः पुण्या यमुना च सरस्वती ।
अन्तर्गतरजोदोषाः सर्वावस्थासु चामलाः ।।

एवं च—प्रथमं कर्कटे देवि त्र्यहं गङ्गा रजस्वला ।
तथा— कर्कटादौ रजोदुष्टा गौतमी वासरत्रयम् ।।
चन्द्रभागा सती सिन्धुः सरयूर्नर्मदा तथा ।

इत्यादि तदन्तर्गतरजोदोषविषयम् । अल्पनदीषु विशेषान्तरमाह देवलः—

नभोनभस्ययोर्मध्ये सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत देवर्षिपितृतर्पणम् ।।

अत्रिश्च—सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ।
न स्नानादीनि कर्माणि तासु कुर्वीत मानवः ।।

न चैतयोः सर्वा नद्य इत्यविशेषोक्त्या महानदीविषयत्वमपीति वाच्यम् ।

सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥

इति व्याघ्रपदोक्तेः । अल्पनदीषु ऋत्ववधिर्मात्स्ये—

यावन्नोदेति भगवान् दक्षिणाशाविभूषणम् ॥
तावद्रजोवहा नद्यः करतोयाः प्रकीर्तिताः ॥ इति ।

करतोयाः अल्पोदकाः कात्यायनेन त्वन्नोक्तो विशेषः—

याः शोषमुपगच्छन्ति ग्रीष्मे कुसरितो भुवि ।
तासु प्रावृषि न स्नायादपूर्णे दशवासरे ॥ इति ।

रजोदोषश्च न तत्तीरवासिनाम् । 'न तु तत्तीरवासिनाम्' इति निगमोक्तेः । विशेषान्तरं मत्स्यपुराणे—

पुण्याम्भसा समायोगाद्दुष्टमप्यम्बु पावनम् ॥ इति ।

भारते च—

अपवित्रमपि प्राप्य गङ्गां याति पवित्रताम् ।

रजोयुतनदीजलपाने प्रायश्चित्तं स्मृतिसङ्ग्रहे—

काले नभस्यशुद्धं स्यात्त्रिरात्रं तु नवोदकम् ।
अकाले तु दशाहं स्यात् पीत्वा नाद्यादहर्निशम् ॥ इति ।

भविष्ये—महदम्बु समं वाऽपि यदि तिष्ठेत्पुरातनम् ।
नवाम्बु मिश्रितं तेन न दुष्टमिति सूरयः ॥

योगयाज्ञवल्क्यः—

रजोदुष्टेम्भसि स्नानं वर्ज्यं नद्यादिषु द्विजैः ।
कदर्थितं रजस्तेषां संध्योपास्तिश्च तर्पणम् ॥

तथा—अजा गौर्महिषी चैव ब्राह्मणी च प्रसूतिका ।
भूमेर्नवोदकं चैव दशरात्रेण शुद्ध्यति ॥

कृतनूतनकूपाद्युदकमपि नवोदकम् । व्याघ्रपादः—

अभावे कूपवापीनामनपायिपयोभृताम् ।
रजोदुष्टेऽपि पयसि ग्रामभोगो न दुष्यति ॥

वसिष्ठः—उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च ।
चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते ॥ इति ।

---

अथ श्रावणकृत्यम् । तत्र मासव्रतानि ।

भारते— श्रावणं नियतो मासमेकभक्तेन यः क्षिपेत् ।
यत्र तत्राभिषेकेण पूज्यते ज्ञातिवर्द्धनः ॥

वामनपुराणे—
घृतं च क्षीरकुम्भांश्च घृतपक्वं फलानि च ।
श्रावणे श्रीधरप्रीत्यै दातव्यानि दिने दिने ॥

इति श्रावणकृत्यम् ।

---

अथ भाद्रपदकृत्यम् ।

भारते— प्रोष्ठपद्यं तु यो मासमेकाहारो भवेन्नरः ।
धनाढ्यः स्फीतमहतामैश्वर्यं प्रतिपद्यते ॥

वामनपुराणे—
मासि भाद्रपदे दद्यात्पायसं मधुसर्पिषा ।
हृषीकेशप्रीणनार्थं लवणं सगुडोदनम् ॥

इति भाद्रपदकृत्यम् ।

---

अथ आश्विनकृत्यम् ।

यमः— घृतमाश्वयुजे मासि नित्यं दद्याद्द्विजातये ।
प्रीणयित्वाऽश्विनौ देवौ रूपभागधिजायते ॥

वामने— तिलाः स्थिराङ्गवृषभं दधि ताम्ररसादिकम् ।
प्रीत्यर्थं पद्मनाभस्य देयमाश्वयुजे नरैः ॥

भारते— तथैवाश्वयुजं मासमेकभक्तेन यो नयेत् ।
धनवान्बहुपुत्रश्च वाहनाढ्यश्च जायते ॥

इति आश्विनकृत्यम् ।

---

अथ कार्तिककृत्यम् । स्नानादिव्रतानि ।

विष्णुः— कार्तिकं सकलं मासं नित्यस्नायी जितेन्द्रियः ।
जपन्हविष्यभुग्दान्तः सर्वपापैः प्रमुच्यते ॥

जपश्चेष्टदेवतामन्त्रस्य गायत्र्या वा । एतच्च शक्तपरम् । अशक्तस्य तूक्तं काशीखण्डे—

वाराणस्यां पञ्चनदे त्र्यहं स्नातास्तु कार्तिके ।
अमी ते पुण्यवपुषः पुण्यभाजोऽतिनिर्मलाः ॥ इति ।

स्नानकालश्चोक्तस्तत्रैव—

कार्तिके बिन्दुतीर्थे यो ब्रह्मचर्यपरायणः ।
स्नास्यत्यनुदिते भानौ भानुजात्तस्य भीः कुतः ॥

भानुजाद्यमात् । तत्रैव स्नानमन्त्रः—

कार्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्दन ।
प्रीत्यर्थं तव देवेश दामोदर मया सह ॥
इमं मन्त्रं समुच्चार्य मौनी स्नायाद्व्रतीनरः ॥ इति ।

अर्घ्यमन्त्रश्च तत्रैव—

व्रतिनः कार्तिके मासि स्नातस्य विधिवन्मम ।
दामोदर गृहाणार्घ्यं दनुजेन्द्रनिषूदन ॥
स्नाने नैमित्तिके कृष्ण कार्तिके पापशोषणे ।
गृह्णात्वर्घ्यं मया दत्तं राधया सहितो भवान् ॥
इमौ मन्त्रौ समुच्चार्य्य योऽर्घ्यं मह्यं प्रयच्छति ।
सुवर्णरत्नपुष्पाम्बुपूजाशङ्खेन पुण्यवान् ॥
सुवर्णपूर्णपृथिवी सङ्कल्पोदकपूर्वकम् ।
तेन दत्ता भवेत्सम्यक् सुपात्राय सुपर्वणि ॥ इति ।

पाद्मे— तुलसीदललक्षेण कार्तिके योऽर्चयेद्धरिम् ।
पत्रे पत्रे मुनिश्रेष्ठ मौक्तिकं लभते फलम् ॥

तत्रैव— कुरुक्षेत्रे कोटिगुणं गङ्गायामपि तत्समः ।
ततोऽधिकः पुष्करे स्याद्द्वारावत्यां च भार्गव ॥
दुर्लभः कार्तिको विप्र मथुरायां नृणामिह ॥ इति ।

स्कान्दे कार्तिकमाहात्म्ये—

धात्रीछायायां यः कुर्यात्पिण्डदानं महामुने ।
मुक्तिं प्रयान्ति पितरः प्रसादान्माधवस्य च ॥

दानमाह वामनः—

कनकं रजतं दीपान् मतिमुक्ताफलादिकम् ।
दामोदरस्य प्रीत्यर्थं प्रदद्यात्कार्तिके नरः ॥

चन्द्रप्रकाशे वर्षदर्पणे—

विप्रवेश्मनि यो दद्यात्कार्तिके मासि दीपकम् ।
अग्निष्टोमफलं तस्य प्रवदन्ति मनीषिणः ॥

चतुष्पथेषु रथ्यासु ब्राह्मणावसथेषु च ।
वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु च ॥
दीपदानाद्धि सर्वत्र महाफलमवाप्नुयात् ।
उच्चैः प्रदीपमाकाशे यो दद्यात्कार्तिके नरः ॥
सर्वं कुलं समुद्धृत्य विष्णुलोकमवाप्नुयात् ॥ इति ।

मन्त्रोऽपि तत्रैव—

दामोदराय नभसि तुलायाते मया सह ।
प्रदीपं ते प्रयच्छामि नमोऽनन्ताय वेधसे ॥ इति ।

स्कान्दे—प्रदीपमालां यः कुर्यात्कार्तिके मासि वै मम ।
अवसानेषु दीपानां ब्राह्मणान् भोजयेच्छुचिः ॥
गाणपत्यं स लभते दीप्यते च रविर्यथा ॥ इति ।

भारते—कार्तिके तु नरो मासं यः कुर्यादेकभोजनम् ।
शूरश्च बहुवीर्यश्च कीर्तिमांश्चैव जायते ॥

काशीखण्डे—

कृच्छ्रं वा चातिकृच्छ्रं वा प्राजापत्यमथापि वा ।
संप्राप्ते कार्तिके मासि कुर्याच्छक्त्याऽतिपुण्यवान् ॥
एकान्तरं व्रतं कुर्यात्त्रिरात्रव्रतमेव वा ।
पञ्चरात्रं सप्तरात्रं संप्राप्ते कार्तिके व्रती ॥
पक्षव्रतं वा कुर्वीत मासोपोषणमेव वा ।
शाकाहारं पयोहारं फलाहारमथापि वा ॥
चरेद्यवान्नाहारं वा संप्राप्ते कार्तिके व्रती ।
ब्रह्मचर्यं चरेदूर्जे महाव्रतफलाप्तये ॥
पत्रभोजी भवेदूर्जे कांस्यं त्याज्यं प्रयत्नतः ।
कांस्यस्य नियमे दद्यात्कांस्यं सर्पिःप्रपूरितम् ॥

नारदीये—

कार्तिके वर्जयेत्कांस्यं कार्तिके शुक्तसन्धितम् ।

शुक्तं पर्युषितम् । सन्धितं लवणशाकः ।

पाद्मे—राजिकां मादकं चैव नैवाद्यात्कार्तिके व्रती ।
द्विदलं तिलतैलं च तथान्यन्मतिदूषितम् ॥

द्विदलं तु—

माषमुद्गमसूराश्च चणकाश्च कुलत्थकाः ।

निष्पावा राजमाषाश्च आढक्यं द्विदलं स्मृतम् ॥

इति स्कान्दोक्तम् ।

भारते—कार्तिके वर्जयेन्मांसं कार्तिके वर्जयेन्मधु ॥ इति ।

काशीखण्डे—

मधुत्यागे घृतं दद्यात्पायसं च स शर्करम् ।
मांसाशिनोऽपि ये भूपास्त्यजेयुस्तेऽपि कार्तिके ॥
नियमान्मत्स्यमांसानां प्रदद्यात्कार्तिके व्रती ।
कूष्माण्डानि समांसानि दशस्वर्णयुतान्यपि ॥
कार्तिके मौनभोजी यः सोऽश्नात्यमृतमेव हि ।
सुघण्टां सतिलां मौनी सहिरण्यां प्रदापयेत् ॥
कार्तिके लवणं त्यक्तं येन व्रतभृता सता ।
त्यक्ताः सर्वे रसास्तेन तत्त्यागी गां प्रदापयेत् ॥
भूशय्यां कार्तिके कुर्यान्न भवं संस्पृशेद्व्रती ।
पर्यङ्कं भूषणैर्दद्यात्सतूलं सोपधानकम् ॥

सर्वचातुर्मास्यान्यपि चतुर्ष्वसंभवे कार्तिक एव कार्याणि ।

तथा च तत्रैव—

चतुर्ष्वपि च मासेषु न सामर्थ्यं व्रते यदि ।
तदोर्जे व्रतिना भाव्यमप्यब्दफलमिच्छता ॥ इति ।

---

## अथ भीष्मपञ्चकम् ।

कार्तिकं प्रक्रम्य ब्राह्मे—

एकादश्यां तु गृह्णीयाद्व्रतं पञ्चदिनात्मकम् ।
व्रती स्नात्वा विधानेन मध्याह्ने तु तथा पुनः ॥

अत्र प्रातर्मध्याह्ने च मृद्गोमयाभ्यां स्नात्वा देवर्षिपितॄन्संतर्प्य विष्णुं पञ्चामृतपञ्चगव्यैः संस्नाप्य कर्पूरकस्तूरीकुङ्कुमचन्दनैरनुलिप्य पुष्पैरभ्यर्च्य कृष्णागरुणा धूपयित्वा पाञ्चाहिकमनवरतदीपं प्रज्वाल्य हविष्यान्नं निवेद्य सायंसन्ध्यामुपास्य मूलमन्त्रं जपेत् । तत्र पञ्चसु दिनेषु विशेषः । आद्ये पद्मैः पादौ पूजयेत् । द्वितीये बिल्वपत्रैर्जानुनी । तृतीये जानुत आनाभि तुलसीपत्रैः । चतुर्थे जातिपुष्पादिभिः स्कन्धौ । पञ्चमे मालतीपुष्पैः शिरः । तथा पञ्चस्वपि दिनेषु पूजोत्तरम्,

सत्यव्रताय शुचये गाङ्गेयाय महात्मने ।
भीष्माय वै ददाम्यर्घ्यमाजन्मब्रह्मचारिणे ॥
वसूनामवताराय शन्तनोरात्मजाय वै ।
अर्घ्यं ददामि भीष्माय सोमवंशोद्भवाय च ॥
वैयाघ्रपादगोत्राय साङ्कृत्यप्रवराय च ।
गङ्गापुत्राय भीष्माय प्रदास्येऽहं तिलोदकम् ॥
अपुत्राय ददाम्येतत्सतिलं भीष्मवर्मणे ।

इत्येतैर्मन्त्रैर्भीष्मं संतर्प्य गोमयगोमूत्रदुग्धदधिघृतानि क्रमेण पञ्चसु दिनेषु पिबेत् । एवं पञ्च दिनान्युपोष्य षष्ठदिवसे विधिवत्स्नात्वा पक्वान्नेन पञ्च ब्राह्मणान्संभोज्य बन्धुभिः सह रात्रौ भुञ्जीत । अत्र च एकादश्यां सुवर्णं द्वादश्यां वस्त्रं त्रयोदश्यां गौश्चतुर्दश्यां घृतपायसं पौर्णमास्यां श्वेतकृष्णतिला वस्त्रं च देयम् । मैथुनानृतवादमधुमांसताम्बूलाभ्यङ्गादिवर्ज्यानि । एतेषु च स्नानादिषु सौरश्चान्द्रो वा मास आश्रयणीयः । [ [1]अभ्यङ्गमाषमसूरमुद्गचणककुलायनिष्पावराजमाषाढक्यादीनि वर्ज्यानि । अन्यान्यपि वर्ज्यान्युक्तानि पाद्मे—

पलाण्डुं लशुनं हिङ्गुं छत्राकं गृञ्जनं तथा ।
नालिकां मूलकं शिग्रुं वर्जयेत्कार्तिके व्रती ॥
अलाबुं चापि वृन्ताकं कूष्माण्डं बृहतीफलम् ।
कलिङ्गं चक्रपिष्टं च वर्जयेद्वैष्णवो व्रती ॥

तथा च—पाचितं च तदा धात्रीं नैवाद्याद्वैष्णवो व्रती ।
क्रमात्कूष्माण्डं बृहतीं छत्राकं मूलकं तथा ॥
श्रीफलं च कलिङ्गं च फलं धात्रीभवं तथा ।
नारिकेलं तथाऽलाबुं पटोलं बदरीफलम् ॥
चर्मवृन्ताक···तं शाकं तुलसिजं तथा ।
शाकान्येतानि वर्ज्यानि क्रमात्प्रतिपदादिषु ॥
धात्रीफलं रवौ तद्वद्वर्जयेत्सर्वदा गृही । ]
तुलामकरमेषेषु प्रातःस्नानं विधीयते ॥
हविष्यं ब्रह्मचर्यं च महापातकनाशनम् ।

इति विष्णुस्मृतेः ।

---

१ कुंडलीतः पाठो ग. पुस्तके दृश्यते ।

आश्विनस्य तु मासस्य या शुक्लैकादशी भवेत् ।
कार्तिकस्य व्रतानीह तस्यां वै प्रारभेत्सुधीः ॥

इति पाद्मोक्तेश्च ।

इति कार्तिककृत्यम् ।

## अथ कार्तिकव्रतोद्यापनम् ।

**पाद्मे नारद उवाच—**

अथोर्जव्रतिनः सम्यगुद्यापनविधिं नृप ।
तं शृणुष्व मयाऽऽख्यातं सविधानं विशेषतः ॥
ऊर्जशुक्लचतुर्दश्यां कुर्यादुद्यापनं व्रती ।
व्रतसंपूर्णतार्थाय विष्णुप्रीत्यर्थमेव च ॥
तुलस्या उपरिष्टात्तु कुर्यान्मण्डपिकां शुभाम् ।
सुतोरणां चतुर्द्वारां पुष्पचामरशोभिताम् ॥
द्वारेषु द्वारपालांश्च पूजयेन्मृन्मयान्पृथक् ।
पुण्यशीलं सुशीलं च जयं विजयमेव च ॥
तुलसीमूलदेशे तु सर्वतोभद्रमेव च ।
पञ्चभिर्वर्णकैः सम्यक् शोभाढ्यं समलङ्कृतम् ॥
तस्योपरि सपिधानं पञ्चरत्नसमन्वितम् ।
महाफलेन संयुक्तं कुम्भं तत्र निधाय च ॥
पूजयेत्तत्र देवेशं शङ्खचक्रगदाधरम् ।
कौशेयपीतवसनं युक्तं जलधिकन्यया ॥
इन्द्रादिलोकपालांश्च मण्डले पूजयेद्व्रती ।
द्वादश्यां प्रतिबुद्धोऽसौ त्रयोदश्यां यतः सुरैः ॥
दृष्टोऽर्चितश्चतुर्दश्यां तस्मात्पूज्यस्तिथाविह ।
तस्यामुपवसेद्भक्त्या शांतः प्रयतमानसः ॥
पूजयेद्देवदेवेशं सौवर्णं गुर्वनुज्ञया ।
उपचारैः षोडशभिर्नानाभक्ष्यसमन्वितैः ॥
रात्रौ जागरणं कुर्याद्गीतवाद्यादिमङ्गलैः ।
मतिं कुर्वन्ति ये भक्त्या जागरे चक्रपाणिनः ॥
जन्मान्तरशतोद्भूतैस्ते मुक्ताः पापसञ्चयैः ।
नराणां जागरे विष्णोर्गीतनृत्यं प्रकुर्वताम् ॥

गोसहस्रं च ददतां फलं सममुदाहृतम् ।
गीतनृत्यादिकं कुर्वन् दर्शयन्कौतुकानि च ॥
पुरतो वासुदेवस्य रात्रौ वै हरिवासरे ।
पठन्विष्णुचरित्राणि यो रञ्जयति वैष्णवान् ॥
मुखेन कुरुते वाद्यं स्वेच्छालापांश्च वर्जयेत् ।
ततश्च पौर्णमास्यां च सपत्नीकान्द्विजोत्तमान् ॥
त्रिंशन्मितांस्तथैकं वा स्वशक्त्या वा निमन्त्रयेत् ।
वरान्दत्वा यतो विष्णुर्मत्स्यरूप्यभवत्ततः ॥
तस्यां दत्तं हुतं जप्तं तदक्षय्यफलं स्मृतम् ।
अतस्तान्भोजयेद्विप्रान्पायसान्नादिना व्रती ॥
अतोदेवाइतिद्वाभ्यां जुहुयात्तिलपायसम् ।
प्रीत्यर्थं देवदेवस्य देवानां च पृथक्पृथक् ॥
दक्षिणां च यथाशक्ति प्रदद्यात्प्रणमेच्च तान् ।
देवदेवं समभ्यर्च्य देवांश्च तुलसीं तथा ॥
ततो गां कपिलां तत्र पूजयेद्विधिवद्व्रती ।
गुरुं व्रतोपदेष्टारं वस्त्रालङ्करणादिभिः ॥
सपत्नीकं समभ्यर्च्य तांश्च विप्रान्क्षमापयेत् ।
युष्मत्प्रसादाद्देवेशः प्रसन्नो मम सर्वदा ॥
व्रतादस्माच्च यत्पापं सप्तजन्मकृतं मया ।
तत्सर्वं नाशमायातु स्थिरा मे चास्तु सन्ततिः ॥
मनोरथाश्च सफलाः सन्तु नित्यं तवार्चनात् ।
देहान्ते वैष्णवं स्थानं प्राप्नुयामतिदुर्लभम् ॥
इति क्षमाप्य तान्विप्रान्प्रसाद्य च विसर्जयेत् ।
कार्तिके वाऽथ तपसि विधिरेवंविधः स्मृतः ॥

नारद उवाच—

एवं यः कुरुते सम्यक् कार्तिकस्य व्रतं नरः ।
विपाप्मा स तु निर्मुक्तो विष्णुसान्निध्यगो भवेत् ॥
सर्वव्रतैः सर्वतीर्थैः सर्वदानैश्च यत्फलम् ।
ज्ञेयं तत्कोटिगुणितं सम्यगस्य विधानतः ॥
ते धन्यास्ते महापुण्यास्तेषां सर्वफलोदयः ।
विष्णुभक्तिरतास्ते स्युः कार्तिकव्रतकारिणः ॥

देहस्थितानि पापानि वितर्कं यान्ति तद्भयात् ।
क यास्यामो वयं त्वेवं यदूर्जे व्रतकृन्नरः ॥

नारद उवाच—

इत्यूर्जव्रतनियमाञ्शृणोति भक्त्या
यो वैतत्कथयति वैष्णवाय नित्यम् ।
सम्यग्व्रतकरणात्फलं भवेद्यत्
तत्सर्वं कलुषविनाशनं लभन्ते ॥

इति कार्तिकोद्यापनविधिः ।

## अथ मार्गशीर्षकृत्यम् ।

महाभारते—

मार्गशीर्षं तु यो मासमेकभक्तेन संक्षपेत् ।
भोजयेत्तु द्विजाञ्शक्त्या स मुच्येद्व्याधिकिल्बिषैः ॥
कृषिभागी बहुधनो बहुधान्यश्च जायते ।

वामनपुराणे—

खरोष्ट्राश्वनरा गावः शकटानि अजाविकम् ।
दातव्यं केशवप्रीत्यै मासे मार्गशिरे नरैः ॥

इति मार्गशीर्षकृत्यम् ।

## अथ पौषकृत्यम् ।

महाभारते—

पौषमासं तु कौंतेय एकभक्तेन यः क्षिपेत् ।
सुभगो दर्शनीयश्च यशोभागी च जायते ॥

इति पौषकृत्यम् ।

## अथ माघकृत्यम् ।

विष्णुस्मृतौ—

तुलामकरमेषेषु प्रातःस्नायी भवेन्नरः ।
हविष्यं ब्रह्मचर्यं च महापातकनाशनम् ॥ इति ।

प्रभासखण्डे—

माघे मासि च यः स्नायाझैरन्तर्येण भारत ।
पौण्डरीकफलं तस्य दिवसे दिवसे भवेत् ॥

ब्रह्मपुराणे—

एकादश्यां शुक्लपक्षे पौषमासे समारभेत् ।
द्वादश्यां पूर्णिमायां वा शुक्लपक्षे समापनम् ॥

पद्मपुराणे—

पौषस्यैकादशीं शुक्लामारभ्य स्थण्डिलेशयः ।
मासमात्रं निराहारस्त्रिकालं स्नानमाचरेत् ॥
त्रिकालमर्चयेद्विष्णुं त्यक्तभोगो जितेन्द्रियः ।
माघस्यैकादशीं शुक्लां यावद्विप्रावरोत्तम ॥

इदं त्रिकालस्नानं निराहारस्यैव साहचर्यात् । स्नानकालश्च पद्मपुराणे—

माघमासे रटन्त्यापः किञ्चिदभ्युदिते रवौ ॥ इति ।

भविष्योत्तरे—

यो माघमास्युषसि सूर्यकराभितप्ते
स्नानं समाचरति चारुनदीप्रवाहे ॥ इति ।

ब्राह्मे— अरुणोदये तु संप्राप्ते स्नानकाले विचक्षणः ॥ इति ।
माधवाङ्घ्रियुगं ध्यायन्यः स्नाति सुरपूजितः ॥ इति ।

एतानि शक्त्यपेक्षया व्यवस्थाप्यानि । तत्र सङ्कल्पमाह विष्णुः—

तत्र चोत्थाय नियमं गृह्णीयाद्विधिपूर्वकम् ।
माघमासमिमं पूर्णं स्नास्येऽहं देव माधव ॥
तीर्थस्यास्य जले नित्यमिति सङ्कल्प्य चेतसि ।

स्नानमंत्रः पाद्मे—

दुःखदारिद्र्यनाशाय श्रीविष्णोस्तोषणाय च ।
प्रातःस्नानं करोम्यद्य माघे पापप्रणाशनम् ॥
मकरस्थे दिवानाथे गोविन्दाच्युत माधव ।
स्नानेनानेन मे देव यथोक्तफलदो भव ॥
इमं मन्त्रं समुच्चार्य स्नायान्मौनसमन्वितः ॥ इति ।
सवित्रे प्रसवित्रे च परं धाम जले मम ।
त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा ॥

इति मन्त्रेण सूर्यायार्घ्यदानमुक्तं पृथ्वीचन्द्रोदये । मासपर्यन्तमसम्भवे त्र्यहं कर्तव्यम्—

अस्मिन्योगे त्वशक्तस्तु स्नायादपि दिनत्रयम् ॥
प्रयागे माघमासे तु त्र्यहं स्नातस्य यत्फलम् ।
नाश्वमेधसहस्रेण तत्फलं लभते नरः ॥

इति पाद्मात् । प्रयागासम्भवे काशीखण्डे—

काश्युद्भवे प्रयागे ये तपसि स्नान्ति मानवाः ॥
दशाश्वमेधजनितं फलं तेषां भवेद्ध्रुवम् ।

भविष्योत्तरे—

अप्रावृतशरीरस्तु यः कष्टं स्नानमाचरेत् ।
पदे पदे ऽश्वमेधस्य फलं प्राप्नोति मानवः ॥

नारदीये—न वह्निं सेवयेत्स्नातो ह्यस्नातोऽपि वरानने ।
होमार्थे सेवयेद्वह्निं शीतार्थे न कदाचन ॥
अहन्यहनि दातव्यास्तिलाः शर्करयान्विताः ।
त्रिभागास्तु तिलानां हि चतुर्थः शर्करान्वितः ॥

तथा— तिलस्नायी तिलोद्वर्ती तिलहोमी तिलोदकी ।
तिलभुक् तिलदाता च षट् तिलाः पापनाशनाः ॥
तैलमामलकाश्चैव तीर्थे देयास्तु नित्यशः ।
तथा प्रज्वालयेद्वह्निं सेवनार्थं द्विजन्मनाम् ॥

पाद्मे— दातव्यो दीपकोऽखण्डो देवमुद्दिश्य माधवम् ।

विष्णुः—'माघे मास्यग्निं प्रत्यहं तिलैर्हुत्वा सघृतकृसरं ब्राह्मणान् भोजयित्वा दीप्ताग्निर्भवतीति' । माघव्रतोद्यापनमाह चन्द्रप्रकाशे विष्णुः—

एवं स्नानावसाने तु भोज्यं देयमवारितम् ।
भोजयेद्द्विजदाम्पत्यं भूषयेद्वस्त्रभूषणैः ॥
कम्बलाजिनरत्नानि वासांसि विविधानि च ।
चोलकानि च देयानि प्रच्छादनपटास्तथा ॥
उपानहौ तथा गुप्तमोचकौ पापमोचकौ ।
अनेन विधिना दद्यान्माधवः प्रीयतामिति ॥

अत्र समापनमन्त्रः—

सवित्रे प्रसवित्रे च परं धाम जले मम ।
त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा ॥

दिवाकर जगन्नाथ प्रभाकर नमोऽस्तु ते ।
परिपूर्णं करिष्येऽहं माघस्नानं तवाऽऽज्ञया ॥
अहन्यहनि दातव्यास्तिलाः शर्करयान्विताः ।
माघावसाने सुभगे षड्रसं भोजनं तथा ॥
सूर्यो मे प्रीयतां देवो विष्णुमूर्तिर्निरञ्जनः ।
दम्पत्योर्वाससी सूक्ष्मे सप्तधान्यसमन्विते ॥
त्रिंशत्तु मोदका देयाः शर्करातिलसंयुताः ।
भागत्रयं तिलानां तु चतुर्थः शर्करांशकः ॥
अनभ्यङ्गी वरारोहे सर्वं मासं नयेदघम् ।

विशेषोद्यापनं तु ।

कार्तिके वाथ तपसि विधिरेवंविधः स्मृतः ॥

इति वचनात्पूर्वोक्त एव ज्ञेयः ।

इति माघकृत्यम् ।

---

## अथ फाल्गुनकृत्यम् ।

स्कान्दे— एकभक्तं तु कुर्वाणः फाल्गुने मासि नित्यशः ।
स्त्रीषु सौभाग्यमाप्नोति स्त्रियाश्च परमप्रियः ॥

वामने— फाल्गुने व्रीहयो गावो वस्त्रं कृष्णाजिनान्वितम् ।
गोविन्दप्रीणनार्थाय दातव्यं पुरुषर्षभ ॥

तथा— प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ ।

इति फाल्गुनकृत्यम् ।

---

## अथ मलमासः ।

स द्विविधः । अधिमासः क्षयमासश्चेति । तदुक्तं मदनरत्ने काठकगृह्ये—

यस्मिन् मासे न सङ्क्रान्तिः सङ्क्रान्तिद्वयमेव वा ।
मलमासः स विज्ञेयो मासः स्यात्तु त्रयोदशः ॥ इति ।

आद्यस्वरूपं माधवीये ब्रह्मसिद्धान्ते—

चान्द्रो मासो ह्यसङ्क्रान्तो मलमासः प्रकीर्तितः ॥ इति ।

तस्य कालनियमोऽपि ब्रह्मसिद्धान्ते—

द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा ।

घटिकानां चतुष्केण पतत्यधिकमासकः ॥ इति ।

द्वितीयस्वरूपमपि सिद्धान्तशिरोमणौ—

असङ्क्रान्तमासोऽधिमासः स्फुटः स्या-
द्द्विसङ्क्रान्तमासः क्षयाख्यः कदाचित् ।
क्षयः कार्तिकादित्रये नान्यतः स्या-
त्तदा वर्षमध्येऽधिमासद्वयं च ॥ इति ।

अधिमासद्वयं क्षयात्पूर्वमेकः परस्तदनन्तरमित्यर्थः । तस्यागमन-कालोऽप्युक्तः सिद्धान्तशिरोमणौ—

गतोऽब्ध्यद्रिनन्दैर्मिते शाककाले
तिथीशैर्भविष्यत्यथाङ्गाक्षसूर्यैः ।
गजाद्र्यग्निभूमिस्तथा प्रायशोऽयं
कुवेदेन्दुवर्षैः क्वचिद्गोकुभिश्च ॥ इति ।

अस्यार्थः—अब्धयश्चत्वारः, अद्रयः सप्त, नन्दा नव, एतत्सङ्ख्या-त्रयमङ्कानां वामतो गतिरिति प्रकारेण प्रातिलोम्येन बोध्यम् । एवं च मेलने चतुःसप्तत्यधिकनवशतसङ्ख्या संपद्यते । एभिर्वर्षैः परिमिते काले कश्चित्क्षयमासः पूर्वं जात इत्यर्थः । एवमग्रेऽपि प्रातिलोम्येन सङ्ख्या बोद्धव्या । तिथयः पञ्चदश, ईशा एकादश, पञ्चदशाधिकशतयुत-सहस्रसङ्ख्याकैर्वर्षैर्मिते याते कश्चित्क्षयमासोपेतः संवत्सरो भविष्यती-त्यर्थः । अङ्गानि षट्, अक्षाणि पञ्च, सूर्या द्वादश, षट्पञ्चाशदधि-कशतद्वयोपेतसहस्रसङ्ख्याकैर्वत्सरैर्मिते जाते भविष्यतीत्यर्थः । गजा अष्ट, अद्रयः सप्त, अग्नयस्त्रयः, भूरेका, एवमष्टसप्तत्यधिकशतत्रय-सङ्ख्याकैर्वत्सरे याते कश्चिद्भविष्यति । कुरेका, वेदाश्चत्वारः, इन्दुरेकः, एकचत्वारिंशदधिकशतसङ्ख्याकैर्वर्षैः । तथा गावः नव कुरेका एकोन-विंशतिसङ्ख्याकैर्वर्षैरयं प्रायशो जायत इत्यर्थः ।

इति मलमासस्वरूपम् ।

---

## अथ वर्ज्यावर्ज्यमुच्यते ।

तत्र माधवीये पैठीनसिः—

श्रौतस्मार्तक्रियाः सर्वा द्वादशे मासि कीर्तिताः ।
त्रयोदशे तु सर्वास्ताः निष्फलाः परिकीर्तिताः ॥

जाबालिरपि—

नित्यनैमित्तिके कुर्यात् श्राद्धं कुर्यान्मलिम्लुचे ।
तिथिनक्षत्रवारोक्तं काम्यं नैव कदाचन ॥

'कानिचिन्नित्यान्यपि मलिम्लुचे वर्ज्यानीति काठकगृह्ये—

षष्ठीज्याग्रयणाधानचातुर्मास्यादिकान्यपि ।
महालयाष्टकाश्राद्धोपाकर्माद्यपि कर्म यत् ॥
स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले ॥ इति ।

षष्ठीष्टिः काठकादौ प्रसिद्धा । मदनरत्ने स्मृतिसंग्रहे—

जातकर्म च पुंसूतिः सीमन्तोन्नयनव्रतम् ।
मलिम्लुचेऽपि कुर्वीत निमित्तं यदि जायते ॥ इति ।

माधवीये भृगुः—

वृद्धिश्राद्धं तथा सोममग्न्याधेयं महालयम् ।
राजाभिषेकं च तथा न कुर्याद्भानुलङ्घिते ॥ इति ।

वृद्धमनुरपि—

अग्न्याधेयं प्रतिष्ठां च यज्ञदानव्रतानि च ।
वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ॥
माङ्गल्यमभिषेकं च मलमासे विवर्जयेत् ।

वृषोत्सर्गः काम्यः । ज्योतिःशास्त्रे—

तत्र दत्तमदत्तं च हुतं चाहुतमेव वा ।
भुञ्जन्नभ्यजनं स्यान्नोपवासः कृतो भवेत् ॥
न यात्रां न विवाहं तु न च वास्तुनिवेशनम् ।
न प्रतिष्ठा च देवानां प्रासादग्रामभूरुहाम् ॥ इति ॥

स्मृत्यन्तरेऽपि—

वापीकूपतडागादिप्रतिष्ठा यज्ञकर्म च ।
न कुर्यान्मलमासे च महादानव्रतानि च ॥ इति ।

प्रजापतिरपि—

उपाकर्म च हव्यं च कव्यं पर्वोत्सवं तथा ।
उत्तरे नियतं कुर्यात्पूर्वे तन्निष्फलं भवेत् ॥

अन्यत्रापि—

अवरोहश्च हैमन्तः सर्पाणां बलिरष्टकाः ।
ईशानस्य बलिर्विष्णोः शयनं परिवर्तनम् ॥

प्रायश्चित्तं तु सर्वस्य मलमासे विवर्जयेत् ।

गृह्यपरिशिष्टे—

अवषट्कारहोमाश्च पर्व चाऽऽग्रयणं तथा ।
मलमासेऽपि कर्तव्यं काम्या इष्टीश्च वर्जयेत् ॥

अवषट्कारहोमाः अग्निहोत्रौपासनवैश्वदेवादयः। पर्व दर्शपौर्णमासौ स्थालीपाकौ च। आग्रयणमाग्रयणेष्टिः । सा च दुर्भिक्षे इति दीपिकायाम् ।

वृहस्पतिः—

बाले वा यदि वा वृद्धे शुक्रे वास्तङ्गते गुरौ ।
मलमासे इवैतानि वर्जयेद्देवदर्शनम् ॥ इति ।
आधानं यज्ञकर्मादि प्रायश्चित्तव्रतानि च ।
न कुर्यान्मलमासेऽपि शुक्रगुर्वोरुपप्लवे ।
अस्तङ्गते गुरौ शुक्रे वृद्धे बाले मलिम्लुचे ॥
व्रतारम्भापवर्गं च न कुर्यान्मौञ्जिबन्धनम् ।
निष्क्रमं जातकर्माणि काम्यं वृषविसर्जनम् ॥ इति ।

जातकर्माणि जातेष्टिः। बहुवचनं छान्दसम् ।

अस्त उक्तो ब्रह्मसिद्धान्ते—

रविणासत्तिरन्येषां ग्रहाणामस्त उच्यते ।
ततोऽर्वाग्वार्द्धकं मौढ्यादूर्ध्वं बाल्यं प्रकीर्तितम् ॥ इति ।

वार्द्धकबाल्ययोर्मानमपि तत्रैव—

पक्षं प्राग्दिशि वृद्धत्वं पश्चात्पञ्च दिनं कवेः ।
शैशवं प्राक् पञ्चाहं पश्चाद्दशदिनं स्मृतम् ॥ इति ।

कविः शुक्रः । अत्र विशेषः—

पक्षं वृद्धो महास्ते तु बालश्चात्र दशाहिकः ।
पादास्ते तु दशाहानि वृद्धो बालो दिनत्रयम् ॥

महास्तपादास्तलक्षणं तु ।

द्वात्रिंशद्दिवसाश्चास्ते जीवस्य भार्गवस्य तु ।
द्वासप्ततिर्महत्यस्ते पादास्ते द्वादश क्रमात् ॥ इति ।

अत्रैव— प्राक्पश्चादुदितः शुक्रः पञ्चसप्तदिनं शिशुः ।
विपरीतं तु वृद्धत्वं तद्वदेव गुरोरपि ॥

इत्यादिना न्यूनाधिकभावः श्रूयते । एतद्व्यवस्थामाह गर्गः—

शुक्रो गुरुः प्रागपराक्क बालो
विन्ध्ये दशावन्तिषु सप्तरात्रम् ।
वङ्गेषु हूणेषु च षट् च पञ्च
शेषे च देशे त्रिदिनं वदन्ति ॥

वृद्धत्वमप्येतत्प्रमाणं ज्ञेयम् । एवं वक्रातिचारसिंहराशिगतो गुरुरस्त-ङ्गत इव शुभकर्मसु वर्ज्यः । तदुक्तं लल्लेन—

नीचस्थे वक्रसंस्थेऽप्यतिचरणगते बालवृद्धास्तगे वा
संन्यासो देवयात्रा व्रतनियमविधिः कर्णवेधोऽपि दीक्षा ।
मौञ्जीबन्धोऽथचूडा परिणयनविधिर्वास्तुदेवप्रतिष्ठा
वर्ज्याः सद्भिः प्रयत्नात्त्रिदशपतिगुरौ सिंहराशिस्थिते च ।

नीचस्थो मकरस्थः । विशेषमाह माण्डव्यः—

श्रुतिवेधजातकान्नप्राशनचूडादिकं सर्वम् ।
रविभवनस्थे जीवे कार्यं वर्ज्यो विवाहस्तु ॥ इति ।

तथा— रविक्षेत्रं गते जीवे जीवक्षेत्रं गते रवौ ।
वर्जयेत्सर्वकार्याणि व्रतस्वस्त्ययनानि च ॥

तथा— गुर्वादित्ये गुरौ सिंहे शुक्रे चास्तमुपागते ।
त्यजेद्यानं महादानं व्रतं देवविलोकनम् ॥

लल्लः— गुरुक्षेत्रगतो भानुर्भानुक्षेत्रगतो गुरुः ।
गुर्वादित्यः स विज्ञेयः सर्वकर्मसु गर्हितः ॥

शौनकः—एकराशिगतौ भानुजीवौ स्यातां यदा पुनः ।
व्रतबन्धविवाहादि शुभं कर्माखिलं त्यजेत् ॥

राजमार्तण्डे—

यात्रां चूडां विवाहं श्रुतिविवरविधिं शङ्खसद्मप्रवेशं
प्रासादोद्यानहर्म्यं सुरनरभवनारम्भविद्याविधानम् ।
मौञ्जीबन्धं प्रतिष्ठां मणिकनकरदाधारणं कुर्वते ये
मृत्युः सिंहस्थितेज्ये गुरुदिनकरयोरेकराशिस्थयोश्च ॥

तथा— गुर्वादित्ये गुरौ सिंहे नष्टे शुक्रे मलिम्लुचे ।
याम्यायने हरौ सुप्ते सर्वकर्माणि वर्जयेत् ॥

सिंहस्थे गुरौ विशेषमाह शतानन्दः—

माघ्यां यदि मघा नास्ति सिंहे गुरुरकारणम् ॥ इति ।

अन्यत्रापि—

मघाऋक्षं परित्यज्य यदा सिंहे गुरुर्भवेत् ।
तदा चेत्कन्यका ऊढा सुभगा सुप्रिया भवेत् ॥

तथा— माघी मघा च संयुक्ता मघायां च गुरुर्भवेत् ।
महामाघस्तदा प्रोक्तो व्रतोद्वाहौ च वर्जयेत् ॥

वृद्धगार्ग्यः—

मीने धनुषि सिंहे च स्थिते सप्ततुरङ्गमे ।
क्षौरमत्र न कुर्वीत विवाहो गृहकर्म च ॥

तथा— वापीकूपतडागयागगमनक्षौरप्रतिष्ठाव्रतं
विद्यामन्दिरकर्णवेधनमहादानं वनं सेवनम् ।
तीर्थस्नानविवाहदेवभवनं मन्त्रादिदेवेक्षणं
दूरेणैव जिजीविषुः परिहरेदस्तङ्गते भार्गवे ॥ इति ।

लल्लोऽत्र पुनर्विशेषमाह—

उपप्लवे शीतलभानुभान्वो-
रर्द्धोदये वा कपिलाख्यषष्ठ्याम् ।
सुरासुरेज्यास्तमये च तीर्थे
यात्राविधिः सङ्क्रमणेऽपि शस्तः ॥

गुरुशुक्रास्तमघादिनिषिद्धकाले ग्रहणादौ न दोषः। इति लल्लोदाहृत-वचनार्थः ।

स एव—अतिचारगतो जीवस्तं राशिं नैति चेत्पुनः ।
लुप्तसंवत्सरो ज्ञेयः सर्वधर्मबहिष्कृतः ॥

अस्यापवादः—

मेषे वृषे झषे कुम्भे यद्यतीचारगो गुरुः ।
न तत्र काललोपः स्यादित्याह गालवो मुनिः ॥ इति ।

गयाविषये वायुपुराणे विशेष उक्तः—

गयायां सर्वकालेषु पिण्डं दद्याद्विचक्षणः ।
अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः ॥
न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पतौ ।

तथा— गोदावर्यां गयायां च श्रीशैले ग्रहणद्वये ।
सुरासुरगुरूणां च मौढ्यदोषो न विद्यते ॥
तथा— शान्तिकर्म प्रकुर्वीत रोगे नैमित्तिके तथा ।
गुरुभार्गवमौढ्यादिदोषस्तत्र न विद्यते ॥

तथा । काश्यामपि च स्कान्दे—
सदा कृतयुगं चात्र महापर्व सदाऽत्र वै ।
न ग्रहास्तोदयकृतो दोषो विश्वेश्वरालये ॥
सदा सौम्यायनं तत्र सदा तत्र महोत्सवः ।

एतानि काशीस्तुतिमात्रपराणीति वृद्धाः । मात्स्ये—
दर्शोऽप्यहरहः श्राद्धं दानं च प्रतिवासरम् ।
गोभूतिलहिरण्यानां मासेऽपि स्यान्मलिम्लुचे ॥

मदनरत्ने यमः—
आब्दिकं प्रथमं यत्स्यात्तत्कुर्वीत मलिम्लुचे ।
चतुर्दशे तु संप्राप्ते कुर्वीत पुनराब्दिकम् ॥

पुनराब्दिकं द्वितीयाद्याब्दिकम् । सत्यव्रतोऽपि—
वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि ।
मलमासे न कर्तव्यं व्याघ्रस्य वचनं यथा ॥

यानि 'मासद्वयेऽपि कुर्वीत' इत्यादिवचनानि तानि मासिकविषयाणीति मदनरत्ने । मलमासमृतानां तु यदाकदाचित्स एव मलमास उपागतस्तदा तत्रैव प्रत्याब्दिकं कार्यम् । न तु शुद्धमासे । तदाह माधवीये भृगुः—

मलमासमृतानां तु यच्छ्राद्धं प्रतिवत्सरम् ।
मलमासे तु कर्तव्यं नान्येषां तु कदाचन ॥ इति ।

यत्तु हेमाद्रौ व्यासः—

मलमासमृतानां तु सौरं मानं समाश्रयेत् ।
स एव दिवसस्तस्य श्राद्धपिंडोदकादिषु ॥ इति

तदप्येतत्परमेव । क्षयमासे तु तत्रैव प्रत्याब्दिकं कार्यम् । तदाह मदनरत्ने सत्यव्रतः—

एक एव यदा मासः संक्रान्तिद्वयसंयुतः ।

मासद्वयगतं श्राद्धं मलमासेऽपि शस्यते ॥ इति ।

तच्च यस्यास्तिथेः पूर्वार्द्धे मृतः सैव तिथिः क्षयात्पूर्वमासस्थिता ग्राह्या ।
उत्तरार्द्धे चेत्तदा उत्तरमासस्थिता ग्राह्या । तथाचोक्तं दीपिकायाम्—

तिथ्यर्द्धे प्रथमे पूर्वो द्वितीयेऽर्द्धे तदुत्तरः ।
मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ ॥ इति ।

अथात्र दानमुक्तं हेमाद्रौ पाद्मे—

अधिमासे तु संप्राप्ते गुडसर्पिर्युतानि च ।
त्रयस्त्रिंशदपूपानि दातव्यानि दिने दिने ॥
अधिमासे तु संप्राप्ते त्रयस्त्रिंशत्तु देवताः ।
उद्दिश्यापूपदानेन पृथ्वीदानफलं लभेत् ॥
त्रयस्त्रिंशदपूपान्नं कांस्यपात्रे निधाय च ।
सघृतं सहिरण्यं च ब्राह्मणाय निवेदयेत् ॥
विष्णुरूपी सहस्रांशुः सर्वपापप्रणाशनः ।
अपूपान्नप्रदानेन मम पापं व्यपोहतु ॥
नारायण जगद्बीज भास्करप्रतिरूपक ।
व्रतेनानेन पुत्रांश्च सम्पदं चाभिवर्द्धय ॥
यस्य हस्ते गदाचक्रे गरुडो यस्य वाहनं ।
शङ्खः करतले यस्य स मे विष्णुः प्रसीदतु ॥
कलाकाष्ठादिरूपेण निमेषघटिकादिना ॥
यो वञ्चयति भूतानि तस्मै कालात्मने नमः ।
कुरुक्षेत्रमयं देशः कालः पर्व द्विजो हरिः ॥
पृथ्वीसममिदं दानं गृहाण पुरुषोत्तम ।
मलानां च विशुद्ध्यर्थं पापप्रशमनाय च ॥
पुत्रपौत्राभिवृद्ध्यर्थं तव दास्यामि भास्कर ।
मन्त्रेणानेन यो दद्यात्त्रयस्त्रिंशदपूपकान् ॥
प्राप्नोति विपुलां लक्ष्मीं पुत्रपौत्रादिसंपदः ।

इति मलमासनिर्णयः ।

---

## अथर्तुनिर्णयः ।

स च षड्विधो मासद्वयात्मकश्चान्द्रः सौरश्च । वसन्तो ग्रीष्मो वर्षाः

शरद्धेमन्तः शिशिर इति । 'षड्वा ऋतवः' इतिश्रुतेः । यत्तु श्रुतौ द्वादश मासाः पञ्चर्तव इत्युक्तं , तत्र पञ्चप्रयाजानुरोधेन हेमन्तशिशिरयोरेकीकरणं विवक्षितम् । ते च वसन्तोपक्रमाः । 'मुखं वा एतदृतूनां यद्वसन्त' इतिश्रुतेः । मासद्वयात्मकत्वं चाग्निचयनेष्टकोपधानब्राह्मणे । द्वन्द्वमुपदधाति तस्माद्द्वन्द्वमृतव इति वसन्तादृतुक्रमेण चैत्रमासादिद्वन्द्वमिति । 'मधुश्च माधवश्च वासन्तिकावृतू' इति श्रुतेः । ननु कदाचिदधिमासे सति मासत्रयात्मकः कश्चिदृतुर्भवति तत्कथं मासद्वयात्मक इति चेन्न । अधिमासस्य षष्टिदिनात्मकमासावयवत्वस्य प्रतिपादितत्वात् । अयं चान्द्रः । सौरोऽप्युक्तो रत्नमालायाम्—

मृगादिराशिद्वयभानुभोगात्षडृतवः स्युः शिशिरो वसन्तः ।
ग्रीष्मश्च वर्षाश्च शरच्च तद्वद्धेमन्तनामा कथितोऽत्र षष्ठः ॥ इति ।

इत्यृतुनिर्णयः ।

---

## अथायनम् ।

यत्तु, 'ऋतुत्रयात्मकं सौरमेव'तदुक्तं दीपिकायाम् । 'सौरर्तुत्रितयं प्रदिष्टमयनं च' इति । 'ऋतुत्रयं चायनं स्यात्' इति मदनरत्ने विष्णुधर्मोक्तेश्च । तद्द्विविधम् । उत्तरं दक्षिणं च । शिशिरादुत्तरम् । वर्षादि दक्षिणम् । तदुक्तं रत्नमालायाम्—

शिशिरपूर्वमृतुत्रयमुत्तरं ह्ययनमाहुरहश्च तदामरम् ।
भवति दक्षिणमन्यदृतुत्रयं निगदिता रजनी मरुतां च सा ॥इति।

श्रुतिरपि 'तस्मादादित्यः षण्मासान् दक्षिणेनैति षडुत्तरेण' इति । अनयोरुपयोगमाह माधवीये कण्वः 'उदगयन आपूर्यमाणपक्षे पुण्याहे द्वादशाहमुपवसेद्व्रती भूत्वा' इत्यादि ।

सत्यव्रतोऽपि—

देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ ।
दक्षिणाशामुखे कुर्वन्न तत्फलमवाप्नुयात् ॥ इति ।

वैखानससंहितायाम्—

मातृभैरववाराहनरसिंहत्रिविक्रमाः ।
महिषासुरहन्त्री च स्थाप्या वै दक्षिणायने ॥ इति ।

मदनरत्ने ज्योतिःशास्त्रे—

गृहप्रवेशत्रिदशप्रतिष्ठाविवाहचौलव्रतबन्धपूर्वम् ।
सौम्यायने कर्म शुभं प्रदिष्टं यद्गर्हितं तत्खलु दक्षिणे च ॥ इति ।

इत्ययननिर्णयः ।

---

## अथ संवत्सरः ।

स च मासत्रैविध्यात्त्रिविध इति हेमाद्रिः । अत एव ब्रह्मसिद्धान्ते—

चान्द्रसावनसौराणां मासानां तु प्रभेदतः ।
चान्द्रसावनसौराः स्युस्त्रयः संवत्सरा इति ।

तत्र चान्द्रसंवत्सरश्चैत्रशुक्लप्रतिपदादिः फाल्गुनदर्शान्तः । सौरस्तु रवेर्द्वादशराशिभोगेन । सावनः षष्ट्युत्तरशतत्रयाहोरात्रात्मकः । आद्य उक्तो ब्रह्मपुराणे—

चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि ।
शुक्लपक्षे समग्रं तु तदा सूर्योदये सति ॥ इति ।

आर्ष्टिषेणोऽपि—

स्मरेत्सर्वत्र कर्मादौ चान्द्रं संवत्सरं सदा ।
नान्यं यस्माद्वत्सरादौ प्रवृत्तिस्तस्य कीर्तिता ॥ इति ।

इमे चारम्भसमाप्ती कर्माङ्गस्मरण एवोपयुज्येते । वस्तुतस्तु । 'मासान्तरस्थतिथ्यन्तरमारभ्य वर्षान्तरस्थतत्पूर्वभावितिथ्यन्तोऽपि वत्सरश्चान्द्र एव । चन्द्रकलारूपतिथिघटितत्वात् । अन्यानपि भेदानाह नारदः—

प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापतिः ।
अङ्गिराः श्रीमुखो भावो युवा धाता तथैव च ॥
ईश्वरो बहुधान्यश्च प्रमाथी विक्रमो वृषः ।
चित्रभानुः सुभानुश्च तारणः पार्थिवो व्ययः ॥
सर्वजित्सर्वधारी च विरोधी विकृतिः खरः ।
नन्दनो विजयश्चैव जयो मन्मथदुर्मुखौ ॥
हेमलम्बो विलम्बोऽथ विकारी शार्वरी प्लवः ।
शुभकृच्छोभनः क्रोधी विश्वावसुपराभवौ ॥
प्लवङ्गः कीलकः सौम्यः साधारणविरोधकृत् ।
परिधावी प्रमाथी च आनन्दो राक्षसो नलः ॥

पिङ्गलः कालयुक्तश्च सिद्धार्थी रौद्रदुर्मती ।
दुन्दुभी रुधिरोद्गारी रक्ताक्षी क्रोधनः क्षयः ॥

एताश्च संज्ञा यद्यपि ज्योतिःशास्त्रे बार्हस्पत्यस्यैवोक्तास्तथापि चान्द्राणां प्रभवादीनामिति चान्द्रस्यैव प्रभवादिनामभिर्व्यवहाराच्छिष्टाचाराच्च मासपक्षादिवत् प्रभवादिश्चान्द्रः संवत्सरोऽपि सङ्कल्पादौ सङ्कीर्त्यः । ज्योतिःशास्त्रे बार्हस्पत्यनाक्षत्रावपि वत्सरावुक्तौ । तत्र बृहस्पतेर्मध्यममानेन एकराशिभोगो बार्हस्पत्यः । सप्तविंशतिनक्षत्रपरिवृत्त्या एको मासः तैर्द्वादशभिर्नाक्षत्रो वत्सरः । अनयोस्तु धर्मशास्त्रे न कोऽप्युपयोगः ।

इति संवत्सरनिर्णयः ।

---

## अथ जन्मतिथिकृत्यम् ।

तन्मलमासे न कर्तव्यं चान्द्रमासीयत्वेन सावकाशात् । ब्रह्मपुराणे—

सर्वैश्च जन्मदिवसे स्नातैर्मङ्गलपाणिभिः ।
गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः ॥
स्वनक्षत्रं च पितरस्तथा देवः प्रजापतिः ।
प्रतिसंवत्सरं चैव कर्तव्यश्च महोत्सवः ॥

स्नातैस्तिलस्नातैः । तथा च तिथिमधिकृत्य—

तिलस्नायी तिलोद्वर्ती तिलहोमी तिलप्रदः ।
तिलभुक् तिलवापी च षट्तिली नावसीदति ॥

मङ्गलपाणिभिः । अभिप्रेतार्थसिद्धिहेतुतया गोरोचनादिकं मङ्गलं तत्पाणिभिः । तथा च कृत्यचिन्तामणौ—

गुडदुग्धतिलान्नाद्याज्जन्मग्रन्थेश्च बन्धनम् ।
गुग्गुलं निम्बसिद्धार्थं पूर्वं गोरोचनायुतम् ॥
संपूज्य भानुविप्रेभ्यो महर्षिं प्रार्थयेदिदम् ।
चिरञ्जीवी यथा त्वं भो भविष्यामि महामुने ॥
रूपवान् वित्तवांश्चैव श्रिया युक्तश्च सर्वदा ।
मार्कण्डेय महाभाग सप्तकल्पान्तजीवन ॥
आयुरिष्टार्थसिध्यर्थमस्माकं वरदो भव ।

स्वनक्षत्रं जन्मकालीनम् । नामकरणे तथा दर्शनात् । तथा श्रीपतिरत्नमालायाम्—

नववस्त्रधरो भूत्वा पूजयेच्च चिरायुषम् ।
द्विभुजं जटिलं सौम्यं सुवृद्धं चिरजीविनम् ॥
मार्कण्डेयं नरो भक्त्या पूजयेत्प्रयतस्तथा ।
ततो दीर्घायुषं व्यासं रामं द्रौणिं कृपं बलिम् ॥
प्रह्लादं च हनूमन्तं विभीषणमथार्चयेत् ।
षष्ठीं च दधिभक्तेन वर्षे वर्षे पुनः पुनः ॥

रामः परशुरामः । द्रौणिरश्वत्थामा । ततस्तिलहोमः पूजितदेवतानामम- मन्त्रैः स्वाहान्तैः कार्यः । देवीपुराणे—

होमो ग्रहादिपूजायां शतमष्टोत्तरं भवेत् ।
अष्टाविंशतिरष्टौ वा यथाशक्ति विधीयते ॥

ततो गुडदुग्धतिलपानम् । तत्र मन्त्रः—

सगुडं तिलसंमिश्रमञ्जल्यर्द्धमितं पयः ।
मार्कण्डेयवरं लब्ध्वा पिबाम्यायुषहेतवे ॥ इति ।

स्कान्दे—खण्डनं नखकेशानां मैथुनाध्वगमौ तथा ।
आमिषं कलहं हिंसां वर्षवृद्धौ विवर्जयेत् ॥

कलहमित्यत्र सङ्करमिति क्वचित्पाठः । वृद्धमनुः—

मृते जन्मनि सङ्क्रान्तौ श्राद्धे जन्मदिने तथा ।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥

जन्मनि पुत्रजन्मनि । ज्योतिषे—

स्नात्वा जन्मदिने स्त्रियं परिहरन्प्राप्नोत्यभीष्टं फलं
मत्स्यान्मोचयतो द्विजाय ददतोऽप्यर्थश्चिरं वर्द्धते ।
सक्तून्खादति यश्च तस्य रिपवो नाशं प्रयान्ति ध्रुवं
भुङ्क्ते यस्तु निरामिषं स हि भवेज्जन्मान्तरे पण्डितः ॥

जन्मतिथेः खण्डत्वे तु देवीपुराणे—

घस्रद्वये जन्मतिथिर्यदा स्यात्पूज्या तदा जन्मभसंयुता च ।
असंस्कृता भेन दिनद्वयेऽपि पूज्या परा या भवतीह तन्त्रम् ॥

उभयदिने जन्मनक्षत्रलाभे तु पूर्वाह्णव्यापिनी ग्राह्या । तस्य कर्म- कालत्वात् ।

## अथ केचिन्निषेधाः ।

केषुचित्पदार्थेषु वर्ज्यतिथयः ।

सिंहादित्ये शुक्लपक्षे चतुर्थ्यां चन्द्रदर्शनम् ।
मिथ्याभिदूषितं कुर्यात्तस्मात्पश्येन्न तं सदा ॥
सप्तम्यां न स्पृशेत्तैलं नीलवस्त्रं न धारयेत् ।
न चाप्यामलकैः स्नायान्न कुर्यात्कलहं नरः ॥
निम्बस्य भक्षणं तैलं तिलैस्तर्पणमञ्जनम् ।
सप्तम्यां नैव कुर्वीत ताम्रपात्रे च भोजनम् ॥

स्कान्दे— शिरःकपालमन्त्राणि नखचर्मतिलास्तथा ।
एतानि क्रमशो नित्यमष्टम्यादिषु वर्जयेत् ॥

शिरः नालिकेरम् । कपालमलाबु । अन्त्राणि पटोलम् । नखं निष्पावाः । चर्म मसूरिकाः । तिला वृन्ताकमिति हेमाद्रौ । चतुर्विंशतिमते तु 'यदीच्छेदूर्ध्वगमनमष्टम्यादिषु वर्जयेत्' इति उत्तरार्द्धे पठितम् । व्यासः—

षष्ठ्यष्टमी अमावास्या पक्षद्वयचतुर्दशी ।
अत्र संनिहितं पापं तैले मांसे क्षुरे भगे ॥

गार्ग्यः— त्रयोदश्यां तृतीयायां प्रतिपद्दशमीद्वये ।
तैलाभ्यङ्गं न स्पृशेद्वा द्वादशीं नवमीं तथा ॥
मोहात्प्रतिपदं षष्ठीं कुहूं रिक्तां तिथिं तथा ।
तैलेनाभ्यञ्जयेद्यस्तु चतुर्भिः परिहीयते ॥

व्यासः— आदित्यादिषु वारेषु तापः कीर्तिर्मतिर्धनम् ।
दारिद्र्यं दुर्भगत्वं च कामाप्तिः स्नानतः क्रमात् ॥

अत्र प्रतिप्रसवमाह प्रचेताः—

सार्षपं गन्धतैलं च यत्तैलं पुष्पवासितम् ।
अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन ॥

निषिद्धतिथिष्वपि शुभवारयोगे तैलस्नानं कार्यम् । तिथ्यपेक्षया वारस्य प्रबलत्वात् । तदुक्तं ब्रह्मसिद्धान्ते—

तिथिरेकगुणा प्रोक्ता नक्षत्रं च चतुर्गुणम् ।
करणं षड्गुणं चैव वारस्त्वष्टगुणः स्मृतः ॥

वामनपुराणे—

नन्दासु नाभ्यङ्गमुपाचरेत
क्षौरं च रिक्तासु जयासु मांसम् ।
पूर्णासु योषित्परिवर्जनीया
भद्रासु सर्वाणि समारभेत ॥ इति ।

अत्र नन्दानिषेधादेव षष्ठीनिषेधे सिद्धे पुनस्तद्ग्रहणं दोषाधिक्यार्थमिति द्वैतनिर्णये तातचरणाः । व्यासः—

सङ्क्रान्त्यां पञ्चदश्यां च द्वादश्यां श्राद्धवासरे ।
वस्त्रं निष्पीड्यते नैव क्षुरेणापि न हिंस्यते ॥

वस्त्रनिष्पीडनं यत्तर्पणान्ते तस्य निषेधः । स एव—

तैलं च न स्पृशेदामं वृक्षान्वै छेदयेन्न च ।
पक्षादौ च रवौ षष्ठ्यां रिक्तायां च हरेस्तिथौ ॥

आमं नीलतृणम् । वामनपुराणे—

नाभ्यङ्गमर्के न च भूमिपुत्रे
क्षौरं च शुक्रे च कुजे च मांसम् ।
बुधे च योषां न समाचरेत
शेषेषु सर्वाणि सदैव कुर्यात् ॥
चित्रासु हस्ते श्रवणे च तैलं
क्षौरं विशाखाप्रतिपत्सु वर्ज्यम् ।
मूले मृगे भाद्रपदेषु मांसं
योषिन्मृगाकृत्तिकसोत्तरेषु ॥ इति ।

हारीतः—तैलं मांसं भगं क्षौरं पर्वकालेषु वर्जयेत् ॥

तथा— अश्वत्थसागरौ सेव्यौ न स्प्रष्टव्यौ कदाचन ।
अश्वत्थं मन्दवारे तु समुद्रं पर्वणि स्पृशेत् ॥

वाराहे— चतुर्दश्यां तथाऽष्टम्यां पञ्चदश्यां च पर्वसु ।
तैलाभ्यङ्गं तथा भोगं योषितश्च विवर्जयेत् ॥
न मृत्ख गोमयं चापि न निशायां तु गोमयम् ।
गोमूत्रं च प्रदोषे च गृह्णीयाद्बुद्धिमान्नरः ॥

सन्ध्यावर्ज्यान्याह मनुः—

चत्वारीमानि कर्माणि सन्ध्यायां परिवर्जयेत् ।

आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम् ॥
आहाराज्जायते व्याधिर्गर्भद्रावश्च मैथुनात् ।
निद्रातो जायतेऽलक्ष्मीः स्वाध्यायादायुषः क्षयः ॥

इति कालविशेषे वर्ज्यानि ।

---

## अथ क्षौरे निषिद्धकालः ।

पञ्चदश्यां चतुर्दश्यामष्टम्यां च विशारदः ।
तैलं मांसं व्यवायं च क्षुरं च परिवर्जयेत् ॥ इति ।

यमः— तथा सितास्वष्टमीषु भूताहेन्दुक्षये तथा ।
तैलाभ्यङ्गं क्षौरकर्म स्त्रीसङ्गं चैव वर्जयेत् ॥

व्यासः— क्षौरे शनैश्चरादित्यभौमाहोरात्रमेव च ।
तथा प्रतिपदं रिक्तां तिथिं च परिवर्जयेत् ॥

अहोरात्रग्रहणम् 'न वारदोषाः प्रभवन्ति रात्रौ' इति वचनबाधार्थम् । हेमाद्रौ ज्योतिःशास्त्रे—

नाभ्यक्तभुक्तरणकालनिरासनानां
न स्नातसुप्तगमनांशुकभूषितानाम् ।
सन्ध्यानिशार्ककुजसौरिदिनेश्वराणां
क्षौरं हितं भवति चाह्नि न चापि षष्ठयाम् ॥

अह्नीत्यहोरात्रोपलक्षणम् । मार्कण्डेयः—

अष्टमी च तथा षष्ठी नवमी च चतुर्दशी ।
क्षुरकर्मणि वर्ज्या च पर्वसन्धिस्तथैव च ॥

वृद्धगार्ग्यः—

मीने धनुषि सिंहे च स्थिते सप्ततुरङ्गमे ।
क्षौरमत्र न कर्तव्यं विवाहं गृहकर्म च ॥ इति ।

श्मश्रुकर्मणि मरीचिः—

निरासनस्य सुप्तस्य तिष्ठतश्च तथैव च ।
सायं भुक्तवतश्चैव स्नातस्य रुषितस्य च ॥
यात्रायुद्धोद्यतस्यापि श्मश्रुकर्म विवर्जयेत् ।

---

## अथ मांसे निषिद्धकालः ।

हेमाद्रौ नन्दीपुराणे—

यदि नाम चतुर्दश्यां सदा मांसं विवर्जयेत् ।
वर्जयेदयने मुख्ये कृतस्वर्गमतिर्नरः ॥
चतुर्थी चाष्टमी चैव द्वादशी च चतुर्दशी ।
तथा पञ्चदशी वार्या षडशीतिमुखानि च ॥
सङ्क्रमे चापि सूर्यस्य विषुवे चापि वार्षिके ।
मांसात्तु विरतो मर्त्यो याति स्वर्गं दिनत्रयम् ॥ इति ।

सङ्क्रमादयनविषुवतोर्ग्रहणं दोषातिशयार्थम् । वार्षिके वर्षाकालसंबन्धिमासचतुष्टये । दिनत्रयमपि वार्षिके विरत इति संबन्धः ।

अथवाऽऽश्वयुजं मासं वर्जयेन्मांसभक्षणे ।
बहुमासकृतं पुण्यं लभेताश्वयुजान्नरः ॥

अन्यत्र मासत्रयपर्यन्तं मांसत्यागे यत्फलं तत्प्राप्नोतीत्यर्थः ।

यो नरः कार्तिके मासि मांसं तु परिवर्जयेत् ।
संवत्सरस्य लभते पुण्यं मांसविवर्जनात् ॥

---

## अथ कलिवर्ज्यानि ।

आदित्यपुराणे—यस्तु कार्त्तयुगो धर्मो न कर्तव्यः कलौ युगे ।
पापप्रयुक्ताश्च सदा कलौ नार्यो नराः सदा ॥ इति ।

कार्तयुगः कृतयुगसंबन्धी । हेमाद्रौ माधवीये च—

विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम् ।
बालिकाक्षतयोन्याश्च वरेणान्येन संस्कृतिः ॥

विधवायां वाग्दानानन्तरं देवरस्य नियोजनम् ।

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ॥
तामनेन विधानेन निजो विन्देत देवरः ।
अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ॥
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ।

इति मनुयाज्ञवल्क्याभ्यामुक्तं निषिद्ध्यते । न तु विवाहानंतरं विधवायां 'नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः' इति मनुना तन्निषेधात् । वरेणान्येन संस्कृतिरिति न देवरनियोजनपरम्

पूर्वेण पौनरुक्त्यात् । बालिका सङ्कल्पदत्ता न वाग्दत्ता । तदानीं क्षतयोनित्वशङ्काया अभावात् । इदं च विज्ञानेश्वरेण, 'दत्तामपि हरेत्पूर्वाच्छ्रेयांश्चेद्वर आव्रजेत्' इत्यनेन सप्तपद्युपक्रमणात्प्रागन्यदन्यस्मै दानमुक्तं तद्विषयमिति ध्येयम् ।

तथा— कन्यानामसवर्णानां विवाहश्च द्विजातिषु ॥ इति ।

तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ।
ब्राह्मणक्षत्रियविशां भार्या स्वा शूद्रजन्मनः ॥

इति विहितः । तथा—

आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनम् ॥ इति ।

द्विजाग्र्याणां विप्राणाम् । आततायिनमायान्तं हन्यादेवाविचारयन्निति विहितं संमुखं कूटशस्त्रेण मारणम् । एतेन 'नाततायिवधे दोषोऽन्यत्रगोब्राह्मणेभ्यः' इति सुमंतुवाक्यं कलिविषयमेवेति सिद्धम् ।

तथा— द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः ।
सत्रदीक्षा च सर्वेषां कमण्डलुविधारणम् ॥

इति सत्रदीक्षानिषेधमुखेन सत्राधिकार एव विप्राणां पर्युदस्यते । 'अथ कमण्डलुचर्यामुपदिशन्ति' इत्यादिबौधायने सेतिकर्तव्यताकं सोदकं च कमण्डलुमिति स्नातकस्य विहितं मृन्मयस्य काष्ठमयस्य वा कमण्डलोर्धारणम् । अन्ये तु कमण्डलुधारणमित्यनेन वानप्रस्थाश्रम एव लक्ष्यत इत्याहुः । तन्न, बृहन्नारदीये उभयोरपि भिन्नत्वेनोपादानात् ।

तथा— महाप्रस्थानगमनं गोसंज्ञप्तिश्च गोसवे ॥ इति ।

महाप्रस्थानगमनमुत्तरदिशागमनम् । गोसवो यज्ञविशेषः ।

तथा— सौत्रामण्यामपि सुराग्रहणस्य च संग्रहः ॥ इति ।

अग्निहोत्रहवण्याश्च लेहो लीढापरिग्रहः ।

लेहो जिह्वयास्वादनं कथंचित् लीढायाः परिग्रहः । पुनर्होमसाधनत्वम् ।

तथा— वानप्रस्थाश्रमस्यापि प्रवेशो विधिशोधितः ।
वृत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथा ॥ इति ।

वृत्तमग्निहोत्रपरिचर्यादि ।

वेदाग्नियुक्तविप्रस्य त्र्यहमाशौचमिष्यते ।

इति देवलवचनविहितम् ।

तथा— प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम् ॥ इति ।

कामकृते पापादौ—

न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृते ॥

इति विहितस्य विधानमुपदेशः । एवं च 'मतिपूर्वमनिर्देश्यं प्राणान्तिकमितिस्थितिः' इति मनुवाक्यमेतद्युगविषयमेव । एकमूलकल्पनालाघवात् ।

संसर्गदोषः स्तेयान्यमहापातकनिष्कृतिः । इति ।

त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ।
द्वापरे कुलमेकं तु कर्तारं तु कलौ युगे ॥

इति पाराशरवचनेन संलापादिनवविधसंसर्गाभावेऽपि विहितस्य देशादित्यागस्य निषेधः । यद्वा—

कृते संभाष्य पतति त्रेतायां स्पर्शनेन तु ।
द्वापरे त्वन्नमादाय कलौ कर्तैव लिप्यते ॥

इत्यनेन संभाषणस्पर्शनादिजन्यपातित्यस्यैव निषेधः, न तु पतितेन सह संवत्सरं नवविधसंस्पर्शे प्राप्तस्य पातित्यस्य; पूर्वोक्तवचनद्वयबाधमात्रेण चरितार्थस्य नवविधसंसर्गनिषेधप्रतिपादकानेकवाक्यबाधस्यान्याय्यत्वात् । 'कलौ पतति कर्मणा' इति वाक्यस्वारस्येन पतितसंसर्गरूपकर्मजन्यस्य पातित्यस्य दुर्निवारत्वाच्च । अतश्चेदानीन्तनानां संसर्गप्रायश्चित्तानुष्ठानाचारः स्वाचार एव । स्तेयान्यमहापातकेषु निष्कृतिः रहस्यप्रायश्चित्तं निषिध्यते । अत्र केचित् स्तेयान्यमहापातके प्रायश्चित्तमेव कलौ न भवतीत्याहुः । तन्न, परशरस्मृतौ महापातकिनामपि प्रत्येकं प्रायश्चित्तविधानात् ।

कृते तु मानवा धर्मास्त्रेतायां गौतमाः स्मृताः ।
द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृताः ॥

इत्यनेनान्यस्मृतिविरोधे विकल्पप्रसक्तौ स्मृत्यन्तरीयविशेषशास्त्रेण च बाधप्रसक्तौ पराशरस्मृतेः कलौ बलीयस्त्वनियमेन स्तेयान्येत्यस्या बाधात् । न च बाधे विषयान्तरासम्भवादप्रामाण्यापत्तिः । 'औदुम्बरीं स्पृष्ट्वोद्गायेद्' इति श्रुत्या बाधिताया 'औदुंबरी सर्वा वेष्टयितव्या' इति स्मृतेर्द्वित्राण्यङ्गुलानि मुक्त्वा सर्वा वेष्टयितव्येतिन्यायसुधाकारोक्तात्पर्यकल्पनवदिहापि स्तेयान्यमहापातकनिष्कृतिर्नोपदेश्या। कृतायामपि निष्कृतौ संसर्गो न कर्तव्यः इति तात्पर्यकल्पनात् । वस्तुवस्तु मनुवाक्येनोपदेशनिषेधस्य सिद्धत्वात्, ब्राह्मणभोजनविधिविरो-

धाच रहस्यप्रायश्चित्तं निष्कृतिर्न भवतीति कल्प्यम् । अत एव तत्र तत्र रहस्यप्रायश्चित्तं निन्दितं 'तस्मात्प्रकाशयेत्पापम्' इत्यादि चोक्तम् । न चैवं स्तेयपर्युदासोऽसङ्गतः । तस्य कलावनायासेन स्तेयनिष्पत्त्यां प्रतिनिमित्तमुपदेशासम्भवेन रहस्यप्रायश्चित्ताभ्यनुज्ञानार्थत्वात् ।

तथा—वरातिथिपितृभ्यश्च पशूपाकरणक्रिया ॥ इति ।

वरस्य प्राजापत्योऽतिथेराग्नावैष्णव इति यागविधिः । 'वाध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी' इत्यादिवचनकदम्बकेन त्रिष्वपि प्राप्तिः । अत्र श्राद्धे पशुयागाभावेन तद्धर्मानतिदेशादुपाकरणाप्राप्तेः पशूपाकरणलक्षितं तत्प्रकृतिकं पितृभ्यो मांसदानं निषिध्यते । तथाच 'श्राद्धेमांसम्' इत्यनेनैकमूलत्वान्न कल्पनागौरवम् ।

तथा— दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ।
सवर्णान्याङ्गनादुष्टैः संसर्गः शोधितैरपि ॥

सवर्णान्या असवर्णा या अङ्गनास्ताभिर्दुष्टैस्तत्संस्पृष्टैः कृतप्रायश्चित्तैरपि संसर्गः । इदं चोत्तमवर्णविषयमेवेति युक्तमुत्पश्यामः ।

तथा—अयोनौ संग्रहे वृत्ते परित्यागो गुरुस्त्रियाः ॥ इति ।
चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या ।
पतिघ्नी च विशेषेण जुङ्गितोपगता च या ॥

इत्यादिना विहितः । अनेन युगान्तरे अयोनौ संसर्गे परित्यागः इति गम्यते ।

तथा— परोद्देश्यात्मसंत्याग उच्छिष्टस्यापवर्जनम् ।
'गवार्थे ब्राह्मणार्थे वा सद्यःप्राणान्परित्यजेत्'

ति विहितः । 'स्वमुच्छिष्टमुच्छिष्टोपहतं च' इति वसिष्ठाद्युक्तं तन्निमित्तं प्रायश्चित्तं वेति केचित् ।

विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ।
प्रादेशनं निर्वपणमपवर्जनमंहतिः ॥

इति त्रिकाण्डीस्मरणात् अपवर्जनं दानम् । 'ब्राह्मणायोदङ्ङुच्छिष्टं प्रयच्छेत्' इत्यादिना मधुपर्कादिविहितमिति भ्रातृचरणाः ।
प्रतिमाभ्यर्चनार्थाय सङ्कल्पश्च सधर्मकः ।
'इयमेव प्रतिमा यावज्जीवं मया पूजनीया' इत्येवमादिः ।

अस्थिसंचयनादूर्ध्वमङ्गस्पर्शनमेव च ।
शामित्रं चैव विप्राणां सोमविक्रयणं तथा ॥

शामित्रं यज्ञे स्वयमेव पशुमारणम् ।

षड्भक्तानशनेनान्नहरणं हीनकर्मणः ।

षड्भक्तानशनमुपवासत्रयम् । 'बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत्' इति विहितम् ।

शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणाम् ।
भोज्यान्नता गृहस्थस्य तीर्थयात्राऽतिदूरतः ॥

गृहस्थस्य आहिताग्नेरिति केचित् ।

तथा— शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिरीरिता ।
'गुरुवत्प्रतिपूज्यास्तु सवर्णा गुरुयोषितः'

इति मनूक्ता ।

तथा—आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकता तथा । इति ।
'क्षात्रेण कर्मणा जीवेद्विशां वाप्यापदि द्विजः ॥'

'त्र्याहिकोऽश्वस्तनोऽपि वा' इत्युक्ता ।

तथा— प्रजार्थं तु द्विजाग्र्याणां जातारणिपरिग्रहः ।
ब्राह्मणानां प्रवासित्वं मुखाग्निधमनक्रिया ॥

प्रवासशीलत्वं 'वृथा तु न चिरं वसेत्' इति स्मरणादिति केचित् ।

तथा— बलात्कारादिदुष्टस्त्रीसङ्ग्रहो विधिनोदितः ।
यतेस्तु सर्ववर्णेषु भिक्षाचर्या विधानतः ॥
नवोदके दशाहं च दक्षिणा विधिचोदिता ॥ इति ।

'दशरात्रेण शुद्ध्यन्ति भूमिष्ठं च नवोदकम्' इति विहितं 'गुरवे तु वरं दत्वा स्नायीत तदनुज्ञया' इति विहितं दक्षिणादानम् ।

तथा— ब्राह्मणादिषु शूद्रस्य पचनादिक्रियापि च ।

'आर्याधिष्ठिता वा शूद्राः संस्कर्त्तारः स्युः' इत्यापस्तम्बविहिता ।

तथा— भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथा ॥ इति ।

अत्र मूलम्—

वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः ।

इत्यादिविज्ञानेश्वरग्रन्थाद्द्रष्टव्यम् ।

गोतृप्तिशिष्टे पयसि शिष्टैराचमनक्रिया ।
पितापुत्रविरोधे च साक्षिणां दण्डकल्पनम् ॥

साक्षिणां समाधातॄणां च ।

पितापुत्रविरोधे तु साक्षिणां त्रिगुणो दमः ।
अन्तरे च तयोर्यः स्यात्तस्याप्यष्टगुणो दमः ॥

इति विहितम् ।

यत्रसायंगृहत्वं च मुनिभिस्तत्वदर्शिभिः ।

यत्र सायंकालो जातस्तत्रैव संन्यासिनामवस्थानम् ।

एतानि लोकगुप्त्यर्थं कलेरादौमहात्मभिः ।
निवर्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः ॥
समयश्चापि साधूनां प्रमाणं वेदवद्भवेत् ।

ब्रह्मपुराणे—

दीर्घकालं ब्रह्मचर्यं धारणं च कमण्डलोः ।
गोत्रान्मातृसपिण्डाच्च विवाहो गोवधस्तथा ॥
नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः ।

दीर्घकालमिति कालपदोपादानबलात् 'अष्टाचत्वारिंशद्वर्षाणि वेद-ब्रह्मचर्यम्' इति श्रुत्युक्तम् । अन्यथा दीर्घं ब्रह्मचर्यमित्येवाचक्षीत । एतेन 'ब्रह्मव्रतं नैष्ठिकम्' इति रामचन्द्राचार्योक्तिः परास्ता । अत एव द्राविडानां नैष्ठिकब्रह्मचर्याचारः सङ्गच्छते । कमण्डलुधारणं व्याख्यातम् । गोत्रादित्यनेन स्वगोत्रोत्पन्नायाः पितृष्वसुर्मातृसपिण्डादित्यनेन मातुल-गोत्रसापिण्ड्ययोः सामान्यनिषेधेनैव प्राप्त्यभावान्मातुलकन्यापरिणयनं निषिद्ध्यते । तेन मातुलकन्यापरिणयननिषेधकानि वाक्यानि कलि-विषयाण्येव । अत एवाधुनिकानां तदाचारोऽप्यनाचार एव । कृष्णार्जुना-दीनां तु युगान्तरीयत्वात्सदाचार एव । अत एव व्यासेन कलिनिन्दा-प्रक्रमे—

तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा ।
शुल्केन चोद्वहिष्यन्ति विप्राः पापविमोहिताः ॥

इत्युक्तम् । बौधायनेन च 'मातुलपितृष्वसृदुहितृगमनम्' इति दाक्षिणानाचारेषु गणितम् । गोवधो मधुपर्कादौ । नरमेधः 'ब्रह्मणे ब्राह्मणमालभेत' इत्यादि । मद्यं गौडीमाध्वीरूपं क्षत्रियवैश्ययोर्निषि-ध्यते । तस्माद् 'ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्' इत्यनेन सुराया द्विजात्यवच्छेदेन निषेधस्य सिद्धत्वात् । यद्वा वामागमादौ त्रैव-

र्णिकादिपुरस्कारेण विनायकशान्त्यादौ क्षत्रियादिपुरस्कारेणोक्तं च निषिध्यते । क्रतुः—

देवराच्च सुतोत्पत्तिर्दत्ता कन्या न दीयते ।
न यज्ञे गोवधः कार्यः कलौ न च कमण्डलुः ॥

'विधवायां प्रजोत्पत्तौ' इत्यनेन समानार्थकं पूर्वार्द्धम् । आदित्यपुराणे—

ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधस्तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् ॥

ज्येष्ठांशं विषमभागम् । भ्रातृजायां जायामिति शेषः । दानहेमाद्रौ गारुडपुराणे—

न कलौ क्रियते ह्यश्वमेधो वाप्यथ गोसवः ।
नरमेधोऽक्षता नारी देवरात्पुत्रसन्ततिः ॥
गर्हितं सप्तकं ह्येतद्राजसूयकमण्डलू ।

श्राद्धदीपिकायां मदनपारिजाते च निगमः—

अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥

यथा वेदिबर्हिर्धर्माणां(?)प्रधानसम्बन्धिमात्रांशे विधिर्न तु तादर्थ्यांशे प्रमाणाभावात्तद्वत् 'श्राद्धे मांसम्' इत्यत्र श्राद्धसम्बन्धिक्रत्वर्थे पुरुषार्थे च निषिद्ध्यते । अविशेषात् । पञ्चेत्यत्र न परिसङ्ख्या, दोषत्रयापत्तेः पूर्वोक्तानेकवाक्यानर्थक्यापत्तेश्च । अतः प्रदर्शनार्थमेतद्वचनोपात्तत्वोपाधिना पञ्चत्वोपपत्तिः । आदित्यपुराणे—

शपथाः शकुनाः प्रश्नाः सामुद्रिकमुपश्रुतिः ।
उपयाचितमेतानि संभवन्ति कलौ क्वचित् ॥
तस्मात्तन्मात्रलाभेन कलौ कार्यं न कारयेत् ।

विश्वेश्वरपद्धतौ व्यासः—

चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च ।
कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः ॥
संन्यासश्च न कर्तव्यो ब्राह्मणेन विजानता ॥ इति ।

अत्र त्रेतापरिग्रह इति वदता सर्वाधानमेव निषिद्ध्यते । अत एव

१ तथा वेदबहिर्धर्माणां, यथार्कोदेवर्हिर्धर्माणां इति च पाठः ।

लौगाक्षिः—

अर्द्धाधानं स्मृतं श्रौतस्मार्ताभ्योस्तु पृथक्कृतिः ।
सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रिता ॥ इति ।

युगस्य पूर्वं पूर्वयुगं कलेः पूर्वभाग इत्यर्थः । अर्द्धाधानमपि यावद्वर्णवेदविभागं कार्यम् । तदाह देवलः—

यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते ।
संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे ॥ इति ।

यद्यपि संन्यासस्य चतुश्चत्वारिंशच्छताब्दावधिकत्वं व्यासेनोक्तं तथापि गौणकालोऽनेन समर्थ्यत इति केचित् । त्रिदण्डैकदण्डाभिप्रायेण व्यवस्थेत्यपरे । सामान्यतो निषिद्धस्य व्यासवाक्येनोपसंहार इत्यन्ये । वस्तुतस्तु 'चत्वार्यपि' इत्यादीनि वचनानि महानिबन्धेषु न दृश्यन्ते ।

इति कलिवर्ज्यनिर्णयः ।

इति श्रीमीमांसकशङ्करभट्टात्मजनीलकण्ठकृते भगवद्भास्करे समयमयूखः समाप्तः ।

---

भगवंतभास्करे

मीमांसकश्रीनीलकण्ठभट्टविरचितः

# श्राद्धमयूखः

( चतुर्थः )

आकेइत्युपाह्वमहादेवशर्मणा लेलेइत्युपाह्वव्यंकटेशशास्त्रिणाच संशोधितः ।




चौखम्बा संस्कृत प्रतिष्ठान

( प्राच्यभारती के प्रकाशक एवं वितरक )

३८ यू. ए., जवाहरनगर, बंगलो रोड

दिल्ली ११०००७

# श्राद्धमयूखस्थविषयाणामनुक्रमणिका.

इति श्राद्धमयूखस्थविषयाणामनुक्रमणिका.

# श्राद्धमयूखः ।

## चतुर्थः ४.



श्रीगणेशाय नमः

यो लीलया संतनुतेऽत्र विश्वं तत्पालयत्यात्मनि विश्वरूपे ।
लयं नयत्याशु च पूर्णरूपः शिवं तनोत्वाशु रविर्ममासौ ॥ १ ॥

जज्ञे पितामहतनोः खलु कश्यपो य-
स्तस्मादजायत मुनिस्तु विभाण्डकाख्यः ।
तं पुत्रिणां धुरमरोपयहृष्यशृङ्ग-
स्तस्यान्वयेऽप्यजनि शृङ्गिवराभिधानः ॥ २ ॥

तस्मिन्वंशे महति वितते सङ्गराख्ये नृपाणां
राजा कर्णः समजनि यथा सागरे शीतरश्मिः ।
कीर्त्या यस्य प्रथिततरया श्रोत्रजातेऽभिपूर्णे
कर्णस्यापि प्रविततकथा नावकाशं लभन्ते ॥ ३ ॥

विशोकाख्यदेवस्ततस्तत्सुतोऽभूद्विशोकीकृता येन सर्वा धरित्री ।
ततोऽप्यास राजाऽस्तशत्रुस्ततोऽभूद्रयाख्यो रयेणैव सर्वाहितघ्नः ॥४॥
बभूवाथ वैराटराजस्ततोऽभून्नृपो मेदिनीवल्लभो वीढराजः ॥
नरब्रह्मदेवस्ततो मन्युदेवस्ततोऽभून्नृपश्चन्द्रपालाभिधानः ॥ ५ ॥
शिवगणाख्यनृपः समजन्यथो शिवगणाख्यपुरं प्रचकार यः ।
शिवगणेन समः सकलैर्गुणैः शिव शिव प्रथमो गणनासु यः ॥ ६ ॥
रोलिचन्द्र इति तत्तनयोऽभूत्कर्मसेननृपतिस्तमथानु ।
लोकपो नरहरिर्नृपराजो रामचन्द्र इति तत्तनुजातः ॥ ७ ॥

यशोदेवस्ततो जातस्ताराचन्द्रनृपस्ततः ।
चक्रसेनस्ततो राजा राजसिंहनृपो यतः ॥ ८ ॥

ततोऽप्यभूद्भूपतिसाहिदेवः स्वकीर्तिभिर्निर्जितदुग्धसिन्धुः ।
अभूत्ततः श्रीभगवन्तदेवः सदैव भाग्योदयवान्क्षितीशः ॥ ९ ॥
यद्दानद्रविणाद्रिनिर्जितवपू रत्नाचलो लज्जया
दूरे स्तब्ध इलावृते निविशते नो यत्र पुंसां गतिः ॥

१

किंच त्रस्यदरातिवामनयनानेत्राम्बुभिर्वर्द्धित-
स्तेजोग्निर्वडवामुखोत्थहुतभुक्तुल्यः कथं नो भवेत् ॥ १० ॥
आज्ञप्तस्तेन राज्ञा विबुधकुलमणिर्दाक्षिणात्यावतंसो
भट्टः श्रीनीलकण्ठः स्मृतिषु दृढमतिर्जैमिनीयेऽद्वितीयः ।
आज्ञामादाय मूर्ध्ना सविनयममुना तस्य सर्वान्निबन्धा-
न्दृष्ट्वा सम्यग्विविच्य प्रविततकिरणस्तन्यते भास्करोऽयम् ॥११॥
तिथेर्मयूखं प्रतिपाद्य सम्यगाराध्य धामाऽथ गिरामगोचरम् ।
श्राद्धं वदत्यत्र स नीलकण्ठः संप्रेरितः श्रीभगवन्तवर्मणा ॥ १२ ॥
प्रतारकैरादृतमत्र किञ्चिन्मया तु निर्मूलतया तदुज्झितम् ।
ऊनोक्तिताती नहि तेन काचित्खपुष्पहीनाऽपचितिर्न हीयते ॥१३॥

## श्राद्धलक्षणम् ।

मृतोद्देश्यको विप्रस्वीकाराङ्गको द्रव्यत्यागः श्राद्धम् । जीवच्छ्राद्धे दैवश्राद्धे च तत्पदं गौणं कौण्डपाय्यग्निहोत्रपदवत् । विप्रस्वीकारवत्त्वोक्त्या तर्पणनिवृत्तिः । यत्तु केचित् त्यागाभावादेव तर्पणनिवृत्तिमाहुः । तन्न । द्रव्यदेवतासंयोगेनेन्द्रऊर्ध्वोध्वर इति आघारमाघारयति, इत्यादिवत्त्यागकल्पनाया आवश्यकत्वात् । न ममेत्यभिलापः परं नास्ति आचाराभावात् । यत्रैव यागाग्निहोत्रादावभिलापाचारस्तत्रैव तादृशश्रुत्यनुमानम् न सर्वत्र । त्यागस्तु मानसः सर्वत्राप्यविशिष्टः। नच देवताभावेन द्रव्यदेवतासंयोगाभावः । "देवतास्तर्पयति" इत्याश्वलायनादिसूत्रस्थदेवतापदेन तत्समर्पणात्। अङ्गकत्वोक्त्या च विप्रस्वीकृतेः श्राद्धस्वरूपघटकता व्यावर्त्यते तेन तदभावेऽपि प्रधानसिद्धिरविहता । पिण्डदानस्य च प्राधान्यसिद्धिः । अन्यथा तस्य विप्रस्वीकरणान्तत्वाभावेन प्राधान्यं न स्यात् । एतेन विप्रस्वीकारान्तो द्रव्यत्यागः श्राद्धं पिण्डदानाग्नौकरणयोश्च तत्पदशक्यत्वमिति विरुद्धं प्रलपन्तः केचिदपास्ताः । अत एवाऽऽपस्तम्बसूत्रे "पितरो देवता ब्राह्मणस्त्वाहवनीयार्थः" इति विप्रस्वीकृतेस्त्यक्तद्रव्यप्रतिपत्तित्वमाहवनीयाधिकरणकहोमवदुक्तं संगच्छते । या तु ब्रह्माण्डे "देशे काले च पात्रे च श्रद्धया विधिना च यत् । पितॄनुद्दिश्य विप्रेभ्यो दत्तं श्राद्धमुदाहृतम्" इति भोज्यान्नप्रतिपादनांशेन दानरूपता "पितॄन् यजेत" इत्यादिस्मृत्यन्तरे च यागरूपता व्यवहृता सा गौणीति केचित् । यागव्याप्यत्वेऽपि

श्राद्धस्य न काचित् क्षतिः । गौण्यां मानाभावात् । श्राद्धे च पित्रुद्देश्य-कान्नत्यागरूपत्वाद्विप्रभोजनपिण्डदानयोरेव प्राधान्यम् । तादृशान्न-त्यागरूपस्य फलसम्बन्धित्वेन तत्र तत्र वक्ष्यमाणत्वात् । एवमेव कपर्दि-धूर्तस्वामिप्रभृतयः । यत्तु तैः अग्नौकरणमपि प्रधानमुक्तं तत्र मूलं मृग्यम् । यत्तु प्राच्याः केचित्सङ्क्रान्त्यादिश्राद्धेषु पिण्डनिषेधः पर्युदासो वा प्राप्तिमपेक्षते सा चातिदेशेन चाङ्गानामेव, न प्रधानस्यातः पिण्ड-दानमङ्गमित्याहुः । तन्न । नह्यातिदेशिक्येव प्राप्तिर्निषेधस्य पर्युदासस्य वोपजीव्या । प्रधानत्वे हि तस्यापि श्राद्धपदशक्यत्वात्तद्विधिनैव प्राप्ते निषेधपर्युदासोपपत्तेः । अत उक्तयुक्त्या तदपि प्रधानम् । यत्तु कर्कानु-यायिनः 'पिण्डदानमेव प्रधानं नान्योऽन्नत्यागः' इति तदपि न । पित्रुद्देश्यकान्नत्यागस्यापि फलसंबन्धाविशेषात् । निषिद्धपर्युदस्तपिण्डके सङ्क्रान्त्यादिश्राद्धे प्रधानाभावेनाङ्गमात्रानुष्ठानप्रसङ्गाच्चेति दिक् । तच्च श्राद्धं पार्वणमेकोद्दिष्टं च । पार्वणं च दर्शश्राद्धमेव 'पर्वणि भवम्' इति योगात् । न च पर्वशब्दस्य सङ्क्रान्त्यादावपि सत्वात्तन्निमित्तके श्राद्धे तथा पूर्णिमाश्राद्धे तथामावास्यायां विशेषेण इति निगमवचनेन कृष्णपक्षश्राद्धस्यामावास्याख्यपर्वयोगात्तत्राप्यतिप्रसक्तो योग इति वा-च्यम् । 'अमावास्यायां यत्क्रियते तत्पार्वणमुदाहृतम्' इति रूढिबोधनेन योगरूढत्वात् । सङ्क्रान्त्यादौ पर्वशब्दस्य गौणत्वाच्च ।

एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं प्रचक्षते ।
त्रीनुद्दिश्य तु यत्तद्धि पार्वणं मुनयो विदुः ॥

इति कण्ववचसि तु त्र्युदेश्यकश्राद्धमात्रे पार्वणशब्दः कौण्डपायन-होमे 'मासमग्निहोत्रं जुहुति' इत्यग्निहोत्रशब्द इव गौणः । न च 'त्रीनुद्दिश्य तु यत्तद्धि' इत्यस्यापि रूढिबोधकत्वमेव इति वाच्यम् । दार्शिकेऽप्येतेनैव रूढिसिद्धेरमावास्यायामित्यस्याऽऽनर्थक्यप्रसङ्गात् । अतः पार्वणशब्दो दार्शिकस्यैव नामधेयमिति दर्शश्राद्धप्रकरण एव च मन्वादिस्मृतिषु धर्मपाठात् तदेव प्रकृतिः । अन्येषु तु धर्मानुक्तेर्वि-कृतित्वम् । आश्वलायनसूत्रानुसारिणां तु 'अथातः पार्वणेश्राद्धे काम्य आभ्युदयिक एकोद्दिष्टे च' इति तत्सूत्रेण चत्वारि श्राद्धानि प्रक्रम्य धर्माम्नानात् चतुर्णामपि समानविधानता । कातीयापस्तम्बसत्याषाढ-सूत्रानुसारिणां कृष्णपक्षश्राद्धं प्रकृतिः । तत्रैव धर्माम्नानात् । तदपि प्रकृतित्वमन्वष्टकादीन्प्रत्येव यत्र 'तस्य मासिश्राद्धेन कल्पो व्या-

ख्यातः ' इत्यापस्तम्बादिसूत्रमस्ति । न्यायेन सर्वश्राद्धप्रकृतित्वे प्राप्ते एवमादिसूत्रस्य परिसङ्ख्यार्थत्वात् । एतत्सूत्रपरिसंख्यातानां तु वार्षिकादीनां दर्शश्राद्धविकृतित्वमिति निरणायि मया विस्तरेण मासिश्राद्धपद्धतौ । अतो वार्षिकादिश्राद्धान्तरेषु चोदनालिङ्गेन पूर्वोक्तकाण्ववचनोक्तपार्वणनाम्ना , 'सपिण्डीकरणात्पूर्वमेकोद्दिष्टं सुतः पितुः । ऊर्ध्वं पार्वणवत्कुर्यात्प्रत्यब्दमितरेणतु' इति लौगाक्षिवचनेन वा दार्शिकातिदेशः । श्राद्धकालानाह याज्ञवल्क्यः—

अमावास्याऽष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम्—
द्रव्यब्राह्मणसम्पत्तिर्विषुवत्सूर्यसङ्क्रमः ॥
व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः ।
श्राद्धं प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः ॥ इति ।

अत्र न श्राद्धानुवादेन कालविधिः । याज्ञवल्क्यस्मृतौ श्राद्धस्य वचनान्तरेणाप्राप्तेः । आवश्यकश्चास्यां स्मृतौ श्राद्धस्य विधिरनुवादो वा । अन्यथेतिकर्त्तव्यताम्नानवैयर्थ्यप्रसङ्गात् । अतोऽत्रामावास्यादिविशिष्टश्राद्धविधायकान्येतावन्ति वाक्यानि कल्प्यन्ते । तत्रामावास्या निर्णीता समयमयूखे ।

---

## अष्टका ।

" हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः " इत्याश्वलायनोक्ताश्चतस्रः । भाद्रकृष्णाष्टमी च पञ्चमी । तथा च पाद्मे 'वसुनामा पिता स्वकन्यां शशापानुजग्राह च साऽष्टकात्वेनोत्पन्ना' इत्युक्तेः—

प्रौष्ठपद्यष्टका भूयः पितृलोके भविष्यति ।
आयुरारोग्यदा नित्यं सर्वकामफलप्रदा ॥ इति ।

अत्राशक्तावनुकल्पमाहाश्वलायनः । " अप्यनडुहो यवसमाहरेदग्निना वा कक्षमुपोषेदेषा मेऽष्टकेति नत्वेवानष्टकः स्यात् " इति । यवसमार्द्रतृणम् । कक्षं शुष्कतृणम् । उपोषेद्दहेत् ।

---

## अथान्वष्टकाः ।

अष्टका उक्त्वाऽऽहाऽऽश्वलायनः " अपरेद्युरन्वष्टक्यम् " इति । अत्र च नवम्या अपराह्णव्याप्त्या न निर्णयः । तस्या निमित्तत्वाश्रुतेः ।

सर्वसूत्रस्मृतिषु 'उत्तरेद्युरपरेद्युः श्वोभूत' इत्यष्टकोत्तरदिनस्यैवान्वष्टकानिमित्ततया श्रवणाच्च । कात्यायनः—

अन्वष्टकासु नवभिः पिण्डैः श्राद्धमुदाहृतम् ।
पित्रादि मातृमध्यं च ततो मातामहान्तकम् ॥ इति ।

आग्नेये—

अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि ।
अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सह ॥ इति ।

हेमाद्रौ छागलेयः—

केवलास्तु क्षये कार्या वृद्धावादौ प्रकीर्त्तिताः ।
अन्वष्टकासु मध्यस्था नान्त्याः कार्यास्तु मातरः ॥ इति ।

तत्रैव ब्रह्माण्डे—

पितृभ्यः प्रथमं दद्यान्मातृभ्यस्तदनन्तरम् ।
ततो मातामहेभ्यश्चेत्यान्वष्टक्ये क्रमः स्मृतः ॥ इति ।

दीपिकायां तु 'मातृयजनं त्वन्वष्टकास्वादितः' इत्युक्तं तज्जीवत्पितृकविषयं तस्य पितृपार्वणाभावात् इति कश्चित् । तत्तुच्छम् । क्रमानुपपत्तेः । शाखाभेदेन तु व्यवस्था युक्ता । तत्राप्याश्वलायनादीनां पितृपूर्वकम् । तत्सूत्रे तथाम्नानात् । अन्येषां तु मातृपूर्वकम् । अत्र सुवासिन्यपि भोज्या ।

भर्तुरग्रे मृता नारी सह वा तेन या मृता ।
तस्याः स्थाने नियुञ्जीत विप्रैः सह सुवासिनीम् ॥

इति स्मृतेः । इदं च नित्यम् ।

अष्टकान्वष्टकास्तिस्रस्तथैव च नृपोत्तमम् ।
एतानि श्राद्धकालानि नित्यानाह प्रजापतिः ॥
श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते ।

इति हेमाद्रौ विष्णुधर्मोत्तरात् । अत एवेदं स्वतन्त्रप्रधानं नाष्टकाङ्गम् । पूर्वेद्युः श्राद्धं त्वष्टकाङ्गम्, फलवत्संनिधावफलं तदङ्गमिति न्यायात् । एष एव पितामहचरणानामप्याशयः । इदं च शूद्रानुपेताभ्यामपि कार्यमिति वक्ष्यतेऽधिकारिनिर्णये । जीवत्पित्राऽपीदं कार्यम् ।

आन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि ।
मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति ॥

इति मैत्रायणीयपरिशिष्टात् । अकरणे प्रायश्चित्तमृग्विधाने—

एभिर्द्युभिर्जपेन्मंत्रं शतवारं तु तद्दिने ।
आन्वष्टक्यं यदा शून्यं संपूर्णं याति सर्वथा ॥ इति ।

भाद्रपदान्वष्टकाश्राद्धमप्यावश्यकम् ।

सर्वासामेव मातॄणां श्राद्धं कन्यागते रवौ ।
नवम्यां हि प्रदातव्यं ब्रह्मलब्धवरा यतः ॥

इति स्मृतेः । अत्र सर्वासामितिवचनात्सापत्नमातुरपि श्राद्धम् । तत्र मातृसापत्नमात्रोर्देवतात्वे विशेषो नारायणवृत्तावुक्तः—

अनेका मातरो यस्य श्राद्धे चापरपक्षिके ।
अर्घ्यदानं पृथक्कुर्यात्पिण्डमेकं तु निर्वपेत् ॥

द्वयोर्बह्वीनां च नामैक्ये द्विवचनान्तं बहुवचनान्तं चेति । श्राद्ध आन्वष्टक्ये । यत्तु पठन्ति—

तमिस्रपक्षे नवमी पुण्या भाद्रपदे हि या ।
चत्वारः पार्वणाः कार्याः पितृपक्षे मनीषिभिः ॥ इति ।

तत्राकरश्चिन्त्यः ।

इदं च सधवाया एव मातुर्मरणे भवति । इति केचित् ।

वस्तुतस्तु अविशेषाद्विधवाया अपि मृताया भवति । यत्तु—

श्राद्धं नवम्यां कुर्यात्तन्मृते भर्तरि लुप्यति ।

इति वचस्तदनाकरम् । एतच्च मातृक्षयाहश्राद्धवदविशेषाज्जीवत्पितृकेणापि सपिण्डं कार्यम् । यत्तु जीवत्पितृकनिर्णये—

मुण्डनं पिण्डदानं च प्रेतकर्म च सर्वशः ।
न जीवत्पितृकः कुर्याद्गुर्विणीपतिरेव च ॥

इति दक्षवाक्यत्वेनालेखि तद्दक्षस्मृतौ निबन्धान्तरे चादर्शनादनाकरम् । इत्यस्तु प्रसक्तानुप्रसक्तम् । प्रकृतां याज्ञवल्क्यवचोव्याख्यामनुसरामः । वृद्धिः, पुत्रजन्म । एतानि च श्राद्धानि नित्यानि,

अमावास्याव्यतीपातपौर्णमास्यष्टकासु च ।
विद्वान् श्राद्धमकुर्वाणः प्रायश्चित्तीयते तु सः ॥

इति पितामहोक्तेः ।

श्राद्धं कुर्यादवश्यं तु प्रमीतपितृको द्विजः ।
इन्दुक्षये मासि मासि वृद्धौ प्रत्यब्दमेव च ॥

इति लौगाक्षिवाक्याच्च । कृष्णः सर्वमासीयः नतु भाद्रपदस्यैव । अयनद्वयं मकरकर्कटसंक्रमणे । विषुवत्तुलामेषसंक्रमणे । संक्रमादयनविषुवतोः पृथङ्निर्देशः फलभूमार्थः । द्रव्यं पायसादि । ब्राह्मणो वक्ष्यमाणलक्षणः । तयोः संपत्ती इति द्विवचनान्तः पाठ इति केचित् । एकवचनान्तः पाठः । द्रव्यब्राह्मणयोः सम्पत्तिर्यस्मिन्काल इति बहुव्रीहिरिति माधवस्मृतिचन्द्रिकाकारौ ॥ 'द्रव्यम्' इति 'असमस्तम्' इति मिताक्षरायाम् । व्यतीपातः प्रसिद्धो योगः ।

श्रवणाश्विधनिष्ठार्द्रा नागदैवतमस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥

इति वृद्धमनूक्तो वा । नागदैवतमाश्लेषा । मस्तकं, मृगशिरः । श्रवणादिपञ्चानां चतुर्थपाद इति हेमाद्रौ । शास्त्रान्तरेऽपि—

पञ्चाननस्थौ गुरुभूमिपुत्रौ
मेषे रविः स्याद्यदि शुक्लपक्षे ।
पाशाभिधाना करभेण युक्ता
तिथिर्व्यतीपात इतीह योगः ॥

पञ्चाननः, सिंहः । पाशाभिधाना द्वादशी । करभं हस्तः । गजच्छाया त्वपरार्के वायुपुराणे—

हंसे हस्तस्थिते या तु मघाऽशुक्ला त्रयोदशी ।
तिथिर्वैवस्वती नाम सा छाया कुंजरस्य तु ॥ इति ।

तथा—

हंसे हंसस्थिते या तु अमावास्या करान्विता ।
सा ज्ञेया कुञ्जरच्छाया इति बौधायनोऽब्रवीत् ॥

हंसः सूर्यः । तद्देवतावत्त्वाद्धस्तनक्षत्रमपि । चन्द्रसूर्ययोर्हस्तस्थयोरिति फलितोऽर्थ इति हेमाद्रौ । स्मृत्यन्तरे—

यदेन्दुः पितृदैवत्ये हंसश्चैव करे स्थितः ।
याम्या तिथिर्भवेत्सा हि गजच्छाया प्रकीर्तिता ॥ इति ।

पितृदैवत्यं मघा । हंसः सूर्यः । करो हस्तः । याम्या तिथिस्त्रयोदशी हस्तच्छाया इति स्मृतिचन्द्रिकायाम् । "एतद्ध्येव पितृणामयनं यद्धस्तिश्राद्धं तस्माच्छायायां श्राद्धं दद्यात्" इति काठकोक्तेः । "गजछायासु

कुर्वीत कर्णव्यजनवीजिता " इति भारतोक्तेश्च।'श्राद्धकालाः प्रकीर्त्तिताः' इति गजच्छायालक्षितकालग्रहणादविरुद्धम् । ग्रहणं स्पर्शकालः ।

त्रिदशाः स्पर्शसमये तृप्यन्ति पितरस्तथा ।
मनुष्या मध्यकाले तु मोक्षकाले तु राक्षसाः ॥

इति वृद्धवसिष्ठोक्तेः । श्राद्धं प्रति रुचिः इच्छा । ब्राह्मे—

आषाढ्यामथ कार्त्तिक्यां माघ्यां मन्वन्तरादिषु ।
युगादिषु च दुःस्वप्ने जन्मर्क्षे ग्रहपीडिते ॥
प्रौष्ठपदासिते पक्षे श्राद्धं कुर्वीत यत्नतः ।
मार्गशीर्षे च पौषे च माघे प्रौष्ठे च फाल्गुने ॥
कृष्णपक्षे च पूर्वेद्युरान्वष्टक्यं तथाऽष्टमी । इति ।
तिस्रोष्टकास्तासु श्राद्धं प्रकुर्वीतैव पार्वणम् ॥ इति ।

युगादयो विष्णुपुराणे—

वैशाखमासस्य तु या तृतीया
नवम्यसौ कार्तिकशुक्लपक्षे ।
नभस्य मासस्य तमिस्रपक्षे
त्रयोदशी पञ्चदशी च माघे ॥

माघे पञ्चदशी अमावास्या । 'द्वे शुक्ले द्वे तथा कृष्णे' इति वक्ष्यमाणवचनात् ।

देवलः—

तृतीया रोहिणीयुक्ता वैशाखस्य मता तु या ।
मघाभिः सहिता कृष्णा नभस्ये तु त्रयोदशी ॥
नवमी कार्तिकस्यापि शततारकसंयुता ।
तथा तेनैव ऋक्षेण माघे पञ्चदशी युता ॥
युगादयः स्मृता ह्येता दत्तस्याक्षयकारकाः । इति ।

इह च तत्र योगाद्युगादिषु शुक्लादिरेव मासो ग्राह्यः । कृष्णादिपक्षे तद्योगाभावात् । यत्तु ब्रह्मपुराणे—

माघस्य पौर्णमास्यां तु घोरं कलियुगं स्मृतम् ।

इत्युक्तं तत्कल्पभेदेन ज्ञेयम् । नारदीये—

द्वे शुक्ले द्वे तथा कृष्णे युगादी कवयो विदुः ।
शुक्ले पूर्वाह्णिके ग्राह्ये कृष्णे चैवापराह्णिके ॥

अस्मिंश्च गोभूमिहिरण्यवस्त्र-
दानेन सर्वं प्रविहाय पापम् ।
शूरत्वमिन्द्रस्य सुहृत्त्वमेति
मर्त्याधिपत्यं लभते मनुष्यः ॥

मात्स्ये मन्वादयः—

अश्वयुक्शुक्लनवमी कार्तिके द्वादशी तथा ।
तृतीया चैत्रमासस्य तथा भाद्रपदस्य च ॥
फाल्गुनस्य त्वमावास्या पुष्यस्यैकादशी सिता ।
आषाढस्यापि दशमी माघमासस्य सप्तमी ॥
श्रावणस्याष्टमी कृष्णा तथा माघी च पूर्णिमा ।
कार्तिकी फाल्गुनी चैत्री ज्येष्ठी पञ्चदशी सिता ॥
मन्वन्तरादयश्चैता दत्तस्याऽक्षयकारकाः ।

अत्र विशेषानिर्देशे शुक्ला तिथिर्ग्राह्या । जातूकर्ण्यः—

ग्रहोपरागे च तथैव जाते
पित्र्ये गयायामयनद्वये च ।
नित्यं च शङ्खे च तथैव पद्मे
दत्तं भवेन्निष्कसहस्रतुल्यम् ॥ इति ।

'नित्यं भवेद्दत्तम्' इत्यन्वयेन नित्यतेति चन्द्रिकायाम् । पित्र्यं मघा सा च महालयस्था । शङ्खोऽमावास्या । पद्ममष्टका । तथा च स एव—

शङ्खं प्राहुरमावास्यां क्षीणसोमां द्विजोत्तम ।
अष्टका च भवेत्पद्मं तत्र दत्त तथाक्षयम् ॥ इति ।
यदा विष्टिव्यतीपातौ भानुवारस्तथैव च ।
पद्मकं नाम तत्प्रोक्तमयनात्तु चतुर्गुणम् ॥

इति शङ्खोक्तो वा पद्मः । देवलः—

इन्दुक्षयो गजच्छाया मन्वादिषु युगादिषु ।
एते कालाः समुद्दिष्टाः पितॄणां प्रीतिवर्द्धनाः ॥ इति ।

चतुर्दशीभिन्नासु द्वादशकृष्णपक्षगासु तिथिषु क्रमात्फलान्याह याज्ञवल्क्यः—

कन्यां कन्यावेदिनश्च पशून्वै सत्सुतानपि ।
द्यूतं कृषिश्च वाणिज्यं तथैकद्विशफानपि ॥

ब्रह्मवर्चस्विनः पुत्रान् स्वर्णरौप्ये सकुप्यके ।
जातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ॥
प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्दशीम् ।
शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते ॥ इति ।

कन्यावेदिनो जामातरः । द्यूतं तत्र विजयः । एकशफाः अश्वादयः । कुप्यं ताम्रादि । हेमाद्रौ नागरखण्डे—

अपमृत्युर्भवेद्येषां शस्त्रमृत्युरथापि वा ।
उपसर्गमृतानां च विषमृत्युमुपेयुषाम् ॥
वह्निना च प्रदग्धानां जलमृत्युमुपेयुषाम् ।
सर्पव्याघ्रहतानां च शृङ्गैरुद्बन्धनैरपि ॥
तेषां श्राद्धं प्रकर्तव्यं चतुर्दश्यां नराधिप ।

ब्रह्मपुराणे—

युवानः पितरो यस्य मृताः शस्त्रेण वा हताः ।
तेन कार्यं चतुर्दश्यां तेषां तृप्तिमभीप्सता ॥

प्रचेताः—

वृक्षारोहणलोहाद्यैर्विद्युज्ज्वालाविषाग्निभिः ।
नखिदंष्ट्रिविपन्नानामेषां शस्ता चतुर्दशी ॥ इति ।

मरीचिः—

विषशस्त्रश्वापदादितिर्यग्ब्राह्मणघातिनाम् ।
चतुर्दश्यां क्रिया कार्या अन्येषां तु विगर्हिता ॥ इति ।

विषादिभिर्घातो येषां ते घातिनः । यत्तु शाकटायनेनोक्तम् ।

जलाग्निभ्यां विपन्नानां सन्यासे वा गृहे पथि ।
श्राद्धं कुर्वन्ति तेषां वै वर्जयित्वा चतुर्दशीम् ॥ इति ।

तद्वैधमृत्युपरम् ।

ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यां तु सुप्रजाः ।
प्रीयन्ते पितरश्चास्य ये वै शस्त्रहता रणे ॥

इति सौमन्तवचनमप्यवैधमरणविषयम् । अत्र "कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्" इति मनूक्तेश्चतुर्दशीवर्जनं दशमीमारभ्य श्राद्धानुष्ठाने ज्ञेयम् । अन्यथा वक्ष्यमाणमहालयश्राद्धगता षोडशसङ्ख्या व्याहन्येत । अत एव—

नभस्यापरपक्षे तु श्राद्धं कार्यं दिने दिने।
नैव नन्दादि वर्ज्यं स्यान्नैव वर्ज्या चतुर्दशी॥

इति कार्ष्णाजिनिवचोपि सङ्गच्छत इति माधवादयः। तातचरणास्तु,

शस्त्रेण तु हता ये वै तेभ्यस्तत्र प्रदीयते।

इति इतरदेवताबाधेन शस्त्रहतानां देवतात्वविधानात्तदभावे लुप्यते। यथाऽभ्युदयेष्टौ प्राकृतदेवताबाधाद्देवतान्तरस्य वा विधानादुपांशुयाजः। मानवकार्ष्णाजिनीये अपि शस्त्रहतपितृकं प्रत्येव सङ्गच्छेते। मानवे 'दशम्यादौ' इत्यादिपदेन पक्षान्तराणामपि ग्रहणम्। जीवत्पितृकाजीवत्पितृकरूपभिन्नाधिकारिकामावास्यान्ततिथितदुत्तरप्रतिपद्गतश्राद्धेष्विव शस्त्राशस्त्रमृतपितृकरूपभिन्नाधिकारिकश्राद्धेष्वेव श्राद्धगता षोडशसङ्ख्योपपद्यत इति। अतो देवताभावे चतुर्दशीश्राद्धं लुप्यत इति युक्तम् उत्पश्यन्ति। एतेन चतुर्दश्यां शस्त्रहतेभ्य एवेति देवतानियमोऽपि सिध्यति न तु चतुर्दशीकालनियमः। 'अन्येषां तु विगर्हितम्' इति पूर्वोक्तमरीचिवचनाच्च। अतोऽन्यस्मिन्नपि दिने शस्त्रहतानामशस्त्रहतानां च भवत्येव श्राद्धम्। इदं चैकोद्दिष्टमेव कार्यम्। न पार्वणम्।

समत्वमागतस्यापि पितुः शस्त्रहतस्य वै।
एकोद्दिष्टं सुतैः कार्यं चतुर्दश्यां महालये॥

इति सुमन्तूक्तेः। समत्वमागतस्य कृतसपिण्डनस्येत्यर्थः। पित्रादित्रय्यां द्वयोः शस्त्रादिना मृतावेकोद्दिष्टद्वयं कार्यम्। 'एकस्मिन्द्वयोर्वैकोद्दिष्टविधिः' इति स्मृतेः। अत्र 'एकस्मिन्द्वयोर्वा' इत्युक्तया पित्रादिषु त्रिष्वपि शस्त्रहतेषु पार्वणमेव। अत्र माधवदेवस्वामिप्रभृतयः— 'एकस्मिन्द्वयोः' इत्यस्य यथाश्रुतत्वे वाक्यभेदापत्त्यैतस्योपलक्षणत्वेन त्रिष्वपि शस्त्रहतेष्वेकोद्दिष्टत्रयमेव कार्यम्। शस्त्रहनने निमित्ते एकोद्दिष्टमात्रविधिपरत्वाद्वाक्यस्य। 'एकस्मिन्द्वयोः' इति तु 'एकं वृणीते द्वौ वृणीते' इत्यादिवदनुवाद इत्याहुः। वस्तुतस्तु "शस्त्रेण तु हता ये वै" इति शस्त्रहतदेवताविधिनैवैकस्यद्वयोर्वा शस्त्रादिमरणे एकोद्दिष्टस्यान्यथानुपपत्त्या प्राप्तेस्त्रिषु मृतेषु तु 'ऊर्ध्वं पार्वणं कुर्यात्' इति सपिण्डनोत्तरभावित्वेन सामान्यवचनप्राप्तस्यापि पार्वणविधेरबाधात्पार्वणमेव कार्यम्। अतः 'एकस्मिन्' इत्यादि पूर्वोक्तसौमन्तवन्न्यायप्राप्तस्यैवार्थस्यानुवादकं न विधायकं कस्यचिदर्थस्य। अपरार्कस्मृतिचन्द्रिका-

हेमाद्र्यादीनामप्ययमेवाशयो लक्ष्यते। दिनान्तरे तु शस्त्रादिहतानामपि पार्वणमेव। तथा च प्रजापतिः—

सङ्क्रान्तावुपरागे च पर्वोत्सवमहालये।
निर्वपेदत्र पिण्डांस्त्रीनिति प्राह प्रजापतिः॥ इति।

## अथ काम्यश्राद्धानि।

विष्णुधर्मोत्तरे—

अतः काम्यानि वक्ष्यामि श्राद्धानि तव पार्थिव।
आरोग्यमथ सौभाग्यं समरे विजयं तथा।
सर्वकामांस्तथा विद्यां धनं जीवितमेव च॥
आदित्यादिदिनेऽप्येवं श्राद्धं कुर्यात्सदा नरः।
क्रमेणैतान्यवाप्नोति नात्र कार्या विचारणा॥ इति।

## अथ नक्षत्रश्राद्धानि तत्फलं च।

मार्कण्डेयः—

कृत्तिकासु पितॄनर्च्य स्वर्गमाप्नोति मानवः।
अपत्यकामो रोहिण्यां सौम्ये त्वौजस्वितां लभेत्॥
आर्द्रायां शौर्यमाप्नोति क्षेत्रलाभः पुनर्वसौ।
पुष्टिः पुष्ये पितॄनर्च्य आश्लेषासु वरान् सुतान्॥
मघासु स्वजनश्रैष्ठ्यं सौभाग्यं फाल्गुनीषु च।
प्रदानशीलो भवति सापत्यस्तूत्तरासु तु॥
प्राप्नोति श्रेष्ठतां सत्सु हस्ते श्राद्धप्रदो नरः।
रूपवन्ति च चित्रासु तथाऽपत्यान्यवाप्नुयात्॥
वाणिज्यलाभदाः स्वात्यो विशाखाः पुत्रकामदाः।
कुर्वतामनुराधासु ददुश्चक्रप्रवर्तनम्॥
ज्येष्ठास्वर्थाधिपत्यं च मूले चारोग्यमुत्तरम्।
आषाढासु यशःप्राप्तिरुत्तरासु विशोकता॥
श्रवणे च शुभान् लोकान् धनिष्ठासु महाधनम्।
वेदविद्याऽभिजिति तु भिषक्सिद्धिस्तु वारुणे॥
अजाविकं प्रोष्ठपदे विन्देद्गावीं तथोत्तरे।
रेवतीषु तथा रौप्यमश्विनीषु तुरङ्गमान्॥

श्राद्धं कुर्वंस्तथाऽऽप्नोति भरणीष्वायुरुत्तमम् ।
तस्मात्काम्यानि कुर्वीत ऋक्षेष्वेतेषु तत्ववित् ॥

सौम्यं मृगशिरः । चक्रप्रवर्तनं सर्वत्राज्ञाभङ्गाभावः ।

---

## अथ महालयः ।

तत्र प्रौष्ठपदीश्राद्धं तावदुक्तं ब्रह्मपुराणे—

नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ।
पौर्णमास्यां तु कर्तव्यं वराहवचनं यथा ॥
पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयो ह्यश्रुमुखा ह्येते पितरः संप्रकीर्तिताः ॥
तेभ्यः परतरे ये तु ते तु नान्दीमुखाः स्मृताः ॥ इति ।

अस्मिंश्च श्राद्धे मातामहपार्वणं नाचरन्ति शिष्टाः । यत्तु कश्चिदाह—सर्वश्राद्धानां दर्शविकृतित्वात्तत्र च मातामहानामप्येवमिति मातामहत्रयसद्भावादिहापि प्राप्तिः स्यादेव । "पितरो यत्र पूज्यन्ते तत्र मातामहा अपि" इति धौम्यवाक्येन वा प्राप्तिः । न च प्रौष्ठपदीश्राद्धे पित्रभावान्मातामहाननुष्ठानम् । "पितरो यत्र पूज्यन्ते" इत्यत्र हि पितृशब्दः सपिण्डीकरणान्तश्राद्धजन्यपितृभावपरो न जनकपरः । तत्र वर्ज्यत्वानुपपत्तेः । 'पित्रपितृसमुदाये पितृशब्दः' इति लक्षणायाश्च शक्त्याऽर्थलाभेऽनभ्युपगमादिति । दृष्टश्च तत्रापि प्रयोगः । "पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्" इत्यादौ । तस्मादनुष्ठेयं मातामहपार्वणमिति । तन्न । यद्यपि क्वचित् पितृशब्दः सपिण्डीकरणान्तश्राद्धजन्यपितृभावपरस्तथापि इह न तथा लिङ्गसमवायन्यायाच्च पित्रपितृसमुदायपरत्वमेव ।

कर्षूसमन्वितं मुक्त्वा तथाऽद्यं श्राद्धषोडशम् ।
प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः ॥

इति परिशिष्टे पर्युदासानुपपत्तेः । षोडशश्राद्धेषु त्वदुक्तरीत्या मातामहानामप्राप्तेः । ननु षोडशश्राद्धानामेकोद्दिष्टत्वपक्षे त्वपरपक्षेऽपि कथं प्राप्तिरिति चेत् । न, पितॄणामुद्देश्यत्वेन तद्गतविशेषणस्याविवक्षितत्वात् । न चैवं चतुर्दश्यामपि मातामहप्राप्तिः शङ्क्या । "श्राद्धं शस्त्रहतस्यैव" इत्येवकारेणेतरव्यावृत्तेः । किञ्च—

आन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि ।
मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति ॥

इति जीवत्पितृकस्यान्वष्टकाश्राद्धे मातामहप्राप्तिः केन वार्येत। मात्रादिषु सपिण्डनान्तश्राद्धजन्यपितृत्वस्य विद्यमानत्वात्। यदुक्तं 'दर्शश्राद्धान्मातामहानां प्राप्तिः' इति तन्न। देवतान्तरविधिना प्राकृतदेवताबाधात्। अतो यत्र न देवतोपदेशः सङ्क्रान्त्यादिश्राद्धेषु तत्रैव प्राकृतदेवताप्राप्तिः न विहितदेवताकेष्विति सिद्धं प्रौष्ठपदीश्राद्धे मातामहाननुष्ठानम्।

---

## अथ प्रतिपदादिश्राद्धानि।

तत्र बृहन्मनुः—

आषाढीमवधिं कृत्वा पञ्चमं पक्षमाश्रिताः।
काङ्क्षन्ति पितरः क्लिष्टा अणुमप्यन्वहं जलम्॥
आषाढीमवधिं कृत्वा यः पक्षः पञ्चमो भवेत्।
तत्र श्राद्धं प्रकुर्वीत कन्यास्थोऽर्को भवेन्न वा॥

अत्राऽऽद्यश्लोकोत्तरार्द्धान्नित्यता।

आषाढ्याः पञ्चमे पक्षे यः श्राद्धं न करिष्यति।
शाकेनापि दरिद्रोऽपि सोऽन्त्यजत्वमुपेष्यति॥

इति नागरखण्डाच्च। काम्यताऽपि—

पुत्रानायुस्तथाऽऽरोग्यमैश्वर्यमतुलं तथा।
प्राप्नोति पञ्चमे दत्वा श्राद्धकामांस्तु पुष्कलान्॥

इति कार्ष्णाजिनिस्मृतेः। आदित्यपुराणे—

पक्षान्तरेऽपि कन्यास्थे रवौ श्राद्धं प्रशस्यते।
कन्यागते पञ्चमे तु विशेषेणैव कारयेत्॥ इति।

गौतमः—

अपरपक्षे श्राद्धं पितृभ्यो दद्यात्पञ्चमादि दर्शान्तम्।
अष्टम्यादि दशम्यादि सर्वस्मिन्वा॥ इति।

कार्ष्णाजिनिः—

आदौ मध्येऽवसाने वा यत्र कन्यां रविर्व्रजेत्।
स पक्षः सकलः पूज्यः श्राद्धषोडशकं प्रति॥

ब्रह्माण्डे—

नभस्यकृष्णपक्षे तु श्राद्धं कुर्याद्दिने दिने।
त्रिभागहीनपक्षं वा त्रिभागं त्वर्द्धमेव च॥ इति।

त्रिभागहीनः षष्ठीप्रभृतिः । त्रिभागएकादश्यादि । 'तुशब्देन त्रयोदश्यादिरपि' इति प्राच्याः । तेन तन्मते चतुर्थीपञ्चमीषष्ठ्यष्टमीदशम्येकादशीत्रयोदशीप्रभृतीति सप्त पक्षाः । त्रिभागहीनत्रिभागपदाभ्यामल्पान्तरतया पञ्चमीदशम्याद्योरेव पक्षयोर्ग्रहणमिति केचित् । वस्तुतस्तु पञ्चम्यादिदशम्यादिपदयोरतद्गुणसंविज्ञानबहुव्रीहिणैकमूलकल्पनालाघवाय षष्ठ्येकादशीपक्षावेव गृह्येते । एवमर्द्धपदेनाष्टम्यादिः । तुशब्दः पादपूरक इति । अत एव हेमाद्रौ विष्णुधर्मोत्तरे—

उत्तरादयनाद्राजन् श्रेष्ठं स्याद्दक्षिणायनम् ।
याम्यायनाच्चतुर्मासं तत्र सुप्ते तु केशवे ॥
प्रौष्ठपद्याः परः पक्षस्तत्रापि च विशेषतः ।
पञ्चम्यूर्ध्वं तु तत्रापि दशम्यूर्ध्वं ततो यथा ॥ इति ।
मघायुक्ता तु तत्रापि राजन्युक्ता त्रयोदशी ॥ इति ।

श्लोकगौतमः—

कन्यागते सवितरि यान्यहानि तु षोडश ।
क्रतुभिस्तानि तुल्यानि सम्पूर्णतरदक्षिणैः ॥ इति ।

एते च पक्षाः शक्तितो व्यवस्थाप्याः । 'तिथिवृद्धौ षोडश साम्ये पञ्चदश' इति माधवः । 'प्रौष्ठपद्या सह' इति हेमाद्रिः तत्वंतु देवलआह—

अहःषोडशकं यत्तु शुक्लप्रतिपदा सह ।
चन्द्रक्षयाविशेषेण सापि दर्शात्मिका स्मृता ॥ इति ।

अत्र—नभस्यस्यापरे पक्षे तिथिषोडशकं तु यत् ।
कन्यास्थार्कान्वितः श्रेयान् स कालः श्राद्धकर्मणि ॥

इति शाठ्यायनिवाक्ये 'संख्यायुक्तेषु समुच्चयःस्यात्' इति न्यायेन तिथीनां श्राद्धे समुच्चयावगमात् । तस्य च श्राद्धावृत्तिं विनाऽनुपपत्तेरेकस्यैव श्राद्धस्य सायंप्रातरग्निहोत्रहोमस्येवावृत्तिः । तेनानेकदिनसाध्य एक एव श्राद्धप्रयोगः तेन 'ब्राह्मणदेशदक्षिणानामैक्यमिति केचित् । वस्तुतस्तु

आदौ मध्येऽवसाने वा यत्र कन्यां रविर्व्रजेत् ।
स पक्षः सकलः पूज्यः श्राद्धषोडशकं प्रति ॥

इति कार्ष्णाजिनिवाक्यात् 'तिस्र आहुतीर्जुहोति' इतिवत्कर्मणां भेद एव । यदि वाक्यान्तरप्राप्तमेकं श्राद्धमनूद्य तिथिसमुच्चयो विधीयेत ततो न भेदः स्यात्, प्रत्युत क्वोत्पत्तिः क्व गुणविधिरिति विनिगमनाविर-

हाच्छाठ्यायनिवाक्यस्याप्युत्पत्तिपरतया समुच्चितानेकतिथिविशिष्टश्राद्धविधौ 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतोभवति' इत्यत्रेव समुच्चितानेककालविशिष्टकर्मविधिकृतभेदवदिहापि भेद एव युक्तः। एवं च देशब्राह्मणादीनामपि भेदो भवतीति दिक्। पूर्वोक्तपञ्चम्यादिपक्षेष्वशक्तस्तु एकस्मिन्नपि दिने कुर्यात्।

आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे।
यो वै श्राद्धं नरः कुर्यादेकस्मिन्नपि वासरे।
तस्य संवत्सरं यावत्तृप्ताः स्युः पितरो ध्रुवम्॥

इति हेमाद्रौ नागरखण्डोक्तेः। यत्तु निर्णयदीपिकायाम्—

मृताहनि पितुर्यो वै श्राद्धं दास्यति मानवः॥

इति द्वितीयमर्द्धमलेखि, यच्च कातीयत्वेनालेखि—

या तिथिर्यस्य तातस्य मृताहे तु प्रवर्तते।
सा तिथिः पितृपक्षेऽपि पूजनीया प्रयत्नतः॥
तिथिच्छेदो न कर्त्तव्यो विनाऽऽशौचं यदृच्छया।
पिण्डश्राद्धं च कर्तव्यं विच्छित्तिं नैव कारयेत्॥
अशक्तः पक्षमध्ये तु करोत्येकदिने यदि।
निषिद्धेऽपि दिने कुर्यात्पिण्डदानं यथाविधि॥

इति तन्महानिबन्धेष्वलिखनान्निर्मूलम्। अतोऽनिषिद्धे यस्मिन्कस्मिन्नपि दिने कार्यं न तु निषिद्धेऽपि मृताहनीति नियमः। तच्च नित्यम्—

आषाढ्याः पञ्चमे पक्षे यः श्राद्धं न करिष्यति।
शाकेनापि दरिद्रो वा सोऽन्त्यजत्वमुपेष्यति।

इति तत्रैवाकरणे दोषश्रवणात्। अत्रानुपपत्तौ पक्षान्तरमाह यमः—

हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन्।
पञ्चम्योरन्तरे दद्यादुभयोरपि पक्षयोः। इति॥

पक्षमध्ये कथंचिच्छ्राद्धे न जाते तु सुमन्तुः—

कन्याराशौ महाराज यावत्तिष्ठेद्विभावसुः।
तस्मात्कालाद्धवेद्देयं वृश्चिकं यावदागतः। इति॥

---

## अथ महालये निषिद्धकालः।

### तत्र संग्रहश्लोकः।

नन्दाश्वकामरव्यारभृग्वग्निपितृकालभे।
गण्डे वैधृतिपाते च पिण्डास्त्याज्याः सुतेप्सुभिः॥

नन्दाः प्रतिपत्षष्ठ्येकादश्यः। अश्वः सप्तमी। कामस्त्रयोदशी। आरो भौमः। अग्निपितृकालभानि कृत्तिकामघाभरण्यः। पातो व्यतीपातः। अत्र सप्तमीरविभौमभरणीगण्डवैधृतिव्यतीपातेषु मूलवचोऽन्वेष्यम्। वसिष्ठः—

नन्दायां भार्गवदिने चतुर्दश्यां त्रिजन्मसु।
एषु श्राद्धं न कुर्वीत गृही पुत्रधनक्षयात्॥

त्रिजन्म जन्मभं ततो नवममेकोनविंशं चेति। यत्तु 'कर्तुश्च पुत्रदाराणां त्रिजन्मर्क्षाणि चिन्तयेत्' इति तत्राकरश्चिन्त्यः। नारदः—

कृत्तिकायां च नन्दायां भृगुवारे त्रिजन्मसु।
पिण्डदानं न कर्तव्यं कुलक्षयकरं यतः॥
त्रिजन्मसु त्रिपादेषु नन्दायां भृगुवासरे।
धातृपौष्णभयोः श्राद्धं न कर्तव्यं कुलक्षयात्॥
सकृन्महालये काम्ये पुनः श्राद्धेऽखिलेषु च।
अतीतविषये चैवमेतत्सर्वं विचिन्तयेत्॥ इति।

वृद्धगर्गः—

प्राजापत्ये च पौष्णे च पित्रर्क्षे भार्गवे तथा।
यस्तु श्राद्धं प्रकुर्वीत तस्य पुत्रो विनश्यति॥ इति।

प्राजापत्यं रोहिणी। पौष्णं रेवती। पित्रर्क्षं मघा। अस्यापवादो हेमाद्राविति प्रयोगपारिजाते—

अमा पाते भरण्यां च द्वादश्यां पक्षमध्यके।
तथा तिथिं च नक्षत्रं वारं च न विचारयेत्॥ इति।

इदं च हेमाद्रिपुस्तकेषु न दृश्यते। महालयश्राद्धं चाधिमासे न कर्तव्यम्—

नभो वाऽथ नभस्यो वा मलमासो यदा भवेत्।
सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः॥

इति नागरखण्डात्। पञ्चमसप्तमत्वे आषाढपूर्णिमातः।

वृद्धिश्राद्धं तथा होममग्न्याधेयं महालयम् ।
राजाभिषेकं काम्यं च न कुर्याद्भानुलङ्घिते ॥

इति भृगूक्तेश्च । तत्र विश्वेदेवास्तावद्धूरिलोचनौ । तथा चादित्यपुराणे—

अपि कन्यागते सूर्ये काम्ये च धुरिलोचनौ ॥

कन्यागत इति कन्यासङ्क्रान्तिनिमित्तके श्राद्ध इति केचित् । तदा तु महालये पुरूरवार्द्रवावेव ।

---

पित्र्ये देवताक्रममाह बोपदेवः ।

तातम्बात्रितयं सपत्नजननी मातामहादित्रयं
सस्त्रि स्त्रीतनयादि तातजननीस्वभ्रातरः सस्त्रयः ।
तातम्बात्मभगिन्यपत्यधवयुग्जायापिता सद्गुरुः
शिष्याप्ताः पितरो महालयविधौ तीर्थे तथा तर्पणे ॥ इति ।

तातम्बात्रितयं पित्रादित्रयं मात्रादित्रयं च । मातामहादित्रयं सस्त्रीति सपत्नीकमिति प्रयोज्यम् । अपत्यधवयुगिति सापत्यां सधवामित्यर्थः । अत्र पार्वणत्रयं कार्यम् । तथाच श्राद्धहेमाद्रौ—

महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च ।
नवदैवत्यमत्रेष्टं शेषं षाट्पौरुषं विदुः ॥ इति

समर्थस्य तु द्वादशदैवत्यम् । तथा च द्वैतनिर्णये निगमे—

महालये गयाश्राद्धे वृद्धौ चान्वष्टकासु च ।
ज्ञेयं द्वादशदैवत्यं तीर्थे प्रौष्ठे मघासु च ॥ इति ।

क्रमान्तरं प्रघट्टके स्मृत्यन्तरे—

आदौ पिता ततो माता सपत्नजननी तथा ।
मातामहाः सपत्नीकाः स्वपत्नी तदनन्तरम् ॥
सुतभ्रातृपितृव्याश्च मातुलाश्च सभार्यकाः ।
दुहिता भगिनी चैव दौहित्रो भागिनेयकः ॥
पितृष्वसा मातृष्वसा श्वशुरो गुरुरर्थिनः ॥ इति ।

क्रमान्तरं पारिजाते सङ्ग्रहे—

पितृमातृमातामहाः पितृव्यो भ्रातरः सुतः ।
पितृष्वसा मातुलश्च तद्भगिन्यः स्वजामयः ॥
भार्याभगिन्यो दुहिता श्वशुरा भावुका स्नुषाः ।

शालको गुरुराचार्यः स्वामी मित्रं यथाक्रमम् ॥ इति ।

स्वजामयः स्वभगिन्यः भावुका भगिनीपतयः । एतेषां क्रमाणामैच्छिको विकल्पः । पित्रादिभिन्नानां तु महालये एकोद्दिष्टमेव,

उपाध्यायो: गुरु श्वश्रूः पितृव्याचार्यमातुलाः ।
श्वशुरभ्रातृतत्पुत्रा ऋत्विक्शिष्यस्वपोषकाः ।
भगिनी स्वामिदुहितृजामातृभगिनीसुताः ॥

इत्युपक्रम्य,

सखिद्रव्यदशिष्याद्यास्तीर्थे चैव महालये ।
एकोद्दिष्टेन विधिना पूजनीयाः प्रयत्नतः ॥

इति हेमाद्रौ पुराणोक्तेः । सुमन्तुरपि—

सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते ।
भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ।
मित्राय गुरवे श्राद्धमेकोद्दिष्टं न पार्वणम् ॥ इति ।

सपत्नमातुरप्येकोद्दिष्टमेव । तथा तत्प्रक्रमे हेमाद्रौ जातूकर्ण्यः—

सपिण्डीकरणादूर्ध्वं पित्रोरेव हि पार्वणम् ।
पितृव्यभ्रातृमातॄणामेकोद्दिष्टं न पार्वणम् ।
पार्वणं त्वभिनिर्वर्त्य एकोद्दिष्टं समापयेत् ॥

पुलस्त्यः—

महालये गयाश्राद्धे गतासूनां क्षयेऽहनि ।
तन्त्रेण श्रपणं कृत्वा श्राद्धं कुर्यात्पृथक् पृथक् ॥ इति ।

यत्तु—

प्रदानं यत्र यत्रैषां सपिण्डीकरणात्परम् ।
तत्र पार्वणवत्कुर्यादेकोद्दिष्टं त्यजेद्बुधः ॥

इति तदेतादृशैकोद्दिष्टविधिना बाधादेतद्व्यतिरिक्तविषयम् । बहुविप्रासंभवे चतुर्विंशतिमते—

एकस्मिन्ब्राह्मणे सर्वानाचार्यादींस्तु पूजयेत् ॥ इति ।

---

## अत्र भरणीश्राद्धे गयाफलम् ।

भरणी पितृपक्षे तु महती परिकीर्तिता ।
अस्यां श्राद्धं कृतं येन स गयाश्राद्धकृद्भवेत् ॥

इति मात्स्यात् । महालये सप्तम्यादिषु त्रिदिनेषु माध्यावर्षाख्यं

श्राद्धम् । तथा चाष्टकान्वष्टकापूर्वेद्युःश्राद्धान्युक्त्वाऽऽश्वलायनः—

"एतेन माध्यावर्षं प्रौष्ठपद्या अपरपक्षे" । इति ।

मध्ये वर्षासु भवं माध्यावर्षमित्यर्थः । हरदत्तस्तु माघ्यावर्षमिति पपाठ । मघायुतवर्षासु भवं माघ्यावर्षं 'मघाश्राद्धम्' इति निर्णिनाय । अत्रत्याष्टमीनवम्योरष्टकान्वष्टकाश्राद्धे निर्णीते प्राक् । इयमेवान्वष्टकाऽक्षयनवमी सौभाग्यनवमी तु व्यवह्रियते पामरैः । नत्वत्र कर्मभेदे प्रमाणं किंचिदस्ति । वैष्णवानां सन्यासिनां च महालयश्राद्धं द्वादश्यां कार्यम् ।

यतीनां च वनस्थानां वैष्णवानां विशेषतः ।
द्वादश्यां विहितं श्राद्धं कृष्णपक्षे विशेषतः ॥

इति प्रतापमार्त्तण्डे संग्रहोक्तेः ।

सन्यासिनोऽप्याब्दिकादि पुत्रः कुर्याद्यथाविधि ।
महालये तु यच्छ्राद्धं द्वादश्यां पार्वणं भवेत् ॥

इति तत्रैव वायवीयाच्च ।

---

## अथ त्रयोदशीश्राद्धम् ।

मनुः—यत्किञ्चिन्मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् ।
तदप्यक्षय्यमेव स्याद्वर्षासु च मघासु च ॥ इति ।

एतन्मधुदानं कलौ न कार्यम्—

अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥

इति निगमोक्तेः । एतच्च दिनान्तरगतास्वपि मघासु कार्यं 'मघासु च' इति चकारात् । अत एव त्रयोदशीमघाश्राद्धयोर्भेदः । 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाऽच्युतो भवति' इत्यत्रेव चकारादाग्नेययोर्भेदः । मघात्रयोदश्योर्योगे तु फलाधिक्यम्—

त्रयोदशी भाद्रपदी कृष्णा मुख्या पितृप्रिया ।
तृप्यन्ति पितरस्तस्याः स्वयं पञ्चशतं समाः ॥
मघायुतायां तस्यां तु जलाद्यैरपि तोषिताः ।
तृप्यन्ति पितरस्तद्वद्वर्षाणामयुतायुतम् ॥

इति स्मृतिचन्द्रिकायां स्मृत्यन्तरात् ।

प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् ।

प्राप्येत्युक्त्वा—

प्रजामिष्टां यशः स्वर्गमारोग्यं च धनं तथा।
नृणां श्राद्धे सदा प्रीताः प्रयच्छन्ति पितामहाः॥

इति पारिजाते शङ्खोक्तेः। अत्र त्रयोदशीश्राद्धं नित्यमपि,

प्रौष्ठपद्यामतीतायां तथा कृष्णा त्रयोदशी॥

इति कालानुक्त्वा—

श्राद्धमेतेष्वकुर्वाणो नरकं प्रतिपद्यते।

इति कालहेमाद्रौ विष्णुधर्मोत्तरात्। मघाश्राद्धे चाविभक्तानामपि पृथगधिकारः—

विभक्ता वाऽविभक्ता वा कुर्युः श्राद्धं पृथक् पृथक्।
मघासु च ततोऽन्यत्र नाधिकारः पृथग्विना॥

इति हेमाद्रौ स्मृतेः। इदं च गजच्छायेति निरणायि गजच्छाया-निर्णये प्राक्। मघात्रयोदशीयोगे त्विदं श्राद्धमधिमासेऽपि भवति। तथा च काठकगृह्ये—

मघात्रयोदशीश्राद्धं प्रत्युपस्थितिहेतुकम्।
अनन्यगतिकत्वेन कर्तव्यं स्यान्मलिम्लुचे॥ इति।

केवलमघाप्रयुक्तं केवलत्रयोदशीप्रयुक्तं तु न भवति। शुद्धमासेऽपि तयोः संभवेन सगतिकत्वात्। अत एव 'प्रत्युपस्थितिहेतुकमनन्य-गतिकत्वेन' इति च हेतुनिर्देशोऽपि सङ्गच्छते। यत्तु वामनपुराणे—

त्रयोदश्यां तु वै श्राद्धं न कुर्यात्पुत्रवान् गृही॥ इति।

यच्चाङ्गिराः—

त्रयोदश्यां कृष्णपक्षे यः श्राद्धं कुरुते नरः।
पञ्चत्वं तस्य जानीयाज्ज्येष्ठपुत्रस्य निश्चितम्॥ इति।

तत्पुत्रवद्गृहस्थस्य मघायुक्तत्रयोदश्यां सपिण्डकश्राद्धनिषेधपरम्। अत एव प्रतापमार्तण्डे बृहत्पराशरः—

मघायुक्तत्रयोदश्यां पिण्डनिर्वपणं द्विजः।
ससन्तानो नैव कुर्यान्नित्यं ते कवयो विदुः॥ इति।

यत्तु हेमाद्रौ नागरखण्डे—

असन्तानस्तु यस्तस्य श्राद्धे प्रोक्ता त्रयोदशी।
सन्तानयुक्तो यः कुर्यात्तस्य वंशक्षयो भवेत्॥ इति।

तदपि सपिण्डकश्राद्धनिषेधपरम्। यत्तु कार्ष्णाजिनिः—

श्राद्धं नैवैकवर्गस्य त्रयोदश्यामुपक्रमेत् ।
न तृप्तास्तत्र ये यस्य प्रजां हिंसन्ति तस्य ते ॥ इति ।
पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।

इति धौम्यवाक्येन मातामहप्राप्तावपि 'अप्राप्तैकपार्वणनिषेधार्थम्' इति हेमाद्रिः । यत्तु 'अप्राप्तनिषेधे वचोवैयर्थ्याज्जीवन्मातृमातामहवर्गकं प्रत्ययं निषेधस्तस्यैकवर्गयजनप्राप्तेरिति । तन्न, औत्तरार्द्धिकार्थवादासङ्गतेः । युक्तं तु—

यावत्किञ्चित्स्वगृह्योक्तं यस्य कर्म प्रचोदितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥

इति वाक्येन येषां सूत्रे मातामहा नाम्नातास्तान्प्रति सामान्यतः प्राप्तस्यैकपार्वणस्य निषेधार्थमिदमिति । अत्र मघात्रयोदशीयुगादिश्राद्धानां तन्त्रता महालयश्राद्धकरणपक्षे तु तेनैवैषां प्रसङ्गसिद्धिः । बहुदैवत्यत्वसपिण्डत्वादिभिर्विशेषग्रहणात् महालयश्राद्धस्यापि तन्त्रत्वोक्तिस्तु कस्यचिन्मूर्खप्रलापत्वादुपेक्ष्या । इति महालयत्रयोदशी ।

अथात्र चतुर्दश्यामवैधमृतानामेकोद्दिष्टमुक्तं प्राक् । तत्र 'विश्वेदेवा अपि भवन्ती' इति स्मृत्यर्थसारे प्रयोगपारिजाते च—

प्रेतपक्षे चतुर्दश्यामेकोद्दिष्टं विधानतः ।
दैवयुक्तं तु तच्छ्राद्धं पितॄणामक्षयं भवेत् ।
तच्छ्राद्धं दैवहीनं चेत्पुत्रदारधनक्षयः ॥ इति ।

महालये चतुर्दशीश्राद्धं लुप्तं चेद्वृश्चिकदर्शनपर्यन्तं यस्मिन् कस्मिंश्चिद्दिने एकोद्दिष्टविधिनैव कार्यम् । यथाप्राप्त एव गौणकालविधानात् । एतेन टोडरानन्दीया पार्वणोक्तिरपास्ता । अमायां रवीन्दू हस्तस्थौ चेत्सा गजच्छायेत्युक्तं प्राक् ।

---

## मातामहश्राद्धम् ।

आश्विनसितप्रतिपदि मातामहश्राद्धमुक्तं हेमाद्रौ—

जातमात्रोऽपि दौहित्रो विद्यमानेऽपि मातुले ।
कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते ॥

इति स्मृतेः । जातमात्रोऽधिकारी जात इत्यर्थः । "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते" इत्यत्रेवाधिकारी जायमान इत्यर्थः । तेनोपनयनात्प्रागेतच्छ्राद्धानुष्ठानमिदानीन्तनानां दुराचार एव । एतच्च

जीवत्पितृक एव कुर्यादिति साम्प्रदायिकाः । एतच्च सपिण्डकमेव कार्यम् । यत्तु—

मुण्डनं पिण्डदानं च प्रेतकर्म च सर्वशः ।
न जीवत्पितृकः कुर्याद्गुर्विणीपतिरेव च ॥

इति दक्षस्मृतिस्थमिति कश्चिल्लिलेख तद्दक्षस्मृतौ ग्रन्थान्तरे चाभावान्निर्मूलम् । यत्त्वस्याः सङ्गवव्यापित्वबोधकं वचः—

प्रतिपद्याश्विने शुक्ले दौहित्रस्त्वेकपार्वणम् ।
श्राद्धं मातामहं कुर्यात्सपिता सङ्गवे सदा ॥ इति

तन्निर्मूलम् ।

---

## सांवत्सरिकम् ।

क्षयाहस्य श्राद्धकालत्वमाह व्यासः—

मासपक्षतिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि ।
प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तं विदुः ॥ इति ।

सन्यासिनां तु क्षयाहे पार्वणमेव नैकोद्दिष्टम् । तथा च प्रचेताः—

एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह ।
सपिण्डीकरणाभावात्पार्वणं तस्य सर्वदा ॥ इति ।

पक्षतिथिविशेषतोऽपि पार्वणनियमो मिताक्षरायां स्मृतौ—

अमावास्या क्षयो यस्य पितृपक्षेऽपि वा पुनः ।
पार्वणं तत्र कर्तव्यं नैकोद्दिष्टं कदाचन ॥ इति ।

इदं च 'अनाकरम्' इति विज्ञानेश्वरः । शंखस्मृतिर्मूलमिति माधवः । शिष्टाचारोऽप्येतद्वाक्यानुसारी । अमावास्या महालयभिन्नक्षयाहे । संन्यासिभिन्नानां पार्वणैकोद्दिष्टयोर्विकल्पः । वचनद्वैविध्यात् । तथाच शातातपः—

सपिण्डीकरणं कृत्वा कुर्यात्पार्वणवत्सदा ।
प्रतिसंवत्सरं विद्वान् छागलेयोदितो विधिः ॥ इति ।

यमस्तु—

सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः ।
मातापित्रोः पृथक् कुर्यादेकोद्दिष्टं क्षयेऽहनि ॥

इति । अत्र 'कुलाचाराद्व्यवस्था' इति मिताक्षरायाम् । आब्दिकादिषु मातामहपर्युदासमाह कात्यायनः—

कर्षूसमन्वितं मुक्त्वा तथाऽऽद्यं श्राद्धषोडशम् ।
प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः ।। इति ।

कर्षूसमन्वितं सपिण्डनम् । तत्र कर्षूसंज्ञकगर्तविधानात् ।

इति श्राद्धकालाः ।

---

क्षयाहाज्ञाने तु क्षयाहश्राद्धं प्रकृत्याऽऽह बृहस्पतिः—

न ज्ञायते मृताहश्चेत्प्रमीते प्रोषिते सति ।
मासश्चेत्प्रतिविज्ञातस्तद्दर्शे स्यान्मृताहनि ।।

'तद्दर्श एव मृताहनि' इति सामानाधिकरण्यम् । तद्दर्श एव मृताह इत्यर्थः । मरीचिस्तु—

श्राद्धविघ्ने समुत्पन्ने अविज्ञाते मृतेऽहनि ।
एकादश्यां तु कर्तव्यं कृष्णपक्षे विशेषतः ।। इति ।

अमावास्यैकादश्योस्तु विकल्पः । 'विशेषतः' इत्युक्त्या शुक्लपक्षेऽपीति हेमाद्रिः । दिनाज्ञाने मासाज्ञाने च भविष्यपुराणे—

दिनमेकं न जानाति मासं नापि कदाचन ।
कार्यं तेन अमायां वै श्राद्धं माघेऽथ मार्गके ।।

कदाचन न जानातीत्यनुषङ्गः । प्रस्थानमासतद्दिनज्ञाने तु तदेव ग्राह्यम् । तथा च बृहस्पतिः—

दिनमासौ न विज्ञातौ मरणस्य यदा पुनः ।
प्रस्थानदिनमासौ तु ग्राह्यौ पूर्वोक्तया दिशा ।। इति ।

प्रास्थानिकमासदिवसाज्ञाने तु भविष्योत्तरे "मृतवार्त्ताश्रुतेर्ग्राह्यौ पूर्वोक्तक्रमेण तु ।" इति । मरणाश्रवणे तु जातूकर्ण्यः—

पितरि प्रोषिते यस्य न वार्ता नैव वाऽऽगतिः ।
ऊर्ध्वं पञ्चदशाद्वर्षात्कृत्वा तत्प्रतिरूपकम् ।।
कुर्यात्तस्य च संस्कारं यथोक्तविधिना ततः ।
तदादीन्येव सर्वाणि प्रेतकार्याणि संचरेत् ।। इति ।

अत्र प्रोषित इत्येव विवक्षितं तेन तद्विशेषणं पितरीत्यविवक्षितम् । अनुवाद्यविशेषणत्वात् । तदादीन्येव दाहदिनप्रभृतीन्येव संचरेत्कुर्यादित्यर्थः । एवं च दाहदिनमेव क्षयाहस्थानापन्नमिति तात्पर्यम् । वृद्धबृहस्पतिः—

यस्य न श्रूयते वार्ता यावद्द्वादशवत्सरम् ।
कुशपुत्रकदाहेन तस्य स्यादवधारणम् ॥

प्रेतक्रियोत्तरमागते विशेषो वृद्धमनुना दर्शितः—

प्रोषितस्य यदा कालो गतश्चेद्द्वादशाब्दिकः ।
प्राप्ते त्रयोदशे वर्षे प्रेतकार्याणि कारयेत् ॥
जीवन्यदि स आगच्छेत् घृतकुम्भे नियोजयेत् ।
उद्धृत्य स्नापयित्वाऽस्य जातकर्मादि कारयेत् ॥
द्वादशाहं व्रतं कुर्यात्त्रिरात्रमथवाऽस्य तु ।
स्नात्वोद्वहेत्ततो भार्यामन्यां वा तदभावतः ।
अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत् ॥
अथैन्द्राग्नेन पशुना गिरिं गत्वा च तत्र तु ।
इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्ततः ॥ इति ।

आशौचेन श्राद्धप्रतिबन्धे विशेषः षट्त्रिंशन्मते—

मासिकाब्दे तु संप्राप्ते अन्तरा मृतसूतके ।
कार्यं वदन्ति शुद्ध्यन्ते दर्शे वाऽपि विशेषतः ॥ इति ।

विशेषत इत्युक्त्या शुक्लपक्षोऽप्यनुज्ञायत इति हेमाद्रिः । अत्रिः—

तदहश्चेत्प्रदुष्येत केनचित्सूतकादिना ॥
सूतकानन्तरं कार्यं पुनस्तदहरेव वा ॥ इति ।

तदहरुत्तरमासगते तस्मिन्नेव दिन इत्यर्थः । अत्राशौचान्त आद्यः पक्षः मुख्यकालप्रत्यासत्तेः । ततो दर्शः । ततः कृष्णैकादशी । ततः शुक्ला । तत उत्तरमासे तदहरिति हेमाद्रिः । केचित्तु पुनस्तदहरेव वेति पक्षो मासिकपरो न त्वनुमासिकपरोऽपि ।

एकोद्दिष्टे तु संप्राप्ते यदि विघ्नः प्रजायते ।
अन्यस्मिंस्तत्तिथौ तस्मिन् श्राद्धं कुर्यात्प्रयत्नतः ॥

इति देवलेनैकोद्दिष्ट एव मासान्तरस्थतदहर्विधानात् । एकोद्दिष्टत्वं तु मासिकानामेव न त्वनुमासिकानामिति । अन्यस्मिन्मासान्तरे तत्तिथौ मरणतिथौ तस्मिन्कृष्णे शुक्ले वेत्यर्थ इत्याहुः । वस्तुतस्तु आब्दिकस्य पूर्वमेकोद्दिष्टरूपत्वमप्युक्तम् । अनुमासिकानामपि तानि प्रक्रम्य 'यो यथा वार्षिकं कुर्यात्तथा कुर्यात्स तान्यपि' इतिवाक्येनैकोद्दिष्टरूपता स्पष्टा । अतो वार्षिकमासिकानुमासिकानि यदैकोद्दिष्टरूपाणि क्रियन्ते

तदा मासान्तरस्थतत्तिथौ कार्याणि । यदा तु पार्वणानि तानि तदा मृततिथिदर्शकृष्णशुक्लैकादश्यः कालाः । यदपि—

देये पितॄणां श्राद्धे तु आशौचं जायते यदा ।
आशौचे तु व्यतिक्रान्ते तेभ्यः श्राद्धं प्रदीयते ॥

इति ऋष्यशृङ्गोक्तराशौचान्तमात्रपरत्वान्न तद्विषयो मासान्तरगततिथिरूपः काल इत्याहुः । तन्न, पूर्वोक्तात्रिवचने आशौचविघ्ने मासान्तरगततत्तिथिरूपकालोक्तिविरोधात् । यदपि माधवनृसिंहौ 'मासिकमाशौचे सति तदन्ते आशौचभिन्नविघ्ने पुनस्तदहरेव । षट्त्रिंशन्मतवचोगतमासिकपदं त्वनुमासिकपरम् । अत आशौचे सति तदनुमासिकमाब्दिकं वा, तदन्ते दर्शे कृष्णायां शुक्लायामेकादश्यां वा, इति चत्वारः पक्षा इत्याहतुः । तदप्यनेनैव परास्तम् । प्रमाणाभावाच्च । हारीतः—

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् ।
आमावास्यादि नियतं माससंवत्सरादृते ॥ इति

माससंवत्सरान्मासिकसांवत्सरिकात् । एतद्भिन्नं नियतं नित्यमामावास्याद्यामेन कार्यमित्यर्थः । श्राद्धविघ्नोऽत्र पत्नीरजोदर्शनम् ,

अपत्नीकः प्रवासी च भार्या यस्य रजस्वला ।
सिद्धान्नेन न कुर्वीत आमं तस्य विधीयते ॥

इत्युशनोवाक्यात् । आमाभावे तु व्यासः—

द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि ।
हेमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला । इति ॥

इदं चामान्नहेमविधानममावास्यादिश्राद्धविषयम् । क्षयाहश्राद्धं तु रजोदर्शनात्पञ्चमदिने कार्यम्—

मृतेऽहनि तु संप्राप्ते यस्य भार्या रजस्वला ।
श्राद्धं तत्र न कर्तव्यं कर्तव्यं पञ्चमेऽहनि ॥

इति श्लोकगौतमोक्तेरेतदानुपूर्वीकस्मृत्यन्तराच्च । यत्तु हेमाद्रिः—'भर्तुः पत्न्या सह श्राद्धाधिकाराद्रजोदर्शनेन तस्या अधिकारप्रतिबन्धे भर्तुरप्यनधिकारात्प्रतिबद्धं श्राद्धं कदा कार्यमित्याकाङ्क्षायां पञ्चमदिनविधिः' इत्याह । तन्न । यदा हि पत्युः पत्न्याश्चाऽऽहवनीयत्वादिकामनयाऽऽधानेऽधिकारः सिद्धस्तदा क्लृप्तपतिविद्ययैव कर्मनिर्वाहे तस्या

अक्लृप्तविद्याकल्पनपरिजिहीर्षया सहाधिकार उपपद्यते । तस्या आहव-नीयत्वाद्यकामनायां तु न सहाधिकारः । भर्त्रधिकारिके केवलमाज्यावे-क्षणादौ कर्तृत्वमात्रं तस्या अध्वर्य्वादेरिव होमादौ । एवमाहवनीयादिसा-ध्येषु दर्शपूर्णमासादिष्वपि पत्न्याः फलकामनायां सहाधिकारः । तद-भावे तु पत्युरेवाधिकारः । पत्न्यास्तु केवलमाज्यावेक्षणादौ कर्तृत्वमा-त्रं नाधिकारः । मण्डनोक्ते 'तुल्य एवाधिकारः स्यात्, अधिकारेऽपि वैषम्यम्'इत्यधिकारगते साम्यवैषम्योक्ती अप्येतदभिप्राये एव । न च भर्तुः कामनाभावेनानधिकारे पत्न्याश्च तत्सत्त्वेनाधिकारे पतिं विना तस्या एव केवलं प्रयोगोऽस्त्विति वाच्यम् । अपूर्वविद्याकल्पनगौरवात् । पत्युस्तु रोगनाशेष्ट्यादाविव तस्या अधिकारं विनाऽप्यप्रतिषिद्धोऽधिकारः । न च फलस्वाम्यधिकारिपर्यायपतिशब्दादुत्पन्ननादेशङीप्रत्ययाभ्यां पत्नीशब्दसिद्धेर्यस्मिन् प्रयोगे तस्या आज्यावेक्षणादिकर्तृत्वं तन्निरूपित एवोपस्थितिलाघवात्पत्नीशब्देनाधिकारो गम्यते इति वाच्यम् 'पत्नी भर्तुर्धनहरी, पत्नी दुहितरश्चैव, असुताश्च पितुः पत्न्यः' इत्यादिषु पत्नी-शब्दस्य फलस्वाम्ययोग्यतामात्रे दर्शनात्पत्यू रोगनाशेष्ट्यादौ च तस्याः फलोपधानासंभवेन योग्यतामात्रस्यावश्यमङ्गीकार्यत्वात्सर्वत्र योग्यत-यैव निर्वाहः । तदवच्छेदकं तूढात्वमेव । किंच—सर्वत्रापि भुज्यमान एव फले तत्स्वाम्यरूपाधिकारः फलोपहितः । क्रतुप्रयोगादौ तु तद्योग्य-तामात्रमेव न फलोपधानम् । योग्यतावच्छेदके परमननुगमः । यथा बृहस्पतिसवे ब्राह्मणत्वं राजसूये क्षत्रियत्वम्, एवमिहोढात्वमिति न कश्चिद्विशेषः । निरणायि चेदं मयाऽध्ययनवादे सप्रपञ्चमिति नेह विस्तरः । पत्यधिकारिकेषु तु तत्पितृमातृभ्रात्रादिदेवत्येषु तस्या अन-धिकारः ।

प्रतिसंवत्सरं कार्यं मातापित्रोर्मृतेऽहनि ।
पितृव्यस्याप्यपुत्रस्य भ्रातुर्ज्येष्ठस्य चैव हि ॥

इति स्वसम्बन्धिकार्थकपितृमात्रादिपदगर्भदेवीपुराणादिवचसां तां प्रत्यप्रवृत्तेः । अधिकाराभावे च तद्गतं साहित्यं गर्भस्रावेणैव गलितम् । "पाणिग्रहणाद्धि सहत्वं कर्मसु तथा पुण्यफले च" इति स्मृतिस्तु दार्श-पौर्णमासिकादौ सहाधिकारमेवानुवदति नान्यत्र विधत्ते । अतः पूर्वो-क्तवचनेनैव क्षयाहदिनबाधः । पञ्चमदिनविधिश्च न सहाधिकारबलेन । अत्र कालादर्शानुयायिनः—

अपुत्रा तु यदा भार्या संप्राप्ते भर्तुराब्दिके ।
रजस्वला भवेत्सा तु कुर्यात्तत्पञ्चमेऽहनि ॥

इति कालादर्शलिखितश्लोकगौतमवाक्यस्य मृतश्राद्धाधिकारिणीं भार्यां प्रति प्रवृत्तेस्तदेकमूलकल्पनालाघवेन 'मृतेऽहनि' इत्यत्रापि यस्य कर्त्री भार्येति व्याख्येयमित्याहुः । माधवस्तु मतद्वयमपि लिलेख न तु किञ्चिन्निर्णिनाय । तातचरणास्तु 'मृतेऽहनि' इति वचः पितृमातृभ्रातृपितृव्यादिमासिकाब्दिकोभयपरम् । 'अपुत्रा तु' इति श्लोकगौतमीयं तु भर्त्राब्दिकमात्रपरम् । अतो भिन्नविषयतया नैकमूलतासंभव इत्याहुः । अयं च तेषामाशयः—

श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्तितम् ।
अमावास्यादिनियतं माससंवत्सरादृते ॥

इति हारीतपर्युदस्तयोर्मासिकसांवत्सरिकयोरामश्राद्धाभावे निर्णयाकाङ्क्षायाम् 'मृतेऽहनि' इत्येतदुभयविषयं नाब्दिकमात्रे श्लोकगौतमीयेनोपसंहर्तुं शक्यम् । मम तु प्रतिभाति—कालादर्शादावनयोर्द्वयोरपि वाक्ययोः श्लोकगौतमीयतया लिखनान्नोपसंहारो युक्तः, सामान्यवचनानर्थक्यापत्तेः ।

ननु नेदं वाक्यद्वयं किंत्वेकस्मिन्नेव वाक्ये पाठद्वयमात्रम् । तत्र 'अपुत्रा तु यदा' इति पाठपक्षे 'मृतेऽहनि' इत्येतत्पाठतुल्यानुपूर्वीकं स्मृत्यन्तरवाक्यं कथं नोपसंह्रियते इति चेत् । शृणु । एतत्पाठद्वयमपि प्रमाणत्वात्समुच्चीयते संदिग्धत्वाद्विकल्प्यते वा ? नाद्यः, स्मृत्यन्तरवाक्यस्योपसंहारेऽपि एतत्समानार्थकस्य मृतेऽहनीत्यादेः सामान्यपठितस्याऽऽनर्थक्यापत्त्या तदयोगात् । नान्त्यः । स्मृत्यन्तरसंवादेन 'मृतेऽहनि' इत्येतत्पाठस्यैव प्रामाण्यनिश्चयात् 'अपुत्रा तु यदा' इत्यादेः पाठस्य त्वप्रामाणिकत्वात् । यत्तु लौगाक्षिः—

पुष्पवत्स्वपि दारेषु विदेशस्थोऽप्यनग्निकः ।
अन्नेनैवाब्दिकं कुर्याद्धेम्ना वाऽऽमेन न क्वचित् ॥ इति ।

तद्दाराणां पुष्पवत्त्वे निमित्ते वाक्यान्तरप्राप्ते पञ्चमदिनरूपे कालेऽन्नेनैव कुर्यादित्येवमामहेमपरिसङ्ख्यामात्रार्थं न मृततिथिरूपकालविध्यर्थम् । यच्चैतस्यैवार्थस्य संग्राहकं पौरुषेयं वाक्यम्—

विदेशगो वा विगताग्निको वा
रजस्वलायामपि धर्मपत्न्याम् ।

श्राद्धं मृताहे विदधीत पाकै-
नमेन हेम्ना न तु पञ्चमेऽह्नि ॥ इति ।

तदपि मृताहे रजस्वलायां धर्मपत्न्यां सत्यां श्राद्धं नामेन हेम्ना न। पञ्चमेऽह्नि तु पाकैर्विदधीत, इत्येवं व्याख्येयम्। यत्तु पारिजातादौ—

[ रजस्वलायां भार्यायां क्षयाहं यः परित्यजेत्।
स वै नरकमाप्नोति यावदाभूतसंप्लवम्॥ ]
मासिकानि सपिण्डानि आमावास्यं तथाब्दिकम्।
अन्नेनैव तु कर्तव्यं यस्य भार्या रजस्वला ॥ इति ।

तदप्यन्नापद्यामहेमपरिसंख्यामात्रार्थम्। आब्दिकं तु पञ्चमेऽह्नि अन्नेनैवेति सर्वं शिवम्। ग्रहणे भोजननिषेधप्रयोजकवेधमध्ये ग्रहणकाले चाऽऽब्दिकश्राद्धप्राप्तौ भोक्तृब्राह्मणलाभेऽन्नेनैव कार्यं तदलाभे आमेन हेम्ना वा। तथाच गोभिलः—

दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम्।
अन्नेनासंभवे हेम्ना कुर्यादामेन वा सुतः ॥ इति ।

अत्र ग्रहे प्रत्याब्दिकमुपस्थितमित्येवोद्देश्यसमर्पकम्। तेन रविग्रहे पित्र्यतिरिक्तस्यापि चन्द्रग्रहेऽपि पित्रादीनां सर्वेषामन्नादिभिर्यथासंभवं विहितमेव कार्यम्। एवं मासिकमपि न्यायसाम्यात्। यत्तु पठन्ति, 'ग्रहणात्तु द्वितीयेऽह्नि रजोदोषात्तु पञ्चमे' इति तन्निर्मूलम्।

## अथ श्राद्धे कालनिषेधः।

स्कान्दे—उपसन्ध्यं न कुर्वीत पितृपूजां कथञ्चन ॥ इति ।

विष्णुः— सन्ध्यारात्र्योर्न कर्तव्यं श्राद्धं खलु विचक्षणैः।
तयोरपि च कर्तव्यं यदि स्याद्राहुदर्शनम् ॥ इति।

सन्ध्यामाह योगियाज्ञवल्क्यः—

उदयात्प्राक्तनी सन्ध्या मुहूर्तद्वयमुच्यते।
सायंसन्ध्या त्रिघटिका ह्यस्तादुपरि भास्वतः॥

## अथ पिण्डदाने कालनिषेधः।

ब्रह्मपुराणे—

यदा च श्रोत्रियोऽभ्येति गृहं वेदविदग्निचित्।
तेनैकेन तु कर्तव्यं पिण्डनिर्वपणादृते ॥

बृहत्पराशरः—

युगादिषु मघायां च विषुवेऽप्ययनेऽथ वा ।
भरणीषु च कुर्वीत पिण्डनिर्वपणं नहि ॥ इति ।

कृत्यरत्ने वृद्धगार्ग्यः—

पौर्णमासीषु सर्वासु निषिद्धं पिण्डपातनम् ।
वर्जयित्वा प्रौष्ठपदीं यथा दर्शस्तथैव सा ॥ इति ।

अस्य समूलत्वं विमृश्यम् । ज्योतिःपराशरः—

विवाहे विहिते मासास्त्यजेयुर्द्वादशैव हि ।
सपिण्डाः पिण्डनिर्वापं मौञ्जीबन्धे षडेव हि ॥ इति ।

क्वचित्प्रतिप्रसवमप्याह स एव—

महालये गयाश्राद्धे मातापित्रोः क्षयेऽहनि ।
यस्य कस्यापि मर्त्यस्य सपिण्डीकरणे तथा ।
कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सदा ॥ इति ।

अपिण्डके स्वधावाचनमपि प्रतिषेधति वृद्धशातातपः—

पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते ।
स्वधावाचनलोपोऽत्र ॥ इति ।

इति पिण्डदाननिषेधकालः ।

---

## अथ श्राद्धदेशाः ।

विष्णुधर्मोत्तरे—

दक्षिणाप्रवणे देशे तीर्थादौ वा गृहेऽपि वा ।
भूसंस्कारादिसंयुक्ते श्राद्धं कुर्याद्विचक्षणः ॥

दक्षिणाप्रवणे दक्षिणतोऽवनते । भूसंस्कारो मार्जनलेपनादिः । शङ्खः—

गोगजाश्वादिजुष्टेषु कृत्रिमायां तथा भुवि ।
न कुर्याच्छ्राद्धमेतेषु पारक्याशुचिभूमिषु ॥

कृत्रिमायामट्टालिकादौ । पारक्यासु परगृहीतासु ताश्च गोष्ठारामादयो न पुनस्तीर्थादिस्थानानि । तथाचादित्यपुराणे—

अटवी पर्वताः पुण्या नदीतीराणि यानि च ।
सर्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः ॥ इति ।
श्राद्धस्य पूजितो देशो गया गङ्गा सरस्वती ।
कुरुक्षेत्रं प्रयागं च नैमिषं पुष्करं तथा ॥

व्यासः—पुष्करेष्वक्षयं श्राद्धं जपहोमतपांसि च ।
महोदधौ प्रयागे च काश्यां च कुरुजाङ्गले ॥ इति

ब्रह्माण्डपुराणे श्राद्धकल्पे चतुर्दशेऽध्याये—
त्रिशङ्कोर्वर्जयेद्देशं सर्वं द्वादशयोजनम् ।
उत्तरेण महानद्या दक्षिणेन च कैकटम् ॥
देशस्त्रैशङ्कवो नाम वर्ज्यो वै श्राद्धकर्मणि ।

इति क्वचित्पाठः । महानदी फल्गूस्तस्यास्तीरे प्रत्येकं द्वादशयोजनानि कैकटमित्यर्थः ।

इति श्राद्धदेशाः ।

## अथ श्राद्धाधिकारिणः ।

शङ्खकात्यायनौ—
पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया ।
पुत्राभावे तु पत्नी स्यात्पत्न्यभावे तु सोदरः ॥

पुत्रग्रहणं पौत्रप्रपौत्रयोरुपलक्षणम् । यथाह विष्णुः—
पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसन्ततिः ।
सपिण्डसन्ततिर्वापि श्राद्धार्हो नृप जायते ॥ इति ।

मनुः—
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥ इति ।

पुत्रप्रतिनिधीन् दत्तकादीन् । क्रियालोपात्क्रियालोपभयादित्यर्थः । औरसादीन् द्वादशपुत्रानुपक्रम्य याज्ञवल्क्योऽपि—

---

१ ते च—
औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।
क्षेत्रजो क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।
कानीनः कन्यकाजातो मातामहसुतः स्मृतः ॥
अक्षतायां क्षतायां वा जातः पौनर्भवस्तथा ।
दद्यान्माता पिता वाऽयं स पुत्रो दत्तकः सुतः ॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयंकृतः ।
दत्तात्मातु: स्वयं दत्तो गर्भे विन्नः सहोढजः ॥
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः ॥
इति याज्ञवल्क्यस्मृतावुक्ताः ।

पिण्डदोऽंशहरश्चैषां पूर्वाभावे परः परः । इति ।

[ अत्र 'यद्यपि 'पुत्राभावे तु पत्नी स्यात्पत्न्यभावे तु सोदरः' इत्यौरसपुत्राभावे पत्नी तदभावे सोदर इति क्रमः प्रतीयते तथापि पुत्रपदस्य याज्ञवल्क्यवचसा द्वादशविधपुत्रोपलक्षणत्वेनौरसपुत्रपत्नीक्रमेऽवश्यं बाधिते, सकृत्प्रवृत्ताया: किमवगुण्ठनेनेतिन्यायेन 'पुत्रः पौत्रः प्रपौत्रो वा' इति विष्णूक्तयोः पौत्रप्रपौत्रयोरपि द्वादशविधपुत्रोत्तरं पत्न्याश्च पूर्वो निवेशः । पत्न्यभावे तु दुहिता ।'अपुत्रस्य तु या पुत्री साऽपि पिण्डप्रदा भवेत्' इति ऋष्यशृङ्गः । अत्र यद्यपि 'पुत्राभावे तु पत्नी स्यात्' इत्यनेन पुत्राभावे पत्न्याः 'अपुत्रस्य तु या पुत्री' इत्यनेन दुहितुरधिकारप्रतीतेः पुत्राभावे पत्नीकन्ययोर्नियामकाभावेन विकल्पप्रसक्तिः, तथापि 'योऽर्थहरः स पिण्डदायी' इति विष्णुनोक्तस्य धनग्रहणवत्त्वस्य पिण्डदातृविशेषणस्यापीदृशविषये नियामकत्वाङ्गीकारेण वक्ष्यति । धनग्रहणाधिकारश्च 'पत्नी दुहितरश्चैव' इत्यादिना पूर्वं पत्न्यास्तदभावे दुहितुः स्पष्ट एव । इदं चार्थहरत्वं सर्वेषां श्राद्धाधिकारिणां विशेषणम् । तथा सत्यविभक्तासंसृष्टसोदरसत्त्वे पत्न्या धनग्रहणेऽनधिकाराच्छ्राद्धेऽप्यनधिकारः स्यात् । स्याच्च दुहितृसत्त्वे तत्पुत्रादीनां मातृधनेऽनधिकाराच्छ्राद्धेऽनधिकार इति । नचेष्टापत्तिः ।

पुत्राभावे तु पत्नी स्यात्पत्न्यभावे तु सोदरः ।
पुत्रेषु विद्यमानेषु नान्यं वै कारयेत्स्वधाम् ॥

इत्यादिवचनैः पत्नीपुत्रयोरेवाधिकारस्येष्टत्वात् । दुहित्रभावे दौहित्रः । ] तथा च स्मृतिसङ्ग्रहे—

पुत्रः कुर्यात्पितुः श्राद्धं पत्नी तु तदसन्निधौ ।
धनहार्यथ दौहित्रस्तद्भ्राता चाऽथ तत्सुतः ॥

चशब्दाद्दुहिता ।

भ्रातुः सहोदरो भ्राता कुर्याद्दाहादि तत्सुतः ।
ततस्त्वसोदरो भ्राता तदभावे तु तत्सुतः ॥

दौहित्रो ज्येष्ठ इत्यर्थः । तद्भ्राता कनिष्ठ इत्यर्थः । यत्तु 'भ्रातृशब्देनासोदरभ्रातृव्याख्यानं तदाचारविरोधात्तत्सुतशब्देन च दौहित्रसपत्न-

---

१ कुंडलितः पाठो ङ. पुस्तके दृश्यते ।

भ्रातृसुतग्रहणेन भ्रातृपुत्रादौ सत्यत्यन्तविप्रकृष्टस्य क्रियाप्रसक्तेरुपेक्षणीयम् । अत्र यद्यपि धनहारिण एव दौहित्रस्याधिकारः प्रतीयते तथापि केवलोऽपिण्डं कुर्यात् । तथाच भविष्यत्पुराणे—

यथा व्रतस्थोऽपि सुतः पितुः कुर्यात्क्रियां नृप ।
उदकाद्यां महाबाहो दौहित्रोऽपि तथाऽर्हति ॥ इति ।

यथा व्रतस्थः सुतः पितुः क्रियां कुर्यादेवमधनहरोऽपि दौहित्रो मातामहस्य कुर्यादित्यर्थः । व्यवहितभ्रातृपुत्रस्याप्यभावे पिता । ततो माता । तदुक्तं तत्रैव—

उत्सन्नबान्धवं प्रेतं पिता भ्राताऽथवाग्रजः ।
जननी वाऽपि संस्कुर्यान्महदेनोऽन्यथा भवेत् ॥

इह क्रमो न विवक्षितः । तद्बोधकस्याथशब्दादेरभावात् । यस्तु कातीयनिषेधः—

अपुत्रायाः पतिर्दद्यात्सपुत्राया न तु क्वचित् ।
न पुत्रस्य पिता दद्यान्नानुजस्य तथाऽग्रजः ॥

इति स स्नेहविशेषाभावे बोध्यः

अपि स्नेहेन कुर्यात्तां सपिण्डीकरणं विना ।
गयायां तु विशेषेण ज्यायानपि समाचरेत् ॥

इति बौधायनोक्तेः । मातुरभावे स्नुषादयः । तथाच द्वैतनिर्णये स्मृतिसङ्ग्रहे—

पत्नी भ्राता च तत्पुत्रः पिता माता स्नुषा तथा ।
भगिनी भागिनेयश्च सपिण्डः सोदकस्तथा ॥
असन्निधाने पूर्वेषामुत्तरे पिण्डदाः स्मृताः ॥ इति

भगिन्यां विशेषः कात्यायनेनोक्तः—

अनुजा वाग्रजा वाऽपि भ्रातुः कुर्वीत संस्क्रियाम् ।
ततस्तत्रसोदरास्तद्वत्क्रमेण तनयास्तयोः ॥ इति ।

तदभावे मातृसपिण्डो मातुलादिः । तदुक्तं विष्णुपुराणे—

तेषामभावे पूर्वेषां समानोदकसन्ततिः ।
मातृपक्षस्य पिण्डेन सम्बद्धा याजनेन वा ।
कुलद्वयेऽपि चोत्सन्ने स्त्रीभिः कार्या नृप क्रिया ॥
तत्सङ्घातगतैर्वाऽपि कार्या प्रेतस्य संस्कृतिः ॥

तदभावे शिष्यर्त्विगाचार्याः । यथाह गौतमः "पुत्राभावे सपिण्डा मातृसपिण्डाः शिष्याश्च दद्युस्तदभावे ऋत्विगाचार्यौ तदभावे जामाता सखा च क्रमेण" । तदुक्तं मार्कण्डेये—

सख्युरुत्सन्नबन्धोश्च सखा च श्वशुरस्य च ॥
जामाता स्नेहतः कुर्यादखिलं पैतृमेधिकम् ॥ इति ।

तदभावे स्त्रीहारी धनहारी च । 'स्त्रीहारी धनहारी च कुर्यात्पिण्डोदकक्रियाम्' इति कार्ष्णाजिनिवाक्यात् । पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रियेत्यत्र पुत्रशब्देनौरसादिद्वादशविधपुत्रग्रहणं तथा पत्नीशब्देनापि सकलविवाहोढाग्रहणमपि प्रतिभाति । जामात्रभावे स्त्रीहारी तदभावे धनहारी । यद्यपि तयोः क्रमबोधकमथशब्दादि नास्ति तथापि पाठक्रमादेव पूर्वं स्त्रीहारी ततो धनहारी कार्ष्णाजिनिवाक्यात् । यश्चार्थहरः स पिण्डदायीति विष्ण्वापस्तम्बस्मरणाच्च । धनहारी यदि न करोति तदा राज्ञा कारणीयः । सोऽपि सजातीयः । तदुक्तं मार्कण्डेयपुराणे—

सर्वाभावे च नृपतिः कारयेत्तस्य रिक्थतः ।
सजातीयैर्नरैः सम्यक् दाहाद्याः सकलाः क्रियाः ।
सर्वेषामेव वर्णानां बान्धवो नृपतिर्यतः ॥

अयं चात्र क्रमः । प्रथममौरसः पुत्रः स त्वनुपनीतोऽपि कुर्यात् । अन्ये तूपनीता एव—

नाभिव्याहारयेद्ब्रह्म यावन्मौञ्जी निबध्यते ।
मन्त्राननुपनीतोऽपि पठेदेवैक औरसः ॥

इति सुमन्तुस्मृतेः । ब्रह्म वेदः । अनुपनीतं विशिनष्टि स एव—

अनुपेतोऽपि कुर्वीत मन्त्रवत्पैतृमेधिकम् ।
यद्यसौ कृतचूडः स्याद्यदि च स्यात्रिवत्सरः ॥ इति ।

यत्तु 'कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च । स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत्' इति व्याघ्रप्रचेतसो वचनम्, यत्तु—

कृतचूडोपनीतस्तु पित्रोः श्राद्धं समाचरेत् ।
उदाहरेत्स्वधाकारं न तु वेदाक्षराण्यसौ ॥

इति स्मृत्यन्तरं तत्प्रथमवर्षकृतचूडविषयम् । यत्तु मनुवचनम्—

न ह्यस्मिन्युज्यते कर्म किञ्चिदा मौञ्जिबन्धनात्।
नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते ॥ इति।

तत्तृतीयवर्षकृतचूडविषयम्। यत्तु नव्यैर्व्यात्रवचनं मनुवचनविरोधादनादृतमित्युक्त्वा प्रथमवर्षकृतचूडविषयव्याख्यानमपि उक्तसुमन्तुवचने 'यदि च स्यात्त्रिवत्सरः' इति पृथगुपादानाद्वर्षत्रयात्पूर्वमपि कृतचूडस्य मन्त्रवदधिकारावगमादयुक्तमित्युक्तं तदयुक्तम्। विधेयकर्तृविशेषणद्वयस्यापि विवक्षितत्वेन त्रिवर्षकृतचूडस्यैव मन्त्रवत्यधिकारात्। त्रिवत्सरत्वस्य पृथगुपादानं तु प्रथमादिवर्षव्यावृत्त्यर्थमिति स्पष्टमेव। प्रथमवर्षस्याप्यग्निदानं समन्त्रकमन्यदमन्त्रकम्। तथाच कात्यायनः—

असंस्कृतेन यत्नाच्च ह्यग्निदानं समन्त्रकम्।
कर्तव्यमितरत्सर्वं कारयेदन्यमेव हि ॥ इति।

अत्र कारयेदिति मन्त्रपाठपरं न त्वौर्ध्वदेहिकपरम्। यद्वाऽशक्तपरम्। अत एव—

यज्ञेषु मन्त्रवत्पत्नी कर्म कुर्याद्यथाविधि।
तथौर्ध्वदेहिके सा हि मन्त्रार्हा धर्मतः स्मृता ॥

इति स्कान्दे सामान्यतो मन्त्रवदधिकारः सङ्गच्छते। अग्निदानेऽप्यकृतचूडस्य नाधिकारः—

पुत्रः स्वोत्पत्तिमात्रेण संस्कुर्यादृणमोचनात्।
पितरं नाब्दिकाच्चौलात्पितृमेधेन कर्मणा ॥ (?)

इति सुमन्तूक्तेः। कालादर्शे च स्पष्टमुक्तम्।

चौलादादब्दिकादर्वाङ्न कुर्यात्पैतृमेधिकम् ॥(?) इति।

एतादृशौरसपुत्राभावे तु पुत्रिकादयः। तदभावे पौत्रस्तदभावे प्रपौत्रः। यदा तु दत्तकपुत्रौरसपौत्रयोः समवायस्तदा तु दत्तक एव कुर्यात्। गौणस्यापि तस्य पुत्रशब्देन ग्रहणात्। तदभावे पत्नी। तदभावे रिक्थग्राही दौहित्रः। यदि रिक्थग्राही न भवति तदा 'पत्न्यभावे तु सोदरः' इति वाक्यात्सोदरः कनिष्ठः। ततस्तत्सुतस्तदभावेऽसोदरः। ततस्तत्सुतस्तदभावेऽरिक्थग्राही दौहित्रः रिक्थग्रहाभावे उत्कृष्टदौहित्रस्य सोदरादीनां बद्धक्रमत्वेन मध्ये निवेशासंभवादन्ते निवेशः। यस्तु स्मृतिसङ्ग्रहीयवाक्ये भ्रातृपुत्रोत्तरं पितुः पाठ', स दौहित्रस्य रिक्थग्राहित्वेऽत्र निवेशाभावादुपपन्नो नावश्यं भ्रातृपुत्रोत्तरमरिक्थग्राहिणं दौहित्रं बाधते।

ततस्तत्पुत्रस्ततो यदि स्नेहस्ततो ज्येष्ठभ्रातृपितरौ क्रमेणाधिकारिणौ। ततो माता। मातुरभावे स्नुषा। ततः क्रमेण ज्येष्ठकनिष्ठे भगिन्यौ। ततस्तत्पुत्रः। ततो मातुलादिः। ततः सपिण्डाः समानोदकाः प्रत्यासत्तिक्रमेण। ततः शिष्यर्त्विजौ। तदभावे सखा। तदभावे जामाता। अत्र 'कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्या नृप क्रिया' इतिवाक्ये स्त्रीग्रहणं भार्यापरमभिप्रेत्य मातुलाद्यभावे आसुरादिविवाहोढा क्रियाकारिणीति तातचरणाः। [ प्रमाणं त्वत्र 'सर्वाभावे स्त्रियः कुर्युः स्वभर्तॄणाममन्त्रकम्' इति कालादर्शलिखितस्कान्दवचनम्। न चेदं ब्राह्मविवाहोढापरमिति वाच्यम्। 'यज्ञेषु मन्त्रवत्पत्नी' इत्यादिवचनैस्तस्याः समन्त्रककर्मणो विधानात्। किंच। 'पुत्राभावे तु पत्नी स्यात्' इत्यनेन तस्याः पुत्राभावे विधानेन सर्वाभावे विधानासंभवाच्च। ][1]। किञ्च। यथा 'पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया' इत्यत्र पुत्रशब्देनौरसादिद्वादशविधपुत्रग्रहणं तथा पत्नीशब्देनापि सकलविवाहोढाग्रहणमपि प्रतिभाति। जामात्रभावे स्त्रीहारी। तदभावे धनहारी। यद्यपि तयोः क्रमबोधकमथशब्दादि नास्ति तथापि पाठक्रमादेव पूर्वं स्त्रीहारी ततो धनहारी। दायाभावेऽपि पुत्रादयः कुर्वीरन्नेव। तदुक्तं मार्कण्डेयपुराणे—

पुत्रो भ्राता च तत्पुत्रः पत्नी माता तथा पिता।
वित्ताभावेऽपि शिष्यश्च कुर्वीरन्नौर्ध्वदैहिकम्॥

पुत्रग्रहणं द्वादशविधपुत्रोपलक्षणम्। भ्रातृग्रहणं सोदरासोदरोपलक्षणम्। धनहारीतिवाक्यं पूर्वोक्तिष्वपि नियामकम्। यदा भ्रात्रोर्दौहित्रयोर्वा मध्ये एको धनग्राही परश्च न तदा धनग्राह्येव कुर्यादिति। यत्तु गुरुचरणैर्ज्येष्ठस्यान्धपङ्ग्वादेरधनहारित्वात्कनिष्ठस्य तद्धारित्वेन क्रियादिप्रसङ्ग इत्युक्तं तदिष्टापत्त्या परिहर्तुं शक्यम्। नन्वेवं ज्येष्ठस्य संसृष्टिनो धनहारित्वात्कनिष्ठस्यासंसृष्टिनोऽधनहारिणः क्रियानधिकारः प्रसज्येतेति चेत् प्रसज्यतां नाम। तस्मिन् भ्रातृत्वं धनहारित्वं चेति निमित्तद्वयांसाद्भावात्[2]। तत्र क्रियाभेदेन कर्तृव्यवस्था विष्णुपुराण उक्ता—

पूर्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः।
त्रिप्रकाराः क्रिया ह्येतास्तासां भेदान् शृणुष्व मे॥

---

१ ङ. कुण्डलितः पाठोऽधिकः। २ द्वयसद्भावादिति सर्वत्र पाठः।

आद्याद्द्वादशाहात्तु याः क्रिया मध्ययोगतः।
पूर्वास्ता मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः॥
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु।
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः॥
पितृमातृसपिण्डैस्तु समानसलिलैस्तथा।
तत्सङ्घातगतैश्चैव राज्ञा वा धनहारिणा॥
पूर्वाः क्रिया मध्यमाश्च पुत्राद्यैरेव चोत्तराः।
दौहित्रैर्वा नरश्रेष्ठ कार्यास्तत्तनयैस्तथा॥ इति।

अस्यार्थः। एवं पूर्वासु राजान्तानां कर्तृत्वम्। मध्यमासु पुत्राद्यानाम्। आद्यशब्देन पौत्रप्रपौत्रयोरपि। उत्तरासु पुत्रप्रभृतिभ्रातृसंतत्यन्तानां दौहित्रतत्तनयानामपीति। वा शब्दोऽप्यर्थे। एवं च—

एकादशाद्याः क्रमशो ज्येष्ठस्य विधिवत्क्रियाः।
कुर्यादेकैकशः श्राद्धमाब्दिकं तु पृथक्पृथक्॥ इति।

अनेनाप्यैकार्थ्यं भवति। तत्सङ्घातगतैरेकसार्थान्तर्गतैः। राज्ञा वा धनहारिणेत्यत्र मार्कण्डेयपुराणवाक्ये सजातीयैस्तस्य रिक्थतः कारयेदिति प्रयोजककर्तृत्वावगमादिहाऽपि तथैवाङ्गीकार्यम्। न च राजसजातीये मृते साक्षात्कर्तृत्वं विजातीये तु प्रयोजककर्तृत्वमिति वाच्यम्। एकस्मिन् शब्दे वैरूप्यापत्तेरिति। सपिण्डीकरणे तु पुत्रसद्भावे तदसन्निधानेऽपि स एवाधिकारीति स एव कुर्यात्।

श्राद्धानि षोडशादत्वा कुर्यान्न तु सपिण्डनम्।
प्रोषितावसिते पुत्रः कालादपि चिरादपि॥

इति वायुपुराणे प्रोषितस्यापि पुत्रस्यैवाधिकारप्रतिपादनात्। यत्तु क्वचिद्ग्रन्थे इदं च प्रेतश्राद्धसहितं सपिण्डीकरणमसंन्यासिनां पुत्रादिभिः कर्तव्यमित्यत्रादिशब्देनान्येषामपि कर्तृत्वं प्रतिभाति तत्पुत्रासद्भावे न तु तदसन्निधौ। अनेन च वायुपुराणस्थेन विशेषविधिना 'पुत्राभावे तु पत्नी स्यात्' इत्यादि सामान्यशास्त्रं सपिण्डीकरणविषये बाध्यते। तद्बाधनं विनाऽस्य गत्यन्तराभावात्। पुत्रेष्वपि ज्येष्ठ एव कुर्यात् 'एकादशाद्याः क्रमशो ज्येष्ठस्य विधिवत्क्रियाः' इति मदनरत्ने प्रचेतोवाक्यात्। षोडशश्राद्धेष्वपि तस्यैवाधिकारः, 'श्राद्धानि षोडशापाद्य विदधीत सपिण्डताम्' इति समानकर्तृत्वस्मरणात्।

'मध्यमाः पुत्राद्यैरेव च' इत्यत्राद्यग्रहणं पौत्रादिप्राप्त्यर्थम्। तच्च ज्येष्ठादिनाशे न त्वसन्निधाने, वायुपुराणे प्रोषितग्रहणात्। यान्यपि—

काश्यादिषु गयायां च प्रेतकार्यं तु यत्कृतम्।
सपिण्डैरसपिण्डैर्वा पुत्रैरेव कृतं भवेत्॥

इत्यादीनि वाक्यानि तान्यनाकराणि। साकरत्वेऽपि तीर्थमेवं प्रशस्तं यत्र येनकेनापि श्राद्धे कृते पुत्रकर्तृकश्राद्धफलं भवतीति प्रशंसार्थं, न तु सपिण्डीकरणं कर्तव्यमित्येवंपरम्। नन्वेवं ज्येष्ठस्यैवाधिकारे—

यवीयसा कृतं कर्म, प्रेतशब्दं विहाय तु।
तज्ज्यायसापि कर्तव्यं सपिण्डीकरणं पुनः॥

इति वाक्ये प्रेतशब्दनिषेधानुपपत्तिः, त्वदुक्तरीत्या कनिष्ठस्यानधिकारादनधिकारिणा च कृतेन सपिण्डीकरणेन प्रेतत्वानपायात्। जातायां च प्रेतत्वनिवृत्तौ पुनरावृत्तिविधानवैयर्थ्यात्। अतः कथमेतद्वाक्योपपत्तिरिति चेदुच्यते। पूर्वलिखितमदनरत्नवचनेन ज्येष्ठस्यैवाधिकारः सिद्धः स यदि कनिष्ठ आहिताग्निर्वृद्धिर्वोपस्थिता तदाऽपोद्यते। तथाहि—

नासपिण्ड्याऽग्निमान्पुत्रः पितृयज्ञं समाचरेत्।
न पार्वणं नाभ्युदयं कुर्वन्न लभते फलम्॥

इति सपिण्डीकरणं विना पिण्डपितृयज्ञानधिकारात्पिण्डपितृयज्ञस्य च श्रौतसपिण्डीकरणेन बाधासंभवात् साग्निकस्य कनिष्ठस्यावश्यकर्तव्यत्वात्तादृशं प्रति सपिण्डीकरणं विधीयते। तेनैव च प्रेतत्वनिवृत्तिरूपे फले जाते ज्येष्ठस्य पुनरावृत्तिः केवलं वचनात्। न च ज्येष्ठं प्रत्येवेदं विधानं भवति न कनिष्ठं प्रतीति वाच्यम्।

यजमानोऽग्निमान् राजन् प्रेतो वाऽप्यग्निमान्भवेत्।
द्वादशाहे तदा कार्यं सपिण्डीकरणं सुतैः॥

इत्यनेनैव तं प्रति प्राप्तत्वादिदं कनिष्ठं प्रत्येव पिण्डपितृयज्ञप्रयुक्तं सपिण्डीकरणं विधीयते। पत्न्यादीन् प्रति त्वेवमनन्यथासिद्धवचनाभावान्नाधिकारः। एवं च यद्यपि तैर्भ्रमादिना कृतं तदा ज्येष्ठो यथाविध्येवार्चयेन्न प्रेतशब्दत्यागेनेति। यद्वा ऋद्धिकामानां पुत्राणां पृथक् पृथक्सपिण्डीकरणमुक्तं तत्र यदि कनिष्ठेन काम्यं तत्कृतं तदा तेनैव

प्रेतत्वनिवृत्तौ प्रेतशब्दं विहायेति पुनर्विधानं युक्तमेव । वृद्धौ तु येन केनापि कृते नावर्तनीयम् । तथाच लघुहारीतः—

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ।
सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः ॥ इति ।

अत्र यस्य कस्यापि सगोत्रसपिण्डस्य सपिण्डनं तत्पुत्रे प्रोषितेऽपि व्यवहितोऽपि सपिण्डः कुर्यादिति केचित् । युक्तं तु यस्याभ्युदयिकश्राद्धान्तर्गतदेवताभूतस्य सपिण्डनं विना न तन्निर्वहति तस्यैवेह वाक्ये सपिण्डनं विधीयते । आकाङ्क्षितविधानात् । अन्यथा भिन्नजातीयगुरोरपि सपिण्डनं शिष्येण कार्यं स्यात् । मासिकानामप्यपकर्षः पुनरपकर्षणं च ज्ञेयम् ।

सपिण्डीकरणादर्वागपकृष्य कृतान्यपि ।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् ॥

इति शाठ्यायनिस्मरणात् । अत्र यद्यपि वृद्ध्युत्तरनिषेधनादिति हेतुस्तथापि 'सव्यं हि मनुष्याः प्रथममश्नते' इतिवदप्राप्तत्वाद्विधिः कल्पनीयः । कात्यायनेनापि स्पष्टीकृतः । 'निर्वर्त्य वृद्धितन्त्रं तु मासिकानि न तन्त्रयेत्' इति । वृद्धिं कृत्वा मासिकानि न कुर्यादित्यर्थः । तथाच कनिष्ठे साग्निके पिण्डपितृयज्ञार्थं कामनया तु तिष्ठासौ वा ज्येष्ठत्वमात्रापवादः वृद्धौ तु पुत्रस्यापीति निर्णयः । ननु पुत्राद्यभावे दौहित्रसत्त्वे पत्न्या अनधिकारः प्रसज्येतेति चेन्न । पुत्राभावे तु पत्नी स्यादित्यस्मिन् दौहित्रैर्वा नरश्रेष्ठ इत्यनेन बाधितेऽपि 'अपुत्रा पुत्रवत्पत्नी पुत्रकार्यं समाचरेत्' इत्यनेनाधिकारिणी । न च 'पुत्राभावे तु' इत्यनेनेदमेकार्थं तस्य नाशासन्निध्योः प्रवृत्तत्वात् । 'अपुत्रा' इत्यस्य चासांनिध्येऽप्रवृत्तेः । अपुत्रायाः पत्न्याः पतिरौर्ध्वदैहिकं कुर्यात् । अतः पुत्राद्यभावे पत्नी तदभावे दौहित्रः एवं पितृव्यादीनामपि । यथाह जातूकर्ण्यः—

पितृव्यभ्रातृमातॄणामपुत्राणां तथैव च ।
मातामहस्यापुत्रस्य श्राद्धादि पितृवद्भवेत् ॥

इति पितृवदित्यावश्यकत्वार्थं न तु पार्वणविधानार्थमिति हेमाद्रिः । मातृपदं सपत्नमातृपरम् ।

पितृव्यभ्रातृपुत्राणामेकोद्दिष्टं न पार्वणम् ॥

इति कात्यायनोक्तेः । भ्रातुरपि ज्येष्ठस्यैव । यथाह मनुः—

प्रतिसंवत्सरं कार्यं मातापित्रोर्मृतेऽहनि ।
पितृव्यस्याप्यपुत्रस्य भ्रातुर्ज्येष्ठस्य चैव हि ॥ इति ।

अत्रिरपि—

भ्रात्रे भगिन्यै पुत्राय श्वशुरे मातुलाय च ।
पितृव्यगुरवे श्राद्धमेकोद्दिष्टं न पार्वणम् ।

एकवचनं छान्दसम् । नचैवममावास्यादिष्वपि श्राद्धप्रसक्तिरिति वाच्यम् । पूर्वलिखितजातूकर्ण्यवाक्यस्य क्षयाहं प्रकृत्य पाठात् । अतश्च क्षयाहश्राद्धमावश्यकं नान्यत् । दौहित्रस्य त्वमावास्यादौ मातामहश्राद्धमावश्यकमेव,

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।
अविशेषेण कर्तव्यं विशेषान्नरकं व्रजेत् ॥

इति धौम्योक्तेः । एवं पित्रादीनां पार्वणं पितृव्यादीनामेकोद्दिष्टमेव । दाक्षिणात्यास्तु पितृव्यभ्रातृसापत्नमात्रादिश्राद्धे पार्वणमाचरन्ति । तत्र मूलं पितृवदिति पार्वणत्वस्याप्यतिदेश इति केचित् । वस्तुतस्तु,

पितृव्यभ्रातृमातॄणां ज्येष्ठानां पार्वणं भवेत् ।
एकोद्दिष्टं कनिष्ठानां दम्पत्योः पार्वणं मिथः ॥

इति श्राद्धदीपकलिकाधृतचतुर्विंशतिमतवचनाज्ज्येष्ठानां पार्वणं कनिष्ठानामेकोद्दिष्टम् । एवं च पूर्वोक्तात्रिकात्यायनवचसी कनिष्ठपितृव्यादिपरे । यत्तु—

'भ्रातुर्ज्येष्ठस्य कुर्वीत ज्येष्ठो भ्राताऽनुजस्य च ।
दैवहीनं तु तत्कुर्यादिति धर्मविदब्रवीत् ॥

दैवहीनमेकोद्दिष्टं कार्यम् ।

अनाद्यगर्भज्येष्ठोऽपि भ्राता सद्भिर्निगद्यते ।
ऋते सपिण्डनात्तस्य नैव पार्वणमाचरेत् । इति

तथा— प्रतिसंवत्सरं कार्यमेकोद्दिष्टं नरैः स्त्रियाः ।

तथा— सपिण्डीकरणादूर्ध्वमेकोद्दिष्टं विधीयते ।
अपुत्राणां च सर्वेषामपत्नीनां तथैव च ॥

इति पृथ्वीचन्द्रोदयमात्रधृतवृद्धपराशरशातातपमार्कण्डेयप्रचेतोवचसामाचारतो व्यवस्थेति' साप्यतिदेश इति तु सर्वं शिवम् ।

---

## अथ गौणपुत्राणां विशेषः ।

तत्र— दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ।

इति कलिनिषिद्धेषु पाठात् दत्तातिरिक्ता गौणाः पुत्रा निषिद्धाः । दत्तकस्तु द्विविधः, केवलो द्व्यामुष्यायणश्च । दानकाले दातृप्रतिगृहीतृभ्यामावयोरसाविति संविदोऽकरणे केवलः, तत्करणे द्व्यामुष्यायणः । तत्र केवलः प्रतिग्रहीतुरेव श्राद्धादि कुर्यान्न जनकस्य । 'पुत्रं प्रतिग्रहीष्यन्' इत्यादिके प्रतिग्रहविधौ भाव्याकाङ्क्षायां जन्यपुंस्त्वाख्यस्य पुत्रत्वस्य भाव्यत्वासंभवाच्छ्राद्धादिपुत्रकार्यप्रयोजकं प्रतिग्राह्यगतमदृष्टं भाव्यमङ्गीकर्तव्यम् ।

> गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः ।
> गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥

इति मनूक्तेश्च । दत्रिमो दत्तकः । गोत्ररिक्थे अनुगच्छतीति गोत्ररिक्थानुगः प्रायस्तत्समनियत इति यावत् । पिण्डं सापिण्ड्यम् । स्वधा श्राद्धम् । विवेचयिष्यते चेदं व्यवहारमयूखे । द्व्यामुष्यायणस्य श्राद्धे विशेषमाह देवलः—

> द्व्यामुष्यायणका दद्युर्द्वाभ्यां पिण्डोदके पृथक् ।
> षण्णां देयास्तु षट् पिण्डा एवं कुर्वन्न मुह्यति ॥

आपस्तम्बः—

> यदि द्विपिता स्यादेकैकस्मिन्पिण्डे द्वौ द्वावुपलक्षयेत् ॥ इति ।

इदमापस्तम्बपरम् । पिण्डशब्दश्च श्राद्धोपलक्षणम् । अत एव प्रवराध्याये—

> द्वे श्राद्धे कुर्यादेकश्राद्धं वा पितॄनुद्दिश्यैकपिण्डे द्वावनुकीर्तयेत् ।
> प्रतिग्रहीतारं चोत्पादयितारं चातृतीयात्पुरुषात् ॥ इति ।

द्व्यामुष्यायणपुत्रस्य पिण्डभेदे अमावास्यायामेकः पित्रे द्वौ द्वावितरयोरिति पञ्च । द्व्यामुष्यायणपौत्रस्य प्रपितामह एव द्वौ पिण्डौ इति चत्वारः । केचित्त्वेकस्मिन्पिण्डे द्वौ द्वाविति कुण्डगोलकपरं वर्णयन्ति तत्तु न स्मृत्यन्तरसंवादि । शूद्रानुपेतयोरप्यमावास्यादिश्राद्धेऽधिकारो मात्स्ये—

> अमावास्याष्टकाकृष्णपक्षे पञ्चदशीषु च ।

इत्युक्त्वा,

एतच्चानुपनीतोऽपि कुर्यात्सर्वेषु पर्वसु ।
श्राद्धं साधारणं नाम सर्वकामफलप्रदम् ।
शूद्रोऽप्यमन्त्रवत्कुर्यादनेन विधिना बुधः ॥ इति ।

अमावास्याष्टकादौ होमस्तु पाण्यादिषु लौकिकाग्नौ वा कार्यः । इदं तु श्राद्धविवेकेऽलेखि । केषुचित्पुराणपुस्तकेषु नोपलभ्यते ।

जीवत्पितृकस्यापि क्वचिदधिकारो मैत्रायणीयपरिशिष्टे—

उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः । इति ।

उद्वाहे द्वितीयादौ । प्रथमे पितुरेवाधिकारः । 'नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे पुनः । अत ऊर्ध्वं सुतः कुर्यात्स्वयमेव तु नान्दिकम्' इति मदनरत्नधृतस्मृत्यन्तरात् । सौमिके इति सोमयागकर्माङ्गश्राद्धस्य तार्तीयसवनिकपिण्डदानस्य चोपलक्षणार्थम् । उपलक्षणं चैतज्जीवत्पितृकाधिकारिककर्माङ्गाभ्युदयिकमात्रस्य । अन्यथाऽऽधानाङ्गे तस्मिन्नधिकारो दुर्घटः स्यात् । काम्येऽधिकारविधेः प्रयोगविध्यनुसारित्वादन्ततः काम्य आधानेऽप्यसौ दुर्घटः स्यात् । श्रुतसोमयागान्यथानुपपत्त्यैवाधानेऽसौ कल्प्यत इति चेत्सत्यम् । 'यागेनापूर्वं कृत्वा स्वर्गं कुर्यात्' इतिवच्छ्रुतानुपपत्तिमूलकशब्दकल्पनामपेक्ष्य सौमिके मख इत्यत्र लघीयस्या लक्षणयैवाधिकारसमर्थनं ज्यायः । षडिति न परिसङ्ख्या । अत एव—

आन्वष्टक्यं गयाप्राप्तौ सत्यां यच्च मृतेऽहनि ।
मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति ॥

इत्यन्वष्टकादावधिकारः सङ्गच्छते । मैत्रायणीयपरिशिष्टेऽपि—

महानदीषु सर्वासु तीर्थेषु च गयामृते ।
जीवत्पिताऽपि कुर्वीत श्राद्धं पार्वणधर्मवत् ॥ इति ।

'गयामृते' इति तदुद्देश्यकवैधयात्रापूर्वकश्राद्धपर्युदासार्थम् । अवैधगमने तु पितुर्देवता उद्दिश्य श्राद्धं कार्यमेव । तत्रापि मृतमातृकश्चेत्पितृपत्नीत्वेन तामुद्दिश्य पिण्डादि दत्त्वा मातृत्वेनाप्युद्दिश्य दद्यात् 'गयां प्रसङ्गतो गत्वा मातृश्राद्धं समाचरेत्' इतिवाक्यादिति केचित् । तत्त्वं तु 'गयामृते' इति पर्युदस्तं गयाश्राद्धं जीवत्पितृकस्य मृतायां

मातरि तदुद्देश्यकमेव प्रतिप्रसूयते । वाक्ये तथैव श्रवणात् । पर्युदास-वाक्ये यात्रानुपादानेन तत्पूर्वकश्राद्धपर्युदासे मानाभावाच्च । 'गयां प्रसङ्गतो गत्वा' इति तु पित्राद्युद्देश्यकगयायात्रायां जीवत्पितृकं प्रत्य-प्राप्तेरनुवादकमेव(?) । एष एव च कालादर्शस्मृतिदर्पणादीनामप्याशयः। अत्र देवता आह कात्यायनः—

वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति ।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः । इति

'ताते सति' इति वृद्धितीर्थसन्यस्तपतितपदैः प्रत्येकं सम्ब-ध्यते । तत्राप्याद्याभ्यां वैयधिकरण्येनोत्तराभ्यां सामानाधिकरण्येन । 'वृद्धौ तीर्थे च' इत्यनेकनिमित्तसमावेशे वाक्यभेदापत्तेः । 'अर्द्ध-मन्तर्वेदि मिनोत्यर्द्धं बहिर्वेदि' इत्यन्तर्वेदिबहिर्वेदिपदे इव सन्धिदेशस्य 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इति जातपुत्रादिपदानीव वयो-विशेषस्य वृद्धितीर्थपदे जीवत्पितृकाधिकारिकश्राद्धमात्रोपलक्षके । उक्त-प्रकारेण तेष्वपि जीवत्पितृकस्याधिकारस्य समर्थितत्वात्तेषां देवता-काङ्क्षासद्भावात् । जीवत्सन्यस्तपतितपितृकस्य तु दर्शश्राद्धादावप्यधि-कारः। उत्तरार्द्धेन पितृदेवता एवैनं प्रत्युपदिश्यन्ते । अत एव जीव-त्पितृकस्य मातरि मातामहे च मृतेऽपि न स्वनिरूपितमातृमातामह-पार्वणयोः प्राप्तिः । किं तु पितृनिरूपितयोरेव । पितामहेऽपि जीवति तन्निरूपिता एव देवताः । पौत्रस्य पितृनिरूपितत्वसम्बन्धेनैतद्वचना-देव प्राप्तेः । 'अत्र ह्येवावपन्ति' इतिवदेवकारेण शब्दतस्तासां परि-सङ्ख्यातत्वात् । सुमन्तुहारीतौ—

जीवत्पितरि वै पुत्रः श्राद्धकालं विवर्जयेत् ।
येभ्यो वाऽपि पिता दद्यात्तेभ्यो दानं प्रचक्षते । इति ।
पितुः पितृभ्यो वा दद्यात्सपितेत्यपरा श्रुतिः ॥

गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्माद्यपत्यसंस्कारेषु त्वाश्वलाय-नानां प्रतिप्रसूयन्ते प्रयोगपारिजाते आश्वलायनगृह्यपरिशिष्टे— 'जीवत्पिता सुतसंस्कारेषु मातृमातामहयोस्तस्यां जीवन्त्यां माता-महस्य कुर्यात्' इति । अनयोरन्यतरजीवने तु पितृनिरूपितः स वर्ग इत्युभयोर्जीवने तु वर्गत्रयमपि पितृनिरूपितमेव । ये त्वेतद्वचसा स्वी-यमातृमातामहपार्वणे एव भवतो न पितृपार्वणमित्याहुः, तन्न ।

अग्निहोत्रे मान्त्रवर्णिकाग्निसूर्ययोः पृष्ठभावेन प्रजापतिविधाविव तयोः 'पितरो यत्र पूज्यन्ते तत्र मातामहा अपि' इति पितृप्राप्तेर्मातामह-प्राप्तावुपजीव्यत्वेन तद्वाधायोगान्मानाभावाच्च । यत्तु कौण्डिन्यः—

दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम् ।
न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम् ॥ इति

तत्प्रतिनिधीभूयैतानि श्राद्धानि न कुर्यादित्यर्थः । एतेन—

अष्टकादिषु सङ्क्रान्तौ मन्वादिषु युगादिषु ।
चन्द्रसूर्यग्रहे पाते स्वेच्छया पूज्ययोग्यतः ।
जीवत्पिता नैव कुर्याच्छ्राद्धं काम्यं तथाऽखिलम् ॥

इति क्रतुवचोऽपि व्याख्यातम् । एतैर्वाक्यैर्जीवत्पितृकाधिकारिकविधिप्राप्तश्राद्धनिषेधे तु 'न तौ पशौ करोति' इतिवद्विकल्पापत्तिः । किञ्च जीवत्संन्यासिपतितपितृकयोरपि निषेधप्रवृत्तेः श्राद्धाधिकाराभावेन तत्र देवताविधेरनुपपत्तिः । ननु भवत्पक्षे तयोः कथं श्राद्धेऽधिकारः ? 'वृद्धौ तीर्थे च' इति कातीयेनैव देवताविशिष्टश्राद्धविधौ दार्शिकाद्यपेक्षया कर्मान्तरापत्तिः, एतौ प्रति विशिष्टविधिरितरजीवत्पितृकं प्रति विवाहादिश्राद्धे देवतामात्रविधिरिति वैरूप्यापत्तिश्चेति चेच्छृणु—सर्वेऽप्यमावास्याष्टकादिश्राद्धविधयो जीवत्पितृकमृतपितृकसाधारण्येनैव प्रवर्तन्ते; तत्र जीवति पितरि दर्शश्राद्धप्रधानपित्रादिपार्वणदेवताभावादभ्युदितेष्टावुपांशुयागवल्लुप्यते । एतस्यैवानुवादकम्—

सपितुः पितृकृत्येषु अधिकारो न विद्यते ।
न जीवन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतिः ॥

इति कातीयम् । वैधदेवताप्राप्तौ तु पुनः प्रवर्तन्ते । मृते पितरि पितामहे प्रपितामहे च जीवति तु प्रकारमाह विष्णुः—'पितरि जीवति यः श्राद्धं कुर्याद्येषां पिता कुर्यात्तेषां कुर्यात्पितरि पितामहे च जीवति येषां पितामहः पितरि पितामहे प्रपितामहे च जीवति नैव कुर्याद्यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय पितामहात्पराभ्यां द्वाभ्यां दद्याद्यस्य पिता पितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डौ दत्वा पितामहपितामहाय दद्याद्यस्य पितामहः प्रेतः स्यात्स तस्मै पिण्डं निधाय प्रपितामहात्पराभ्यां द्वाभ्यां दद्याद्यस्य पिता प्रपितामहश्च प्रेतौ स्यातां स ताभ्यां पिण्डौ दत्वा पितामहपितामहाय दद्यात् ।

मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः ।
मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्जितम् ॥

इति मातामहादीनामेकद्वित्रिषु जीवत्सु एवं पितृपार्वणवदित्यर्थः। मात्रादिष्वप्येवं न्यायसाम्यात्। 'मन्त्रोहेन' इत्यादि व्याख्यास्यत ऊहप्रकरणे। स्त्रीणामपि पूर्तमहादानकन्योद्वाहादिप्रधानेऽधिकारात्तदङ्गे नान्दीश्राद्धेऽप्यसौ स्पष्ट एव। तत्र जीवद्भर्तृकायाः पूर्तव्रतमहादानादिषु तावत्पुरुषस्येव स्वीयमातृपितृमातामहपार्वणानीति। भर्त्रसन्निधानेन तस्याः कन्योद्वाहे स्वीया भर्तुर्वा पार्वणत्रयदेवताः। अयं च विकल्पः 'स्वपितृभ्यः पिता दद्यात्' इति श्लोकव्याख्यानेन नान्दीश्राद्धप्रकरणे स्पष्टीभविता। विधवायास्तु पुत्राभावे तद्वदेवाधिकारः। तस्याः,

अपुत्रा पुत्रवत्पत्नी पुत्रकर्म समाचरेत् ।

इति वचनात् पुत्रवदिति वतिना प्रकरणानुरोधाच्छ्राद्धक्रियातुल्यतोक्त्या पुत्रकर्तृकश्राद्धवदेव देवताः। उद्देश्यत्वं तु पित्रादीनां भर्तृत्वादिना तन्मातामहानां च पितृत्वादिना। यं प्रति येन रूपेण संबन्धिता तं प्रति तेनैव रूपेणोद्देश्यत्वात्। अत एव स्मृतिदर्पणे—

स्वभर्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैव च ।
विधवा कारयेच्छ्राद्धं यथाकालमतन्द्रिता ॥ इति

तथैव त्रिभ्य एवेत्यर्थः। इदं च षड्दैवत्यदर्शश्राद्धादिविषयम्। अत्र 'स्वपितुरपुत्रपौत्रत्वएवं तत्पार्वणम्' इति दिवोदासीये। तन्न। अपुत्राणामेवेतिविशेषवचनाभावात्। स्वपितरि जीवति द्वारलोपात्तत्पार्वणलोप एव। मृतश्वश्र्वादेस्तु श्वश्र्वादिपार्वणमपि कृताकृतमिति नवदैवत्यम्। केचिन्मृतमातृकायाः स्वमात्रादिपार्वणमपीति द्वादशदैवत्यमाहुः। अपरे स्वमातामहपार्वणेन पञ्चदशदैवत्यम्। अपरे स्वमातामह्यादिपार्वणेन सहाष्टादशदैवत्यम् तत्राप्याद्यायजीवने द्वारलोपाल्लोप इति च। एतन्नयमपुत्रविषयं युक्तमिति पितामहचरणाः। यत्तु स्मृतिसङ्ग्रहे—

चत्वारः पार्वणाः प्रोक्ता विधवायाः सदैव हि ।
स्वभर्तृश्वशुरादीनां मातापित्रोस्तथैव च ॥
ततो मातामहानां च श्राद्धदानमुपक्रमेत् ॥ इति ।

तथा—श्वश्रूणां च विशेषेण मातामह्यास्तथैव च ॥ इति ।

एतन्मूलं मृग्यम्। श्वश्र्वादिमात्रादिपार्वणयोरकरणे भर्तृपितृपार्वण-

योरेव यथायोग्यं सपत्नीकानामिति वाच्यम् । अन्येषां तु यथासंभवमेकोद्दिष्टानीति । इदं च महालयादिश्राद्धविषयम् । यत्तु—

भर्तुः श्राद्धं तु या नारी मोहात्पार्वणमाचरेत् ।
न तेन तृप्यते भर्ता कृत्वा तु नरकं व्रजेत् ॥

इति वचनं तल्लक्ष्याह एकोद्दिष्टप्रशंसार्थं न तु सर्वथा पार्वणप्रतिषेधार्थमिति दिक् । इति श्राद्धाधिकारिणः

## अथ कालदेशकर्तृणामैक्ये ।

तत्र प्रसङ्गावापविचारः । तत्राङ्गप्रधानानां तुल्यत्वेनागृह्यमाणविशेषत्वे भिन्नप्रयोगविधिपरिगृहीतानामपि कर्मणां प्रधानानामङ्गानां च तन्त्रेणानुष्ठानम् । यथा सङ्क्रान्तियुगादिमन्वादिव्यतीपातश्राद्धानाम् । न च 'सौर्याचित्रादिष्वपि तथापत्तिः' प्रधानभेदात् । न चाङ्गानामेव दर्शपूर्णमासयोरिव तथास्तु । द्वयोरपि प्रयोगप्राशुभावभङ्गेन वैगुण्यापातात् । दर्शपूर्णमासयोस्तु 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति वाक्याभ्यां प्रतित्रिकं प्रयाजाद्यङ्गानां तन्त्रतेति । तथाहि 'अनयोर्वाक्ययोर्विधेयकालगतैकवचनस्योपादेययागगतसाहित्यस्य च विवक्षितत्वात्तृतीयान्तत्वेन च साङ्गभावनोपादानादेकस्यां पौर्णमास्याममावास्यायां च साङ्गानि सहितानि त्रीणि प्रधानानि कार्याणीत्यर्थप्रतीतेः । साहित्यस्य च स्वरूपतः प्रधानेऽसंभवादङ्गद्वारा तदुपपत्तिरिति युक्ता तन्त्रता । न तु भिन्नप्रयोगविधिपरिगृहीतेषु चित्रासौर्यादिषु तथा किंचित्प्रमाणमस्ति प्रयोगप्राशुभावभङ्गबोधकम् । येषु त्वमावास्यासङ्क्रान्त्यादिनिमित्तकेषु श्राद्धेषु प्रधानानामङ्गानां चाल्पत्वबाहुल्यकृतं विशेषग्रहणं तेषु महताल्पस्य प्रसङ्गेन सिद्धिः । यथा अमाश्राद्धेन सङ्क्रान्तियुगादिमन्वादिव्यतीपातश्राद्धानाम् । तत्र सर्वेषां तन्त्रिणां सङ्कल्पवाक्ये उल्लेखः । सङ्क्रान्तियुगादिश्राद्धं तन्त्रेण करिष्ये इति । प्रसङ्गे तु महातन्त्रवतोऽमाश्राद्धादेरेवोल्लेखः, न प्रसङ्गिनः सङ्क्रान्त्यादिश्राद्धस्य । एतेनामासङ्क्रान्तिव्यतीपातश्राद्धानां तन्त्रेण सङ्कल्पं वदन् हेमाद्रिरपास्तः । अमाश्राद्धस्य महत्त्वेन विशेषग्रहणात्प्रसङ्ग एवात्रोचितः । यत्तु कालादर्शे युगादिश्राद्धेन मन्वादिश्राद्धेन च दर्शश्राद्धस्य सिद्धिरुक्ता—

नित्यदार्शिकयोश्चोदकुम्भमासिकयोरपि
दार्शिकस्य युगादेश्च दार्शिकालभ्ययोगयोः ।
दार्शिकस्य च मन्वादेः संपाते श्राद्धकर्मणाम् ॥
प्रसङ्गादितरस्यापि सिद्धेरुत्तरमाचरेत् ॥ इति ।

तन्न । दार्शिकस्य बहुलविधानत्वेन तेनैव युगादिमन्वादिश्राद्धसिद्धेर्युक्तत्वात् । क्वचिद्देवताभेदेन तन्त्रापवादमाह स एव—

नित्यस्य चोदकुम्भस्य दर्शमासिकयोरपि ।
नित्यस्य चाब्दिकस्यापि दार्शिकाब्दिकयोरपि ॥
युगाद्याब्दिकयोश्चापि मन्वाद्याब्दिकयोरपि ।
प्रत्याब्दिकेषु चालभ्ययोगेषु विहितस्य च ॥
संपाते देवताभेदाच्छ्राद्धयुग्मं समाचरेत् ॥ इति ।

अत्र नित्यदर्शयुगादिमन्वाद्यलभ्ययोगश्राद्धेषु सपत्नीकाः पितरो देवताः । उदकुम्भमासिकाब्दिकेषु त्वपत्नीका इति देवताभेद इत्याशयः । यत्र त्वान्वष्टक्यादौ नवदैवत्यविधानान्मासिकाब्दिकयोस्तु केवलानामेव पित्रादीनां देवतात्वं तत्रान्वष्टक्यादिना मासिकाब्दिकयोरपि प्रसङ्गतः सिद्धिः । नन्वस्त्वयं प्रसङ्गः, सपिण्डकेन दार्शिकेन तु तदभावाङ्गकस्य सङ्क्रान्त्यादिश्राद्धस्य न प्रसङ्गो विरोधादितिचेन्न । पिण्डदानादीनां पर्युदासेन तदभावस्य सङ्क्रान्त्यादावङ्गत्वाभावेन विरोधाभावात् । न च पिण्डदानप्राप्तिः प्रकृतौ,

अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
सङ्क्रान्तिषु च सर्वासु पिण्डनिर्वपणादृते ॥

इत्यादिनिवर्तकवाक्यं तु विकृताविति सन्निधानाभावादेकवाक्यत्वाभावेन पर्युदासाभावात् 'न तौ पशौ करोति' इतिवन्निषेधाङ्गीकारेण विकल्प इति वाच्यम् । पिण्डदानप्राधान्यस्य प्राक् प्रतिपादितत्वेन सङ्क्रान्तौ श्राद्धं कार्यमित्यादिविधिनैव तत्प्राप्तौ निषेधसन्निधानेन पर्युदासोपपत्तेः । यदा त्वेकपुत्रजननोत्तरं स्नानादौ क्रियमाणे द्वितीयपुत्रोत्पत्तिस्तदा जातकर्मभेदेऽपि वृद्धिश्राद्धं तन्त्रेण । अगृह्यमाणविशेषत्वात् । यत्र तु निमित्तपौर्वापर्यं नैमित्तिकयोर्वा विरोधस्तत्र निमित्तक्रमानुरोधेन नैमित्तिकानि कार्याणि । तथाच कात्यायनः—

द्वे बहूनि निमित्तानि जायेरन्नेकवासरे ।

नैमित्तिकानि कार्याणि निमित्तोत्पत्त्यनुक्रमात् ॥ इति ।

पतितिथावन्वारूढायाः पत्न्याः क्षयाहश्राद्धं तन्त्रेणेति निर्विवादम् । तत्र ब्राह्मणपिण्डयोरैक्यमिति हेमाद्र्यनुसारिणः । 'ब्राह्मणपिण्डयोर्भेदः विश्वेदेवादीनां त्वाराादुपकारकाणां तन्त्रता' इति माधवप्रयोगपारिजातकारादयः । 'भिन्नतिथावन्वारूढाया भिन्नमेव श्राद्धमिति निबन्धकाराः । 'पतितिथावेव वैश्वदेवाद्याराादुपकारकाङ्गतन्त्रता । ब्राह्मणभोजनपिण्डदानयोः पार्थक्यमित्येव दाक्षिणात्यानुष्ठानम् । युक्तं चैतत्—

या समारोहणं कुर्याद्भर्तृचित्यां पतिव्रता ।
तां मृताहनि संप्राप्ते पृथक्पिण्डे नियोजयेत् ।
प्रत्यब्दं च नवश्राद्धं युगपत्तु समापयेत् ॥

इति भृगूक्तेः । मृताहनि मासिके संप्राप्ते पृथक्पिण्डे नियोजयेच्चकारात्प्रत्यब्दं वार्षिकेऽपीत्यर्थः ।

एकचित्यां समारूढौ दम्पती निधनं गतौ ।
पृथक् श्राद्धं तयोः कुर्यादोदनं च पृथक् पृथक् ॥

इति गार्ग्योक्तेश्च । अत्रत्यश्राद्धशब्दस्य ब्राह्मणभोजनपिण्डदानरूपप्रधानवचनत्वात्तन्मात्रपृथक्त्वोक्त्याऽन्येषामाराादुपकारकाङ्गानां तन्त्रता । ओदनपदं पिण्डदानलक्षकमिति हेमाद्रिः । तन्न । श्राद्धपदेनैव प्रधानभूतपिण्डदानोपादानसिद्धेः ।

मृताहनि समासेन पिण्डनिर्वपणं पृथक् ।
नवश्राद्धं तु दम्पत्योरन्वारोहण एव तु ॥

इति लौगाक्षिवाक्येऽपि सामान्यतस्तिथिभेदे तदभेदे वाऽन्वारोहणे सति दम्पत्योः मृततिथिनिमित्तके श्राद्धे समासो विधीयते । अविशेषप्रवृत्तस्यैकतिथिगतानुगमनमात्रविषयत्वरूपसङ्कोचे प्रमाणाभावात् । लघुभूतमृताहश्राद्धत्वरूपोद्देश्यतावच्छेदकसंभवे गुरुभूतैकदिनमृताहश्राद्धत्वरूपस्यायुक्तत्वाच्च । न च भिन्नतिथिनिमित्तिकयोरेकाहाप्राप्तेः कथं तत्र साहित्यविधिरिति वाच्यम् । अभ्युदितेष्टौ 'सहश्रपयति' इति वाक्ये सहत्वमात्रविधौ दध्यंशे श्रपणस्याप्राप्तस्यार्थादाक्षेपवत् साहित्यविधानान्यथानुपपत्त्यैककालताक्षेपात् । न चैककालताक्षेपे विनिगमनाविरहात्पत्नीमृताह एव भर्तुः श्राद्धं स्यादिति वाच्यम् ।

अन्वारूढाया भर्तृमरणसमकालीनमरणप्रतिपादकार्थवादैः संदिग्धार्थनिर्णयात् । अथवा—

यस्य न श्रूयते वार्ता यावद्द्वादशवत्सरम् ।
कुशपुत्रकदाहेन तस्य स्यादवधारणम् ॥

इत्यत्र दाहदिने आहार्यमरणनिश्चयवद्भर्तृमृताहे मरणमाहार्यमर्थवादेभ्यः । वस्तुतस्तु 'शंय्वन्ता प्रायणीया सन्तिष्ठते' इत्यत्र प्रथमोपस्थितेराद्यशंयुवाकान्तत्ववद्भर्तृमृततिथेः प्राथम्यात्तत्रैव साहित्यम् । ननु मृताहनीति वाक्ये पिण्डनिर्वपणमिति विवक्षितत्वात् पिण्डसमास एवाऽऽपदि विधीयते न तु श्राद्धसमास इति चेन्न । नवश्राद्धमिति श्राद्धपदोपादानेन पिण्डनिर्वपणपदस्यापि श्राद्धपरत्वेन भृगुगार्ग्यवाक्यसमानार्थकत्वस्यैवोचितत्वात् ।

एकचित्यां समारुह्य मृतयोरेकबर्हिषि ।
पित्रोः पिण्डान्पृथग्दद्यात्पिण्डं त्वापत्सु तत्सुतः ॥

इत्यग्निस्मृतिवाक्यं त्वापत्परम् । इदं च समासविधानमाब्दिकविषयमिति हेमाद्र्यनुसारिणः । तन्न 'तां मृताहनि संप्राप्ते पृथक्पिण्डेनियोजयेत् । प्रत्यब्दं च' इत्यत्र मृताहनीत्यस्य मासिकपरत्वेन गोबलीवर्दन्यायेन च सर्वविषयत्वात् । नवश्राद्धमात्रं तु पृथक् लौगाक्षिवाक्यात् । एतद्विरुद्धम् 'नवश्राद्धं युगपत्तु समापयेत्' इति भृगुवाक्यं त्वापत्परमग्निस्मृतिवाक्यवत् । विस्तरस्तु तातचरणकृते द्वैतनिर्णये बोध्यः । कार्ष्णाजिनिः—

पित्रोः श्राद्धे समं प्राप्ते नवे पर्युषितेऽपि वा ।
पितृपूर्वं सुतः कुर्यादन्यत्रासक्तियोगतः ॥

पर्युषिते चिरन्तने । अन्यत्र मातृपितृव्यतिरिक्तविषये ।

---

## अथ ग्राह्यद्रव्याणि ।

तत्र मनुः—

तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ।
दत्तेन मासं प्रीयन्ते विधिवत्पितरो नृणाम् ॥
कालशाकं महाशल्कः खड्गं लोहाऽऽमिषं मधु ।
आनन्त्यायैव कल्प्यन्ते मुन्यन्नानि च सर्वशः ॥

कालशाकं कालिका । महाशल्कः शल्यकः । मत्स्या इत्यन्ये । खड्गो गण्डकः । लोहो रक्तच्छागः, कृष्ण इति हेमाद्रिः । लोहपृष्ठनामा शकुनिरित्यन्ये । मधु माक्षिकं, मुन्यन्नानि नीवारादीनि । तथा—

मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम् ।
अक्षारलवणं चैव प्रकृत्या हविरुच्यते ॥

अनुपस्कृतमविकृतमप्रतिषिद्धं च । अक्षारलवणमूषरमृत्तिकाकृताल्लवणाद्भिन्नम् । प्रचेताः—

कृष्णमाषास्तिलाश्चैव श्रेष्ठाः स्युर्यवशालयः ।
महायवा व्रीहियवास्तथैव च मधूलिकाः ॥
कृष्णाः श्वेताश्च लोहाश्च ग्राह्या स्युः श्राद्धकर्मणि ।

मधूलिकाः यावनालविशेषाः शालिविशेषा वेति हेमाद्रिः । अत्रिः—

अगोधूमं च यच्छ्राद्धं कृतमप्यकृतं भवेत् ।

ब्रह्मपुराणे—

यवैर्व्रीहितिलैर्माषैर्गोधूमैश्चणकैस्तथा ।
संतर्पयेत्पितॄन्मुद्गैः श्यामाकैः सर्षपद्रवैः ॥
नीवारैर्हरिश्यामाकैः प्रियङ्गुभिरथार्चयेत् ।

सर्षपा गौराः । मार्कण्डेये—

नीवाराः पौष्कराश्चैव वन्यानां पितृतृप्तये ।
प्रियङ्गवः कोविदारा निष्पावाश्चात्र शोभनाः ॥

पौष्कराः पद्मबीजानि । निष्पावा वल्लाः । विष्णुधर्मोत्तरे—

गोधूमैरिक्षुभिर्मुद्गैः सतीनैश्चणकैरपि ।
श्राद्धेषु दत्तैः प्रीयन्ते मासमेकं पितामहाः ॥

सतीनाः कलायाः ।

---

## अथ वर्ज्यानि ।

वायुपुराणे—

अकृताग्रयणं धान्यजातं वै परिपाटलाः ।
राजमाषानणूंश्चैव मसूरांश्च विवर्जयेत् ॥

परिपाटलाः स्थूला राजमाषाः । तनेवाणूंश्च । षड्त्रिंशन्मते—

कृष्णधान्यानि सर्वाणि वर्जयेच्छ्राद्धकर्मणि ।
न वर्जयेत्तिलांश्चैव मुद्गान्माषांस्तथैव च ॥

भरद्वाजः "मुद्गाढकीमाषवर्जं द्विदलानि न दद्यात्" । आढकी तुवरी । सुमन्तुः "बीजपूरान् माषांश्च न दद्यात्" । बीजपूरकं मातुलिङ्गं, माषाः राजमाषाः । चतुर्विंशतिमते—

कोद्रवा राजमाषाश्च कुलत्था वरकास्तथा ।
निष्पावाश्च विशेषेण पञ्चैतांस्तु विवर्जयेत् ॥

वरका वनमुद्गाः । निगमः—

यावनालानपि तथा वर्जयन्ति विपश्चितः ।
तैलमप्यापदि प्राज्ञाः संप्रयच्छन्ति याज्ञिकाः ॥

'तैलमपि वर्जयन्ति । आपदि तूभयमपि प्रयच्छन्ति' इत्यन्वयः । षड्विंशन्मते—"वर्ज्या मर्कटकाः श्राद्धे" इति । मर्कटका लङ्काः । वर्जयेदित्यनुवृत्तौ । मरीचिः—

कटुकानि च सर्वाणि विरसानि तथैव च ।

कटुकानि पिप्पल्यादीनि । शङ्खः—

लोहितान् वृक्षनिर्यासान् श्राद्धकर्मणि वर्जयेत् ॥

महाभारते—

अश्राद्धे यानि धान्यानि कोद्रवाः पुलकास्तथा ।

पुलकास्तुच्छधान्यानि ।

पाद्मे—कोद्रवोद्दालवरककुसुंभमधुकातसीः ॥

एतानि नैव देयानि' इति । मधुकं ज्येष्ठीमधु । वर्ज्यान्यधिकृत्य मात्स्ये—

कोद्रवोद्दालवरककपित्थमधुकातसीः ।

वैष्णवे च—मसूरक्षारवार्ताककुलत्थशणशिग्रवः ॥

शिग्रुः सौभाञ्जनः । ब्रह्माण्डे—

सर्वश्राद्धेऽञ्जनं पुष्पं कुसुम्भं राजसर्षपाः ।
वर्ज्यं चापक्रियं सर्वं निशि यत्त्वाहृतं जलम् ॥

अञ्जनपुष्पमञ्जनद्रुमपुष्पम् । मार्कण्डेयः—

वर्ज्याश्चाभिषवा नित्यं शतपुष्पं गवेधुकम् ।

अभिषवाः संधानानि । कौर्मे—

आढकीकोविदारांश्च पालंक्यां मरिचं तथा ॥

'वर्जयेत्' इति । कोविदारः कांचनारः । मरिचान्यार्द्राणि न शुष्काणीति हेमाद्रिः । पालङ्क्या मुकुन्दाख्यो गन्धद्रव्यविशेषः ।

---

## अथ ग्राह्यफलादि ।

शङ्खः— आम्रान्पालेवतानिक्षून् मृद्वीकाभव्यदाडिमान् ।
विदार्यांश्च भरुण्डांश्च श्राद्धकाले प्रदापयेत् ।
दद्याच्छ्राद्धे प्रयत्नेन शृंगाटबिसकेबुकान् ॥

पालेवतं जम्बीरानुकारि । मृद्वीका द्राक्षा । भव्यं कर्मरङ्गम् । विदार्यान् भूकूष्माण्डीकन्दान् भरुण्डाः काश्मीरे प्रसिद्धाः शृङ्गाटकं जलजं त्रिकं-टकम् । बिसं पद्मिनीमूलम् । केबुकं कवकम् ।

ब्राह्मे—

आम्रमाम्रातकं बिल्वं दाडिमं वीजपूरकम् ।
चीणाकं लकुचं जंबु भव्यं भूतं तथाऽऽरुकम् ॥
प्राचीनामलकं क्षीरं नालिकेरं परूषकम् ।
नागरं च सखर्जूरं द्राक्षा नीलकपित्थकम् ॥
पटोलं च प्रियालं च कर्कन्धूबदराणि(?)च ।
वैकंकतं वत्सकं च एर्वारुर्वारुकानि च ।
एतानि फलजातीनि श्राद्धे देयानि यत्नतः ॥

आम्रातकं कपीतफलम् । चीणाकमेर्वारुकानुकारि । लकुचं लकुचफ-लम् । भूतं कर्णाटदेशे प्रसिद्धम् । आरुकमारण्यैर्वारुकम् । प्राचीनामलकं पानीयामलकम् । क्षीरं राजादनफलम् । परूषकं कोङ्कणे प्रसिद्धम् । पटोलं स्वादुपटोलीफलम् । प्रियालं चारवृक्षफलम् । कर्कन्धूर्बदरीफलम् । वैकंकतं स्रुवद्रुमफलम् । वत्सकं कुटजफलम् । एर्वारुः स्वादुकर्कटी । वारुकानि वारुकीफलानि । तथा—

कालशाकं तन्दुलीयं वास्तुकं मूलकं तथा ।
शाकमारण्यकं चैव दद्यात्पुष्पाण्यमूनि च ॥

तन्दुलीयोऽल्पमारिषः । वास्तुकं कटवास्तुकम् । मूलं कन्दम् । तथा—

दाडिमं मागधी चैव नागरार्द्रकतिन्तिणीः ।
आम्रातकं जीरकं च कुम्बरं च नियोजयेत् ॥

मागधी पिप्पली । नागरं शुण्ठी । कुम्बरं कुस्तुम्बरम् ।

कौर्मे—बिल्वामलकमृद्वीकपनसाम्रातदाडिमम्।
भव्यं पारावताक्षोटखर्जूराम्रफलानि च॥
कसेरुं कोविदारं च तालकंदस्तथा विसम्।
मांसं शाकं दधि क्षीरं चुञ्चुर्वेत्रांकुरस्तथा।
कट्फलं काङ्कणी द्राक्षा लकुचं मोचमेव च।

पारावतं पालेवतम्। तालकन्दस्तालमूलीकन्दः। चुञ्चुश्चूचुरिति प्रसिद्धः। मोचकं कदलीफलम्।

---

## अथ वर्ज्यानि।

वायुपुराणे—
लशुनं गृञ्जनं चैव पलाण्डुं पिण्डमूलकम्।
पिप्पली मरिचं चैव पटोलं वृहतीफलम्॥
वांशं करीरं सुरसमर्जकं भूस्तृणानि च।
अवेदोक्ताश्च निर्यासा लवणान्यूखराणि च॥
श्राद्धकर्मणि वर्ज्यानि याश्च भार्या रजस्वलाः।

पिण्डाकृतिमूलं पिण्डमूलकम्। पिप्पल्य आर्द्रा न शुष्काः। तथा मरिचं च। सुरसं निर्गुण्डीपत्रम्। अर्जकं श्वेतकुवेरकपत्रम्। भूस्तृणो भूतिकाख्यः शाकः। विष्णुः "न प्रत्यक्षं लवणं दद्यात्" इति।

ब्राह्मे—
सैन्धवं लवणं चैव तथा मानससंभवम्।
पवित्रे परमे ह्येते प्रत्यक्षे अपि नित्यशः॥

विष्णुः—'भूस्तृणशिग्रुसर्षपकूष्माण्डालावुवार्ताकपालङ्क्यातण्डुलीयककुसुम्भमहिषीक्षीराणि वर्जयेत्' इति। शिग्रुः सौभाञ्जनः रक्तपुष्पः न श्वेतपुष्पः। सर्षपो राजसर्षपो न गौरः। अलावु तुम्बीफलं वर्तुलम्। वार्ताकं क्षुद्रवार्ताकीफलम्। उशनाः—
नालिकाशणछत्राककुसुम्भालाबुविड्भवान्।
कुम्भीकम्बुकवृन्ताककोविदारांश्च वर्जयेत्॥
वर्जयेद्गृञ्जनं श्राद्धे काञ्जिकं पिण्डमूलकम्।
करंजं च इति।

'छत्राकं शतपुष्पा' इति 'हेमाद्रिः'। कवकमित्यन्ये। कुम्भी श्रीपर्णिका। कंबुकं वृत्तमलाबु। वृन्ताकं श्वेतम्। 'कण्डूरं श्वेतवृन्ताकं कुम्भाण्डं च विवर्जयेत्' इति देवलोक्तेः। कण्डूरं प्रावृषेणी-

फलम् । कुम्भाण्डं वृत्तालाबुसदृशम् । काञ्जिकमारनालम् । करंजं नक्तमालफलम् ।

भारद्वाजः—

नक्तोद्धृतं तु यत्तोयं पल्वलाम्बु तथैव च ।
शल्यं तु कूष्माण्डफलं वज्रकन्दश्च पिप्पली ॥
कुलत्थशणजीराणि करम्भाणि तथैव च ।
अब्जादन्यद्रक्तपुष्पं शिग्रुः क्षारस्तथैव च ॥
एतानि नैव देयानि सर्वस्मिन् श्राद्धकर्मणि ।

वज्रकन्द आरण्यसूरणः । जीरकं कृष्णजीरकम् । करम्भाणि दधिसक्तवः । क्षारो यवक्षारादिः । ब्राह्मे—

गृञ्जनं चुक्रिकां चुक्रं गाजरं पोतिकां तथा ।
हिङ्गूग्रगन्धा पनसं भूनिम्बं निम्बराजिके ।
कुस्तुम्बरं कलिङ्गोत्थं वर्जयेदम्लवेतसम् ॥

गृञ्जनं लशुनानुकारी 'सूक्ष्मनालः कन्दविशेषः' इति विज्ञानेश्वरः । श्वेतकन्दः पलाण्डुविशेषः, गृञ्जनम् इति श्राद्धप्रकरणे माधवः । प्रायश्चित्तप्रकरणे तु गृञ्जनं पत्रविशेषः यदीयं चूर्णं गायकाः कण्ठशुद्ध्यर्थं भक्षयन्ति ' इति । तत्र—

गन्धाकृतिरसैस्तुल्यं गृञ्जनं तु पलाण्डुना ।
सूक्ष्मनालाग्रपत्रत्वाद्भिद्यते तु पलाण्डुतः ।

इति वाग्भट्टीयटीकायां हेमाद्रौ बाष्पचन्द्रवचनं विनिगमकम् । यत्तु हेमाद्रिः गृञ्जनं गाजरम् इति । माधवोपि प्रायश्चित्तप्रकरणे मूलविशेषो वा गाजरापरपर्यायः इति व्याचष्टे तदनेन गृञ्जनगाजरयोः पृथगुपादानेनापास्तम् । यत्तु हिङ्गुनो ग्राह्यत्वमुक्तमादित्यपुराणे—

मधूकं रामठं चैव कर्पूरं मरिचं गुडम् ।
श्राद्धकर्मणि शस्तानि सैन्धवं त्रपुसं तथा ॥ इति ।

तद्विहितप्रतिषिद्धत्वाद्वैकल्पिकमानुकल्पिकं वेति ज्ञेयम् । रामठं हिङ्गुः । एवमन्येष्वपि विहितप्रतिषिद्धेषु । मनुः—

लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा ।
शेलुं गव्यं च पीयूषं प्रयत्नेन विवर्जयेत् ॥

शेलुः श्लेष्मातकः । अनिर्दशाहं पयः पीयूषम् ।

# अथ श्राद्धे मांसविचारः ।

मांसविचारः—

तत्र कचिच्छ्राद्धाङ्गत्वेन श्रुतं नित्यम्, कचित्तु फलार्थत्वेन श्रुतम् 'मांसं वार्ध्रीणसस्य च' इति । तत्र व्यवस्थोक्ता मनुना—

मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः ।
मधु प्रधानं शूद्रस्य सर्वेषां चाविरोधि यत् ॥ इति ।

अत्र हि 'सप्तदश वैश्यस्य सामिधेन्यः' इतिवत् 'क्षत्रियवैश्ययोरेव मांसम्' इति वचनव्यक्त्या ब्राह्मणस्य श्राद्धे न मांसदानम् । सर्वेषां मांसदानविधीनां क्षत्रियवैश्यपरत्वात् । न च मुन्यन्नमेव ब्राह्मणस्य मांसमेव क्षत्रियवैश्ययोरिति वचनव्यक्तिः । सर्ववर्णानां मुन्यन्नादिद्रव्यनियमेनान्यद्रव्यप्रतिपादकानां वाक्यानामानर्थक्यप्रसङ्गात् । न च प्रधानशब्दस्य पूर्वत्रानुषङ्गः । प्रमाणाभावात् । यदि हि 'या ते अग्नेरजाशया' 'इषएकपद्यूर्जेद्विपदी' इत्यादिवदनुषङ्गं विना साकाङ्क्षं स्यात् यदि वा 'चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनातु' इत्यत्रेव तेनैव पदेनाग्रे 'वसोः सूर्यस्य रश्मिभिः' इत्यस्येवान्वयः स्यात्तदानुषङ्गः । न त्वेवमिहोभयमप्यस्तीति नानुषङ्गः । अतः पूर्वोक्तैव व्यवस्था युक्ता ।

ननु—अस्तु नामैवं व्यवस्था । तथापि काम्यमांसदानं केन वार्येत । अङ्गीकृतमेव हि वैश्यं प्रत्यपि 'एकविंशतिसामिधेन्यनुवचनम्' इति ॥ सत्यम् । अस्तु नामैवं कृतयुगादिषु कलौ तु सर्ववर्णानां मांसं प्रतिषिद्धमेव । तथाह्युक्तं श्राद्धदीपकलिकामदनपारिजातयोर्निगमे—

'अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु ॥
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्' ॥ इति ।

बृहन्नारदीये द्वाविंशेऽध्याये समुद्रयानस्वीकारः इत्युपक्रम्य मध्ये मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा' इत्युक्त्वा 'एतान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः' इत्युक्तम् । नच 'श्राद्धे मांसम्' इति श्राद्धार्थस्यैव प्रतिषेधो न फलार्थस्येति वाच्यम् । एतादृशव्यवस्थायां मानाभावात् । किंच । एतस्य वाक्यस्य सर्ववर्णान्प्रति प्राप्तेस्तत्र च ब्राह्मणस्य नित्यमांसाभावेन काम्यमांसनिषेधपरत्वम्, क्षत्रियवैश्ययोस्तु श्राद्धार्थप्रतिषेधपरत्वम्' इति वैरूप्यापत्तिः । अतः श्रा-

द्धसम्बन्धि मांसं यस्य येन रूपेण प्राप्तं तत्सर्वमत्र प्रतिषिध्यते दीक्षितस्यैव दीक्षितो न जुहोति' इत्यादिना नित्यानामग्निहोत्रादीनां काम्यानां चतुर्होतृहोमादीनां प्रतिषेध इति । बृहत्पराशरेणाप्युक्तम्—

यस्तु प्राणिवधं कृत्वा मांसेन तर्पयेत्पितॄन् ।
सोऽविद्वांश्चन्दनं दग्ध्वा कुर्यादङ्गारविक्रयम् ॥
क्षिप्त्वा कूपे यथा किंचिद्बालः प्राप्तुं तदिच्छति ।
पतत्यज्ञानतः सोऽपि मांसेन श्राद्धकृत्तथा ॥ इति ।

इदमप्येकमूलकल्पनालाघवात्कलिपरमेव । अन्ययुगपरत्वे मांसविधीनां सर्वेषामानर्थक्यात् । तथा भागवतसप्तमस्कन्धे पञ्चदशाध्याये—

न दद्यादामिषं श्राद्धे न चाद्याद्धर्मतत्त्ववित् ।
मुन्यन्नैः स्यात्परा प्रीतिर्यथा न पशुहिंसया इति ।

यथा मुन्यन्नैः तथा न पशुहिंसयेति । अत्र दानभक्षणयोर्निषेधः कलावेव । अन्यथा 'यथाविधि नियुक्तस्तु यो मांसं नात्ति मानवः' इत्यादीनामानर्थक्यं स्यात् । अत एवं शास्त्रार्थे स्थितेऽपि ये केचन स्मृतिज्ञंमन्या मांसभक्षणलोलुपाः श्राद्धे मांसं ददति तान्,

गवयस्य तु मांसेन तृप्तिर्मासान्दशैव तु ।
मासानेकादश प्रीतिः पितॄणां माहिषेण तु ।
गव्ये तु दत्ते श्राद्धेषु संवत्सरमिहोच्यते ॥'

इत्यादि व्यासवाक्यमालोक्य श्राद्धे गोमांसं ददतः स्वतन्त्रान्को वारयेदिति दिक् ।

---

## अथ कुशनिरूपणम् ।

तेषामुत्पत्तिः शतपथश्रुतौ 'या वै वृत्राद्बीभत्समाना आपो धन्वदभन्त उदायंस्ते दर्भा अभवन् यदभन्यं उदायंस्तस्माद्दर्भास्ता हैताः शुद्धा मेध्या आपोऽवृत्राभिक्षरिता यद्दर्भाः' इति । अवृत्राभिक्षरिता वृत्रेण कालुष्यमप्रापिताः । गोभिलः—

कुशमूले स्थितो ब्रह्मा कुशमध्ये तु केशवः ।
कुशाग्रे शङ्करं विद्यात्सर्वे देवाः समन्ततः ॥

विधिमाह कौशिकः—

शुचौ देशे शुचिर्भूत्वा स्थित्वा पूर्वोत्तरामुखः ।
ॐकारेणैव मन्त्रेण कुशाः स्पृश्या द्विजोत्तमैः ॥

उत्पाटनमन्त्रः—

विरञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज ।
नुद सर्वाणि पापानि मम स्वस्तिकरो भव ॥

तमेव मन्त्रमभिधाय स्मृत्यन्तरे—

एवं मन्त्रं समुच्चार्य ततः पूर्वोत्तरामुखः ।
हुंफट्कारेण मन्त्रेण सकृच्छित्वा समुद्धरेत् ॥

कालानाह हारीतः—

मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।
अयातयामास्ते दर्भा नियोज्याः स्युः पुनः पुनः ॥

अयातयामा उपयुक्ता अप्यपवादं विहायान्यत्र प्रयोज्याः । यत्तु गृह्य-परिशिष्टे—

दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥

इति सामान्यवचनं तत्पूर्वकालगृहीतविषयम् । पवित्रे मार्कण्डेयः—

सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम् ।
नोच्छिष्टं तत्पवित्रं तु भुक्तोच्छिष्टं तु वर्जयेत् ॥

आचमनाङ्गत्वमाह कात्यायनः—

सपवित्रः सदर्भो वा कर्माङ्गे पितृकर्मणि ।
अशून्यं तु करं कृत्वा सर्वत्राचमनं चरेत् ॥

पवित्रशब्देन ग्रन्थिमत् । सर्वकर्माङ्गत्वं शातातपेनोक्तम्—

जपे होमे तथा दाने स्वाध्याये पितृकर्मणि ।
सव्यापसव्यौ कुर्वीत सपवित्रौ करौ बुधः ॥ इति ।

अत्रिः—

ब्रह्मयज्ञे जपे चैव ब्रह्मग्रन्थिर्विधीयते ।
भोजने वर्तुलः प्रोक्त एवं धर्मो न हीयते ॥ इति ।

'द्विगुणीकृतानां दर्भशिखानां पाशः प्रदक्षिणमर्धावेष्टनं विधाय पश्चाद्भागेन यदा प्रवेश्यते तदा वर्तुलो ग्रन्थिः स एव यदा प्राद-क्षिण्येन समवेष्टनं विधाय पुरोभागेन प्रवेश्यते तदा ब्रह्मग्रन्थिः' इति हेमाद्रिः । पवित्रलक्षणं कात्यायनेनोक्तम्—

अनन्तर्गर्भितं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्रकुत्रचित् ॥

तत्प्रकारमापस्तम्ब आह 'समौ साग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कुरुते पवित्रे स्थो वैष्णवी वायुर्वो मनसा पुनात्विति तृणं काष्ठं वाऽन्तर्धाय छिनत्ति न नखेन ' इति। पवित्रदर्भसङ्ख्या गारुडे—

सप्तभिर्दर्भपिञ्जूलैः कुर्याद्ब्राह्मं पवित्रकम्।
पञ्चभिः क्षत्रियस्यैव चतुर्भिस्तु तथा विशः॥
द्वाभ्यां शूद्रस्य विहितमन्तराणां तथैव च।

मार्कण्डेयस्तु—

चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम्।
एकैकन्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम्॥
सर्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रन्थितं न वा।
त्रिभिस्तु शान्तिके कार्यं पौष्टिके पञ्चभिस्तथा॥
चतुर्भिश्चाभिचाराख्यं कुर्वन्कुर्यात्पवित्रकम्॥ इति।

दर्भलक्षणमाह कौशिकः—

सप्तपत्राः शुभा दर्भास्तिलक्षेत्रसमुद्भवाः।
अप्रसूनाः स्मृता दर्भाः प्रसूनास्तु कुशाः स्मृताः॥
समूलाः कुतपाः प्रोक्ताश्छिन्नाग्रास्तृणसञ्ज्ञिताः।

---

## अथ तिलनिरूपणम्।

मत्स्यपुराणे—

विष्णोर्देहसमुद्भूताः कुशाः कृष्णास्तिलास्तथा।
धर्मस्य रक्षणायालमेतत्प्राहुर्दिवौकसः॥

सत्यव्रतः—

जर्तिलास्तु तिलाः प्रोक्ताः कृष्णवर्णा वनोद्भवाः।
जर्तिलाश्चैव ते ज्ञेया अकृष्टोत्पादिताश्च ये॥

आपस्तम्बः—

अटव्यां ये समुद्भूता अकृष्टाः फलितास्तथा।
ते वै श्राद्धे पवित्राः स्युस्तिलास्ते न तिलास्तिलाः॥

अत्राकृष्टभूमौ जाताः जर्तिलाः प्रशस्ततराः। तदभावे क्षेत्रोत्पन्नास्तेषाम् 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः' इतिवत् प्रशंसार्थः प्रतिषेधः।

पुष्पाण्याह वृद्धमनुः—

शुक्लाः सुमनसः श्रेष्ठास्तथा पद्मोत्पलानि तु ।
गन्धरूपोपपन्नानि ऋतुकालोद्भवानि च ॥

वर्ज्यान्याह स एव—

जपादिकुसुमं झिण्टि रूपिका सकुरण्टिका ।
पुष्पाणि वर्जनीयानि श्राद्धकर्मणि नित्यशः ॥

रूपिकाऽर्कपुष्पम् ।

उग्रगन्धीन्यगन्धीनि दुष्टान्यपि च वर्जयेत् ।
चंदनागुरुणी चोभे तथैवोशीरपद्मकम् ॥
तुरुष्कं गुग्गुलुं चैव घृताक्तं युगपद्दहेत् ।
घृतं न केवलं दद्याद्दुष्टं वा तृणगुग्गुलम् ॥ इति ।

'तुलसीपत्राण्यपि देयानि' इति स्मृत्यर्थसारे ।

## अथार्घपात्राणि ।

हारीतः—'कांस्यपार्णराजतताम्रपात्राण्यर्घोदकधारणानि सर्वाण्युपकल्प्यानि' । बैजवापः—

खादिरौदुम्बराण्यर्घपात्राणि श्राद्धकर्मणि ।
अथाश्ममृन्मयानि स्युरपि पर्णपुटास्तथा ॥ इति ।

पर्णपुटा यज्ञियवृक्षपर्णनिर्मिताश्चमसाकृतयः । यत्तु कात्यायनेन 'मृन्मयवर्जं यानि वाविद्यन्ते' इत्युक्तं तदन्यलाभे मृन्मयनिषेधार्थम् नात्यन्तिकनिवृत्त्यर्थमिति हेमाद्रिः । अपक्वमृन्मयनिषेधार्थमित्यन्ये । विकल्पार्थमित्यपरे । मत्स्यपुराणे पर्णमयपात्रमभिधायोक्तम्—

जलजं वाऽपि कुर्वीत तथा सागरसंभवम् ।
सौवर्णं राजतं ताम्रं पितॄणां पात्रमुत्तमम् ॥ इति ।
राजतैर्भाजनैर्देयमपि वा रजतान्वितैः । इति च ।

पात्रविशेषेण फलविशेषो ब्रह्मवैवर्ते—

पालाशे ब्रह्मवर्चस्वमश्वत्थे राज्यभागिता ।
सर्वभूताधिपत्यं च प्लक्षे नित्यमुदाहृतम् ॥
पुष्टिः प्रजाश्च न्यग्रोधे बुद्धिः प्रज्ञा धृतिः स्मृतिः ।
रक्षोघ्नं च यशस्यं च काश्मर्याः पात्रमुच्यते ॥
सौभाग्यमुत्तमं लोके मधूके समुदाहृतम् ।
फल्गुपात्रेण कुर्वाणः सर्वान्कामानवाप्नुयात् ॥

फल्गुः काकोदुंबरिका ।

परां द्युतिमथार्के च प्राकाम्यं च विशेषतः ।
बिल्वे लक्ष्मीस्तपो मेधा नित्यमायुष्यमेव च ॥
वर्षत्यजस्रं तत्रैव पर्जन्यो वेणुपात्रतः ।
एतेषां लभते पुण्यं सौवर्णे राजतेऽपि वा ॥

पुण्यं फलम् । अत्र च योगसिद्धयधिकरणन्यायेन पर्यायेणैव फलप्राप्तिर्न युगपदिति ।

इत्यर्घपात्रनिर्णयः ॥

## अथ भोजनपात्राणि ।

वायुपुराणे—

पात्रं वै तैजसं दद्यान्मनोज्ञं श्राद्धभोजने ।
राजतं काञ्चनं चैव दद्याच्छ्राद्धेषु यः पुमान् ॥
दत्वा च लभते दाता प्राधान्यं धनमेव च ।

व्यवस्थामाहात्रिः—

भोजने हैमरौप्याणि दैवे पित्र्ये यथाक्रमम् ।

हारीतः—राजतकांस्यपर्णताम्रपात्राणि ब्राह्मणभोजनार्थानि महान्ति । भोजनार्थोपकल्पितसर्वान्नधारणपर्याप्तं महत्वं ग्राह्यम् । कांस्ये विशेषमाहात्रिः—

पञ्चाशत्पलिकं कांस्यं ह्यधिकं भोजनाय वै ॥ इति ।

वाराहे—

अन्यान्यपि तु पात्राणि दारुजान्यपि जानता ।
यथोपपन्नं कार्याणि मृन्मयानि न तु क्वचित् ॥
नायसान्यपि कुर्वीत पैत्तलानि न चैव हि ।
न च सीसमयानीह शस्यन्ते त्रपुजान्यपि ॥ इति ।

अंगिराः—

'न जातीकुसुमानि दद्यान्न कदलीपत्रम्' इति ॥

इति भोजने भाजनविधिः ।

## अथ श्राद्धे प्रशस्ता ब्राह्मणाः ।

वसिष्ठः—'पितृभ्यो दद्यात्पूर्वेद्युर्ब्राह्मणान् संनिपात्य यतीन् गृहस्थान्

साधून् परिणतवयसोऽविकर्मस्थान् श्रोत्रियाननशिष्याननन्तेवासिनः' इति। अन्तेवासी शुश्रूषकः। कात्यायनः—'स्नातकानेके यतीन् गृहस्थान् साधून्वा श्रोत्रियान् वृद्धाननवद्यान्सकर्मस्थानभावेऽपि शिष्यान्सदाचारान्' इति।

मनुः—यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम्।
शाखान्तगमथाध्वर्युं छन्दोगं वा समाप्तिगम्॥ इति।

वा शब्दोऽपिस्थाने। शातातपः—

भोजयेद्यद्यथर्वाणं दैवे पित्र्ये च कर्मणि।
अनन्तमक्षयं चैव फलं तस्येति वै श्रुतिः॥

अत्र केचित् 'यथा कन्या तथा हविः' इति कन्यासाधर्म्येण स्वशाखीयमेव श्राद्धे नियोजयन्ति। तन्न। कन्यायामिव स्वशाखीयनियमे मानाभावात्। वचनं तु कुलीननियमपरं युक्तमिति।

बृहस्पतिः—

यद्येकं भोजयेच्छ्राद्धे छन्दोगं तत्र भोजयेत्।
ऋचो यजूंषि सामानि त्रितयं तत्र विद्यते॥

यमशातातपौ—

छन्दोगं भोजयेच्छ्राद्धे वैश्वदेवे च बह्वृचम्।
पुष्टिकर्मणि वाऽध्वर्युं शान्तिकर्मण्यथर्वणम्॥

ब्रह्मवैवर्ते—

विप्रान्गृहस्थान्वेदार्थविदो निरभिमानिनः।
पत्नीपुत्रसमायुक्तान् श्राद्धकर्मणि भोजयेत्॥

नन्दिपुराणे—

चत्वार आश्रमाः पुण्याः श्राद्धे दैवे तथैव च॥ इति।

कूर्मपुराणे—

असमानप्रवरको ह्यसगोत्रस्तथैव च।
असम्बन्धी च विज्ञेया ब्राह्मणाः श्राद्धसिद्धये॥

यमः— नक्षत्रतिथिपुण्याहान् मुहूर्तान्मङ्गलानि च।
न निर्दिशन्ति ये विप्रास्तैर्भुक्तं ह्यक्षयं भवेत्॥

## अथानुकल्पः ।

ब्रह्माण्डपुराणे—

अलाभे सति भिक्षूणां भोजयेद्ध्यानिनः शुभान् ।
असंभवेऽपि तेषां वै नैष्ठिकान् ब्रह्मचारिणः ॥
तदभावेऽप्युदासीनं गृहस्थमपि भोजयेत् ।

भिक्षवो यतयस्ते च त्रिदण्डिन एव भोज्याः इति हेमाद्रिः । अत्र मानं तु चिन्त्यम् । ध्यानिनो वानप्रस्थाः ।

गारुडे—उदासीनेष्वलब्धेषु भोज्याः सम्बन्धिनोऽपि हि ।
मातुलश्यालयाज्यर्त्विक्शिष्याचार्यादयोऽपि च ॥

गौतमः—'शिष्यांश्चैके सगोत्रांश्च भोजयेदूर्ध्वं त्रिभ्यो गुणवतः' चद्वयेन याज्यसमानार्षेयग्रहणम् ।

मनुः—मातामहं मातुलं च स्वस्रीयं श्वशुरं गुरुम् ।
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यांश्च भोजयेत् ॥

'विट्पतिर्जामाता' इति हेमाद्रिः । 'अतिथिरि'ति मेधातिथिमाधवौ । गार्ग्यः—

नैकगोत्रे हविर्दद्याद्यथा कन्या तथा हविः ।
अभावे ह्यन्यगोत्राणामेकगोत्रांस्तु भोजयेत् ॥
असमप्रवराभावे समानप्रवरानपि ॥

बौधायनः—

तस्मादेवंविधं सपिण्डमप्याशयेत् ॥ इति ।

तत्र विशेषमाह गौतमः—'भोजयेदूर्ध्वं त्रिभ्यो गुणवन्तम्' इति ।

अत्रिः—पिता पितामहो भ्राता पुत्रो वाऽथ सपिण्डकः ।
न परस्परमर्हाः स्युर्न श्राद्धे ऋत्विजस्तथा ॥
ऋत्विक्पुत्रादयो ह्येते सकुल्या ब्राह्मणाः स्मृताः ।
वैश्वदेवे नियोक्तव्या यद्येते गुणवत्तराः ॥

इत्यनुकल्पः ।

शातातपः—संन्निकृष्टमधीयानं ब्राह्मणं यस्त्वतिक्रमेत् ।
भोजने चैव दाने च दहत्यासप्तमं कुलम् ॥

भविष्यत्पुराणे—

अतिक्रान्ते न दोषोऽस्ति निर्गुणं प्रति कर्हिचित् ।

महाभारते—

गायत्रीमात्रसारोऽपि ब्राह्मणः पूजितः खग।
गृहासन्नो विशेषेण न भवेत्पतितः स चेत्॥

भविष्यत्पुराणे—

यस्त्वासन्नमतिक्रम्य ब्राह्मणं पतितादृते।
दूरस्थं भोजयेन्मूढो गुणाढ्यं नरकं व्रजेत्॥

महाभारते—

यदि स्यादधिको विप्रो दूरे वृत्तादिभिर्वृतः।
तस्मै यत्नेन दातव्यमतिक्रम्यापि सन्निधौ॥

---

## अथ वर्ज्या ब्राह्मणाः।

वायुपुराणे—

न भोजयेदेकगोत्रान्समानप्रवरांस्तथा।

मनुः— नारिं न मित्रं यं विद्यात्तं श्राद्धे भोजयेद्द्विजम्।

ब्रह्माण्डे—

न भोज्या योनिसंबद्धा गोत्रसम्बधिनस्तथा।
मन्त्रान्तेवासिसंबद्धा श्राद्धे विप्राः कदाचन॥

ब्रह्मवैवर्ते—

शिष्याश्च ऋत्विजो याज्याः सुहृदः शत्रवस्तथा।
श्राद्धे तु श्वशुरः श्यालो न भोज्या मातुलादयः॥

कौर्मे—यस्य वेदश्च वेदी च विच्छिद्येते त्रिपौरुषम्।
स वै दुर्ब्राह्मणो नार्हः श्राद्धादिषु कदाचन॥

याज्ञवल्क्यः—

रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा।
अवकीर्णी कुण्डगोलौ कुनखी श्यावदन्तकः॥
भृतकाध्यापकः क्लीबः कन्यादूष्यभिशस्तकः।
मित्रध्रुक् पिशुनः सोमविक्रयी परिविन्दकः॥
मातापित्रोर्गुरोस्त्यागी कुण्डाशी वृषलात्मजः।
परपूर्वापतिः स्तेनः कर्मदुष्टाश्च निन्दिताः॥ इति।
दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते।

परिवेत्ता स विज्ञेयः परिविित्तिस्तु पूर्वजः ॥ इति ।
प्रपंचितं चेदं संस्कारमयूखे ।
तथा—कुशीलवोऽवकीर्णी च वृषलीपतिरेव च ॥ इति ।
वर्ज्य इत्यर्थः ।
विष्णुः—न वार्यपि प्रयच्छेत बिडालव्रतिके द्विजे ॥
ब्रह्मपुराणे—

भोक्तुं श्राद्धे न चार्हन्ति दैवोपहतचेतसः ।
षण्ढो मूकश्च कुनखी खल्वाटो दन्तरोगवान् ॥
श्यावदन्तः पूतिनासः छिन्नाङ्गश्चाधिकाङ्गुलिः ।
गलरोगी च गड्डुमान्स्फुटिताङ्गश्च सज्वरः ॥
खञ्जतूवरमण्ठाश्च ये चान्ये हीनरूपिणः ।

गलरोगी गण्डमाली । गड्डुमान् कुब्जः । यौवनेष्वजातश्मश्रुस्तूवरः मण्ठा वक्रजङ्घाः । स्कान्दे—

काणाः कुण्ठाश्च मण्ठाश्च मूकान्धबधिरा जडाः ।
कुनखाः कुष्ठिनश्चैव दुर्नग्ना विद्धमेहनाः ॥
अतिदीर्घा अतिह्रस्वा अतिस्थूला भृशं कृशाः ।
निर्लोमा नातिलोमानो गौराः कृष्णा अतीव ये ॥
एतान्विवर्जयेद्विप्रान् प्राज्ञः श्राद्धेष्वश्रोत्रियान् ।

दुर्नग्ना दुश्चर्माणः । विद्धमेहना विद्धशिश्ना इति हेमाद्रिः । मरीचिः—

अविद्धकर्णः कृष्णश्च लम्बकर्णस्तथैव च ।
वर्जनीयः प्रयत्नेन ब्राह्मणः श्राद्धकर्मणि ।

लम्बकर्णं वर्णयति गोभिलः—

हनुस्थलादधः कर्णौ लम्बौ तु परिकीर्तितौ ।
व्यङ्गुलत्र्यङ्गुलौ शस्तौ तेन शातातपोऽब्रवीत् ॥

पूर्वोक्तसर्वापवादमाह सुमन्तुः—

काणाः कुण्ठाश्च मण्ठाश्च दुश्चर्माणः कचैर्विना ।
सर्वे श्राद्धे नियोक्तव्या मिश्रिता वेदपारगैः ॥

काश्यपेन तु मिश्रणे विशेष उक्तः—

काणादीन् भोजयेद्दैवे श्राद्धे दाने तु वर्जयेत् ।

तथा—न ब्राह्मणं परीक्षेत दैवे कर्मणि धर्मवित् ॥
पित्र्ये कर्मणि संप्राप्ते प्रयत्नेन परीक्षयेत् इति ।

कालिकापुराणे—

अनाश्रमी तु यो विप्रो जटी मुण्डी वृथा च यः ।
वृथा काषायधारी यः श्राद्धे तं दूरतस्त्यजेत् ॥
चिकित्सका देवलका वृथा नियमधारिणः ।
सोमविक्रयिणश्चैव राजन्नार्हन्ति केतनम् ॥

केतनं श्राद्धीयनिमन्त्रणम् ।

होतारो वृषलान्ना ये वृषलाध्यापकास्तथा ।
तथा वृषलशिष्याश्च श्राद्धे नार्हन्ति केतनम् ॥
अनग्नयश्च ये विप्रा मृतनियातकाश्च ये ।
स्तेनाश्च पतिताश्चैव राजन्नार्हन्ति केतनम् ॥

सौरपुराणे—

अङ्गवङ्गकलिङ्गांश्च सौराष्ट्रान् गुर्जरांस्तथा ।
आभीरान्कोङ्कणांश्चैव द्राविडान्दक्षिणापथान् ॥
आवन्त्यान्मागधांश्चैव ब्राह्मणांस्तु विवर्जयेत् ॥ इति ।

## अथ विभक्तयो निर्णीयन्ते ।

नागरखण्डे—

विभक्तिरहितं श्राद्धं क्रियते यद्विपर्ययात् ॥
अकृतं तद्विजानीयात्पितॄणां नोपतिष्ठति ।
तस्मात्सर्वप्रयत्नेन ब्राह्मणेन विजानता ॥
विभक्तिभिर्यथोक्ताभिः श्राद्धं कार्यं त्रिभिः सदा ।

विपर्ययाद्भ्रान्तेः । तिसृभिरिति एकोद्दिष्टे आवाहनाभावेन द्वितीयाया अभावात्तिसृणां श्राद्धमात्रसम्बन्धाभिप्रायम् ।

व्यासः—चतुर्थी त्वासने नित्यं संकल्पे च विधीयते ।
प्रथमा तर्पणे प्रोक्ता सम्बुद्धिमपरे जगुः ॥

नित्यमित्यस्य संकल्प इत्यनेन सम्बन्धः । आसने षष्ठ्या अपि वक्ष्यमाणत्वात् । धर्मः—

पृच्छाक्षय्यासने षष्ठी चतुर्थी चासने मता ।
अर्घ्यावनेजनं पिण्डं तथा प्रत्यवनेजनम् ॥
सम्बुद्ध्यैतानि कुर्वीत सर्वशास्त्रविशारदः ।

पृच्छा ब्राह्मणानुज्ञाग्रहणार्थं श्राद्धारम्भे प्रश्नवाक्यम् । भृगुः—

आसने तु भवेत्षष्ठी तथैवाक्षय्यपृच्छयोः ।
आवाहने द्वितीया स्यादेष शास्त्रविनिश्चयः ॥
गन्धं माल्यं च धूपं च दीपमन्नं सदक्षिणम् ।
अपृथक्त्वेन दातव्यं चतुर्थ्यां भूतिमिच्छता ॥

अत्रासने चतुर्थीषष्ठ्योर्यथाशाखं व्यवस्थितो विकल्पः । एता एव विभक्तयो गोत्रपदे शर्मपदे च योज्याः । स्त्रीलिङ्गेऽपि विभक्त्यन्तपदप्रयोगः प्रदर्शितो नागरखण्डे—

मातर्मात्रे तथा मातुरासने कल्पने क्षणे ।
गोत्रे गोत्रायै गोत्रायाः प्रथमाद्या विभक्तयः ॥
देवि देव्यै तथा देव्या एवं मातुश्च कीर्तयेत् ।

गोभिलोऽपि—

गोत्रायाश्चासने कुर्याद्गोत्रे चैवार्घ्यपिण्डयोः ॥
गोत्रायाश्चाक्षय्यकाले गोत्रायै त्याग एव च ।
गोत्रामावाहने कुर्यात् स्त्रीलिङ्गे तु न संशयः ॥

## अथ सव्यापसव्यनिर्णयः ॥

चतुर्विधं कर्म । किञ्चित्पित्र्यैकसम्बधित्वात्पित्र्यं यथा स्वधानिनयनादि । किञ्चिद्दैवैकसम्बन्धित्वाद्दैवं यथा विश्वेदेवाः प्रीयन्तामितिवाचनम् । किञ्चिदुभयसम्बन्धादुभयात्मकं यथा पाकप्रोक्षणादि । किञ्चिच्च देवपितृसम्बन्धरहितत्वाल्लौकिकमेव यथा स्वागतप्रश्नादि । तत्र पित्र्यमुभयात्मकं च प्राचीनावीतिना कार्यमित्याह मनुः—

प्राचीनावीतिना सर्वमपसव्यमतन्द्रिणा ।
पित्र्यमा निधनात्कार्यं विधिवद्दर्भपाणिना ॥

अपसव्यमप्रदक्षिणं, निधनं समाप्तिः । अत्र पित्र्ये विहितं प्राचीनावीतं देवपितृसाधारणेऽपि कर्मणि भवति विप्रतिषिद्धप्रधानाप्रधानधर्मसमवाये प्रधानधर्मस्य बलीयस्त्वात् । दैवं तूपवीतिनैव कार्यम् । तदुक्तं नागरखण्डे—

एवं सर्वाः क्रियाः कार्या दैविक्यः सव्यपूर्विकाः ।
पैतृक्यश्चापसव्येन मुक्त्वैकं स्वस्तिवाचनम् ॥

स्वस्तिवाचनं 'स्वस्तीति ब्रूत' इति प्रैषः । रागतः प्राप्तपुरुषार्थभोजनाश्रितनिरामिषत्वादिनियमस्य कर्मार्थत्वेऽपि भोजनस्य प्राधान्या-

यज्ञोपवीतमेव । अथवा पित्र्यत्वेन प्राप्तस्य प्राचीनावीतस्य 'कृताप-सव्यः पूर्वेद्युः पितृपूर्वं निमंत्रयेत्' इत्यनेन संकल्पप्रभृतिनिमन्त्रणे पुनर्विधानात्तत्पूर्वकृत्यनिरामिषभोजनादौ प्राचीनावीतं परिसङ्ख्यायते अतो यज्ञोपवीतम् । देशकालसंकीर्तनादि युष्मदनुज्ञया करिष्य इति वाक्यं प्राचीनावीती उच्चारयेत् ।

प्रचेताः—

अपसव्यं ततः कुर्याज्जप्त्वा मन्त्रं तु वैष्णवम् ।
गायत्रीं प्रणवं चापि ततः श्राद्धमुपक्रमेत् ॥

ततः ब्राह्मणोपवेशनोत्तरं प्राणायामं कृत्वा उपक्रमेत् । 'संकल्पयेत्' इति हेमाद्रिः । नीवीबन्धश्चापसव्येन । 'पितृदेवत्या वै नीवीः' इति श्रुतेः । बृहस्पतिः—

ऋजून्सव्येन वै दद्याद्दैवे दर्भान्प्रदक्षिणम् ।

एतच्च सव्यमाच्छादनान्तेषु दैवपदार्थेषु । अत एव वैश्वदेविकाच्छा-दनान्तं पदार्थकाण्डमुक्त्वाऽऽह याज्ञवल्क्यः—

अपसव्यं ततः कृत्वा पितृणामप्रदक्षिणम् ।
द्विगुणांस्तु कुशान्दत्वा ह्युशन्तस्त्वेत्यृचा पितॄन् ॥

'आवाहयेत्' इति वक्ष्यमाणेन सम्बन्धः । एतच्चापसव्यं दर्भास-नदानाद्याच्छादनान्तम् । अग्नौकरणे तु कात्यायनानामनुज्ञाभ्यर्थनात्प्र-भृति प्राचीनावीतित्वम् । आश्वलायनानां तु अनुज्ञाभ्यर्थनात्प्रभृति तदुत्तरभाविपदार्थप्रभृति वा प्राचीनावीतित्वम् । अथवा सर्वेषामेवा-दितः प्राचीनावीतित्वं यज्ञोपवीतित्वं वा । हुतशेषप्रतिपत्तिस्तु 'प्राची-नावीतिनैव कार्या इत्याह शौनकः—

हुत्वाऽग्नौ परिशिष्टं तु पितृपात्रेष्वनन्तरम् ।
निवेद्यैवापसव्येन परिवेषणमाचरेत् ॥

अत्रापसव्येनेत्यस्य न परिवेषणेन सम्बन्धः ।

अपसव्येन यस्त्वन्नं ब्राह्मणेभ्यः प्रयच्छति ।
विष्ठामश्नन्ति पितरस्ते च सर्वे द्विजोत्तमाः ।

इति कार्ष्णाजिनिवचनात् । पात्रालम्भनाङ्गुष्ठनिवेशनान्नत्यागभो-जनप्रैषाः सव्येन दैवे, पित्र्ये त्वपसव्येन । अतिथेः सर्वं यज्ञोपवीतिना । भोजनप्राक्कालीनः गायत्रीमधुमत्यादिजपश्चापसव्येन ।

कृतापसव्यः कुर्वीत मुक्त्वोयं त्वश्नतां जपः ।। (?)

इति वृद्धशातातपवचनात् । अपोशानार्थमुदकदाने तु यज्ञोपवीतम् । पित्र्यत्वाभावात् । भुञ्जानेषु पित्र्यसूक्तजपोऽप्युपवीतिना । तथाच मरीचिः—

प्रदक्षिणं शिवा आपो जपाशीःस्वस्तिवाचने ।
विप्रेषु दक्षिणादानं षट् सव्येन प्रचक्षते ।।

प्रदक्षिणं विसर्जनानंतरं ब्राह्मणप्रदक्षिणीकरणम् । 'शिवा आपः' इतिमन्त्रेण क्रियमाणं कर्म । अदृष्टार्थे मन्त्रोच्चारणं जपः । आशीः 'दातारो नोभिवर्द्धन्तामित्यादिका । 'स्वस्ति भवन्तो ब्रुवन्तु' इति स्वस्तिवाचनम् । साङ्गं विकिरदानमपसव्येन । 'तृप्ताः स्थ' इति प्रश्नः शेषान्नविनियोगश्च दैवपित्र्यसाधारण्यादपसव्येन । साङ्गं पिण्डदानमपसव्येन—

अपसव्येन दर्भेषु पिण्डा देयास्त्रयस्तु वै ।

इति कार्ष्णाजिनिवचनात् । सुप्रोक्षितमस्त्विति श्राद्धदेशप्रोक्षणं कर्मैकसम्बन्धात्प्राचीनावीतिनैव । अत्र कर्कः—आचान्तेषूदकपुष्पाक्षतदानं तच्च दैवपूर्वं ततोऽपसव्यं पित्र्ये, केचित्तु सव्येनेच्छन्ति तन्न दानसंयोगात् 'पिण्डपितृयज्ञवदुपचारः पित्र्ये' इति च दर्शनादिति; तत्पूर्वोक्तमरीचिवचनविरोधात्पित्राद्युद्देशमन्तरेण क्रियमाणत्वाच्चोपेक्ष्यम् । अक्षय्योदकं दैवे सव्येन पित्र्ये चापसव्येन । 'अघोराः पितरः' इत्याद्युपवीतेन । आशीः सव्येन 'जपाशीःस्वस्तिवाचनम्' इति मरीच्युक्तेः । स्वधावाचनं तु साङ्गं पित्र्यत्वात्प्राचीनावीतेन । पात्रस्थार्घसंस्रवमोचनं न्युब्जपात्रोत्तानीकरणं च प्राचीनावीतिना । तदाहात्रिः—

अपसव्यं ततः कृत्वा पिण्डपार्श्वे समाहितः ।
क्षिप्त्वा दर्भपवित्राणि मोचयेत्संस्रवांस्ततः ।। इति ।

पिण्डार्थं कल्पिते देशे इत्यर्थः । जमदग्निः—

सर्वं कर्मापसव्येन यत्किञ्चिदिह कीर्तितम् ।
विहाय दक्षिणामेकां तथा विप्रविसर्जनम् ।।
अपसव्यं तु तत्राऽह मात्स्ये तु भगवान्मुने । इति ।

इदं च व्यवस्थितम् । ब्राह्मणानामानंत्यर्थत्वपक्षे सव्येन । पितृभ्य एव

१ 'यस्वश्नतां,' 'मध्वश्नता' इति पाठौ.

दानमिति पक्षेऽपसव्येन । विश्वेदेवाः प्रीयन्तामित्युपवीतेन । भोजन-पात्रचालनं दैवे सव्येन पित्र्येऽपसव्येन । स्वस्तिवाचनं तूपवीतेन मरी-चिवचनात् । विसर्जनं प्रदक्षिणीकरणं च सव्येनेत्युक्तम् । अनुव्र-जनमपसव्येन । ब्राह्मणदत्तपुष्पाक्षतग्रहणादि, अद्य मे सफलं जन्म-इत्यादि च, उच्छिष्टोद्वासनं च लौकिकत्वादुपवीतेन । यजमानकर्तृकस्य पत्न्यै पिण्डदानस्य पितृसम्बन्धराहित्यादुपवीतेन। 'पिण्डांस्तु गोजवि-प्रेभ्यः' इत्यादिका प्रतिपत्तिस्तु पित्र्यत्वात्प्राचीनावीतिनेति दिक् ।

---

## अथ विप्रनिमन्त्रणादि ।

कौर्मे— श्वो भविष्यति हि श्राद्धं पूर्वेद्युरभिपूजयेत् ।
असंभवे परेद्युर्वा ब्राह्मणांस्तान्निमन्त्रयेत् ॥ इति ।

नागरखण्डे—
पूर्वेद्युः सायमासाद्य संयुतानां द्विजन्मनाम् ।
गृहं गत्वा शुचिर्भूत्वा संयतांस्तान्निमन्त्रयेत् ॥

यमः— प्रार्थयीत प्रदोषान्ते भुक्तानशयितान् द्विजान् । इति ।

निमन्त्रणं स्वयमेव कार्यम् । 'दाता विप्रान्निमन्त्रयेत्' इति हेमाद्रौ देवलोक्तेः । असंभवे तु पुत्रादयोऽपि । स्वयं शिष्योऽथवा सुतः इति तत्रैव बृहस्पत्युक्तेः । कांश्चिन्निषेधति नारायणः—

अभोज्यं ब्राह्मणस्यान्नं क्षत्रियाद्यैर्निमन्त्रितम् ।
तथैव क्षत्रियादीनां वृषलेन निमन्त्रितम् ॥

यमः—अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् ।
तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम् ।

नागरखण्डे—
कुलाचारसमोपेतान् गृहीत्वा चरणौ ततः ।
प्रसादयेच्च सव्येन विश्वेदेवार्चने पुरा ।
युग्मानेव यथाशक्त्या मन्त्रमेतमुदीरयेत् ॥
आगच्छन्तु महाभागा विश्वेदेवास्तनौ तव ।
भक्त्याहूतो मया चैव त्वं चापि व्रतभाग्भव ॥
एवं युग्मान्समामन्त्र्य वैश्वदेवकृते द्विजान् ।
अयुग्मानपसव्येन पित्रर्थं चाभिमन्त्रयेत् ॥

ब्राह्मणांश्च यथाशक्त्या एकैकस्य पृथक् पृथक् ।
एकैकं वा त्रयाणां वाऽप्येकमेव निमन्त्रयेत् ।
द्विजं मातामहानामप्येष एव विधिः स्मृतः ॥
ततः पादौ परिस्पृश्य द्विजस्येदमुदीरयेत् ।
श्रद्धापूतेन मनसा पितृभक्तिपरायणः ॥
पिता मे तव कायेऽस्मिन् तथैव च पितामहः ।
स्वपित्रा सहितोऽभ्येतु त्वं च व्रतपरो भव ॥
एवं पितॄन्समाहूय तथा मातामहानथ ।
सव्यं कृत्वा नमस्कृत्य तान्विप्रान्स्वगृहं व्रजेत् ॥

तत्रैव—

ब्राह्मणानां गृहं गत्वा तान्प्रार्थ्य विनयान्वितः ।
अमुकस्य त्वया श्राद्धे क्षणो वै क्रियतामिति ॥
वदेदभ्युपगच्छेयुर्विप्राश्चैव तथेति च ।
भूयोऽपि व्याहरेत्कर्ता तं प्राप्नोतु भवानिति ॥
द्विजस्तु प्राप्नवानीति विधिरेष निमन्त्रणे ।

प्रचेताः—

कृतापसव्यः पूर्वेद्युः पितृपूर्वं निमन्त्रयेत् ।
भवद्भिः पितृकार्यं वः संपाद्यं नः प्रसीदत ॥

याज्ञवल्क्यः—

द्वौ दैवे प्राक् त्रयः पित्र्ये उदगैकैकमेव वा ।
मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ॥

वसिष्ठः—

द्वौ दैवे त्वथ पित्र्ये त्रीनेकैकमुभयत्र वा ।
भोजयेत्सुसमृद्धयाऽपि विस्तरं तु विवर्जयेत् ॥ इति ।

विस्तरम् 'नवावरान् भोजयेदयुजो वा यथोत्साहम्' इति गौतमोक्तम् । तस्य त्वत्यन्तसमृद्धोऽधिकारीत्यर्थः । अनेकविप्राभावे त्वेकमपि भोजयेत् । 'भोजयेदथवाऽप्येकं ब्राह्मणं पङ्क्तिपावनम् इति । शंखोक्तेः । अत्र वैश्वदेवप्रकारमाह स एव—

यद्येकं भोजयेच्छ्राद्धे दैवं तत्र कथं भवेत् ।
अन्नं पात्रे समुद्धृत्य सर्वस्य प्रकृतस्य तु ।

देवतायतने कृत्वा यथाविधि निवेदयेत् ॥
प्रास्येदन्नं तदग्नौ तु दद्याद्वा ब्रह्मचारिणे ॥ इति ।

चतुर्विंशतिमतेऽपि—

विप्राभावे वृथा न स्याद्दद्यादग्नौ जलेऽपि वा ॥ इति ।

अत्र विशेषो मात्स्ये—

पठन्निमन्त्र्यनियमान् श्रावयेत्पैतृकान् बुधः ।
अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः ॥
भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा ॥ इति ।

जातूकर्ण्यः—

निरामिषं सकृद्भुक्त्वा भुक्तसर्वजने गृहे ।
निमन्त्रयीत पूर्वेद्युरुपगम्य द्विजोत्तमान् ॥

आदित्यपुराणे—

तदहस्तु शुचिर्भूत्वाऽक्रोधनोऽत्वरितो भवेत् ।
अप्रमत्तः सत्यवादी यजमानोऽथ वर्जयेत् ॥
अध्वानं मैथुनं चैव श्रमं स्वाध्यायमेव वा ।

अत्राहःशब्देन निमन्त्रणप्रभृतिभुक्तान्नपरिणामावधिः कालो गृह्यते—

स्यादत्र परिणामान्तं ब्रह्मचर्यं द्वयोस्ततः ॥

इति प्रचेतःस्मरणात् । वृद्धमनुः—

निमन्त्र्य विप्रांस्तदहर्वर्जयेन्मैथुनं क्षुरम् ॥

क्षुरं क्षुरकर्म 'एतच्च नखनिकृन्तनादेरप्युपलक्षणम्' इति हेमाद्रिः ।

जाबालिः—

ताम्बूलं दन्तकाष्ठं च स्नेहस्नानमभोजनम् ।
रत्यौषधपरान्नानि श्राद्धकर्ता तु वर्जयेत् ॥

प्रचेताः— श्राद्धभुक् प्रातरुत्थाय प्रकुर्याद्दन्तधावनम् ।
श्राद्धकर्ता न कुर्वीत दन्तप्रक्षालनं बुधः ॥

विष्णुः— कोपं परिहरेन्नाश्रु पातयेन्न त्वरां कुर्यात् ।

निमन्त्रितद्विजपरित्यागे दोषं प्रायश्चित्तं चाऽऽह नारायणः—

केतनं कारयित्वा तु यो निर्वासयति दुर्मतिः ।
ब्रह्महत्यामवाप्नोति शूद्रयोनौ च जायते ॥
एतस्मिन्नेनसि प्राप्ते ब्राह्मणो नियतः शुचिः ।

यतिचान्द्रायणं कृत्वा तस्मात्पापात्प्रमुच्यते ॥

केतनमामन्त्रणम् । हारीतः—

दैवे वा यदि वा पित्र्ये निमन्त्र्य ब्राह्मणं यदि ।
तर्पयेन्न यथान्यायं स तत्तस्य फलं हरेत् ॥
प्रमादाद्विस्मृतं ज्ञात्वा प्रसाद्यैनं प्रयत्नतः ।
तर्पयित्वा विशेषेण सर्वं तत्फलमाप्नुयात् ॥

गौतमः—'सद्यः श्राद्धी शूद्रातल्पगस्तत्पुरीषे मासं नयते पितॄन्' श्राद्धं करिष्यमाणं कृतं वास्य विद्यते इति श्राद्धी दाता सद्यस्तत्क्षणमारभ्य । एते च नियमा आवश्यकाः । तदुक्तमग्निपुराणे—

अमैथुनादयः सर्वे नियमाः श्राद्धकारिणा ।
अप्रमत्तेन कर्तव्याः प्रमाद्य निरयं व्रजेत् ॥

अशक्तावन्येन क्रियमाणे श्राद्धे उभाभ्यामपि कर्तव्याः इत्युक्तं वाराहपुराणे—

न शक्नोति स्वयं कर्तुं यथा ह्यनवकाशतः ।
श्राद्धं पुत्रेण शिष्येण तदान्येनापि कारयेत् ॥
नियमानाचरेत्सोऽपि विहितांश्च वसुन्धरे ।
यजमानोऽपि तान् सर्वानाचरेत्सुसमाहितः ॥
ब्रह्मचर्यादिभिर्भूमे नियमैः श्राद्धमक्षयम् ।
अन्यथा क्रियमाणं तु मोघमेव न संशयः । इति ॥

कात्यायनः—अनिन्द्येनामन्त्रितो नापक्रामेत् । अनिन्द्येन भोज्यान्नेन निमन्त्रितो निमन्त्र्यमाणः नापक्रमेत् न नेच्छेत् । किन्त्वभ्युपगच्छेदेव । तथा च शतपथे—'तस्मादु हानिन्द्यस्य वृतो नापक्रामेत्' इति । गौतमः—'अनिन्द्येनामन्त्रिते शक्तेन न प्रत्याख्यानं कर्तव्यम्' इति । अनेनार्थान्निन्द्यामंत्रणे भोक्तुमसामर्थ्ये च प्रत्याख्येयमिति गम्यते । षड्त्रिंशन्मते—

विद्यमानधनो विद्वान् भोज्यान्नेन निमन्त्रितः ।
कथंचिदप्यतिक्रामन्पापः शूकरतां व्रजेत् ॥

अनेन निर्धनस्य बहुदक्षिणादिलाभलोभात्कदाचिदतिक्रमे न दोष इति गम्यते । कात्यायनः—आमन्त्रितोऽन्यदन्नं न प्रतिगृह्णीयात्' । 'अन्यदीयश्राद्धोपक्लृप्तं तण्डुलादिरूपमप्यन्नं न प्रतिगृह्णीयात्' इति कर्कः । श्राद्धीयव्यतिरिक्तस्यापि निषेध इत्यन्ये ।

यमः—अहिंसा सत्यमक्रोधो दूरे च गमनक्रिया ।
अभारोद्वहनं क्षान्तिः श्राद्धस्योपासने विधिः ॥

दूरे सीम्नः परस्तात् । तथाच ब्रह्माण्डपुराणे—
न सीमानमतिक्रामेच्छ्राद्धार्थं वै निमन्त्रितः ।
पर्यटन् सीममध्ये तु न कदाचित्प्रदुष्यति ॥

यमः— पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् ।
सन्ध्यां प्रतिग्रहं होमं श्राद्धभुग्वर्जयेत्सदा ॥

'होममन्येन कारयेत्' इत्याह कात्यायनः—
सूतके च प्रवासे च अशक्तौ श्राद्धभोजने ॥
एवमादिनिमित्तेषु हावयेदिति योजयेत् ।

अन्यस्य होतुरलाभे भविष्यत्पुराण उक्तम्—
दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग्द्विजः ।
ततः सन्ध्यामुपासीत जपेच्च जुहुयादपि ॥

मण्डलमुक्तं मत्स्यपुराणे—
भवनस्याग्रतो भुवि गोमयेनानुलिप्तायां गोमूत्रेण तु मण्डले । इति । लिप्तायामिति सामान्यतः सर्वकर्माङ्गतया प्राप्तमनूद्यते । गोमूत्रसहितेन गोमयेन मण्डले कार्ये इति शेषः । शम्भुः—
उदक्प्लवमुदीच्यं स्याद्दक्षिणं दक्षिणाप्लवम् ॥ इति ।

मण्डलमिति शेषः । तत्र 'उदीच्यमुदक्प्लवं दैवं, दक्षिणं दक्षिणाप्लवं पित्र्यम' इति व्यवस्था । बौधायनः—
प्रदक्षिणं तु देवानां पितॄणामप्रदक्षिणम् ।
देवानामृजवो दर्भाः पितॄणां द्विगुणाः स्मृताः ॥ इति ।

शातातपः—
उदङ्मुखस्तु देवानां पितॄणां दक्षिणामुखः ॥

कात्यायनः—
दक्षिणं पातयेज्जानुं देवान्परिचरन्सदा ।
पातयेदितरज्जानुं पितॄन्परिचरन्सदा ॥ इति ।

मण्डलयोर्विशेषमाह शम्भुः—
उत्तरेऽक्षतसंयुक्तान् पूर्वाग्रान्विन्यसेत्कुशान् ।
दक्षिणे दक्षिणाग्रांस्तु सतिलान्विन्यसेद्बुधः ॥ इति ।

मात्स्ये—

नाम गोत्रं पितॄणां तु प्रापकं हव्यकव्ययोः ।। इति ।

तथा— पाद्यं चैव तथा चार्घ्यं दैवमादौ प्रयोजयेत् ।।

शन्नो देवीति मन्त्रेण पाद्यं चैव प्रदापयेत् ।।

आदित्यपुराणे—

विप्रौ तु प्राङ्मुखौ तेभ्यो द्वौ तु पूर्वं निवेशयेत् ।

उत्तराभिमुखान् विप्रान् त्रीन् पितृभ्यश्च सर्वदा ।। इति ।

सुमन्तुः—

दर्भपाणिर्द्विराचम्य लघुवासा जितेन्द्रियः ।

परिश्रिते शुचौ देशे गोमयेनोपलेपिते ।।

दक्षिणाप्रवणे सम्यगाचान्तान्प्रयतान् शुचीन् ।

आसनेषु सदर्भेषु विविक्तेषूपवेशयेत् ।।

मरीचिः—

तथा मातामहश्राद्धं वैश्वदेवसमन्वितम् ।

कुर्वीत भक्तिसंपन्नस्तत्रं वा वैश्वदेविकम् ।। इति ।

अत्र पितृमातामहपार्वणयोरेकः प्रयोगः पृथग्वा, इति पक्षद्वयम् । आद्यपक्षे वैश्वदेविकतन्त्रता, द्वितीय आवृत्तिः, इति माधवादयः । उपवेशनोत्तरं विप्राणां धर्मानाह भृगुः—

आमन्त्रितो जपेद्दोग्ध्रीमासीनस्तु निषङ्गिणः ।

भुक्त्वा तु वामदेव्यं च श्राद्धभोक्ता न दुष्यति ।।

आसीन आसन उपवेशितः । दोग्ध्रीम् 'उपह्वये सुदुघाम्' इति 'हिङ्कृण्वती' इति वा । यत्तु हेमाद्रिः—'आब्रह्मन्ब्राह्मण' इत्यादीनि यजूंष्यपि दोहनपदोपेतानि जपेत्' इति । तन्न । स्त्रीलिङ्गनिर्देशेन ऋच उपादानात् । साऽप्येका काचित् । एकवचनात् । निषङ्गिणस्तु त्रयः । यजूंष्यपि तत्र जप्यानि । निषङ्गिणः 'इन्द्रदृह्ययाम' इति । 'स इषुहस्तैः' इति च ऋक् । 'नमः कृत्स्नवीताय' 'नमोवञ्चते' इत्यादीनि च । गोभिलः—

आमन्त्रितो जपेद्दोहां नियुक्तस्त्वृषभान् जपेत् ।

अनिषङ्गांश्च तत्रैव जप्त्वाऽश्नीयाद्द्विजोत्तमः ।।

ऋषभानि षडङ्गादीनि छन्दोगेषु प्रसिद्धानि । मरीचिः—

पवित्रपाणयः सर्वे ते च मौनव्रतान्विताः ।। इति ।

यमः—ब्रह्मोद्याश्च कथाः कुर्युः पितणामेतदीप्सितम् ॥ इति ।

स एव—

भिक्षुश्च ब्रह्मचारी च भोजनार्थमुपस्थितः ।
उपविष्टेष्वथ प्राप्तः कामं तमपि भोजयेत् ॥ इति ।

विप्रोपवेशनोत्तरकृत्यं पुराणे—

श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं जनार्दनम् ।
ताभ्यां चैव नमस्कृत्य ततः श्राद्धं प्रवर्तयेत् ॥

'वस्वादींश्च पितॄन् ध्यात्वा' इति वा तृतीयः पादः । तथा—

उभौ हस्तौ समौ कृत्वा जानुभ्यामन्तरा स्थितौ ।
स प्रयतश्चोपविष्टान् सर्वान्पृच्छेद्द्विजोत्तमान् ॥

श्राद्धं करिष्ये इति पृच्छेदित्यर्थः । ततो विप्राः 'कुरुष्व' इत्यभ्यनुज्ञां ब्रूयुः । एतदनन्तरकृत्यं ब्रह्माण्डपुराणे—

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वधायै स्वाहायै नित्यमेव नमो नमः ॥
आद्येऽवसाने श्राद्धस्य त्रिरावृत्तं जपेत्सदा । इति ।

अयं च जपः सङ्कल्पोत्तरमाज्ञादानोत्तरं वा कार्यः । शिष्टास्त्वाज्ञोत्तरमेव कुर्वन्ति । ततः कर्तव्यं निगमे—'अपहता' इति तिलान् विकिरेदिति । एतच्च विकिरणं जपात्प्राक्कार्यमिति केचित् । अनन्तरकृत्यमाह याज्ञवल्क्यः—

पाणिप्रक्षालनं कृत्वा विष्टरार्थान् कुशानपि ॥ इति ।

पुराणे—

आसने चासनं दद्याद्वामे वा दक्षिणेऽपि वा ।
पितृकर्मणि वामे वै दैवे कर्मणि दक्षिणे ॥

दैवे दर्भाः सयवाः । 'देवानां सयवा दर्भाः' इति काठकोक्तेः । ततः सधर्मकं द्वितीयनिमन्त्रणमुक्तं संग्रहे—ततः पुनरपो दत्वा निमन्त्रयेत् 'दैवे क्षणः क्रियतां' ततः 'तथा' इति विप्रो ब्रूयात् । 'प्राप्नोतु भवान्' इति कर्ता पुनर्ब्रूयात् । 'प्राप्नवानि' इति विप्रः पुनर्ब्रूयात् । अत्र विशेषः पुराणे—

निरङ्गुष्ठं गृहीत्वा तु विश्वान्देवान् समाह्वयेत् ॥

'गृहीत्वा' इत्यस्यानन्तरं 'निमन्त्र्य' इति शेषः, इति माधवः । आवाहने विशेषमाह यमः—

यवहस्तस्ततो देवान् पृष्ट्वाऽप्यावाहनं प्रति ।

आवाहयेदनुज्ञातो विश्वेदेवास इत्यृचा ।
विश्वेदेवाः शृणुतेति मन्त्रं जप्त्वा ततोऽक्षतान् ॥
ओषधय इति मन्त्रेण विकिरेत्तु प्रदक्षिणम् ।

पादादिमस्तकान्तमक्षतानारोपयेदित्यर्थ इति माधवः ।

अत्र श्राद्धभेदेन विश्वेदेवव्यवस्थामाह शङ्खः—

इष्टिश्राद्धे क्रतुर्दक्षः संकीर्त्यौ वैश्वदेविके ।
नान्दीमुखे सत्यवसू काम्ये च धुरिलोचनौ ॥
पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ ।
नैमित्तिके कामकालावेवं सर्वत्र कीर्तयेत् ॥ इति ।

धुरिरोचनाविति क्वचित्पाठः । अत्रेष्टिश्राद्धशब्देन पारिभाषिकं कर्माङ्गश्राद्धमुच्यते । तदाह पारस्करः—

निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम् ॥ इति ।

निषेको गर्भाधानम् । तथा च 'आधानसोमयागनिषेकादित्रयसंस्कारादिभूतश्राद्धे क्रतुदक्षौ' इति हेमाद्रिमाधवौ । अत्र भ्रातृचरणाः, 'इष्टिश्राद्धशब्देन कर्माङ्गश्राद्धग्रहणे प्रमाणाभावाद्वाक्यसाफल्याय भाष्यकारमते पावमानेष्टीनां समप्राधान्यपक्षे आधानाङ्गमेव श्राद्धं गृह्यते । तस्यापि कथंचिदिष्टिजन्याहवनीयादिप्रयोज्यत्वेनेष्टिश्राद्धत्वात् । यद्वा, प्रयोगपारिजाते—

यस्य जाताः प्रमीयेरन् पुत्रा नैव भवन्ति वा ।
ऋतुकाले दिने षष्ठे दम्पती समलङ्कृतौ ॥
कृत्वाऽभ्युदयिकं श्राद्धं स्वस्तिवाचनपूर्वकम् ॥

इत्यादिना विहितपुत्रकामेष्ट्यङ्गभूतं श्राद्धं गृह्यते । अस्मिन्पक्षे आधानाङ्गश्राद्धे नान्दीमुखवत्सत्यवसू एव विश्वेदेवाः' इति युक्तमुत्पश्यन्ति । नैमित्तिकं च नवान्नलाभनिमित्तकम् । 'नवान्नलाभे द्वौ देवौ कामकालौ सदैव हि' इत्यादित्यपुराणीयेनोपसंहारात् । तेन 'नवान्नलाभः' इति निमित्ताधिकारक्रियमाणराहूपरागादीनामुपलक्षणम्' इति हेमाद्रिमतं निरस्तम् । 'पितृभक्त्या नवान्नभोजनात्पूर्वं क्रियमाणं नैमित्तिकम्' इति तु स्मृतिचन्द्रिकायाम्—

'एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते' इति परिभाषितत्वेऽपि

तस्य देवहीनत्वान्न ग्रहणम्। अत एव सपिण्डीकरणश्राद्धस्यैकोद्दिष्टपार्वणोभयरूपत्वेन विश्वदेवसत्वात्तद्ग्रहणमिति केचित्। एकोद्दिष्टस्थाने पार्वणरूपेण क्रियमाणं सांवत्सरिकमित्यपि केचित्। पितृपक्षचतुर्दश्यामेकोद्दिष्टे विश्वदेवसत्वात्तस्य ग्रहणमिति तु युक्तं प्रतिभाति। आदित्यपुराणे—

अपि कन्यागते सूर्ये काम्ये च धुरिलोचनौ।

'कन्यागतसूर्यं निमित्तीकृत्य विहिते भाद्रपदापरपक्षे' इति हेमाद्रिः। कन्यासङ्क्रान्तिनिमित्तके एवेति युक्तम्। आसनदानोत्तरं चार्घपात्रासादनं कार्यम्। तदाह याज्ञवल्क्यः—

यवैरन्ववकीर्याथ भाजने सपवित्रके।
शन्नोदेव्या पयः क्षिप्त्वा यवोऽसीति यवांस्तथा॥ इति।

मात्स्ये—

विश्वान्देवान् यवैः पुष्पैरभ्यर्च्यासनपूर्वकम्।
पूरयेत्पात्रयुग्मं तु स्थाप्य दर्भपवित्रके॥ इति।

अर्घ्यदानमधिकृत्य कात्यायनः—'सौवर्णराजतौदुंबरखड्गमणिमयानां पात्राणामन्यतमेषु यानि वा विद्यन्ते पत्रपुटके वा' इति। यानि कांस्यादीनि। अत्र राजतं पित्र्य एव न दैवे—

शिवनेत्रोद्भवं यस्मादतस्तत्पितृवल्लभम्।
अमङ्गलं तद्यत्नेन देवकार्येषु वर्जितम्।

इति स्मृतेः। प्रतिपात्रं च पवित्रद्वयं स्थाप्यम्। तथाच चतुर्विंशतिमते—

द्वे द्वे शलाके देवानां पात्रे कृत्वा पयः क्षिपेत्॥

योगयाज्ञवल्क्यः—

पवित्रे स्थ इति मन्त्रेण द्वे पवित्रे च कारयेत्।

गार्ग्यः—'स्वाहेति चैव देवानाम्' इति। 'अर्घ्यपात्रस्थापनेऽसौ मन्त्रो न तु दाने' इति माधवः। स एव—

दत्त्वा हस्ते पवित्रं तु संपूज्यार्घ्यं विनिक्षिपेत्॥ इति।

याज्ञवल्क्यः—या दिव्या इति मन्त्रेण हस्तेष्वर्घ्यं विनिक्षिपेत्। इति।

अर्घ्यदानोत्तरकृत्यमाह स एव—

दत्त्वोदकं गन्धमाल्यं धूपदानं सदीपकम्।

अत्र 'गन्धादिग्रहणं वाससोऽप्युपलक्षणम्' इति माधवादयः।

एवमासनादीन्वासोन्तान् वैश्वदेविकपदार्थान् काण्डानुसमयेन कृत्वा पित्र्येऽपि तथैव तान् कुर्यात् । तथा च याज्ञवल्क्यः—

अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम् । इति ।

अत्र 'ततः' इत्यनेन वैश्वदेविकपदार्थकाण्डोत्तरं पित्रर्चनविधानात् काण्डानुसमयो गम्यते' इति माधवविज्ञानेश्वरादयः । आसनादिदानेतिकर्तव्यतामाह स एव—

द्विगुणांस्तु कुशान्दत्वा ह्युशंतस्त्वेत्यृचा पितॄन् ।
आवाह्य तदनुज्ञातो जपेदायन्तु नस्ततः ॥

पूर्वमनन्तरं चाऽऽपो देयाः । 'अपः प्रदाय दर्भान् द्विगुणभुग्नान् । आसनं प्रदाय अपः प्रदाय'इत्याश्वलायनोक्तेः । कुशैः सह तिला अपि देयाः । तथाच काठके 'पितॄणां द्विगुणांस्तिलैः' इति । सहार्थे तिलैरिति तृतीया । आवाहने तिलविकरणे विशेषमाह प्रचेताः—

शिरःप्रभृति पादान्तं नमो व इति पैतृके । इति ॥

चतुर्विंशतिमते च—

अर्घ्यपात्रं विधायैवं ब्राह्मणान् पूजयेत्ततः ।
विश्वान्देवांस्तु पादादि शिरआदि पितामहान् ॥ इति ।

जपानन्तरं विशेषः पुराणे—

जपेदायन्तु न इति मन्त्रं सम्यगशेषतः ।
रक्षार्थं पितृसत्रस्य त्रिःकृत्वः सर्वतो दिशम् ॥
तिलांस्तु प्रक्षिपेन्मन्त्रमुच्चार्यापहता इति ॥

अर्घ्यदानाद्याह याज्ञवल्क्यः—

यवार्थास्तु तिलैः कार्याः कुर्यादर्घ्यादि पूर्ववत् ।
दत्वाऽर्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः ॥
पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यथ । इति ।

अर्घ्यपात्राणामासादनप्रकारमाह विष्णुः—' दक्षिणाग्रेषु दक्षिणापवर्गेषु चमसेषु त्रिष्वप आसिञ्चेच्छन्नो देवीः' इति । अर्घ्यपात्रेषु पवित्रान्तर्हितेषु जलं प्रक्षिप्य तत्र तिला मन्त्रेण प्रक्षेप्याः । तथाचाऽऽश्वलायनः—' पात्रेषु दर्भान्तर्हितेषु अपः प्रदाय शन्नोदेवीरभिष्टय इति मन्त्रितासु तिलानावपति । तिलोऽसि सोमदेवत्यो गोसवे देवनिर्मितः । प्रत्नवद्भिः प्रत्तः स्वधया पितॄनिमाँल्लोकान् प्रीणयाहि नः स्वधा नमः ' इति । ' अस्मादेव सूत्रात् 'शंनो' इति मन्त्रोऽभिमन्त्रण एवाऽऽश्वलायनीयानाम् ।

अन्येषां तु जलप्रक्षेपे करणम् । अर्घ्यपात्राणि पितृसङ्ख्ययैव न तु विप्रसङ्ख्यया । तेन पित्रादीनामेकैकस्यानेकविप्रपक्षेऽपि त्रीण्येवार्घ्यपात्राणि ।

स्तीर्त्वा पितॄणां त्रीण्येव कुर्यात्पात्राणि धर्मवित् ।
एकस्मिन्वा बहुषु वा ब्राह्मणेषु यथाविधि ।

इति बैजवापोक्तेः । स्तीर्त्वा, कुशानास्तीर्येत्यर्थः । अर्घ्यपवित्राणि कार्याणि । 'तिस्रस्तिस्रः शलाकाः स्युः पितृपात्रेषु पार्वणे' इति चतुर्विंशतिमतात् । ब्रह्मपुराणे—'अर्घ्याः पुष्पैश्च गन्धैश्च ताः प्रपूज्याश्च मन्त्रवित्' इति । अर्घ्या आपः । अर्घ्यदानप्रकारमाहाश्वलायनः—'ताः प्रतिग्राहयिष्यन्स्वधाऽर्घ्या इति ता आपो ब्राह्मणहस्तेषूदकपूर्वकं दर्भान् प्रदायोदकपूर्वमर्घ्यं दद्यात्' इति । 'यादिव्या' इत्युक्त्वाऽसावेतत्तेऽर्घ्योदकमिति अप उपस्पृश्यैवमेवेतरयोः' इति । याज्ञवल्क्यः—'दत्वार्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः । पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोत्यथ' इति । एवं विप्रहस्तेष्वर्घ्यं दत्त्वा तेभ्यो हस्तेभ्यः पात्रान्तरेषु च्युतान् तान्संस्रवान् प्रथमेऽर्घ्यपात्रे गृहीत्वा तत्पात्रं न्युब्जमधोमुखं 'पितृभ्यः स्थानमसि' इति मन्त्रेण कृत्वा तथैव स्थापयेदित्यर्थः' श्रीदत्तस्तु 'संस्रवत्यस्मादिति व्युत्पत्त्या पात्रस्थानामपां ग्रहणम् । इत्याह । अत्राचाराद्व्यवस्था । न्युब्जपात्रस्थापनानन्तरं विशेषमाह बैजवापः—

तस्योपरि कुशान्दत्वा प्रदद्याद्दैवपूर्वकम् ।
गन्धपुष्पाणि धूपं च दीपं वस्त्रोपवीतकम् ॥ इति ।

व्यासः—

सपवित्रकरो गन्धैर्गन्धद्वारेति पूजयेत् ।
धूपं तु धूरसीत्युक्त्वा दीपो ज्योतिरिदं च ते ॥

यत्तु,—

ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे माल्यं तथैव च ।
निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपतिम् ॥ इति ।

तद्वर्तुलाभिप्रायमिति हेमाद्रिः । माल्यमपि शिखायां धार्यं न स्कन्धे । विष्णुः—

घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः ॥

अत्रिः—'युवंवस्त्राणीत्यनेन दद्याद्वासांसि शक्तितः' । शातातपः—'युवासुवासा इति वस्त्रं दद्यादभावे यज्ञोपवीतम्' इति । अत्र दैव-

पूर्वकमित्यनेन गन्धादीनां दैवे पित्र्ये च पदार्थानुसमयेनानुष्ठानं गम्यते। 'आसनादीनामाच्छादनान्तानां सर्वेषामेव पदार्थानुसमयः काण्डानुसमयो वा' इत्युक्तं स्मृत्यर्थसारे माधवीये च।

## अथाग्नौकरणम्।

याज्ञवल्क्यः—

अग्नौ करिष्यन्नादाय पृच्छेदन्नं घृतप्लुतम्।
कुरुष्वेत्यभ्यनुज्ञातो हुत्वाऽग्नौ पितृयज्ञवत्॥

घृतपदेन शाकादिपरिसङ्ख्येति विज्ञानेश्वरः। 'पितृयज्ञवत्' इत्यनेन अग्निमुपसमाधाय चरुं श्रपयित्वा मेक्षणेनाऽवदाय 'सोमाय पितृमते स्वधा नमोऽग्नये कव्यवाहनाय स्वधा नमः' इति हुत्वा मेक्षणं च जुहुयादित्येतावदतिदिश्यते। ततः शेषमन्नं पितृपात्रेषु दद्यान्न तु वैश्वदेवपात्रेषु 'रौप्येषु' इत्युक्तत्वात्। अत्रामावास्याश्राद्धे साग्नेर्दर्शयागार्थविहृतदक्षिणाग्निसद्भावात्तत्रैवाग्नौकरणम्। अन्यश्राद्धेषु तदर्द्धाधानिनः केवलस्मार्ताग्निमतश्चौपासने। तथा च विष्णुधर्मोत्तरे—

आहिताग्निस्तु जुहुयाद्दक्षिणेऽग्नौ समाहितः।
अनाहिताग्निश्चौपसदे अग्न्यभावे द्विजेऽप्सु वा॥ इति।

आहिताग्निः सर्वाधानी, औपसदो गृह्याग्निः। कात्यायनः—

अग्नौकरणहोमं तु कुर्यादप्स्विति यन्मतम्।
स यदाऽपां समीपे स्याच्छ्राद्धे ज्ञेयो विधिस्तदा॥ इति।

केचित्तु श्राद्धस्य गृह्यत्वात् 'कर्म स्मार्तं विवाहाग्नौ' इत्युपदेशेन पितृयज्ञवदित्यतिदेशबाधाद्दक्षिणाग्निसद्भावेऽप्यौपासन एव' इत्याहुः। तन्न। उपदेशस्यौपासनहोमादिषु सावकाशतया विरोधाभावेनान्यगतिकबाधस्यान्याय्यत्वात्। वाचनिकातिदेशस्योपदेशस्य तुल्यत्वाच्च। अपरार्कस्तु—'पितृयज्ञवत्' इत्यतिदेशसामान्यवचनं कर्म स्मार्तमित्युपदेशसामान्यवचनानुरोधेन दक्षिणाग्निव्यतिरिक्तप्राकृतपदार्थविषयम्। अतोऽर्धाधानेन गृह्यसद्भावे तत्र होमः। अभावे तु दक्षिणाग्नौ। तथाच वायुपुराणे—

आहृत्य दक्षिणाग्निं तु होमार्थं वै प्रयत्नतः।
अग्न्यर्थं लौकिके वाऽपि जुहुयात्कर्मसिद्धये॥ इति।

अत्राग्न्यर्थमित्यनेन गृह्याग्निकार्ये दक्षिणाग्निविधानेन गृह्याभावे

दक्षिणाग्निर्बोध्य इति । तन्न । कार्ये विधौ फलचमसेनेव सोमस्य शरैरिवं च कुशानां गृह्याऽग्निसत्वेऽपि दक्षिणाग्निना तद्वाधस्यैवोचितत्वात् । वस्तुतस्तु 'अग्न्यर्थमित्यनेनैकवाक्योपात्तदक्षिणाग्निकार्य एव लौकिको विधीयते इति युक्तम् । यदपि 'स्मार्तं कर्म विवाहाग्नौ' इत्यस्यावाधाय 'आहिताग्निस्तु जुहुयात्' इति वचनं सर्वाधानेन गृह्याग्न्यभावे दक्षिणाग्निविधानपरमिति तदप्ययुक्तम् । विशेषविषयेऽपवादविषये वोत्सर्गशास्त्रस्याप्रवृत्तेः । लौकिकपदेन गृह्याग्निरेव । 'न पैतृयज्ञियो होमो लौकिकेऽग्नौ विधीयते'इत्यसंस्कृतस्य निषिद्धत्वादिति हेमाद्रिः । तन्न । पैतृयज्ञियपदस्य पिण्डपितृयज्ञाङ्गभूताग्नौकरणहोमपरत्वात् । तत्र चेदं न्यायप्राप्तस्याग्निप्रतिनिध्यभावस्यानुवादकं, वायुपुराणादिवचनप्राप्तस्य निषेधकं वा । अनग्निकस्य सर्वाधानिनश्चासंस्कृते लौकिक एव । 'हस्तेऽग्नौकरणं कुर्यादग्नौ वा साग्निको द्विजः' इति पराशरवचनादिति वृत्तिकारादयः । परे त्वेतद्वचनमग्न्यसन्निधानपरमित्याहुः । यत्तु धूर्तस्वामी आपस्तम्बानां मासिश्राद्धस्यापूर्वत्वेन पितृयज्ञाद्दक्षिणाग्नेरप्राप्तत्वात्स्मार्तस्य वाऽभावेन सर्वाधानिनोऽधिकरणाभावाद्धोमलोप इति । तन्न । पितृयज्ञधर्मकत्वाभावेऽपि स्मृतिवचनेन दक्षिणाग्नेः पाणिलौकिकाग्न्यादेश्च प्राप्तिसंभवात् । आश्वलायनानाम् ,

> 'अन्वष्टक्यं च पूर्वेद्युर्मासि मास्यथ पार्वणम् ।
> काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम् ॥
> चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते ।
> पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि ॥

इति परिशिष्टाद्विहृतदक्षिणाग्न्यभावे विहृत्य होमः कार्यः, इति हेमाद्रिः । अनेनैव न्यायेन सर्वश्राद्धेषु दक्षिणाग्निविहरणं कर्तव्यमिति युक्तमुत्पश्यामः । मनुः—

> अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत् ।
> यो ह्यग्निः स द्विजो विप्रैर्मन्त्रदर्शिभिरुच्यते ॥

अत्राभावो भार्यापरिग्रहाभावेन तदुत्तरकालिकाग्निस्वीकाराभावेन स्वीकृतो च्छेदेन अग्न्यसन्निधानेन च । केचित्तु भार्यापरिग्रहाभावेनैव' इति वदन्ति—

> अग्न्यभावे तु विप्रस्य पाणौ दद्यात्तु दक्षिणे ।
> अग्न्यभावः स्मृतस्तावद्यावद्भार्या न विन्दति ॥

इति गार्ग्योक्तेः। संभवत्येवाग्निसम्बन्धेऽप्यभाव इति वक्तुं शक्यमिति मत्वा साग्नेरेव कदाचिदग्न्यसन्निधाने पाणिविधिः, इति जयन्तस्वामी। शूद्रस्यामश्राद्धे 'तेनाग्नौकरणं कुर्यात्' इत्यनेनाग्नौकरणविधानात्तं प्रत्येवाग्न्यभावे पाणिविधिरिति केचित्। वस्तुतस्तु 'पाणावेव' इत्येवकारेण यल्लौकिकाग्निजलाद्यधिकरणान्तरनिराकरणं तद्भार्यापरिग्रहाभावकृतेऽग्न्यभावे नान्यस्मिन्, अन्यत्र तु पाणिरपीति गार्ग्यवचनार्थः। विप्रश्चाऽग्नेय्यधिकरणन्यायेन प्रकृत एव। काश्यपः—

अनग्निको यदा विप्रः श्राद्धं कुर्यात्तु पार्वणम्।
अग्नौकरणवत्तत्र होमो देवकरे भवेत्॥

'उपवीतस्वाहाकारादिदैविकधर्मेण जुह्वतामिदम्' इति हेमाद्रिः। देवस्य कर इति समासः। विवक्षितैकवचनत्वादेकस्यैव। तदुक्तं वायुपुराणे—

वैश्वदेवे यदैकस्मिन् भवेयुर्बहवो द्विजाः।
तदैकपाणौ होतव्यं स्याद्विधिर्विहितस्तथा॥

स्वधाकारादिपित्र्यधर्मिणां तु कात्यायनः—

पित्र्ये यः पङ्क्तिमूर्द्धन्यस्तस्य पाणावनग्निकः।
हुत्वा मन्त्रवदन्येषां तूष्णीं पात्रेषु निक्षिपेत्॥

यत्तु हेमाद्रौ—

अग्नौकरणवत्कुर्याद्द्विजातौ वैश्वदेविके।
पाणावेव तु तद्द्यान्न तु पित्र्ये कदाचन॥ इति।

तद्देवपाणिस्तुत्यर्थम्। अथवा दैवे कृत्वा न पुनः पित्र्ये कर्तव्यमित्येतदर्थम्। यत्र चामावास्याश्राद्धादिष्वनेकपार्वणतन्त्रता तत्र पार्वणान्तरसाद्गुण्यार्थं भेदेनानुष्ठानम्। ब्राह्मणैक्ये तु तन्त्रेणैव। दैवेऽप्येवमेव। तदाह कात्यायनः—

मातामहस्य भेदेऽपि कुर्यात्तन्त्रेण साग्निकः॥ इति।

मत्स्यपुराणे—

अग्न्यभावे तु विप्रस्य पाणावथ जलेऽपि वा।
अजकर्णेऽश्वकर्णे वा गोष्ठे वाथ शिवान्तिके॥

शङ्खः—अप्सु चैव कुशस्तम्बे अग्निं कात्यायनोऽब्रवीत्।
रजते च सुवर्णे च नित्यं वसति पावकः॥

सौरपुराणे—

महादेवस्य पुरतो गोष्ठे वा श्रद्धयाऽन्वितः ॥ इति ।

स्मृत्यर्थसारे तु—'पाणिहोमे इध्ममेक्षणविप्राभ्यनुज्ञा न सन्ति पित्र्यविप्रपाणिं परिसमूह्य पर्युक्ष्य वामेनोपस्तीर्य दक्षिणेनावदाय जुहुयात्' इति। कर्कस्मृतिचन्द्रिकाकारौ तु विप्रानुज्ञायां विरोधाभावात्, अनग्निश्चेदाज्यं गृहीत्वा भवत्स्वेवाग्नौकरणमिति पूर्ववत्तथास्तु इति शौनकोक्तेर्विप्रानुज्ञा ग्राह्या, मेक्षणमप्युपादेयमवदानरूपकार्यसत्वात् कार्येऽन्यस्य विध्यभावाच्च । परिसमूहनपर्युक्षणे तु न भवतः, पांशुनिरसनलक्षणदृष्टकार्यस्य लोपान्नियमादृष्टमात्रस्य चाप्रयोजकत्वात्, इति न्यायमाहतुः । हेमाद्रिस्तु मतद्वयमपि लिलेख न तु किञ्चिन्निर्णिनाय । पाणौ हुतस्य पृथग्भक्षणं निषेधन्ति गृह्यकाराः—

अन्नं पाणितले दत्तं पूर्वमश्नन्त्यबुद्धयः ।
पितरस्तेन तृप्यन्ति शेषान्नं न लभन्ति ते ॥
यच्च पाणितले दत्तं यच्चान्यदुपकल्पितम् ।
एकीभावेन भोक्तव्यं पृथग्भावो न विद्यते ॥ इति ।

स्मृत्यर्थसारे तु 'सर्वाधानी दक्षिणाग्नौ जुहुयाद्विप्रपाणौ वा' इति विकल्पमभिधाय पाणिहुतं तदैव प्राश्याऽऽचम्योपविशेत् । अथवा भाजने क्षिप्त्वाऽऽचम्योपविशेत् । विधुरादिभिरग्निहीनैर्हुतं पूर्वं नाश्नीयाद्भोजनकाले एव त्वश्नीयात् । त्यक्ताग्निहुतं तु नाश्नीयादिति ।

## अथ परिवेषणम् ।

परिवेषणं यथालाभं कार्यम् । तदुत्तरकृत्यमाह याज्ञवल्क्यः—

दत्वाऽन्नं पृथिवीपात्रमिति पात्राभिमन्त्रणम् ।
कृत्वेदं विष्णुरित्यन्ते द्विजाङ्गुष्ठं निवेशयेत् ॥

मनुः—'विष्णो हव्यं च कव्यं च ब्रूयाद्रक्षेति वै क्रमात्' ।

याज्ञवल्क्यः—

सव्याहृतिकां गायत्रीं मधुवाता इति तृचम् ।
जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ॥ इति

तथा—गायत्रीं त्रिः सकृद्वाऽपि जपेद्व्याहृतिपूर्विकाम् ।
मधुवाता इति तृचमध्वित्येतत्त्रिकं तथा ॥ इति ।

स्मृत्यन्तरे—

सङ्कल्प्य पितृदेवेभ्यः सावित्रीमधुमज्जपः ।

श्राद्धं निवेद्यापोशानं जुषप्रैषोऽथ भोजनम् ॥

## अथ भोजयितृनियमाः ।

याज्ञवल्क्यः—

अन्नमिष्टं हविष्यं च दद्यादक्रोधनोऽत्वरः ।

इष्टं ब्राह्मणानाम् । मनुः—

यद्यद्रोचेत विप्रेभ्यस्तत्तद्दद्यादमत्सरः ।
ब्रह्मोद्याश्च कथाः कुर्यात्पितॄणामेतदीप्सितम् ॥ इति ।

निगमः—

अपेक्षितं यो न दद्याच्छ्राद्धार्थमुपकल्पितम् ।
अधः कृच्छ्रातिकृच्छ्रासु तिर्यग्योनिषु गच्छति ॥

शङ्खः—श्राद्धे नियुक्तान् भुञ्जानान् न पृच्छेल्लवणादिषु ।
उच्छिष्टाः पितरो यान्ति पृच्छतो नात्र संशयः ॥
दातुः पतति बाहुर्वै जिव्हा भोक्तुस्तु भिद्यते ।

देवलः—

नाश्रु संपातयेच्छ्राद्धे न जल्पेन्न हसेन्मिथः ॥
न विभ्रंशेन्न संक्रुध्येन्नोद्विजेन्नात्र कुत्रचित् ।
प्राप्ते हि कारणे श्राद्धे नैव क्रोधं समुच्चरेत् ॥
आश्रितः खिन्नगात्रो वा न तिष्ठेत्पितृसन्निधौ ।

आश्रितस्तम्भभित्त्यादिषु निहितशरीरः । विष्णुः—

नान्नमासनमारोपयेन्न पदा स्पृशेन्नावक्षुतं कुर्यात् ।

आसनग्रहणमाधारोपलक्षणम् । ततश्चान्नपात्रमाधारोपरि न स्थापयेदित्यर्थः ।

## अथ यजमानजप्यानि ।

तत्र ऋग्वेदजप्यानि, शङ्खलिखितौ—'दर्भेष्वासीनो मधुवाता ऋचो जपेत्' अमुं च पाठमुपवीत्येव कुर्यात् । 'कुशपाणिः कुशासीन उपवीती जपेत्ततः' इति ब्रह्माण्डात् । मनुः—

स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैव हि ।
आख्यानानीतिहासांश्च पुराणानि खिलानि च ॥

आख्यानानि सौपर्णादीनि । पौराणानि च रामनलसावित्र्युपा-

ख्यानादीनि । इतिहासो महाभारतम् । खिलानि परिशिष्टानि श्रीसूक्तादीनि । श्रावणानुवृत्तौ मात्स्ये—

ब्रह्मविष्ण्वर्करुद्राणां स्तोत्राणि विविधानि च ॥ इति ।

श्रावणानुवृत्तौ निगमे—'राक्षोघ्नीः पावमानीरुदीरतामवरमध्वन्नवतीश्च मन्त्रान्द्वादशाष्टाक्षरप्रभृतीन्'। राक्षोघ्नीः 'कृणुष्व पाजः' इति पञ्चदश । 'रक्षोहणम्' इति पञ्चविंशतिः । 'इन्द्रासोमा तपतम्' इति पञ्चविंशतिः । 'अग्नेर्हंसिन्यत्रिणम्' इति नव । पावमान्यः 'पुनन्तु मापितरः' इत्याद्याः षोडशर्चः । 'तरत्समन्दीति वर्गः' । 'पवस्व विश्वचर्षणिः' इति द्वात्रिंशदृचः । 'त्वं सोमासि' इति द्वात्रिंशत् । 'उदीरतामवरः' इति चतुर्दश । अन्नवतीः 'पितुं नुस्तोषम्' इत्येकादश । हारीतः–'पुनन्तु मा पितर इति षोडश पावमानीर्जपेदादितस्त्रीन्'। षोडशानां मध्ये आद्यान् त्रीन् विशेषत इत्यर्थः । प्रचेताः—

यजूंषि चैव रुद्रांश्च राक्षोघ्नी ऋच एव च ।

रुद्रान् शतरुद्रियादीन् जपेदिति शेषः ।

शङ्खलिखितौ—'अप्रतिरथं मध्ये गायत्रीमनुश्राव्य' इति । अप्रतिरथम् 'आशुःशिशान' इति द्वादशर्चम्, सामविशेष इति भाष्ये । सौरपुराणे—

धर्मशास्त्रं पुराणानि तथाऽथर्वशिरस्तथा ।
ऐंद्रं च पौरुषं सूक्तं ब्राह्मणान् श्रावयेत्ततः ॥ इति ।

'सुरूपकृत्नुमूतये' इत्यादीनि त्रीणि सूक्तानि प्रत्येकं दशर्चानि । 'इन्द्रमिद्गाथिन' इत्यादीनि त्रीणि सूक्तान्यैन्द्राणि । मात्स्ये—

इन्द्रेशसोमसूक्तानि पावमानीश्च शक्तितः ॥ इति ।

ईशसूक्तानि रुद्रसूक्तानि स्पष्टानि । 'स्वादिष्ठया' इत्यादीनि चत्वारि सूक्तानि सौम्यानि । भविष्ये—

पावमान्यश्च कूष्माण्ड्यः शुद्धवत्यस्तरत्समाः ।
राक्षोघ्नानि च सूक्तानि पितृसूक्तान्यथापि वा ॥ इति ।

श्रावयेदिति शेषः ।

याज्ञवल्क्यः—

आ तृप्तेस्तु पवित्राणि जप्त्वा पूर्वं जपं ततः ॥ इति ।

पवित्राणि पुरुषसूक्तपवमानादीनि । पूर्वं जपः व्याहृतीगायत्री मधुवा-

ता इति तृचः मधुमध्वितित्रिः । तथा—'अग्निमीळे' इति नवर्चम् । 'वायवायाहि' इति च । 'अश्विनायज्वरीरिषः' इति द्वादशर्चम् । 'गायन्ति त्वा इति च । 'इंद्रं विश्वाः' इत्यष्टौ ऋचः । 'अस्य वामस्य' इति पञ्चाशदृचः । सांख्यायनीयास्तु 'अग्निमीळ' इत्यादीन्येकादश सूक्तानि । 'न वा उ देवा' इति नवर्चं पठन्ति, आचारादिति हेमाद्रिः ।

## अथ यजुर्वेदजप्यानि ।

हारीतः—'अत्र पितर इति यजुर्नमो वः पितर इति यजुः स्मान्तं मधुवाता इति तिस्रः पुनन्तु मा पितर इत्यनुवाकः । त्वं सोम प्रचिकित इति चैषा पित्र्या संहिता । एतां जपन् पितॄन् प्रीणाति' इति । मान्तं 'वसिष्ठा भूयास्म, इत्येतदन्तं यजुः । बौधायनः—

राक्षोघ्नानि च सामानि स्वधावन्ति यजूंषि च ।

राक्षोघ्नानि देवव्रताख्यानि । स्वधावन्ति 'पितृभ्यः स्वधा पितृभ्यः' इत्यादीनि । मात्स्ये—

तथैव शान्तिकाध्यायं मधुब्राह्मणमेव च ।
मण्डलब्राह्मणं तद्वत्प्रीतिकारि च यत्पुनः ॥
विप्राणामात्मनश्चापि तत्सर्वं समुदीरयेत् ।
भारताध्ययनं कार्यं पितॄणां परमं प्रियम् ॥

शान्तिकाध्यायः 'शन्नोवात' इत्यादिः । 'इयं पृथिवी' इत्यादि मधुब्राह्मणम् । 'यदेतन्मण्डलंतपति' इत्यादि मण्डलब्राह्मणम् । प्रीतिकारि, इतिहासाख्यानादि वीणावेणुध्वन्यादिकं वा । तथाच ब्राह्मे—

वीणावंशध्वनिं चाथ विप्रेभ्यः सन्निवेदयेत् ॥ इति ।

'अन्यान्यप्याचाराज्जप्यानि' इति हेमाद्रौ ।

## तत्र तैत्तिरीयाणां तावज्जप्यानि ।

'दिवो वा' इत्यादि 'विष्णव' इत्यन्तानि यजूंषि 'अग्नउदध' इत्यादि 'वन्यः पञ्चमः' इत्यन्तानि च । 'रक्षोहणो वलगहन' इत्यनुवाकः । 'इन्द्रो वृत्रं हत्वा' इत्यनुवाकः । वैश्वदेवेन वै प्रजापतिः' इत्याद्यनुवाकद्वयम् । 'अयं वा वयः पवत' इत्यनुवाकत्रयम्' । ऋचां प्राची' इत्यनुवाकः । 'अमृतोपस्तरणमसि' इत्याद्यनुवाकपञ्चकम् । 'ब्रह्ममेतु माम्' इत्यनुवाकत्रयम् । 'अणोरणीयान्' इत्यनुवाकः 'मेधां

म इन्द्रो ददातु' इत्यादयश्चत्वारोऽनुवाकाः। 'नकंचन' इत्यादि 'उपनिषत्' इत्यन्तं खण्डम्।

## अथ वाजसनेयिनां जप्यानि।

कात्यायनः—अश्नत्सु जपेद्व्याहृतिपूर्वां गायत्रीं सप्रणवां सकृत्त्रिर्वा राक्षोघ्नं पुरुषसूक्तमप्रतिरथं पितृमन्त्रानन्यानि च पवित्राणि।

## अथ मैत्रायणीयानाम्।

'इषे त्वा सुभूताय त्वा वायवस्थ देवो वः सविता' इत्यादयः पञ्चानुवाकाः।

## अथ कठानाम्।

'सोमाय पितृमते त्वाज्यं पितृभ्यो बर्हिषद्भ्यः' इत्याद्यनुवाकः। 'उशन्तस्त्वा हवामह' इत्याद्यनुवाकः। 'न प्राक्तिन्या पितृयज्ञः' इत्याद्यनुवाकः।

## अथ छन्दोगजप्यानि।

गोभिलः—अश्नत्सु जपेत् व्याहृतिपूर्वां सावित्रीं तस्यां चैव गायत्रीं पित्र्यां च संहितां मधुच्छन्दसं च स्वर्गे लोके महीयत इह चास्याक्षयं भवति'। वरतन्तुः—'प्राणायामपूर्वकं पञ्चसत्यान्तं कृत्वा गायत्रीं सप्रणवां सव्याहृतिं पठेत्' इति। 'ॐ भूः ॐ भुवः ॐ स्वः ॐ तपः ॐ सत्यं इति पञ्चसत्यान्तं कृत्वा। 'ॐ भूर्भुवः स्वः' इति सप्रणवव्याहृतिकां गायत्रीं जपेदित्यर्थः। मात्स्ये—'बृहद्रथन्तरं तद्वज्ज्येष्ठसाम सरौरवम्'। जपेदिति शेषः। गायत्रं बृहद्रथन्तरादीनि छन्दोगानां प्रसिद्धानि। प्रचेताः—'पुरुषव्रतानि ज्येष्ठसामानि विविधानि च'। पुरुषव्रतानि पुरुषसूक्तगीयमानानि पञ्च सामानि। ब्रह्माण्डे—

> आदित्यब्रह्मणोश्चैव विष्णो रुद्रस्य चैव हि।
> सामानि श्रावयेच्छ्राद्धे तथाऽन्यान्यपि भूरिशः॥

आदित्यसामान्यादित्यव्रताख्यान्येकविंशतिः। ब्रह्मसाम 'ब्रह्मजज्ञानं प्रथमम्' इतिप्रस्तावम्। विष्णुरुद्रयोः सामनी छन्दोगानां पुष्पग्रन्थे प्रसिद्धे। कौथुमशाखीयैः 'यद्वाउपविश्यति' इत्यादीनि पञ्चदश सामानि 'असौ वा आदित्य' इत्यध्यायश्च श्रावणीयः। राणायनीयैर्महानाम्नीसाम शिष्टाचाराच्छ्रावणीयम्' इति हेमाद्रिः। अथर्ववेदिनां तु,

'आइन्द्रस्य बाहुः' इत्यप्रतिरथं सूक्तं 'प्राणाय नमः' इत्यादीनि त्रीणि सूक्तानि। 'सहस्रबाहुः पुरुषः' इति पुरुषसूक्तम्। 'कालो अश्वो वहतु सप्तरश्मिः' इति कालसूक्तम्। उपनिषदमध्यात्मम्। प्राणाग्निहोत्रसहोपनिषदम्। एतत्सर्वासंभवे तु मात्स्ये—'अभावे सर्वविद्यानां गायत्रीजपमारभेत्' इति। अथ पौराणजप्यानि। विष्णुधर्मोत्तरे—

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च।
नमः स्वाहायै स्वधायै नित्यमेव नमो नमः॥
आद्यावसाने श्राद्धस्य त्रिरावृत्तं जपेत्सदा।
तथा—पिण्डनिर्वपणे वाऽपि जपेदेनं समाहितः॥
पितरस्तृप्तिमायान्ति राक्षसाः प्रद्रवन्ति च।

गारुडे—

यो विष्णुहृदयं मन्त्रं श्राद्धेषु नियतः पठेत्।
पितरस्तर्पितास्तेन पयसा च घृतेन च॥
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु॥
यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु।
न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम्॥
आदिमध्यावसानेषु श्राद्धस्य नियतः शुचिः।
जप्यं विष्णुहृदयं मन्त्रं विष्णुलोकं समश्नुते॥

चतुर्भिरिति शतपथे 'आश्रावय' इति चतुरक्षरम्। अस्तु श्रौषडिति चतुरक्षरम्। 'यज' इति द्व्यक्षरम्। येयजामहे इति पञ्चाक्षरम्। द्व्यक्षरो 'वषट्कारः एष सप्तदश प्रजापतिरधिदैवतम्' इति। विष्णुधर्मोत्तरे—

अमूर्तानां च मूर्तानां पितॄणां दीप्ततेजसाम्।
नमस्यामि सदा तेषां ध्यायिनां योगचक्षुषाम्॥

इत्यादिसप्तार्चिस्तोत्रजपोऽप्युक्तः।

## अथ भोक्तृनियमाः।

प्रचेताः—पीत्वाऽपोशानमश्नीयात्पात्रे दत्तं विगर्हितम्।
सर्वेन्द्रियाणां चापल्यं न कुर्यात्पाणिपादयोः॥
मनुः—अत्युष्णं सर्वमन्नं स्याद्भुञ्जीरंश्चैव वाग्यताः।
न च द्विजातयो ब्रूयुर्दात्रा पृष्टा हविर्गुणान्॥

दात्रेत्यविवक्षितम् । अत्रिः—

हुङ्कारेणापि यो ब्रूयाद्धस्ताद्वापि गुणान्वदेत् ।
भूतलाच्चोद्धरेत्पात्रं मुञ्चेद्धस्तेन वा पिबेत् ॥
प्रौढपादो बहिःकच्छो बहिर्जानुकरोऽथवा ।
अंगुष्ठेन विनाऽश्नाति मुखशब्देन वा पुनः ॥
पीत्वाऽवशिष्टतोयानि पुनरुद्धृत्य वा पिबेत् ।
खादितार्द्धं पुनः खादेन्मोदकानि फलानि वा ॥
मुखेन वा धमेदन्नं निष्ठीवेद्भोजनेऽपि वा ।
इत्थमश्नन् द्विजः श्राद्धं दत्त्वा गच्छत्यधोगतिम् ॥

बौधायनः—

पादेन पादमाक्रम्य यो भुङ्क्तेऽनापदि द्विजः ।
नैवासौ भोज्यते श्राद्धे निराशाः पितरो गताः ॥

शङ्खलिखितौ—'ब्राह्मणा अन्नं गुणदोषैर्नाभिवदेयुर्नानृतं ब्रूयुःअन्योन्यं न प्रशंसेयुः, अन्नपानं न प्रभूतमिति ब्रूयुरन्यत्र हस्तसंज्ञया । नाधिकं दद्यान्न प्रतिगृह्णीयात् । वृद्धशातातपः—

अपेक्षितं याचितव्यं श्राद्धार्थमुपकल्पितम् ।
न याचते द्विजो मूढः स भवेत्पितृघातकः ॥

यत्तु—कृच्छ्रद्वादशरात्रेण मुच्यते कर्मणस्ततः ।
तस्माद्विद्वान्नैव दद्यान्न याचेन्न च दापयेत् ॥

इति मनुवचनं तदनुकल्पितवस्तुविषयम् ।

मनुः—यद्वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते दक्षिणामुखः ।
सोपानत्कश्च यद्भुङ्क्ते तद्वै रक्षांसि भुञ्जते ॥

अत एव निषेधादनवकाशे दक्षिणेतरदिङ्मुखभोजनमनुमतमिति ज्ञायते । बह्वृचपरिशिष्टे—

यच्च पाणितले दत्तं यच्चान्नमुपकल्पितम् ।
एकीभावेन भोक्तव्यं पृथग्भावो न विद्यते ॥

पाणितले दत्तमग्नौकरणान्नम् । निगमः—

मांसापूपफलेक्ष्वादि दन्तछेदं न भक्षयेत् ।
ग्रासशेषं न पात्रं स्यात्पीतशेषं तु नो पिबेत् ॥

प्रमादादितरेतरस्पर्शे तु कर्तव्यमाह शङ्खः—

श्राद्धपङ्क्तौ तु भुञ्जानो ब्राह्मणो ब्राह्मणं स्पृशेत् ।

तदन्नमत्यजन् भुक्त्वा गायत्र्यष्टशतं जपेत् ॥

उशना—भोजनं तु न निःशेषं कुर्यात्प्राज्ञः कथंचन ।

अन्यत्र दध्नः क्षीराद्वा क्षौद्रात्सक्तुभ्य एव च ॥ इति ।

आश्वलायनः—'सृष्टदत्तमृध्नुकम्' इति । सृष्टं बहुतरम्' ऋध्नुकं ऋद्धिकरमित्यर्थः । उच्छिष्टस्य दासभागतामाह मनुः—

उच्छेषणं भूमिगतमजिह्मस्याशठस्य च ।

दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते ॥

ततः सर्ववर्णमन्नं गृहीत्वा 'तृप्ताःस्थ' इति विप्रान्पृष्ट्वा 'तृप्ताः स्मः'इति तैरुक्ते 'शेषमप्यन्नमस्ति किं क्रियताम्' इति पृष्ट्वा 'इष्टैः सह भुज्यताम्' इत्यनुज्ञातः पितृस्थानविप्रोच्छिष्टसन्निधौ दक्षिणाग्रेषु दर्भेषु तिलोदकं प्रक्षिप्य 'ये अग्निदग्धा' इत्यनयर्चा तदन्नं प्रक्षिप्य विप्रहस्तेषु गण्डूषार्थं सकृत्सकृदुदकं दद्यात् । हेमाद्रौ धर्मः—

केषांचिद्विकिरः पूर्वं तृप्तिप्रश्नस्तथापरः ।

प्रश्नः पूर्वमथान्येषां विकिरस्तदनन्तरम् ॥

अमृतापिधानात्पूर्वं केषांचिद्विकिरः स्मृतः ।

अन्येषां तु ततः पश्चाद्विदुषामिति संमतम् ॥

गायत्र्यादिजपात्पूर्वं केषांचित्तदनन्तरम् ।

कात्यायनः—तृप्तान् ज्ञात्वाऽन्नं प्रकीर्य सकृदपो दत्वा पूर्ववद्गायत्रीं जप्त्वा मधुमतीर्मधुमधु इति च तृप्ताः स्थः इति पृच्छति तृप्ताः स्म इत्यनुज्ञातः शेषमन्नमनुज्ञाप्य इति । प्रचेताः—'तृप्ताः स्थ तृप्ताःस्मप्रभूतं प्रभूतमित्युक्तवन्तः' इति । विष्णवाश्वलायनौ'संपन्नं पृष्ट्वाऽन्नं विकीर्य' इति । विष्णुधर्मोत्तरेत्वनयोः प्रश्नोत्तरयोः समुच्चयो जानुपातनं च दर्शितम् ।

प्रष्टव्या ब्राह्मणा भक्त्या भूनिविष्टेन जानुना ।

तृप्ता भवन्तः संपन्नं भवतो कच्चिदेव तु ॥

तृप्ताः स्मेति च तैरुक्ते संपन्नमिति चाप्यथ ।

दद्यादाचमनं भक्त्या श्रद्दधानः समाहितः ॥

श्राद्धविशेषे प्रश्नोत्तरविशेषमाह विष्णुः—

पित्र्ये स्वदितमित्येवं वाच्यं गोष्ठेषु सुश्रुतम् ।

संपन्नमित्यभ्युदये दैवे रोचत इत्यपि ॥

हारीतः—तृप्ताः स्वदितमिति पृच्छेत्स्वदितमिति प्रत्याहुः स्मृतमिति दैवे त्वायुष्यमिति स्वैरे स्वाचान्तेषु भूमौ विकिरं निनयेत् ।

## अथाचमनदानम् ।

विष्णुः—'उदङ्मुखेष्वाचमनमादौ दद्यात्ततः प्राङ्मुखेषु' इति । उदङ्मुखेषु पित्र्यविप्रेषु । प्राङ्मुखेषु दैवविप्रेषु । हस्तमप्रक्षाल्यैव गण्डूषग्रहणं कर्तव्यम् । अन्यथा दोषमाह मरीचिः—

हस्तं प्रक्षाल्य गण्डूषं यः पिबेदविचक्षणः ।
आसुरं तद्भवेच्छ्राद्धं पितृणां नोपतिष्ठते ॥

गोभिलः—

भुक्त्वाऽऽचम्य पदस्तोमान् जपेत्तत्र समाहितः ।
गोसूक्तं चाश्वसूक्तं च मध्ये तस्य समीनरम् ॥
भुक्त्वासन्नः शुचौ देशे वामदेव्यं ततो जपेत् ।
एवं सामभिराच्छन्नो भुञ्जानस्तु द्विजोत्तमः ।
श्राद्धभोजनदोषैस्तु महद्भिर्नोपलिप्यते ॥
अन्यथैव हि भुञ्जानो हव्यकव्येष्वमन्त्रवित् ।
आत्मानमन्नदातारं गमयत्यासुरीं स्थितिम् ॥ इति ।

## अथ विकिरेतिकर्तव्यता ।

पाद्ममात्स्ययोः—

तृप्तान् ज्ञात्वा ततः कुर्याद्विकिरं सार्ववर्णिकम् ।
सोदकं चान्नमुद्धृत्य सलिलं प्रक्षिपेद्भुवि ॥

ब्रह्माण्डपुराणे—

उच्छिष्टे सतिलान् दर्भान् दक्षिणाग्रान्निधापयेत् ।

उच्छिष्टे उच्छिष्टसन्निधौ । विष्णुः—'भुक्तवत्सु ब्राह्मणेषु तृप्तिमागतेषु मामेक्षेष्टा इत्यन्नं सतृणमभ्युक्ष्यान्नविकिरणमुच्छिष्टाग्रतः कुर्यात्' इति । मन्त्रस्तु 'मामेक्षेष्ट बहुते पूर्तमस्तु ब्राह्मणो मे जुषतामत्रान्नं सहस्रधारममृतोदकं मे पुरतस्त्वेतत्परमे व्योमन्' इति । वैश्वदेविकविकिरमन्त्रमाह गोभिलः—

असोमपाश्च ये देवा यज्ञभागविवर्जिताः ।
तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविकम् ॥ इति ।

पित्र्यविकिरमन्त्रमाह कात्यायनः—

ये अग्निदग्धा येऽनग्निदग्धा जीवा जाताः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ।

बृहस्पतिः—

अनग्निदग्धा ये जीवा येऽग्निदग्धाः कुले मम ।

गोभिलः—

अग्निदग्धास्तु ये जीवा येऽप्यदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ।

उभयत्र भूमौ दत्तेनेति शेषः

पाद्ममात्स्ययोः—

'अग्निदग्धास्तु ये जीवा येप्यनग्निदग्धाः कुले मम ।
भूमौ दत्तेन तुष्यन्तु तृप्ता यान्तु परां गतिम् ।
येषां न माता न पिता न बन्धु-
र्नैचान्नसिद्धिर्न तथाऽन्नमस्ति ।
तत्तृप्तयेऽन्नं भुवि दत्तमेत-
त्प्रयान्तु लोकाय सुखाय ते तु ॥
येऽस्मत्कुले तु पितरो लुप्तपिण्डोदकक्रियाः ।
ये चाप्यकृतचूडास्तु ये च गर्भाद्विनिःसृताः ॥
येषां दाहो न क्रियते अग्निदग्धाश्च ये परे ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ।

अपरार्के तु—

असंस्कृतप्रमीता ये त्यागिनो याः कुलस्त्रियः ।
दास्यामि तेभ्यो विकिरं पित्र्यं भूमौ जलेन तु ।

इत्यपि मन्त्र उक्तः । विकिरस्य प्रतिपत्तिमाह गौतमः—'विकिरमुच्छिष्टैः प्रतिपादयेत्'। उच्छिष्टैरिति सहार्थे तृतीया । भार्गवः—

पिण्डवत्प्रतिपत्तिः स्याद्विकिरस्येति तौल्वलिः ।

इदं चोच्छिष्टसन्निधौ विकिरदाने तैः सह प्रतिपादनम् । पिण्डसन्निधौ चेत्पिण्डवदिति व्यवस्थितमिति केचित् । पिण्डसन्निधौ विकिरदानमाह धूम्रः—

कपित्थस्य प्रमाणेन पिण्डं दद्यात्समाहितः ।
तत्समं विकिरं दद्यात्पिण्डान्ते तु षडङ्गुले ॥ इति ।

## अथ पिण्डदानम् ।

साङ्ख्यायनगृह्ये—'भुक्तवत्सु पिण्डान्दद्यात्पुरस्तादेके' पुरस्तादिति पक्षे ब्राह्मणार्चनानन्तरमाह देवलः—

'अथ संगृह्य कलशं सदर्भं पूर्णमम्भसाम् ।
पुरस्तादुपविश्यैषां पिण्डावापं निवेदयेम्' ।

इत्यादिना । अग्नौकरणानन्तरमाह मनुः—

अपसव्यमग्नौ कृत्वा सर्वमावृत्परिक्रमम् ।
अपसव्येन हस्तेन निर्वपेदुदकं शुचि ॥
त्रींस्तु तस्माद्धविःशेषात्पिण्डान्कृत्वा समाहितः ।

इत्यादि । आश्वलायनगृह्ये—भुक्तवत्स्वनाचान्तेषु पिण्डान्निदध्यादाचान्तेषु इत्येके' इति । कात्यायनोऽपि—कृतगण्डूषेषु सम्यगाचान्तेषु ब्राह्मणेषु पिण्डदानमुक्त्वाऽह 'अनाचान्तेषु इत्येके' इति । केचित्तु 'भुक्तवत्स्वनाचान्तेष्वेव विकिरं दत्वा स्वधां वाचयित्वा पिण्डदानं कुर्वन्ति' । तथा च शङ्खलिखितौ—'गायत्रीं समनुश्राव्य तृप्तान् ज्ञात्वा स्वदितमिति पृष्ट्वा शेषमन्नमनुज्ञाप्य कृतादन्नाद्विकिरं कुर्यात्स्वधां वाचयित्वा विष्टरांस्त्रीन्निदध्यात्' इत्यादि । विष्टराः पिण्डाधस्तना दर्भाः । बृहस्पतिना 'आचान्तेषु पिण्डदानमनाचान्तेषु विकिरः' इत्युक्तम् । आचान्तेष्वपि कुर्वाणाः केचित् अभिरमणानुज्ञावचनस्वधावाचनादिपदार्थमकृत्वैव पिण्डदानं कुर्वन्ति । एतदुत्तरकालतां त्वाह यमः—

आचान्तांश्चानुजानीयादभिवाद्य कृताञ्जलिः ।
भवन्तो रमन्तामत्र ज्ञात्वाऽनुज्ञातलक्षणम् ॥
स्वधेति च वक्तव्यं प्रीयन्तां पितरस्तथा ।
अक्षय्यमन्नदानं तु वाच्यं प्रीतैर्द्विजातिभिः ।
ततो निर्वपणं कुर्यात्पिण्डानां तदनन्तरम् । इति ।

हारीतस्तु—'वाजेवाजेत्यनुव्रज्येत्यन्तं भोजनोत्तरं तत्तद्भुक्तहविःशेषस्य पिण्डान् पिण्डपितृयज्ञवन्निदध्यात्' इत्याह । एते च पिण्डदानकालाः स्वस्वगृह्यानुसारेण व्यवस्थिता ज्ञेयाः । भोजनात्पूर्वकालोत्तरकालत्वयोर्व्यवस्थामाह लौगाक्षिः—

अप्रशस्तेषु यागेषु पूर्वं पिण्डावनेजनम् ।
भोजनस्य प्रशस्ते तु पश्चादेवोपकल्पयेत् ॥

अप्रशस्तेषु सपिण्डीकरणपूर्ववर्तिषु प्रेतश्राद्धेषु । अवनेजनम् अवाचीनपाणिना निर्वपणम्' इति स्मृतिचन्द्रिकाकारः । 'अवनेजनं दानम्' इति हेमाद्रिः । प्रशस्तं सपिण्डीकरणादिश्राद्धम् । इयं व्यवस्था केषांचिदेव । मन्वादिस्मृतिषु मत्स्यादिपुराणेषु च भोजनपूर्वकालतैवोक्ता । स्वगृह्ये विशेषानुक्तौ तु 'आचान्तेष्वेके' इति पक्षो ग्रहीतुं न्याय्यः ।

---

## अथ पिण्डदानदेशः ।

देवलः—हुत्वैवमग्निं पिण्डानां सन्निधौ तदनन्तरम् ।
पक्वान्नेन बलिं तेभ्यः पिण्डेभ्यो दापयेद्द्विजः ॥

अत्राग्नौ होमस्य पिण्डसन्निधानं वदताऽर्थात्पिण्डदानमप्यग्निसन्निधावुक्तं भवति' इति हेमाद्रिः । अग्न्यन्तराभावे तु याज्ञवल्क्यादिवचनेभ्य उच्छिष्टसन्निधौ पिण्डान्दद्यात् । अत्र विशेषमाह व्यासः—

अरत्निमात्रमुत्सृज्य पिण्डांस्तत्र प्रदापयेत् ।
यत्रोपस्पृशतां वाऽपि प्राप्नुवन्ति न विन्दवः ॥

पारस्करः—विप्राणां बाहुमात्रेण पिण्डदानं विधीयते ॥

'पात्राणाम्' इति वा पाठः ।

अत्रिः—पितॄणामासनस्थानादग्रतस्त्रिष्वरत्निषु ।
उच्छिष्टसन्निधानं तन्नोच्छिष्टासनसन्निधौ'। जातूकर्ण्यः—
व्याममात्रं समुत्सृज्य तत्र पिण्डान्प्रदापयेत् ।

ब्राह्मणभोजनात्पूर्वकालप्रदेयान्पिण्डान् प्रस्तुत्य देशविशेषमाह देवलः—

अभ्यज्य मधुसर्पिर्भ्यां तान्वपेत्कुशसञ्चये ।
छायायां हस्तिनश्चैव हस्तदौहित्रसन्निधौ ॥

'श्राद्धसन्निधौ हस्तिसत्त्वे तच्छायायां दौहित्राद्धस्ताद्यन्तरालदेशे वा' इत्यर्थः । देवलः—

अथ संगृह्य कलशं सदर्भं पूर्णमम्भसा ।
पुरस्तादुपविश्यैषां पिण्डावापं निवेदयेत् ॥
ततस्तैरभ्यनुज्ञातो दक्षिणां दिशमेत्य सः ।

कलशसङ्ग्रहस्तु, 'ततः पानीयकुम्भेन तर्पयेत्प्रयतः पितॄन्' इत्यादिना कलशेनैव येषां कृत्यं विहितं तेषामेवान्येषां त्ववनेजनादिकं

श्राद्धीयेनैवोदकेन । अत एव तत्सङ्ग्रहमन्तरेणाह शालङ्कायनः—

पिण्डावापमनुज्ञाप्य यतवाक्कायमानसः ।
सतिलेन ततोऽन्नेन पिण्डान्सर्वेण निर्वपेत् ॥

---

## अथ पिण्डदानस्थानकल्पना ।

देवलः—

उपलिप्ते शुचौ देशे स्थानं कुर्वीत सैकतम् ।
मण्डलं चतुरस्रं वा दक्षिणावनतं महत् ॥

एतच्च सैकतस्थानकरणं केषांचिदेव। अत एव 'उपलिप्ते महीपृष्ठे' इति मत्स्यपुराणे महीपृष्ठमेव पिण्डाधारत्वेन विहितम् । देवलः—'एक-दर्भेण तन्मध्यमुल्लिखेत्त्रिश्च तं त्यजेत् । तन्मध्यं मण्डलमध्यम् ' त्रिः ' इति मातृमातामहादीनां पिण्डदानपक्षे । अन्यथा सकृदेव ।

कण्डनं पेषणं चैव तथैवोल्लेखनक्रिया ।
सकृदेव पितॄणां स्याद्देवानां तदनन्तरम् ।

इति ब्रह्माण्डपुराणात् । एतच्च स्फ्याभावे 'वज्रेण वा कुशैर्वाऽपि उल्लिखेत महीं द्विजः' इति ब्रह्माण्डपुराणात् । वज्रः स्फ्यः । 'वज्रो वै स्फ्यः' इति श्रुतेः तत्रैव—'सव्योत्तराभ्यां पाणिभ्यां कुर्यादुल्लेखनं द्विजः । सव्यः वामः उत्तरः ययोस्तौ सव्योत्तरौ । एतच्च सर्वमाग्नेयी-दिगभिमुखम् । आश्वलायनेन दक्षिणप्राचीं प्रस्तुत्य 'सर्वकर्माणि तां दिशम्' इत्युक्तत्वात् । 'दक्षिणा दिक् पितृणाम्' इति श्रुतेः । दक्षिणा दिगपि विकल्पेन । कर्त्ताऽपि सौकर्यादाग्नेय्यभिमुखो दक्षिणाभिमुखो वा । लेखाकरणे मन्त्र उक्तो ब्रह्मपुराणे—

निहन्मि सर्वं यदमेध्यमत्र
हताश्च सर्वेऽसुरदानवा मया ।
रक्षांसि यक्षाश्च पिशाचसङ्घा
हता मया यातुधानाश्च सर्वे ॥

एतेन मन्त्रेण सुसंयतात्मा दर्भेण वेदिं विलिखेत्त्रिः ' इति । पिण्ड-पितृयज्ञे कात्यायनः—'दक्षिणेनोल्लिखत्यपहता इत्यपरेण वा ' अग्न्य-पेक्षया दक्षिणत्वमपरत्वं च । उल्लिख्य चाभ्युक्षणम् । 'तामभ्युक्ष्य ' इत्याश्वलायनवचनात् । उल्लिख्योल्मुकनिधानमाह कात्यायनः—'उल्मुकं परस्तात्करोति ये रूपाणि' इति। आश्वलायनः—'सकृदाच्छिन्नैरवस्तीर्य'

इति । 'अथ सकृदाच्छिन्नान्युपमूलं दितानि भवन्ति' इति शतपथे । 'यत्समूलं तत्पितृणाम्' इति तु तैत्तिरीये ।

यमः—विष्टरांस्त्रीन्वपेत्तत्र नामगोत्रसमन्वितान् ।
अद्भिरभ्युक्ष्य विधिवत्तिलैरभ्यवकीर्य च ॥

नामगोत्रसमन्वितान् 'अमुकगोत्रस्याऽस्मत्पितुरमुकशर्मणोऽयं विष्टरः' इत्युच्चारणपूर्वमित्यर्थः । दर्भास्तरणानन्तरमाह देवलः—

अथ साञ्जलिरुत्थाय स्थित्वा चावाहयेत्पितॄन् ।
पितरो मे प्रसीदन्तु प्रयान्तु च पितामहाः ॥
इति संकीर्तयंस्तूष्णीं तिष्ठेत्क्षणमनुश्वसन् ।
आवाहयित्वा दर्भाग्रैस्तेषां स्थानानि कल्पयेत् ।
तेष्वासीनेषु पात्रेण प्रयच्छेन्मार्जनोदकम् ॥
प्रक्षाल्य विकिरेत्तत्र नानावर्णास्तिलानपि ॥' इति ।

दर्भास्तरणानन्तरमाह सुमन्तुः—

असाववनेनिक्ष्वेति पुरुषं पुरुषं प्रति ।
त्रिस्त्रिरेकेन हस्तेन विदधीतावनेजनम् ॥

असाविति गोत्रनाम्नामपि ग्रहणम्—

पिण्डोदकप्रदानं तु नित्यनैमित्तिकेष्वपि ।
आलप्य नामगोत्रेण कर्तव्यं सर्वदैव हि ॥

इति व्यासोक्तेः । कात्यायनेन तु बर्हिस्तरणात्पूर्वमवनेजनमुक्तम् । अनयोर्विकल्पो यथाशाखं व्यवस्था वा । इदं चोदकं सतिलमित्याहोशना—'तिलोन्मिश्रेणोदकेनासिच्य' इति । मार्कण्डेयपुराणे—

पितृतीर्थेन तोयं च दद्यात्तेभ्यः समाहितः ॥ इति ।

कात्यायनशांखायनगोभिलादिभिस्तु अवनेजनार्थमुदकपात्रमुक्तम् । षट्त्रिंशन्मते—

सव्यं जानु निपात्यैव भूमौ पिण्डान्प्रयत्नतः ।
निर्वपेत्पितृतीर्थेन स्वधाकारमुदाहरन् ॥

मरीचिः—

पात्राणां खड्गपात्रेण पिण्डदानं विधीयते ।
राजतौदुम्बराभ्यां वा हस्तेनैवाऽथवा पुनः ॥ इति ।

खड्गाख्यश्वापदविशेषललाटास्थिसंभवपात्रं खड्गपात्रम् । औदुम्बरं ताम्रमयम् । सव्यपाणिसंयोजनं शङ्खलिखिताभ्यामुक्तम्—पिण्डान्नि-

दध्यात्सव्येन पाणिना दक्षिणं पाणिमुपसंयोज्येति । देवलः—'अपसव्यमपाङ्गुष्ठम्' इति । ब्रह्माण्डपुराणे—

उत्तानेन तु हस्तेन निर्वपेद्दक्षिणामुखः । इति ।

पितृतीर्थावनमनं चाहापस्तम्बः—'सव्यं जान्वाच्यावाचीनपाणिः' इति । उत्तान एवाधरीकृतपितृतीर्थः पाणिरवाचीनः । अवाचीनमेव पराचीनशब्देनाहाश्वलायनः—'तस्यां पिण्डान्निपृणीयात्पराचीनपाणिः' इति । अग्नौकरणात्पूर्वं पिण्डदानपक्षे तदर्थेन चरुणा पिण्डाः, 'ततश्चरुमुपादाय सपवित्रेण पाणिना' इत्यादिना देवलेनोक्ताः । अग्नौकरणोत्तरमिति पक्षे तु तच्छेषादित्याह मनुः—

त्रींस्तु तस्माद्धविःशेषात्पिण्डान् कृत्वा समाहितः ।
ओदनेनैव विधिना निर्वपेद्दक्षिणामुखः ॥ इति ।

भोजनोत्तरकालीने तु कात्यायनः—'सर्वमन्नमेकत उद्धृत्य' इति । सर्वशब्दः प्रकृतान्नजातिसर्वत्वार्थः । इदं चाग्नौकरणशेषेण मिश्रणीयमित्याहाश्वलायनः—'यद्यदन्नमुपभुक्तं तत्तत्स्थालीपाकेन सह पिण्डार्थमुद्धृत्य पिण्डान्निदध्यात्' इति । यत्तु पठन्ति—

माषाः सर्वत्र वै ग्राह्या न ग्राह्यास्त्वग्निपिण्डयोः ।
ब्राह्मणेषु यथा मद्यं तथा माषोऽग्निपिण्डयोः ॥ इति ।

तन्निर्मूलम् । तेन माषा अपि ग्राह्या एव इति । वायुपुराणे—

मधुसर्पिस्तिलयुतान् त्रीन् पिण्डान्निर्वपेद्बुधः ॥

नात्र मध्वादित्रयनियमः क्रियते, किंत्वतिशय एव । अत एव तिलमधुद्वययुक्तता बृहस्पतिनोक्ता—

सर्वस्मात्प्रकृतादन्नात्पिण्डान्मधुतिलान्वितान् ॥ इति ।

तिलमात्रयुक्तता तु 'सर्वमन्नमुपादाय सतिलं दक्षिणामुखः' इति याज्ञवल्क्येनोक्ता । तेन त्रयं न नियतमिति केचित् । वस्तुतस्तु त्रयनियमेऽपि कलौ मधु न देयम् ।

अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥

इति श्राद्धदीपकलिकायां निगमोक्तेः ।

---

## अथ पिण्डपरिमाणम् ।

व्यासः—द्विहायनस्य वत्सस्य विंशत्यास्ये यथासुखम् ।

तथा कुर्यात्प्रमाणं तु पिण्डानां व्यासभाषितम् ॥

द्विहायनः द्विवर्षः । ब्रह्माण्डपुराणे—

त्रीन्पिण्डानानुपूर्व्येण साङ्गुष्ठमुष्टिवर्द्धनात् ॥

मुष्टौ निवेशिते पिण्डे यथा साङ्गुष्ठमुष्टिवृद्धिर्भवतीत्यर्थः । अङ्गिराः—

कपित्थबिल्वमात्रान्वा पिण्डान्दद्यात्समाहितः ।
कुक्कुटाण्डप्रमाणान्वा यदि वाऽऽमलकैः समान् ॥
बदरेण समान्वाऽपि दद्याच्छ्रद्धासमन्वितः ॥ इति ।

एषां च शक्तिभेदेन व्यवस्था । व्यवस्थायुक्तानि परिमाणान्याह मरीचिः—

आर्द्रामलकमात्रांस्तु पिण्डान्कुर्वीत पार्वणे ।
एकोद्दिष्टे बिल्वमात्रं पिण्डमेकं तु कारयेत् ॥
नवश्राद्धे स्थूलतरं तस्मादपि तु निर्वपेत् ।
तस्मादपि स्थूलतरमाशौचे प्रतिवासरम् ॥

अत्राऽऽमलकमात्रानेव पार्वणे इति न नियमः, किंतु आमलकमात्रान्पार्वण एवेति । अतश्चाधिकपरिमाणपिण्डाचारो न विरुध्यते । नवश्राद्धं च स्मृत्यन्तरे—

प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमे तथा ।
नवमैकादशे चैव तन्नवश्राद्धमुच्यते ॥ इति ।

मैत्रायणीये त्रयाणां यथोत्तरं परिमाणाधिक्यमुक्तम् । पितामहस्य नाम्ना स्थवीयांसं मध्यमम् । प्रपितामहस्य नाम्ना स्थविष्ठं दक्षिणमिति । आवाहनादिपिण्डदानान्तं कर्मोक्त्वाऽऽह याज्ञवल्क्यः—

मातामहानामप्येवं दद्यादाचमनं ततः ।

एवमित्युक्तवक्ष्यमाणपदार्थातिदेशः । पितृमातामहपार्वणयोश्चैकप्रयोगविधिपरिग्रहात्सह क्रियमाणयोर्मिथःप्रत्यासत्त्यनुग्रहाय पदार्थानामेवानुसमयो न काण्डयोः । अनन्तरकृत्यमाह स एव—

स्वस्तिवाच्यं ततः कुर्यादक्षय्योदकमेव च ।

इति [ सह सर्ववर्णमन्नमुपादायाग्निसन्निधौ पिण्डान् दद्यात् । तदभावे ब्राह्मणार्थं सार्ववर्णिकमन्नमुपादायोच्छिष्टसन्निधौ पिण्डपितृयज्ञकल्पेन पिण्डान्दद्यात् । मातामहानामप्येवमेव वैश्वदेवावाहनादिप्रदानान्तं कर्म कृत्वा ब्राह्मणानामाचमनं दद्यात् । ] ततः 'स्वस्तीति ब्रूत' इति ब्राह्मणान् स्वस्ति वाचयेत् । तैश्च ' स्वस्ति ' इत्युक्ते ' अक्षय्यमस्त्विति ब्रूत '

इति ब्राह्मणहस्तेषूदकदानं कुर्यात् । 'अस्त्वक्षय्यम्' इति ते ब्रूयुरित्यर्थः ।

## अथ दक्षिणादानम् ।

तद्द्विविधम् । विप्रोद्देश्यकं पित्रुद्देश्यकं च । आद्यमाह देवलः—

आचान्तेभ्यो द्विजेभ्यस्तु प्रदद्यादथ दक्षिणाम् ॥ इति ।

द्वितीयमाह पारस्करः—'हिरण्यं विश्वेभ्यो देवेभ्यो रजतं पितृभ्यः' इति । तत्राद्यं सव्येन, तथा च जमदग्निः—'अपसव्यं कर्म सर्वं दक्षिणादानवर्जितम्' इति । द्वितीयं त्वपसव्येन । तथा च दक्षिणादानं प्रक्रम्य स एव—'अपसव्यं तत्रापि' इति। तत्रापि पित्र्यदक्षिणादानेऽपीत्यर्थः । दक्षिणादाने क्रममाह देवलः—

दक्षिणां पितृविप्रेभ्यो दद्यात्पूर्वं ततो द्वयोः ।

द्वयोः द्वाभ्यां वैश्वदेविकब्राह्मणाभ्यामित्यर्थः । दक्षिणा च विप्रगुणानुरोधेन विषमाऽपि देया—

एकपङ्क्त्युपविष्टानां विप्राणां श्राद्धकर्मणि ।
भक्ष्यभोज्यं समं देयं दक्षिणा त्वनुसारतः ॥

इति स्मृतेः । दक्षिणां दत्त्वा स्वधां वाचयिष्ये इत्युक्त्वा तैर्ब्राह्मणैः 'वाच्यताम्' इति प्रत्युक्तः 'पित्रादिभ्यः स्वधोच्यताम्' इति वदेत् । 'अस्तु स्वधा' इति विप्राः । ततो भूमावुदकमासिच्य 'विश्वे देवाः प्रीयन्ताम्' इति वदेत् । 'प्रीयन्तां विश्वे देवाः' इति विप्रैरुक्ते 'दातारः' इति मन्त्रं जपेत् । पितॄणां न्युब्जं पात्रमुत्तानं कृत्वा 'वाजे वाजे' इति मन्त्रेण पितृपूर्वं विसर्जयेत् । तदेतत्सर्वमाह याज्ञवल्क्यः—

दत्त्वा तु दक्षिणां शक्त्या स्वधाकारमुदाहरेत् ।
वाच्यतामित्यनुज्ञातः प्रकृतेभ्यः स्वधोच्यताम् ॥
ब्रूयुरस्तु स्वधेत्युक्ते भूमौ सिञ्चेत्ततो जलम् ।
विश्वेदेवाश्च प्रीयन्तां विप्रैश्चोक्त इदं जपेत् ॥
दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव नः ।
श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्तु ॥ इति ।
इत्युक्त्वोक्त्वा प्रिया वाचः पितृपूर्वं विसर्जयेत् ।
वाजे वाज इति प्रीतः पितृपूर्वं विसर्जनम् ॥
यस्मिंस्ते संस्रवाः पूर्वं पितृपात्रे निवेशिताः ।
पितृपात्रं तदुत्तानं कृत्वा विप्रान्विसर्जयेत् ॥ इति ।

पिण्डप्रतिपत्तिमाह स एव—

पिण्डांस्तु गोजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ।

पत्न्याः पुत्रकामनायां तु वायुपुराणे—

पत्न्यै प्रजार्थी दद्यात्तु मध्यमं मन्त्रपूर्वकम् ॥ इति ।

मन्त्रस्तु मत्स्यपुराणे—

आधत्त पितरो गर्भं मन्त्रः सन्तानवर्द्धनः ॥ इति ।

मध्यमपिण्डप्राशनं च केवलं काम्यमेव न नित्यमिति द्वैतनिर्णये तातचरणाः । इतरपिण्डद्वयं कामनाभावे त्रयमपि गवादौ प्रतिपाद्यम् । बृहस्पतिः—

अन्यदेशगता पत्नी गर्भिणी रोगिणी तथा ।
तदा तं जीर्णवृषभश्छागो वा भोक्तुमर्हति ॥

तीर्थश्राद्धे प्रतिपत्त्यन्तरं विष्णुधर्मोत्तरे—

तीर्थश्राद्धे सदा पिण्डान् क्षिपेत्तीर्थे समाहितः ।
दक्षिणाभिमुखो भूत्वा पित्र्या दिक् सा प्रकीर्तिता । इति ।

उच्छिष्टमार्जने विशेषमाह याज्ञवल्क्यः—

सत्सु विप्रेषु सर्वेषु द्विजोच्छिष्टं न मार्जयेत् । इति ।

सत्स्विति अपराह्णतोपलक्षणार्थम्—

भृत्यवर्गावृतो भुङ्क्ते हव्यं कव्यं स्वगोत्रजैः ।
आसायं श्राद्धशालायां द्विजोच्छिष्टं न मार्जयेत् ॥

इति प्रचेतोवचनात् । मात्स्ये—

ततश्च वैश्वदेवान्ते सभृत्यः सहबान्धवः ।
भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषेवितम् ॥ इति ।

श्राद्धशेषभोजनं तु दिवैव कार्यमित्याह जातूकर्ण्यः—

अहन्येव तु भोक्तव्यं कृते श्राद्धे द्विजन्मभिः ।
अन्यथा ह्यासुरं श्राद्धं परपाके च सेविते ॥

देवलः—

श्राद्धं कृत्वा तु यो भुङ्क्ते न भुङ्क्तेऽथ कदाचन ।
देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा ॥

तद्दिने नित्योपवासप्राप्तौ तु श्राद्धशेषावघ्राणमेवेत्युक्तं समयमयूखे ।

---

## अथ कातीयानां प्रयोगः ।

तत्र कर्ता पूर्वेद्युः सद्यो वाऽऽचम्य प्राणानायम्य मासपक्षाद्युल्लिख्य प्राचीनावीती सव्यं जान्वाच्यास्मत्पितृपितामहप्रपितामहानां मातामहप्रमातामहवृद्धप्रमातामहानां वाऽमुकामुकशर्मणाममुकगोत्राणां वसुरुद्रादित्यस्वरूपाणां सपत्नीकानां सदैवं सपिण्डमपिण्डं वा पार्वणविधिना श्वोऽद्य वा दर्शश्राद्धमहं करिष्ये ' इति संकल्पयेत् । क्षयाहे अपत्नीकानां पित्रादीनामेव । महालये तु यथासंभवं सर्वेषामिति विशेषः । ततः कर्ता दक्षिणं जान्वाच्योपवीत्युदङ्मुखोऽस्मत्पित्रादीनां दर्शश्राद्धादौ विश्वेदेवस्थाने त्वामहं निमन्त्रये इत्येकं द्वौ चतुरो वा प्राङ्मुखान् ब्राह्मणान् प्रत्येकं दक्षिणं जानुं स्पृष्ट्वा निमंत्र्य दैवे क्षणः क्रियतामिति ब्रूयात् । ॐतथेतीतरः प्रतिब्रूयात् । ततः कर्ता ' प्राप्नोतु भवान् ' इति ब्रूयात् । ' प्राप्नवानि ' इतीतरः । ततः कर्ता दक्षिणामुखः सव्यं दक्षिणं वा जान्वाच्य प्राचीनावीती ' अस्मिन् दर्शश्राद्धादावस्मत्पितुरमुकशर्मणोऽमुकगोत्रस्य वसुरूपस्य सपत्नीकस्य स्थाने त्वामहं निमन्त्रये इत्युदङ्मुखमेकं त्रीन् नव वा ब्राह्मणान् प्रत्येकं सव्यं दक्षिणं वा जानुं स्पृष्ट्वा निमन्त्रयेत् । एवं पितामहस्य रुद्ररूपस्य प्रपितामहस्यादित्यरूपस्य ' इति । एवमेव मातामहादीनपि प्रत्येकं निमन्त्रयेत् । ततः ' पित्र्ये क्षणः क्रियताम् ' इति वदेत् । ' ॐ तथा ' इत्यादि पूर्ववत् । ततः कर्तोपवीती—

अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः ।
भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा ।
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ।
भवितव्यं भवद्भिर्नः श्वो भूते श्राद्धकर्मणि ।। इति ।

भवद्भिर्नोऽद्यत इति वा तान् श्रावयेत् । ततो द्विराचम्य पवित्रं धृत्वा सौवर्णराजतखड्गाङ्गुलीयानि वाऽनामिकातर्जनीकनिष्ठिकासु धृत्वा संकल्पपूर्वं श्राद्धाधिकारसिद्ध्यर्थं सहस्रशीर्षेत्यादिपवित्रमन्त्रान् जपित्वा द्विराचम्य विप्राग्रतो ब्रह्मदण्डार्थं सतिलं हिरण्यं कुशं वा निक्षिप्य—

समस्तसम्पत्समवाप्तिहेतवः
समुत्थितापत्कुलधूमकेतवः ।
अपारसंसारसमुद्रसेतवः

पुनन्तु मां ब्राह्मणपादपांसवः ॥
आपद्घनध्वान्तसहस्रभानवः
समीहितार्थार्पणकामधेनवः ।
समस्ततीर्थाम्बुपवित्रमूर्तयो
रक्षन्तु मां ब्राह्मणपादपांसवः ॥
विप्रौघदर्शनात्क्षिप्रं क्षीयन्ते पापराशयः ।
दर्शनान्मङ्गलावाप्तिरर्चनादच्युतं पदम् ॥

इति तान्स्तुत्वा प्राचीनावीती 'अमुकश्राद्धं कर्तुं ममाधिकारसम्पदस्तु' इति भवन्तो ब्रुवन्तु' इति तान्संप्रार्थ्य 'तथास्तु' इति तैरनुज्ञातो यज्ञोपवीती तिथ्यादि संकीर्त्य दक्षिणामुखः प्राचीनावीती सव्यं जान्वाच्य तिलान् गृहीत्वाऽस्मत्पित्रादीनां मातामहादीनां च पूर्वोपक्रांतं श्राद्धं युष्मदनुज्ञया करिष्य इति संकल्प्य 'कुरुष्व' इति तैरनुज्ञातो ब्राह्मणान् 'स्वागतम्' इति पृष्ट्वा तैः 'सुस्वागतम्' इति प्रत्युक्त उपवीती—

आगच्छन्तु महाभागा विश्वे देवा महाबलाः ।
ये अत्र विहिताः श्राद्धे सावधाना भवन्तु ते ॥

इति वैश्वदेविकद्विजान्संप्रार्थ्य प्राचीनावीती—

ये मयाऽऽमन्त्रिताः पूर्वं पितरो मातृपक्षजाः ।
आश्रित्य पितृकार्येषु सावधाना भवन्तु ते ॥

इति पितृद्विजान् संप्रार्थ्योपवीती सर्वान्प्रदक्षिणीकृत्यैकस्मिन्नर्घपात्रे चन्दनयवकुसुमोदकं सम्भृत्य 'अर्घ्यमेनम्' इति सकृत्पठित्वा द्विजपादयोर्निमन्त्रणक्रमेणार्घ्यं निनीयोदङ्मुखो द्विराचामेत् । ततः श्राद्धपूर्वदेशे दैवे द्विहस्तं दीर्घचतुरस्रमुदक्प्लवं मण्डलं गोमूत्रगोमयाभ्यां कृत्वा तत्र यवान् प्रागग्रं कुशद्वयं च निक्षिप्य तद्दक्षिणतः षडङ्गुलं विहाय प्राचीनावीती पित्रर्थं चतुर्हस्तं समचतुरस्रं दक्षिणाप्लवं मण्डलं गोमूत्रगोमयाभ्यामेव कृत्वा तिलान्दक्षिणाग्रं कुशत्रयं च निक्षिप्योपवीती पितृदैवमण्डलात्पूर्वे प्रत्यङ्मुख उपविश्य देवतार्थब्राह्मणमेकैकं प्राङ्मुखमुपवेश्य पवित्रकरो निमन्त्रणक्रमेण गन्धपुष्पयवकुशमिश्रं जलाञ्जलिं विश्वेभ्यो देवेभ्य इदं पाद्यम्' इत्युक्त्वा 'शन्नो देवीः' इति मन्त्रान्ते देवतीर्थेन ब्राह्मणपादयोर्निनीयाभिवन्द्य पवित्रं विस्रस्यान्यजलेन पादौ प्रक्षाल्य दक्षिणपादादिमूर्द्धान्तं गन्धपुष्पाक्षतैः 'सहस्रशीर्षा' इति संपूज्य साक्षतगन्धपुष्पकुशजलपूर्णपात्रेण विश्वेदेवा एष वोऽर्घ्य इत्यर्घ्यं निवेदयेत् । एव-

मितरत्र कृत्वा ब्राह्मणान् द्विराचमय्य स्वयं पवित्रं धृत्वा सकृदाचम्य प्राचीनावीती दक्षिणामुखो विप्रानुदङ्मुखानुपवेश्य द्विगुणभुग्नकुशतिलगन्धपुष्पमिश्रं जलांजलिं 'अस्मत्पितरोऽमुकशर्माणोऽमुकगोत्रा वसुरूपा इदं वः पाद्यम्' इत्युक्त्वा 'शन्नो देवीः' इति मन्त्रेण पित्रर्थब्राह्मणपादयोः पितृतीर्थेन निषिच्याभिवन्द्यान्यजलेन पादौ प्रक्षाल्य शिरःप्रभृतिपादान्तं वामाङ्गपूर्वकं 'पितृभ्यः स्वधायिभ्यः' इति तिलचन्दनपुष्पैरभ्यर्च्य 'अस्मत्पितरोऽमुकशर्माणोऽमुकगोत्रा वसुरूपा एष वोऽर्घः' इत्युक्त्वा सतिलगन्धपुष्पकुशजलपूर्णपात्रेणार्घं ब्राह्मणपादयोर्निनयेत्। एवमस्मत्पितामहा रुद्ररूपाः प्रपितामहा आदित्यरूपाः इत्युक्त्वा प्रत्येकं पाद्याद्यर्घान्तं कृत्वा मातामहादीनामपि तथैव कुर्यात् । ततस्तान् द्विराचमय्य स्वयं च पवित्रपाणिर्दक्षिणामुखो द्विराचम्य द्विजान् भोजनस्थले नीत्वा प्राचीनावीती 'अमुकश्राद्धसिद्धिरस्तु' इति भवन्तो ब्रुवन्तु इत्युक्त्वा 'अस्त्वमुकश्राद्धसिद्धिः' इति तैः प्रत्युक्त आसनान्युपकल्प्योपवीती प्रागग्रयुग्मकुशयवसहितवस्त्राद्यासनं सव्यहस्तेन स्पृष्ट्वा वैश्वदेविकब्राह्मणदक्षिणहस्तं निरङ्गुष्ठं धृत्वा प्राङ्मुखं 'ॐभूर्भुवः स्वः यूयं समाध्वम्' इति उपवेश्य 'ॐसुसमास्महे' इति प्रत्युक्तोऽपरमप्येवमुपवेश्य प्राचीनावीती दक्षिणाग्रयुग्मकुशतिलयुक्तासने तथैव पित्रादिब्राह्मणमुदङ्मुखमुपवेश्य तिलतैलदीपिकां प्रत्येकं शक्त्योपकल्प्योपवीती स्वासने प्राङ्मुख उपविश्य 'अपवित्रः पवित्रो वा' इति विष्णुं स्मृत्वा ॐवैष्णव्यै नमः जयायै नमः काश्यप्यै नमः ।

> मेदिनी लोकमाता त्वं क्षितिरुर्वी धरा मही ।
> भूमिः शैला शिला त्वं च स्थिरा तुभ्यं नमोऽस्तु ते ॥
> धरणी काश्यपी क्षोणी रसा विश्वंभरा च भूः ।
> जगत्प्रतिष्ठा वसुधा त्वं हि मातर्नमोऽस्तु ते ॥
> वैष्णवी भूतदेवी च पृथिवि त्वां नमोऽस्तु ते ॥

इति पृथिवीं स्तुत्वा श्राद्धदेशं गयात्मकत्वेन तत्स्थं च गदाधरात्मकत्वेन ध्यात्वाऽऽचम्य प्राचीनावीती वैष्णवं मन्त्रं गायत्रीं प्रणवं मधुवाता इति तृचं जप्त्वोपवीत्याचम्य प्राणानायम्य तिथ्यादि संकीर्त्य प्राचीनावीतिना 'प्रक्रान्तं श्राद्धकर्म युष्मदनुज्ञयाऽहं करिष्ये' इति संकल्प्य 'कुरुष्व' इति तै रनुज्ञातः 'सप्तव्याधाः' इति श्लोकद्वयं 'देवताभ्य' इति सप्तार्चिर्मन्त्रं 'चतुर्भिश्च' इति 'यस्यस्मृत्या' इति च पठित्वा

'निहन्मि' इति नीवीं बद्ध्वा 'अपहता' इत्यप्रदक्षिणं सर्वतस्तिलैः सर्षपै-श्चावकीर्य 'तिला रक्षन्तु' इति तिलकुशान्द्वारदेशे क्षिप्त्वा 'निहन्मि' इति 'अपहता' इति च प्रदक्षिणं दिक्षु विदिक्षु च दक्षिणसंस्थं परित-स्तिलैरवकीर्य 'यद्देवा' इति तृचेन जलमभिमन्त्र्य तेन पाकमुपहा-रांश्च प्रोक्ष्य 'सर्वे पाकाः शुचयः श्राद्धयोग्या भवन्तु दुष्टदृष्टिदोषाद्यु-पहतिर्नश्यतूपहाराणां च पवित्रताऽस्तु' इत्युक्त्वोपवीत्युदङ्मुखो वैश्वदेवि-कविप्रसन्निधौ दक्षिणं जान्वाच्य तद्दक्षिणहस्तं सव्येन धृत्वा दक्षिणहस्तेन यवजलयुक्तमृजुदर्भद्वयमादाय विश्वेषां देवानां विश्वेभ्यो देवेभ्य इति वो-क्त्वा 'इदमासनम्' इत्युच्चार्य तद्धस्ते तदुदकमासिच्य तद्दक्षिणतः प्रागग्रं कुशद्वयं प्रक्षिप्य 'स्वासनम्' इत्युक्ते 'आस्यताम्' इत्युक्त्वा तेन 'धर्मोऽस्मि विशि राजा प्रतिष्ठितः' इति मनसैवासने प्रतिगृहीते पुनस्तद्धस्तेऽपो दत्त्वा सदर्भेण दक्षिणहस्तेन निरङ्गुष्ठं विप्रदक्षिणहस्तं धृत्वा 'पुरूरवा-र्द्रवसञ्ज्ञकविश्वदेवस्थाने क्षणः क्रियताम्' इत्युक्त्वा 'ॐ तथा' इति तेनोक्तः 'प्राप्नोतु भवान्' इत्युक्त्वा 'प्राप्नवानीति तेनोक्त इतर-त्राप्येवमुदक्संस्थं कृत्वाऽपो दद्यात्। ततः प्राचीनावीती दक्षिणामुखः सव्यं जान्वाच्यायुग्मान् सजलतिलान् द्विगुणभुग्नान्कुशानादाया-ऽस्मत्पितृणाममुकशर्मणाममुकगोत्राणां वसुरूपाणां सपत्नीकानामिद-मासनम्' इति सव्यहस्तधृते द्विजदक्षिणहस्ते तज्जलमासिच्य द्विजवाम-भागे दक्षिणाग्रान्निक्षिप्य 'स्वासनम्' इति प्रत्युक्ते 'आस्यताम्' इत्युक्त्वा तेन 'धर्मोऽस्मि विशि राजा प्रतिष्ठितः' इति मनसैवाऽऽसने प्रतिगृहीते। एवं यथालिङ्गं सर्वत्र कृत्वा क्रमेणाऽपो दत्त्वा सकुशेन दक्षिणहस्तेन विप्रदक्षिणाङ्गुष्ठमेव गृहीत्वा 'अमुकश्राद्धे क्षणः क्रिय-ताम्' इत्यादि सर्वत्र कृत्वाऽपो दद्यात्। एवं मातामहब्राह्मणानामपि। तत उपवीत्युदङ्मुखः कुशयवपुष्पाण्यादाय तिष्ठन् 'आगच्छन्तु महा-भागा विश्वेदेवाः' इत्यादि पठित्वा वैश्वदेवविप्रदक्षणहस्तं निरङ्गुष्ठं धृत्वा 'विश्वान्देवान्भवत्स्वावाहयिष्ये' इति पृष्ट्वा 'आवाहय' इत्य-नुज्ञाते 'विश्वे देवास' इत्यनया सकृत्सर्वत्रावाह्य विप्रदक्षिणजानुं वामहस्तेन संगृह्य दक्षिणपादादिमूर्द्धान्तं प्रदक्षिणमग्रे यवान् कुशांश्च विकीर्य 'विश्वे देवाः शृणुतेमम्' इति सकृज्जपेत्। कर्कस्तु 'तिलैरेव दैवावाहनमिच्छति प्रकरणानुग्रहात्' इति। ततः प्राचीनावीती दक्षि-णामुखोऽपः प्रदाय तिलान् द्विगुणकुशानादाय 'अस्मत्पितॄन् पिता-

महान् प्रपितामहानमुकशर्मणोऽमुकगोत्रान् वसुरुद्रादित्यरूपान् भवत्स्वावाहयिष्ये' इति पृष्ट्वा आवाहय इत्यनुज्ञात 'उशन्तस्त्वा' इत्यावाह्य विप्रवामजानुं संगृह्य मूर्धादिदक्षिणपादान्तं दक्षिणसंस्थं तिलान्विकीर्याऽपो दत्त्वा कृताञ्जलिः 'आयन्तु नः पितरः' इत्युपस्थायाऽपो दत्त्वा 'नमो वः पितर इषे' इत्यादि 'जीवन्त इह सन्तस्याम' इत्यन्तेन शिरोंऽसजानुपादेष्वप्रदक्षिणमभ्यर्च्याऽपो दद्यात्। एवं मातामहानां ततो 'अपहताः' इति ब्राह्मणान्परितो दिग्विदिक्ष्वप्रदक्षिणं तिलान्विकिरेत्। अथोपवीती दैवद्विजाग्रतः प्रोक्षितायां भुवि प्रागग्रौ कुशौ निधाय तयोर्द्वे अर्घ्यपात्रे निधाय तयोर्द्वे द्वे पवित्रे निधाय प्राचीनावीती पित्रादिविप्राग्रतः प्रोक्षितभूमौ दक्षिणाग्रदर्भेषु प्रतिवर्गं त्रीणि त्रीण्यर्घपात्राणि दक्षिणसंस्थान्यासाद्य तेषु च प्रत्येकं द्विगुणभुग्नानि दक्षिणाग्राणि त्रीणि त्रीणि पवित्राण्याधायोपवीती प्राङ्मुखो दैवपात्रयोः 'शन्नो देवीः' इति प्रत्येकं शन्नोमन्त्रेण जलं देवतीर्थेनाऽऽसिच्य 'यवोसि' इति यवान् 'गन्धद्वाराम्' इति चन्दनं 'ॐ ओषधयः प्रति' इति पुष्पं प्रक्षिप्य 'देवार्घपात्रसम्पत्तिरस्तु' इत्युक्त्वा प्राचीनावीती पैत्रार्घपात्रेषु 'शन्नो देवीः' इति प्रत्येकं पितृतीर्थेन जलमासिच्य तेनैव 'तिलोऽसि' इति तिलान् क्षिप्त्वा प्राग्वद्गन्धपुष्पं क्षिप्त्वा 'पैत्रार्घपात्रसम्पत्तिरस्तु' इत्युक्त्वोपवीती दैवविप्राग्रतः 'स्वाहाऽर्घाः' इत्यर्घपात्रे प्रत्येकं निधाय प्राचीनावीती पैत्रविप्राग्रतः 'स्वधा अर्घा इति तदर्घपात्राणि प्रत्येकं न्यस्योपवीत्युदङ्मुखो दैवविप्रपाणावपो दत्त्वा तस्मिन्प्रागग्रे अर्घस्थपवित्रे निधाय प्राग्वत्तदङ्गं संपूज्य हस्ताभ्यामर्घपात्रमुद्धृत्य 'या दिव्याः' इत्युक्त्वा विश्वेदेवा एष वोऽर्घः इत्यर्घोदकं विप्रदक्षिणहस्ते क्षिप्त्वा पुनरपो दत्त्वाऽर्घपात्रमधो निदध्यात्। ततो द्विजः 'स्वर्घः' इत्युक्त्वा पवित्रे अर्घपात्रोपरि निदध्यात्। ततः कर्ता प्राग्वदितरत्राप्यर्घान्तरं दद्यात्तत्रैकविप्रपक्षेऽर्घद्वयमपि तत्रैव दत्त्वा प्राचीनावीती दक्षिणामुखः पैत्रद्विजहस्तेऽपो दत्त्वा तस्मिन्नर्घस्थपवित्राणि दक्षिणाग्राण्याधाय प्राग्वन्मूर्द्धादिपादान्तं संपूज्य हस्ताभ्यामर्घपात्रमादाय 'या दिव्याः' इत्युक्त्वा 'अस्मत्पितः अमुकशर्मन्नमुकगोत्र वसुरूप सपत्नीक एष तेऽर्घ इत्युक्त्वा पितृतीर्थेनार्घोदकं विप्रहस्ते क्षिप्त्वाऽपो दत्त्वा 'अस्मत्पितामह रुद्ररूप प्रपितामहादित्यरूप' इत्याद्युत्तरत्राप्येवमेवार्घं दत्त्वा मातामहादीनामपि तथैव दद्यात्। वर्गद्व-

सेऽप्येकैकविप्रपक्षे त्वेकैकस्यैव हस्ते त्रीन् त्रीनर्घ्यान् दद्यात् । वर्गद्वयेऽप्येककविप्रपक्षे तद्धस्त एव षडपि दद्यात् । एकैकस्यानेकविप्रपक्षेऽप्येकमेव पित्राद्यर्घ्यं तावद्विगृह्य दद्यात् ।

## संस्रवग्रहणम् ।

अथाऽद्यार्घपात्रे सर्वार्घसंस्रवानासिच्योत्तरतः 'शुन्धन्ताम्' इति भूमिं प्रोक्ष्य 'पितृसदनमसि' इति दक्षिणाग्रकुशैरास्तीर्य तत्र 'पितृभ्यः स्थानमसि' इत्याद्यर्घपात्रं दक्षिणाग्रं न्युब्जीकृत्य गन्धपुष्पधूपदीपैस्तदर्च्योपवीती प्राङ्मुखो मुखमार्जनादिकां पात्रान्तरस्थापितसंस्रवप्रतिपत्तिं कृत्वोदङ्मुखो दैवद्विजहस्ते अपो दत्त्वा 'गन्धद्वाराम्' इति मन्त्रमुक्त्वा पुरूरवार्द्रवसञ्ज्ञका विश्वे देवा अमी गन्धा वः स्वाहा इति प्रतिद्विजं द्विवारं चन्दनं दत्त्वा पुनरपो दत्त्वा 'ओषधयः प्रति' इति पूर्ववत्पुष्पं दत्त्वा अपो दत्त्वा 'धूरसि' इति धूपं दत्त्वा अपो दत्त्वा 'उद्दीप्यस्व' इति दीपं दत्त्वा अपो दत्त्वाऽऽच्छादनं दत्त्वा अपो दत्त्वा यथाविभवमलङ्कारपादुकोपानच्छत्रजलपात्रादीनि नाममन्त्रेण यवोदकपूर्वं पदार्थानुसमयेन दत्त्वा 'सुचन्दनं सुपुष्पम्' इत्येवं प्रत्युक्ते 'वैश्वदेविकमर्चनं सम्पूर्णमस्तु सङ्कल्पसिद्धिरस्तु इति चोक्त्वा प्राचीनावीती दक्षिणामुखः पैत्रद्विजहस्ते अपो दत्त्वा 'गन्धद्वाराम्' इति मन्त्रं पठित्वा अस्मत्पितरः अमुकशर्माणः अमुकगोत्रा वसुरूपाः सपत्नीका अमी गन्धा वः स्वधा इति 'एकवचनेन वा' गन्धं दद्यादेवमितरत्र यथालिङ्गम् । ततः पूर्ववदोषधयः प्रति इति पुष्पं दत्त्वा 'धूरसि' इति पाददेशे धूपं दत्त्वा' उद्दीप्यस्व' इति मुखदेशे दीपं दत्त्वा 'युवं वस्त्राणि' इत्याच्छादनं दत्त्वा यथाशक्त्यलङ्कारादि नाममन्त्रेण दद्यात् । सुगन्धा इत्यादिविप्रोक्तिः पूर्ववत् । एवं पितामहप्रपितामहमातामहानाम् । ततः कर्ता 'पित्र्यमर्चनं सम्पूर्णमस्तु सङ्कल्पसिद्धिरस्तु' इत्युक्त्वा तैः 'तथास्तु' इति प्रत्युक्ते 'चतुर्भिश्च' इति 'यस्य स्मृत्या' इति च वदेत् । अथोपवीती वैश्वदेविकविप्रान्तिकभूमिं संशोध्य गोमयेन नैर्ऋतीं दिशमारभ्यैशानीपर्यन्तं प्रादक्षिण्येन चतुरस्रं चिन्हमुपलिप्य पुनस्तथैवोपलिप्य तत्र प्रागग्रं कुशयवान्निक्षिपेत् । एवमितरत्र । ततः प्राचीनावीती पित्रर्थविप्रान्तिकभूमिं संशोध्य गोमयेनैशानीं दिशमारभ्य नैर्ऋतीदिक्पर्यन्तं वृत्तं चिन्हं कृत्वा पुनस्तथैव कृत्वा तत्र दक्षिणाग्रकुशतिला-

न्निक्षिप्य दशवारं भस्मादिमार्जिततैजसादिभोजनभाजनानि निधाय जलेन प्रक्षाल्य तज्जलं सतिलदर्भं पैत्रद्विजपादक्षालनमण्डले निनयेत् । तत उपवीती दैवद्विजाग्रतस्तथैव भाजनानि निधाय जलेन प्रक्षाल्य तदुदकं सयवकुशं दैवद्विजपादक्षालनमण्डले निनयेत् । तत आचारात्सर्वत्र पात्राण्यभितो भस्मना मर्यादां कृत्वा द्विजानां करशुद्धिं पात्रे निधाय तज्जलं सतिलकुशं मण्डलोपरि निक्षिपेत् । ततोऽपहता असुराः इति यज्ञोपवीती दैवपात्रोपरि, प्राचीनावीती पितृपात्रोपरि च तिलान्विकीर्य जलमुपस्पृशेत् । ततः पात्रे अन्नमुद्धृत्याभिघार्याग्नौकरिष्ये इति पृष्ट्वा 'कुरुष्व' इति तैरनुज्ञातः स्मार्ताग्निं परिस्तीर्य तत्र तिस्रः समिध आधायोपवीती 'अग्नये सोमाय' इति आहुतिद्वयं मेक्षणेन हुत्वा प्राचीनावीती मेक्षणमग्नौ प्रक्षिप्याग्नौकरणशेषं पितृविप्रभाजने परिविष्यात् न दैवपात्रेषु । तत उपवीती दैवपात्रे प्राचीनावीती पितृपात्रेषु घृतमुपस्तीर्योपवीती स्वयं पत्नी वा दैवपूर्वं परिवेषणं कुर्यात् । ततः कर्तोपवीत्युदङ्मुखो दर्भैः पात्राण्युपस्तीर्य यवान्विकीर्य दक्षिणं जान्वाच्य दैवपात्रे परिविष्टमन्नं सावित्र्या अभ्युक्ष्य तूष्णीं पर्युक्ष्य वामोपरि दक्षिण इत्येवं स्वस्तिकाकाराभ्यामनुत्तानाभ्यां हस्ताभ्यां पात्रमधोऽभिगृह्य 'पृथिवी ते पात्रम्' इत्यादि 'स्वाहान्तं' 'ब्राह्मणानां त्वा' इत्यादि च जपित्वा 'इदं विष्णुर्वि' इति मन्त्रान्ते 'विष्णो हव्यं रक्षस्व' इत्युक्त्वा दक्षिणहस्तेन विप्रदक्षिणकराङ्गुष्ठमधोमुखमन्नेऽवगाह्य 'अपहता' इति प्रदक्षिणं यवान्विकीर्य यवोदकमादाय इदमन्नममृतरूपं परिविष्टं परिवेक्ष्यमाणं चातृप्तेर्भोजनपर्याप्तं तत्सर्वं विश्वेदेवा वः स्वाहा नमो न मम' इत्युक्त्वा वामोपरिदक्षिणकरेण विप्रदक्षिणतस्तज्जलं क्षिपेत् । एवमितरत्र कृत्वा प्राचीनावीती दक्षिणामुखः सव्यं जान्वाच्य पितृपात्रस्थमन्नं सावित्र्याऽभ्युक्ष्याद्भिः पात्रेषु तिलान्विकीर्य तूष्णीं पर्युक्ष्य दक्षिणोपरि वाम इत्येवं स्वस्तिकाकाराभ्यामुत्तानाभ्यां पाणिभ्यां पितृपात्रमालभ्य 'पृथिवी' इत्यादि 'स्वधान्तं' 'ब्राह्मणानां त्वा' इत्यादि च जप्त्वा 'इदं विष्णुर्वि' इति मन्त्रान्ते विष्णो कव्यं रक्षस्वेत्युक्त्वा दक्षिणहस्तेन विप्रदक्षिणहस्ताङ्गुष्ठमुत्तानमन्ने निवेश्य स्वस्थाने कृत्वा सतिलकुशोदकं खड्गपात्रं दक्षिणहस्तेन गृहीत्वा वामहस्तेन पात्रमालभ्य 'इदमन्नम्' इत्यादि 'तत्सर्वम्' इत्यन्तं पूर्ववदुक्त्वा 'अस्मत्पितरः अमुकशर्माणः अमुकगोत्रा वसुरूपाः सपत्नीका वः स्वधा नमो न मम'

इत्युक्त्वा वामाधोनीतदक्षिणकरेण विप्रवामभागे जलं क्षिपेत् । एवं सर्वेभ्यो यथालिङ्गं दत्त्वा—

ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना ॥

येषामुद्दिष्टं तेषामक्षय्या तृप्तिरस्तु पितृरूपी जनार्दनः प्रीयताम्, इत्युक्त्वोदकं भूमौ क्षिप्त्वा नमस्कृत्वा—

ईशानविष्णुकमलासनकार्तिकेय-
वन्हित्रयार्करजनीशगणेश्वराणाम् ।
क्रौञ्चामरेन्द्रकलशोद्भवकाश्यपानां
पादान्नमामि सततं पितृमुक्तिहेतून् ॥
अन्नहीनं क्रियाहीनं भक्तिहीनं द्विजोत्तमाः ।
श्राद्धमच्छिद्रमस्त्वेतत्प्रसादाद्भवतां मम ।"

इति विप्रान्संप्रार्थ्य 'तथास्तु' इति तैः प्रत्युक्तः पितृपूर्वं विप्रकरेषु जलं दद्यात् । विप्राश्च तेन जलेनान्नं प्रोक्ष्य त्रिर्गायत्र्याऽभिमन्त्रयेरन् । ततः कर्ता पुनः पितृपूर्वकमेवापोशानार्थमुदकं दत्त्वा 'अमृतमस्तु' इत्युक्त्वा 'सप्रणवव्याहृतिपूर्वां गायत्रीं मधुवाता इति तृचं च जप्त्वा मधुमधुमधु इति च त्रिरुक्त्वा 'ये देवासः' इति देवद्विजाग्रतः सयवकुशं जलं निषिच्य 'सङ्कल्पसिद्धिरस्तु' इत्युक्त्वा 'ये चेह पितरः' इति पित्र्यद्विजाग्रतः सतिलकुशं जलं निषिच्य 'संकल्पसिद्धिरस्तु' इत्युक्त्वा ॐतत्सत्' इति 'यथासुखं भुञ्जीध्वम् । इति च त्रिरुक्त्वा प्रणम्य'

पिता पितामहश्चैव तथैव प्रपितामहः ।
तृप्तिं प्रयान्तु वै भक्त्या यदिदं श्राद्धमाहृतम् ॥
मातामहस्तृप्तिमुपैतु तस्य
तथा पिता तस्य पिता च योऽन्यः ।
विश्वे च देवाः परमां प्रयान्तु
तृप्तिं प्रणश्यन्तु च यातुधानाः ॥

तथा—

'सप्तव्याधा० येस्मजाता० अमूर्तानां च । चतुर्भिश्च०' तथा—

यज्ञेश्वरो हव्यसमस्तकव्य-
भोक्ताऽव्ययात्मा हरिरीश्वरोऽत्र ।
तत्सन्निधानादपयान्ति सद्यो

रक्षांस्यशेषाण्यसुराश्च सर्वे ॥
त्वां योगिनश्चिन्तयन्ति त्वां यजन्ति च याज्ञिकाः ।
हव्यकव्यभुगेकस्त्वं पितृदेवस्वरूपधृक् ॥
गयायां पितृरूपेण स्वयमेव जनार्दनः ।
तं दृष्ट्वा पुण्डरीकाक्षं पितॄणामनृणो भवेत् ॥

इत्यादि पठेत् । ततो विप्रा नित्यभोजनवत्परिषेचनं कृत्वा बलिदानमकुर्वन्तोऽपः पीत्वा कर्त्रा 'श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि शिवोमाविशा प्रदाहाय प्राणाय स्वाहा' इत्यादिमन्त्रेषूच्यमानेषु प्राणाहुतीः पृथक् हुत्वा पुनः 'श्रद्धायाम्' इत्यादि पञ्चयजुःषु 'ब्रह्मणि म आत्माऽमृतत्वाय' इति चोच्यमानेषु ता आहुतीराप्याय्य कृतमौनाः भूमौ पादौ निक्षिपन्तः सशेषमश्नीयुः । कर्ता प्राणाहुतिमन्त्रपाठानन्तरं 'यथासुखं जुषध्वम्' इत्युक्त्वा 'सप्रणवां सव्याहृतिकां गायत्रीं त्रिः सकृद्वोक्त्वा' 'कृणुष्वपाजः' इति पञ्चदश 'अग्नये कव्यवाहनाय' इत्यादि च 'सहस्रशीर्षा' इति षोडश 'आशुः शिशान' इति सप्तदश रुद्रप्रभृतीन्यन्यानि च पवित्राणि ब्राह्मणान् श्रावयेत् । ततस्तृप्तान् ज्ञात्वा वैश्वदेविकमुख्यविप्रसन्निधौ प्रोक्षितभूमौ यवकुशं निधाय तत्र हस्ते घृतप्लुतमन्नमादाय—

असोमपाश्च ये देवा यज्ञभागविवर्जिताः ।
तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविकम् ॥

इति क्षिप्त्वा प्राचीनावीती पितृसन्निधिभूमिं प्रोक्ष्य तत्र दक्षिणाग्रान्कुशानास्तीर्य तिलमिश्रोदकं तूष्णीमासिच्य तिलघृतप्लुतमन्नमादाय जलेनाप्लाव्य 'अग्निदग्धा' इति पितृतीर्थेन क्षिप्त्वा—

येऽग्निदग्धाः कुले जाता येऽप्यदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥

इति तस्योपरि पितृतीर्थेन तिलाम्बु निषिच्य त्रिराचम्य पितृपूर्वं विप्रेभ्यः सकृज्जलं दत्त्वा 'सप्रणवां सव्याहृतिकां गायत्रीं मधुमतीः मधु इति च' त्रिः श्रावयित्वा 'तृप्ताः स्थ' इति विप्रान् पृष्ट्वा 'तृप्ताः स्म' इति तैरुक्तः 'श्राद्धं संपन्नम्' इति पृष्ट्वा 'सुसंपन्नम्' इत्युक्तः 'शेषोऽप्यस्ति किं क्रियताम्' इत्युक्त्वा विप्रैः 'इष्टैः सह भुज्यताम्' इत्युक्तो 'देवताभ्यः' इति त्रिर्जप्त्वा विप्रेष्वनाचान्तेष्वेव पिण्डार्थं माषवर्जं सर्वस्मादन्नात्किञ्चित्किञ्चिदुद्धृत्य पिण्डान्निर्वपेदाचान्तेषु वा । तद्यथा द्विराचम्य

वाग्यतो दक्षिणामुखः प्राचीनावीती पित्र्यब्राह्मणान्तिक उत्तरत उपविश्य 'अपहता असुरा रक्षांसि वेदिषदः' इति मन्त्रावृत्त्या सव्योत्तरपाणिद्वयगृहीतेन कुशमूलेन दक्षिणसंस्थं पश्चिमापवर्गं लेखाद्वयमुल्लिख्य तत्प्रत्येकमद्भिरभ्युक्ष्य 'ये रूपाणि' इति मन्त्रेणाग्नौकरणाधिकरणभूतस्य दक्षिणाग्र्यादेरुल्मुकं रेखादक्षिणतो निधाय रेखां सकृदाच्छिन्नैः कुशैराच्छाद्य वामं जान्वाच्य पितृपिण्डार्थमास्तीर्णबर्हिषि त्रिषु स्थानेष्वाग्नेय्यपवर्गं 'पितरमुकशर्मन्नमुकगोत्र वसुरूप सपत्नीकावनेनिक्ष्व' इति मन्त्रैः सतिलं जलं पितृतीर्थेन निनीय मातामहार्थमास्तीर्णबर्हिषि त्रिषु स्थानेषु 'मातामहामुकशर्मन्नमुकगोत्र वसुरूप सपत्नीकावनेनिक्ष्व' इति मन्त्रैः सतिलजलं पितृतीर्थेन निनीय—

शुक्लाम्बराः शुक्लगन्धाः शुक्लयज्ञोपवीतिनः ।
आत्मनोऽभिमुखासीना ज्ञानमुद्रा निरायुधाः ॥
वसवः पितरो ज्ञेया रुद्रास्तत्र पितामहाः ।
पितुः पितामहाः प्रोक्ता आदित्या बर्हिषि स्थिताः ॥

इति तत्रस्थान्वस्वादिदेवान् ध्यात्वा तिथ्यादि संकीर्त्य 'पितृप्रीत्यर्थं पिण्डदानं करिष्ये' इति सङ्कल्प्य 'कुरुष्व' इति तैः प्रत्युक्तः पिण्डार्थमुद्धृतस्यान्नस्याऽऽर्द्रामलकप्रमाणं मधुसर्पिस्तिलसमन्वितं वर्तुलं पिण्डषट्कं कृत्वा प्रत्येकमभिघार्यैकं पिण्डमादाय 'एतत्ते अस्मत्पितरमुकशर्मन्नमुकगोत्र वसुरूप सपत्नीक विष्णो ये च त्वामत्रानु तेभ्यश्च' इत्युक्त्वाऽऽद्यजलसेचनस्थाने पितृतीर्थेनाभिक्षिप्य 'अस्मत्पित्रेऽमुकशर्मणेऽमुकगोत्राय वसुरूपाय सपत्नीकायायं पिण्डः स्वधा नमो न मम ये च त्वामत्रानु तेभ्यश्च गयायां श्रीरुद्रपदे दत्तमस्तु' इत्युच्चरेत् । एवं सर्वेभ्यस्तत्तज्जलसेचनस्थानेषु यथालिङ्गं दद्यात् । ततः पिण्डपात्रं न्युब्जीकृत्य त्रिराचम्य 'अत्र पितरो मादयध्वं यथाभागमावृषायध्वम्' इति जप्त्वाऽऽचम्याप्रदक्षिणमुदङ्ङावृत्य प्राणानायम्य प्रत्यावृत्य 'अमीमदन्त पितरो यथाभागमावृषायीषत' इति जप्त्वा पूर्ववत्पित्रादिपिण्डेषु 'पितरमुकशर्मन्नमुकगोत्र वसुरूप सपत्नीक प्रत्यवनेनिक्ष्व' इति मन्त्रैः तिलोदकं निषिच्य पूर्वबद्धनीवीं विस्रस्य दर्भेण तैलमादाय 'अस्मत्पितरमुकशर्मन्नमुकगोत्र वसुरूप सपत्नीक अभ्यङ्क्ष्व' इति तैलं निक्षिपेत् । एवं यथालिङ्गं सर्वत्र निक्षिप्याप उपस्पृश्य दर्भेणांजनमादाय पूर्ववदुक्त्वा 'अङ्क्ष्व' इति द्विरावृत्तेन मन्त्रेणांजनं निक्षि-

प्याप उपस्पृश्य 'नमो वः' इति षण्मन्त्रान् 'गृहान्नः' इति जप्त्वा मधुघृततिलोदकयुक्तपात्रेण पिण्डेष्वर्घं दत्त्वा 'एतद्वः पितरो वासः मानोतोऽन्यत्पितरो युङ्ध्वम्' इति प्रतिपिण्डं मन्त्रावृत्त्या वासो त्र्यङ्गुलं नववासोदशां त्रिगुणसूत्रमूर्णास्तुकान्वा दद्यात्। पञ्चाशद्वर्षताया उर्ध्वं चेद्धृदयस्थं प्रकोष्ठस्थं वा लोम वासोर्थं दद्यात्। ततो गन्धादिभिः पिण्डानभ्यर्च्य पुनः पितृपूर्वं विप्रेभ्यः प्रत्येकमाचमनजलं दद्यात्। ततो विप्रा भुक्तशेषमन्नं भोजनपात्रेभ्यो बहिःकृत्य 'अमृतापिधानमसि' इत्यर्द्धजलं पीत्वाऽर्द्धम्—

रौरवे पूयनिलये पद्मार्बुदनिवासिनाम्।
अर्थिनामुदकं दत्तमक्षय्यमुपतिष्ठतु॥

इति भूमावासिच्य तत्रस्था एव पात्रान्तरे हस्तादीन्संशोध्य द्विराचमेयुः। ततः कर्ता त्रिराचम्य पिण्डान्नमस्कृत्य 'सुप्रोक्षितमस्तु' इति भूमिमासिच्य पितृपूर्वं द्विजहस्तेषु प्रदक्षिणं प्रत्येकं 'शिवा आपः सन्तु' इत्युदकं दत्त्वा तथैव 'सौमनस्यमस्तु' इति पुष्पाणि दत्त्वा 'अक्षतं चारिष्टं चास्तु' इति यवान् तथैव दत्त्वा 'विश्वेषां देवानां यद्दत्तं श्राद्धं तदक्षय्यमस्तु' इत्युक्त्वा 'अस्त्वक्षय्यम्' इति प्रत्युक्तः प्राचीनावीती 'अस्मत्पितुरमुकशर्मणोऽमुकगोत्रस्य वसुरूपस्य सपत्नीकस्य यद्दत्तं श्राद्धं तदक्षय्यमस्तु' इति प्रत्येकं प्रत्येकमुक्त्वा 'अस्त्वक्षय्यम्' इति तैरुक्तो 'येषामुद्दिष्टं तेषामक्षय्यमस्तु' इत्युक्त्वोपवीती 'अघोराः पितरः सन्तु' इत्युक्त्वा 'सन्त्वघोराः पितरः' इत्युक्तः 'अमुकगोत्रोऽहमभिवादये' इत्यभिवाद्य 'अस्मद्गोत्रं वर्द्धताम्' इत्युक्त्वा 'स्वस्ति वर्द्धतां वो गोत्रम्' इति तैः प्रत्युक्तो दक्षिणामुखः 'दातारो नोऽभिवर्द्धन्ताम्' इति श्लोकद्वयमुक्त्वा विप्रैः 'दातारो वोऽभिवर्द्धन्ताम्' इत्येवं श्लोकद्वयमुक्त्वा—

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च।
प्रयच्छन्तु तथा राज्यं प्रीता नृणां पितामहाः॥

'एताः सत्या आशिषः सन्तु' इति पठित्वाऽक्षतपुष्पे दत्ते स्वस्य तिलकं कृत्वा तदक्षतपुष्पं शिरसि निक्षिप्य कुशपवित्राणि पिण्डोपरि क्षिप्त्वा 'स्वधां वाचयिष्ये' इति पृष्ट्वा 'वाच्यताम्' इत्यनुज्ञातः 'अस्मत्पित्रादिभ्यो मातामहादिभ्यश्च तत्तन्नामगोत्ररूपेभ्यः सपत्नीकेभ्यः स्वधोच्यताम्' इत्युक्त्वा 'अस्तु स्वधा' इति तैरुक्तः 'स्वधाः संपद्यन्ताम्' इत्युक्त्वा 'संपद्यन्तां स्वधा' इत्युक्तः पवित्रान्तर्हितपिण्डोपर्यवनेजनोदकशेषम्

'ऊर्जं वहन्ति' इति सर्वं निनीय प्राङ्न्युब्जीकृतमर्घपात्रं पिण्डपात्रं चोत्तानं कृत्वा पित्रर्थविप्रेभ्यो नामगोत्ररूपोक्तिपूर्वकं श्राद्धसाद्गुण्यार्थं दक्षिणां संप्रददे इत्युक्त्वा पितृतीर्थेन सतिलां दक्षिणां दत्त्वा 'दक्षिणाः पान्तु' इत्युक्त्वा 'पान्तु दक्षिणाः' इति तैः प्रत्युक्त एवं देवस्थानोपविष्टविप्राभ्यां दैवतीर्थेन सयवोदकसुवर्णवस्त्रधान्यादिष्वन्यतमां दक्षिणां शक्त्यनुसारतो दत्त्वा 'विश्वे देवाः प्रीयन्ताम्' इत्युक्त्वा दैवद्विजहस्ते यवोदकं क्षिप्त्वा 'प्रीयन्तां विश्वे देवाः' इत्युक्तः प्राचीनावीती 'पितरः प्रीयन्ताम्' इत्युक्त्वा तिलोदकं पित्र्यद्विजहस्तेषु क्षिप्त्वा 'प्रीयन्तां पितरः' इति तैरुक्तः 'पितृभ्यः स्वधायिभ्यः' इति पित्र्यपिण्डान् 'नमो वः' इति मातामहपिण्डानभ्यर्च्य—

पिता पितामहश्चैव तथैव प्रपितामहः ।
तृप्तिं प्रयान्तु पिण्डेन मयादत्तेन भूतले ॥
मातामहस्तत्पिता च पिता तस्यापि तृप्यतु ।
द्विजानां तर्पणाद्धोमात् पिण्डदानाच्च मे सदा ॥

इति जप्त्वा 'क्षमध्वम्' इति पिण्डान् चालयित्वोपवीती हस्ताभ्यां पिण्डानादायावघ्रायाऽऽचम्य प्राचीनावीती पिण्डार्थदर्भानावसथ्ये क्षिप्त्वा स्वयं सुतः शिष्यो वा पितृपात्रं चालयित्वोपवीती दैवपात्रं प्रक्षाल्य संचरमभ्युक्ष्य प्राचीनावीती 'पित्रादिभ्यो मातामहादिभ्यः स्वस्तीति ब्रूत' इत्युक्त्वा 'स्वस्ति' इति तैरुक्त उपवीती विश्वेभ्यो देवेभ्यः स्वस्ति भवन्तौ ब्रूतम्' इत्युक्त्वा स्वस्ति' इति ताभ्यामुक्तो 'यन्न्यूनं यदतिरिक्तं तत्सर्वं संपूर्णमस्तु' इत्युक्त्वा 'संपूर्णमस्तु' इति तैरुक्ते—

मन्त्रहीनं क्रियाहीनं संपद्धीनं द्विजोत्तमाः ।
श्राद्धं संपूर्णतां यातु प्रसादाद्भवतां मम ॥

'चतुर्भिश्च' इति 'यस्य स्मृत्या' इति च जप्त्वा 'देवताभ्यः' इति त्रिः पठित्वा 'आमावाजस्य' इति कनिष्ठपूर्वकं विप्रान् त्रिः प्रदक्षिणीकृत्य नमस्कुर्यात्ततस्तान्विप्रान् सुखासन उपवेश्य ताम्बूलादिकं दत्त्वा—

अद्य मे सफलं जन्म भवत्पादाब्जवन्दनात् ।
अद्य मे वंशजाः सर्वे याता वोऽनुग्रहाद्दिवम् ॥
पत्रशाकादिदानेन क्लेशिता यूयमीदृशाः ।
तत्क्लेशमिह संजातं विस्मृत्य क्षन्तुमर्हथ ॥

इत्यादि संप्रार्थ्य जानुभ्यामवनिं गतः प्रणिपत्य विसृज्य गच्छतो द्विजाननुव्रज्य तैरनुज्ञातः प्रत्यागत्य हस्तेन दीपान् प्रशमय्य द्विराचम्य ग्रहबलीन्कृत्वा बन्धुभिः सहानुमोदितो भुञ्जीत, इति दिक् । इति श्राद्धप्रयोगः ।

---

## अथ तर्पणम् ।

गर्गः—

पूर्वं तिलोदकं कृत्वा अमाश्राद्धं तु कारयेत् ।
प्रत्यब्दे न भवेत्पूर्वं परेऽहनि तिलोदकम् ॥
पक्षश्राद्धे हिरण्ये च अनुव्रज्य तिलोदकम् ॥ इति ।

'कारयेत्' इत्यत्र 'एतयाऽन्नाद्यकामं याजयेत्' इतिवण्णिजविवक्षा । हिरण्ये हिरण्यश्राद्धे । अत्र चत्वारि वाक्यानि । 'प्रत्यब्दे न भवेत्पूर्वम्' इत्यस्यानुवादत्वात् । पूर्ववाक्ये तिलोदकविशिष्टममावास्याश्राद्धं विधीयते । न चामावास्याश्राद्धे तर्पणोत्तरकालो विधीयते । स ह्येकविधिपरिगृहीतानां 'पुरस्तादुपसदां प्रवर्ग्येण चरन्ति' इत्यादीनां, स्वतन्त्राणां 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यादीनां वा दृष्टः । नचान्याङ्गोत्तरकालता कस्यचित्प्रधानस्य दृष्टा । ननु 'एतया पुनराधानसम्मितयेष्ट्येष्ट्वाऽग्निहोत्रं जुहोति' इत्यत्र 'ज्योतिष्टोमाङ्गभूतोदवसनीयोत्तरकालताऽग्निहोत्रस्य दृष्टा' इति चेन्न, तत्रावभृथोत्तरं दीक्षोन्मोकेऽग्निहोत्रे प्राप्ते उदवसानीयोत्तरत्वमवधिमात्रं समर्प्यते न तदुत्तरकालोऽङ्गम् । अन्यथा यथाशक्त्युपबन्धेनोदवसानीयायामकृतायामनुपादेयकालस्यात्याज्यत्वादग्निहोत्राननुष्ठानप्रसङ्गात् । यदि काप्यदृष्टमेवाङ्गीक्रियेत तदा दूरस्थश्राद्धानुवादेन कालस्य विधातुमशक्तेः प्रकरणान्तरेणामावास्याश्राद्धं भिद्येत । अतो गर्गस्मृतौ अमावास्याश्राद्धमत्र विधीयते तस्यां स्मृतावमावास्याश्राद्धविधायकं वाक्यमस्तीति चेन्न तादृशस्यानुपलम्भात् । सत्त्वे वाऽस्य प्रयोगविधिपरत्वात् । अतः पूर्वोक्तमेव युक्तम् । ततश्च तस्य प्रकृतित्वेन प्रत्यब्दे प्राप्ते तिलोदके परेऽहनि इति कालमात्रविधिः । 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इतिवत् । एवमग्रेऽपि । तथा चानन्यगतिकं लिङ्गं बृहन्नारदीये दृश्यते—

---

१ अनुव्रज्येति पाठः ।

वृद्धिश्राद्धे सपिण्ड्यां च प्रेतश्राद्धेऽनुमासिके ।
संवत्सरविमोके च न कुर्यात्तिलतर्पणम् ॥ इति ।

अयं च निषेधः प्राप्तौ सत्यां घटते । कालार्थ सम्बन्धे हि प्राप्त्य-भावादन्यस्य चाविधेयत्वाद्वाक्यं व्यर्थं स्यात् । सप्तमी चाङ्गत्व एव दृष्टा, 'येन कर्मणेर्त्सेत्तत्र जयाञ्जुहुयात्' इत्यादिषु । एतदभिप्रायेण सङ्ग्रहकृताऽप्युक्तम् 'प्रत्यब्दाङ्गं तिलं दद्यात्' इति । तथा बृहन्नारदीय एव वार्षिकं प्रक्रम्य—

परेद्युः श्राद्धकृन्मर्त्यो यो न तर्पयते पितॄन् ।
तस्य ते पितरः क्रुद्धाः शापं दत्त्वा व्रजन्ति हि ॥

इति निन्दा दृश्यते । न चेयं नित्यतर्पणाकरणनिन्दा अन्य-प्रकरणेऽन्यस्याकरणनिन्दाया अयोग्यत्वात् । पक्षश्राद्धाङ्गतर्पणे विशेषो गर्गेणोक्तः—

कृष्णे भाद्रपदे मासि श्राद्धं प्रतिदिनं भवेत् ।
पितॄणां प्रत्यहं कार्यं निषिद्धाहेऽपि तर्पणम् ॥ इति ।

प्रत्यब्देऽपि विशेषः स्मृत्यन्तरे—

नैव श्राद्धदिने कुर्यात्तिलैस्तु पितृतर्पणम् ।
श्राद्धं कृत्वा परेऽह्न्येव तर्पणं तु तिलैः सह ॥ इति ।

अत्र पूर्वार्द्धमुत्तरार्द्धस्य स्तावकम् । उत्तरार्द्धेन पूर्वार्द्धार्थस्य प्राप्तेरे-कवाक्यत्वलाभाच्च । तदयं निर्णयः । श्राद्धस्य व्यहकालत्वे नित्यतर्प-णस्य तन्त्रमध्यपातित्वात्तेनैव प्रसङ्गसिद्धिः । सद्यस्कालपक्षेऽप्येवम् । अन्याङ्गैरन्याङ्गानां प्रसङ्गसिद्धेः पशुपुरोडाशादावभ्युपगमात् । यत्तु यदा त्वनायत्त्या नित्यतर्पणोत्तरं श्राद्धसंकल्पस्तदा पृथक्कार्यं, नित्यस्य प्रयोगानन्तःपातित्वादिति तन्न, क्त्वाप्रत्ययेन प्रयोगबहिर्भूताङ्गानुष्ठा-नस्यारम्भणीयाबृहस्पतिसवादावभ्युपगमात् । अतः इदमपि प्रयोगब-हिर्भूतमेवाङ्गं पूर्वं कार्यम् । अतश्च प्रसङ्गानुष्ठानमविरुद्धम् । अतो न पृथक्तर्पणं दर्शे । यदा तु सप्तम्यादौ नित्यतर्पणं तिलरहितं क्रियते तदा तन्त्रप्रसङ्गयोरभावादिदं तिलसहितं पृथक्कार्यमेव इति । वार्षिकदिने विशेषं स्मृतिरत्नावल्यां वृद्धमनुराह—

सप्तम्यां भानुवारे च मातापित्रोः क्षयेऽहनि ।
तिलैर्यस्तर्पणं कुर्यात्स भवेत्पितृघातकः ॥ इति ।

इदं च तर्पणं प्रस्तरप्रहरणे देवताकीर्तनवत् सन्निपत्योपकारकम्। अत एव यद्दैवत्यं श्राद्धं तद्दैवत्यमेव भवति। वार्षिके विधिरुक्तः सङ्ग्रहे—

स्नात्वा तीरं समागत्य उपविश्य कुशासने।
संतर्पयेत्पितॄन्सर्वान् स्नात्वा वस्त्रं च धारयेत्॥ इति।

अत्र स्नानोत्तरं सन्ध्यामकृत्वैव तर्पणं कार्यमिति केचित्। तच्चिन्त्यम्, 'सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु' इति वाक्यात्। नच तर्पणपर्यन्तं श्राद्धप्रयोगानुवृत्तेर्मध्ये सन्ध्या नानुष्ठेयेति वाच्यम्। श्राद्धदिने सायंसन्ध्याननुष्ठानप्रसक्तेः। ततश्च स्नानसन्ध्यादीनां सर्वकर्मार्थत्वेन प्राप्तेरुपवेशनस्यापि सामान्यतः प्राप्तेः कुशासनं तर्पणोत्तरं स्नानं च विधीयते इति युक्तम्। पक्षश्राद्धे हिरण्ये च ब्राह्मणविसर्जनोत्तरं तर्पणं कार्यं, सकृन्महालये तु वार्षिकवत्परेद्युरेव। 'सकृन्महालये श्वः स्यादष्टकास्वन्त एव हि' इति वाक्यात्। अन्ते विसर्जनान्ते। अष्टकाविकृतिभूतमाघ्यावर्षादिश्राद्धेऽप्यन्त एव। अष्टकाश्राद्धाङ्गसप्तम्यान्वष्टक्ययोर्दर्शविकृतित्वात्पूर्वमेव तर्पणं तद्विकृतित्वानङ्गीकारे तु तर्पणाननुष्ठानमेव तीर्थादावपि दर्शवदेव। यत्तु वाक्यम्—

विवाहव्रतचूडासु वर्षमर्द्धं तदर्द्धकम्।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम्॥ इति।

तन्महालयाष्टकाव्यतिरेकेण द्रष्टव्यम्।

तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके।
निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम्॥

इति वचनात्। तिथिविशेषोऽष्टकादिः। यत्तु—

पित्रोः क्षयाहे संप्राप्ते यः कुर्यान्नित्यतर्पणम्।
आसुरं तर्पणं ज्ञेयं तत्तोयं रुधिरं भवेत्॥
सर्वदा तर्पणं कुर्याद्ब्रह्मयज्ञपुरस्सरम्।
मृताहे नैव कर्तव्यं कृतं चेन्निष्फलं भवेत्॥

इति पठन्ति तन्निर्मूलमेव। समूलत्वेऽपि सतिलतर्पणनिषेधपरम् पूर्वलिखितवाक्यानुरोधात्। अन्योऽपि विशेषः। दक्षः—

ज्येष्ठभ्रातृपितृव्यज्येष्ठसपत्नीमातरस्तथा।
एतेषां च[1] मृताहे न व्यपोहति तिलोदकम्॥

---

१ 'तु मृताहे तु परेद्युनि' इति पाठः।

कपिलः—

मन्वादिषु युगाद्यासु दर्शे संक्रमणेषु च ।
पौर्णमास्यां व्यतीपाते दद्यात्पूर्वं तिलोदकम् ॥
अर्द्धोदये गजच्छाये षष्ठ्यां चैव महालये ।
भरण्यां च मघाश्राद्धे पिण्डान्ते तर्पणं भवेत् ॥ इति ।

शौनकः—

मातापित्रोः क्षयाहे तु परेऽहनि तिलोदकम् ।
कारुण्यश्राद्धविषये सद्यो दद्यात्तिलोदकम् ॥ इति ।

एतानि च 'पूर्वं तिलोदकं दत्त्वा' इत्यादीनि सर्वाणि वाक्यानि महाग्रन्थेष्वदर्शनान्न विस्तरेण विचारविषयीकृतानि कैश्चित्तु शिष्टैरादृतत्वात्किञ्चिद्विचारितानि' इति दिक् ।

## अथ वैश्वदेवकालनिर्णयः ।

तत्रानग्नेस्तावत्कालत्रयम्, ब्रह्माण्डपुराणे—

वैश्वदेवाहुतीरग्नावर्वाग्ब्राह्मणभोजनात् ।
जुहुयाद्भूतयज्ञादि श्राद्धं कृत्वा तु तत्स्मृतम् ॥

इत्येकः कालः 'अर्वाग्ब्राह्मणभोजनात्' इत्यनेनाग्नौकरणानन्तरं वैश्वदेवाहुतीर्जुहुयादित्युक्तमिति हेमाद्रिः । द्वितीयो भविष्यत्पुराणे—

पितॄन्सन्तर्प्य विधिवद्बलिं दद्याद्विधानतः ।
वैश्वदेवं ततः कुर्यात्पश्चाद्ब्राह्मणवाचनम् ॥ इति ।

बलिशब्दार्थस्तत्रैवोक्तः—

येऽग्निदग्धामन्त्रेण भूमौ यन्निक्षिपेद्बुधः ।
जानीहि तं बलिं वीर श्राद्धकर्मणि सर्वदा ॥ इति ।

तृतीयोऽपि तत्रैव—

कृत्वा श्राद्धं महाबाहो ब्राह्मणांश्च विसर्ज्य च ।
वैश्वदेवादिकं कर्म ततः कुर्यान्नराधिप ॥ इति ।

नच 'अग्निमदनग्निमद्विषयं पक्षत्रयमविशेषात्' इति वाच्यम् ।

वैश्वदेवमकृत्वैव श्राद्धं कुर्यादनग्निकः ।
लौकिकाग्नौ हुते शेषः पितॄणां नोपतिष्ठति ॥

इति वासिष्ठे विशेषाभिधानात् ।

## अथ साग्नेर्वैश्वदेवकालः ।

तत्राह लौगाक्षिः—

पक्षान्तं कर्म निर्वर्त्य वैश्वदेवं च साग्निकः ।
पितृयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः ॥ इति ।

पक्षान्तं कर्माग्न्यन्वाधानम् । अन्वाहार्यं दर्शश्राद्धम् । पक्षान्तपिण्डपितृयज्ञयोर्मध्ये विधानादेव वैश्वदेवस्य साग्निककर्तृकत्वावगमे वैयर्थ्यापातात् । 'साग्निकग्रहणमौपासनाग्निमतो निवृत्त्यर्थम्' इति हेमाद्रिः । उक्तरीत्यैवाविशेषेण श्रौतस्मार्ताग्निमतोरुभयोरपि वैश्वदेवकर्तृकत्वावगमात्साग्निपदस्यानुवादकत्वमेव न तु स्मार्ताग्निमन्निवर्तकत्वम् । श्रौताग्निमत एव निवर्तकत्वेन वैपरीत्यस्यापि सुवचत्वात् । अतोऽनुवादकत्वमेव युक्तम् । एतच्चैकदिनप्रसक्तानामन्वाधानादीनां क्रमाकाङ्क्षायां तन्मात्रमेव विधत्ते न कमपि पदार्थं, तेन कदाचित्सद्यस्कालीनदर्शयागपक्षे त्वन्वाधानस्य पिण्डपितृयज्ञस्योत्तरदिनकर्तव्यत्वेऽपि न कदाचित्क्षतिः । कचिच्छ्राद्धे साग्निकस्यापि पश्चादेव वैश्वदेवः । परिशिष्टे—

संप्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च ।
अग्रतो वैश्वदेवः स्यात्पश्चादेकादशेऽहनि ॥

शालङ्कायनः—

श्राद्धात्प्रागेव कुर्वीत वैश्वदेवं च साग्निकः ।
ऐकादशाहिकं मुक्त्वा तत्र ह्यन्ते विधीयते ॥ इति ।

तत्रानग्नेः श्राद्धशेषेणैव वैश्वदेवः श्राद्धान्नेन तु वैश्वदेविकमनुश्राद्धं चरेद्धार्मिक इति हेमाद्र्यादिसिद्धान्तात् । 'साग्निकस्य तु पूर्वं पृथक्पाकेनैव' इति । यदि पृथक्पाकाद्यदि वा श्राद्धशेषाद्वैश्वदेवः क्रियते उभयथाऽपि भोजनं श्राद्धशेषस्यैव 'भुञ्जीतातिथिसंयुक्तः सर्वं पितृनिषेवितम्' इति पूर्वोक्तान्मात्स्यवाक्यात्, 'प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम्' इति याज्ञवल्क्यीयाच्च । न चात्र रागप्राप्तभोजनानुवादेन श्राद्धशेषविधिः । भोजनस्य रागतोऽपि नित्यमप्राप्तेर्नित्यवच्छ्रवणायोगात् । अतः प्रकरणाच्छ्राद्धाङ्गत्वेन भोजनक्रियैव विधीयते 'पयोव्रतं ब्राह्मणस्य' इतिवत् । अन्यथा तत्रापि व्रतानुवादेन पयस एव विधिः स्यात् । इदं च भोजनं यद्यपि 'पितृसेवितम्' इति द्वितीयाश्रुतेः प्रतिपत्तिकर्म, तच्च प्रतिपाद्याभावे लुप्यते न्यायात् । तथापि

श्राद्धदिन उपवासे दोषश्रवणाददृष्टार्थं पुनः पक्त्वाऽपि कार्यमेव स्विष्टकृद्याग इव शेषनाश आज्येन 'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्येनैता देवताः परिसङ्ख्याय यजते' इति वचनात्। अत एव देवलः—

श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्तेऽथ कदाचन।
देवा हव्यं न गृह्णन्ति कव्यानि पितरस्तथा॥ इति।

वैधोपवासप्राप्तौ स्मृत्यन्तरे—

उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत्।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम्॥ इति।

'नित्यः' इत्यविवक्षितम्। अनुवाद्यविशेषणत्वात्। अतः काम्योपवासप्राप्तावप्याघ्रेयमेव। मात्स्ये—

पुनर्भोजनमध्वानं यानमायासमैथुनम्।
श्राद्धकृच्छ्राद्धभुक्चैव सर्वमेतद्विवर्जयेत्॥
स्वाध्यायं कलहं चैव दिवास्वापं तथेच्छया॥ इति।

बृहस्पतिः—

तां निशां ब्रह्मचारी स्याच्छ्राद्धभुक्श्राद्धिकैः सह॥ इति।

यमः—

पुनर्भोजनमध्वानं भारमायासमैथुनम्।
सन्ध्यां प्रतिग्रहं होमं श्राद्धभुक् त्वष्ट वर्जयेत्॥ इति।

सन्ध्याहोमयोर्विशेषो माधवीये पुराणे—

दशकृत्वः पिबेच्चापो गायत्र्या श्राद्धभुक् द्विजः।
ततः सन्ध्यामुपासीत जपेच्च जुहुयादपि॥

इति पार्वणश्राद्धम्।

अथ ब्रह्मार्पणं प्रयागमाहात्म्ये—

पादौ प्रक्षाल्य विधिवत्पीठादावुपवेश्य च।
परिविष्य त्यजेदन्नं ब्रह्मार्पणविधिः स्मृतः॥ इति ब्रह्मार्पणम्।

---

## अथासमर्थस्य सङ्कल्पश्राद्धम्।

तत्र स्मृत्यन्तरे—

अङ्गानि पितृयज्ञस्य यदा कर्तुं न शक्नुयात्।
सङ्कल्पश्राद्धमेवासौ कुर्यादर्घ्यादिवर्जितम्॥ इति।

पितृयज्ञोऽत्र श्राद्धं न पिण्डयज्ञः, अर्घ्यपिण्डादिवर्जनासङ्गतेः । नहि पिण्डयज्ञेऽर्घ्योऽस्ति नापि तत्र पिण्डदानमङ्गम् । श्राद्धे च यद्यपि तत्प्रधानं तथाप्यङ्गपदं तदप्युपलक्षयति । अतो न विरोधः ।

अत एव संवर्तः—

समग्रं यस्तु शक्नोति कर्तुं नैवेह पार्वणम् ।
अपि सङ्कल्पविधिना काले तस्य विधीयते ।
पात्रभोज्यस्य चान्नस्य त्यागः संकल्प उच्यते ॥
तत्र युक्तो विधिर्यस्तु स तेन व्यपदिश्यते ।
तावन्मात्रेण संबद्धं साङ्कल्पश्राद्धमुच्यते ॥

छागलेयः—

पिण्डं यत्र निवर्तेत मघादिषु कथंचन ।
साङ्कल्पं तु तदा कार्यं नियमाद्ब्रह्मवादिभिः ॥

साङ्कल्पिकप्रकारमाह व्यासः—

सङ्कल्पं तु यदा कुर्यान्न कुर्यात्पात्रपूरणम् ।
नावाहनाग्नौकरणे पिण्डांश्चैव न दापयेत् ॥ इति ।

स्मृतिसङ्ग्रहे—

अग्नौकरणमर्घ्यं च विकिरावाहने स्वधा ।
पिण्डयुक्ते प्रकुर्वीत पिण्डहीने विवर्जयेत् ॥ इति ।

पारिजाते वृद्धशातातपः—

पिण्डनिर्वापरहितं यत्तु श्राद्धं विधीयते ।
स्वधावचनलोपोऽत्र विकिरश्च विलुप्यते ॥
अक्षय्यदक्षिणास्वस्तिसौमनस्यं यथास्थितम् ॥ इति ।

यत्तु स्मृतिचन्द्रिकाप्रयोगपारिजातादौ—'आवाहननिषेधेऽमन्त्रकमावाहनं कार्यमन्यथा देवताया असन्निधानप्रसङ्गात्' इति तन्न । आगमनरूपस्य देवतासान्निध्यस्य देवताधिकरणे निराकृतत्वात् । पितृतृप्तिस्तु यद्यपि देवतातृप्तित्वेन तदधिकरणे निराकृता तथापि रात्रिसत्राधिकरणन्यायेन विध्यपेक्षया श्राद्धफलत्वेनाङ्गीकार्या । धर्माधर्मफलभोगान्यथानुपपत्त्या च उत्कृष्टोऽपकृष्टो वा विग्रहोऽप्यङ्गीकार्यः । न तु सान्निध्यं मानाभावात् । अत एव प्रसादफलदातृत्वे अपि न । यद्यपि—

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ।

ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः ।। इति ।
आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च ।
प्रयच्छन्ति तथा राज्यं प्रीता नृणां पितामहाः ।।

इति च फलदातृत्वं श्रुतम् तथापि तदर्थवादगतत्वाद्विध्यनपेक्षणाच्च नाङ्गीक्रियते । विध्यनपेक्षितानां वज्रहस्तसहस्राक्षत्वादीनामप्यङ्गीकारापत्तेः । इष्टापत्तौ वपोत्खननादीनामपि तदापत्तिः । अतः प्रामाणिकौ तृप्तिविग्रहावङ्गीकर्तव्यौ न तु सांनिध्यफलदातृत्वादीनि इति दिक् ।

---

## अथ श्राद्धे आमहेमादिविधिः ।

लघुहारीतः—

एकोद्दिष्टं तु कर्तव्यं पाकेनैव सदा स्वयम् ।
अभावे पाकपात्राणां तदहः समुपोषणम् ।। इति ।

सुमन्तुः—

तीर्थे श्राद्धं प्रकुर्वीत पक्वान्नेन विशेषतः ।
आमान्नेन हिरण्येन कन्दमूलफलैरपि ।।
एषामभावे कुर्याच्च श्रद्धयाऽपि जलेन वा ।। इति ।

कात्यायनः—

आपद्यनग्नौ तीर्थे च प्रवासे पुत्रजन्मनि ।
आमश्राद्धं द्विजः कुर्याद्भार्यारजसि संक्रमे ।।

जाबालः—

आपद्यनग्नौ तीर्थे च ग्रहणे चन्द्रसूर्ययोः ।
आमश्राद्धं द्विजैः कार्यं शूद्रेण तु सदैव हि ।। इति ।

तथा—

द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि ।
हेमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला ।।

अत्र 'अनग्नौ' इति भावप्रधानो निर्देशः । 'अनग्नित्व' इत्यर्थः । श्रौतस्मार्ताग्न्यभावे इति यावत् । न त्विह पाकाद्यर्थं लौकिकाग्निपरम् । आपत्पदेनैव सिद्धावेतत्पदवैयर्थ्यापातात् । द्रव्याभावद्विजाभावाभ्यां चापदुपलक्ष्यते । अतो परिग्रहनाशं देशान्तरस्थत्वादिना श्रौतस्मार्ताग्न्यभाव आमेन हेम्ना वा श्राद्धं कुर्यात् । 'आपत्प्रवासपुत्रजन्मग्रहण-

भार्यारजोदोषेषु तु साग्निकोऽप्यामेनैव' इति कर्कस्मृतिरत्नावल्याद्यनुयायिनः। 'यथाशिष्टाचारं कार्यम्' इति मदनपारिजातदिवोदासाद्याः। प्राच्या अप्येवम्। तीर्थजलसमीपे आमेन हेम्ना वा गृहादौ त्वन्नेनैव, इति युक्तम्।

सदैव हि जलान्तेषु आमश्राद्धं प्रशस्यते।
गृहाद्दशगुणं पुण्यं लभेत्तीर्थनिवापकृत्॥

इतिवचनादिति भट्टचरणाः। दाक्षिणात्यास्तूभयं कुर्वन्ति। 'पक्वान्नेन विशेषतः' इति वाक्यात्। अत्र यथादेशाचारं व्यवस्था।

सुमन्तुः—

सदा चैव तु शूद्राणामामश्राद्धं विदुर्बुधाः।
न पक्वं भोजयेद्विप्रान् सच्छूद्रोऽपि कदाचन॥

व्यासः—

आमं ददत्तु कौन्तेय दद्यादन्नचतुर्गुणम्॥ इति।
आमं ददद्धि कौन्तेय आमं तु द्विगुणं भवेत्॥

इति तु अशक्तौ। हिरण्यं त्वष्टगुणं चतुर्गुणं द्विगुणं वा दद्यात्।

धान्याच्चतुर्गुणेनैव हिरण्येन सुरोचिषा।

इति मरीचिवचनात्।

आमं तु द्विगुणं प्रोक्तं हेम तद्वच्चतुर्गुणम्॥

इति धर्मवचनाच्च। अशक्तौ सममप्यामं हेम वा दद्यात्। द्वैगुण्यादि च पुरुषाहारापेक्षया। उशना—

सिद्धान्ने तु विधिर्यः स्यादामश्राद्धेऽप्यसौ विधिः।
आवाहनादि सर्वं स्यात्पिण्डदानं च भारत॥
दद्याच्चापि द्विजातिभ्यः शृतं वाऽशृतमेव वा।
तेनाग्नौकरणं कुर्यात्पिण्डांस्तेनैव निर्वपेत्॥ इति।
हस्तेऽग्नौकरणं कुर्याद्ब्राह्मणस्य विधानतः। इति च।

षट्त्रिंशन्मते—

आमश्राद्धं प्रकुर्वीत पिण्डदानं कथं भवेत्।
गृहपाकात्समुद्धृत्य सक्तुभिः पायसेन वा॥

पिण्डदानमिति शेषः। आमगृहपाकसक्तुषु यथालाभं व्यवस्था। यत्तु— आमेन पिण्डं दद्याच्चेद्विप्रान्पक्वेन भोजयेत्।

पक्केन कुरुते पिण्डमामान्नं यः प्रयच्छति ॥
तावुभौ मनुजौ प्रोक्तौ नरकार्हौ न संशयः ॥ इति ।

'तदमावास्यादिपरम्' इति प्रघट्टके पितामहचरणाः । अत्र भोजन-संबद्धाः पदार्थाः 'यथासुखं जुषध्वम्, तृप्ताः स्थ' इत्यादयो द्वाराभावान्निवर्तन्ते इति पारिजाते, कृष्णलेष्ववघातवत् । तदुक्तं तत्रैव—

तृप्तिप्रश्नोऽवगाहश्च जुषप्रश्नो यथाविधि ।
आमश्राद्धे भवेन्नैतदपोशानं च पञ्चमम् ॥

अवगाहोऽङ्गुष्ठनिवेशनम् । तीर्थनिमित्तामश्राद्धे एते,

अर्घ्यमावाहनं चैव द्विजाङ्गुष्ठनिवेशनम् ॥
तृप्तिप्रश्नं च विकिरं तीर्थश्राद्धे विवर्जयेत् ॥

इत्यर्घ्यादयश्च न । पाकश्राद्धे त्वर्घ्यादय एव न भवन्तीति विवेकः । 'हेमश्राद्धे पिण्डनिवृत्तिरपि' इति दिवोदासः । स्मृत्यर्थसारे तु विकल्पः । मरीचिः—

आवाहने स्वधाकारे मन्त्रा ऊह्या विसर्जने ।
अन्यकर्मण्यनूह्याः स्युरामश्राद्धविधिः स्मृतः ॥

पितॄन् हविषे अत्तवे इत्यत्र स्वीकर्तवे इति । 'नमो वः पितर इषे' इत्यत्र 'आमाय' इति । 'तृप्तायात' इत्यत्र क्तप्रत्ययस्थाने 'तृप्यत' इति लोट् इति भट्टचरणाः । 'तर्प्यत' इति लडन्तमूह्यमिति पारिजाते । 'इदमन्नम्' इत्यादौ 'इदमामम्' इत्यादि । अन्यकर्मणि 'विष्णो हव्यं रक्षस्व' इत्यादावनूहः । यद्यपि प्रकृतावूहो न्यायेन न प्राप्नोति तथापि वचनेनानेन विधीयते । तथा 'पूर्यति वा एतदृचोऽक्षरं यदेनदूहति तस्मादृचं नोहेत्' इति सामान्यश्रुतिरप्यनया विशेषस्मृत्या बाध्यते । इत्यपि ते । युक्तं तु न्यायप्राप्तबाधकत्वेनोपपन्नस्य वाक्यस्य न श्रौतनिषेधबाधकत्वमिति । अतो 'अनृङ्मन्त्रेष्वेवोहः' इति । आमश्राद्धे कालमाह शातातपः—

आमश्राद्धं तु पूर्वाह्णेऽपराह्णे पार्वणं भवेत् ।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥ इति ।

अन्नासंभवनिमित्तक आमश्राद्धेऽयं कालः । शूद्रं प्रति नित्यप्राप्ते तु स्मृत्यन्तरे—

मध्याह्नात्परतो यस्तु कुतपः स उदाहृतः ।
आममात्रेण तत्रैव पितॄणां दत्तमक्षयम् ।। इति ।

हेमाद्रावपरार्के च पाकाभावनिमित्तके शूद्राधिकारिके चामश्राद्धे प्रातर्मध्याह्नोत्तरकालयोर्विकल्प इति केचित् । बहूनां ब्राह्मणानामलाभे एकेनापि कार्यम्—

अन्नाभावे द्विजाभावे तीर्थरूपे महालये ।
एकस्मिन्दीयते चान्नमर्घ्यान्पिण्डान्पृथक्पृथक् ।।

इति वचनात् । एकस्याप्यलाभे देवलः—

पात्रालाभेऽखिलं कृत्वा पितृयज्ञविधिं नरः ।
निधाय वा दर्भबटून् आसनेषु समाहितः ।।
प्रैषानुप्रैषसंयुक्तं विधानं प्रतिपादयेत् ।
सर्वाभावे क्षिपेदग्नौ गवे दद्यादथाऽप्सु वा ।।
नैव प्राप्तस्य लोपोऽस्ति पैतृकस्य विशेषतः ।

'श्राद्धं संपन्नम्' इत्याद्याः प्रैषानुप्रैषाः । तान्स्वयमेव वदेदित्यर्थः । आमहेमपक्षयोः कालान्तरे ब्राह्मणाय दानम् । सर्वश्राद्धाशक्तौ देवलः—

पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः ।
श्राद्धाहनि तु संप्राप्ते भवेन्निरशनोऽपि वा ।।

देवीपुराणे—

सक्तुभिः पिण्डदानं च संयावैः पायसेन वा ।
कर्तव्यमृषिभिः प्रोक्तं पिण्याकेनेङ्गुदेन वा ।।

'गुडेन वा' इति वा पाठः ।

संयावो गोधूमविकारः पिण्याकस्तिलकल्कः इङ्गुदं तापसतरुफलम् । अङ्गिराः—

कपित्थबिल्वमात्रान्वा पिण्डान्दद्याद्विधानतः ।
कुक्कुटाण्डप्रमाणान्वा केषां चामलकैः समान् ।।
बदरेण समान्वाऽपि दद्याच्छ्रद्धासमन्वितः ।

पिण्डदानेऽप्यशक्तौ तर्पणमवश्यं कर्तव्यम् ।।

तिलैः सप्ताष्टभिर्वाऽपि समवेतं जलाञ्जलिम् ।
भक्तिनम्रः समुद्दिश्य भुव्यस्माकं प्रदास्यति ।।

यतः कुतश्चित्संप्राप्य गोभ्यो वाऽपि गवाह्निकम् ॥

इत्यपिशब्दयुक्तपितृवचनात् । स्मृत्यन्तरे—

तृणानि वा गवे दद्यात्पिण्डान्वा विधिपूर्वकम् ।
तिलोदकैः पितॄन्वाऽपि तर्पयेत्स्नानपूर्वकम् ॥
अग्निना वा दहेत्कक्षं श्राद्धकाले समागते ।
तस्मिंश्चोपवसेदह्नि जपेद्वा श्राद्धसंहिताम् ॥ इति ।

स्मृत्यन्तरे—

श्राद्धानुकल्पं यः कुर्याज्जात्यवस्थाद्यपेक्षया ।
श्राद्धांशेनाप्यवाप्नोति मुख्यश्राद्धफलं नरः ॥ इति ।

---

## अथ श्राद्धे ऊहविचारः ।

तत्र 'मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम् ।' इति वचनात्पितृपार्वणातिदेशे मातामहपार्वणे प्राप्तेऽपूर्वप्रयुक्तत्वान्मन्त्राणामूहः प्राप्नोति । आतिदेशिकस्य मन्त्रसंस्कारान्यतरस्यान्यथाभाव ऊहः । साङ्गः प्रयोजनाभावादनुद्देशः । तत्र च 'पितॄन् हविषे अत्तवे' 'आयन्तु नः पितरः' इत्यादिमंत्रगतपितृशब्दस्य प्रकृतिवन्मातामहश्राद्धेऽपि समवेतार्थत्वादर्थान्तराभावान्नोहः । तथाहि, द्विधा हि पितृशब्दः प्रयुज्यते, क्वचिज्जनकत्वोपाधिना 'पिता यस्य तु वृत्तः स्यात्' इत्यादिषु, क्वचित्सपिण्डीकरणान्तश्राद्धजन्यपितृत्वोपाधिना यथा 'प्रेते पितृत्वमापन्ने सपिण्डीकरणात्' इति, 'ततः प्रभृति वै प्रेतः पितृसामान्यमश्नुते' इत्यादिषु । अत एव सर्वत्र पितृशब्दः प्रयुज्यते 'षड्भ्यः पितृभ्यस्तदनु भक्त्या श्राद्धमुपक्रमेत्, पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्' इत्यादिषु । एवं च पूर्वोक्ते मन्त्रजाते पितृशब्दस्य सपिण्डीकरणान्तश्राद्धजन्यपितृत्वपरत्वात्तस्य च मातामहादिष्वपि सद्भावान्नोहः । तथा 'पूयति वा एतदृचोऽक्षरं यदेनदूहति तस्मादृचं नोहेत्' इति प्रतिषेधादपि नोहः । तथा अनृग्रूपेष्वपि मन्त्रेषु 'एतद्वः पितरो वासोऽमीमदन्त पितरः' इत्यादिष्वपि पूर्वोक्तन्यायान्नोहः । प्रतिषेधस्त्वभ्युच्चयमात्रमत्र । तस्यासाधारणविषयस्तु 'व्रीहीणां मेधसुमनस्यमानः' इत्यादिरवगन्तव्यः । यत्तु विष्णुवाक्यम्—

मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः ।
मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्जितम् ॥ इति ।

तदपि न पूर्वोक्तेषु मन्त्रेषु ऊहं विदधाति 'यथान्यायम्' इत्यनेन न्यायप्राप्तानुवादप्रतीतेः। अतो यत्र 'शुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहाः' इत्यादिषु पितामहप्रपितामहोपादानेन पितृशब्दस्य जनकपरत्वान्मातामहादिमातृवर्गादिषु 'शुन्धतां मातामहाः शुन्धन्तां मातरः' इत्यादिरूपेण प्राप्तोहस्यानुवादः। नच 'प्रकृतावेकस्मिन्पितरि बहुवचनस्यासमवेतत्वाद्विकृतावेकवचनान्त एव प्रयोज्य इति वाच्यम् 'प्रकृतौ बहुवचनस्यासमवेतार्थत्वे विकृतावप्यविकृतस्यैव प्रयोगः' इति नवमे पाशाधिकरणे स्थितत्वात्। एवं च 'शुन्धन्तां मातामहाः' 'शुन्धन्तां मातरः' इत्याद्येवोह्यम्। येषां च 'पितृभ्यः स्वधोच्यतां पितामहेभ्यः स्वधोच्यतां प्रपितामहेभ्यः स्वधोच्यताम्' इति शुन्धनमन्त्रास्तेषामपि पूर्वोक्तन्यायेन भवत्येवोहः। नन्वस्त्वेवमत्र 'एतद्वः पितरः' इत्यादिमन्त्रेषु पितृशब्दगतबहुवचनेन पितृशब्दो जनकपरोऽपि लिङ्गसमवायात्पित्रपितृसमुदाये वर्तते तादृशस्य च विकृतौ मातामहादिश्राद्धेऽसमर्थत्वात्प्रकृतिवदेव मातामहामातामहेषु मातामहा इत्यूहः, ऋङ्मन्त्रेषु वाक्यान्निषेधोऽनृङ्मन्त्रेषु कथं न प्राप्नोति' इति चेत्। उच्यते—पितृशब्दस्तावदुभयोर्वाचक इत्युक्तं तत्र जनकपरत्वेऽङ्गीक्रियमाणे गौणीप्रसक्तेरितरपरमेव गृह्यते। एवं च बहुवचनमप्युपपन्नं भवति। एवं च प्रकृतौ यादृशः शास्त्रार्थस्तादृश एव विकृतौ इति नोहप्रसङ्गः। अत्र पितामहचरणाः—'पितरेतत्तेऽर्घ्यम्' इत्यादिपूहानूहविचारानवकाशः एतस्याभिलापमात्रत्वेन मन्त्रत्वाभावात्। अन्यथा 'शेषाणां मन्त्रवर्जितम्' इत्युक्त्या शूद्रादीनां तथाभिलापाप्रसक्तेः। अतोऽपौरुषेये वैदिकप्रसिद्धे मन्त्रशब्दो मुख्योऽन्यत्र गौणः। अत एव भावार्थपादे 'ऊहप्रवरनाम्नाममन्त्रत्वम्' इत्याह भगवान्सूत्रकारः, तेषां लोकैः प्रयुज्यमानत्वादित्याहुः। एकोद्दिष्टेऽपि 'शेषं पूर्ववदाचरेत्' इति पार्वणातिदेशात् 'पितॄनिमाँल्लोकान्' इत्यादिऋक्षु प्राप्त ऊहो वचनाद्बाधितस्तथा 'शुन्धन्तां पितरः' इत्यादिषु न्यायादेव बाधित ऊह 'एकवन्मन्त्रानूहेतैकोद्दिष्टे' इति विष्णुवाक्येन प्रतिप्रसूयते। अस्यार्थः। एकोद्दिष्टे श्राद्धे क्षयाहादौ क्रियमाणे मन्त्रानेकवद्यथा भवति तथा ऊहेत इति क्रियाविशेषणम्। एतद्वः पितरः इत्यादिषु तु न्यायादेव प्राप्त ऊहो न वाक्येन विधीयते। इदं च पुराणप्रेतैकोद्दिष्टसाधारणम्। प्रेतैकोद्दिष्टे तु आश्वलायनगृह्यपरिशिष्टे पितृपद-

निवृत्तिरेवोक्ता। वैष्णवे तु एकवचनविधानम्। एवं च 'एतद्वः पितरः' इत्यादौ 'एतत्ते प्रेत' इत्यूहः। यत्तु कैश्चिदुक्तम् 'पुराणैकोद्दिष्टं पार्वणवदेव' प्रेतैकोद्दिष्टे तु विष्णुवाक्येन प्रेतशब्दैकवचनयोरूहो विधीयते। तत्र सपिण्डीकरणाभावेन पितृत्वानुपपत्तेः। अत एवाऽऽश्वलायनेन पितृपदनिवृत्तिरुक्ता' इति। तन्न। अस्य वाक्यस्य प्रेतैकोद्दिष्टविषयत्वे प्रमाणाभावात् प्रेतशब्दोहाप्रतीतेः। उभयविधाने वाक्यभेदात्। पुराणैकोद्दिष्टे वचनस्य सार्थक्याच्च। तस्मादस्मदुक्त एवाऽर्थो न्याय्यः। एवं मुख्यदृष्टार्थतास्वार्थसमवेतार्थतादिभिर्मन्त्राणामूहनिर्णयः। 'शेषाणां मन्त्रवर्जितम्' इति पूर्वोक्तविष्णुवचनशेषः। एवं पितृव्याद्येकोद्दिष्टे ऊहयोग्यपितृपदयुक्तमन्त्रपर्युदासार्थं इति शूलपाणिः। 'पितृव्याद्येकोद्दिष्ट एवाऽऽवाहनादिमन्त्राणां पर्युदासार्थः' इति कल्पतरौ। उभयमप्येतत्प्रमाणशून्यम्। भोगस्त्रीणां शूद्रापुत्रस्य चैकोद्दिष्टे मन्त्रपर्युदासार्थम्, इति पितामहचरणाः।

> स्त्रीणाममन्त्रकं श्राद्धं तथा शूद्रासुतस्य च।
> प्राग्द्विजाश्च व्रतादेशात्ते च कुर्युः सदैव तत्॥

इति मरीचिस्मरणात्। 'स्त्रीणां सुतस्य च' इति संप्रदाने षष्ठी। द्विजा उपनयनात्प्राक् ते च स्त्रीशूद्रासुता अमन्त्रकं कुर्युरित्यर्थः। अत्र-'स्त्रीणामित्यकृतविवाहस्त्रीपरम्' इति हेमाद्रिः। अमन्त्रकमिति वैदिकमन्त्रनिषेधो न तु पौराणानाम्, इति दिक्। इत्यूहविचारः।

---

## अथैकोद्दिष्टम्।

तत्स्वरूपमाह याज्ञवल्क्यः—

> एकोद्दिष्टं दैवहीनमेकार्घैकपवित्रकम्।
> आवाहनाग्नौकरणरहितं ह्यपसव्यवत्॥
> उपतिष्ठतामित्यक्षय्यस्थाने विप्रविसर्जने।
> अभिरम्यतामिति वदेद्ब्रूयुस्तेऽभिरताः स्म ह॥

इति कात्यायनः। 'स्वदितम्' इति तृप्तिप्रश्नः 'सुस्वदितम्' इत्यनुज्ञा' इति। आश्वलायनसूत्रानुसारिणां तु 'एकोद्दिष्टेऽप्यग्नौकरणादयो धर्माः पार्वणवद्भवन्ति। तत्सूत्रे 'अथातः पार्वणे श्राद्धे काम्य आभ्युदयिक एकोद्दिष्टे वा' इति चत्वारि श्राद्धानि उपक्रम्याग्नौकरणादिधर्माणां समानविधानतयोक्तत्वात्। अत एव गृह्यकारिकायाम्—

आन्वष्टक्यं च पूर्वेद्युर्मासिमास्यथ पार्वणम् ।
काम्यमभ्युदयेऽष्टम्यामेकोद्दिष्टमथाष्टमम् ॥
चतुर्ष्वाद्येषु साग्नीनां वह्नौ होमो विधीयते ।
पित्र्यब्राह्मणहस्ते स्यादुत्तरेषु चतुर्ष्वपि ॥

इत्येकोद्दिष्टे पाणिहोम उक्तः संगच्छते । 'सपिण्डीकरणान्तर्गते एकोद्दिष्टे पाणिहोमोऽन्यत्र होम एव न भवति' इति केचित् । तत्त्रिविधम् । नवं नवमिश्रं पुराणं च' इति । तत्र नवमाहाङ्गिराः—

प्रथमेऽह्नि द्वितीयेऽह्नि पञ्चमे सप्तमे तथा ।
नवमैकादशे चैव तन्नवश्राद्धमुच्यते ॥ इति ।

वसिष्ठः—

सप्तमेऽह्नि तृतीयेऽह्नि द्वितीये प्रथमे तथा ।
एकादशे पञ्चमे स्युर्नव श्राद्धानि षट् सदा ॥ इति ।

षण्णां नवश्राद्धानामनन्तरं कर्तव्यं मासिकं नवमिश्रं तदाहाऽऽश्वलायनः 'नवमिश्रं षडुत्तरम्' इति । प्रत्याब्दिकादि पुराणम् ।

चान्द्रायणं नवश्राद्धे प्राजापत्यं तु मासिके ।
एकाहस्तु पुराणेषु प्रायश्चित्तं विधीयते ॥

इति हारीतेन मासिकोत्तरभाव्याब्दिकादेः पुराणपदेन व्यवहृतत्वात् । एवं पार्वणमेकोद्दिष्टं चोक्तम् ।

---

## अथ सपिण्डनम् ।

संप्रत्युभयरूपं सपिण्डनमुच्यते । लौगाक्षिः—

श्राद्धानि षोडशाऽऽपाद्य विदधीत सपिण्डनम् ॥ इति ।

षोडशश्राद्धान्याह जातूकर्ण्यः—

द्वादश प्रतिमास्यानि आद्यं षाण्मासिकं तथा ।
त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश ॥ इति ।

आद्यम्, ऊनमासिकम् । एवं च षाण्मासिकाब्दिकशब्दावपि ऊनषाण्मासिकोनाब्दिकपरौ द्वादशमासिकानां भिन्नतयोक्तत्वात् । तेषां तु कालमाह याज्ञवल्क्यः—

मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् ।
प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ॥ इति ।

सत्यप्याशौचे क्षत्रियादिनैकादशेऽह्नि श्राद्धं कार्यम्,

आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि।
कर्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः॥

इति शङ्खस्मृतेः।

एकादशेऽह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतम्।

[ 'सूतकं तु पृथक्पृथक्' इति पैठीनसिवचनादाशौचान्ते। 'ततः पिण्डदानं समाप्यते। ततः श्राद्धं प्रदातव्यं सर्ववर्णेष्वयं विधिः। इति तत्सर्ववर्णानां दशाहाशौचपरम्। ] पैठीनसिः—

मासिकानि स्वकाले तु दिवसे द्वादशेऽपि च॥ इति

आद्यमासिकं मरणदिने प्राप्तमेकादशेऽह्न्युत्कृष्यते। एवं सांवत्सरिकमपि,

मासपक्षतिथिस्पृष्टे यो यस्मिन् म्रियतेऽहनि।
प्रत्यब्दं तु तथाभूतं क्षयाहं तस्य तं विदुः॥

इति स्मृत्या मरणतिथौ प्राप्तमेकादशेऽह्न्युत्कृष्यते। संप्रति केषांचिद्द्वितीयवर्षाद्यतिथौ क्रियमाणे प्रथमाब्दिकव्यवहारस्तु भ्रमात्। न च 'अब्दान्ते भवमाब्दिकम्' इति व्युत्पत्त्या व्यवहारोपपत्तिः। 'मासपक्षतिथिस्पृष्टे' इतिवाक्यस्य प्रथमवर्षीयमृततिथौ प्रवृत्तौ बाधकाभावात्। मासिकेषु 'मासादौ भवं मासिकम्' इत्याद्यद्वितीयादिमासिकव्यवहारस्य सर्वैरविप्रतिपत्त्याङ्गीकाराच्च। यत्तु लौगाक्षि वचनं—

मासादौ मासिकं कार्यमाब्दिकं वत्सरेऽगते।
आद्यमेकादशे कार्यमधिके त्वधिकं भवेत्।

तदप्यगत इति व्याख्येयम्। केचित्तु मासिकस्योत्कर्षो वार्षिकस्यापकर्षोऽनेन वचनेन विधीयते इति। एतेन यन्माधवादिभिर्द्वितीयाब्दाद्यदिनक्रियमाणस्याब्दिकत्वभ्रमात् 'मलमासे प्रथमाब्दिकं कार्यम्' इति वाक्यानुसारेण मलमासे कर्तव्यत्वमुक्तं तदप्यपास्तम्।

यत्तु—

---

१ कुण्डलितो ग्रंथो न त्रिष्वपि लिखितपुस्तकेषु दृश्यते। २ यस्येति पाठः। ३ च. अत एव गोभिलः—ब्राह्मणं भोजयेदाद्ये होतव्यमनलेऽथवा। प्रनह्य (? पुनर्न) भोजयेद्विप्रं द्विरावृत्तिर्भवेदिति। इदं चाद्यमासिकाद्यसिद्ध्यर्थमिति (?) पितामहचरणाः। इत्यधिकम्।

आब्दिकं प्रथमं यत्स्यान्न कुर्वीत मलिम्लुचे ।
त्रयोदशे तु संप्राप्ते कुर्वीत पुनराब्दिकम् ।

इति मलमासे प्रथमाब्दिकं विधाय मत्वाक्ये (?) संप्राप्त इति पदस्वारस्यात् । अन्यथा संप्राप्तपदस्यातीतपरत्वव्याख्यानक्लेशः स्यात् । पुनराब्दिकं द्वितीयाब्दिकं त्रयोदशे मासि प्राप्ते कार्यमित्येतदपि मासपक्षवाक्यप्राप्तमेवानूद्यत इति ।

यत्तु—

प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया सुतैः ।
क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम् ॥

इति वचः 'द्वादशे मास्यतीते प्रत्यब्दं पिण्डक्रिया श्राद्धं कार्यम् । क्वचिन्मलमासवति वर्षे तु आद्यं वत्सरमाद्याब्दिकं मुक्त्वा त्रयोदशे मास्यतीते कार्यम् । आद्याब्दिकं तु त्रयोदशमासमध्य एव कार्यमिति यावत्' इति व्याख्यायाऽत्र साधकमुक्तम् । तदपि न । एतद्वचने हि मलमासवति वर्षे सति त्रयोदशेऽतीते आब्दिकं कार्यमित्येव विधीयते । नान्यत्किञ्चित् । अन्यत्तु मासपक्षवाक्येन प्राप्तम् । प्रत्यब्दं द्वादशे मासीत्येतच्चान्तराधिमासपाताभावे । तत्सद्भावे तु त्रयोदशेतीत एव तदुक्तं विष्णुधर्मोत्तरे—

संवत्सरस्य मध्ये तु यदि स्यादधिमासकः ।
तदा त्रयोदशे मासि क्रिया प्रेतस्य वार्षिकी ॥ इति ।

त्रयोदशेऽतीते वार्षिकी ऊनाब्दिकाब्दिकसपिण्डीकरणरूपा । मलमासमृतस्याऽऽद्याब्दिकं तु सत्यपि मलमासे प्रथमदिन एव कार्यम् । दाहादिसपिण्डनान्तकृत्यस्य मलमासेऽपि प्रतिप्रसूतत्वात् । यत्तु मिताक्षरायाम् ; 'आद्यमेकादशेऽहनि' इत्यत्राऽऽद्यपदेनैकोद्दिष्टान्तरप्रकृतिभूतमेकोद्दिष्टमुच्यते' इति तत्र प्रमाणं चिन्त्यम् । अत आद्याब्दिकमाद्यमासिकं चैकादशेऽह्नि महैकोद्दिष्टेन सह तन्त्रेण कार्यं द्वितीयाब्दाद्यदिनकार्यतया विहितं च शुद्धमास एवेति दिक् ।

एकादशाहकर्तव्यैकोद्दिष्टप्रक्रमे कौर्मे—

एकादशेऽह्नि कुर्वीत प्रेतमुद्दिश्य भावतः ।
द्वादशे वाऽथ कर्तव्यमनिन्द्येऽप्यथवाऽहनि ॥

तत्क्रम एव बौधायनः—

तदेकोद्दिष्टमेव स्याद्द्वादशेऽहनि वा पुनः ॥
अथवोर्ध्वमयुग्मेषु कुर्वीताहस्सु शक्तितः ।
अर्धमासेऽथवा मासे ऋतौ संवत्सरेऽपि वा ॥ इति ।

ऊनमासिककालमाह श्लोकगौतमः—

एकद्वित्रिदिनैरूने त्रिभागेनोन एव च ।
श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौतमः ॥ इति ।

एकद्वित्रिदिनैस्त्रिभागेन वाऽऽद्ये षष्ठे द्वादशे च मास्यून' इत्यर्थः । केचित्तु एकदिनन्यूनतापक्षमाश्रित्य षष्ठ्यादौ मृतस्य पञ्चम्यादावून-मासिकाद्याचरन्ति तद्भ्रममूलकम् । षष्ठ्यां मृतस्य पञ्चम्यां मासपक्षयोः समाप्तिरेव भवति नत्वेकदिनन्यूनताऽस्ति तेन षष्ठ्यादौ मृतस्य चतु-र्थ्यादावेव कार्यं न तु पञ्चम्यादाविति । अतः—

एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः ।
न्यूनः संवत्सरश्चैव स्यातां षाण्मासिके तदा ॥

इति जातूकर्ण्येन एकाहन्यूनतोक्ता संगच्छते यत्तु—

षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते ।
मासिकानि स्वकीये तु दिवसे द्वादशेऽपि वा ॥

इति पैठिनसिवचनं तदपि माससमाप्तेः पूर्वेद्युरित्येव व्याख्येयं न तन्मृताहात्पूर्वेद्युरिति, एकाहेन त्वित्यादिविरोधात् । यत्तु कैश्चिदहः पदं तिथिपरं व्याख्यातं तदपि प्रमाणाभावादुपेक्ष्यम् । ऊनमासिके काला-न्तरमाह गालवः—

मरणाद्द्वादशाहे स्यान्मास्यूने वोनमासिकम् ॥ इति ।

ऊनेषु कंचित्कालं निषेधति गार्ग्यः—

नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे ।
ऊनश्राद्धं न कुर्वीत गृही पुत्रधनक्षयात् ॥ इति ।

त्रिपुष्करादियोगमाह वसिष्ठः—

रविरविजभौमवारे भद्रायां विषमपादनक्षत्रं चेत् ।
त्रिपुष्कराख्ययोगोऽयं त्रिगुणफलदो यमलभैर्द्विगुणम् ॥

---

१ घ. एकोद्दिष्टं च एव स्यात् पाठः; ग. एकोद्दिष्टं श्च एव स्यात् पाठः अयमेव पाठः निर्णयसिंधावपि दृश्यते; । ङ. एकोद्दिष्टं तु एव स्यात् पाठः ।

त्रितयं च गवां दद्यात्तद्दोषस्यापनुत्तये विद्वान्।
द्वितयं द्विपुष्करेऽपि च तिलपिष्टैर्विप्रमुख्येभ्यः ॥ इति।

पुराणे—

सपिण्डीकरणादर्वाक्कुर्याच्छ्राद्धानि षोडश।
एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु ॥ इति।

षोडशश्राद्धेष्वाहिताग्नेर्विशेषमाह जातूकर्ण्यः—

ऊर्ध्वं त्रिपक्षाद्यच्छ्राद्धं मृताहन्येव तद्भवेत्।
अधस्तु कारयेद्दाहादाहिताग्नेर्द्विजन्मनः ॥ इति।

एतानि च षोडशश्राद्धानि यदा सपिण्डनार्थं ततः प्राग्, वृद्ध्यर्थमुत्तरं चैकदिनेऽपकृष्यन्ते।

मासिकं चोदकुम्भं च यद्यदन्तरितं भवेत्।
तत्तदुत्तरसातन्त्र्यादनुष्ठेयं प्रचक्षते ॥

इतिवाक्यात्पूर्वमुत्तरेण सहोत्कृष्यते वा तदा दार्शिकादिपितृमातामहादिपार्वणादिवत्सर्वेषामारादुपकारकाणां संभवतां पाकादिसन्निपातिनां च तन्त्रं निर्विवादम्। देशकालकर्त्रैक्यात्। ढुण्ढूपद्धतौ तु 'सान्नाय्यप्राजापत्येष्विव संप्रतिपन्नदेवताकत्वात्प्रधानरूपविप्रभोजनपिण्डदानानामपि तन्त्रता' इत्युक्तम्। भ्रातृचरणास्तु 'सङ्ख्यान्यशब्दान्तरादिना 'सप्तदशप्राजापत्यान्' इत्यादिद्रव्यसमानाधिकरणसङ्ख्यया वावगतभेदानां कर्मणां देशकालाद्यैक्ये यद्यपि तन्त्रताऽस्ति तथापि कर्मसमानाधिकरणसङ्ख्यावगतभेदानां न, शास्त्रे क्वापि तथानङ्गीकारात्' इत्याहुः। अयं च तदाशयः, औत्पत्तिककर्मसमानाधिकरणसङ्ख्याश्रुतौ 'पृथक्त्वनिवेशात्सङ्ख्यया कर्मभेदः स्यात्' इति सूत्रानुसारात् पृथक्त्वगुणविशिष्टान्याक्षिप्तपृथक्त्वानि सङ्ख्यामात्रविशिष्टान्येव वा कर्माणि विहितानि। तन्त्रतायां तु तद्बाधः स्यात्। अभ्यासादिभिस्तु कर्मवैजात्यमात्रावगतेस्तन्त्रत्वे न कस्यचिद्बाधः। 'सप्तदशप्राजापत्यान्पशून्' इत्यादिद्रव्यसमानाधिकरणसङ्ख्यावगतभेदेषु तु कर्मसु पृथक्त्वस्य सङ्ख्याया वाऽश्रुतत्वान्न तद्बाधः। श्रुता पश्वादिद्रव्यगता सप्तदशादिसङ्ख्या तु यागतन्त्रत्वेऽपि नैव बाध्यते। अतः प्रधानभूतान्नत्यागपिण्डदानानि पृथगेव सर्वाण्यारादुपकारकाणि, संभवन्ति पाकादीनि सन्निपातीनि वाऽङ्गानि तन्त्रेण' इति दिक्।

## अथ वृषोत्सर्गः ।

तत्कालः षड्त्रिंशन्मते—

एकादशाहे प्रेतस्य यस्य नोत्सृज्यते वृषः ।
पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥

कालान्तरं भविष्योत्तरे—

कार्तिक्यामथवा माघ्यामयने वा युधिष्ठिर ।
चैत्र्यां वाऽपि तृतीयायां वैशाख्यां द्वादशेऽह्नि वा ॥

विष्णुधर्मोत्तरेपि—

अश्वयुक्शुक्लपक्षस्य पञ्चदश्यां नराधिप ।
कार्तिकेप्यथवा मासि वृषोत्सर्गं तु कारयेत् ।

कारयेदिति णिजविवक्षा ।

ग्रहणे द्वे महामुख्ये तथा चैवायनद्वये
विषुवद्वितये चैव मृताहे बान्धवस्य च ।
उत्सृजेन्नीलकण्ठं वै कौमुद्याः समुपागमे ॥

नीलकण्ठो नीलवृषः तल्लक्षणं वक्ष्यते । कौमुदी, आश्विनकार्तिक्योः पूर्णिमा । अकरणे निन्दा मत्स्यपुराणे—

न करोति वृषोत्सर्गं तीर्थे वाऽपि जलांजलिम् ।
न ददाति सुतो यस्तु पितुरुच्चार एव सः ॥

पुरीषोत्सर्गतुल्य इत्यर्थः । तद्देशः कालिकापुराणे—

अरण्ये चत्वरे वाऽपि गोष्ठे वा मोचयेद्वृषम् ।
न गृहे मोचयेद्विद्वान्कामयन्पुष्कलं फलम् ॥

ब्राह्मेऽपि—

प्रागुदक्प्रवणे देशे मनोज्ञे निर्जने वने ॥

कार्य इति शेषः । वृषलक्षणं ब्राह्मे—

वृषभः कृष्णसारस्तु प्रत्यक्षस्तु त्रिहायनः ।
मनोज्ञो दर्शनीयश्च सर्वलक्षणसंयुतः ॥

विष्णुरप्याह—तत्रादावेव वृषभं परीक्षेत जीववत्सायाः पुत्रं सर्वलक्षणोपेतं नीलं लोहितं वा पुच्छपादेषु सर्वशुक्लं यूथस्याच्छादकम् । नीललक्षणं रेवाखण्डे ब्रह्माण्डपुराणे—

लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ।

श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥
चरणाश्च मुखं पुच्छं यस्य श्वेतानि गोपतेः ।
लाक्षारससवर्णं च तं नीलमिति निर्दिशेत् ॥
वृषः स एव मोक्तव्यो न स धार्यो गृहे भवेत् ।
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥

इदं त्वर्थवादमात्रम् । अथ विधिर्भविष्योत्तरे कृष्णः—

साण्डं नीलं शङ्खपादं सपौण्ड्रं श्वेतपुच्छकम् ।
गोभिश्चतुर्भिः सहितमुत्सृजेत्तं विधिं शृणु ॥
मातरः स्थापयित्वा च पूजयेत्कुसुमाक्षतैः ।
मातृश्राद्धं ततः कुर्यात्सदाऽभ्युदयकारकम् ॥
अकालमूलं कलशमश्वत्थदलशोभितम् ।
तत्र रुद्रान् जपित्वा तु स्थापयेद्रुद्रदैवतम् ॥

रुद्रान् रुद्राध्यायं जप्त्वा रुद्रदैवतं कलशं स्थापयेदित्यर्थः ।

सुसमिद्धं ततः कृत्वा वह्निं मन्त्रपुरस्सरम् ।
आज्येन जुहुयात्षड्भिः पृथगाहुतिसंस्कृतैः ॥
पौष्णमन्त्रैस्ततः पश्चाद्धुत्वा वह्निं यथाविधि ।
एकवर्णं द्विवर्णं वा लोहितं श्वेतमेव वा ॥
चतस्रो वत्सतर्यश्च ताभिः सार्द्धमलंकृतम् ।
तासां कर्णे जपेद्विप्रः पतिं वो वलिनं शुभम् ॥
ददामि तेन सहिताः क्रीडध्वं हृष्टमानसाः ।
ततो वामे त्रिशूलं च दक्षिणे शङ्खमालिखेत् ॥
अङ्कितं शङ्खचक्राभ्यां चर्चितं कुसुमा[illegible]ना ।
पुष्पमालावृतग्रीवं श्वेतच्छत्रैश्च छादितम् ॥
विमुंचेद्वत्सिकाभिश्च चतसृभिर्बलिनं वृषम् ।
देवालये गोकुले वा नदीनां संगमे तथा ॥ इति ।

जपे विशेषो विष्णुधर्मोत्तरे रुद्रजपमुक्त्वा—

तथैव पौरुषं सूक्तं कूष्माण्डानि तथैव च ॥ इति ।

पौरुषं 'सहस्रशीर्षेति षोडशर्चम् । 'यद्देवा देवहेडनम्' इति कूष्माण्डाः । आदित्यपुराणे—

सावित्रीं च जपेत्तत्र तथा चैवाऽऽघमर्षणम् । इति ।

पारस्करोऽपि विशेषमाह—

अथालंकृत्य तान् सर्वान् रुद्राध्यायं समाहितः ।
श्रावयेत्पौरुषं सूक्तं तथाऽप्रतिरथानि च ।। इति ।

अप्रतिरथानि 'आशुःशिशानः' इति द्वादश ऋचः । विष्णुधर्मोत्तरेऽपि । 'मन्त्रं पितावत्स इति प्रतीतं जपेद्सव्ये वृषभस्य कर्णे' असव्ये दक्षिणे । 'पितावत्स' इति मन्त्रोऽथर्ववेदे । वत्सतरीसङ्ख्यायां विशेष आदित्यपुराणे' 'अष्टौ वाथ चतस्रो वा यथालाभमथापि वा' इति । 'यथालाभं द्वे एका वा' इति । तथा च देवीपुराणे—

चतस्रो वत्सिका भद्रे द्वे वा संभवतोऽपि वा ।
वत्सः सर्वाङ्गसंपूर्णः कन्यका वत्सिका भवेत् ।।

एका इत्यर्थः ।

विवाहस्त्वेकवत्सर्या नीलेन भवता सदा ।। इति ।

एकवत्सरी एकवर्षा । तथा तत्रैव 'त्रिहायनीभिर्धन्याभिः सुरूपाभिश्च शोभितः' इति । एवं 'यदैका वत्सतरी तदा एकवर्षा । यदा द्वे बह्व्यो वा तदा त्रिहायन्यः' इति विवेकः, ताश्चागुर्विण्यः, 'विसर्ज्यस्याप्यगुर्विण्यो देया गावो वृषस्य च' इति सौरपुराणोक्तेः । होमे विशेषं विष्णुराह 'गवां मध्ये सुसमिद्धमग्निं परिस्तीर्य पौष्णं चरुं श्रपयित्वा 'पूषा गा अन्वेतु नः इहरतिः' इति च हुत्वा वृषभमानीयायस्कारमावाहयेत्' इति । होमानन्तरकृत्यं सौरपुराणे—

ततो वृषं समानीय अग्नेरुत्तरतः स्थितम् ।
सव्यस्फिंजि[1] लिखेच्चक्रं शूलं बाहौ तु दक्षिणे ।।
कुङ्कुमेनाङ्कयित्वाऽऽदौ ब्राह्मणः सुसमाहितः ।।

स्फिंजि वामकटिभागे ।

तप्तेन धातुना पश्चादयस्कारोऽङ्कयेद्वृषम् ।।

कुङ्कुमेनाङ्ककरणं ब्राह्मणस्य तप्तलोहेनायस्कारस्य इति भेदः । तदुत्तरकृत्यं विष्णुधर्मोत्तरे—

अङ्कितं स्थापयेत्पश्चात्स्थाने तस्य तथा पठेत् ।
हिरण्यवर्णेति च ऋचश्चतस्रो मनुजेश्वर ।

---

१ ग. स्फिचीति पाठः ।

आपोहिष्ठेति तिस्रश्च शन्नोदेवीरिति च श्रावयेत् ॥ इति विष्णूक्तेः । 'हिरण्यवर्णाः' इति ऋचोऽथर्ववेदे प्रसिद्धाः । एते च करणमन्त्राः । 'हिरण्यवर्णा' इति चतसृभिः शन्नो देवीरिति च स्नापयेत् । इति । स्नाने जलमाह पारस्करः—

अकालमूलान्कलशानष्टौ स्रग्दामवेष्टितान् ।
सरत्नांश्च सवस्त्रांश्च चूतपल्लवशोभितान् ॥
स्थापयित्वा चतुर्भिस्तु संस्नाप्यो वृषभस्ततः ।
चतुर्भिर्वत्सिकाः स्थाप्यास्ततः सर्वान्विभूषयेत् ॥
ऋचः समुद्रज्येष्ठाद्याः कीर्तयेदभिषेचने ॥ इति ।

अनन्तरकृत्यं विष्णुधर्मोत्तरे—

अलंकुर्यात्ततः पश्चाद्गन्धमाल्यैश्च शक्तितः ।
किङ्किणीभिश्च रम्याभिस्तथा चीनांशुकैः शुभैः ॥

आदित्यपुराणेऽपि—

घण्टां लोहकृतां दद्याच्छृङ्गे च पटलं शुभम् ॥

पटलं सुवर्णादिनिर्मितः कोशः । शिवधर्मोत्तरे—

रक्तपीतैश्च कुसुमैः कुङ्कुमाद्यैश्च वर्णकैः ।
यथाशोभं समालभ्य विभवैः पूजयेद्वृषम् ॥
अष्टाङ्गुलिप्रविस्तीर्णां हेमपट्टविनिर्मिताम् ।
राजतीं चर्मणो वाऽपि मालामुरसि विन्यसेत् ॥
तद्विधां पृष्ठमालां च पुच्छान्तिकमुदञ्चिताम् ।
घण्टां कांस्यमयीं शुद्धां गले बध्नीत सुस्वनाम् ॥
खुरैः सौवर्णरौप्यैश्च केयूराङ्गदभूषितम् ।
पट्टवस्त्रैर्विचित्रैश्च यथाशोभमलङ्कृतम् ॥

'उत्सृजेत्' इत्यर्थः । अतः श्राव्याणि जप्यानि च सूक्तानि । विष्णुधर्मोत्तरे—

ततोऽङ्किते जपेन्मन्त्रमिमं प्रयतमानसः ।
वृषो हि भगवान्धर्मश्चतुष्पादः प्रकीर्तितः ॥
वृणोमि तमहं भक्त्या स मां रक्षतु सर्वतः ।
इति प्रार्थ्य वृषेन्द्रं तं गृहीतकुसुमाञ्जलिः ॥
त्रिः प्रदक्षिणमावृत्य नमस्कुर्याद्यथाविधि ।

प्रत्यङ्मुखीनां तु गवामेतावान्विधिरिष्यते ॥
अथेशान्याभिमुखतः कुर्याद्गावो वृषं तथा ।
गावो वृषस्योभयतो वृषं मध्ये निवेश्य च ॥
सर्वेषां कण्ठवस्त्राणि श्लेषयेत्तु परस्परम् ।
अयं हि वो मया दत्तः सर्वासां पतिरुत्तमः ॥
तुभ्यं चैता मया दत्ताः पत्न्यः सर्वा मनोरमाः ।
संयोज्येति वृषं गोभिः पितृभ्यस्तं निवेदयेत् ॥
सव्येन पाणिना पुच्छं समालभ्य वृषस्य तु ।
दक्षिणेनाप आदाय सकुशाः सतिलास्ततः ॥
ततो गोत्रं समुच्चार्य अमुकस्मा इति ब्रुवन् ।
वृष एष मया दत्तस्तं तारयतु सर्वदा ॥
सहेम सलिलं भूमावित्युच्चार्य विनिक्षिपेत् ।

अत्रायं हि वो मया दत्तः इति मन्त्रो बहुगोपक्षे समवेतः स एकद्विपक्षे ऊहनीय इति केचित्। अन्ये तु बहुगोयुक्तप्रयोगस्यैकद्विगोयुक्तप्रयोगस्य च प्रकृतिविकृतिभावाभावात् 'व्रीहीणां मेध' इत्यस्येव यवप्रयोगे बहुमन्त्रस्य लोपमाहुः । युक्तं चैतत् । 'अमुकस्मा' इत्यत्रैकोद्देशेन क्रियमाणे एकस्य नाम ग्राह्यं बहुपित्रुद्देशेन तु क्रियमाणे बहूनां नाम इति । अनन्तरकृत्यमाह विष्णुः 'वृषं वत्सतरीयुक्तमैशान्यां कालयेद्दिशि ।' कालयेत्प्रणोदयेत् । तत्र मन्त्रमाह स एव—

एनं युवानं पतिं वो ददामि तेन क्रीडन्तीश्चरथ प्रियेण । माहास्महि इत्यादि 'कात्यायनस्तु माहास्महि इत्यादेः स्थाने 'मानः साप्रजनुषः सुभगा रायस्पोषेण समिषा मदेम इति पपाठ । ब्राह्मे—

अथ वृत्ते वृषोत्सर्गे दाता वक्रोक्तिभिः पदैः ।
ब्राह्मणानाह यत्किञ्चिद्येनोत्सृष्टं तु निर्जने ॥
तत्कश्चिदन्यो न नयेद्विभाज्यं न यथा क्रमम् । इति ॥

निर्जने केन चिद्यत्किञ्चिदुत्सृष्टं तदन्येन न नेयं न च विभाज्यम् इति ब्राह्मणान्प्रति दाता वदेदित्यर्थः । पारस्करः—

बहुतोयतृणेऽरण्ये क्षेपणीयः स गोपतिः ।
वत्सतर्यश्च ताः सर्वास्तेनैव सह कालयेत् ॥
अथवा गोकुले क्षेप्या बहुगोधनसङ्कुले ।

शिवधर्मोत्तरे—

निर्गते गोपतौ तत्र ब्राह्मणान् स्वस्ति वाचयेत्।
दद्याच्च दक्षिणां तेषां ब्राह्मणान्भोजयेत्ततः॥
सहिरण्यं रुद्रकुम्भं तथा स्नानघटानपि।
होत्रे प्रदद्यात्तत्सर्वं धेनुं चैव पयस्विनीम्॥

मुक्तवृषस्य धारणादि निषेधति पारस्करः—

विधारयेन्न तं कश्चिन्न च कश्चन वाहयेत्।
न दोहयेच्च ता धेनूर्न च कश्चन बन्धयेत्॥ इति।

ब्राह्मे—

नासौ वाह्यो न तत्क्षीरं पातव्यं केनचित्क्वचित्॥ इति।

वृषोत्सर्गफलमुक्तं देवीपुराणे—

एवं कृत्वा ह्यवाप्नोति फलं वाजिमखोदितम्।
यमुद्दिश्य सृजेद्वत्सं स लभेताविचारणात्॥ इति।

तत्रैव—

एवं वृषोत्सर्गविधिं नरो यः
करोति भक्त्या निजपूर्वजानाम्॥
उद्धृत्य तान्दुर्गतिपङ्कमग्नान्
स्वयं स लोकं समुपैति शम्भोः॥

इति वृषोत्सर्गविधिः।

## मृतशय्यादानम्।

अथ मृतशय्यादानविधिः। स च जीवच्छय्यादानेतिकर्तव्यतातिदेशपरिपूर्ण इति तत्पूर्वकमुच्यते। हेमाद्रौ भविष्ये—

तस्माच्छय्यां समासाद्य सारदारुमयीं दृढाम्।
दन्तपत्रचितां रम्यां हेमपादैरलङ्कृताम्॥
हंसतूलीप्रतिच्छन्नां शुभगण्डोपधानिकाम्।
पीठिकाच्छादनयुतां[1] धूपदीपाधिवासिताम्॥
तस्यां संस्थापयेद्धैमं हरिं लक्ष्म्या समन्वितम्।

अत्र हरिस्थाने प्रेतं तच्छीर्षके धनभृतं कलशं परिकल्पयेत्।

---

१ 'प्रच्छादनपटीगन्ध' इति पाठः।

ताम्बूलकुङ्कुमक्षोदकर्पूरागरुचन्दनम् ।
दीपकोपानहच्छत्रचामरासनभाजनम् ॥
पार्श्वेषु स्थापयेद्भक्त्या सप्त धान्यानि चैव हि ।
शयानस्यापि भवति यदन्यदुपकारकम् ।
शृङ्गारकरकाद्यं तु पञ्चवर्णवितानकम् ॥

मन्त्रस्तु—

यथा न कृष्ण शयनं शून्यं सागरजातया ।
शय्या ममाप्यशून्याऽस्तु तथा जन्मनि जन्मनि ॥
यत्स्यादशून्यं शयनं केशवस्य शिवस्य च ।
शय्या ममाप्यशून्याऽस्तु तथा जन्मनि जन्मनि ।
दत्त्वैवं तस्य सकलं प्रणिपत्य विसर्जयेत् ।
एकादशाहेऽपि तथा विधिरेष प्रकीर्तितः ॥
विशेषश्चात्र राजेन्द्र कथ्यमानं निशामय ।
तेनोपयुक्तं यत्किञ्चिद्वस्त्रवाहनभाजनम् ॥
यद्यदिष्टं च तस्यासीत्तत्सर्वं परिकल्पयेत् ।
तमेव पुरुषं हैमं तस्यां संस्थापयेत्सदा ॥
पूजयित्वा प्रदातव्या मृतशय्या यथोदिता ।

पद्ममात्स्ययोः—

मृतकान्ते द्वितीयेऽह्नि शय्यां दद्यात्सुलक्षणाम् ।
काञ्चनं पुरुषं तद्वत्फलपुष्पसमन्वितम् ॥
संपूज्य द्विजदाम्पत्यं नानाभरणभूषितम् ।
उपवेश्य तु शय्यायां मधुपर्कं तदा वदेत् ॥
वृषोत्सर्गं च कुर्वीत देया च कपिला शुभा ॥ इति ।

शय्यादानफलं भविष्ये—

स्वर्गे पुरन्दरपुरे सूर्यपुत्रालये तथा ।
सुखं स्वपित्यसौ जन्तुः शय्यादानप्रभावतः ॥
ताडयन्ति न तं याम्याः पुरुषा भीषणाननाः ।
न यमेन न शीताद्यैर्बाध्यते स नरः क्वचित् ॥
अपि पापसमायुक्तः स्वर्गलोकं स गच्छति ।
विमानवरमारूढः सेव्यमानोऽप्सरोगणैः ॥

आभूतसंप्लवं यावत्तिष्ठत्यन्तकवर्जितः ॥ इति ।

## अथोदकुम्भश्राद्धम् ।

हेमाद्रौ स्मृतिसमुच्चये—

एकादशाहात्प्रभृति घटस्तोयान्नसंयुतः ।
दिने दिने प्रदातव्यो यावत्संवत्सरं सुतैः ॥

सपिण्डीकरणानन्तरमपि वत्सरपर्यन्तं देय इत्याह याज्ञवल्क्यः—

यस्य संवत्सरादर्वाक् सपिण्डीकरणं भवेत् ।
तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजः ॥ इति ।

अत्र विशेषमाह मदनरत्ने गौतमः—

अदैवं पार्वणश्राद्धं सोदकुम्भं सधर्मकम् ।
कुर्यात्प्रत्याब्दिकाच्छ्राद्धात्सङ्कल्पविधिनाऽन्वहम् ॥

पिण्डदानं चात्र वैकल्पिकम् । तथाच पारस्करः—'अहरहस्तमस्मै ब्राह्मणायोदकुम्भं च दद्यात् पिण्डमप्येके पृणन्ति' इति ।

## अथ सपिण्डनम् ।

एवं वृषोत्सर्गसहितानि षोडशश्राद्धानि कृत्वा ततः सपिण्डीकरणं कुर्यात् । सपिण्डीकरणस्याष्टौ कालाः—

भारते—सपिण्डीकरणं कुर्याद्यजमानस्त्वनग्निमान् ।
अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ ॥
द्वादशेऽहनि षष्ठे वा त्रिपक्षे वा त्रिमासि वा ।
एकादशे वाऽपि मासे मङ्गलं स्यादुपस्थितम् ॥

एते च सप्तकाला उभयोरनग्नित्वे इच्छया विकल्प्यन्ते । 'षष्ठ' इत्यत्र व्यवहितमपि 'मासि' इत्यनुषज्यते । सन्निहितपक्षपदानुषङ्गे 'त्रिमासि' इत्यनेन पौनरुक्त्यापातात् । 'त्रिपक्षे त्रिमासि' इत्यादौ पूरणप्रत्ययार्थविवक्षया तृतीये पक्षे तृतीये मासे पूर्णे इत्यर्थः । हेमाद्रौ तु 'त्रिमासं विहाय षडेवानाहिताग्नेः कालाः' तत्रापि 'अब्दान्ते अभ्युदयागमे च' इति द्वौ मुख्यावन्येऽनुकल्पा इत्युक्तम् । बौधायनः—अथ संवत्सरे पूर्णे सपिण्डीकरणं त्रिपक्षे वा तृतीये वा मासि षष्ठे वैकादशे

---

१ येषु पुस्तकेषु वृषोत्सर्गमृतशय्यादानोदकुम्भश्राद्धप्रकरणानि न संति तेषु दृश्यत इयं पंक्तिः । २ न. कालादर्शे महाभारते माधवीये भविष्ये चेति पाठः ।

वा द्वादशे वैकादशाहे वेति। पैठीनसिः—संवत्सरान्ते विसर्जनं नवममास्यामित्येक इति। विष्णुः—मासिकार्थवद्द्वादशाहश्राद्धं कृत्वा त्रयोदशेह्नि श्राद्धं कुर्यान्मन्त्रवर्जं शूद्राणां द्वादशेह्नि संवत्सराभ्यन्तरे यद्यधिमासो भवेत्तदा मासिकार्थदिनमेकं वर्धयेदिति। अयमर्थः—आशौचोत्तरं द्वादशस्वहस्सु द्वादश मासिकानि तेष्वेवाद्यद्वितीयषष्ठद्वादशदिनेषूनमासिकत्रैपक्षिकोनषाण्मासिकोनाब्दिकानि कृत्वा त्रयोदशेऽह्नि सपिण्डीकरणं कुर्यात्। तथा च मरणदिनात्त्रयोविंशतिमे चतुर्विंशतिमे वा दिवसे विप्रस्य सपिण्डीकरणम्।

यदा प्रेतोऽग्निमान्कर्ता च न तदा लघुहारीतः—

अनग्निस्तु यदा वीर भवेत्कुर्यात्तदा गृही।
प्रेतश्चेदग्निमांस्तु स्यात्त्रिपक्षे वै सपिण्डनम्॥ इति।

तादृशस्त्रिपक्ष एव कुर्यान्नान्यत्र इति नियमः। उत्सृष्टाग्नेरप्येवम्। यदा दंपत्योरन्यतरस्य पूर्वमरणेनाग्नयः प्रतिपादितास्तदेतरस्य साग्नित्वाभावात्कालान्तरे तन्मरणे न त्रिपक्षनियमः। विच्छिन्नाग्नेस्तु आत्मन्यग्निसद्भावात्तस्य साग्नित्वे त्रिपक्ष एव। अत्र हेमाद्रिणा पूर्णे संवत्सरे षण्मासे त्रिपक्षे वा इति गोभिलवाक्ये पूर्णपदं षण्मासादिष्वन्वेतीत्युक्तम्, तदनुषङ्गे प्रमाणाभावादुपेक्ष्यम्। पूर्णेऽब्दे इत्यत्र तूत्तरेऽह्नि,

ततः सपिण्डीकरणं वत्सरादूर्ध्वतः स्थितम्।

इति नागरखण्डोक्तेः,

पितुः सपिण्डीकरणं वार्षिके मृतवत्सरे।

इत्युशनःस्मृतेश्च। अत्र षष्ठादिमासाश्चान्द्रा एव ग्राह्याः—

आब्दिके पितृकार्ये च चान्द्रो मासः प्रशस्यते॥

इति गर्गोक्तेः। ते च त्रिंशत्तिथिस्वरूपा एव न शुक्लादिदर्शान्ताः—

मस्यन्ते परिमीयन्ते स्वकलावृद्धिहानितः।
स एमाते स्मृता मासास्त्रिंशत्तिथिसमन्विताः॥

इति सिद्धान्तशिरोमणिवचनात्। तेन षष्ठमासादिषु चिकीर्षिते सपिण्डीकरणे यदि मध्ये मलमासो गतः स्यात्तदा तमादायैव गणना कर्तव्या न तु षष्टिदिनात्मैको मासः। यत्तु—

षष्ट्यादिदिवसैर्मासः कथितो बादरायणैः।
पूर्वमर्धं परित्यज्य कर्तव्या चोत्तरे क्रिया॥

तत् 'श्रावणे वर्जयेच्छाकम्' इत्यादिचातुर्मास्यादिगतव्रतविषयम् । यदपि 'चान्द्रः शुक्लादिदर्शान्तः' इति ब्रह्मसिद्धान्तवचनम्, तदपि मासविशेषपुरस्कृतमवादिश्राद्धविषयम् । अन्यथा कृष्णाष्टम्यादौ मृतस्य मासिकोनमासिकद्वितीयमासिकत्रैपक्षिकतृतीयमासिकचतुर्थमासिकेत्यादिहेमाद्र्युदाहृतसूत्रे मासिकाद्यनन्तरं विहितस्योनमासिकस्य दर्शात्पूर्वं त्रयोदश्यादावनुष्ठानमापद्येत । दर्शे चान्द्रमासस्य समाप्तत्वात् । एवमूनषाण्मासिकोनाब्दिके षाण्मासिकद्वादशमासिकोत्तरं त्रयोदश्यादावापाद्येयाताम् । नचैतदिष्टम् । कृष्णचतुर्दश्यां मृतस्य कृष्णत्रयोदश्यादावूनषाण्मासिकोनाब्दिकापत्त्योदाहृतसूत्रविरोधः स्यादिति । स्वयं साग्निको निरग्निकस्य सपिण्डनं द्वादशाहे कुर्यात् । तथाच भविष्यत्पुराणे—

> यजमानोऽग्निमान् राजन् प्रेतश्चानग्निमान् भवेत् ।
> द्वादशाहे तदा कार्यं सपिण्डीकरणं सुतैः ॥

कात्यायनः—

> एकादशाहं निर्वर्त्य पूर्वं दर्शाद्यथाविधि ।
> प्रकुर्वीताग्निमान्विप्रो मातापित्रोः सपिण्डताम् ॥

हारीतः—

> या तु पूर्वममावास्या मृताहाद्दशमी भवेत् ।
> सपिण्डीकरणं तस्यां कुर्यादेव सुतोऽग्निमान् ॥ इति ।

दशमी रात्रिस्ततः परा यामावास्या तस्यामित्यर्थः । अतः साग्निककर्तृके सपिण्डीकरणे द्वादशाहो दशाहात्परतो यत्किञ्चिद्दिनं दशाहात्परतोऽमावास्या च, इति त्रयः कालाः इति हेमाद्रौ । कालादर्शमाधवयोस्तु 'मृताहादूर्ध्वं दिनमारभ्य दशमी' इति व्याख्यानादेकादशाहामावास्येति द्वावेव कालौ, इति । उभयोः साग्निकत्वे द्वादशाह एव,

> साग्निकस्तु यदा कर्ता प्रेतश्चाप्यग्निमान् भवेत् ।
> द्वादशेऽह्नि तदा कार्यं सपिण्डीकरणं पितुः ॥

इति विज्ञानेश्वरमाधवाभ्यां स्मरणादित्युदाहृतत्वात् । हेमाद्रिणा त्विदं नालेखि । अत्र च साग्न्यनग्निपदान्याहिताग्न्यनाहिताग्निपराणि । 'प्रेतश्चेदाहिताग्निः स्यात्कर्ताऽनग्निर्यदा भवेत् ।' इति सौमन्तवाक्यात् । एवं चौपासनाग्निमतो न नियमेन द्वादशाहे किन्तु यस्मिन्कस्मिंश्चिकाले इति । तदा पिण्डपितृयज्ञो लुप्यते दशाहमध्यवर्तित्वे ।

तथा पितृव्यतिरिक्तस्य साग्नेः सपिण्डीकरणे साग्नेः कर्तुर्न द्वादशाहनियमः। वाक्ये पितृग्रहणात्। एवमपुत्राहिताग्नेर्यदा पत्नी कर्त्री तदाऽपि नायं नियमः। एवमाधाने सहाधिकृतायाः पत्न्याः पतिः करोति तदाऽपि न त्रिपक्षनियमः। सर्वेषु वाक्येषु क्वचित् 'पितुः' क्वचित् 'पुत्रैः' क्वचित् 'पित्रोः' इति श्रवणात्। अतो न तत्र नियमः। अन्त्येष्टिपद्धतौ व्यासः—

आनन्त्यात्कुलधर्माणां पुंसां चैवाऽऽयुषः क्षयात्।
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते॥ इति।

कुलधर्माणां सपिण्डीकरणं विनानुष्ठातुमशक्यानां प्रथमतृतीयवर्षाद्यनुष्ठेयचूडाकरणादीनामन्येषां वाचारप्राप्तानां वृद्धिश्राद्धानङ्गकानामपि ग्रहणं शिष्टाचारात्। इदं वचनं कर्तृप्रेतयोरुभयोरनग्नित्वे साग्नित्वे कर्तृमात्रस्य वा साग्नित्वे द्वादशाहस्य पूर्वोक्तवचनैः प्राप्तत्वात् प्राशस्त्यं बोधयति। प्रेतमात्रस्य साग्नित्वे तु त्रिपक्ष एव नियतः पूर्वोक्तवचनात्प्राप्तो न तत्र द्वादशाहप्राशस्त्यम्। एते च कालास्त्रैवर्णिकान्प्रति। शूद्रस्य दशाहाशौचपक्षे तु द्वादशाह एव। तथा च सपिण्डनमधिकृत्य विष्णुः—

मन्त्रवर्जं तु शूद्राणां द्वादशेऽहनि कीर्तितम्॥ इति।

अब्दान्तात्पूर्वमेव सपिण्डने क्रियमाणे षोडशश्राद्धानि स्वकालकृतावशिष्टानि वाऽपकृष्टव्यानि। तथाच वृद्धवसिष्ठः—

श्राद्धानि षोडशाकृत्वा न तु कुर्यात् सपिण्डनम्॥ इति।

सपिण्डीकरणोत्तरे च स्वकाले तान्यावर्तनीयानि—

यस्य संवत्सरादर्वाग्विहिता तु सपिण्डता।
विधिवत्तानि कुर्वीत पुनः श्राद्धानि षोडश॥

इति गोभिलोक्तेः। तानि तु वार्षिकवत्कार्याणि—

सपिण्डीकरणादर्वाक्कुर्याच्छ्राद्धानि षोडश।
एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु॥
सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः।
प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि॥

इति पैठीनसिस्मृतेः। सपिण्डीकरणप्राग्भाविनां तु नाऽऽवृत्तिः—

अर्वागब्दाद्यत्र यत्र सपिण्डीकरणं कृतम् ।
तदूर्ध्वं मासिकानि स्युर्यथाकालमनुष्ठितिः ॥

इति कार्ष्णाजिनिस्मृतेः । सपिण्डीकरणोत्तरकर्तव्यान्येव चानुमासिकसञ्ज्ञानि तान्यपि वृद्धिप्राप्तावपकृष्यानि । तथा च माधवीये शाट्यायनिः—

सपिण्डीकरणादर्वागपकृष्य कृतान्यपि ।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात् ॥ इति ।

निषेधस्तु 'निर्वर्त्य वृद्धितन्त्रं तु मासिकानि न तन्त्रयेत्' इति । "अयातयामं मरणं न भवेत्पुनरस्य तु" इति कात्यायनोक्तेः ।

शाट्यायनिः—

प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणं तथा ।
अपकृष्यापि कुर्वीत कर्ता नान्दीमुखं ततः ॥

वृद्धिव्यतिरेकेणापकर्षे प्रत्यवायमाहोशना—

वृद्धिश्राद्धविहीनस्तु प्रेतश्राद्धानि यश्चरेत् ।
स श्राद्धी नरके घोरे पितृभिः सह मज्जति ॥ इति

यत्तु मिताक्षरायाम्—'अब्दान्तः सपिण्डने षोडश श्राद्धानि सपिण्डनोत्तरं कार्याणि" इति मुख्यः पक्षः 'प्राक्' इति तु गौण इत्युक्तम् । तन्न । पूर्वोक्तवृद्धवसिष्ठशाट्यायन्यादिवचोविरोधात् । वर्षोत्तरदिनेऽप्यकृते सपिण्डने गौणकालानाह कालादर्शे ऋष्यशृङ्गः—

सपिण्डीकरणश्राद्धमुक्तकाले न चेत्कृतम् ।
रौद्रे हस्ते च रोहिण्यां मैत्रभे वा समाचरेत् ॥ इति ।

रौद्रमार्द्रा मैत्रमनुराधा । सपिण्डीकरणप्रकारमाह याज्ञवल्क्यः—

गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥
येसमानाइति द्वाभ्यां शेषं पूर्ववदाचरेत् ॥ इति ।

प्रेतपात्रोदकं सावशेषं त्रिष्वपि पितृपात्रेष्वासिच्य प्रेतार्घ्यपात्रोदकावशिष्टेन प्रेतस्थानविप्रहस्तेऽर्घ्यो देय इति पितामहचरणाः । कात्यायनोऽपि 'ततः संवत्सरे पूर्णे चत्वारि पात्राणि सतिलगन्धोदकैः पूरयित्वा त्रीणि पितॄणामेकं प्रेतस्य प्रेतपात्रं पितृपात्रेष्वासिञ्चति येसमानाइति द्वाभ्यामेतेन पिण्डो व्याख्यातः' इति । चतुर्विंशतिमते—

चत्वारीहार्घपात्राणि अर्चयेत्पूर्ववच्छुचिः ।
प्रेतपात्रं पितॄणां तु पात्रेषु निर्वपेद्बुधः ॥
मधुवाता ऋचं जप्त्वा संगच्छध्वमिति ब्रुवन् ।
ये समाना इति द्वाभ्यां केचिदिच्छन्ति सूरयः ।
एवं पिण्डेषु कर्तव्यं चरमं तु विसर्जयेत् ॥ इति ।

व्युत्क्रममृतस्य गोब्राह्मणादिहतस्य च सपिण्डनं नास्ति—

व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डता ॥

इति मिताक्षरोदाहृतस्मृतेः । व्युत्क्रममृतपुत्रेण दर्शादौ पितामहादीनामेव पार्वणं कार्यम्—

ब्राह्मणादिहते ताते पतिते संगवर्जिते ।
व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ ॥

इति कात्यायनोक्तेः । यत्तु मनुः—

पिता यस्य तु वृत्तः स्याज्जीवेच्चापि पितामहः ।
पितुः स नाम संकीर्त्य कीर्तयेत्प्रपितामहम् ॥ इति ।

तत्र पितृप्रपितामहवृद्धप्रपितामहोद्देश्यकपार्वणविध्यर्थं किन्तु पितुः पितामहप्रपितामहवृद्धप्रपितामहेभ्यः इति प्रयोगनियमार्थं पितुर्नाम गृहीत्वा तत्सम्बन्धित्वेन स्वप्रपितामहाद्या उद्देश्या इत्यर्थः । एतादृशपार्वणेन च सह पितुरेकोद्दिष्टमपि कार्यम् । "यस्य पिता प्रेतः स्यात्स पित्रे पिण्डं निधाय पितामहात्पराभ्यां दद्यात्" इति विष्णूक्तेः । एतस्यायमर्थः—पितामहे ध्रियमाणे प्रेते च पितरि पितुरेकं पिण्डमेकोद्दिष्टविधानेन विधाय पितुर्यः पितामहस्तत्पराभ्यां द्वाभ्यां दद्यात्, पितामहस्त्वात्मनः प्रपितामहः संप्रदानभूतः स्थित एवेति प्रपितामहाय ततः पराभ्यां द्वाभ्यां च दद्यादिति मिताक्षरायाम् । 'एताभ्यामेव मनुविष्णुवचोभ्यां व्युत्क्रममृतादीनामपि सपिण्डनं भवति' इति स्मृतिचन्द्रिकादिषु । 'पितुर्नाम संकीर्त्य पितरं देवतात्वेनोद्दिश्य प्रपितामहं तदादिकांस्त्रीनुद्दिशेत्' इति तन्मते मानवस्यार्थः । 'पित्रे पिण्डं निधाय पितामहात्पराभ्याम्' इति 'तृतीयस्याप्युपलक्षणम्' इति वैष्णवस्यार्थः । स्मृत्यर्थसारे तु एतद्द्वयमप्युक्तम् । विभक्तैरप्येतन्न पृथक्कार्यं किन्तु ज्येष्ठेनैव—

नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश ।
एकेनैव तु कार्याणि संविभक्तधनेष्वपि ॥

इति स्मृतेः। ज्येष्ठे प्रवसति तु तद्भिन्नेन येन केनापि दशाहान्तमवश्यं कार्यम्। कनिष्ठपुत्रपौत्रप्रपौत्रदौहित्रादिभिस्त्वेकादशाहिकमपि कार्यम्। यत्त्वन्त्येष्टिपद्धतौ—

कनीयसा कृतं कर्म सपिण्डीकरणं पुनः।
तज्ज्यायसाऽपि कर्तव्यं प्रेतशब्दं विहाय तत्॥

इति तत्,

प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु।
आहिताग्नेः सिनीवाल्यां पितृयज्ञः प्रवर्तते॥

इति मनुवचसा साग्निककनीयांसं प्रति पिण्डपितृयज्ञानुरोधेन सपिण्डनापकर्षविधानात्तं प्रति बोध्यम्। इदं हि वचः पितृयज्ञस्य प्रमाणान्तराप्राप्तसपिण्डनप्रयोजकत्वबोधनेनैवार्थवन्न प्रकारान्तरेण, अन्यस्यैतद्वाक्योपात्तस्यार्थस्य प्रमाणान्तरैः प्राप्तत्वादिति केचित्। तन्न। सत्यमेवमर्थवदेतद्वाक्यम् परन्तु क्लृप्ताधिकारं ज्येष्ठं प्रत्येव चरितार्थं नाक्लृप्तं कनीयसोऽधिकारमपि कल्पयति, गौरवात्। अतः,

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव च।
सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः॥

इति पूर्वलिखितवाक्येन भ्रातृपुत्रादिपदैः 'अर्द्धमन्तर्वेदिमिनोति' इत्यादिवल्लक्षणयाऽऽभ्युदयिककर्तृमात्रस्य सपिण्डनाधिकारबोधेन कनीसोऽपि प्राप्तेस्तद्विषयं कनीयसेति वाक्यम्। ऋद्धिकामस्य कनीयसोपि स्मृत्यर्थसारे पृथगधिकारबोधनात्तद्विषयं वा। परन्तु कनीयसेत्यादिवाक्ये मूलं मृग्यम्। 'न गिरागिरेति ब्रूयादैरं कृत्वोद्गेयम्' इति वद्यतीनामेकोद्दिष्टस्थाने पार्वणमाहोशना—

एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा।
अहन्येकादशे प्राप्ते पार्वणं तु विधीयते॥ इति।

ब्राह्मदैवार्षप्राजापत्यान्यतमविवाहोढायास्तु सपिण्डनं तच्छ्वश्वादिभिः सह। आसुरगान्धर्वराक्षसपैशाचान्यतमोढायास्तु मातामहादिभिः सह इति मिताक्षरादिषु स्पष्टम्। सहगमने तु विवाहभेदमतन्त्रीकृत्य भर्त्रा सह कार्यम्—

भर्त्रा चैकेन कर्तव्यं सपिण्डीकरणं पुनः।
सा मृताऽपि हि तेनैक्यं गता मन्त्राहुतिव्रतैः॥

इति स्मृतेः। तत्र सहगमनभिन्नप्रकारेण मरणे पुरुषवदेव संयोजनादि।

सहगमने तु विश्वदेवस्थाने एकं विप्रं द्वौ वोपवेश्य भर्तुः स्थान एकं तस्याश्च स्थाने परं पितामहादीनां च त्रीनेकं वोपवेश्य द्वयोः प्रेतयोर्द्वयं पितामहादीनां च त्रयमिति पञ्चार्घ्यपात्राण्यासाद्य जलेनापूर्य पत्नीपात्रोदकं सशेषं भर्तृपात्र आसिच्य भर्तृपात्रोदकं च सशेषं पितामहादिपात्रेष्वासिच्य भर्तृपात्रशेषेण भर्त्रे पत्नीपात्रशेषेण पत्न्यै पितामहादिपात्रोदकैश्च पितामहादिभ्योऽर्घ्यं दद्यात्। एवं भर्त्रे तत्पत्न्यै पितामहादिभ्यश्चेति पञ्च पिण्डान् दत्त्वा पत्नीपिण्डं संपूर्णं भर्तृपिण्डेन संपूर्णेन संयोज्य संयोजितं च संपूर्णं त्रेधा विभज्य शकलत्रयं पितामहादिपिण्डेषु योजयेत्। न च पितृभावापन्नेनैव सपिण्डनं न प्रेतेन इति नियमो मानाभावादिति सङ्क्षेपः। यदि मृतस्य भिन्नमातृका अनेके पुत्राः स्युस्तदा सर्वज्येष्ठ एव पितुरौर्ध्वदेहिकं कुर्यात्। अन्वारूढायास्तु कनीयानपि साक्षात्पुत्र एव सर्वं पृथक्कुर्यात् न सपत्नीपुत्रो ज्येष्ठ एव। तस्मिंस्तन्निरूपितपुत्रत्वाभावात्। दाहस्त्वेकस्यामेव चितौ। सपिण्डनं तु ज्येष्ठेन पितुरेव केवलं पितामहादिभिः। कनिष्ठेन तु मातुः पितृसपिण्डनदिन एव दिनान्तरे वा कार्यम्। अत्र एकदिनसपिण्डनपक्षे दिनान्तरपक्षे वा पितृसपिण्डनोत्तरमेव। संभवति पितृभावापन्नेन संयोजने प्रेतसंयोजनायोगादिति केचित्। तत्रापि मातुः पितुश्चेत्येकोद्दिष्टद्वयमेव। मातुरेकोद्दिष्टं पित्रादीनां पार्वणमिति तु साम्प्रदायिकाः। अयं सर्वोऽपि सपिण्डनविधिरमन्त्रकः शूद्राणामपि भवति।

इति सपिण्डनम्।

---

## अथाभ्युदयिकश्राद्धम्।

मार्कण्डेयपुराणे—

> नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयात्मकम्।
> पुत्रजन्मनि तत्कार्यं जातकर्मसमं नरैः॥

नैमित्तिकजातकर्मपदाभ्यां पुत्रजन्मनिमित्तकमेव श्राद्धं न तु जातकर्माङ्गमित्युच्यते। अत एव कर्मप्रदीपे—

> नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते।
> न सोष्यन्तीजातकर्मप्रोषितागतकर्मसु॥

सुखप्रसवार्थं सोष्यन्तीकर्म। प्रोषितागते च पुत्रे पितुः कर्म छन्दोगसूत्रे प्रसिद्धम्। यत्तु हेमाद्रौ—

वृद्धिश्राद्धं तु कर्तव्यं जातकर्मादिकेषु वै ॥ इति ।

तत्राप्यतद्गुणसंविज्ञानो बहुव्रीहिः । अतः पुत्रजनने केवलनैमित्तिकमेव श्राद्धं न जातकर्माङ्गम् । अन्येषु तु कर्मस्वङ्गम् । तथाच हेमाद्रौ जाबालिः—

यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः ।
पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् ॥ इति

विष्णुपुराणे—

कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः ।
नामकर्मणि बालानां चूडाकर्मादिके तथा ॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ।
नान्दीमुखं पितृगणमर्चयेत्प्रयतो गृही ॥ इति ।

तत्रैव कालादर्शे लौगाक्षिः—

नामान्नचौलगोदानसीमोपनयपुंसवे ।
स्नानाऽऽधानविवाहेषु नान्दीश्राद्धं विधीयते ॥

वृद्धगार्ग्यः—

अग्न्याधानाभिषेकादाविष्टापूर्ते क्रिया क्रतौ ।
वृद्धिश्राद्धं प्रकुर्वीत आश्रमग्रहणे तथा ॥
जातस्य जातकर्मादि क्रियाकाण्डमशेषतः ।
पुत्रस्य कुर्वीत पिता श्राद्धं चाभ्युदयात्मकम् ॥

जातकर्मादिक्रियाकाण्डमपत्यसंस्काराः । पुत्रस्येति पुंस्त्वमविवक्षितम् । अनुवाद्यगतत्वात् । अतः कन्याया अपि भवति । तच्च समन्त्रकमेव । मन्त्रबाधे मानाभावात् । यत्तु जातकर्मादिसंस्कारानुक्त्वा याज्ञवल्क्यः—तूष्णीमेताः क्रियाः स्त्रीणाम्, इति तत्प्रधानाङ्गमन्त्रबाधार्थम् । यदि हि 'अप्सवभृथेन चरन्ति' इतिवत्तृतीयान्तेन साङ्गभावनामुक्त्वा तस्यां तूष्णीत्वं विधीयेत ततः स्यादङ्गमन्त्रबाधः । इह तु 'यज्ञाथर्वणं वै काम्यइष्टयस्ता उपांशु कर्तव्याः' इत्यत्रेष्टीनामिव क्रियाणां प्रथमान्तपदोपात्तत्वात् प्रधान एव तूष्णीत्वविधिर्नाङ्गेऽपि । तेन कन्याजातकर्मादौ वृद्धिश्राद्धं समन्त्रकमेव भवतीति दिक् । यत्तु शातातपः—

नानिष्ट्वा तु पितॄन् श्राद्धे कर्म वैदिकमारभेत् ॥

इति तद्यत्र प्रातिस्विकवाक्यैर्नान्दीश्राद्धमुक्तं तत्रैवोपसंह्रियते । अथवा वाक्यान्तरप्राप्तकर्माङ्गत्वे एतत्पूर्वकालतामात्रमेव बोधयति न कर्माङ्गतामपि । अतो न सन्ध्यावन्दनादावतिप्रसङ्गः । पक्षद्वयेऽपि 'नाष्टकासु भवेच्छ्राद्धम्' इत्यादि पूर्वोक्तं कर्मप्रदीपवचो नित्यानुवादकमेव न निषेधकं प्राप्त्यभावात् । प्रधानावृत्त्या प्राप्ताया नान्दीश्राद्धावृत्तेरपवादः कर्मप्रदीपे—

असकृद्यानि कर्माणि क्रियेरन् कर्मकारिणः ।
प्रतिप्रयोगं नैताः स्युर्मातरः श्राद्धमेव च ॥
आधानहोमयोश्चैव वैश्वदेवे तथैव च ।
बलिकर्मणि दर्शे च पौर्णमासे तथैव च ॥
नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः ।
एकमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथक् ॥ इति ।

असकृत्पुनःपुनरित्यर्थः । प्रतिदिनं प्रतिमासं प्रत्यब्दं चेति यावत् । नवयज्ञ आग्रयणेष्टिः ॥ 'आधान' इत्यादिश्लोकद्वयं पूर्वोक्तकर्मणामेव विवरणार्थं न पृथग्वाक्यम् । अतो ज्योतिष्टोमादिषु प्रतिप्रयोगं भवत्येव वृद्धिश्राद्धम् । होमादिनवयज्ञपर्यन्तेषु न पृथक्श्राद्धं किन्तु आधानादौ कृतमेकमेव श्राद्धमुपकरोतीति नारायणः । यदा तु नामकर्मान्नप्राशनचौलोपनयनकर्माण्येकस्य शिशोरेककाले क्रियन्ते तदा वृद्धिश्राद्धं तन्त्रेणैव कार्यम् । तथा च तत्रैव—

गणशः क्रियमाणेषु मातृभ्यः पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु ॥
यत्र यत्र भवेच्छ्राद्धं तत्र तत्र च मातरः ॥

पूज्या इति शेषः । 'अनेकेषां पुंरूपाणां स्त्रीरूपाणां वाऽपत्यानां सजातीयविजातीयानेकोपनयनोद्वाहादिसंस्कारे देशकालकर्त्रैक्याद्वृद्धिश्राद्धं तन्त्रेणेति कश्चित्, तत्तुच्छम् । यथा योगसिद्धाधिकरणे सर्वफलार्थतया बुद्धस्यापि ज्योतिष्टोमादेरेकस्मात्प्रयोगादेकमेवफलं नानेकानि, एकया सामग्र्या एकमेव कार्यं जन्यत इति नियमादित्युक्तम् ; तथेहाप्युपनयनविवाहादिजन्यपरमापूर्वाणामनेकतत्तत्संस्कार्यनिष्ठत्वेन तदङ्गाभ्युदयिकश्राद्धजन्यानामङ्गापूर्वाणामपि तन्निष्ठतापत्तेः, न च तत्संभवति पूर्वोक्तनियमविरोधात् । अतः पृथगेव वृद्धिश्राद्धमिति दिक् । तत्रैव—

कर्मादिषु च सर्वेषु मातरः सगणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥

ताश्च विशिष्य स्मृत्यन्तरे उक्ताः—

गौरी पद्मा शची मेधा सावित्री विजया जया।
देवसेना स्वधा स्वाहा मातरो लोकमातरः॥
धृतिः पुष्टिस्तथा तुष्टिः कुलदेवतया सह।
विनायकेन सहिताः पूजनीयाः प्रयत्नतः॥ इति।

अत्र विशेषः कर्मप्रदीपे—

प्रतिमासु च शुभ्रासु लिखित्वा वा पटादिषु।
अपि वाऽक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः॥
कुड्यलग्नां वसोर्धारां सप्तवारं घृतेन तु।
कारयेत्पञ्चवारान्वा नातिलम्बां नचोच्छ्रिताम्॥
आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः।
षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत्॥

वसोर्द्धारासु च—ब्राह्मी माहेश्वरी कौमारी वैष्णवी वाराहीन्द्राणी चामुण्डाख्या देवताः पूजयन्ति शिष्टाः। 'षड्भ्यः' इति गोभिलीयास्प्रति, तत्सूत्रे पार्वणद्वयाम्नानादिति नारायणवृत्तिकृत्। कातीयानामप्येवमिति केचित्। मत्स्यपुराणे—

उत्सवानन्दसन्ताने यज्ञोद्वाहादिमङ्गले।
मातरः प्रथमं पूज्याः पितरस्तदनन्तरम्॥
ततो मातामहाः पूज्या विश्वेदेवास्तथैव च।

चतुर्विंशतिमते—

मातामहीस्ततः केचिद्युग्मा भोज्या द्विजातयः॥ इति।

ततो मातामहपार्वणानन्तरम्। अत्र बहुवचनान्तैः शब्दैस्तदाद्यास्त्रय उच्यन्ते। मात्रादयश्च मनुष्यपितरः प्राधान्येनोद्देश्याः। 'ऊर्ध्वचक्रास्तु ये तत्र ते नान्दीमुखसंज्ञिताः' इति। नान्दीमुखा दिव्यपितरस्त्वभेदविवक्षयोद्देश्यस्वरूपेन्तर्भावनीयाः। कर्माङ्गाभ्युदयिकेऽप्येता एव देवताः—

निषेककाले सोमे च सीमन्तोन्नयने तथा।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम्॥

इति वचनेन गर्भाधानाद्यङ्गभूतपारिभाषिककर्माङ्गश्राद्धे वृद्धिश्राद्धदेवताद्यतिदेशात्। प्रौष्ठपदपौर्णमासीश्राद्धे तु विशेष उक्तो ब्रह्मपुराणे—

पिता पितामहश्चैव तथैव प्रपितामहः ।
त्रयो ह्यश्रुमुखा ह्येते पितरः संप्रकीर्तिताः ।।
तेभ्यः पूर्वे त्रयो ये तु ते तु नान्दीमुखाः स्मृताः ।। इति ।

अन्यकर्तृके तु कात्यायनः—

स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु ।
पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात् ।।

'अत्र पितामहादिः कन्याप्रदः स्वपितृभ्य एव दद्यात्। 'तस्याभावे तु तत्क्रमात्' इत्यत्र स्वपितृभ्य इत्यस्यानुषङ्गात्' इति हेमाद्रिः । तं पितरमारभ्य यः संस्कार्यस्य पितॄणां क्रमस्तेन क्रमेण दद्यात् न तु स्वकीयेभ्यः पितृभ्यः इति वाचस्पतिमिश्राद्याः। ये पुनराहत्यवचनेनानुक्ताधिकारास्ते तदीयेभ्य एव पितृभ्यो दद्युः। कालादर्शे हारीतः—

अनग्निकोऽपि कुर्वीत जन्मादौ वृद्धिकर्मणि ।
येभ्य एव पिता दद्यात्तानेवोद्दिश्य पार्वणम् ।।

अतश्च साग्निकस्यैव जीवत्पितृकाधिकारबोधके वाक्ये साग्निकग्रहणमुपलक्षणम् । वसिष्ठः—

पूर्वेद्युर्मातृकं श्राद्धं कर्माहे पैतृकं तथा ।
उत्तरेद्युः प्रकुर्वीत मातामहगणस्य तु ।।

वृद्धशातातपः–

पृथग्दिनेऽप्यशक्तश्चेदेकस्मिन्पूर्ववासरे ।
श्राद्धत्रयं प्रकुर्वीत वैश्वदेवं तु तान्त्रिकम् ।।

वृद्धमनुः—

अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः ।।
पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे पितृपूर्वकम् ।

छागलेयः—

एकैकस्य तु वर्गस्य द्वौ द्वौ विप्रौ समर्चयेत् ।
विश्वदेवे तथा द्वौ च न प्रसज्येत विस्तरे ।।

भविष्ये—

पूर्वाह्णे भोजयेद्विप्रानष्टौ सर्वे प्रदक्षिणम् ।
तथा च नवमं विप्रं चतुरस्रे खगेश्वर ।।

---

१ न. इत्यन्ये । हेमाद्रिस्तु तं ··· पितृभ्यःइति । ये पुनराहत्येति पाठः ।

चतुरस्रं पाद्यार्थं मण्डलं तदुपलक्षितं पाद्यं तस्मिन्क्रियमाणे योऽतिथिरागच्छेत्तं नवमं भोजयेदित्यर्थः । तत्रैव पक्षान्तरम् ।

नान्दीमुखान्समुद्दिश्य पितॄन्पञ्च द्विजोत्तमान्—
भोजयेद्विधिवत्प्राज्ञ वृद्धिश्राद्धे प्रदक्षिणम् ॥

वृद्धवसिष्ठः—

मातृश्राद्धे तु विप्राणामलाभे पूजयेदपि ।
पतिपुत्रान्विता भव्या योषितोऽष्टौ मुदान्विताः ॥

कात्यायनः—

सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत् ।
निपातो नहि सव्यस्य जानुनो विद्यते क्वचित् ॥
मधुमध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम् ।
गायत्र्यनन्तरः सोऽत्र मधुमन्त्रविवर्जितः ॥
अल्प एव जपः कार्यः सोमसामादिकः शुभः ।
यस्तत्र विकिरोऽन्नस्य तिलवान्यववांस्तथा ।
उच्छिष्टसन्निधौ सोऽन्नं तृप्तेषु विपरीतकः ॥

'देवपात्रान्तिके तिलवान् पितृपात्रान्तिके यववान्' इत्यर्थः ।

पद्मपुराणे—

तिलार्थस्तु यवैः कार्यः सव्येनैवानुपूर्वशः ॥

ब्रह्माण्डे—

स्वाहाशब्दं प्रयुञ्जीत स्वधास्थाने च बुद्धिमान् ।
वृद्धिश्राद्धे सदा सव्यं यज्ञसूत्रं च कारयेत् ॥
कुशस्थाने च दूर्वाः स्युर्मङ्गलस्याभिवृद्धये ।
प्राङ्मुखो देवतीर्थेन वृद्धौ परिचरेत्पितॄन् ।
सव्येनैवोपवीतेन क्षिप्रं देशविमार्जनम् ॥

पार्वणवदासायं न प्रतीक्ष्यमुच्छिष्टदेशमार्जनमित्यर्थः । कात्यायनः—

प्रातरामन्त्रितान् विप्रान् युग्मानुभयतस्तथा ।
उपविश्य कुशान् दद्यादृजुनैव हि पातितान् ॥

उभयतः प्राङ्मुखानुदङ्मुखांश्च । तथा च भविष्यपुराणे—

प्राङ्मुखांश्चतुरश्चैव चतुरश्च उदङ्मुखान् ॥

छान्दोग्ये 'चत्वार्येवार्घपात्राण्याभ्युदयिके' इति । ब्रह्मपुराणे—

नान्दीमुखान् पितन् भक्त्या साञ्जलिश्च समाह्वयेत् ।
पठेत्पवित्रं मन्त्रं तु विश्वे देवास आगतः ॥

कात्यायनः—

पात्राणां पूरणादीनि दैवे[1]नेह तु कारयेत् ।
ज्येष्ठोत्तरवरान्युग्मान्कराग्राग्रपवित्रकान् ॥

युग्ममध्ये ज्येष्ठस्य करो द्वितीयविप्रकरस्योत्तरो येषु ते तथा कराग्रेऽग्रं पवित्रस्य येषु । आश्वलायनगृह्यपरिशिष्टे 'सोपयामानि चत्वारि पात्राणि शन्नोदेवीरित्यनुमन्त्रितासु यवानावपति यवोऽसि सोमदेवत्यो गोसवे देवनिर्मितः प्रत्नवद्भिः प्रत्तः पुष्ट्या नान्दीन् लोकान् प्रीणयाहि नः स्वाहा विश्वेदेवा इदं वोऽर्घ्यं, नान्दीमुखः पितरः इति यथालिङ्गमर्घ्यदानं पितरः प्रीयन्तामिति अपां प्रतिग्रहणं चैवमुत्तरयोरपि पितामहप्रपितामहयोः' इति । सोपयामानि सहायभूतपात्रान्तरसहितानीत्यर्थः । सर्वं द्विर्द्विः इति । गन्धादिकमेकैकत्र द्विर्द्विर्देयम् । नित्यं चाऽग्नौकरणं स्वाहाकारेण होमश्च । अग्नौकरणमित्यस्याग्रे पाठान्तरम् 'पाणौ होमोऽग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा' इति । तथा पृषदाज्यमिश्र ओदनो हविः सर्वत्र, तस्यार्द्धे द्वे द्वे आहुती जुहुयात्' इति । सर्वत्र अन्नकार्ये, दधिमिश्रमाज्यं पृषदाज्यम् । भविष्यत्पुराणे—

पृषदाज्येन संयुक्तं दद्यादोदनमादितः ।
पायसं च तथा भव्यं मोदकादिरसोत्तरम् ॥
मधुरं भोजनं दद्यान्न चाऽम्लं परिवेषयेत् ।

चन्द्रिकायां प्रचेताः—

न जपेत्पैतृकं जप्यं न मांसं तत्र दापयेत् ।
प्राङ्मुखो देवतीर्थेन क्षिप्रं देशनिमार्जनम् ॥ इति

आश्वलायनगृह्यपरिशिष्टे—'अतो देवा अवन्तुनइत्यङ्गुष्ठग्रहणम्' इति 'पावमानीः शंवती रौद्रीं चाप्रतिरथं च श्रावयेत्' इति च ।

वृद्धवसिष्ठः—

तृप्तिप्रश्ने तु संपन्नं दैवे रोचत इत्यपि ।

---

[1] ग. दैवेनेव हि पाठः

संपन्नं पित्र्ये इति शेषः।

दधिकर्कन्धुसहिताः पिण्डाः कार्या यथाक्रमम् ॥

इति च। वृद्धशातातपः—

प्रदद्यात्प्राङ्मुखः पिण्डान् वृद्धौ नाम्ना स बाह्यतः ॥

स श्राद्धकर्त्ता बाह्यतः भोजनशालाया बहिः न तूच्छिष्टसमीपे।

वृद्धवसिष्ठः—

प्राङ्मुखो देवतीर्थेन प्राक्कूलेषु कुशेषु च।

दत्त्वा पिण्डान्न कुर्वीत पिण्डपात्रमधोमुखम् ॥

भविष्योत्तरे—

पिण्डनिर्वपणं कुर्यान्न वा कुर्यान्नराधिप।

वृद्धिश्राद्धे महाराज कुलधर्ममवेक्ष्य वै ॥

ब्रह्मपुराणे—

योऽग्नौ तु विद्यमानेऽपि वृद्धौ पिण्डान्न निर्वपेत्।

पतन्ति पितरस्तस्य नरके स तु पच्यते ॥

चतुर्विंशतिमते—

द्वौ द्वौ चाभ्युदये पिण्डावेकैकस्मै च निर्वपेत्[1]।

एकं नाम्ना परं तुष्णीं दद्यात्पिण्डान्पृथक् पृथक् ॥

ब्रह्मपुराणे—

प्राङ्मुखांस्त्वथ दर्भांस्तु दद्यात्क्षीरावनेजनम् ॥

मार्कण्डेयः—

नान्दीमुखानां कुर्वीत प्राज्ञः पिण्डोदकक्रियाम्।

प्राजापत्येन तीर्थेन यच्च किञ्चित्प्रजापतेः ॥

पिण्डानधिकृत्योक्तं ब्रह्मपुराणे—

अर्घं पुष्पं च धूपं च प्रशस्तमनुलेपनम्।

वासः साध्वहतं शुद्धं देयं च सदशं समम् ॥

द्राक्षामलकमूलानि यवांश्चाथ निवेदयेत्।

तान्येव दक्षिणार्थं तु दद्याद्विप्रेषु सर्वदा ॥

अथाक्षय्योदकस्थाने दत्त्वा क्षीरयवादिकम्।

नान्दीमुखेभ्यश्चाक्षय्यमिदमस्त्विति संजपेत् ॥

---

१ ग. विनिक्षिपेत् पाठान्तरं।

कात्यायनः—

अक्षय्योदकदानं च अर्घदानवदिष्यते ।
षष्ठ्यैव नियतं कुर्यान्न चतुर्थ्या कदाचन ।।
प्रपितामहसंज्ञाश्च नान्दीमुख्यश्च मातरः ।
मातामह्यः पितामह्यः प्रपितामह्य एव च ।।
मातामहेभ्यश्च तथा नान्दीवक्त्रेभ्य एव च ।
प्रमातामहसंज्ञेभ्यो भवद्भिश्च स्वधोच्यताम् ।।
अस्तु स्वधेति ते तं च जल्पन्ति प्रहसंति च ।
स्वाहाशब्दं प्रयुञ्जीत स्वधास्थानेषु बुद्धिमान् ।।

इति त्वेतद्व्यतिरिक्तविषयम् । शातातपः—

नान्दीमुखास्तु पितरः प्रीयन्तामिति वाचयेत् ।

ब्रह्मपुराणे—

विश्वेदेवाश्च प्रीयन्तामिति दाता ऽब्रवीदिमान् ।
प्रीता भवन्तु ते तं च वन्दति मधुराक्षरम् ।।
नान्दीमुखास्तु पितरः प्रीयन्तामिति वाचयेत् ।

चतुर्विंशतिमते—

प्रीयन्तामिति च ब्रूयात्पिण्डान्स्वाहेति च क्षिपेत् ।।

ब्रह्मपुराणे—

त्यमूषुवाजिनमिति पठंस्तांश्च विसर्जयेत् ।।

'दातार' इति प्रार्थनातः पूर्वप्रयोज्यं श्लोकान्तरमुक्तं भविष्यत्पुराणे—

माता पितामही चैव तथैव प्रपितामही ।
एता भवन्तु मे प्रीताः प्रयच्छन्तु च मङ्गलम् ।।
[ पिता पितामह श्चैव तथैव प्रपितामहः ।
मातामह स्तत्पिता च प्रमातामहकस्तथा ।। एते भवन्तु० ]

चतुर्विंशतिमते—

शेषमन्नमनुज्ञाप्य वैश्वदेवक्रियां ततः ।
श्राद्धाहि श्राद्धशेषेण वैश्वदेवं समाचरेत् ।

पद्मपुराणे—

---

१ ग. घ. तृप्यन्तां पाठान्तरं.

एवं शूद्रोऽपि सामान्यं वृद्धिश्राद्धं तु सर्वदा ।
नमस्कारेण मन्त्रेण कुर्यादेवादि वै बुधः ॥

इत्याभ्युदयिकश्राद्धम् ।

---

## अथनित्यश्राद्धम् ।

मनुः—

पयोमूलफलैर्वाऽपि पितृभ्यस्तृप्तिमाहरन् ।
कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ॥
पितॄनुद्दिश्य विप्रांस्तु भोजयेद्विप्रमेव वा ।

एतच्च पञ्चमहायज्ञान्तर्गतम् ।

एकमप्याशयेद्विप्रं पितृयज्ञार्थसिद्धये ॥

इति कात्यायनोक्तेः । एकस्यापि विप्रस्य भोजनपर्याप्तस्यान्नस्यालाभे कात्यायनः—

अदैवं नास्तिचेदन्नं भोक्ता भोज्यमथापि वा ।
अभ्युद्धृत्य[1] यथाशक्त्या किञ्चिदन्नं यथाविधि ॥
पितृभ्य इदमित्युक्त्वा स्वधाकारमुदाहरेत् ।

एतच्च ब्राह्मणाय देयम्,

उद्धृत्य वा यथाशक्ति किञ्चिदन्नं समाहितः ।
वेदतत्त्वार्थविदुषे ब्राह्मणायोपपादयेत् ॥

इति कूर्मपुराणात् । इदं च षड्दैवत्यम्,

एकमप्याशयेद्विप्रं षण्णामप्यन्वहं गृही ।

इति व्यासोक्तेः । पार्वणश्राद्धमुक्त्वा देवलः—

अनेन विधिना श्राद्धं कुर्यात्संवत्सरं पृथक् ।
द्विश्चतुर्वा यथाश्रद्धं मासे मासे दिने दिने ॥

हारीतः—

नित्यश्राद्धमदैवं स्यादर्घपिण्डादिवर्जितम् ।

प्रचेताः—

नामंत्रणं न होमं च नाव्हानं न विसर्जनम् ।
न पिण्डदानं न सुरान्नित्ये कुर्याद्द्विजोत्तमः ॥

---

१ ग. अप्युद्धृत्य पाठः ।

भविष्योत्तरे—

आवाहनस्वधाकारपिण्डाग्नौकरणादिकम् ।
ब्रह्मचर्यादिनियमो विश्वेदेवास्तथैव च ॥
नित्यश्राद्धे त्यजेदेतान् भोज्यमन्नं प्रकल्पयेत् ॥

भोज्यमन्नं 'स्वस्य' इति शेषः—

मध्याह्ने वेदविदुषे दक्षिणापिण्डवर्जितम् ।
नित्यश्राद्धे ततो दद्याद्भुङ्क्ते यत्स्वयमेव हि ॥

इति ब्रह्माण्डपुराणात् । अनेन तैलाद्यनुज्ञाऽपि कृता भवति । देवलः—

अघृतं भोजयन्विप्रं स्वे गृहे सति सर्पिषि ।
परत्र निरयं घोरं गृहस्थः प्रतिपद्यते ।
मिष्टमन्नं स्वयं भुक्त्वा पश्चात्कदशनं लघु ॥
ब्रह्माणं भोजयन्विप्रो निरये चिरमावसेत् ।

स एव—

उपवेश्याऽऽसनं दत्त्वा संपूज्य कुसुमादिभिः ।
निर्दिश्य भोजयित्वा तु किञ्चिद्दत्त्वा विसर्जयेत् ॥

भविष्योत्तरे—

प्रदद्याद्दक्षिणां शक्त्या नमस्कारैर्विसर्जयेत् ॥

'दक्षिणापिण्डवर्जितम्' इति ब्रह्माण्डपुराणाद्विहितप्रतिषिद्धत्वाद्दक्षिणाविकल्पः ।

इति नित्यश्राद्धम् ।

---

## अथ संन्यासाङ्गश्राद्धम् ।

बौधायनीये 'संन्यासं संकल्प्य पूर्वमष्टम्या आरभ्य श्राद्धाष्टकं कुर्यात् पूर्णमास्यन्तममावास्यान्तं वा'। शौनकः 'पूर्वेद्युर्नान्दीमुखश्राद्धं कुर्यात्' इति[1] । दैवश्राद्धे ब्रह्मविष्णुमहेश्वराः । ऋषिश्राद्धे देवर्षिब्रह्मर्षिक्षत्रियर्षयः ।

शौनके तु । देवर्षिक्षत्रर्षिमनुष्यर्षय इत्युक्तम् । दिव्यश्राद्धे वसुरुद्रादित्याः । मनुष्यश्राद्धे सनकसनन्दनसनातनाः । भूतश्राद्धे पृथिव्या-

---

[1] ग. अष्टश्राद्धेषु देवता उक्ताः शौनकेन इत्यधिकं ।

दीनि भूतानि चक्षुरादीनि करणानि चतुर्विधो भूतग्रामः । पित्रादित्रयं पितृश्राद्धे । मात्रादित्रयं मातृश्राद्धे । आत्मश्राद्धे आत्मपितृपितामहाः । इत्यष्टौ श्राद्धानि । अनन्तरं पुण्याहं वाचयेदिति । एतानि च अग्निमान् पार्वणविधिना कुर्यात् । अनग्निमानेकोद्दिष्टविधिना । अत्र संन्यासिपद्धतौ विशेषः—सर्वेषु श्राद्धेषु युग्मविप्रभोजनम् । दैवश्राद्धे 'भवद्भ्यां क्षणः क्रियताम्' इत्यादिः प्रयोगः । तिलार्थे यवाः । सर्वं सव्येन प्रदक्षिण्येन कार्यम् । ततो ब्रह्मार्पणान्तं कृत्वा 'यस्य स्मृत्या' इति जपित्वा 'अमृतमस्तु' इत्युक्त्वा भोजनसमाप्तिपर्यन्तं विष्णुं स्मरन्पुरुषसूक्तादीनि जपेत् । विप्रांस्तृप्तान् ज्ञात्वा प्राङ्मुखः प्रागन्ता उदगपवर्गा नव रेखा लिखित्वा तासु प्रागग्रान्दर्भानास्तीर्य देवतादिपञ्चस्थानेषु तूष्णीं पितृमात्रात्ममातामहानां स्थानेषु मार्जयंतां मम पितरः इत्युदकं निषिञ्चेत् । देवादिपञ्चस्थानेषु तत्तन्नामान्युच्चार्य प्रागपवर्गान् पिण्डान् दद्यात् । पित्रादिषु त्रिषु प्रतिस्थानं स्वगृह्योक्तविधिना पिण्डान् दद्यात् । पितरि मातरि मातामहे वा जीवति तत्पार्वणलोपः । सर्वत्र पूर्ववदक्षय्योदकं दद्यात् । ततो 'यस्यस्मृत्या' इत्युक्त्वा ब्राह्मणान्विसर्जयेदिति ।

---

## अथ जीवच्छ्राद्धम् ।

आदित्यपुराणे—

> देशकालधनश्रद्धाव्यवसायसमुच्छ्रये ।
> जीवते वाथ जीवाय दद्याच्छ्राद्धं स्वयं नरः ॥

कर्त्रन्तराभावे स्वयमेव स्वस्य श्राद्धं कर्तव्यम् इति हेमाद्रिः । बौधायनीये तु 'अथाप्युदाहरन्ति—

> जीवन्नेवाऽऽत्मनः श्राद्धं कुर्यादन्येषु सत्स्वपि ।
> यथाविधि प्रवृत्त्याऽऽशु सपिण्डीकरणादृते ॥' इति ।
> कृतोपवासः सुस्नातस्त्रयोदश्यां समाहितः ।

अत्र यद्यपि त्रयोदशीसामान्यमुक्तं तथापि 'अपरपक्षे त्रयोदशीमुपेत्य' इति बौधायनोक्तेः कृष्णपक्षस्था ग्राह्या ।

---

१ षष्ठे पितृश्राद्धे पित्रादित्रयं मातामहाश्चेति शौनकवाक्यादत्रापि मातामहादित्रयमावश्यकम् । तेनोपरिष्टादुदकनिषेचने तत्कीर्तनं नानुपपन्नमेवं मातामहे जीवति तत्पार्वणलोप इति च ।

कर्तारमथ भोक्तारं विष्णुं सर्वेश्वरं यजेत् ।
जले स्थलेऽम्बरे मूर्त्तौ कलशे पुष्करे रवौ ॥

रवौ रविप्रतिमायाम् ।

चन्द्रार्कगुरुगोविप्रमातापितृषु सर्वगम् ।
सदक्षिणास्तु सजलास्तिस्रस्तु जलधेनवः ॥
निवेदयेत्पितृभ्यश्च तदग्रे तु समाहितः ॥

एवं संपूज्य पितुरुद्देशेन तिस्रो जलधेनूर्दद्यात् । तत्र मन्त्रानाह—

सोमाय त्वा पितृमते स्वधा नमः इति ब्रुवन् ।
अग्नये कव्यवाहनाय स्वधा नम इयि स्मरन् ॥
दक्षिणेन निदध्याच्च तृतीयां दक्षिणायुताम् ।
यमायाङ्गिरसे वाथ स्वधा नम इति स्मरन् ॥

जलधेनुविधिर्दानमयूखे द्रष्टव्यः ।

तयोर्मध्ये तु निक्षिप्य विप्रान् पश्चोपवेशयेत् ॥

प्रथमामुत्तरतः द्वितीयां दक्षिणतः तृतीयां मध्ये निक्षिप्येत्यर्थः ।

आवाहनादिना पूर्वं विश्वान्देवान्प्रपूज्य च ।
वसुभ्यस्त्वामहं विप्र रुद्रेभ्यस्त्वामहं ततः ॥
सूर्येभ्यस्त्वामहं विप्र भोजयानीति तान्वदेत् ।
आवाहनादिकं सर्वं कुर्याच्च पितृकर्मवत् ॥

वसुभ्यस्त्वामहं विप्रभोजयानीति । एवं रुद्रेभ्यः सूर्येभ्यः इत्युक्त्वाऽऽवाहनादिश्राद्धविधिना भोजयित्वा वस्वादिभ्यस्त्रीन् पिण्डान् दद्यादित्यर्थः ।

सौम्या धेनुस्ततो देया वासवाय द्विजाय तु ॥

वासवाय च रक्षोद्देशेनोपवेशिताय ।

आग्नेयीवाऽथ रौद्राय याम्या सूर्यद्विजाय तु ।
विश्वेभ्यश्चाथ देवेभ्यस्तिलपात्रं निवेदयेत् ॥

तिलपात्रं कांसस्य इति केचित् ।

स्वस्त्युदकमथाक्षय्यं जलं दत्त्वाऽथ तान् द्विजान् ।
विसर्जयेत्स्मरन् विष्णुं देवमष्टाक्षरं विभुम् ॥

'ॐ नमो नारायणाय' इत्यष्टाक्षरः ।

ततः कामकुलेशानं निशि नारायणं स्मरेत् ॥

कामकुलेशानविशेषणकं नारायणमित्यर्थः ।

चतुर्दश्यां ततो गच्छेद्यथाप्राप्तां सरिद्वराम् ।
पूर्वेण विप्रः सौम्येन राजा वैश्योऽपरेण च ।
दक्षिणेन तथा शूद्रो मार्गेण विकिरन्यवान् ॥

'गच्छेत्' इति शेषः । सौम्यमुत्तरम् ।

वस्त्राणि लोहखण्डानि जितं ते इति संस्मरन् ।
जितं ते पुण्डरीकाक्ष जितं ते विश्वभावन ॥
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥ इति ।

ततो नदीतीरे दक्षिणामुखः स्मार्तं लौकिकं वाऽग्निं स्वयं प्रज्वल्य चित्यर्थं गर्त्तखननभूमिप्रार्थनादि प्रत्यक्षमरणवत्सर्वं कुर्यात् । जीवच्छ्राद्धे सर्वत्र प्रेतशब्दो न प्रयोज्यः । ततः प्रत्यक्षशववद्दाहे कर्त्तव्यं स्वशाखोक्तं पूर्णाहुत्यन्तं होमं कृत्वा प्रधानहोमस्थाने निरग्नि-र्भूम्यै यमाय रुद्राय च स्वाहा, इति संस्कृताज्येनाहुतित्रयं हुत्वा पञ्चाशत्कुशैरात्मप्रतिकृतिमन्येन 'क्रव्यादमग्निम्' इत्यादिना स्वस्वमन्त्रेण दाहयेत् । ततो 'वातास्त इत्यादि शवदाहवत् । ततो मुद्गमिश्रं तिलमिश्रं च तण्डुलचरुद्वयमन्यस्मिन्नग्नौ सपवित्रकं श्रपयेत् । तदग्निसमीपे कर्पूत्रयं कृत्वा प्रत्येकं मधुक्षीरघृतोदकैः पूरयेत् । तथान्ते मुद्गपूरितानि त्रीणि शरावाणि 'ॐ पृथिव्यै नमस्तुभ्यम्, ॐ यमाय नमस्तुभ्यम्, ॐ रुद्राय श्मशानपतये नमस्तुभ्यम्' इति प्रत्येकं निवेदयेत् । ततो दीप्तं प्रतिकृतिदाहार्थमग्निं 'ॐ क्रव्यादवह्नितप्तायै भूम्यै नमः' इति पठन् क्षीराक्तजलकुम्भंजलेन[1] निर्वापयेत् । ततः स्नात्वा नाभिमात्रे जले स्थित्वा यमादिभ्यः सप्त तिलाञ्जलीन् दद्यात् ॥ तत्रायं क्रमः—'ॐ यमाय स्वधा नमः' एवं 'मृत्यवेन्तकाय वैवस्वताय धर्मराजाय कालाय सर्वप्राणिहराय' इति । ततः 'ॐ नमो रुद्राय श्मशानपतये नमः इति मन्त्रेण लाजोदकपूर्णकुम्भं भुवि विकिरेत् । ततो दक्षिणाग्रेषु दर्भेषु 'स्वधाऽमुकगोत्रामुकैतत्तिलोदकं तुभ्यमस्त्विति तिलोदकं दद्यात् । शूद्रे स्वधास्थाने नमः । ततः पूर्वकृतचरुभ्यां पञ्च पञ्च पिण्डान् प्रत्येकं इत्येवं दश पिण्डान्स्वोद्देशेन पिण्डदानविधिना दत्त्वाऽर्घ्यं गन्धपुष्पधूपदीपबलीन् दत्त्वा प्रत्येकं सर्वेषाम् 'अक्षय्यमस्तु

---

१ क्षीराक्तजलकुम्भे जलेनेति सर्वत्र पाठः ।

इति ब्रूयात् । ततो विष्णुं सौम्यमुखं स्मरेत् । पिण्डानामूष्मणि निवृत्ते एकैकं पिण्डं जलपूर्णकुम्भे निधाय नाभिमात्रे जले प्रविश्यैकैकं सकुंभं जलमध्ये क्षिपेत् । तत एकैकं जलपूर्णकुम्भमेकैकं च तिलजलाञ्जलिमित्येवं पञ्चपञ्चाशत् कुम्भा जलाञ्जलयश्च देयाः । ततः स्नात्वा गृहे आगत्य गृहद्वारोपान्ते पात्रद्वये क्षीरं जलं च क्षिपन् 'जीवात्र स्नाहि' इति जलं निवेद्य 'इदं दुग्धं पिब' इति दुग्धं निवेदयेत् । तस्मिन्दिने आशौचम् । ततो रात्रौ दक्षिणामुखदर्भेषु उदङ्मुखः स्वपेत् । प्रातरमावास्यायां स्नात्वा 'जीवच्छ्राद्धं करिष्ये' इति सङ्कल्प्य सपिण्डकं स्वस्यैकोद्दिष्टं श्राद्धं कुर्यात् । सर्वत्र जीवच्छ्राद्धे प्रेतशब्दोच्चारणं नास्ति । अत्रोक्तजलधेनुविधिर्विष्णुधर्मोत्तरे—

जलधेनुं प्रवक्ष्यामि प्रीयते दत्तया यया ।
देवदेवो हृषीकेशः सर्वेशः सर्वभावनः ।
जलकुम्भं नरव्याघ्र सुवर्णरजतान्वितम् ॥
रत्नगर्भमशेषैस्तु याम्यैर्धान्यैः समन्वितम् ।
सितवस्त्रयुगच्छन्नं दूर्वापल्लवशोभितम् ॥
कुष्टमांसीमुरोशीरवालकामलकैर्युतम् ।
प्रियङ्गुपत्रसहितं सितवस्त्रोपवीतिनम् ॥
सच्छत्रं सउपानत्कं दर्भविष्टरसंस्थितम् ।
चतुर्भिः संवृतं भूप तिलपात्रैश्चतुर्दिशम् ॥
स्थगितं दधिपात्रेण घृतक्षौद्रवता मुखे ।
उपोषितः समभ्यर्च्य वासुदेवं जलेशयम् ।
पुष्पधूपोपहारैश्च यथाविभवमादृतः ॥
सङ्कल्प्य जलधेनुं च कुम्भं तमभिपूज्य च ।
पूजयेद्वत्सकं तद्वत्कृतं जलमयं बुधः ॥
एवं संपूज्य गोविन्दं जलधेनुं सवत्सकाम् ।
सितवस्त्रधरः शान्तो वीतरागो विमत्सरः ॥
दद्याद्द्विजाय राजेन्द्र प्रीत्यर्थं जलशायिनः ।
जलशायी जगद्योनिः प्रीयतां मम केशवः ॥
इति चोच्चार्य भूनाथ विप्राय प्रतिपाद्य ताम् ।
अपक्वान्नाशिना स्थेयमहोरात्रमतः परम् ।

अनेन विधिना दत्त्वा जलधेनुं नराधिप ॥
सर्वान्कामानवाप्नोति ये दिव्या ये च मानुषाः ।
शरीरारोग्यमाबाधाप्रशमः सार्वकामिकः ॥
नृणां भवति दत्तायां जलधेन्वां समाहितः ।

अत्र जलकुम्भे शक्त्या परिमाणम् । सुवर्णाद्यन्वितत्वं च–सुवर्णं शृङ्गाकृति, रजतं खुराकृति, तिलपात्रं कटिगतं ताम्रमयादि, दधिपात्रं कांस्यमयम्, धान्यानि पार्श्वद्वयम्, कुष्ठादीनि घ्राणदेशे, प्रियङ्गुपत्रं श्रवणे, यज्ञोपवीतं शिरसि, वत्सश्चतुर्थांशेन, दक्षिणा च सुवर्णमारभ्य यथाशक्ति । एतच्चेतरधेनुवत् 'अविरोधात्सामान्यात् इतरेषु तथात्वम्' इति न्यायेन ज्ञेयम् ।

इति श्रीमीमांसकशङ्करभट्टात्मजभट्टनीलकण्ठकृते भगवद्भास्करे श्राद्धमयूख समाप्तः ।

भगवंतभास्करे

मीमांसकश्रीनीलकण्ठभट्टविरचितः

# नीतिमयूखः

( पञ्चमः )

घारेइत्युपाह्वमहादेवशर्मणा लेलेइत्युपाह्वव्यंकटेशशास्त्रिणाच संशोधितः ।



चौखम्बा संस्कृत प्रतिष्ठान

( प्राच्यभारती के प्रकाशक एवं वितरक )

३८ यू. ए., जवाहरनगर, बंगलो रोड

दिल्ली ११०००७

# अथ नीतिमयूखस्थविषयाणामनुक्रमः

इति विषयानुक्रमः

# नीतिमयूखः ।

पञ्चमः ५

श्रीगणेशाय नमः ॥

देवर्षिरक्षःसंघानामवाङ्मनसगोचरम् ।
प्रत्यक्षमपि तद्धाम सर्वदा समुपास्महे ॥ १ ॥
विरोधिमार्गद्वयदर्शनार्थं द्वेधा बभूवात्र परः पुमान्यः ।
श्रीशंकरोभट्ट इहैकरूपो मीमांसकाद्वैतमुरीचकार ॥ २ ॥
पितृसौहित्यसंसिद्धिहेतुमुक्त्वाथ तत्सुतः ।
नीलकण्ठः प्रकुरुते राजनीतिं नृपादृताम् ॥ ३ ॥

तत्र राजशब्दः क्षत्रियमात्रे शक्तो न राज्ययोगिनि । अभिषेकोत्तरभाविराज्ययोगात्प्रागपि राजानमभिषिञ्चेदित्यादेः शास्त्रीयप्रयोगस्य क्षत्रियमात्रेऽपि सद्भावादिति निरणाय्यवेष्ट्यधिकरणे । तस्य च विधिवदभिषिक्तस्य प्रजापालनं धर्म इत्याह मनुः—

ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि ।
सर्वस्यास्य यथान्यायं कर्तव्यं परिरक्षणम् ॥

ब्राह्मसंस्कारो ब्राह्मणैः कृतोऽभिषेकः । अभिषेकविधिश्च विष्णुधर्मोत्तरे—

इति संभृतसंभारो राज्ञः सांवत्सरस्ततः ।
कालेऽभिषेचनं कुर्यात्तं कालं कथयामि ते ॥

सांवत्सरो ज्योतिर्वित् ।

मृते राज्ञि न कालस्य नियमोऽत्र विधीयते ।
तत्रास्य स्नपनं कार्यं विधिवत्तिलसर्षपैः ॥
घोषयित्वा जयं चास्य सांवत्सरपुरोहितौ ।
अन्यासनोपविष्टस्य दर्शयेतां जनं शनैः ॥
स सांत्वयित्वा तु जनं मुक्त्वा बन्धनगांस्ततः ।
अभयं घोषयित्वा तु कालाकांक्षी ततो भवेत् ॥

अत्र यदा पूर्वराजनि मृतेऽन्योऽभिषिच्यते तदासौ तिलसर्षपस्नानाद्यभयघोषान्तेकृतेऽन्यासनस्थः प्रजाः पालयन्नभिषेककालमाकांक्षेत् ।

प्राप्तकाले चात्मानमभिषेचयेत् । यदा तु पूर्वराजनि जीवत्येव कारणान्तरादन्योऽभिषिच्यते तदा कालप्रतीक्षान्तमकृत्वा काल एवाभिषेकः कार्यः । तमेव कालमाह—

नाभिषेच्यो नृपश्चैत्रे नाधिमासे च भार्गव ।
न प्रसुप्ते तथा विष्णौ विशेषात्प्रावृषि द्विज ॥

प्रावृषो विशेषतो निषेधोऽगतौ तद्भिन्नविष्णुशयनकालाभ्यनुज्ञानार्थः ।

न च भौमदिने राम चतुर्थ्यां च तथैव च ।
नवम्यां नाभिषेक्तव्यश्चतुर्दश्यां च भार्गव ॥
ध्रुवाणि वैष्णवं शाक्रं दास्रपुष्यौ तथैव च ।
नक्षत्राणि प्रशस्यन्ते भूमिपालाभिषेचने ॥

वैष्णवं श्रवणः । शाक्रं ज्येष्ठा । दास्रमश्विनी ।

कार्या पौरंदरी शान्तिः प्रागेवास्य पुरोधसा ।

पौरंदरी ऐन्द्री सा च वक्ष्यते ।

प्राप्तेऽभिषेकदिवसे सोपवासः पुरोहितः ।
सितमाल्योपवीतश्च सर्वाभरणभूषितः ॥
वेदिमुल्लिख्य मन्त्रेण हुत्वा च विधिवत्ततः ।
शर्मवर्मगणं चैव तथा स्वस्त्ययनं गणम् ॥
आयुष्यमभयं चैव तथैव चापराजितम् ।

एते पञ्चगणा अग्रे वक्ष्यन्ते ।

संपातवन्तं कलशं तथा कुर्याच्च काञ्चनम् ।
वह्नेर्दक्षिणपार्श्वस्थः श्वेतचन्दनभूषितः ॥
श्वेतानुलेपनः स्रग्वी सर्वाभरणभूषितः ।
आसनस्थः सुखं पश्येन्निमित्तानि हुताशने ॥
पश्येयुरन्ये च तथा नृसिंहा
दैवज्ञवाक्यंनिपुणं च भूयः ।
सांवत्सरस्याथ सदस्यमुख्यः
सदस्यमुख्यस्य पुरोहितश्च ॥
प्रदक्षिणावर्तशिखस्तदा जाम्बूनदप्रभः ।
रथौघमेघनिर्घोषो विधूमश्च हुताशनः ॥
अनुलोमः सुगन्धश्च स्वस्तिकाकारसन्निभः ।

वर्द्धमानाकृतिश्चैव नन्द्यावर्तनिभस्तथा ॥

स्वस्तिकवर्द्धमाननन्द्यावर्ता राजगृहभेदाः ।

प्रसन्नार्चिर्महाज्वालः स्फुलिङ्गरहितो हि सः ।
स्वाहावसाने ज्वलनः स्वयं देवमुखं हविः ॥
यदा भुङ्क्ते महाभाग तदा राज्ञो हितं वदेत् ।
हविषश्च यदा वह्नौ न स्याच्छिमिशिमायितम् ॥

शब्दानुकरणमात्रमेतत् ।

न व्रजेयुश्च मध्येन मार्जारमृगपक्षिणः ।
पिपीलिकाश्च धर्मज्ञ तदा कुर्याज्जयं नृपे ॥
अङ्गहारादिलाभे तु वह्ने राज्ञो जयं वदेत् ।
तथैव च जयं ब्रूयात्प्रस्तरस्याप्यदाहिनि ॥
स्नानं समारभेद्राज्ञो होमकाले पुरोहितः ।
आदौ तु स्वेच्छया स्नातः पुनर्ऋग्भिः समारभेत् ॥

ऋचः प्रयोगे वक्ष्यन्ते । पुनर्मृद्भिरिति क्वचित्पाठः ।

पर्वताग्रमृदा तावन्मूर्द्धानं शोधयेन्नृपः ।
वल्मीकाग्रमृदा कर्णौ वदनं केशवालयात् ॥
इन्द्रालयमृदा ग्रीवां हृदयं तु नृपाजिरात् ।
करिदन्तोद्धृतमृदा दक्षिणं तु तथा भुजम् ॥
सरोमृदा तथा पृष्ठमुदरं संगमान्मृदा ।
नदीकूलद्वयमृदा पार्श्वौ संशोधयेत्तथा ॥
वेश्याद्वारमृदा राज्ञः कटिशौचं विधीयते ।
गजस्थानात्तथैवोरू गोस्थानाज्जानुनी तथा ॥
अश्वस्थानात्तथा जङ्घे राज्ञः संशोधयेद्बुधः ।
रथचक्रोद्धतमृदा तथैव चरणद्वयम् ॥

तथैव च करद्वयमिति क्वचित्पाठः ।

मृत्पूतः स्नपनीयः स्यात्पञ्चगव्यजलेन तु ।
ततो भद्रासनगतं मुख्यामात्यचतुष्टयम् ॥
बलप्रधानं भूपालमभिषिञ्चेद्यथाविधि ।
पूर्वतो हेमकुम्भेन घृतपूर्णेन वाडवः ॥

वाडवो विप्रः ।

दक्षिणे क्षीरपूर्णेन रौप्यकुम्भेन क्षत्रियः ।
दध्ना च ताम्रकुम्भेन वैश्यः पश्चिमतो द्विज ।।
माहेयेन जलेनोदक्शूद्रामात्योऽभिषेचयेत् ।।

माहेयं गोशृङ्गपुच्छसंबन्धि ।

ततोऽभिषेकं नृपतेर्बह्वृचप्रवरो द्विजः ।
कौबेर्यां मधुना राम छन्दोगोऽथ कुशोदकैः ।।
संपातवन्तं कलशं तथाहृत्य पुरोहितः ।
विधाय वह्निरक्षां तु सदस्येषु यथाविधि ।।

वह्निं रक्षध्वमिति प्रेष्येत्यर्थः ।

राजसूयाभिषेके तु ये मन्त्राः परिकीर्तिताः ।
तैस्तु दद्यान्महाभाग ब्राह्मणानां स्वरेण तु ।।

ते च मन्त्राः प्रयोगे ज्ञेयाः ।

ततः पुरोहितो गच्छेद्वेदिमूलं तदैव तु ।
विभूषितं तु राजानं संस्थितं भद्र आसने ।।

भद्रासनलक्षणं देवीपुराणे—

हैमं च राजतं ताम्रं क्षीरिवृक्षमयं च वा ।
भद्रासनं च कर्तव्यं सार्द्धहस्तसमुच्छ्रितम् ।।
सपादहस्तमानं च राज्ञो माण्डलिकान्तरात् ।।

वराहसंहितायाम्—

त्रिविधस्तस्योच्छ्रायो हस्तः पादाधिकोर्द्धयुक्तश्च ।
माण्डलिकानन्तरजित्समस्तराज्यार्थिनां शुभदः ।।

विष्णुधर्मोत्तरे—

शतच्छिद्रेण पात्रेण सौवर्णेन यथाविधि ।
अभिषिञ्चेत धर्मज्ञः सम्यग्वेदविशारदः ।।
या ओषधीरोषधिभिः शृताभिः सुसमाहितः ।
रथेतिष्ठेति गन्धैश्च आब्रह्मन्ब्राह्मणेति च ।।
बीजैः पुष्पैस्तथा सीमं(?) राम पुष्पवतीति च ।
तेनैव चैव मन्त्रेण फलैस्तमभिषेचयेत् ।।
आशुःशिशान इत्येवं सर्वरत्नैश्च भार्गव ।

ये देवाःपुरःसदेति कुशाद्भिः परिमार्जयेत् ॥
ऋग्वेदवित्ततो राज्ञो रोचनया यथाविधि ।
मूर्द्धानं च तथा कण्ठं गन्धद्वारेति संस्पृशेत ॥
ततो ब्राह्मणमुख्याश्च क्षत्रियाश्च विशस्तथा ।
शूद्राश्चावरमुख्याश्च नानातीर्थसमुद्भवैः ॥
नादेयैः सारसैः कौपैर्नानाकलशसंस्थितैः ।
चतुःसागरजैर्लाभादलाभे द्विजकल्पितैः ॥
गङ्गायमुनयोश्चैव निर्झरैश्च तथाद्रिजैः ।
छत्रपाणिर्भवेत्कश्चिकेचिच्चामरपाणयः ॥
अमात्यमुख्यास्तत्कालं केचिद्वेत्रधरास्तथा ।
शंखभेरीनिनादेन बन्दिनां निःस्वनेन च ॥
गीतवादित्रघोषेण द्विजकोलाहलेन च ।
राजानमभिषिञ्चेयुः समेत्य सहिता जनाः ॥
सर्वलोकाभिषिक्तस्य संमिश्रजलसंयुतम् ।
सर्वौषधियुतं पुण्यं सर्वगन्धयुतं तथा ॥
रत्नबीजसमायुक्तं फलपुष्पसमन्वितम् ।
पूजितं सितसूत्रेण वेष्टितग्रीवमेव च ॥
श्वेतवस्त्रावकीर्तैश्च संवीतं शुचिभूषितम् ।

वस्त्रावकर्तैश्चेति क्वचित्पाठः । बिल्वपत्रकुन्दादिपुष्पकमलाद्याकारतया कर्तितवस्त्रैरिति तदर्थः ।

क्षीरवृक्षलताच्छन्नं सुदृढं काञ्चनं नवम् ।
आदाय कलशं राज्ञः स्वयं सांवत्सरस्तदा ।
मन्त्रावसाने कलशं दद्याद्भृगुकुलोद्वह ॥

मन्त्रा अशीत्युत्तरं शतं वक्ष्यन्ते सुरास्त्वामित्याद्याः। दद्यादभिषिञ्चेत् ।

ततः पश्येन्मुखं राजा दर्पणे वाथ सर्पिषि ।
सोष्णीषः सितवस्त्रश्च मङ्गलालम्भनं ततः ॥
ततः संपूजयेद्विष्णुं ब्राह्मणांश्च समर्चयेत् ।
राजा द्वौ चार्चयेत्तत्र सांवत्सरपुरोहितौ ॥
मधुपर्केण धर्मज्ञस्ततस्तस्य स दैवविन् ।
पट्टबन्धं प्रकुर्वीत ततस्तस्य च बन्धनम् ॥

पट्टलक्षणं तु देवीपुराणे—

सर्वस्नानमलंकारं रोचनाख्यं च पट्टकम् ॥
वृद्ध्याद्व्यङ्गुलमङ्गुल्याऽऽषट्त्रिंशदङ्गुलावधि ।
वृत्तं वा चतुरस्रं वा पद्मकत्रिकगर्भितम् ॥
वत्सेशपद्ममत्स्येभगोस्वस्तिकविनायकैः ।
श्रीश्रीवृक्षवराहेण स्वामिदेवीशुभान्वितम् ॥

अद्व्यङ्गुलं सप्तांगुलमेकांगुल्यासहितमष्टांगुलमित्यर्थः तत आषट्त्रिंशदंगुलं सप्तसप्तांगुलवृद्धिर्वा तेनाष्टौ पञ्चदश द्वाविंशतिरेकोनत्रिंशत्षट्त्रिंशद्वाङ्गुलानि दैर्घ्यं, दैर्घ्यार्द्धेन मध्ये विस्तारः तदर्द्धेनान्तयोः स च वृत्तायश्चतुरस्रायतो वा । पद्मत्रिकं पद्मत्रयम् । वत्सः श्रीवत्सः । ईशः शिवः इभगौर्वृषदेहं गजमुखम् । वराहेभेऽप्येवम् । केवलयोर्गजवृषयोर्विश्वकर्मणा निषेधात् । वाराह्यामपि मध्यविस्तारमुक्त्वा—

सर्वे द्विगुणायामा मध्यादर्द्धेन पार्श्वविस्ताराः ।
सर्वे विशुद्धकाञ्चनविनिर्मिताः श्रेयसो वृद्ध्यै ॥
पञ्चशिखो भूमिपतेस्त्रिशिखो युवराजराजमहिष्योः ।
एकशिखः सैन्यपतेः प्रसादपट्टो विना शिखया ॥

विश्वकर्मापि—

व्याघ्रव्यालगजाः सिंहा अश्वोष्ट्रौ महिषो वृषः ।
भूषणेषु त्यजेदष्टौ यदीच्छेद्दीर्घजीवितम् ॥
वनेचरा जलचराः कृमिकीटपतङ्गकाः ।
न तानाभरणे कुर्याद्यदीच्छेज्जीवितं चिरम् ॥

एवं पट्टबन्धानन्तरं कार्यमुक्तं विष्णुधर्मोत्तरे—

ततः स बद्धमुकुटः काले पूर्वं मयोदिते ।
परार्ध्यास्तरणोपेते मञ्चे बद्धोत्तरच्छदे ।
ध्रुवाद्यौरिति मन्त्रेण सोपवेश्यः पुरोधसा ।
वृषस्य वृषदंशस्य द्वीपिनश्च भृगूद्वह ।
तेषामुपरि सिंहस्य व्याघ्रस्य च ततः परम् ॥

वृषदंशो मार्जारः द्वीपी द्वीपांतरगतो व्याघ्र इति तातचरणाः । तरक्षुरिति केचित् ।

तत्रोपविष्टस्य तदा प्रतीहारः प्रदर्शयेत् ।

अमात्यांश्च ततः पौरान्नैगमांश्चापणेश्वरान् ॥
तथा प्रकृतयश्चान्या यथावदनुपूर्वशः ।
ततोऽग्रहारवस्त्रेभतुरङ्गकनकोत्तमैः ॥
गोजाविगृहदानैश्च सांवत्सरपुरोहितौ ।
पूजयित्वा ततः पश्चात्पूजयेद्ब्राह्मणत्रयम् ॥
अनेनैव विधानेन येन राजाभिषेचितः ।
ततः सदस्यान्संपूज्य सांवत्सरपुरोधसः ॥
ततो ब्राह्मणमुख्यानां पूजनं तु समाचरेत् ।
गोवस्त्रतिलरूप्यान्नफलकाञ्चनगोरसैः ॥
मोदकैः श्वेतपुष्पैश्च महादानैश्च पार्थिवः ।
मङ्गलालंभनं कृत्वा गृहीत्वा सशरं धनुः ॥
वह्निं प्रदक्षिणीकृत्य प्रणिपत्य तथा गुरून् ।
पृष्ठतो वृषमालभ्य गां सवत्सां च पार्थिवः ॥
पूजयित्वा तु तुरगं मन्त्रितं चाभिषेचितम् ।
तमारुह्य ततो नागं पूजयेच्चाभिषेचितम् ॥
मन्त्रितं दक्षिणे कर्णे स्वयं दैवविदा ततः ।
आरुह्य राजमार्गेण स्वपुरं तु परिभ्रमेत् ॥
मुख्यामात्यैः ससामन्तैः सांवत्सरपुरोहितैः ।
सहितः कुञ्जरारूढैरभिगच्छेच्च देवताः ॥
तासां संपूजनं कृत्वा नगरं याति वेष्टितः ।
प्रविश्यान्तर्गृहं राजा प्रहृष्टनरवाहनः ॥
दानमानादिसत्कारैर्गृह्णीयात्प्रकृतीस्ततः ।
संपूजितास्ताश्च विसर्जयित्वा
गृहे स्वके स्यान्मुदितो महात्मा ।
विधानमेतत्समवाप्य राजा
कृत्स्नां तु धात्रीं वशगां विदध्यात् ॥ इति ।

संक्षेपस्तु गोपथब्राह्मणे—अथ राज्ञोऽभिषेकविधिं व्याख्यास्यामो बिल्व-प्रभृतीन्संभारान्संभृत्य षोडश कलशान् षोडश बिल्वानि वल्मीकस्य च मृत्तिकां सर्वान्नं सर्वरसान्सर्वबीजानि, तत्र चत्वारः सौवर्णाश्चत्वारो राजताश्चत्वारस्ताम्राश्चत्वारो मृन्मयास्तान ह्रदे सरसि वोर्ध्वस्रुतो नामै-

नाम इत्युदकेन पूरयित्वा, वेदिपृष्ठे संस्थाप्य, कुंभे बिल्वमेकैकं दद्यात्स-र्वान्नं सर्वरसान्सर्वबीजानि च प्रक्षिप्योभयैरपराजितैरायुष्यैः स्वस्त्ययनैः सौवर्णेषु संपातान्संश्राव्यैः संसिक्तीयैश्च राजतेषु भैषज्यैरंहोमुचैस्ता-म्रेषु संवेशसंवर्ग्याभ्यां तातीयैः प्राणसूक्तेन च मृन्मयेषु, ततस्तान् कलशान् गृहीत्वा स्तौत्रियैः पवित्रियैरभिष्टुयै राजानमभिषिञ्चेत्। भूमि-मिन्द्रियं च वर्द्धय क्षत्रियं म इति सिंहासनमारूढमभिमन्त्रयेत्। एवम-भिषिक्तस्तु रसान्प्राश्नीयाद्विप्रेभ्यश्च दद्याद्गोसहस्रं सदस्येभ्यः कर्त्रे ग्रामवरं विपुलं यशः प्राप्नोति भुङ्क्ते धरां जितशत्रुः सदा भवेदिति । अन्नं तण्डुलादि यदुप्तं न प्ररोहति । बीजं प्ररोहार्हं व्रीह्यादि । ऊर्ध्वं स्रुत् मुखं येषां ते ऊर्ध्वस्रुतः । नामैनाम अभयापराजिताद्या मन्त्राः प्रयोगे वक्ष्यन्ते । अत्र बहुवचने त्रयस्त्रयो ग्राह्याः कपिञ्जलन्यायात् । संवर्तसंवेशप्राण-सूक्तेष्वेकैक एवेति तातचरणाः ।

## अथ प्रयोगः ।

तत्र यदा पूर्वराजनि मृतेऽन्योऽभिषिच्यते तदा सांवत्सरपुरोहितौ तं नित्यस्नानप्रकारेण तिलसर्षपैः संस्नाप्य राष्ट्रे यं राजेति तस्य जय-मुद्घोष्य पूर्वराजासनादासनान्तर उपवेश्य मन्त्र्यादिकं नगरजनांश्च दर्शयेताम्। राजा च तान्सत्कृत्य कारागृहनिगडबद्धान् मुक्त्वाऽभयं दत्त्वा तदासनस्थ एव राज्यं कुर्वन्कालं प्रतीक्षेत। प्राप्ते चाभिषेककाले आ-त्मानमभिषेचयेत्। पूर्वस्मिन्राजनि जीवति कारणान्तरेणान्याभिषेके तु न कालप्रतीक्षान्तोविधिः । किन्त्वभिषेककालेऽभिषेक एव। अभिषेकदि-नात्पूर्वमेव कस्मिंश्चिच्छुभदिने पुरोधा ऐन्द्रीं शान्तिं कुर्यात्। सा चैवम् ।

## अथैन्द्री शांतिः ।

पुरोधाः सुदिने मासपक्षाद्युल्लिख्य करिष्यमाणराज्याभिषेकाङ्गतया ऐन्द्रीं शान्तिं करिष्य इति संकल्प्य गणेशपूजास्वस्तिवाचनर्त्विग्वर-गानि कुण्डलाङ्गुलीयकवासआदिभिस्तत्पूजां च कुर्यात् । ततः अव्य-सश्च व्यवसश्च बिलंविष्यामि मायया । ताभ्यामुद्धृत्य वेदमथ कर्माणि कृण्महे । प्रयच्छ परशुं त्वरया हरौषमहिषत इति दात्रं गृह्णाति। ओषधादातुपर्वमिति मूलादुपरि बर्हिर्लुनाति । ॐग्रीष्मस्ते भूमेवर्षाणि शरद्धेमन्तः शिशिरो वसन्तः । ऋतवस्त विहिता हायनीरहोरात्रे

पृथिवी नो दुहानमिति भुवमुपस्थाय । विमिष्वपयस्वतीं घृताचीं देवान्यं धेनुरपस्पृगेषा । इन्द्रः सोमे पितुरक्षेमो आग्निः प्रस्तौतु विमृधो नुदस्वेति द्वादशांगुलां शमीसमिधमनुमन्त्रयते । अथ वेदिः । सा च । षट्समिदायता पूर्वपश्चिमयोः । पश्चिमदिशि चतुःसमिद्विस्तारा पूर्वपश्चिमयोः प्रत्येकं समिद्वयं त्यक्त्वा मध्यभागे दक्षिणोत्तरयोः प्रत्येकमर्द्धसमित्त्यागेन समित्रयविस्ताराग्रे संनमनक्रमेण सार्द्धसमित्रयविस्तारा। तन्मध्ये पश्चिमतः समित्रयं पूर्वतः समिन्मात्रं त्यक्त्वा समिद्वयचतुरस्रा उत्तरवेदिः सा च कुण्डात्मिका स्थण्डिलात्मिका वा उत्तरवेदितः प्राच्या दक्षिणोत्तरयोश्च वेदितोर्द्धसमिन्मितैव भूमिस्तिष्ठति । तत ईशानकोणात्प्रदक्षिणक्रमेण वालुकया तूष्णीं महावेदिसामरेखां(?) कुर्यात् । ततः ॐवृहस्पते परिगृहाण वेदिं सुगावो देवाः सदनानि सन्तु । अस्यां बर्हिः प्रथतां साध्वन्तरहिंस्राणः पृथिवी देवी देव्यस्तु । इति रेखां त्रिरनुमन्त्रयेत् । ततः प्रथमं महावेदिमध्ये श्रीधास्ते भूमे वर्षाणि शरद्धेमन्तः शिशिरो वसन्तः । ऋतवस्ते विहायनीरहोरात्रे पृथवि नो दुहाना । यत्ते भूमे विखनामि क्षिप्रं तदपि रोहन्तु । माते मर्म विमृग्वरिमाते हृदयमर्प्पिषम् ” इतिभूमिखननम् । ततः ॐयत्त ऊनं तत्त आपूरयाति प्रजापतिः प्रथमजा ऋतस्येति खनितपूरणम् । ततः ॐत्वमस्या वपनी जनानामदितिः कामदुघा पप्रथानेति वालुकाभिर्महावेदिं पूरयति । पुनः कुण्डात्मिकां स्थण्डिलात्मिकां वोत्तरवेदिं परिमाय पूर्ववद्रेखां कृत्वा बृहस्पते परिगृहाणेति मन्त्रेण त्रीन्वारान्संस्पृश्य पूर्ववदनुमन्त्रयेत् ततः असंबाधं बध्यतो मानवानां यस्या उद्वतः प्रवंतः समं बहुनानावीर्याओषधीर्या बिभर्ति पृथिवी नः प्रथतां राध्यतां नः । इत्युत्तरवेद्यां वालुकां विस्तारयति । ततो यस्याश्चतस्रः प्रदिशः पृथिव्यां यस्यामन्नं कृष्टयः संबभूवुः । या बिभर्ति बहुधा प्राणदेजत्सा नो भूमिर्गोष्ठिऽप्यन्ये दधात्विति वालुकाभिर्वेदिं चतुरस्रां करोति । ततो देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रसूतः प्रशिखा परिगृह्णामीत्यनेन लेखनीं गृह्णाति । ततः इन्द्रः सीतां निगृह्णातु तां पूषाभिरक्षतु । सा नः पयस्वती दुहामुत्तरामुत्तरासमामित्युत्तरवेद्यां आग्नेयकोणादारभ्य वामावर्तेन चतुर्दिक्षु लेखाः कृत्वा पुनरप्याग्नेयकोणादारभ्य ईशानकोणपर्यन्तं

पूर्वत उल्लिख्य तन्मध्येऽपि पूर्वाग्रास्तिस्रो लेखाः करोति । अथ तस्यां व्रीहियवौ तूष्णीं विकीर्य वेषेण भूमिः पृथिवी वृता वृतासानो दधातु भद्रया श्रिये धामनि इत्यनेन संप्रोक्ष्य । ॐयस्यामन्नं व्रीहियवौ यस्या इमा पञ्चकृष्टयः । भूम्यै पर्जन्यपत्न्यै नमोऽस्तु वर्षमेधसे इति भुवं नत्वा । ॐत्वामग्ने भृगवो निषत्तामाङ्गिरसःसदनश्रेय एव हि । विश्वकर्मा पुर एतु प्रजानं धिष्ण्यं पन्थानमनुतेतिदिशास्ते भद्रं पन्था मनुते दिशामःश्रेयंपन्था मनुते दिशामः स्वस्ति पन्था मनुते दिशाम इत्यग्निसंनिधापनम् । ततो भद्रा भव श्रेयो भव स्वस्त्यो भवेति व्रीहियवौ कांस्यादिपात्रस्थ एवाग्नौ प्रक्षिप्य ॐ विश्वंभरा वसुधीनी प्रतिष्ठाहिरवक्षा जगतो निवेशनी । वैश्वानरं बिभ्रती भूमिरग्निमिन्द्रऋषभाद्रविणे नो दधात्वित्युत्तरवेद्यामग्निं स्थापयति । ममाग्ने वर्चो विहवेष्वस्तु वयंत्वेन्धानास्तन्वं पुषेम । मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेमेति समित्त्रयं जुहुयात् । एवं व्रतग्रहणान्तं कृत्वा तेन त्वा व्रतपत इत्येकां समिधं स्वाहाकारवर्जं हुत्वाग्नेरीशानभागे सौवर्णं रौप्यं ताम्रं वा जलपूर्णं गन्धसर्वौषधिदूर्वापञ्चपल्लवपञ्चत्वक्पञ्चगव्यपञ्चामृतसप्तमृत्तिकापुष्पफलपञ्चरत्नसुवर्णशकलवासोयुतं कलशमक्षतेषु संस्थाप्य तदुपरि अग्नेः पुरस्ताद्गोचर्ममात्रं गोमयेनोपलिप्य तदहतेनोदग्दशेन वाससा संछाद्य तदुपर्यष्टदलं पद्ममालिख्य तत्र वा पलतदर्द्धतदर्द्धसुवर्णनिर्मितमिन्द्रं संस्थाप्य राजोपचारैः पूजयेत् । तत्रेमा आप इति स्नानम् । मधुपर्ककुण्डलाङ्गुलीयकाद्याभरणच्छत्रचामरध्वजपताकादीन्यर्पयेत् । त्रातारमिन्द्रमिति पुष्पाञ्जलिः । ततस्तूष्णीं पवित्रे कृत्वा विष्णोर्मनसा पूतेस्थ इति प्रथमं पवित्राभ्यामिध्मप्रोक्षणं विष्णोर्मनसा पूतमसीति द्वितीयम् । देवस्त्वा सवितोत्पुनात्वच्छिद्रेण त्वा पवित्रेण शतधारेण सहस्रधारेण सुतोत्पुनामीति तृतीयम् । चतुर्थं तूष्णीम् । अग्नये त्वा जुष्टं प्रोक्षामीत्यनेनेध्मसंनिधापनम् । अथेध्ममादाय ॐअग्निर्भूम्यामोषधीष्वग्निमापो बिभ्रत्यग्निरश्मसु । अग्निरन्तःपुरुषेषु गोष्वश्वेष्वग्नयः । १ । अग्निर्दिव्य आपतत्यग्ने देवस्योर्वन्तरिक्षम् । अग्निमर्तासइन्धते हव्यवाहं घृतप्रियम् ॥ २ ॥ अग्निवासाः पृथिव्यसि तज्ज्ञौस्त्विषीमन्तं संशितमाकृणोतु । भूम्यां देवेभ्यो ददति यज्ञं हव्यमरंकृतम् ॥ भूम्यां मनुष्या जीवन्ति स्वयया‌त्रेन मर्त्या । सा नौ भूमिः

प्राणमायुर्दधातु जरदष्टिं पृथिवीमाक्रणोतु ॥ ३ ॥ एतमिधां समाहितं जुषाणो अग्ने प्रतिहर्य होमैः। तस्मिन्विधेम सुमतिं स्वस्ति प्रजां चक्षुः पशून् समिद्धे जातवेदसि ब्रह्मणः ॥ ४ ॥ अस्मै क्षत्राणि धारयान्तमग्ने युनज्मि त्वा ब्रह्मणत्वादैव्येन । दीदिह्यस्मभ्यं द्रविणेह भद्रं प्रेमं वोचो हविर्द्रां देवतासु ॥ ५ ॥ एभिः पञ्चभिमन्त्रैर्जुहोति । ततः त्वं भूमिमन्वेष्योजसा त्वं वेद्यां सीदसि चारुरध्वरे । त्वां पवित्रमृषयो भरतस्त्वं पुनीहि दुरितान्यस्मिन्निति बर्हिःप्रोक्षणम् । ततः ऋषीणां प्रस्तरोसि नमोस्तु दैवाय प्रस्तरायेति दक्षिणतो ब्रह्मासनं निदधाति । ततोऽस्मिन्कर्मणि त्वं भूपते भुवनपते भुवांपते महतोभूतस्यपते ब्रह्माणं त्वां वृणीमहे । इति वरणमन्त्रं ब्रह्माणमुद्दिश्य कर्त्ता पठति । ततः अहं भूपतिरहं भुवनपतिरहं भुवां पतिरहं महतो भूतस्य पतिस्तदहं मनसे प्रब्रवीमि मनो वाचे वाग्गायत्री गायत्र्युष्णिह उष्णिगनुष्टुभे अनुष्टुब्बृहत्यै बृहतीपंक्तयेपंक्तिस्त्रिष्टुभे त्रिष्टुब्जगत्यै जगती प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यः ॐभूर्भुवः स्वर्जनदों इति ब्रह्मा जपति । ततः ॐ अहेदैधिषव्योदतस्तिष्ठान्यस्यसदनेसीदयोस्मत्पाकतरइति ब्रह्मा स्वासनमन्वीक्षते । ॐनिरस्तः परा वसुः सह पाप्मना निरस्तः सोस्तुयो स्मान् द्वेष्टि यं च वयं द्विष्मः इति ब्रह्मासनाद्दक्षिणे तृणं निरस्यति । अथासनमालभ्य जपति । इदमहमर्वावसोः सदने सीदाम्यृतस्य सदने सीदामि सत्यस्य सदने सीदामीष्टस्य सदने सीदामि पूर्त्तस्य सदने सीदामि मामृषदेवबर्हिःस्वासस्थं त्वाध्यासदेयं तूर्णमृदमनभिशोकम् । विमृग्वरीं पृथिवीमावदामि क्षमां भूमिं ब्रह्मणा वावृधानाम् । ऊर्ज्जं पुष्टिं बिभ्रतीमन्नभागं घृतं त्वाभिनिषीदेवभूमे । अथोपविश्यासने ब्रह्मा जपति। बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते बृहस्पते यज्ञं गोपाय । ततः यउद्रुत उत्रीवतः शकेथं यातमं द्यावापृथिवीद्यान इति द्यावापृथिव्यौ समीक्षतम् । अथ होता बर्हिर्मुष्टिमादाय स्तृणाति त्रीन्वारानाग्नेये त्रीन् दक्षिणतः त्रीन्पश्चिमायां सकलांस्त्रीन् वायव्ये पूर्वतो मूलानि छादयंस्त्रीनुत्तरतस्त्रीनीशाने यत्र समागच्छति तद्दक्षिणोत्तरं करोति । इति भाष्यम् । ब्रह्मा चोपरि देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रसूतः प्रशिषा परिस्तृणामि इति पठित्वा आग्नेयकोणादीशानपर्यन्तं पंक्तित्रयं पूर्वाग्रान् दर्भानास्तृणाति । एवं प्रथमास्तृतदर्भा-

ग्राच्छादितमूलानुत्तरतो दर्भानास्तीर्य निर्ऋतिकोणादारभ्य पूर्ववत्पंक्तित्रयेण प्रागग्रानाग्नेयपर्यन्तं(?)। तथैव निर्ऋतिकोणादारभ्य वायव्यपर्यन्तं तथैव वायव्यकोणादारभ्य प्रागैशानपर्यन्तं परिस्तीर्य चरममीशानपरिस्तीर्णदर्भाग्रान् प्रथमत ईशानपरिस्तृतदर्भाग्राणामधः स्थापयेत् । ततः हविषा त्वा जुष्टं प्रोक्षामीत्यनेनास्तीर्णदर्भाभ्युक्षणम् । अथ होता आस्तीर्णदर्भमध्ये कांश्चिद्दर्भानादाय तान्स्वासने समास्तीर्य अहेदैधिषव्य इत्यनेन स्वासनमन्वीक्षते । निरस्त इत्यादिना तृणं निरस्यति आसनमालभ्य इदमहमित्यादि जपति । उपविश्य बृहस्पतिर्ब्रह्मेत्यादि जपति । परि त्वाग्ने पुरं वयं विप्रं सहस्य धीमहि । धृषद्वर्णं दिवे दिवे हन्तारं भङ्गुरावतः इति उपहूत इत्यादिना द्यावापृथिव्यौ समीक्षते ॐयथाग्ने ब्रह्मणस्पतिः सत्यधर्मा अदीधरद्देवस्य सवितुः सव इत्युदपात्रमग्नेरुत्तरतः स्थापयति । तत्र च पवित्रे निक्षिप्य ॐइहेतदेववीरमृतं वसाना हिरण्यवर्णा आनवद्यत्वयाआपः समुद्रो वरुणाश्च राजा संपात भागान्हविषो जुषन्ताम् इन्द्रप्रशिष्टा वरुणप्रसूता आपः समुद्रादिवमुद्वहन्तु । इन्द्रप्रशिष्टावरुणप्रसूतां दिवस्पृथिव्याः श्रियमावहन्तु । अनेन मन्त्रेणोदपात्रे उदकं क्षिपति । विलीनपूतमाज्यमग्नावधिश्रित्य परित्वाग्ने पुरं वयं विप्रं सहस्य धीमहि । धृषद्वर्णं दिवेदिवे हन्तारं भङ्गुरावतः इति त्रिः पर्यग्निकृत्वा उदगुद्वास्य पश्चादग्नेरासाद्य पवित्राभ्यामुत्पुनाति । ततो दर्भत्रयेण स्रुवसंमार्जनम् । ततो निष्टप्तं रक्षो निष्टप्ता अरातयः इति स्रुवप्रतपनम् । अथ ॐविष्णोर्हस्तोसि दक्षिणः पूष्णोदत्तं बृहस्पते तं त्वाहं स्रुवमाददे देवानां हव्यवाहनम् अयं स्रुवो निदधाति होमाच्छताज्जरच्छंदसा जागतेन । सर्वयज्ञस्य समनक्ति विष्टाबार्हस्पत्येन शर्मणा दैव्येनेति स्रुवाभिमन्त्रणम् ततः संस्कृतमेव घृतं स्ववामभागेग्नेः पश्चात्स्थापिताज्यधानीनामकपात्रान्तरे स्रुवेण कुर्यात् ॐभूःशं भूत्यै त्वा गृह्णे भूतये इति प्रथमं गृह्णाति ॐभुवःशंपुष्ट्यै त्वा गृह्णे पुष्टये इति द्वितीयम् । ॐस्वःशं त्वा गृह्णे सहस्रपोषाय इति तृतीयम् । ॐजनः शं त्वा गृह्णे परिमितपोषायेति चतुर्थम् । ततः स्रुवेण तद्घृतं जुहुयात् । अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अभिशस्ति पाउ । नमस्कारेण नमसा ते जुहोमि मा देवानां मिथुयाकर्मभागं स्वाहा । हृदा पूतं मनसा जातवेदो विश्वानि देव वयुनानि विद्वान् । सप्तास्यानि तव जातवेदस्तेभ्यो जुहोमि स

जुषस्व हव्यं स्वाहा । पुरस्ताच्छुक्रो वह जातवेदोऽग्ने विद्धि क्रियमाणं यथेदम् । त्वं भिषग्भेषजस्यासि कर्त्ता त्वयागामश्वं पुरुषं सनेमस्वाहा । यज्ञस्य चक्षुः प्रतिमुखं च वाचा श्रोत्रेण मनसा जुहोति । इमं यज्ञं विततं विश्वकर्मणा देवा यन्तु समनस्यमानाः स्वाहा इति हुत्वा । ॐवृष्णे वृहते स्वर्विदे अग्नये शुक्रं हरामि त्विषीमते । स नः स्थिरान्बलवतः कृणोतु ज्योक्चरो जीवातवेत्यंददात्वमग्नये स्वाहा इत्युत्तरपूर्वार्द्धे । अथ दक्षिणपूर्वार्द्धे । ॐत्वं सोमदिव्यो नृचक्षाः सुगमस्मभ्यं पथो अनुक्षः अभिनो गोत्रविदुष इव नेशोच्छानो वाचमुशती जिगाय सोमाय स्वाहा इत्याज्यभागौ हुत्वा अभ्यातानहोमं कुर्यात् । तद्यथा । सविता प्रसवानामधिपतिः समावतु अस्मिन् ब्रह्मण्यस्मिन्कर्मण्यस्यां पुरोधायामस्यां प्रतिष्ठायामस्यां वित्यामस्यामाहूत्यामाशिष्ट्यस्यां देवहूत्यां स्वाहा । सवित्रे प्रसवानामधिपतये । अग्निर्वनस्पतीनामधिपतिः । इत्यादिपूर्ववत् २ एवंसर्वत्राप्यग्रे । द्यावापृथिवी दातॄणामधिपती ३ वरुणोपामधिपतिः ४ मित्रावरुणौ वृष्ट्याअधिपती ५ मरुतः पर्वतानामधिपतयस्ते मावन्तु ६ सोमो वीरुधामधिपतिः ७ वायुरन्तरिक्षस्याधिपतिः ८ सूर्यश्चक्षुषामधिपतिः ९ चन्द्रमा नक्षत्राणामधिपतिः १० इंद्रो दिवोधिपतिः ११ मरुतापिठापशूनामधिपतिः १२ मृत्युः प्रजानामधिपतिः १३ यमः पितॄणामधिपतिः १४ तता अवतरेतेमावंत्विति पूर्ववत् १५ ततस्ततामहास्ते मावंत्विति पूर्ववत् । अथोत्तराङ्गानि । तत्र पूर्ववत्सप्तदशाहुत्यात्मकं अभ्यातानहोमं कृत्वा शुक्लपक्षश्चेत् पूर्णापश्चाद्रुतपूर्णापुरस्तादुन्मध्यतः पौर्णमासीजिगाय । तस्या देवौ संवसतो महित्वा नाकस्य पृष्ठे समिषामदेम स्वाहेति जुहोति । कृष्णपक्षश्चेत् यत्तेदेवा अकृण्वन्भागधेयममावास्ये संवसतोमहित्वा ते नो यज्ञं पिपृहि विश्ववारे रयिं नो धेहि सुभगे सुवीरस्वाहा । अथ आहूत्यै स्वाहा । कामाय त्वा स्वाहा समृधे त्वा स्वाहा आहुत्यै त्वा कामाय त्वा समृधे त्वा स्वाहा । ऋचा स्तोमं समर्धय गायत्रेण रथन्तरं वृहद्गायत्रवर्तनि स्वाहा इत्याहुतिपञ्चकं जुहुयात् इति समृद्धिहोमः । ततः । ॐ पृथिव्यामग्नये समनमन्त्यआर्घ्नोत् । यथापृथिव्याग्नयेसमनमन्वेवामह्यसन्नमः संनमतु । ततः पृथिवी धेनुस्तस्या अग्निर्वत्सः समेग्निना वत्से मूर्ज्जं कामं दुहां आयुः प्रथमं प्रजां पोषं रयिं स्वाहा । अन्तरिक्षे वायवे समनमन्सआर्घ्नोत् यथान्तरिक्षे वायवे समनमन्नेवा मह्यं सन्नमः संनमन्तु । अन्तरिक्षे धेनु-

स्तस्या वायुर्वत्सः सामे वायुना वत्सेनेषमूर्ज्जं कामं दुहाम् । आयुः प्रथमं प्रजापोषं रयिं स्वाहा । दिव्यादित्याय समनमत्स आर्ध्नोत् यथा दिव्यादित्याय समनमन्ने वा मह्यं सन्नमः संनमन्तु द्यौर्धेनुस्तस्या आदित्यो वत्सः । साम आदित्येन वत्सेनेषमूर्जं कामं दुहाम् । आयुः प्रथमं प्रजापोषं रयिं स्वाहा । दिक्षु चन्द्राय समनमत्स आर्ध्नोत् यथा दिक्षु चन्द्राय समनमन्नेवा मह्यं सन्नमः सन्नमन्तु । दिशो धेनुवत्सां सा चन्द्रो वत्सः ता मे चन्द्रेण वत्सेनेषमूर्जं कामं दुहामायुः प्रथमं प्रजापोषं रयिं स्वाहा इत्याहुतिचतुष्टयं संनतिहोमः । प्रजापतेनत्वदेतान्यन्यो विश्वारूपाणि परिभूर्जजान । यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणां स्वाहा इत्युपस्तीर्थ होमः । ततोऽग्नेरुत्तरपूर्वार्धे । आदेवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोढुं अग्निर्विद्वान्स यजात्स इद्धोता सोध्वरान्स ऋतून्कल्पयात्यग्नये स्विष्टकृते स्वाहा इति मन्त्रेण जुहुयादिति स्विष्टकृत् । अथैकादश प्रायश्चित्ताहुतीः स्वाहेष्टेभ्यः स्वाहा । वषण्णिष्टेभ्यः स्वाहा । भेषजं स्विष्टचै स्वाहा । निष्कृतिर्दुरिष्टचै स्वाहा । दैवीभ्यस्तनूभ्यः स्वाहा । अयाश्चाग्नेस्यनभिशस्तीश्च सत्यमित्वमयाअसि । अयासा मनसा कृतो यासन् हव्यमूहिषः स्वाहा । ॐ स्वाहाभूः । स्वाहा भुवः स्वाहा स्वः स्वाहा ॐ भूर्भुवः स्वः स्वाहेति प्रतिप्रायश्चित्तहोमः । यन्मेस्कन्नमनसो जातवेदो यद्वा स्कन्दद्धविषो यत्र यत्र उत्पुरुषो विप्रुषः संजुहोमि सत्याः सन्तु यजमानस्य कामाः स्वाहेति स्कन्नहोमः । यदस्मृति चकृम किंचिदग्न उपारिम चरणे जातवेदः । ततः माहित्वं ततः प्रचेतः सुमे सखिभ्यो य अमृतत्वमस्तुतः स्वाहा । इत्यस्मृतिहोमः । ततः यद्वद्य त्वा प्रयति यज्ञे अस्मिन्होतश्चिकित्वन्न वृणीमही हा ध्रुवमपो ध्रुवं हुताशविष्ठप्रतान्यज्ञमुपयाहि सोमं स्वाहा । समिन्द्रणो मनसानेष गोभिः संसूरिभिर्हरिवत्सं स्वस्त्या । संब्रह्मणा देवहितं यदस्ति संदेवानां सुमतौ यज्ञियानां स्वाहा । यानावह उशतो देवदेवांस्तान्प्रेरयस्वे अग्ने सधस्थे । यक्षिवांसः पपिवांसो मधून्यस्मै धत्त वसवो वस्वनि स्वाहा । सुगावो देवाः सदना अकर्म्मय आजग्म सवने मा जुषाणः । वहमाणा भरमाणाः स्वावसूनि वसुं धर्मं दिवमारोहतां नु स्वाहा । यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ । स्वां योनिं गच्छ स्वाहा एष ते यज्ञो यज्ञपते सहसूक्तवाकः सुवीर्यः स्वाहा । वषट्कृतेभ्यो वषड्हुतेभ्यः । देवा गातु विदो गातुं वित्वा गातुमित

स्वाहा। इत्याहुतिसप्तकं संस्थितिहोमः। ततः समनस्पत इमं नो दिवि देवेषु यज्ञं स्वाहा। दिवि स्वाहा। पृथिव्यां स्वाहा। अन्तरिक्षे स्वाहा। वातेधा स्वाहेत्याहुतिपञ्चकं हुत्वा आज्यस्थालीघृतमुत्तमं चतुर्वारं स्रुवेण गृहीत्वा आज्यधान्यां संस्थाप्य स्रुवेणैकवारं तूष्णीं जुहुयात्। इति समानहोमः। अथ स्तरणक्रमेण वर्हिरुत्थाप्य त्रिगुणीकृत्याज्यधान्या घृतेनाऽभ्यनक्ति। पृथिव्यै त्वेतिमन्त्रं प्रथमं मूले युनक्ति। अन्तरिक्षाय त्वेति मध्यं युनक्ति दिवेत्वा इत्यग्रं युनक्ति। एवं त्रिः कृत्वा ॐसंवर्हिरक्तं हविषा घृतेन समिन्द्रेण वसुना संमरुद्भिः। संदेवैर्विश्वदेवेभिरक्तमिन्द्रं गच्छतु बर्हिः स्वाहेत्यनेन बर्हिर्जुहोति। अथ संस्रावभागास्तविषा बृहन्तः। प्रस्तरेष्ठाबर्हिषदश्च देवाः इमे यज्ञमभि विश्वे गृणन्तः स्वाहा। देवा अमृता मादयन्तां स्वाहा। इति संस्रावभागहोमः। स्रुवोसीति स्रुवं प्राग्दण्डं निदधाति। स्रुवप्रतिष्ठापनान्ते इन्द्रं चन्दनपुष्पधूपदीपनैवेद्यतांबूलदक्षिणाभिः पूजयेत्। त्रातारमिन्द्रेति पुष्पाञ्जलिं दद्यात्। ततोऽग्न्यायतनस्य समन्ताद्दिक्षु विदिक्षु च माषभक्तबलीन्सदीपान् दिक्पालेभ्यो दद्यात्। त्रातारमिन्द्रमिति इन्द्राय सांगाय सपरिवाराय सायुधाय सशक्तिकाय एष माषभक्तबलिर्नमः। भो इन्द्र दिशं रक्ष बलिं भक्ष यजमानस्यायुःकर्त्ता क्षेमकर्त्ता शुभकर्त्ता शान्तिकर्त्ता भवेति प्रार्थयेत् एवं सर्वत्र। अग्नेर्मन्वे इत्याग्नेये। यममन्त्रेण याम्ये। नमोस्तु ते निर्ऋत इति नैर्ऋत्ये। ये पश्चादिति पश्चिमे। वायोः सवितुरिति वायव्ये। य उतस्तंरत इत्युत्तरे। ईशाना त्वा ईशाने इति दिक्पालेभ्यो बलिं दद्यात्। ततो महाबलिं कुंकुमादिरक्तं रक्तपुष्पादियुतं सदीपं सदक्षिणं क्षेत्रपालाय दद्यात्। क्षेत्रियात्व वा क्षेत्रस्य पतिमाक्षेत्रपालाय भूतप्रेतपिशाचराक्षसशाकिनीडाकिनीवेतालादिपरिवारयुतायेत्यादि इमं बलिं शूद्रेण दुर्ब्राह्मणेन वा चतुष्पथेऽन्यत्र वा नाययेत्। ततः प्रक्षालितपाणिपाद आचान्तो देशकालौ स्मृत्वा कृताया ऐंद्र्याः शान्तेः पूर्णतासिद्ध्यर्थं पूर्णाहुतिं होष्यामीति संकल्प्य स्रुचिद्वादशगृहीतं चतुर्गृहीतं वाज्यं कृत्वा वस्त्रयुतनालिकेरादिफलं चन्दनादियुतं तदुपरि निधाय पूर्णाहुतिं अभिभूर्यज्ञ इत्येतैस्त्रिभिःसूक्तै राज्ञान्वारब्धो हुत्वा कर्मशेषं समापयेदाचार्यः। विमुञ्चामीत्यादि समिश्रयहोमः। तेजोसीति मुखं विमार्ष्टि। दक्षिणेनाग्निं त्रीन्विष्णुक्रमान् क्रमते विष्णोः क्रमोसीति। सूर्यस्यावृतमित्य-

स्मिदक्षिणमावर्तते । अगन्मस्वरित्यादित्यमीक्षेत । इन्द्रवयं वसावयमिन्द्रस्य वरुणस्य च ब्रह्मणा स्थापितपात्रं पुनरुत्थापयामसि । अपरेणाग्निमुदपात्रं परिहृत्योत्तरेणाग्निं आपोहिष्ठामयो भुव इति मार्जयित्वा बर्हिषि पत्न्यञ्जलौ निनयति । समुद्रं वः प्रहिणोमीति । वीरपत्न्यहं भूयासं यदा यजमानस्तदा वीरपुरुषोहं भूयासमिति मुखं निमार्ष्टि । व्रतानि व्रतपत इति समिधमादधाति । सत्यंत्वर्त्तेनेति सह हविर्भिः पर्युक्ष्य । उदञ्चि हविरुच्छिष्टान्युद्वासयति । पूर्णपात्रं दक्षिणा । ब्रह्मोत्थापनम् उत्तिष्ठ ब्रह्मणस्पत इति । यस्मात्कोशादिति नमस्कारः । ततः कलशोदकेन शान्त्युदकेन च दूर्वापल्लवैरुदङ्मुख आचार्य ऋत्विजश्च तिष्ठतः । प्राङ्मुखं सकुटुम्बमुपविष्टं राजानमभिषिञ्चेयुः । अभिषेके पत्नी वामभागे । पवित्रं शतधारं प्रयतेतः पापिलक्ष्मीतिचतस्रः । हिरण्यवर्णाः । एवमभिषेकानन्तरं सर्वौषधीभिरनुलिप्य शुद्धोदकेन स्नात्वा परिधत्ते वाससी परिधाय शुक्लमाल्याम्बरानुलेपनः सपत्नीको यजमान आचार्यादीन् संपूज्य तेभ्यो दक्षिणां दद्यात् । ब्राह्मणो दश गा दद्यादनड्वाहं ततोऽधिकम् । सीराधिकं ततो वैश्यस्तथा प्रादेशिको हयम् । राजा दद्याद्वरं ग्रामं समूहो राजवत्तथा । यथोक्तां दक्षिणां दद्यात्सकलं फलमश्नुते । अद्येत्यादि समयमुच्चार्य कृतस्य ऐन्द्रशान्त्याख्यकर्मणः प्रतिष्ठासिध्यर्थं एकादशधेनू रुद्रदेवत्याः अमुकगोत्राय ब्राह्मणाय तुभ्यमहं सम्प्रददे । एवमनड्ग्रामभूमिहस्त्यश्वरथरत्नादि दद्यात् । स्थापितदेवतापूजननमस्कारौ । आवाहनं न जानामि । अपराधसहस्राणि क्रियन्तेहर्निशं मया । यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं यान्तु देवगणा इति पीठदेवता विसृज्य । प्रतिमां सोपस्करामाचार्याय दत्वाग्निं संपूज्य गच्छ गच्छ सुरश्रेष्ठेति विसृज्य यथाशक्ति ब्राह्मणान् भोजयित्वा चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु इति पठेत् । इत्यैन्द्रशान्तिप्रयोगः ।

अभिषेकदिने च कृतनित्यक्रियो दर्भपाणी राजा प्राङ्मुख आसन उपविश्येष्टदेवता ध्यात्वा नमस्कृत्य मासपक्षाद्युल्लिख्य सकलराष्ट्रवश्यताकामोहं सांवत्सरपुरोहिताभ्यामात्मानमभिषेचयिष्य इति संकल्प्य गणेशपूजास्वस्तिवाचनमातृकापूजावसोर्धारापूजाऽभ्युदयिकश्राद्धानि कृत्वा सांवत्सरपुरोहितौ त्रीन् ऋग्यजुर्विदो विप्रक्षत्रियवैश्यानमात्यान्सामगं

चैकं विप्रममात्यमन्यञ्चैकं अन्यतमवेदविदं वृत्वा मधुपर्कं कुण्डलकेयूरकट-
ककण्ठाभरणाङ्गुलीयकवस्त्रादिभिस्तान्संपूज्य चतुर्वर्णमुख्यानुपवेशयेत् ।
अथ पूर्वदिने कृतोपवासः पुरोहितः सितमाल्यचन्दनवासाः सोष्णीषो हो-
मदेशं परिकल्प्य तस्मादुत्तरतोरणकदलीस्तंभमंडितायां स्नानशालायां व्री-
हिषु यवेषु वा सौवर्णं नवकलशं यथाविधि संस्थाप्य यथासंभवमनेकतीर्थ-
जलेनापूर्य सर्वौषधिसर्वगन्धसर्वरत्नसर्वबीजफलक्षीरिवृक्षक्षीरिलतापल्ल-
वान् क्षिप्त्वा बहुभिः सितवस्त्रैर्मालाभिश्चावेष्ट्य तत्समीप एकं पञ्चगव्ययु-
तजलपूर्णं मृन्मयं घृतेन पूर्णं हैमं कुंभं दुग्धेन राजतं दध्ना ताम्रं मधुना
मार्त्तिकं कुशोदकेन च मार्त्तिकं शतछिद्रं च सौवर्णमन्यांश्च यथालाभं
नदीसरःकूपचतुःसमुद्रोदकपूर्णान् मार्त्तिकान्स्थापयेत् । सर्वेषां च कल-
शानामुच्चता षोडशाङ्गुला । वैपुल्यं द्विपञ्चाशदङ्गुलसूत्रवेष्टनयोग्यम् ततः
पुरोहितो होमदेशे आथर्वणगृह्योक्तेनाव्यसञ्ज्यैत्यैन्द्रशान्तिप्रयोगलिखिते-
न प्रकारेणाग्निस्थापनादिसप्तदशाहुत्यात्मकाभ्यातानहोमान्तानि पूर्वा-
ङ्गानि कृत्वा शर्मवर्म २ स्वस्त्ययनाऽऽयुष्य ३ अभ ४ यापराजिता ५
ख्यैः पञ्चभिर्गणैराथर्वणपरिशिष्टोक्तैराज्यं जुहुयात् । ते च गणा वक्ष्यन्ते ।
होमदेशस्थापितहैमकलशे च संपातान् क्षिपेत् । राजा च सितचन्दनपु-
ष्पवासःसर्वालंकारयुतोऽग्नेर्दक्षिणतः उपविश्य सांवत्सरप्रभृतिभिर्दैवज्ञैः
सदस्यमुख्यैः पुरोहितैश्च हूयमानाग्नेर्निमित्तानि पश्येत् । तानि च नि-
मित्तानि प्रमाणनिर्णये दक्षिणावर्त्तशिख इत्यादिनोक्तानि । एवं पुरो-
हितः प्रधानहोमं समाप्यैन्द्रशान्त्युक्तेनैव प्रकारेण सप्तदशाहुत्यात्मकाभ्या-
तानहोमादिब्रह्मोत्थापननमस्कारान्तान्युत्तराङ्गानि कृत्वा सुगन्धतैला-
दिना स्वेच्छया कृतस्नानं स्नानशालायामानीयासनउपवेश्य मृद्भिः स्नप-
येत् । तत्र सहस्रशीर्षेति पर्वताग्रमृदा शिरः । अक्षीभ्यां त इति वल्मीकान्त-
मृदा कर्णौ । तेनैव बिल्वालयमृदा मुखं ग्रीवाभ्यस्त इतीन्द्रध्वजस्थानमृदा
ग्रीवाम् । आन्त्रेभ्यइतिराजाङ्गणमृदा हृदयम् । यस्य विश्वानि हस्तयोरिति
गजदन्तोद्धृतमृदा दक्षिणवामभुजौ । बव्हीनां पितेति सरोमृदा पृष्ठम् ।
नाभानाभिं न इति संगममृदोदरम् । आतेसिञ्चामीति नदीकूलद्वयमृदा
पार्श्वौ । सोमानं स्वरणमिति वेश्याद्वारमृदा कटिम् । ऊरुभ्यां त इति
गजस्थानमृदोरू । मेहनाद्वलमिति गोष्ठमृदा जानुनी । तेनैवाश्वस्थान-
मृदा जङ्घे । एतावानस्येति रथचक्रोद्धृतमृदा पादौ । अङ्गादङ्गादिति

सर्वमृद्भिः सर्वाङ्गानि । ततः पूर्वस्थापितेन पञ्चगव्ययुतेन जलकुंभेन स्नपयेत् । मन्त्रास्तु गन्धद्वारां, आप्यायस्व, दधिक्राव्णः, तेजोसि शुक्रं आपोहिष्ठेत्याद्याश्च । तदा राजा तदासनं त्यक्त्वा भद्रासन उपविशेत् । भद्रासनं तु हैमं राजतं ताम्रं क्षीरिदारुजं वा माण्डलिकस्य हस्तेनोच्चमायतं च । अनंतरजितः सपादहस्तेन । महाराजस्य सार्द्धहस्तेन । ततो विप्रामात्यस्तेजोसीति पूर्वस्थापितेन घृतपूर्णहैमकुंभेन प्राच्यां स्थित्वाभिषिञ्चेत् । क्षत्रियामात्य आप्यायस्वेति दुग्धपूर्णेन रौप्यकुंभेन दक्षिणतः स्थित्वा । वैश्यामात्यो दधिक्राव्णेति दधिपूर्णेन ताम्रकुंभेन पश्चिमतः स्थित्वा । छन्दोगामात्यो मधुवाता इतितृचेन मधुपूर्णेन मृत्कुंभेनोत्तरतः स्थित्वा । स एव देवस्यत्वेति कुशोदकपूर्णेन मृत्कुंभेन तत्रैव स्थित्वा। देवस्य त्वेत्यस्यान्ते अभिषिञ्चामीति वाक्यशेषः । ततः पुरोहितोऽग्निं रक्षध्वमिति सदस्यान्प्रेष्य संपातयुतेन हैमकुंभेन राजसूयाभिषेकमन्त्रैरभिषिञ्चेत् । ते च यजुषास्तावत् । सोमस्य त्वा द्युम्नेनाभिषिञ्चाम्यग्नेर्भ्राजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण क्षत्राणां क्षत्रपतिरेध्यतिदिद्यून्याहिम् । इमं देवा असपत्नं सुवध्वं महते क्षत्राय महते ज्यैष्ठयाय महते जानराज्यायेन्द्रस्येन्द्रियाय इममुमुष्य पुत्रममुष्यै पुत्रमस्यै विश एष वोमीराजा सोमोस्माकं ब्राह्मणानां राजेति । इममित्यस्य स्थाने द्वितीयान्तं राज्ञोनाम अमुष्येत्यत्र षष्ठयन्तं तत्पितुः अमुष्या इत्यत्र षष्ठयन्तं तन्मातुः इमा आपः शिवतमा इति तृच आग्वेदिकः देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा वर्चस्य सूर्यस्य वर्चस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामीति यजुः । भूर्भुवः स्वरिति व्याहृतयश्च । एवमन्येपि तत्तच्छाखीया बोध्याः । ततः पुरोहितो वह्निसमीपं गच्छेत् । ततो वेदशास्त्राभिज्ञोऽन्यो विप्रो भद्रासनगतमेव राजानं शतच्छिद्रसौवर्णकुंभेनाभिषिञ्चेत् । ततः या ओषधीरिति सर्वौषधीनामुदकं क्षिपेत् । रथे तिष्ठेति यजुषा सूक्तेन गन्धस्योदकम् । आब्रह्मन् ब्राह्मणेति यजुषा बीजानाम् । पुष्पवतीत्यथर्वणमन्त्रेण पुष्पाणाम् । तेनैव मन्त्रेणानेकफलानाम् । आशुः शिशान इति सूक्तेन रत्नानाम् । ये देवाः पुरःसदेति कुशानामुदकेन । केचित्तु कुशदूर्वापल्लवैरनेन मन्त्रेण राजाङ्गानि मार्जयेदित्याहुः । ततोन्य ऋग्वेदी विप्रो गोरोचनया गन्धद्वारेति मन्त्रेण राज्ञः शिरः कण्ठं च लिम्पेत् । ततः समीचीना विप्राः क्षत्रिया वैश्याः शूद्राः

अनुलोमाश्च यथालाभं गङ्गायमुनाद्यनेकनदीसरःकूपचतुःसमुद्रनिर्झरजलपूर्णैः पूर्वासादितैरनेककलशैः स्वस्वशाखीयैर्मन्त्रैः शूद्रानुलोमादयश्च तूष्णीमेवाभिषिञ्चेयुः। एतस्मिन्नेव कालेऽमात्यमुख्याश्च छत्रचामरवेत्रान् धारयेयुः। वादकाः शंखभेर्यादीनि वादयेयुः विप्रा मन्त्रपाठं वन्दिनश्च स्तुतिं कुर्युः। ततः सांवत्सरः सर्वकुंभमध्य आसादितहैमकुंभोदकं कुशैर्गृहीत्वा वक्ष्यमाणैः सुरास्त्वामभिषिञ्चन्त्वित्यादिभिरशीत्युत्तरशतैः श्लोकैरभिषिञ्चेन्मन्त्रान्ते। मन्त्रास्तु अभिषिञ्चन्त्विति क्रियापदानुसारेणैकसार्द्धद्वित्रिश्लोकात्मका ज्ञेयाः। सर्वमन्त्रान्ते सर्वं तत्कलशस्थं जलं क्षिपेत्। ते च श्लोकाः समाप्तौ वक्ष्यन्ते। ततो राजा सुगन्धितैलोद्वर्तनशुद्धोदकैः स्नात्वा श्वेतोष्णीषादिवस्त्राणि धृत्वादर्शे आज्ये च प्रतिबिम्बं दृष्ट्वा तदाज्यपात्रं ससुवर्णं ब्राह्मणाय दत्त्वा चन्दनकुंकुमदधिदूर्वादिमंगलद्रव्याण्यालभ्य श्रीविष्णुं सुवर्णादिप्रतिमायां पूर्वमण्डलेऽक्षतपुञ्जे वा षोडशोपचारैर्ब्राह्मणान्वस्त्रालंकारादिभिः सांवत्सरपुरोहितौ च मधुपर्कवस्त्रालंकारादिभिः पूजयेत्। अथ दैवज्ञः प्रागुक्तलक्षणं पट्टं ललाटे मुकुटं च मूर्ध्नि बध्नीयात्। ततः पुरोधा राजानं शुभलग्ने उत्तरोत्तरक्रमेण वृषमार्जारतरक्षुसिंहव्याघ्रचर्मबहुमूल्यवस्त्रोत्तरच्छदेन चोपर्युपर्याच्छादिते मञ्च उपवेशयेत्। ततो द्वारपालस्तत्रोपविष्टाय राज्ञेऽमात्यान्पौरान्वणिजः प्रकृतीश्च क्रमेण दर्शयेत्। राजा तु ग्रामवासोगजाश्वसुवर्णगोजाविगृहैरभिषेचकौ सांवत्सरपुरोहितौ संपूज्य ऋग्यजुःसामविदः त्रीन्विप्रांश्च तथैव संपूज्यान्यांश्च ज्योतिर्विदः पुरोहितं विप्रमुख्यांश्च यथाविभवं संपूज्य गोरसमोदकादिभिः संभोज्य गोवस्त्रतिलरूप्यान्नफलहेमसुपुष्पभूम्यादीनि तेभ्यो दत्वा चन्दनकेसरादिभिरलंकृतो दधिदूर्वादीनि मंगलद्रव्याण्यालभ्य सशरचापहस्तोऽग्निं प्रदक्षिणीकृत्य गुर्वादीन्नत्वा महावृषं गां च सवत्सां पृष्ठदेशे स्पृशेत्। ततः पुरोधाः सलक्षणं जात्यश्वं महागजं च तत्रानाय्य तौ सर्वौषधिकलशेन याऽओषधीरिति संस्नाप्य वस्त्रपर्याणसुवर्णरूप्यालंकारादिभिरलंकृत्याश्वं राज्ञः पुरत आनीयाभिमन्त्रयेत्। ते च मन्त्रा अश्वशान्तौ। जयाश्व त्वं मया राज्ञस्तुरंगाद्यः प्रतिष्ठितः। स्मराद्य लक्ष्म्याः पुत्रस्त्वं गन्धर्व त्वं तथास्मर। यथा नणामयं राजा तथा त्वं भव वाजिनाम्। यथा भवन्तं नृपतिर्नित्यमेवारुरुक्षति। तथा त्वं रक्ष राजानं सर्वावस्थागतं हय। दर्शयाश्व तथा स्वप्ने दैवदो-

षमुपागतम् । तुरगान् सकलान् रक्ष त्वयि भारोऽयमर्पितः । अद्यप्रभृति राजा त्वामग्रेणाभ्येति भक्तितः । अभ्यर्चयिष्यति सदा गन्धमाल्यानुलेपनैः । आशीर्भिश्च द्विजातीनां तथा च स्वस्तिवाचनैः । रक्षतु त्वां महेन्द्रस्तु पूर्वेण त्रिदशाधिपः । दक्षिणेन यमो देवः पश्चिमेन जलाधिपः । उदग्वैश्रवणो देवः सर्वे रक्षन्तु सर्वत इति । ततो गजमपि दक्षिणे कर्णे दैवविदा मन्त्रितं राजारोहेत । तन्मन्त्रास्तु गजशान्त्युक्ताः । श्रीगजस्त्वं कृतो राज्ञा भव तस्य गजाग्रणीः । गन्धमाल्यान्नभक्ष्यैस्त्वां पूजयिष्यति पार्थिवः । लोकः सदा भयं पूजां करिष्यति यथा तव । पालनीयस्त्वया राजा युद्धेऽध्वनि तथा गृहे । तिर्यग्भावं समुत्सृज्य दिव्यभावमनुस्मर । देवासुरे पुरा युद्धे श्रीगजस्त्रिदशैः कृतः । ऐरावणसुतः श्रीमानरिष्टो नाम वारणः । श्रीगजानां तु यत्तेजः सर्वमेवोपतिष्ठतु । तत्तेजस्तव नागेन्द्र दिव्यभावसमन्वितम् । उपतिष्ठतु भद्रं ते रक्ष राजानमाहवे । इति । अथ राजा तं गजमारुह्य गजारूढैरेव मुख्यामात्यसामन्तसांवत्सरपुरोहितादिभिः सह महापथेन स्वपुरं परिभ्रम्य देवतायतनानि गत्वा यथाविभवं देवताः संपूज्य गजारूढो गजारूढैरेव तैः सह गृहमागत्य गजादवतीर्य गजावतीर्णैरमात्यादिभिः सहान्तर्गृहं प्रविश्य तान्सर्वानन्यांश्च लोकान् यथाविभवं दानमानसत्कारप्रियवचोभिः सत्कृत्य कोटिलक्षायुतान्यतमसंख्यया विप्रान् संभोज्य दीनानाथेभ्यो भूयसीं दक्षिणां दत्त्वा स्वस्तिवाचनं कारयित्वा सर्वान्विसृज्य सुहृदादियुतोऽतिहृष्टमनाभुञ्जीत । इति राजाभिषेकप्रयोगः ।

अथ पूर्वोपयुक्ताः शर्मवर्मादिगणाः । यथाद्यौश्च पृथिवी च नबिभीतो नरिष्यवः । एवा मे प्राणमाबिभेः १ यथाहश्च रात्री च नबिभीतो नरिष्यथः । एवा मे यथा सूर्यश्च चन्द्रश्च ३ यथा ब्रह्म च क्षत्रं च ४ यथा सत्यं चानृतं च ५ यथा भूतं च भव्यं च ६ प्राणापानौ मृत्योर्मापातं स्वाहा । द्यावापृथिवी उपश्रुत्यामा० सूर्यश्चक्षुषामापाहि० अग्ने वैश्वानरविश्वैर्मादेवैः पाहि विश्वंभर विश्वेनमाभरमापाहि ५ ॐजोस्योजो मे दाः स्वाहा० सहोसि सहो मे दाः बलमसि बलं मे दाः । आयुरस्यायुर्मे दाः । श्रोत्रमसि श्रोत्रं मे दाः । चक्षुरसि चक्षुर्मे दाः । परियाणमसि परियाणं मे दाः । तुभ्यमेव जरि मन्वर्धता वयंमे प्रपन्ये मृत्यवो हिंसिषुः शन्तये । मातेव पुत्रं प्रमाना उपस्थे मित्रऐनमियात्या त्वंहसः । मित्र एनं वरुणो

मारिषाद् जरामृत्युं कृणुतां संविदानौ । तदग्निर्होता वयुनानि विद्वा-न्विश्वा देवानां जनिमाविवक्ति । त्वमीशिषे पशूनां पार्थिवानां ये जाता उत वा ये जनित्राः । मेमं प्राणो हासीन्मो अपानो मेमं मित्रा-वधिषुर्मो अमित्राः । द्यौष्ट्वा पिता पृथिवी माता जरामृत्युं कृणुतां संवि-दाने यथा जीवा अदितेरुपस्थे प्राणापानाभ्यां गुपितः शतं हिमाः । इममग्न आयुषे वर्चसे प्रियं रेतो वरुण मित्रराजन् । मातेवास्मा अदिते शर्म यच्छन् विश्वे देवा जरदष्टिर्यथासत् । अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां चुबुकादधि । यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया विवृहामि ते । ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात् । यक्ष्मं दोषण्यमं-साभ्यां बाहुभ्यां विवृहामि ते २ । हृदयात्ते परिक्लोम्नोहलीक्ष्णात्पा-र्श्वाभ्याम् । यक्ष्मं मतस्नाभ्यां प्लीह्नो यकृत्ते विवृहामसि । आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठो रुदरादधि । यक्ष्मं कुक्षिभ्यां प्लाशेर्नाभ्या विवृहामि ते । ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् । यक्ष्मं भसद्यांश्रो-णिभ्यां भसदंभं ससो विवृहामि ते । अस्थिभ्यस्ते मज्जभ्यः स्नावभ्यो धमनिभ्यः । यक्ष्मं पाणिभ्यामङ्गुलिभ्यो नखेभ्यो विवृहामि ते । अङ्गे अङ्गे लोम्नि लोम्नि यस्ते पर्वणि पर्वणि । यक्ष्मं त्वचस्य ते वयं कश्य-पस्य विबर्हेण विश्वञ्चं विवृहामसि । ७ मुञ्चामि त्वा हविषा जीव-नायकमज्ञातयक्ष्मादुत राजयक्ष्मात् । ग्राहिर्जग्राह यथैतदेजं तस्या इन्द्राग्नी प्रमुमुक्तमेनम् २ यदिक्षितायुं यदि वा परेतो यदि मृत्योरन्तिक नीत एव । तमाहरामि निर्ऋतेरुपस्थादस्पार्षमेनं शतशारदाय २ सह-स्राक्षेण शतवीर्येण शतायुषा हविषा हार्षमेनम् । इन्द्रो यथैनं शरदो न यात्यन्तिविश्वस्य दुरितस्य पारम् । शतं जीव शरदो वर्द्धमानः शतं हेमन्तान् शतमु वसन्तान् । शतं त इन्द्रो अग्निः सविता बृहस्पतिः शतायुषा हविषा हार्षमेनम् । प्रविशतं प्राणापानावनड्वाहाविव व्रतम् । कान्येयन्तुमृत्यवो यं नाहुरितरान् शतम् । इहैव स्तं प्राणापानौ माप-गातमितो युवम् । शरीरमस्याङ्गानि जरसेवहतं पुनः । जरायै त्वा परि-ददामि जरायै निधुवामि त्वा । जरा त्वा भद्रानेष्टव्यन्येयन्तुमृत्यवो यानाहुरितरान् शतम् । उत देवा अवहितं देव उन्नयथा पुनः । उताग-श्चक्रुषं देवा देवा जीवयथा पुनः । द्वाविमौ वातौ वात आसिन्धोराप-रावतः । दक्षन्ते अन्य आवातुव्यन्यो वातु यद्रयः । आवातवाहि भेषजं

विवातवाहि यद्रयः । त्वं हि विश्वभेषजो देवानां दूत ईयसे । त्रायन्तामिह देवास्त्रायतां मरुतां गणः । त्रायन्तां विश्वाभूतानि यथायमरपा असत् । आत्वागमं शन्तातिभिरथो अरिष्टतातिभिः । यक्ष्मं त उग्रमाभारिषपरायक्ष्मं सुवामि ते । अयं मे हस्तो भगवायं मे भगवत्तरः । अयं मे विश्वभेषजो यं शिवाभिमर्शनः । हस्ताभ्यां दशशाखाभ्यां जिव्हावाचः पुरोगवी । अनामयित्नुभ्यां हस्ताभ्यां ताभ्यां त्वापि स्पृशामसि । आवतस्त आवतः परामतस्त आवतः इहैव भवमानुगामापूर्व्याननुगाः पुत्रे न सुबध्नामि ते दृढे । यस्त्वाभिचेरुपुरुषः स्वोयदरणे जनः । उन्मोचनप्रमोचने उभे वाचा वदामि ते यद्द्रुद्रो हितशेपिशेस्त्रियै पुंसे अचित्या । उन्मोव्यदेनसो मातृकृताच्छेषे पितृताच्च यत् । उन्मो० यत्ते माता यत्ते पिता जामिर्भ्राता च सज्जनः । प्रत्यक् स्वेव स्वभेषजं जरदष्टिं कृणोमि त्वा । इहैवधिपुरुषसर्वेण मनसा सह । द्रूहूतोपमस्वमानुगा अधिजीवपुरा इहि । अनुभूतपुनरेहि विद्वान् उदयनं पथः । आरोहणमाक्रमणं जीवतो जीवतोयने माविभेर्नमरिष्यसि । जरदष्टिं कृणोमि त्वा निरवोचमहं यक्ष्ममङ्गेभ्योङ्गज्वरं तव । अङ्गभेदो अङ्गज्वरो यश्च ते हृदयामयः यक्ष्मश्येन इवप्रायप्तद्वाचा साढःपरस्तरां । ऋषी बोधप्रतीबोधावस्वप्नोयश्च जागृविः । तौ ते प्राणस्य गोप्तारौ दिवा नक्तं च जागृताम् । अयमग्निरुपसद्य इह सूर्य उदेतु ते । उदेहि मृत्योर्गंभीरात्कृष्णाच्चितमसस्परि । नमो यमाय नमो अस्तु मृत्यवे नमः पितृभ्य उत ये नयन्ति । उत्पारणस्य यो वेद तमग्निं पुरोदधे स्मा अरिष्टतातये । ऐतु प्राण ऐतु मन ऐतु चक्षुरथोबलम् । शरीरमस्य संविदां तत्पद्भ्यां प्रतितिष्ठतु । प्राणेनाग्निं संसृजतु धातः प्राणो न संदितः । प्राणेन विश्वतो मुखं सूर्यं देवा अजन्यन् आयुषायुः कृतां जीवा युष्मान् जीवमामृथाः । प्राणेनात्मातां जीवामामृत्योरुदकावरं देवानां निहितं निधिं यमिह्वान्नविन्दत् पथिभिर्देवयानैः । आपो हिरण्यं जुगुपुस्त्रिवृद्भिस्तास्त्वा रक्षन्तु त्रिवृतास्त्रिवृद्भिः । त्रीन्नाकांस्त्रीन्समुद्रांस्त्रीनब्रध्नांस्त्रीन्वैष्टपांस्त्रीन्मातृष्वनस्त्रीन्सूर्यान्गोमृन् कल्पयामि ते । उपप्रियं पनिप्रन्तंयुवानमाहुतीवृधम् । अगन्मविभ्रतो नमो दीर्घमायुः कृणोतु मे । अन्तकाय मृत्यवे नमः प्राणापाना इह ते रमन्ताम् । इहायमस्तु पुरुषः सहासुना सूर्यस्य भागे अमृतस्य लोके ।

उदेनं भगो अग्रमीडदेनं सोमो अंशुमान् उदेतं मरुतो देवा उदिन्द्राग्नी स्वस्तये। इहतेसुरिह प्राणा इहायुरिह ते मनः। उत्वानिर्ऋत्याः पाशेभ्यो दैव्या बाचा भरामसि। उत्क्रामातः पुरुषमावपत्या मृत्योः पड्विशरवमुञ्चमानः। मास्थित्या अस्माल्लोकादग्नेः सूर्यस्य संदृशः। तुभ्यं वातः पवतां मातरिश्वा तुभ्यं वर्षत्वमृतान्यापः। सूर्यस्ते तन्वे ३ शंतयामि त्वां मृत्युर्दयतां काप्रमेष्ठाः। उद्यानं ते पुरुषनावनावयानं जीवातुं ते दक्षतातिं कृणोमि। आहिरोमरममृतं सुखं रथमथजिर्विर्चिदथमवदासि। मा ते मनस्तत्र गान्मातिरो भून्माजीवेभ्यः प्रमदो मानुगाः पितॄन्। विश्वे देवा अभिरथं तु त्वैह मागतान्ममादीधीथा येन यं नयन्ति परावतम्। ७ आरोहतमसोज्योतिरेह्याते हस्तैरभामहे। शामश्च त्वा मा शवलश्चप्रेषितौ यमस्य यौ पथि रपीश्वानौ। अर्वाङेहि माविदीध्योमात्रविष्ठः पराङ्मनाः। मैनं पन्थामनुगाभीम एष येन पूर्वं नृपथ तं ब्रवीमि। तमएतत्पुरुषमापप्रस्थाभयं परस्तादभयं ते अर्वाक्॥ १०॥ द्विपदाः रक्षन्तुत्वाग्नयो ये अएस्वतारक्षन्तुत्वा मनुष्या ३ यमिन्धते। वैश्वानरो रक्षतु जातवेदा दिव्यस्त्वा मा प्रधाग्विद्युता सह। मा त्वा क्रव्यादभिमंस्ताराात्संकसुकाच्चर। रक्षतु त्वा द्यौरक्षतु पृथिवी सूर्यश्चत्वारक्षतां चन्द्रमाश्च। अन्तरिक्षं रक्षतु देवहेत्याः। बोधश्च त्वा प्रतिबोधश्च रक्षतामस्वप्नश्च त्वानवद्राणश्च रक्षताम्। गोपायंश्च त्वा जागृविश्च रक्षताम्। ते त्वा रक्षतु ते त्वा गोपायन्तु तेभ्यो नमस्तेभ्यः स्वाहा। जीवेभ्यस्त्वा समुदेवायुरिंद्रो धाता दधातु सविता त्रायमाणः। मा त्वा प्राणो बलं हासीदसं ते तु व्हयामति। मा त्वा जंभः संहनुर्मा तमो विदन्मा बर्हिः प्रमयुः कथास्याः। उत्वादित्या वसवो भरन्तूइन्द्राग्नी स्वस्तये। उत्वा द्यौरुत्पृथिव्युत्प्रजापतिरब्रवीत्। उ त्वा मृत्योरोषधयः सोमराज्ञीरपीपरन्। अयं देवा इहैवास्तयं मा पुत्रगादितः। इमं सहस्रवीर्येण मृत्योरुत्पातयामपि। उत्वा मृत्योरपीपरं संबंधन्तुवयोधतः। मा त्वा व्यस्तकेश्यो मा त्वा पुरुदो रुदन्। आर्षममिदं त्वा पुनरागाः। पुनर्णवः। सर्वाङ्गसर्वं ते चक्षुः सर्वमायुश्च ते विदन्। व्यवांते ज्योतिरभूदयत्वंतमो अक्रमीत्। अपत्वन्मृत्युं निर्ऋतिमययक्ष्मं निदध्मसि। आरभस्वे मा मृतस्य श्रुष्टिरच्छिद्यमानाजरदष्टिरस्तु ते असुं त आयु पुनराभरामि रजस्तमो मोपगामाप्रमेष्ठाः। जीवतां ज्योतिरभ्ये-

ह्यर्वाञ्जात्वा हरामि शतशारदाय । अवमुञ्च मृत्युपाशानशष्टिंद्राघीय- आयुः प्रतरं ते दधामि । वातात्तेप्राणमविदन्सूर्याच्चक्षुरिदं तव यत्ते मनस्त्वयि तद्धारयामि संवित्साङ्गैर्वदजिव्हया लपन् । प्राणेन त्वां द्विपदां चतुष्पदामग्निमिव जातमभिसंधमासि । नमस्ते मृत्यो चक्षुषे नमः प्राणाय ते करन् । अयं जीवतु मा मृतेयं समैरपामसि । कृणो- म्यस्मै भेषजमृत्यो मा पुरुषं वधीम् । जीवलानधारिषाजीवन्ति मोष- धीमहम् । त्रायमाणां सहमानां सहस्वतीमिह हुवे स्मा अरिष्टतातये । अधिब्रूहि मा रभथाः सृजेमं तवैव संछर्वस्ताया इहास्तु । भवाशर्वो मृडतंशर्वयछत मयसिध्यदुरितंवत्तमायुः । अस्मै मृत्यो अधिब्रूहि मन्द यस्रोदितो । यमेतु । अरिष्टः सर्वाङ्गः सश्रुर्जरसाशतहायन आत्मना भुजमश्नुताम् । देवानां हेतिः परित्वा वृणक्तु पारयामि त्वा जरस उ त्वा मृत्योरपीपरन् । आरादग्निं क्रव्यादं तिरूहं जीवातवे ते परिधिं दधामि । यत्ते निषातं रजसं मृत्यो अनवधृष्येम् । पथ इमं तस्माद्र- क्षन्तो ब्रह्मास्तैवसकृण्मसि ॥ १ ॥ कृणोमि ते प्राणापानौ जरां मृत्युं दीर्घमायुः स्वस्ति । वैवस्वतेन प्रहितान्यमदूतांश्चरतोपसेधामि सर्वान् । आरादरातिं निर्ऋतिं परोग्राहिं क्रव्यादः पिशाचान् । रक्षोयत्सर्वं दुर्भूतं तत्तम इवापहन्मसि । अग्नेष्टेप्राणममृतादायुष्मतो वन्वे जातवे- दसः । यथा न क्रव्या अमृतः सजूरसस्तत्ते कृणोमि तदु ते समृ- ध्यताम् । शिवे ते स्तां द्यावापृथिवी असन्तापे अभिश्रियौ । शं ते सूर्य आतपति शं वातो वातु तेहृदे । शिवा अभिक्षरन्तु त्वा आपो दिव्याः पयस्वतीः । शिवास्ते संत्वोषध य उत्वाहार्षमधरस्या उत्तरां पृथिवीमभि । तत्र त्वादित्यो रक्षतां सूर्याचन्द्रमसावुभा । यत्ते वासः परिधानं यान्नावं कृणुष्वे त्वम् । शिवं ते तन्वे ३ तकृण्मः संस्पर्शो- द्रूक्ष्णगस्तु ते । यत्क्षुरेणमर्चयता सुतेजसा वप्ता वपसि केशश्मश्रु । शुभं मुखं मान आयुः प्रमोषीः । शिवौ ते स्तां व्रीहियवा ववलासा वदोमधौ । एतौ यक्ष्मं विबाधेते एतौ मुञ्चतौ अंहसः । यदश्नासि यत्पिबसि धान्यं कृष्याः पयः । यदाद्यं ग्रदन्ताद्यं सर्वं ते अन्नमविषं कृणोमि । अह्ने चत्वारा त्रये चोभाभ्यां परिदध्मसि । अरायेभ्यो जिघत्सुभ्य इमं मे परिरक्षधः । शतं ते युतं हायनां द्वे युगे त्रीणि चत्वारि कृण्मः । इन्द्राग्नी विश्वेवास्ते नुमन्यन्तामहृणीयमाणाः ।

शरदे त्वा हेमन्ताय वसन्ताय ग्रीष्माय परिदध्मसि। वर्षाणि तुभ्यं स्योनानि येषु वर्धन्त ओषधीः। मृत्युरीशे द्विपदां मृत्युरीशे चतुष्पदाम्। तस्मात्त्वां मृत्योर्गोपितेरुद्भरामि स मा बिभेः सोरिष्ट न मरिष्यसि न मरिष्यसि मा बिभेः। न वै तत्र प्रमीयन्ते नो यन्त्यधमं ततः। सर्वो वै तत्र जीवति गौरश्वः पुरुषः पशुः। यत्रेदं ब्रह्म क्रियते परिधिर्जीवनायकम्। परि त्वा पातु समानेभ्यो अभिचारात्सबन्धुभ्यः। अपम्रिर्भवामृतोतिजीवोवात्तेहासिपुरसवः शरीरम्। ये मृत्यव एकशतं यानाष्ट्रा अतितार्थाः। मुञ्चन्तु तस्मात्त्वां देवा अग्नेर्वैश्वानरादधि। अग्नेः शरीरमसि पारयिष्णू रक्षोहासि सपत्नहा। अथो अमीवचातनः पूतुर्द्रुर्नामभेषजम्। प्राणाय नमो यस्य सर्वमिदं वशो यो भूतः सर्वस्येश्वरो यस्मिन्सर्वं प्रतिष्ठितम्। नमस्ते प्राणक्रन्दाय नमस्ते स्तनयित्नवे। नमस्ते प्राणविद्युते नमस्ते प्राणवर्षते। यत्प्राणस्तनयित्नुनाभिक्रन्दत्योषधीः। प्रवीयते गर्भं दधत्तेथो बह्वीर्विजायन्ते। यत्प्राणात्रावागते अभिक्रन्दत्योषधीः। सर्वं तदा प्रमोदते यत्किं च भूम्यामधि। यदा प्राणो अभ्यवर्षीद्वर्षेण पृथिवीं महीम्। पशवस्तत्प्रमोदन्ते महो वैस्तैनो भविष्यति। अभिवृष्टय ओषधयः प्राणेन समवादिरन्। आयुर्वै नः प्रातीतरः सर्वा नः सुरभीरकः। नमस्तेअस्त्वायते नमो अस्तु परायते। नमस्ते प्राण तिष्ठ आसीनायोतत्ते नमः। नमस्ते प्राणाप्राण ते नमो अस्त्वापानते पराचीनाय ते नमः प्रतीचीनाय ते नमः सर्व्वस्मै त इदं नमः। या ते प्राणप्रिया तनूर्या ते प्राणप्रेयसी। अथोयद्भेषजं तव तस्य नो धेहि जीवसे। प्राणप्रजा अनुवस्ते पिता पुत्रमिव प्रियम्। प्राणो ह सर्वस्येश्वरो यच्च प्राणति यच्च न। प्राणो मृत्युः प्राणस्तव आत्प्राणं देवा उपासते। प्राणो ह सत्यवादिनमुत्तने लोक आदयन्। प्राणो विराट् प्राणो देष्ट्री प्राणं सर्वं उपासते। प्राणे ह सूर्यश्चन्द्रमाः प्राणमाहुः प्रजापतिम्। प्राणापानौ व्रीहियवोवनड्वान्प्राण उच्यते। यवे ह प्राण आहितो अपानो व्रीहिरुच्यते। अपानति प्राणति पुरुषो गर्भे अन्तरा। यदा त्वं प्राणजिन्वस्यथ स जायते पुनः। प्राणमाहुर्मातरिश्वानं वातोह प्राणउच्यते। प्राणे ह भूतं भव्यं च प्राणे सर्वं प्रतिष्ठितम्। आथर्वणीराङ्गिरसीर्दैवीर्मनुष्यजा उत। ओषधयः प्रजायंते यदा त्वं प्राण जिन्वसि। यदा प्राणो अभ्यवर्षीद्वर्षेणं पृथिवीं महीम्। ओषधयः प्रजायन्तेऽथो याः काश्च वीरुधः। यस्ते प्राणेदं वेद यस्मि-

श्वासि प्रतिष्ठितम् । सर्वे तस्मै बलिं हराऽमुष्मिंल्लोकमुत्तमे । यथा प्राण बलिहृतस्तुभ्यं सर्वाः प्रजा इमाः । एवाबलिं हरान्यस्त्वा शृणत्सुश्रवः । अन्तर्गर्भश्चरति देवतास्वाभूतो भूतः स उ जायसे पुनः । सभूतो भव्यं भविष्यत्पिता पुत्रं प्रविवेशाशचीभिः । एकं पादं नोत्खिदति सलिलाद्धंस उच्चरत् । यदंगसतमुत्खिदेन्नैवाद्य न श्वं स्यान्न रात्री नाहः स्यान्न व्युच्छेत्कदाचन । अष्टावक्रं वर्तत एकनेमि सहस्राक्षरं प्रपुरोनिपश्चात् । अर्धेन विश्वं भुवनं जजान यदस्यार्द्धं कतमः स केतुः । यो अस्य विश्वस्य जन्मन ईशे विश्वास्य चेष्टतः । अन्येषु क्षिप्रधन्वने प्राण नमोऽस्तुते । यो अस्य सर्वस्य जन्मन ईशे सर्वस्य चेष्टतः । अतन्द्रो ब्रह्मणा धीरः प्राणो मा नु तिष्ठतु । उर्ध्वः सुप्तेषु जागार ननु तिर्यङ् निपद्यते । न सुप्तमस्य सुप्तेष्वनु शुश्राव कश्चन । प्राणमामत्यया वृत्तो तदमन्यो भविष्यति । अपां गर्भमिव जीवसे प्राण बध्नामि त्वामयि । इत्यायुष्यगणः । ॥ २५ ॥ विषासहिं सहमानं सासहानं सहीयांसं । सहमानं सहोजितं स्वर्जितं गोजितं संधनाजितं । ईड्यं नामव्ह इन्द्रमायुष्मान् भूयासं । विषासहिमिति संपूर्णः पुनः । ईड्यं नामव्हइन्द्र प्रियोदेवानां भूयासे । विशासहिं० ईड्यं० इन्द्रप्रियः प्रजानां । विशा० ईड्यं० इन्द्र प्रियः पशूनां० । विशा० ईड्यं० इन्द्रंप्रियः समानानां० । उदिह्युदिहि सूर्यवचसामाभ्युदिहि । द्विषंश्च मह्यं ऋध्यतुमाचाहं द्विषतेरन्धं । तवे द्विष्मो वहुधा वीर्याणि त्वं नः प्रणीहि पशुभिर्विश्वरूपैः सुधायां मधेहि परमे व्योमन् । उदिह्युदियांश्च पश्चामियांश्च तेषु मा सुमतिं कृषितवे० त्व न प्रा० मा त्वा दमन् ळले अप्स्वं १ तमें पासिन उपतिष्ठन्त्यत्र त्वं त इन्द्रोतिभिः शिवाभिः शंतमो भव । आरोहंस्त्रिदिवं दिवो गृणानः सोमपीतये प्रियधामास्वस्तये तवे० त्वंन० ॥ १० ॥ हि त्वा शर्सित दिवसा रुक्षमेतां स नो मृडसुमतौ ते स्याम । तवे० त्वं न० । त्वं न इन्द्रमहते सौभगायादब्धेभिः परियाह्यक्तुभिस्तवे० त्वमिन्द्रासि विश्वजित्सर्वविन्पुरुहूतस्त्वमिन्द्रात्वमिन्द्रेमंसुहवंस्तोममेरयस्व स नो मृडसुमतौ ते स्याम तवे द्वि० त्वं न० प्र० । अदब्धो दिवि पृथिव्यामुतासि न त आयुर्महिमानमन्तरिक्षे । अदब्धे न ब्रह्मणा वा वृधानः । स त्वं न इन्द्र दिवि षं शर्म यच्छ तवे द्वि० त्वं नः० । यात इन्द्र तनूरप्सु या पृथिव्यां यान्तरग्नौ या त इन्द्र पवमाने स्वर्विदि ये व्रतन्वन्त-

रिक्षं व्यापिथ तया न इन्द्र तन्वा उ शर्म यच्छ तवे द्वि० त्वंनः०। त्वामिन्द्र ब्रह्मणा वर्द्धयन्तः सत्रं निषेदुर्ऋषयो नाधमानास्तव्वेद्वि० त्वं न० । त्वततूत्वं पर्येष्युठं सहस्रधारं विदथं स्वर्विदं तवे द्वि० ५ त्वं न० रक्षसे प्रदिशश्चतस्रस्त्वं शोचिषा नभसि विभासि । त्वमिमा विश्वा भुवनानि तिष्ठ स ऋतस्य पन्थामन्वेषि विद्वांस्तवे० त्वंन ६ । पञ्चभिः पराङ् तपस्ये कया वाङ् शस्ति मे सुदिभे वाधमानस्तवेद्वि० त्वंन. ७ त्वमिन्द्रस्त्वं महेन्द्रस्त्वं लोकस्त्वं प्राजापतिः तुभ्यं यज्ञो विजायते तुभ्यंजुह्वन्ति जुव्हतस्तवे द्वि० त्वं न० ८ असति सत्प्रतिष्ठितं सति भूतं प्रतिष्ठितं । भूतंह भव्य आहितं भूतं भव्ये प्रतिष्ठितं तवेद्वि० त्वंन० पृणाहि पशुभिर्विश्वरूपैः सुधायां मा धेहि परमे व्योमन् ॥ ९ ॥ शुक्रोसि भ्राजोसि । यथा त्वं भ्राजता भ्राजोस्येवाहं भ्राजता भ्राज्यासं रुचिरसि रोचोसि । स यथा त्वं रुच्यारोचोस्येवाहं पशुभिश्च ब्राह्मणवर्चसेन च रुचिषीय । उद्यते नम उदायते नम उदिताय नमः । विराजे नमः स्वराजे नमः संम्राजे नमः । अस्तंयते नमोस्तमेष्टा ते नमोस्तमिताय नमः विराजे नमः स्वराजे नमः सम्राजे नमः । उदगादयमादित्यो विश्वेन सहसा सह । सपत्नान्मत्द्यं रन्धयन्साचाहं द्विपतेरधं तवेद्वि० त्वंनः आदित्यनावमारुक्षः शतारित्रां स्वस्तये । अहर्मात्यपीपरो रात्रिं सत्रातिपारय । सूर्यनावमारुक्षः शतारित्रां स्वस्तये रात्रिं मात्यपीपरोहः सत्रातिपारय । प्रजापतेरावृतो ब्रह्मणा वर्मणा ह कश्यपस्य ज्योतिषा वर्चसा च । जरदष्टिः कृतवीर्यो विहायाः सहस्रायः सुकृतश्चरेयं परीवृतो ब्रह्मणा० । मामाप्रायं निषवोदैव्याय मामनुपीरवसृष्टा वधाय । ऋतेन गुप्त ऋतुश्च सर्वैर्भूतेन गुप्तो भव्येन चाहम् । मामाप्रापत्याप्मामोतमृत्युरन्तर्ददेऽहं सलिले तवावः । अग्निमागोप्ता परिपातु विश्वत उद्यत्सूर्यो नुदतां मृत्युपाशान् । व्युच्छतीरुशसः पर्वता ध्रुवाः सहस्रं प्राणामप्यायन्तं ताम् ॥ इत्यायुष्यगणः । अथ सर्वस्य गणः । ये त्रिसप्ताः परियन्ति विश्वारूपाणि बिभ्रतः । वाचस्पतिर्बला तेषां तन्वो अद्य दधातु मे । पुनरेहि वाचस्पते देवेन समनसा सह । वसोष्पते निरमयमय्येवास्तु मयि श्रुतम् । इहैवाभिवितनुते आर्त्नी इव ज्यया । वाचस्पतिर्नियच्छतु मय्येव० । उप हूतो वाचस्पतिरुपास्मान्वाचस्पतिर्ह्वयतां संश्रुतेन गमेमहिमाश्रुतेन विराधिषि । अस्मिन्वसुवसवो धारयन्त्विन्द्रः पूषा वरुणो मित्रो अग्निः ।

इममादित्या उत विश्वे च देवा उत्तरस्मिन् ज्योतिषि धारयन्तु । अस्य देवाः प्रदिशि ज्योतिरस्तु सूर्यो अग्निरुत वा हिरण्यं सपत्ना । अस्मदवरे भवन्तूत्तमं नाकमधिरोहयेमम् । येनेन्द्राय समभरः पयांस्युत्तमेन ब्रह्मणा जातवेदः । तेन त्वमग्न इह वर्धयेमं सजातानां श्रैष्ठ्या आधेह्येनम् । ऐशां यज्ञमुत वर्चोददेहं रायस्पोषमुत वित्तान्यग्ने । अपत्ना अस्युथेमम् । प्रातरग्निं प्रातरिन्द्रं हवामहे सप्त ऋचः ॥ ७ ॥ प्रथमायां द्वितीयां हुवे मेत्यत्र हुवामहे । उतोदितौ मघवन् । अस्तु देवस्तेना वयम् । वसुविदं भगं मे । हस्तिवर्चसं पृथतां बृहद्यशो अदित्यायस्तन्वःसंबभूव तत्सर्वे समदुर्मह्यमेतद्विश्वेदेवा अदितिः सजोषाः । मित्रो वरुणश्चेंद्रो रुद्रश्च चेततुः । देवासो विश्वधायसस्तेमां यन्तु वर्चसा । येन हस्तीवर्चसा संबभूव येन राजा मनुष्येष्वप्स्वन्तः । येन देवा देवतामग्रआयंतेन माम-द्यवर्चसाग्ने वर्चस्विनं कृणु । यत्ते वर्चो जातवेदो बृहद्भवत्याहुतेः । यावत्सूर्यस्य वर्च आसुरस्य च हस्तिनः । तावन्मे अश्विना वर्च आधत्तां पुष्करस्रजा । यावच्चतस्रः प्रदिशश्चक्षुर्यावत्समश्नुते । तावत्समैत्वैन्द्रियं मयि तद्धस्तिवर्चसम् । हस्तीमृगाणांछुषदामतिष्ठावान्बभूव हि । तस्य भगेन वर्चसाभिषिञ्चामि मामहम् । सिंहे व्याघ्र उतयापृदाकौत्विषरग्नौ ब्राह्मणोसूर्येया । इन्द्रं या देवी० सा न ऐतु वर्चस० यशो हविर्वर्धता-मिन्द्रजूतं सहस्रवीर्यं सुभृतं सहस्कृतम् । यः प्रसरसाणमनुदीर्घाय चक्षसे हविष्मन्तं मावर्धय ज्येष्ठतातये । अच्छाम इन्द्रयशसं यशोभिर्यशस्विनं नमसा माविधेम नोरास्वमिन्द्रजूतं तस्य ते रातौ यशस्यामयशा इन्द्रो यशा अग्निर्यशाः सोमो अजायत । यशा विश्वस्य भूतस्याहमस्मि यश-स्तमः । यशसं मेन्द्रो मघवान् कृणोतु यशसं द्यावापृथिवी उभे इमे । यशसं मा देवः सविता कृणोतु प्रियो दातुर्दक्षिणाया इह स्याम् । यथेन्द्रो द्यावापृथिव्योर्यशस्वान् । यथापओषधीषु बिभ्रती । एवाविश्वेषु देवेषु वयं सर्वेषु यशसः स्याम । इन्द्रो यशा अग्नि० गिरावरगराटेषु हिरण्ये गोषु यद्यशः । सुरायां सिच्यमानायां कीलालेऽथो मधु तन्मयि । अश्विना सारघेण मा मधुना तं शुभस्पती । यथा मर्मस्वती वाचमाव-दामि जना ९ अनु । मयि वर्चो अथो यशोऽथो यज्ञस्य पत्सयः । तन्मयि प्रजापतिर्दिवि द्यामिव दृहतु । यथा सोमः प्रातःसवने अश्विनोर्भवति प्रियः । एवामे अश्विना वर्चसात्मनि ध्रियताम् । यथा सोमो द्वितीये सवन इन्द्राग्न्योर्भवति प्रियः । एवाम इन्द्राग्नी वर्च आत्मनि ध्रियताम् ।

यथा सोमस्तृतीये सवन ऋभूणां भवति प्रियः । एवामे ऋभवो वर्चश्च ध्रियताम् । यद्गिरिषु पर्वतेषु योष्वश्वेषु यन्मधु । सुरायां सिच्यमानायां यत्तत्र मधु तन्मयि । अश्विना सारघेण वा मधुनांगंऽशुभस्पती । यथा वर्चस्वतीं वाचमावदानि जनां अनु । स्तनयित्नुस्तेवाक् प्रजापते वृषा शुष्मं क्षिपसि भूम्यां दिवि । तां पशव उपजीवन्ति सर्वे ते नो शेषमूर्ज पिपर्त्ति । पृथिवी दंडोन्तरिक्षं गर्भो द्यौः कषा विद्युत्प्रकषो हिरण्ययो विंदुः । ये वै कषायाः सप्तमधूनि वेद मधुमान् भवति । ब्राह्मणश्च राजा च धेनुश्चानड्वांश्च व्रीहिश्च यवश्च मधु सप्तमं । मधुमान् भवति मधुमदस्याहार्यं भवति । मधुमतो लोकान् जयति य एवं वेद यद्वीध्रेस्तप्रयति प्रजापतिरेव तत्प्रजाभ्यः प्रादुर्भवति तस्मात्प्राचीनोपवीतस्तिष्ठेत्प्रजायते तु मा बुध्यस्वेति । अन्वेनं प्रजा अनुप्रजापतिर्बुध्यते य एवं वेद । यच्च वर्चो असेषु सुरायां च यदाहितं । यद्गोष्वश्विना वर्चस्तेन मां वर्चसावतं । येन महानघ्न्याजघनमश्विना येन वा सुरा येनाक्षा अभ्यसिच्यन्ते तेनेमां वर्चसावतम् । योनिध्मोदीदयदप्स्वान्तर्यं विप्रास ईत्नते । अध्वरेषु । अपां नयन्मधुमतीरपो दायाभिरिन्द्रो वावृधे वीर्यावान इदमहं रूपं तं ग्रासं तनूं दूषिमपोहामि यो भद्रो रोचनस्तमुदवामि। आस्यै ब्राह्मणास्तपनीर्हरंत्ववीरघ्नीरुदजन्त्वापः । अर्यम्णो अग्निं पर्येतु पूषन्प्रतीक्षन्ते श्वशुरो देवरश्च। शतं ते हिरण्यं शमुशन्त्वापः । शं मे धिर्भवतु शं युगस्य तार्ष्मशं त आपः शतपवित्र्या भवन्तु संपत्याक्त्तन्वं संस्पदस्व । वर्चस्यगणः समाप्तः । अमूः पारे पृषदाकस्त्रिषप्तानिर्जरायवः । तासां जरायुभिर्वरमाक्षामयिव्ययामस्यथापोपरिपंथिनविशूच्येतुर्कतती पिनाकमिव बिभ्रती विष्वक्पुनर्भुवाम नो असमृद्धा अघायवेन बहवः समेवेकं नार्भका अभिदाधृशुः । वेणोरङ्गा इवाभि नो मा मृद्धा अघायवः । प्रेषौ प्रस्फुरन्तं वहतं पृणतो गृहात् । इन्द्राण्येतु प्रथमाडीतामुषिता पुरः । पातं न इन्द्रापूषणादितिः पान्तु मरुतः । अपांनपात्सिन्धवः सप्तपातन उपातु नो विष्णुरुत द्यौः प्रपातं नो द्यावापृथिवी अभिष्टये । पातु ग्रावा पातु नो मोनोअंहसः पातु नो देवी सुभगा सहस्वती रात्वग्निः शिवा ये अस्य पायकः । पातं नो देवाश्विना शुभस्पती उषासानक्तोतन उरुष्यताम् । अपांनपादभिरुती गयस्यचिद्देवत्वष्टर्वर्धय सर्वतातये । त्वष्टा मे दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः । पुत्रैर्भ्रातृभिरदितिं नोनुपादनो दुस्तरं त्रायमाणं सहः । येन सोमादितिः यथा मित्रवाचंत्यद्रुहः । तेना-

नोवसागहि । येन सोमसाहन्त्यासुरां रन्धयासि नः । तेनानो अतिवो-
चतानः । येन देवा असुराणामोजांस्यवृणीध्वम् । तेनानः शर्म यच्छथ ।
यथा वृक्षं जिंवुजासमंतं परिशस्वत्ते । एवापरिश्वपस्य मां यथा मां कामि-
न्यस्यो यथा मां नापगा असः । नमो देवदेवेभ्यो राजबधेभ्यः । यथो यं
विष्यानां वधास्तेभ्यो मृत्यो नमोस्तु ते । नमस्ते अधिवाकाय परावाकाय
ते नमः । सुमत्यै मृत्यो तेन मोऽमृत्यो न इदं नमः । नमस्ते यातुधानेभ्य
नमस्ते भेषजेभ्यः । नमस्ते मृत्योमूलेभ्यो ब्राह्मणेभ्य इदं नमः । अभयं
मित्रावरुणाविहास्तु नो अभयं सोमसविता नः कृणोतु । अभयं नोस्तू १
र्वन्तरिक्षं सप्तऋषीणां च हविषाऽभयं नो अस्तु । अनमित्रं नो अधराद्-
नमित्रं न उत्तरात् । इद्रासमित्रं नः पश्चादनमित्रं पुरस्कृधि । उपप्रागा-
त्सहस्राक्षो युक्त्वाशयथो रथम् । शप्तारमन्विच्छन्मवृक इवापि वृतो गृहे ।
परिणो वृश्चिशपथहृदमग्नीरिवादहन् । यप्तारमत्र नो जहि दिवो वृक्षमि-
वाशनिः । यो नः शपादशपतो यश्च नः शपतः शपात् । वृक्ष इव विद्युता
हत आमूलादनुशुष्यतु । अनमित्रं नो अधरादनमित्रं न उत्तरात् । इद्रास-
मित्रं नः पश्चादनमित्रं पुरस्कृधि । मनसे चेतसे धिय आकूतय उत
चित्तये । मत्यै श्रुताय चक्षसे विधेम हविषा वयम् । अपानाय व्याना-
य प्राणाय भूरिधायसे । सरस्वत्या उरुव्यये विधेम हविषा वयम् ।
यमो मृत्युरघमारो निर्ऋत्यो बभ्रुभ्रुवोस्नानीलशिखंडः । देवजनाः
सेनयाओं तस्थिवांसति अस्माकं परियन्तु वीरान् । मनसा होमैर्हविषा
घृतेन पर्यायास्त्र उत राज्ञे भयाय । नमस्येभ्यो नमस एभ्यः कृणोम्य-
न्यात्रास्मद्यविषा नयन्तु । त्रायध्वं नो अद्यविषाभ्यो वधाद्विश्वे देवा मरु-
तो विश्ववेदसः । अग्नीषोमावरुणः पूतदक्षावातापर्जन्ययोः सुमतौ स्यामः ।
वृहस्पतिमं० त्यमृषु० त्रातारमिह० इन्द्रः सुत्रामा । अभयं नः कृणो-
त्विति विशेषः । मसुत्रामास्ववां० तस्यवयं । विपरीते १ आमन्द्रैरिन्द्र-
हरि०वर्म मे द्यावापृथिवी वर्माहर्वर्मसूर्यः । वर्म मे विश्वेदेवाः कृन्मामा-
प्रायत्प्रथीचिकाः । ऐन्द्राग्नं वर्म बहुलं विश्वेदेवा नातिविध्यंति सर्वे ।
तन्मे तन्त्रं त्रायतां सर्वतो वृहदायुष्माञ्जरदष्टिर्यथा सत् । गिरयस्ते
पर्वतसहिमवन्तोरण्यते पृथिविस्योननमस्तु । भ्रुवं कृष्णां रोहिणीं
विश्वरूपां ध्रुवां भूमिं पृथिवीमिन्द्रगुमाम् । यत्रेमध्यं पृथिवी यत्र नभ्यं
यास्तदुर्जस्तन्त्रः संबभूवुस्तासुधेह्यभि नः पवस्व माता भूमिः पुत्रोरहं

पृथिव्याः । यास्ते प्राचीः प्रदिशो या उदीचीर्यास्ते भूमे अधरायाश्च पश्चात् । स्योनाजास्ता मह्यं चरते भवन्तु मा नियप्तं भुवनेषु श्रियाणः ॥ १ ॥ मा नः पश्चान्मा पुरस्तान्नुदिष्टोत्तरादधरादुत स्वस्ति भूमे नो भव । मा विदन्परिपन्थिनो वरीयो या वर्यावर्धम् । स्वस्त्ययनगणः । स्वस्तिदा विशांपतिर्वृत्रहा १ ब्राह्मणेन पर्युक्तासि कण्वेन तार्षदेन । सेनेवैसि त्विषीमति ततमभ्ययमस्तिरयत्रप्राप्तोस्योषधे ॥ १ ॥ न ताअ-र्वारेणु० १ अभयं मित्रावरुणा० १ अभयं द्यावापृथिवी इहास्तुनोर्वि-पात्रिणोनुददतं नः प्रतीचः । मा ज्ञातारं मां प्रतिष्ठां विन्दत मिथो विघ्नानाउपयन्तु मृत्युं २ हतंतर्दं समं कुमाखुपश्चिनाच्छिन्नं शिरो अविपृष्टीश्रिणीतम् । यवान्नेददनयिनह्यतं मुखं मथाभयं कृणुतं धाप्याय १पूषे। मा आसइन्द्रः सुत्रामा१ मैवं यथामनुगा भीम एषा येन पूर्वं येयथ तं यवीमि । तम एतत्पुरुषमाप्रपत्यामयं परस्तादभयं ते अर्वाक्१ स्वस्तिदा विशांपतिः १ नमस्ते घोषिणीभ्यो नमस्ते केशिनीभ्यो नमोनमस्कृ-ताभ्यो नमः संभुंजतीभ्यः । आतेराष्ट्रमिह रोहितो हार्षीद्व्यास्तवन्मृधो अभयं ते अभूत् । तस्मै ते द्यावापृथिवी रेवतिभिः कामं इहाथा-मिहशकरीभिः १ इदमुच्छ्रेयो वसानमागां शिवे मे द्यावापृथिवी अभूताम् । असपत्नाः प्रदिशो भवन्तु न वै त्वा द्विष्मो अभयं नो अस्तु । यत इन्द्र भयामहे० ऊतिभिः । अभयगणः । मानो विदन्वि-व्याधिनो मो अभिव्याधिनो विदन् । आरात् शरव्या अस्मद्विषूची-रिन्द्र पातय । विष्वञ्चो अस्मच्छरवः पतन्तु ये यस्ता ये वास्याः । देवीर्मनुष्येषवो ममामित्रान्विवध्यत्त । यो न स्वो यो अरणः स जात उ निष्ठ्यो यो अस्मां अभिदासति । इन्द्रः शरव्ययैतान् ममामित्रोन्वि-विध्यतु यः सपत्नो योऽसपत्नः यश्च द्विषच्छपातिनः । देवास्तं सर्वे धूर्वन्तु० ४ । अदारसृद्भवतयो० १ यो अद्य सेन्यो वधोद्यापुनामुदीरते । युवन्तं मित्रावरुणावस्य द्यावयन्तं परि १ इदश्च पदमुतश्च यद्वधं वरुणया-वयः। विमहच्छर्म यच्छ वरीयोयावयावधम् । शास इत्यामह्यं अमित्रसाहो अस्तृतः । नयस्य० ४ स्वस्तिदा विशांपति० १ विनइन्द्र० १ भूमथसंगम या तमो यो अस्मां अभिदासति । पादव्यत्ययः । विरसो विमृ० । अयेन्द्र द्वि० विमहःशर्म० संसीतंम इदं ब्रह्मसंशितं वीर्यं १ बलं संशितं क्षत्रेम-जरमस्तजिष्णुर्मेषामस्ति पुरोहितः समहमेषां राष्ट्रं स्यामिसमोजो वीर्यं बलम् । वृश्चामि शत्रूणां बाहूननेन हविषाहम् । निवैयधंतांमधरे भवन्तु

ये नः सूरिमघंवानं पृतन्यात् । क्षणामि ब्रह्मणा मित्रानुन्नयामि स्वान-हम् । तीक्ष्णीयांसः परशोरग्नेस्तीक्ष्णतरा उत । इन्द्रस्य वज्रात्तीक्ष्णी-यांसो येषामस्मि पुरोहितः । एषामहमायुधासंस्थामेषां राष्ट्रं सुवीरं वर्ध-यामि । एषां क्षत्रमजरमस्तु जिष्ण्वे१शां चित्तं विश्वे भवन्तुदेवाः । उद्धर्षन्तां मघवन्वाजिनान्युद्वीराणां जयतामेतु घोषाः । पृथग्घोषा उ लूलयः केतुमन्त उदीरतम् । दिवा इडज्येष्टा मरुतो यन्तु सेनया । प्रेताजयतानरवः सन्तु बाहवः । तीक्ष्णेषवो बलधन्वनो हतोग्रायुधा अबलानुग्रबाहवः । अवसृष्टा परापतशरव्ये ब्रह्मसंशिते । जयामित्रा-न्प्रपद्यस्व नैषा वरं वरं मामीषां मोचि कश्चन । त्वया मन्यो सरथा मारुजन्तो हर्षमाणो: । संशितामरुची इति विशेषः । सूक्तं० । यस्ते मन्योविदधद्वज्रसायक स ह उतः पुष्यति विश्वमानुषक् । साह्यामदा-समार्यं त्वया युजा वयं सहस्कृतेन सहसा सहस्वता । एता देवसेनाः सूर्यकेतवः सचेतसः । अमित्रां नो जयन्तु स्वाहा । अवमन्युरवायताव-बाहू मनोयुजाः । पराशर त्वं ते सांपरां नो युष्म वर्धयातुधानो रयि-माकृधि । निर्हस्तेभ्यो नैर्हस्तयं देवाः शरुमस्तुच्यथा वृश्चामि शत्रूणां बाहूननेन हविषाहम् । इन्द्रश्च गारप्रथमं नैर्हस्तममउनेभ्यः । जयं उ स त्वा नो मम स्थिरेणेन्द्रेण मेदिना । निर्हस्तः शत्रुरमिदासंनस्तुयें से-नाभिर्वधमायन्त्वास्मान् । मसर्पयेन्द्रं महता वधेन द्रात्वेषामङ्गहारो विविद्धः १ आतन्वाना आयच्छन्तो स्यंतो ये च धावता निर्हस्ताः शत्रवः स्थनेंद्रो बोद्धपराशरैः । निर्हस्ताः शत्रवः स्थनोङ्गैषां ग्लापयामसि । यथै-षामिन्द्र वेदांस्यतशो विभजामहै । परिवर्त्मानि सर्वत इन्द्रः पूषा चत-स्तृतुः । मह्यं त्वद्यामूः सेना अमित्राणां परस्पराम् । मूढा अमित्राश्चर-ताशीर्षाणा इवांहयः । तेषां वोअग्निमूढानामिन्द्रो हन्तु वरंवरम् । ऐषु-नह्यवृशाजिनं हरिणस्माभियं कृधि । पराङसित्रएषत्ववर्वाची गौरुपेसतु । अभिभूर्यज्ञो अभिभूरग्निरभिभूः सोमो अस्मभ्यं हविश्वाः । पृथतना यथासान्येमाविधेमानिर्होशइदं हविः स्वधास्तु मित्रावरुणा विपश्चिता प्रजावत् क्षत्रं मधुवनेहपिन्वतम् । बाधेथां दूतिं निर्ऋतिं परातैः कृतं चितेन प्रमुमुग्ध्यास्मत् । इमं वीरमनुहर्षत्वमुग्रमिन्द्रसखायो अनुसंर-भध्वम् । ग्रामजितं गोजितं वज्रबाहुं जयं तमयाप्रमृणं तमोजसा । इन्द्रो जयातिजयराजयाता अधिराजो राजसुराजयातै । चर्कृत्य ईड्यो

वन्यश्चोपसद्यो नमस्यो भवेह । त्वमिन्द्राधिराजः श्रवं सुरत्स्वंभूरभि-भूतिर्जनानां त्वं दैवीविंष इमाविराजायुष्मत् क्षत्रमजरं ते अस्तु । प्राच्यादिशस्त्वमिन्द्रासि राजोतोदीच्यादिशोच्छोछत्रुहोसि यत्र यंति-स्रोत्योस्तज्जिदंतेदक्षिणतो वृशभ एशिहव्यः अजित्वेन्द्रवरिमतः पुरा त्वां हूरणाद्धुवे । ह्वयाम्युग्रं चेत्तारं पुरुषाणां मामेकजम् । यो अद्यसेत्यो वधो जिघांसं न उदिते । इन्द्रस्य तत्र बाहू समंतं परिदध्मः परिदध्म इन्द्रस्य बाहू समंतं त्रायतुस्त्रायतांहः । देवसवितः सोमराजं सुमनसं मा कृणु स्वस्तये । अपराजितगणः । यः सपत्नो यश्च द्विपंछपातिनः । देवास्तं सर्वे धूर्वन्तु ब्रह्म० । शर्म्मवर्म्मैतदाहरास्यैनार्या उपस्तरे सिनीवालिप्रजायतां भगस्य सममाअसत् । उद्वहुर्म्मिः शम्याहन्त्वायोयाक्त्राणिमुञ्चत । मादुष्कृतौव्येनसावश्यावशुनमारता । अघोरचक्षुरपतिघ्नीस्योनाश-ग्मासुशेवासुयमागृहेभ्यः । वीरसूर्देवकामासत्वयीधिषीमहि सुमनस्य-माना । इतश्च यदमुतश्च यद्वधं वरुणयावय । विमहच्छर्म यच्छ वरीयो यावयावधम् । अपेन्द्रद्विष० जासतो वधं० विमच्छर्मन्यूयं नः प्रवतो नयान्मरुतः सूर्यत्वचसः । शर्म यच्छायशप्रथाः । इममग्न आयुषे वर्चसे नय प्रियं रेतो वरुणमित्र । माते० । तिस्रो देवीर्महि नः शर्म यच्छतु प्रजायै नस्तन्व ३ यच्छ पुष्टम् । माहास्महि प्रजया० । उरुव्यचाना महिषः शर्म यच्छत्वस्मि० इन्द्रस्य शर्म्मासि । तन्त्वा प्रपद्ये तं त्वा प्रवि-शामि सर्वगुः सर्वपूरुषः सर्वात्मा सर्वतनूः सह यन्मे स्थितेन । अश्मवर्म मेसि यो मा प्राच्यादिशोऽघायुरभिदासात् । एतत्सा ऋच्छात् । यो मां दक्षिणामाः । यो मा प्रतीच्याः० यो मोदीच्याः । यो मा ध्रुवायाः । यो मोर्ध्वायाः० वृहता मन उपह्वये मातरिश्वना प्राणापानौ । सूर्याच-क्षुरन्तरिक्षाच्छ्रोत्रं पृथिव्या शरीरम् । येन देवा असुराणामोजांस्यवृ-णीध्वं तेनानः शर्म्म यच्छथ । यथा वृक्षं जिवुजासमं तं परिषस्वजे । एवापरिष्वजस्व मां यथा मां कामिन्यः सोयथामन्नायगा असः । यथेमे द्यावापृथिवी सद्यः पर्येति सूर्यः । एवापर्येमि ते मनो यथा मां काम० यथा सुपर्णाः प्रपन् पक्षौ निहन्तिभूम्यम् । एवानिहन्मि ते मनो यथा मां काम० वांछ मे तन्व ३ यदौवाछाक्षौ ३ वांछशवथ्यौ । अक्षौ वृषण्यन्त्या-केशा मान्ते कामेन शुष्यन्तु । मम त्वा दोषणिः श्रिशं कृणोमि हृदयश्रि-शम् । यथावतः परागसौ मामुष्याहं कदाचन । अनडुद्भ्यस्त्वं प्रथमं धेनु-

भ्यस्त्वमरुंधतिः । अधेनवे यवसे शर्म यच्छ चतुष्पदे । शर्म यच्छ त्वोषधिः सहदेवीररुंधती । करत्ययस्वंतंगोष्ठमयक्ष्मा उत पुरुषात् । निस्वरूपां सुभगामत्स्याददामि जीवलाम् । सा नो रुद्रस्यास्तां हेतिं दूरं नयतु गोभ्यः तनूष्टे वाजि तन्वाऽमभ्य धावतु शर्म तुभ्यम् । अपह्नुतो महोधरुणाय यद्देवो दिवीव ज्योतिस्वामिमीयात् । वाजस्य तु प्रसवे मातरं महीमदितिं नाम वचसा करामहे । यस्य उपस्था उर्वा १ तरिक्षं सा नः शर्म त्रिवरूथं नियच्छात् । देवानां पत्नीरुशती० १ यच्छन्तु समाप्तौ । अधिब्रूहि मां रभथा सृजेम तवैव संसर्वहाया इहास्तु । भवाः शर्वौ मृडतं शर्म यच्छ मयसिध्यदुरितं धत्तमायुः । रक्षोहणं वाजि० १ स्वाक्ति मे द्यावापृथिवी स्वाक्ति मित्रो अकरयम् । स्वाक्ति मे ब्रह्मणस्पतिः स्वाक्ति सविताकरत् । वर्मसेद्यावापृथिवी स्वस्त्ययनोक्ता १ ऐन्द्राग्नं वर्म० १ इयमपि तत्र । वर्म मह्यमयं मणिः फालाज्जातः करिष्यति । पूर्णोमन्थेन मागम इन सह वर्चसा । मित्रः पृथिव्योदक्रामत्तां पुरः प्रणयामि वः । तामाविशतां प्रविशत सा वः शर्म च वर्म यच्छतु । वायुरन्तरिक्षेणोद० सूर्यो दिवो० चन्द्रमा नक्षत्रैरु० सोम ओषधीरु० यज्ञो दक्षिणाभिरु० समुद्रो नदीभिरु० ब्रह्म ब्रह्मचारिभिरु० इन्द्रो वीर्येणो० देवा अमृतेनो० प्रजापतिः प्रजापतिभिरु० अपन्यधु पौरुषेये बधं यमिन्द्राग्नीधीता सविता बृहस्पतिः । सोमो राजा वरुणा अश्विनायमः पूषास्मान्परिपातु मृत्योः । यानि चकार पुनरद्बृहस्पतिः । प्रजापतिर्मातरिश्वा प्रजाभ्यः । प्रदिशो यानि वसते दिशश्च तानि मे वर्माणि वहुलानि सन्तु । यत्ते तनूष्वनह्यं तदेवाधिराज्ञयोधेहि न इन्द्रो यच्चक्रे वर्म तदस्मान्पातु सर्वतः । वर्म मे द्यावापृथिवी स्वस्त्ययनोक्ता । अपसपत्नं पुरस्तात्पश्चान्नो अभयं कृतम् । सविता दक्षिण उत्तरान्मा शचीपतिः दिवो दित्या रक्षन्तु भूम्या रक्षन्त्वग्नयः । इन्द्राग्नी रक्षतां मा पुरस्तादश्विनावभितः शर्म यच्छताम् । तिरश्चीनघ्न्या रक्षतु जातवेदा भूतकृतो मे सर्वतः सन्तुवभीद्विपदाः ॥ ३ ॥ इति शर्म्मवर्म्मगणः । अथपूर्वोक्ता अशीत्युत्तरशतं श्लोकाः । सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः । वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥ १ ॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते । आखण्डलोग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥ २ ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा

सहिताः शेषो दिक्पालाः पान्तु ते सदा ॥ ३ ॥ रुद्रो धर्मो मनुर्दाक्षी रुचिः श्रद्धा तु पार्थिव । भृगुरत्रिर्वसिष्ठश्च सनकश्च सनन्दनः ॥ ४ ॥ सनत्कुमारश्च तथा भगवानपि चांगिराः । पुलहश्च पुलस्त्यश्च मरीचिः कश्यपः प्रभुः ॥५॥ एते त्वामभिषिञ्चन्तु प्रजाध्यक्षाः समागताः । प्रभा करा बर्हिषदो अग्निष्वात्तास्तथैव च । क्रव्यादाश्चोपहूताश्च आज्यपाश्च सुकालिनः । एते त्वामभिषिञ्चन्तु पितरश्चाग्निभिः सह ॥ ७ ॥ लक्ष्मीर्वेदी शची ख्यातिरनसूया तथा स्मृतिः । संभूतिः सन्नतिश्चैव क्षमा प्रीतिस्तथैव च ॥ ८ ॥ स्वाहा स्वधा च ते राजन्नभिषिञ्चन्तु मातरः । कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिर्लक्ष्मीस्तथा क्रिया ॥ ९ ॥ बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः सिद्धिश्च पार्थिव । एतास्त्वामभिषिञ्चन्तु धर्मपत्न्यः समागताः ॥ १० ॥ अरुन्धती वसुर्यामी लंबा भानुर्मरुत्वती । संकल्पा च मुहूर्त्ता च साध्या विश्वा तथैव च ॥ ११ ॥ धर्मपत्न्यो दशान्यास्त्वामभिषिञ्चतु पार्थिव । अदितिर्दितिर्दनुः काला सुहृष्टानायुषा मुनिः ॥ १२ ॥ कद्रूः क्रोधवशा प्राची विनता सुरभिस्तथा । एतास्त्वामभिषिञ्चन्तु कश्यपस्य प्रियाः स्त्रियः ॥ १३ ॥ पत्नी ते बहुपुत्रस्य सुपुत्राया च भामिनि । समायात्वभिषेकाय विजयाय च पार्थिव ॥ १४ ॥ कृशाश्वपत्नी च तथा सुप्रभा तु जया तथा । सुदर्शना तयोः पुत्रो विजयं विदधातु ते ॥ १५ ॥ मनोरमा भानुमती विशाला या च बाहुदा । अरिष्टनेमिपत्न्यस्त्वामभिषिञ्चतु पार्थिव ॥ १६ ॥ कृत्तिका रोहिणी देवी विशाखा च तथा नृप । अनूराधा तथा ज्येष्ठा मूलं च वसुधाधिप ॥ १७ ॥ आषाढा च तथा पूर्वा तथान्या चोत्तराह्वया । अभिजिच्च तथा श्रत्या धनिष्ठा च तथैव च ॥ १८ ॥ तथा शतभिषक् चैव पूर्वाभाद्रपदा तथा । उत्तरा रेवती राजन् अश्विनी भरणी तथा ॥ १९ ॥ एतास्त्वामभिषिञ्चन्तु सोमपत्न्यः समागताः । मृगी च मृगचर्मा च श्वेतभद्रचरा हरिः । पूता च कपिता दंष्ट्रा सुरभा सुलभा तथा । एताः पुलस्त्यपत्न्यस्त्वामभिषिञ्चन्तु पार्थिव ॥ २१ ॥ श्येनी भासी तथा क्रौञ्ची धृतराष्ट्री तथा शुकी । पत्न्यस्त्वामभिषिञ्चन्तु अरुणस्यार्कसारथेः । आयतिर्नियतिश्चैव रात्रिनिद्रा च पार्थिव । एतास्त्वामभिषिञ्चन्तु लोकसंस्थानहेतवः ॥ २३ ॥ उमा सेना शची चैव मोर्णा निर्ऋतिस्तथा । गौरी शिवा च बुद्धिश्च वलया चैव नन्दना ।

॥ २४ ॥ आनूक्या च तथा ज्योत्स्ना या च देवी वनस्पतिः । एतास्त्वामभिषिञ्चन्तु कालस्यावयवाः शुभाः ॥ २५ ॥ आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः । ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः । स्वायंभुवो मनोः पुत्रो मनुः स्वारोचिषस्तथा । औत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा । वैवस्वतोथ सावर्णो दक्षब्रह्मसुतावुभौ । धर्मपुत्रो रुद्रपुत्रो रौच्ये भौत्यश्च यो मनुः । एते त्वामभिषिञ्चन्तु मनवश्च चतुर्दश । विश्वभुग्विश्वपश्चित्रसुशान्तः सुसुखी विभुः । मनोजवस्तथौजस्वी बलिरंकतमान्तिकौ । वृषश्च कतिधामा च दिविस्पृक् शुचिरेव च । एते त्वामभिषिञ्चन्तु देवपालाश्चतुर्दश । रेवन्तश्च कुमारश्च तथा वर्चाः कुमारकः । वीरभद्रश्च नन्दी च विश्वकर्मा पुरोजवः । एते त्वामभिषिञ्चन्तु सुरमुख्याः समागताः । आत्मा ह्यासुमन्तो दक्षः पट्टः प्राणस्तथैव च । हविष्यश्च गविष्ठश्च ऋतः सत्यश्च पार्थिव । अभिषिञ्चन्तु राजंस्त्वां देवा ह्यङ्गिरसो दश । क्रतुर्दक्षा वसुः सत्यः कालकामौ मुनिस्तथा । धृतिमान्मनुजश्चैव रोचमानस्तथैव च । एते त्वामभिषिञ्चन्तु विश्वेदेवास्तथा दश । अजैकपादहिर्बुध्न्यः पुष्पकेतुस्तथा बुधः । भरतश्च तथा मृत्युः कापालिरथ किंकिणिः । एकादशैते रुद्रास्त्वामभिषिञ्चन्तु पार्थिव । भुवनो भावनश्चैव सुजन्यः सुजनस्तथा । क्रतुः सुवर्णवर्णश्च व्यजश्च व्यसुतरस्तथा । प्रसवश्चाव्ययश्चैव दक्षश्च मनुजाधिप । एते त्वामभिषिञ्चन्तु भृगवो नाम देवताः । मनो मरुश्च प्राणश्च नरोपानश्च वीर्यवान् । चितिर्हयो नयश्चैव हंसो नारायणस्तथा । विभुश्चापि दिविश्रेष्ठस्तथान्यश्च जगद्धितः । एते त्वामभिषिञ्चन्तु साध्या द्वादश पार्थिव । धाता मित्रोर्यमा पूषा शक्रोंशो वरुणो भगः । त्वष्टा विवस्वान्सविता विष्णुर्द्वादशमः स्मृतः । एते त्वामभिषिञ्चन्तु काश्यपा दितिसंभवाः । एकद्वित्रिचतुर्ज्योतिः पञ्चज्योतिस्तथैव च । एकशक्रो द्विशक्रश्च त्रिशक्रश्च महाबलः । इन्द्रश्च गत्या दृश्यन्ते ततः प्रतिसकृत्तथा । मितश्च संमितश्चैव अमितश्च महाबलः । ऋतजित्सत्यजिच्चैव सुषेणः श्येनजित्तथा । अतिमित्रस्तथा मित्रः पुरुजिच्चापराजितः । ऋतश्च ऋतवान् धाता वरुणो विधृतो ध्रुवः । विधारणो महातेजा वासवस्य परः सखा । ईदृगन्यादृशश्चैव एतादृगमिताशनः । क्रीडनश्च तथा शक्तिः सभरश्च महायशाः । धातुरुग्रो मुनिर्भीमो अतिमुक्तः

क्षिपः सहः । द्युतिर्वपुरनाधृष्यो वासः कामो जयो विराट् । एते त्वामभिषिञ्चन्तु मरुतश्च समागताः । देवा ह्येकोनपञ्चाशन्महाबलपराक्रमाः । चित्रांगदश्चित्ररथश्चित्रसेनश्च वीर्यवान् । ऊर्णायुरनघश्चैव उग्रसेनश्च वीर्यवान् । धृतराष्ट्रश्च सोमश्च सूर्यवर्चास्तथैव च । दुराधस्तृणयः कीर्णिर्नन्दिश्चित्रस्तथैव च । कलिश्चाप्यंगिरा राजन् पर्जन्यो नारदस्तथा । वृषपर्वा च हंसश्च तथा चैव हाहाहूहूः । विश्वावसुस्ताम्रकश्च तथा च सुरुचिश्च यः । एते त्वामभिषिञ्चन्तु गंधर्वाः पृथिवीपते । आहूत्यः शोभयन्त्यश्च वेगवत्यस्तथैव च । आप्लुवत्यस्तथोर्जश्च तथा वेकुरुपच्छुभाः । वभ्रवश्चामृतरुचो भुवश्चैव रुचस्तथा । भीरवः शोचयन्त्यश्च दिव्या ह्यप्सरसां गणाः । एतास्त्वामभिषिञ्चन्तु कामिन्यस्तरुणप्रियाः । अनुत्तमा सुरूपा च सुकेशी च मनोवती । मेनका सहजन्या च पर्णाशा पुंजिका स्थला । ऋतुस्थला घृताची च विश्वाची पूर्वचित्त्यपि । प्रम्लोचाथाप्यनुम्लोचा रंभा चैवोर्वशी तथा । पञ्चचूडा सामवती चित्रलेखा तु पार्थिव । मिश्रकेशी सुगन्धिश्च विद्युत्पर्णा तिलोत्तमा । अदृष्टलक्ष्मणा क्षेम्रा असिता रुचिका तथा । सुव्रता च सुबाहुश्च सुबोधा सुवपुस्तथा । पुण्डरीका मुदारा च सुराधा सुरसा तथा । हेमा सरस्वती चैव कामला सूनृतालया । सुमुखा हंसपादी च वासोलीरतिलालसा । एतास्त्वामभिषिञ्चन्तु राजन्नप्सरसः शुभाः । प्रह्लादश्च महातेजास्तथा राजन्विरोचनः । धन्वीवाणस्तथान्ये च दितिपुत्राः समागताः । अभिषिञ्चन्तु दैत्याश्च दिव्येनाप्यंभसा स्वयम् । विप्रचित्तिमुखाः सर्वे दानवास्त्वां समागताः । अभिषिञ्चन्तु राजानं राज्यं कर्तुं सुसत्वराः । हेत्यश्चैव प्रहेत्यश्च सलिलेन्द्रस्तथैव च । सुकेशी पौरुषेयश्च यज्ञहापुरुषादकः । विद्युत्सूर्यस्तथा व्यासो वधश्च रसनस्तथा । एते त्वामभिषिञ्चन्तु समागम्याद्य राक्षसाः । सुसिद्धो माणिभद्रश्च सुमनो नन्दनस्तथा । कन्दूतिः पञ्चगश्चैव मणिमान्वसुमांस्तथा । सर्वानुभूतिः शंखश्च पिङ्गाक्षश्चतुरस्तथा । यमो मन्दरसो भीमः पद्मचन्द्रः प्रभाकरः । मेघवर्णश्च भव्यश्च प्रद्योतश्च महायशाः । भूतिमान्केतुमांश्चैव मौलिमांश्च चतुर्दशः । श्वेतश्च विपुलश्चैव प्रद्युम्नश्च जयावहः । पक्षयक्षो वलाकश्च कुमुदश्च बलाहकः । पद्मनाभः सुगन्धश्च सुवीरो विजयाकृतिः । पौर्णमासो हिरण्याक्षः शतजिह्वश्च वीर्यवान् । एते त्वामभिषिञ्चतु राजवृद्धाश्च सत्तमाः । शंखं पद्मश्च राजेन्द्र मकरः कच्छपस्तथा । महापद्मश्च

नीलश्च खर्वः कुन्दो मुकुन्दकः । एते त्वामभिषिञ्चन्तु निधयस्तु समागताः । छगलाश्चैकवक्काश्च ये च सूचीमुखा नृपाः । दुःपूरणा विषादाश्च ज्वलनांगारकास्तथा । कुंभमात्राः प्रतुंडाश्च उपवीरा उलूखलाः । अकर्णाश्चक्रखंडाश्च तथा ये पात्रपाणयः । पांसवश्च वितुंडाश्च विपुणाः स्कंदनास्तथा । एते त्वामभिषिञ्चन्तु पिशाचानां तु जातयः । ब्रह्मचर्ये स्थिता दान्ताः सर्वज्ञाः सर्वदर्शिनः । नानाप्रकारवदना नानाबाहुशिरोधराः । चतुष्पथपराट्टालशून्यालयनिकेतनाः । त्रिपुरारिं भवं देवं ये गता मनुजेश्वर । ते त्वामद्याभिषिञ्चन्तु गणा भूतपतेः स्वयम् । महाकालं पुरस्कृत्य नरसिंहं च मातरः । सर्वास्त्वामभिषिञ्चन्तु राजराज्ये नराधिप । ग्रहः स्कन्दो पिशाचश्च नैगमेयस्तथैव च । अभिषिञ्चन्तु राजंस्त्वां सर्वे स्कन्दग्रहाः शुभाः । डाकिन्यो याश्च योगिन्यः खेचर्यो भूचरास्तथा । सर्वास्त्वामभिषिञ्चन्तु समेत्य मनुजेश्वर । गरुडश्चारुणश्चैव आरुणिश्च महाखगः । संपाती विनतश्चैव विष्णुर्गन्धकुमारकः । एते त्वामभिषिञ्चन्तु सुपर्णाः पृथिवीपते । अनन्तश्च महानागो वासुकिः शेषतक्षकौ । सुपर्णारिश्च कुंभश्च वामनोऽथाञ्जनोत्तमः । ऐरावतो महापद्मः कंबलाश्वतरावुभौ । एलापत्रश्च खेण्डश्च कर्कोटकधनञ्जयौ । महाकर्णो महानीलो धृतराष्ट्रबलाहकौ । कुमारः पुष्पदन्तश्च गन्धर्वश्च मनस्विकः । नहुषः खररोमा च शंखपालस्तथैव च । पद्मश्च कुलिकश्चैव पाणिरित्येवमादयः । नागास्त्वामभिषिञ्चन्तु राजराज्ये नराधिप । कुमुदैरावतौ पद्मः पुष्पदन्तोथ वामनः । सुप्रतीकोञ्जनो नीलः पान्तु त्वां सर्वतो द्विपाः । पैतामहास्तथा हंसा वृषभः शांकरस्तथा । उच्चैश्रवाश्वाश्वपतिस्तथा धन्वन्तरिर्नृप । कौस्तुभः शंखराजश्च पान्तु त्वां सर्वतः सदा । चक्रं त्रिशूलं वज्रश्च नन्दकोस्त्राणि चाप्यथ । सर्वेभिषेकं दत्त्वा च दिशन्तु विजयं ध्रुवम् । धर्मश्च वृद्धशाखाश्च सत्यं दानं तपस्तथा । यशो यज्ञास्तथैवायुर्ब्रह्मचर्यं दमः शमः । एते त्वामभिषिञ्चन्तु चित्रगुप्तश्च पार्थिव । दंडः पिंगलकश्चैव मृत्युः कालान्तकावुभौ । वालखिल्यास्तथा सर्वे भवन्तु विजयाय ते । दिग्धेनवश्चतस्त्रस्त्वां सुरभिश्च तथा नृप । अभिषिञ्चन्तु सर्वाभिर्गोभिः सार्द्धं नरेश्वर । वेदव्यासश्च वाल्मीकिः शमनोऽथ पराशरः । देवलः पर्वतश्चैव दुर्वासा भागुरिः शुचिः । याज्ञवल्क्यः सजाबालिर्जमदग्निः शुचिश्रवाः । विश्वामित्रः स्थूलकच्छो वर्द्धनोत्रिर्विदूरथः । एकतश्च द्वितश्चैव त्रितो

गौतमगालवौ । शांडिल्यश्च भरद्वाजो मौद्गल्यो वेदवाहनः । बृहदश्वः कुदिमडो जपजानुर्वटोदरः । यवक्रीतोऽथ रैभ्यश्च आत्माथामश्च जैमिनिः । ऋषिः सारंगवश्चैव तथागस्त्यो महातपाः । दुदुर्मृदुर्मिशश्चैव इन्द्रबाहुर्महोदयः । कात्यायनश्च कण्वश्च बलाकश्चेभनन्दनः । एते त्वामभिषिञ्चन्तु मुनयः पार्थिवोत्तम । पृथुर्दिलीपो भरतो दुःष्यन्तः शत्रुजिद्बली । मनुः ककुत्स्थश्चानेना युवनाश्वो जयद्रथः । मान्धाता मुचुकुन्दश्च तथा राजा पुरूरवाः । इक्ष्वाकुश्च यदुश्चैव पूरुर्भूरिश्रवास्तथा । अंबरीषश्च नाभागो बृहदश्वो महाहनुः । प्रद्युम्नश्चाथ सुद्युम्नो भूरिद्युम्नश्च संजयः । एते चान्ये च राजानस्तव राजन् दिवं गताः । समायान्त्वभिषेकाय विजयाय तथा श्रियै । पर्जन्याद्यास्तथा भूप मेघाः सर्वे समागताः । द्रुमाश्चौषधयो रत्नं बीजानि विविधानि च । सर्वे त्वामभिषिञ्चन्तु राजराज्ये सुसत्वराः । पुरुषश्चाप्रमेयात्मा महाभूतानि यानि च । पृथिवी वायुराकाशमापो ज्योतिस्तथैव च । मनोबुद्धिस्तथैवात्मा अव्यक्तश्च महीपते । एते त्वामभिषिञ्चन्तु समेता वसुधाधिप । रुक्मभौमः शिलाभौमः पातालो नीलमृत्तिकः । पीतरक्तासिताश्चैव श्वेतभौमास्तथैव च । एते त्वामभिषिञ्चन्तु विजयाय महीपते । जंबूशाकः कुशः क्रौञ्चः शाल्मलीद्वय एव च । प्लक्षश्च पुष्करश्चैव स्वस्वाम्यं प्रदिशन्तु ते । उत्तराः कुरवः पुण्या रम्या हैरण्वतास्तथा । भद्राश्वः केतुमालश्च वर्षश्चैव इलाव्रतः । हरिवर्षः किंपुरुषो वर्षो भारतसंज्ञकः । एते त्वामभिषिञ्चन्तु समेत्य वसुधाधिप । इक्षुद्वीपः कसेरुश्च ताम्रवर्णो गभस्तिमान् । नागद्वीपस्तथा सौम्यो गन्धर्वो वरुणस्तथा । अयं च नवमस्तेषां स्वस्वाम्यं प्रदिशन्तु ते । हिमवान् हेमकूटश्च निषधो नील एव तु । श्वेतश्रृंगोऽगवान्मेरुर्माल्यवद्गन्धमादनौ । महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवांस्तथा । विन्ध्यश्च पारियात्रश्च सर्व एव महीधराः । समागम्याभिषिञ्चन्तु त्वामद्य वसुधाधिप । ऋग्वेदोथ यजुर्वेदः सामवेदस्तथैव च । अथर्ववेदो वेदास्त्वामभिषिञ्चन्तु पार्थिव । इतिहासो धनुर्वेदो गान्धर्वश्चायुसंज्ञितः । सप्तोपवेदाश्च तथा विजयाय भवन्तु ते । शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः । छन्दोविचितिषष्ठानि विजयाय भवन्तु ते । अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश । सांख्ययोगः पाञ्चरात्रो वेदः पाशुपतं तथा । कृतान्तपञ्चकं चैव शास्त्राणि विविधानि च । गायत्री पापशमिनी

गङ्गादेवी महाशिवः । गान्धारी च तथा नारी विजयं प्रदिशन्तु ते । देवदानवगन्धर्वा यक्षराक्षसपन्नगाः । ऋषयो मनवो गावो देवमातर एव च । देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः । अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्यावयवाश्च ये । स्थानानि च समस्तानि पुण्यान्यायतनानि च । जीमूतानि च सर्वाणि तद्विकाराश्च सर्वशः । उक्तानि चाप्यनुक्तानि विजयाय भवन्तु ते । लवणक्षीरतोयाश्च घृतमण्डोदकास्तथा । दधिमण्डोदकाश्चैव सुरोदश्च नराधिप । तथैवेक्षुरसोदश्च तथा स्वादूदकश्च यः । गर्भोदकश्च तोयैस्त्वामभिषिञ्चन्तु पार्थिव । चत्वारः सागराश्चैव स्वेन तोयेन पार्थिव । समागम्याभिषेके तु विजयं प्रदिशन्तु ते । पुष्करश्च प्रयागश्च प्रभासो नैमिषं तथा । तथा ब्रह्मसरः पुण्यं गयाशीर्षं च पार्थिव । कालोदको नन्दिकुण्डस्तथैवोत्तरमानसः । स्वर्गमार्गप्रदश्चैव तथा पञ्चनदश्च यः । भृगुतीर्थं प्रभासश्च तथैवामरकंटकः । आश्रमः कालिकायाश्च तृणबिन्दोस्तथाश्रमः । गोतीर्थं चाग्नितीर्थं च विमलः स्वर्ग एव च । जंबूमार्गश्च विमलः पुण्यस्तंडुलिकाश्रमः । कपिलश्च तथा तीर्थो तीर्थो वातिकखंडिकौ । महासरस्तथागस्त्यकुमारीतीर्थमेव च । अंगद्वारः कुशावर्त्तो बिल्वको नीलपर्वतः । वाराहः पर्वतश्चैव तीर्थं कनखलं तथा । सुगन्धा च धरा कुंभास्तथा शाकंभरीति या । भृगुतुंगः सकुब्जाम्रः कपिलस्य तथाश्रमः । चमसोद्भेदनः पुण्यस्तथा विनशनं शुभः । अजतुङ्गश्च मोचश्च अश्वगन्धश्च पार्थिव । कालंजरः सकेदारो रुद्रकोणिस्तथैव च । महालयश्च राजेन्द्र बदर्याश्रम एव च । नन्दा च सोमतीर्थं च सूर्यतीर्थं शतक्रतोः । अश्विनोर्वरुणस्याथ वायोर्वैश्रवणस्य च । ब्रह्मणश्चैव शर्वस्य यमस्य च्यवनस्य च । विरूपाक्षस्य धर्मस्य तथा चाप्सरसां नृप । ऋषीणां च वसूनां च साध्यानां मरुतां तथा । आदित्यानां च रुद्राणां तथा चांगिरसां नृप । विश्वेदेवभृगूणां च तथान्येषां च मानद । प्लक्षप्रस्रवणश्चैव सुपुत्रा च नराधिप । शालग्रामसरश्चैव वाराहो मानसस्तथा । कामाश्रमस्त्रिकूटश्च चित्रकूटस्तथैव च । सपूर्वः ऋतुसारश्च तथा विष्णुपदं सरः । कापिलं च तथा तीर्थं वासुकेस्तीर्थमेव तु । सिन्धूत्तमस्तपो द्वारोऽप्यथ सूर्यारकुंभकः । पुण्डरीकश्च राजेन्द्र गङ्गासागरसंगमः । सिन्धुसागरयोश्चैव संगमः सुमनोहरः । तथा कुंभावसुंदश्च मानसं च तथा सरः । तथा बिन्दुसरः पुण्यं सरस्त्वच्छोदकं तथा । धर्मारण्यं फल्गुतीर्थमविमुक्तं तथैव च । लौहित्यश्च तथा पुण्यो बदरी-

पावनः शिवः । तीर्थं सप्तऋषीणां च वह्नितीर्थं तु पार्थिव । पुष्पवक्त्रा यथोमेषछागलेशस्तु पार्थिव । पुष्पन्यासस्तथा चैव तीर्थौ हंसपदस्तथा । अश्वतीर्थश्च कर्णाश्वो मणिमंथस्तथैव च । देविका इन्द्रमार्गश्च स्वर्गबिन्दुस्तथैव च । आहल्यकस्तथा तीर्थस्तीर्थश्चैरावतस्तथा । ऐरावती समुद्भेदे तीर्थं भोगयशःपरम् । करवीराह्वयं चैव नागमोवणिकस्तथा । पापमोचनिकश्चैव ऋणमोचनिकस्तथा । उद्वेजनस्तथा पुण्यः संपूज्यः सरसोवरः । देवब्रह्मसरः पुण्यं सर्पिर्दधि तु पार्थिव । एते चान्ये च बहवः पुण्यसंकीर्तनाः शुभाः । तोयैस्त्वामभिषिञ्चन्तु सर्वपातकनाशनैः । गंगा महानदी पुण्या ह्लादिनी ह्लादिनी तथा । पावनी च तथा सीता चक्षुः सिन्धुश्च नर्मदा । सुप्रभा काञ्चनाक्षी च विशाला मानसी ह्रदा । सरस्वत्योघनादी च सुवेपा विमलोदका । शिप्रा शोणश्च तर्वश्च सरयूर्गण्डकी तथा । अच्छोदा च विभागा च चन्द्रभागा इरावती । वितस्ता देविका रंभा केशा देवह्रदा शिवा । तथा चेक्षुमती पुण्या कौशिकी यमुना तथा । गोमती धूतपापा च बाहुदा तु सरस्वती । निर्विध्या च तृतीया च लौहित्यश्च महानदः । देवस्मृतिर्वेदमाता वेदघुर्घुरदा तथा । पर्णशा वन्दना चैव सदानीरा कुमुद्वती । पीता चर्मण्वती धूमा विदर्भा वेणुमत्यपि । अवन्ती च तथा कुन्ती सुरसा च पलाशिनी । मन्दाकिनी दशार्णा च सिन्धुरेखा कुमुद्वती । तपती पिप्पली श्येनी करतोया पिशाचिकी । चित्रोपला चित्रवर्णा मंजुला बाकुला मती । शुक्तिमती सिनीवालि मंहूणी तृपिका कपूः । तापी पयोष्णी निर्विन्ध्या सिता च निषधावती । वेणा वैतरिणी भीमा मन्द एव तथा कुहूः । तोया चैव महागौरी दुर्गतिर्मिङ्गिला तथा । गोदावरी भीमरथी कृष्णवर्णा भयंकरा । तुङ्गभद्रा सुप्रकारा वात्या कावेरिरेव च । कृतमाला ताम्रवर्णी पुष्पभद्रोत्पलावती । नृसमा ऋषिकुल्या च इक्षुका त्रिदिवालया । लाङ्गुलिनी वंशधरी जंबूश्च सुकलावती । ऋषिका वरकेगा च मन्दगा मन्दवाहिनी । क्षमा देवी दया व्योमा पयोष्णी कालवाहिनी । कंपना च विशाला च करतोया सुवाहिनी । ताम्रारुणा वेत्रवती सुभद्रा चाश्ववत्यपि । अद्रिका च इमा चैव सुप्रकारा हिरण्मयी । आपगा लोपला भासी सन्ध्या तु वडवा नदी । महेन्द्रवाणी शाला च मालिका वलयावती । नीलोद्धतकरा चैव बाहुदा वनवासिनी । नन्दाचापरनन्दा च सुनन्दा वसुवासिनी ।

एताश्चान्याश्च राजेन्द्र नद्यस्त्वां विविधोदकाः । सर्वपापप्रशमनाः सर्वलोकस्य मातरः । सतोयपूर्णैः कलशैरभिषिञ्चन्तु पार्थिव । एतैर्यथोक्तैर्नृपराजराज्ये दत्ताभिषेकः पृथिवीं समग्राम् । ससागरां भुंक्ष्व चिरं च जीव धर्मे च ते बुद्धिरतीव चास्तु । इतिश्रीभट्टशंकरात्मजभट्टनीलकण्ठकृते राजनीतिमयूखे राजाभिषेकप्रयोगः ।

एवं कृताभिषेको राज्यं कुर्यात् । तच्च सप्ताङ्गम् । तानि च स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि चेति । कामन्दकोऽपि—

स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् ।
एतावदुच्यते राज्यं सत्वबुद्धिव्यपाश्रयम् ॥
नीतिशास्त्रस्य दृष्टार्थत्वान्न क्रमेऽभिनिवेशः कार्यः ।

तत्र स्वामी राजा । तत्र देवानामंशाः सन्तीत्याह मनुः—

इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च ।
इन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥
यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्गतो नृपः ।
तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥
सोऽग्निर्भवति वायुश्च सोऽर्कः सोमः स धर्मराट् ।
स महेन्द्रः स ईशः स कुबेरश्च प्रभावत इति ॥

कामन्दकोऽपि—

राजास्य जगतो हेतुर्वृद्धेर्वृद्धाभिसंमतः ।
नयनानन्दजननः शशांक इव तोयधेः ॥
यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजाः ।
अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥
धार्मिकं पालनपरं सम्यक्परपुरंजयम् ।
राजानमभिमन्यन्ते प्रजापतिमिव प्रजाः ॥
न्यायप्रवृत्तो नृपतिरात्मानमथ च प्रजाः ।
त्रिवर्गेणोपसंधत्ते निहन्ति ध्रुवमन्यथा ॥
धर्माद्वै यवनो राजा विधाय बुभुजे भुवम् ।
अधर्माच्चैव नहुषः प्रतिपेदे रसातलम् ॥
तस्माद्धर्मं पुरस्कृत्य यतेतार्थाय पार्थिवः ।
धर्मेण वर्द्धते राष्ट्रं तस्य स्वादु फलं श्रियः ॥

राजगुणास्तद्वृत्तं च नीतिसारे—

न्यायेनार्जनमर्थस्य रक्षणं वर्धनं तथा।
सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधम्॥
नयस्य विनयो मूलं विनयः शास्त्रनिश्चयः।
विनयो हीन्द्रियजयस्तद्युक्तः शास्त्रमृच्छति॥

तथा—

शास्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रागल्भ्यं धारयिष्णुता।
उत्साहो वाग्मिता दार्ढ्यमापत्क्लेशसहिष्णुता॥
प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता।
कुलं शीलं दमश्चेति गुणाः संपत्तिहेतवः॥
आत्मानं प्रथमं राजा विनयेनोपपादयेत्।
ततोऽमात्यांस्ततो भृत्यान् ततः पुत्रांस्ततः प्रजाः॥
सदानुरक्तप्रकृतिः प्रजापालनतत्परः।
विनीतात्मा हि नृपतिर्भूयसीं श्रियमश्नुते॥
प्रकीर्णविषयारण्ये धावन्तं विप्रमाथिनम्।
ज्ञानांकुशेन कुर्वीत वश्यमिन्द्रियदन्तिनम्॥

तथा—विषयामिषलोभेन मनः प्रेरयतीन्द्रियम्।
तन्निरुन्ध्यात्प्रयत्नेन जिते तस्मिन् जितेन्द्रियः॥
एवं करणसामर्थ्यात्संयम्यात्मानमात्मना।
नयाय नयविद्राजा कुर्वीत हितमात्मनः॥
एकस्यैव हि योऽशक्तो मनसः सन्निबर्हणे।
महीं सागरपर्यन्तां स कथं ह्यवजेष्यति॥
क्रियावसानविरसैर्विषयैरपहारिभिः।
गच्छत्याक्षिप्तहृदयः करीव नृपतिर्गृहम्॥
शब्दस्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः।
एकैकमलमेतेषां विनाशप्रतिपत्तये॥

पञ्चानां निदर्शनमाह—

शुचिदर्भांकुराहारो विदूरभ्रमणक्षमः।
लुब्धकाद्गीतलोभेन मृगो मृगयते वधम्॥
गिरीन्द्रशिखराकारो लीलयोन्मूलितद्रुमः।
करिणीस्पर्शसंमोहादालानं याति वारणः॥

स्निग्धदीपशिखालोके विलोकितविलोचनः ।
मृत्युमृच्छति संमोहात्पतंगः सहसा पतन् ॥
दूरेऽपि हि भवन्दृष्टेरगाधसलिले वसन् ।
मीनस्तु सामिषं लोहमास्वादयति मृत्यवे ॥
द्विरेफो गन्धलोभेन कमले याति बन्धनम् ।
एकैकशो विनिघ्नन्ति विषया विषसन्निभाः ॥
क्षयी तु स कथं न स्याद्युगपत्पञ्च सेवते ।
सेवेत विषयान्काले मुक्त्वा तत्परतां वशी ॥
सुखं हि फलमर्थस्य तन्निरोधे वृथा श्रियः ।
धर्मादर्थोऽर्थतः कामः कामात्सुखफलोदयः ॥
आत्मानं हन्ति तौ हत्वा युक्त्या यो न निषेवते ।
सकामासक्तमनसां कान्तामुखविलोकने ॥
गलन्ति गलिताश्रूणां यौवनेन सह श्रियः ।
नामापि स्त्रीति संह्लादि विकरोत्येव मानसम् ॥
किंपुनर्दर्शनं तस्या विलासोल्लसितभ्रुवः ।
रहःप्रचारकुशला मृदुगद्गदभाषिणी ॥
कं न नारी रमयति रक्तं रक्तान्तलोचना ।
मुनेरपि मनोवश्यं सरागं कुरुतेऽङ्गना ॥

तत्र कानिचिन्निन्दति—

मृगयाक्षास्तथा पानं गर्हितानि महीभुजाम् ।
दृष्टास्तेभ्यस्तु विपदः पाण्डुनैषधवृष्णिषु ॥
कामः क्रोधस्तथा मोहो लोभो मानो मदस्तथा ।
षड्वर्गमुत्सृजेदेनमस्मिन् त्यक्ते सुखी नृपः ॥
दंडक्यो नृपतिः कामात्क्रोधाच्च जनमेजयः ।
लोभादैलस्तु राजर्षिर्वातापी मोहतोऽसुरः ॥
पौलस्त्यो राक्षसो मानान्मदाद्दंभोद्भवो नृपः ।
प्रयाता निधनं ह्येते शत्रुषड्वर्गमाश्रिताः ॥
शत्रुषड्वर्गमुत्सृज्य जामदग्न्यो जितेन्द्रियः ।
अम्बरीषो महाभागो बुभुजाते चिरं महीम् ॥
वर्धयन्निह धर्मार्थौ सेवितौ सद्भिरादरात् ।
निगृहीतेन्द्रियग्रामः कुर्वीत गुरुसेवनम् ॥

शास्त्राय गुरुसंयोगः शास्त्रं विनयवृत्तये ।
विद्याविनीतो नृपतिः सतां भवति संमतः ॥
प्रेर्यमाणोऽप्यसद्वृत्तैर्नाकार्येषु प्रवर्तते ।
आददानः प्रतिदिनं कलाः सम्यक् महीपतिः ॥
जितेन्द्रियस्य नृपतेर्नीतिशास्त्रानुसारिणः ।
भवन्त्युज्वलिता लक्ष्म्यः कीर्तयश्च नभःस्पृशः ॥

तथा—इयं हि लोके व्यतिरेकवर्तिनी
स्वभावतः पार्थिवता समुद्धता ।
बलात्तदेनां विनये नियोजये-
न्नयस्य सिद्धौ विनयः पुरस्सरः ॥
गुरुस्तु विद्याधिगमाय सेव्यते
श्रुता च विद्या मतये महात्मनाम् ।
श्रुतानि पुण्यानि मतानि वेधसा-
मसंशयं साधु भवन्ति भूतये ॥

वेधसा पूर्वपुरुषाणाम् । विद्यानिरूपणं नीतिसारे—

आन्वीक्षिकी त्रयी वार्त्ता दंडनीतिश्च शाश्वती ।
विद्याश्चतस्र एवैता इति नो गुरुदर्शनम् ॥
आन्वीक्षिक्यात्मविज्ञानं धर्माधर्मौ त्रयीस्थितौ ।
अर्थानर्थौ तु वार्तायां दण्डनीतौ नयानयौ ॥

आन्वीक्षिक्यां तर्कशास्त्रवेदान्ताद्यन्तर्भावः, त्रय्यां मीमांसास्मृत्यादेः। तथा—

वर्णाः सर्वाश्रमाश्चैव विद्यास्वासु प्रतिष्ठिताः ।
ईक्षणाद्रक्षणात्तासां तद्धर्मस्यांशभाङ् नृपः ॥
आन्वीक्षिक्यात्मविद्या स्यादीक्षणात्सुखदुःखयोः ।
ईक्षमाणस्तथा तत्त्वं हर्षशोकौ व्युदस्यति ॥
ऋग्यजुःसामनामानस्त्रयो वेदास्त्रयी मता ।
उभौ लोकाववाप्नोति त्रय्यां तिष्ठन् यथाविधि ॥
अंगानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणं च त्रयीदं सर्वमुच्यते ॥
पाशुपाल्यं कृषिः पण्यं वार्तावार्तानुजीव्यपि ।
संपन्नो वार्तयासाधुर्न वृत्तेर्भयमृच्छति ॥

दमो दण्ड इति ख्यातस्तस्माद्दण्डेन्महीपतिः ।
तस्य नीतिर्दंडनीतिर्नयनान्नीतिरुच्यते ॥
तयात्मानं च शेषाश्च विद्याः पायान्महीपतिः ।
विद्या लोकोपकारिण्यस्तत्पाता हि महीपतिः ॥
अहिंसा सूनृता वाणी सत्यं शौचं दया क्षमा ।
वर्णिनां लिङ्गिनां चैव सामान्यो धर्म उच्यते ॥
स्वर्गानन्त्याय धर्मोऽयं सर्वेषां सर्वलिङ्गिनाम् ।
तथा—सर्वस्यास्य यथान्यायं भूपतिः संप्रवर्तकः ।
तस्याभावे धर्मनाशस्तदभावे जगच्च्युतिः ॥
वर्णाश्रमाचारयुक्तो वर्णाश्रमविभागवित् ।
पाता वर्णाश्रमाणां च पार्थिवः सर्वलोकभाक् ॥
तथा—आनृशंस्यं परो धर्मः सर्वप्राणभृतां यतः ।
तस्माद्राजानृशंस्येन पालयेत्कृपणं जनम् ॥
न हि स्वसुखमन्विच्छन् पीडयेत्कृपणं नृपः ।
कृपणः पीड्यमानो हि मन्युना हन्ति पार्थिवम् ॥
को हि नाम कुले जातः सुखलेशोपबृंहितः ।
अल्पसाराणि भूतानि पीडयेदविचारयन् ॥
आधिव्याधिपरीताय अद्य श्वो वा विनाशिने ।
को हि नाम शरीराय धर्मापेतं समाचरेत् ॥
तथा—स्वजनैः सज्जनं कुर्याद्धर्माय च सुखाय च ।
सेव्यमानस्तु स्वजनैर्महानतिविराजते ॥
हिमांशुमाली न तथा नचोत्फुल्लोत्पलं सरः ।
आनन्दयति चेतांसि यथा सज्जनवेष्टितः ॥
ग्रीष्मसूर्यांशुसंतप्तमुद्वेजनमनाश्रयम् ।
मरुस्थलमिवोदग्रं त्यजेदुर्जनसङ्गतम् ॥
निःश्वासोद्गीर्णहुतभुक् धूमधूम्रीकृताननैः ।
वरमाशीविषैः सङ्गं कुर्यान्नत्वेव दुर्जनैः ॥
क्रियतेऽभ्यर्हणीयाय स्वजनाय यथाञ्जलिः ।
ततः साधुतरः कार्यो दुर्जनाय हितार्थिना ॥
नित्यं मनोऽपहारिण्या वाचा प्रह्लादयेज्जगत् ।
उद्वेजयति भूतानि क्रूरवाक् धनदोऽपि सन् ॥

हृदि विद्ध इवात्यर्थं यथा संतप्यते जनः ।
पीडितोऽपि हि मेधावी न तां वाचमुदीरयेत् ॥
प्रियमेवाभिधातव्यं नित्यं सत्सु द्विषत्सु वा ।
शिखीव केकां मधुरां वाचं ब्रूते जनप्रियः ॥
मदरक्तस्य हंसस्य कोकिलस्य शिखण्डिनः ।
हरन्ति न तथा वाचो यथा साधु विपश्चिताम् ॥
ये प्रियाणि प्रभाषन्ते प्रियमिच्छन्ति तत्कृतम् ।
श्रीमन्तो वन्द्यचरिता देवास्ते नरविग्रहाः ॥

तथा—शुचिरास्तिक्यपूतात्मा पूजयेद्देवतां सदा ।
देवतावद्गुरुज नमात्मवच्च सुहृज्जनम् ॥
प्रणिपातेन हि गुरून् सतोऽनूचान चेष्टितैः ।
कुर्वीताभिमतान् भूत्यै देवान् सुकृतकर्मणा ॥

अनूचानः श्रोत्रियस्तस्य चेष्टितानि तत्क्रिया इत्यर्थः ।

सद्भावेन हरेन्मित्रं सद्भावेन च बान्धवान् ।
स्त्रीभृत्यान् प्रेममानाभ्यां दाक्षिण्येनेतरं जनम् ॥
प्राणैरप्युपकारित्वं मित्रायाव्यभिचारिणे ।
गृहागते परिष्वङ्गः शक्त्या दानं सहिष्णुता ॥
स्वसमृद्धिष्वनुत्सेकः परभद्रेष्वमत्सरः ।
बन्धुभिर्बन्धुसंयोगः स्वजने चतुरस्रता ॥
तच्चित्तानुविधायित्वमितिवृत्तं महात्मनाम् ।
अनेन गच्छन्नियतं महात्मनामिमं च
लोकं च परं च विन्दतीति ।

अन्यानपि गुणानाह याज्ञवल्क्यः—

महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः ।
विनीतः सत्वसंपन्नः कुलीनः सत्यवाक् शुचिः ॥
अदीर्घसूत्रः स्मृतिमान् अक्षुद्रोऽपरुषस्तथा ।
धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित् ॥
स्वरंध्रगोप्तान्वीक्षिक्यां दंडनीत्यां तथैव च ।
विनीतस्त्वर्थवार्तायां त्रय्यां चैव नराधिपः ॥

स्थूललक्षः, स्थूलं महत् लक्षमुद्देश्यमस्यासौ । कुलीनः, कन्यादान-

ग्रहणयोः सत्कुलसंबन्धेन कुलमर्यादारक्षणपरः । अदीर्घसूत्रः, कार्येषु त्वरावान् । स्मृतिमानविस्मरणशीलः । अक्षुद्रोऽदोषद्वेषी । अपरुषः, परदोषापकीर्तनः । अव्यसनः, व्यसनहीनः ।

व्यसनानि चाष्टादशाह मनुः—

मृगयाक्षा दिवास्वापः परिवादः स्त्रियो मदः ।
तौर्यत्रिकं वृथाट्या च कामजो दशको गणः ॥
पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् ।
वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥

तत्र सप्त कष्टतमान्याह मनुः—

पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम् ।
एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे ॥
दंडस्य पातनं चैव वाक्पारुष्यार्थदूषणे ।
क्रोधजेऽपि गणे विद्यात्कष्टमेतत्त्रिकं सदा ॥
सप्तकस्यास्य वर्गस्य सर्वत्रैवानुषङ्गिणः ।
पूर्वं पूर्वं गुरुतरं विद्याद्व्यसनमात्मनः ॥

परिवादः, परनिन्दा । वृथाट्या, वृथाटनम् । पैशुन्यमज्ञातपरदोषज्ञापनम् । साहसं, साधोर्बन्धनादिनिग्रहः । द्रोहश्छद्मवधः । ईर्ष्या, परगुणासहिष्णुता । परगुणेषु दोषाविष्करणमसूया । अर्थदूषणमर्थापहारो देयानामदानं च । वाक्पारुष्यम्, आक्रोशादि ।

मद्ये दोषाधिक्यमाह वराहमिहिरः—

पत्नीयत्यपि मातरं मदवशात्पत्नीं च मात्रीयति
श्वभ्रीयत्यपि मन्दिरं दृढशिलं कूपं च गेहीयति ।
स्वल्पं वार्युदधीयतीश्वरमयां मोहात्स्थलीयत्यपि
मित्रीयत्यपि विद्विषं किमपरं कुर्यान्न यन्मद्यपः ॥

नीतिसारे—

वमनं निर्गुणत्वं च संज्ञानाशो विवस्त्रता ।
असंबद्धप्रलापित्वमकस्माद्व्यसनं मुहुः ॥
सद्भिर्वियोगोऽसद्भिश्च संयोगोऽनर्थसंगमः ।
स्खलनं वेपथुस्तन्द्रा चिन्तान्तस्त्रीनिषेवणम् ॥

संकल्पेनैव स्त्रीसङ्गः । इत्यादिपानव्यसनमत्यन्तं सद्भिर्गर्हितम् ।

तथाश्रुतबलोपेताः पानदोषेण भूयसा ।
क्षयमक्षीणनामानो जग्मुरन्धकवृष्णयः ॥

एवं पाने वर्जितेऽपवादो योगयात्रायाम्—

अभ्यासनोत्सवभिषग्वचनोपदेशैः
कामं पिबेदमतिलोपकृदप्रकाशम् ।

तदेकनाश्यरोगादौ तद्वचनैरित्यर्थः ॥

द्यूते दोषानाह कामन्दकः—

लोभो धर्मक्रियालोपः कर्मणामप्रवर्तनम् ।
सत्समागमविच्छित्तिरसद्भिः सह वर्तनम् ॥
स्वल्पेऽप्यर्थे निराशित्वमसत्यपि च साशता ।
प्रतिक्षणं क्रोधहर्षौ विषादश्च प्रतिक्षणम् ॥
प्रतिक्षणं च संक्लेशः साक्षिप्रश्नः प्रतिक्षणम् ।
अन्यावाचोऽङ्गदौर्बल्यं शास्त्रार्थाप्रत्यवेक्षणम् ॥
गूहनं मूत्रशकृतोः क्षुत्पिपासोपपीडनम् ।
इत्यादीन् शास्त्रनिपुणा द्यूते दोषान् प्रचक्षते ॥
पाण्डवो धर्मराजस्तु लोकपाल इवापरः ।
द्यूतेन द्विषता विद्वान्कलत्राण्यपहारितः ॥
नलश्च राजा द्यूतेन हते राज्यमहोदये ।
धर्मदारान्वने त्यक्त्वा परकर्माकरोत्प्रभुः ॥
द्यूतादनर्थसंरंभो द्यूतात्स्नेहक्षयो महान् ।
पक्षाणां संहतानां च द्यूताद्भेदः प्रवर्तते ॥ इति ।

मृगयादोषा उक्ता नीतिसारे—

यानक्षोभो यानपातो यानाभिहरणं तथा ।
क्षुत्पिपासाश्रमायासशीतवातोष्णपीडनम् ॥
अभियानस्य संपत्त्या यानव्यसनजं महत् ।
दुःखं प्रतप्तसिकताकुशकंटकभूमयः ॥
ऋक्षाजगरमातङ्गसिंहव्याघ्रभयानि च ।
इत्यादिपृथिवीन्द्राणां मृगयाव्यसनं महदिति ॥

अन्येष्वपि व्यसनेषु लोकतो यथायथं दोषा ऊह्याः । विस्तरभयात्तु न ते सर्वे प्रपञ्चिताः ॥

गुणेषु केषांचिद्व्यवस्थामाह मनुः—

स्वराष्ट्रे न्यायवृत्तः स्याद्भृशं चंडश्च शत्रुषु ।
सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥

याज्ञवल्क्यः—

स्याद्राजा भृत्यवर्गे च प्रजासु च यथा पिता ।

अन्येऽपि गुणा उक्ता योगयात्रायाम्—

मेधावी मतिमानदीनवचनो दक्षः क्षमावानृजु-
धर्मात्माप्यनसूयको लघुकरः षाड्गुण्यविच्छक्तिमान् ।
उत्साही पररंध्रवित्कृतधृतिर्वृद्धिक्षयस्थानवि-
च्छूरो न व्यसनी स्मरत्युपकृतं वृद्धोपसेवी च यः ॥

तथा—

परीक्ष्यकारी न विकत्थनश्च दृढप्रतिज्ञोऽतिदृढप्रहारी ।
जितेन्द्रियः स्याज्जितकोपलोभनिद्रालसः स्थानपरिग्रहश्च ॥
त्यागी विनीतः प्रियदर्शनश्च व्यपेतमोहः प्रतिपत्तियुक्तः ।
देशस्य कालस्य च भागवेत्ता स्वयं च यः स्याद्व्यवहारदर्शी ॥
शब्दार्थविज्ञानपटुः प्रगल्भः
संग्रामविद्याकुशलोऽभिजातः ।
मिताभिभाषी मितसत्यवक्ता
दैवान्वितो यश्च स धाम लक्ष्म्याः ॥

त्यागीत्युक्तं तत्र पात्रे दातव्यमपात्रे दातुरनिष्टमुक्तं मिहिरेण—

गुणैः समस्तैरपि संप्रयुक्ता कन्येव पित्रा विगुणाय दत्ता ।
करोत्यकीर्तिं सुखवित्तहानिं शास्त्रेतरज्ञानजडाय दातुः ॥

अपात्रेऽपि कचिद्दानमुक्तं भारते—

यो ज्ञातिमनुगृह्णाति दरिद्रं दीनमातुरम् ।
स पुत्रभृत्यवृद्धिं च श्रेयश्चानन्त्यमश्नुते ॥
ज्ञातयो वर्द्धनीयास्तैर्य इच्छन्त्यात्मनः शुभम् ।
विगुणाश्चापि संरक्ष्या ज्ञातयो भरतर्षभ ॥
किंपुनर्गुणवन्तस्ते त्वत्प्रसादाभिकांक्षिणः ।
ज्ञातिभिर्विग्रहस्तात न कर्तव्यो भवार्थिना इति ॥

## राजकृत्यम्

तस्य कृत्यमुक्तं मिहिरेण—

विचिन्त्य कार्याणि निशावसाने
द्विषत्सुहृन्मण्डलसंश्रितानाम् ।
बलार्थदेशेषु नियोजितानां
समाश्रितानां च कृताकृतानि ॥

तथा—

सवेणुवीणापटहस्वनेन
गीतेन पूर्वं व्यपनीतनिद्रः ।
शय्यां त्यजेत्तूर्यरवावसाने शृण्वन्
गिरो मङ्गलपाठकानाम् ॥

तदुत्तरमाचारमयूखोक्तप्रकारेण शौचदन्तधावने कुर्यात् । तत्र दन्तधावनत्यागे परीक्षोक्ता योगयात्रायाम्—

अभिमुखपतितं प्रशान्तदिक्स्थं
शुभमतिशोभनमूर्ध्वसंस्थितं च ।
अशुभकरमतोऽन्यथा प्रदिष्टं
स्थितपतितं च करोति मिष्टमन्नम् ॥

श्मश्रुकर्मणि विशेषः—

राज्ञः कार्यं पञ्चमे पञ्चमेऽन्हि
क्षौरर्क्षे वा श्मश्रु तस्योदये वा ।
त्यक्त्वा ताराः सप्त पञ्च त्रिपूर्वा
यात्राकाले नैव कार्यं न युद्धे ॥

ततश्च पञ्चाङ्गादिश्रवणमुक्तम्—

श्रुत्वा तिथिं भग्रहवासरं च
प्राप्नोति धर्मार्थयशांसि सौख्यम् ।
आरोग्यमायुर्विजयं शुभं च
दुःस्वप्ननाशं च तथा विदध्यात् ॥

आयुर्जनकं विजयार्थं दुःस्वप्ननाशकं च कर्म कुर्यादित्यर्थः—दुःस्वप्नाश्चाचारमयूख उक्ताः । तच्छान्तयः शान्तिमयूखे वक्ष्यन्ते ॥

ततः कृत्यम्—

प्रणम्य देवांश्च गुरूंश्च पूर्वं दत्त्वा च गां वत्सयुतां द्विजाय ।

दृष्ट्वा मुखं सर्पिषि दर्पणे च सर्पिश्च दद्यात्सहिरण्यमेवम् ॥

ततश्च पर्वादौ भूदानं निबन्धादिदानं च कुर्यादित्याह याज्ञवल्क्यः—

दत्त्वा भूमिनिबन्धं वा कृत्वा लेख्यं च कारयेत् ।
आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ॥

निबन्धो, वृत्तिः । भद्रो, धार्मिकः । लेख्यप्रकारमपि स एवाह—

पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् ।
अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ॥
प्रीतिग्रहपरीमाणं दानच्छेदोपवर्णनम् ।
स्वहस्तकालसंपन्नं शासनं कारयेत्स्थिरम् ॥

प्रतिगृह्यत इति प्रतिग्रहो भूनिबंधादि तस्य परिमाणम् । दानं दीयमानक्षेत्रादि तस्य छेदो मर्यादा । स्वहस्तेन स्वहस्तलिखितेन, कालेन च शकवर्षमासपक्षदिनरूपेण कारयेत्सन्धिविग्रहादिकारिणा—

सन्धिविग्रहकारी तु भवेद्यस्तस्य लेखकः ।
स्वयं राज्ञा समादिष्टः स लिखेद्राजशासनम् ' इतिस्मरणात ॥

तथा—

प्रेषयेच्च तथाचारान्स्वेष्वन्येषु च सादरम् ।
ऋत्विक्पुरोहिताचार्यैराशीर्भिरभिनन्दितः ॥
दृष्ट्वा ज्योतिर्विदो वैद्यान् दद्याद्गां काञ्चनं महीम् ।
नैवेशिकानि च तथा श्रोत्रियाणां गृहाणि च ॥

नैवेशिकानि विवाहोपयोगीनि ।

ततश्च सभां प्रविशेदित्युक्तं मिहिरेण—

स्मितप्रसन्नप्रथमाभिभाषितैः
प्रसाददृष्ट्या करसंग्रहैश्च ।
यथानुकूलं हृदयान्यपि द्विषां
प्रसादयन् धर्मसभां समाश्रयेत् ॥

सभाप्रवेशनानन्तरमाह मनुः—

तत्र स्थितः प्रजाः सर्वाः प्रतिनन्द्य विसर्जयेत् ।
विसृज्य च प्रजाः सर्वा मन्त्रयेत्सह मन्त्रिभिः ॥

तत्र दण्डयान् दण्डयेदित्याह वराहमिहिरः—

क्षमान्वितोऽस्मीति विचिन्त्य चैवं
दण्ड्येषु दण्डक्षमणं न धर्मः ।

दण्डप्रभावो हि स दुर्जनस्य
हस्तेन यो जीवति जीववर्गः ॥
सुतरामभिवर्द्धतेऽभिमानो
नीचानां क्षमयान्विते नृपे च ।
अत उग्रतरेण ते निवर्त्या
येनान्येऽपि खलास्तथा न भूयः ॥
यस्मिन् गृहीते सदृशापराधो
महाजनस्त्रासमुपैति तस्मिन् ।
दण्डो निपात्यो मनुजेश्वरेण
कालान्तरेऽन्यद्व्यपदिश्य कार्यम् ॥

दण्डाकरणे चानिष्टम् । यथोक्तम्—

द्विरद इव मदेन विप्रयुक्तो
विषरहितो भुजगो व्यसिश्च कोशः ।
परिभवमुपयाति नापराधे
यदि मनुजाधिपतिः करोति दण्डम् ॥

दण्डश्च योग्य एव कार्य इत्युक्तं योगयात्रायाम्—

एकेऽस्य तुल्योदरपाणिपादा-
दण्डाय भीताः प्रणमन्ति मर्त्याः ।
अत्युग्रदण्डादपि चोद्विजन्ते
दण्डोऽपराधप्रतिमः शिवाय ॥

केषांचिच्च पञ्चयज्ञवदावश्यकत्वमुक्तं मिहिरेण—

दुष्टस्य दण्डः सुजनस्य पूजा
न्यायेन कोशस्य च संप्रवृद्धिः ।
अपक्षपातोऽर्थिषु राष्ट्ररक्षा
पञ्चैव यज्ञाः कथिता नृपाणाम् ॥

मनुः—

कन्यानां संप्रदानं च कुमाराणां च रक्षणम् ।
दूतसंप्रेषणं चैव कार्यशेषं तथैव च ॥
अन्तःपुरप्रचारं च प्रणिधीनां च चेष्टितम् ।
कृत्स्नं चाष्टविधं कर्म पञ्चवर्गं च तत्वतः ॥
अनुरागापरागौ च प्रचारं मण्डलस्य च ।

अष्टविधं कर्म प्रचेता आह—

आदाने च विसर्गे च तथा प्रैषनिषेधयोः ।
पञ्चमे चानुवचने व्यवहारस्य चेक्षणे ॥
दण्डशुद्ध्योः समायुक्तस्तेनाष्टगतिको नृपः ।

शुद्धिः प्रायश्चित्तम् । पञ्चवर्गः—

सहायाः साधनोपाया विभागो देशकालयोः ।
विनिपातप्रतीकारः सिद्धिः पञ्चांगमिष्यते ॥

मनुः—

उपेतारमुपायं च सर्वोपायाश्च कृत्स्नशः ।
एतत्त्रयं समाश्रित्य प्रयतेतात्मसिद्धये ॥

ततश्च भोजनमुक्तं योगयात्रायाम्—

श्रान्तश्च तस्मिन्विनियुज्य साधून्
संग्रामविद्यादिविभक्तकालः ।
सर्वाणि कार्याणि यथाक्रमेण
कृत्वा गृहं भोक्तुमथो विशेत्सः ॥

मनुरपि—

एवं सर्वमिदं राजा सह संमंत्र्य मन्त्रिभिः ।
व्यासज्याप्लुत्य मध्याह्ने भोक्तुमन्तःपुरं व्रजेत् ॥
विषघ्नैरगदैश्चास्य सर्वद्रव्याणि योजयेत् ।
विषघ्नानि च रत्नानि नियतो धारयेत्सदा ॥

भोजनमाह स एव—

तत्रात्मभूतैः कालज्ञै रक्षार्थं परिचारकैः ।
सुपरीक्षितमन्नाद्यं अद्यान्मन्त्रैर्विषापहैः ॥

कामन्दकोऽपि—

याने शय्यासने पाने भोज्ये वस्त्रे विभूषणे ।
सर्वत्रैवाप्रमत्तः स्याद्बुद्ध्येत विषदूषितम् ॥
विषघ्नैरुदकैः स्नातो विषघ्नमणिभूषितः ।
परीक्षितं समश्नीयाज्जाङ्गलीविद्भिषग्वृतः ॥

जाङ्गली आरण्यवृश्चिकादिविषं तद्वित् तत्परिहारविदित्यर्थः । तत्र भोजनसमये विषदिग्धान्नपरीक्षार्थं पक्षिणः स्थाप्याः । तेषां च चेष्टया विषं ज्ञेयम् ।

यथोक्तं नीतिसारे—

भृङ्गराजः शुकश्चैव सारिका चेति पक्षिणः ।
क्रोशन्ति भृशमुद्विग्ना विषपन्नगदर्शनात् ॥
चकोरस्य विरज्येते नयने विषदर्शनात् ।

विरज्येते निमीलिते भवतः ।

व्यक्तं च माद्यति क्रौञ्चो म्रियते मत्तकोकिलः ।
जीवंजीवस्य च ग्लानिर्जायते विषदर्शनात् ॥

ग्लानी रोगावृतता ।

एषामन्यतमेनापि समश्नीयात्परीक्षितं ।

परीक्षामाह कामन्दकः—

भोज्यमन्नं परीक्षार्थं प्रदद्यात्पूर्वमग्नये ।
वयोभ्यश्च ततो दद्यात्तत्र लिङ्गानि लक्षयेत् ॥

अग्निमध्ये क्षिपेदित्यर्थः ।

धूमार्चिर्नीलता वह्नेः शब्दस्फोटश्च जायते ।
अन्नेन विषदग्धेन वयसां मरणं भवेत् ॥

द्रव्यविशेषेण परीक्षामाह स एव—

रसस्य नीला पयसश्च ताम्रा
मद्यस्य तोयस्य च कोकिलाभा ।
श्यामा च दध्नो विषदूषितस्य
वह्नौ भवत्यूर्ध्वगता च लेखा ॥

विषदिग्धवस्त्रपरीक्षोक्ता नीतिसारे—

प्रावाराभरणानां च श्याममण्डलकीर्णता ।
तन्तूलीपक्ष्मणां लोम्नां स्याद्भ्रंशश्च विषाश्रयात् ।

ऊर्णावस्त्राणां लोम्नां भ्रंशः स्यादित्यर्थः । विषदायिनां च पुरुषाणां लक्षणमुक्तं नारदेन—

मुखस्य श्यामवर्णत्वं त्वग्भेदो जृंभणं मुहुः ।
स्खलनं वेपथुः स्वेद आवेशो दिग्विलोकनम् ॥
स्वकर्मणि स्वभूमौ स्यादनवस्थानमेव च ।
लिंगान्येतानि निपुणं लक्षयेद्विषदायिनामिति ॥

गृहे सर्पाद्युपद्रवनिरासार्थमुपायमाह कामन्दकः—

मयूरपृषतोत्सङ्गे न भवन्ति भुजङ्गमाः ।

तस्मान्मयूरपृषतान् भवने नित्यमुत्सृजेत् ।।
शयनस्य गृहे तद्वन्नकुलं स्थापयेन्नृपः ' इति ।

इति विषपरीक्षा ।

---

पूर्वं परीक्षितमन्नमनेकविधं भक्ष्यभोज्यादिकमाचारमयूखोक्तरीत्या भुञ्जीत । तत्र च मक्षिकानिवारणार्थं व्यजनार्थं च स्त्रीभिः स्पर्शमनुजानाति मनुः—

परीक्षिताः स्त्रियश्चैव व्यजनोदकधूपनैः ।
वेषाभरणसंयुक्ताः संस्पृशेयुः समाहिताः ।।
एवं प्रयत्नं कुर्वीत पानशय्यासनाशने ।
स्नाने प्रसाधने चैव सर्वालंकारकेषु च ।।

इति भोजनम् ।

---

मनुः—

भुक्त्वान्विहरेच्चैव स्त्रीभिरन्तःपुरे सह ।
विहृत्य च यथाकामं पुनः कार्याणि चिन्तयेत् ।।
अलंकृतश्च संपश्येदायुधीयं पृथग्जनम् ।
वाहनानि च सर्वाणि वस्त्राण्याभरणानि च ।।

ततः पुनः प्रसाधनादि कार्यम् ।

प्रसाधनादि···यत्किंचित्परिचारकाः ।
उपनिन्युर्नरेन्द्राय सुपरीक्षितमुद्रितम् ।।
परस्परागतं यच्च तच्च सर्वं परीक्षयेत् ।
सदा स्वेभ्यः परेभ्यश्च रक्षेद्राजा सुरक्षितः ।।

अनन्तरं च मृगयाद्यर्थं यानाद्यारोहेदिति कामन्दकः—

यानं वाहनमारोहेज्ज्ञातं यात्रोपपादितम् ।
अविज्ञातेन न तथा संकटेन न संव्रजेत् ।।

ज्ञातमन्यैः परीक्षितम् । यात्रोपपादितं तत्तद्यात्रायां योग्यम् । यथा व्याघ्रादिमृगयायां हस्त्यादि । तदा च खड्गाद्यपि बिभृयात् ।

तत्र खड्गलक्षणं योगयात्रायाम्—

अङ्गुलशतार्द्धमुत्तम ऊनः स्यात्पञ्चविंशतिः खड्गः ।
अङ्गुलमानाज्ज्ञेयः समाङ्गुलस्थोऽव्रणः शुभदः ।।

केचन व्रणाः शुभदा इत्युक्तम्—

श्रीवृक्षवर्द्धमानातपत्रशिवलिङ्गकुण्डलाब्जानाम् ।
एते व्रणाः प्रशस्ता अध्वायुधस्वस्तिकानां च ॥

व्रणानामशुभत्वं तत्रैव—

कृकलासकाककङ्कसक्रव्याद्कबन्धवृश्चिकाकृतयः ।
खड्गे व्रणा न शुभदा वंशानुगताः प्रभूताश्च इति ॥

तदाकारस्तत्रैव—

गोजिह्वासंस्थानो नीलोत्पलवंशसदृशश्च ।
करवीरपत्रसदृशश्चण्डकरो मण्डलाग्रः प्रशस्तश्च ॥

मण्डलाग्रः खड्गः । तथा—

नाकारणं विवृणुयान्न विघट्टयेच्च
पश्येन्न तत्र वदनं न वदेच्च मूल्यम् ।
देशं न चास्य कथयेत्प्रतिमानयेच्च
नैव स्पृशेन्नृपतिरप्रयतोऽसियष्टिम् ॥

प्रतिमानयेत्पूजयेत् । अप्रयतोऽशुचिः । खड्गादिसंस्कारमाह वराहमिहिरः—

आर्कं पयो हुडविषाणमषीसमेतं
पारावताकुशकृताच युतप्रलेपः(?) ।
शस्त्रस्य तैलमथितस्य ततोऽस्य पानं
पश्चात्स्थितस्य न शिलासु भवेद्विघातः ॥
क्षारे कदल्या मथितेन युक्ते
दिनोषिते पायितमायुधं यत् ।
सम्यक्स्थितं चाश्मनि नैति भङ्गं
न चान्यलोहेष्वपि तस्य कौण्ठ्यम् ॥

इति खड्गलक्षणम् ।

---

## अथ मृगया ।

अश्वादिलक्षणानि बलनिरूपणे वक्ष्यामः ।

सा त्रिविधा । जलस्थलान्तरिक्षभेदात् । सा च यद्यपि पूर्वं व्यसनमध्ये परिगणिता तथापि 'अन्यकार्याविरोधेन कुर्यादाखेटकं नृपः' इत्यादिवचनादत्यनासक्तेन कार्या । अस्यां च गुणोऽप्युक्तः कालिदासेन—

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।
उत्कर्षः स च धन्विनां यदिषवः सिद्ध्यन्ति लक्ष्ये चले
मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥

कामन्दकोऽपि—

आमादयो हि जीर्यन्ते सा योग्यैव दिवानिशम् ।
चरेषु यत्र लक्ष्येषु बाणसिद्धिश्च जायते इति ॥

तत्र जलमृगयामाह कामन्दकः—

परितापिषु वासरेषु पश्यन्
तटलेखास्थितमाप्तसैन्यचक्रम् ।
सुविशोधितनक्रमीनजालं
व्यवगाहेत जले सुहृत्समेतः ॥

तथा—अधार्मिकांश्च क्रूरांश्च दुष्टदोषान्निराकृतान् ।
परेभ्योऽभ्यागतांश्चैव दूरेणैव समाचरेत् ॥

तथा—महावातसमुद्भूतामपरीक्षितनाविकाम् ।
अन्यनौप्रतिबद्धां वा लोपयेन्नावमातुराम् ॥

लोपयेन्नाङ्गीकुर्यादित्यर्थः ।

तत्र च—

जालैश्च बडिशैश्चैव शक्तिभिः कंटकैस्तथा ।
मत्स्यकच्छपराजीवान् हन्याद्विगतसंभ्रमः ॥

इति जलमृगया ।

---

स्थलमृगयामाह चाणक्यः—

सुपरीक्षितरक्षितां तु सीम्नो
लघुयानस्तु मृगाटवीमुपेयात् । इति ।

कामन्दकोऽपि—

अथ चेन्मृगयाक्रीडां वांछेत्तन्नगरान्तिके ।
कारयेन्मृगयारण्यं क्रीडाहेतोर्मनोरमम् ॥
अकण्टकलतागुल्मं विषपादपवर्जितम् ।
शोधितग्राहसलिलं सुगंभीरजलाशयम् ॥
नानापुष्पसमाकीर्णं हस्तिनीकलभान्वितम् ।
अगम्यं रिपुसैन्यानां मनःप्रीतिविवर्द्धनम् ॥

तद्वनेचरचित्तज्ञैः क्लेशायाससहैर्दृढैः ।
मृगयां रक्षिभिः स्वाप्तैः प्रक्रीडेद्धीरमानसः ॥

वनेचरा मृगादयस्तेषां क्रोधभयाविष्टं चित्तं जानन्ति ।

तत्कर्मा तु नरेन्द्रस्य जनो जितपरिश्रमः ।
क्रीडनायास्य विविधा मृगजातीः प्रवेशयेत् ॥
यदा च प्रविशेद्राजा क्रीडनार्थं तथा बहिः ।
सन्नद्धं यन्नतस्तिष्ठेत्सैन्यं दूरान्तगोचरम् ॥
विधिरेवं समादिष्टो मृगयाक्रीडने वरः ।
न गच्छेदन्यथा राजा मृगयां मृगयुर्यथा ॥

लुब्धकवदेकाकी न गच्छेदित्यर्थः । एवमनासक्तः श्येनादिक्रूरपक्षिभिरन्तरिक्षमृगयामपि कुर्यात् ।

इति मृगयानिरूपणम् ।

---

## सायंकृत्यम् ।

ततो गृहमागत्य सायंकृत्यं कार्यमित्याह मनुः—

सन्ध्यां चोपास्य शृणुयादन्तर्वेश्मनि शस्त्रभृत् ।
रहस्याख्यायिनां चैव प्रणिधीनां च चेष्टितम् ॥
गत्वा कक्ष्यान्तरं सम्यक् समनुज्ञाप्य तं जनम् ।
प्रविशेद्भोजनार्थं तु स्त्रीभिरन्तःपुरं पुनः ॥
तत्र भुक्त्वा पुनः किंचित्तूर्यघोषैः प्रहर्षितः ।

संविशेच्च यथाकालम्, इति ।

विविक्ते च मन्त्रं कुर्यादित्याह मनुः—

सर्वेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता ।
मन्त्रयीत परं मन्त्रं राजा षाड्गुण्यसंयुतम् ॥
अन्यानपि प्रकुर्वीत शुचीन् प्राज्ञानवस्थितान् ।
सम्यगर्थसमाहर्तॄन् सामान्यान्सुपरीक्षितान् ॥
निवर्तेतास्य यावद्भिरितिकर्तव्यता नृभिः ।
तावतोऽन्तर्हितान् दक्षान् प्रकुर्वीत विचक्षणान् ॥
तेषां मध्ये नियुञ्जीत शूरान् दक्षान् कुलोद्गतान् ।
शुचीनाकरकर्मान्ते भीरूनन्तर्निवेशने ॥

आकराः सुवर्णाद्युत्पत्तिस्थानानि । कर्मान्ते धान्यादिसंग्रहस्थाने । अन्तर्निवेशने शयनादिगृहे भीरून्, शूरा हि तत्रैकान्ते कदाचिद्राजानं निहन्युः ।

अध्यक्षान् विविधान् कुर्यात्तत्र तत्र विपश्चितः ।

तत्र तत्र हस्त्यश्वादौ ।

दूतं चैव प्रकुर्वीत सर्वशास्त्रविशारदम् ।
इङ्गिताकारचेष्टज्ञं शुचिं दक्षं कुलोद्गतम् ॥
अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित् ।
वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते ॥

पूर्वश्लोकोक्तयोः शुचिदक्षत्वयोरत्र पुनरुक्तिः प्रशंसार्था । तत्रैव विविक्ते शस्त्रधरश्चारादीनामशस्त्रधराणां वाक्यानि शृणुयात् ।

तदुक्तम्—

तत्र शस्त्राणि धार्याणि चाराणां भेदशंकया इति ।

तत्र सर्वदा राजसमीपवर्तिनां सेवकानां लक्षणमाह कामन्दकः—

भर्तुरर्द्धासने दृष्टिं मुहूर्तान्यत्र निक्षिपेत् ।
कोऽत्रेत्यहमिति ब्रूयात् सम्यगाज्ञापयेति च ॥
आज्ञां चावितथां कुर्याद्यथाशक्त्यविलंबितम् ।
उच्चैः प्रहसनं कासं ष्ठीवनं कुत्सनं तथा ॥
जृंभणं गात्रभङ्गं च पर्वास्फोटं च वर्जयेत् ।
प्रविश्य सानुरागस्य चित्तज्ञस्य च संमतः ॥
समर्थयंश्च सत्पक्षं साधु भाषेत भाषिते ।
तन्नियोगेन वा ब्रूयादर्थं सुपरिनिश्चितम् ॥
सुखप्रबन्धगोष्ठीषु विवादे वादिनां मतः ।
विजानन्नपि न ब्रूयाद्भर्तुः क्षिप्तोत्तरं वचः ॥
प्रवीणोऽपि च मेधावी वर्जयेदभिमानिताम् ।
यदप्युच्चैर्विजानीयान्नीचैस्तदपि कीर्तयेत् ॥
कर्मणां तस्य वैशिष्ट्यं कथयेद्विनयान्वितः ।
आपद्युन्मार्गगमने कार्यकालात्ययेषु च ॥
अपृष्टोऽपि हि नान्वेषी ब्रूयात्कल्याणभाषितम् ।
प्रियं तथ्यं च च पथ्यं च वदेद्धर्मार्थमेव च ॥
परार्थं देशकालज्ञो देशे काले च साधयेत् ।

संतोषाद्यवसरे परोपकारमपि कुर्यादित्यर्थः ।

तथा—अपि स्थाणुवदासीत शुष्यन्परिगतः क्षुधा ।
नत्वेवानर्थसंपन्नाद्वृत्तिमीहेत पण्डितः ॥

तथा—गुह्यं कर्म च मन्त्रं च न भर्तुः संप्रकाशयेत् ।
विद्वेषं च विनाशं च मनसापि न चिन्तयेत् ॥
स्त्रीभिस्तद्दर्शिभिः पापैर्वैरिभूतैर्निराकृतैः ।
एकार्थचर्यां साहित्यं संसर्गं च विवर्जयेत् ॥
वेषभावानुकरणं न कुर्यात्पृथिवीपतेः ।
संपन्नोऽपि च मेधावी स्पर्द्धेत न च तद्गुणैः ॥
रागापरागौ जानीयाद्भर्तुः कुशलकर्मवित् ।
इङ्गिताकारचेष्टाभ्यस्तदभिप्रायवित्तथा ॥
तदर्थां तत्कृतां वोच्चैराकर्णयति तत्कथाम् ।
श्लाघते श्लाघनीयेषु श्लाघमानं च नन्दति ॥

राज्ञा कस्य चित्स्तुतौ क्रियमाणायां स्वयमप्यभिनन्दनं कार्यमित्यर्थः ।

कथान्तराणि स्मरति प्रकृष्टान्कीर्तयेद्गुणान् ।
निर्गुणं ह्यपि भर्तारमापत्सु न परित्यजेत् ॥

भारते—

अग्निं दीप्तमिवासीदेद्राजानमुपशिक्षितः ।
आशीविषमिव क्रुद्धं प्रभुं प्राणधनेश्वरम् ॥
यत्नेनोपचरेन्नित्यं नाहमस्मीति चिन्तयेदिति ।

राजा स्निह्यतीति मत्वा नावगणनीयः । किंतु यथा सर्पे सावधानता तथा प्रभौ कार्येत्यर्थः ।

ततः परतरो नास्ति य आपत्सूपतिष्ठते ।
स्वस्थवृत्तेषु सत्वाद्या नैव यान्त्यभिलक्ष्यताम् ॥
विपत्सु धर्मधुर्याणां तेषां नामातिरिच्यते ।
श्लाघ्या चानन्दनी चैव महतामुपकारिता ॥
काले कल्याणमाधत्ते स्वल्पापि सुमहोदयम् ।
जयाज्ञापय जीवेति नाथ देवेति चादरात् ॥
रक्षांस्यपि हि गृह्यन्ते नित्यं छन्दानुवृत्तिभिः ।
धीसत्वोद्योगयुक्तानां किं दुरापं महात्मनाम् ॥
छन्दानुवर्तिनां लोके कः परः प्रियवादिनाम् ।

अलसस्याल्पदोषस्य निर्विद्यस्याकृतात्मनः ॥
प्रदानकाले भवति मातापि हि पराङ्मुखी ।
ये शूरा ये च विद्वांसो ये च सेवाविपश्चितः ॥
तेषामेव विकाशिन्यो भोग्या नृपतिसंपदः ।
आजीव्यः सर्वभूतानां राजा पर्जन्यवद्भुवि ॥
अनाजीव्यं त्यजन्त्येनं शुष्कं वृक्षमिवाण्डजाः ।

चाणक्योऽपि—

सुवर्णपुष्पितां पृथ्वीं विचिन्वन्ति त्रयो जनाः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥

तथा—

कुलं वृत्तं तथा शौर्यं सर्वमेतन्न गण्यते ।
दुर्वृत्तेऽप्यकुलीनेऽपि जनो दातरि रज्यते ॥
इत्यादिसेवकलक्षणम् ।

---

## अथ स्वामिकृत्यं नीतिसारे

अपेक्ष्य हि नृपः कालं भृत्यानामनुजीविनाम् ।
कर्मणामानुरूप्येण वृत्तिं समनुकल्पयेत् ॥
स्थाने काले च पात्रे च नहि वृत्तिं विलोपयेत् ।
एतद्वृत्तिविलोपेन राजा भवति गर्हितः ॥
अपात्रवर्षणं जातु न कुर्यात्स विगर्हितम् ।
अपात्रवर्षणादन्यत्किं स्यात्कोशक्षयादृते ॥
कुलं विद्यां श्रुतं शौर्यं सौशील्यं भूतपूर्वताम् ।
वयोवस्थां च संप्रेक्ष्य आद्रियेत महात्मनः ॥
कुलीनान्नावमन्येत सम्यग्वृत्तान्मनस्विनः ।
त्यजन्त्येते च भर्तारं घ्नन्ति चामानहेतुना ॥
निरालोके हि लोकेऽस्मिन्नासते तत्र पण्डिताः ।
जात्यस्य हि मणेर्यत्र काचेन समता मता ॥
कृशोऽपि हि विवेकज्ञो याति संश्रयणीयताम् ।

यथा—

सर्वैर्गुणैर्विहीनोऽपि स राजा यः प्रतापवान् ।
प्रतापयुक्तात्रस्यन्ते परे सिंहान्मृगा इवेति ॥

विरक्तस्वामिलक्षणमुक्तं कामन्दकेन—

अकोपोऽपि सकोपाभः प्रसन्नश्चापि निष्फलः ।
वदत्यकस्माद्दुष्टेति रूक्षं च मुहुरीक्षते ॥
विज्ञाप्यमानो वृत्त्यर्थं सहसोत्थाय गच्छति ।
संभावयति दोषेण वृत्तिच्छेदं करोति च ॥
साधूक्तमपि तद्वाक्यं समर्थयति चान्यथा ।
आचक्षाणकथाभङ्गं करोति विरसीभवन् ॥
उपास्यमानः शयने सुप्तवत्तत्र तिष्ठति ।
यत्नेन बोध्यमानोऽपि सुप्तवच्च विचेष्टते ॥
इत्यादि ह्यनुरक्तस्य विरक्तस्य च लक्षणम् ।
रक्ताद्वृत्तिं समीहेत विरक्तं च परित्यजेदिति ॥

अत्र षाड्गुण्यसंयुतमिति मन्त्रविशेषणमुक्तं तानाह मनुः—

सन्धिं च विग्रहं चैव यानमासनमेव च ।
द्वैधीभावं संश्रयं च षाड्गुण्यं चिन्तयेत्सदा ॥

तत्र कामन्दकः सन्धिं निरूपयति—

बलीयसाभियुक्तस्तु नृपोऽनन्यप्रतिक्रियः ।
आपन्नः सन्धिमन्विच्छेत्कुर्वाणः कालयापनामिति ॥

तत्र नीतिसारे संधिर्यद्यप्यनेकविधस्तथाप्युपहारसन्धिमैत्रीसन्ध्योरेव प्राधान्यमुक्तम्—

एक एवोपहारस्तु सन्धिरेष मतो हि नः ।
उपहारस्य भेदास्तु सर्वेऽन्ये मैत्रवर्जिताः ॥
अभियोक्ता बलीयस्त्वादलब्ध्वा न निवर्तते ।
उपहारादृते यस्मात्सन्धिरन्यो न विद्यते ॥

मैत्रीसन्धिस्तु समयोरेव। क्वचिदन्यजयार्थं विषमयोरपि भवति । कन्यादानाद्युपकारसंधयस्त्वनयोरेवान्तर्भवन्ति । अतो न ते पृथक् निरूपिताः । अत्रासन्धेयानाह कामन्दकः—

बालो वृद्धो दीर्घरोगस्तथा ज्ञातिबहिष्कृतः ।
भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा ॥
विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिभाक् ।
दुर्भिक्षव्यसनोपेतो बलव्यसनसंकुलः ॥

अक्षेशस्थो बहुरिपुर्युक्तः कालेन यश्च न ।
एतैः सन्धिर्न कुर्वीत विगृह्णीयात्तु केवलम् ॥
एते विगृह्यमाणा हि क्षिप्रं यान्ति रिपोर्वशम् ।

तथा—

सन्धिः कार्योऽप्यनार्येण संप्राप्योत्सादयेद्धि सः ।
संघातवान्यथा वेणुर्निबिडैः कंटकैर्वृतः ॥
न शक्यते समुच्छेत्तुं भ्रातृसंघातवांस्तथा ।
बलिना सह योद्धव्यमिति नास्ति निदर्शनम् ॥
प्रतिवातं हि न घनः कदाचिदुपसर्पति ।
बलीयसि प्रणमतां काले विक्रमतामपि ॥
संपदो न विसर्पन्ति प्रतीपमिव निम्नगाः ।
राजा न गच्छेद्विश्वासं सन्धितोऽपि हि बुद्धिमान् ॥
अद्रोहसमयं कृत्वा वृत्रमिन्द्रः पुरावधीदिति ।

इतिसन्धिः

---

अथ विग्रह उक्तो नीतिसारे—

आत्मनोभ्युदयाकांक्षी पीड्यमानः परेण वा ।
देशकालबलोपेतः प्रारभेतेह विग्रहम् ॥

तत्र विग्रहकरणान्याह कामन्दकः—

राज्यस्त्रीस्थानदेशानां पानस्य च धनस्य च ।
अपहारो मदो मानः पीडा वैषयिकी तथा ॥

वैषयिकी देशसंबन्धिनी ।

मित्रार्थं चापमानश्च तथा बन्धुविनाशनम् ।
भूतानुग्रहविच्छेदस्तथा मण्डलदूषणम् ॥
एकार्थाभिनिवेशित्वमिति विग्रहयोनयः ।

कर्तव्याकर्तव्यविग्रहावाह स एव—

तदात्वफलसंयुक्तमायत्यां फलवर्जितम् ।
आयत्यां फलसंयुक्तं तदात्वे विफलं स्मृतम् ॥

उभयोः फलवानुत्तमः । एवं त्रैविध्यम् । उभयमपि मध्यमम् । यस्तु तदात्वायत्योरफलः सोऽधमः । विग्रहशमनं चावश्यं कुर्यादित्याह स एव—

कुर्यादर्थपरित्यागं एकार्थाभिनिवेशने ।
धनापचारे जाते तु विरोधं न समाचरेत् ॥
कदाचिद्विग्रहे पुंसां सर्वनाशस्तु जायते ।
सर्वोपायैरतो राजा विग्रहं न समाचरेत् ॥
उपायान्तरनाशे तु स्वन्तं विग्रहमाचरेदिति ॥

इति विग्रहः

यानमाह कामन्दकः—

गुणानुरागप्रकृतेर्यात्रा यानमिति स्मृतमिति ।

तत्कालं मनुराह—

मार्गशीर्षे शुभे मासे यायाद्यात्रां महीपतिः ।
फाल्गुने वाथ चैत्रे वा मासं प्रति यथाबलम् ॥
अन्येष्वपि च मासेषु यदा पश्येद्ध्रुवं जयम् ।
तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः ॥

वर्षादिष्वपीत्यर्थः । मिहिरोऽपि—

यात्रा नृपस्य शरदीष्टफला मधौ च
छिद्रं रिपोर्न नियमोऽस्ति तु केचिदाहुरिति ।

तद्भेदा उक्ता नीतिसारे—

विगृह्य संधाय तथा संभूयाथ प्रसंगतः ।
उपेक्षया च निपुणैर्यानं पञ्चविधं स्मृतम् ॥
विगृह्य याति हि यदा सर्वान् शत्रोर्गणान्बलात् ।
विगृह्य यानं यानज्ञास्तदाचार्याः प्रचक्षते ॥
अरिमित्राणि सर्वाणि स्वमित्रैः सर्वतो बलात् ।
विगृह्य चारिभिर्गन्तुं विगृह्य गमनं स्मृतम् ॥
संधायान्यत्र या यात्रा पार्ष्णिग्राहेण शत्रुणा ।
संधाय गमनं प्रोक्तं तज्जिगीषोः फलार्थिनः ॥
एकीभूय यदैकत्र सामंतैः सांपरायिकैः ।
शक्तिशौर्ययुतैर्यानं संभूय गमनं हि तत् ॥
अन्यत्र प्रस्थितः सङ्गादन्यत्रैव च गच्छति ।
प्रसंगयानं तत्प्रोक्तमत्र शल्यो निदर्शनम् ॥
रिपुं यातस्य बलिनः संप्राप्याविकृतं फलम् ।

उपेक्ष्य तस्मिन्यद्यानमुपेक्षायानमुच्यते ॥
निवातकवचान्हित्वा हिरण्यपुरवासिनः ।
उपेक्षायानमास्थाय निजघान धनञ्जयः ॥ इति ।

यानं चाग्रे पुनर्निरूपयिष्यामः ।

इतियानम्

---

आसनमुक्तं नीतिसारे—

परस्परस्य सामार्थ्याद्विघातादासनं स्मृतमिति ।

तथा—

यदा दुर्गस्थितः शत्रुर्ग्रहीतुं नैव शक्यते ।
विगृह्यैनं तदासीतच्छित्वास्यासारवीवधान् ॥
विच्छिन्नवीवधासारं प्रक्षीणयवसेन्धनम् ।
विगृह्यमाणप्रकृतिं कालेनैव शमं नयेत् ॥
अरेश्च विजिगीषोश्च विग्रहे हीयमानयोः ।
सन्धाय यदवस्थानं संधायासनमुच्यते ॥

सर्वत्र च देशकालानुरोधेनासनं कार्यमिति ।

इत्यासनम्

---

द्वैधीभावोऽप्युक्तो नीतिसारे—

द्वैधीभावेन तिष्ठेत काकाक्षिवदलक्षित इति ।

तथा—

द्वैधीभावो द्विधा प्रोक्तः स्वतन्त्रपरतन्त्रयोः ।
स्वतन्त्र उक्तो ह्यन्यस्तु यः स्यादुभयवेतनः ॥

इतिद्वैधम्

---

आश्रय उक्तः कामन्दकेन—

उच्छिद्यमानो बलिना निरुपायप्रतिक्रियः ।
कुलोद्गतं सत्यमार्यमाश्रयेत बलोत्कटम् ॥
बुध्यैवोपक्रमः श्रेयान् फलनिष्पत्तये सदा ।
उपायेन पदं मूर्ध्नि न्यस्यते मत्तहस्तिनाम् ॥
अयोऽभेद्यमुपायेन द्रवतामुपनीयते ।

लोकप्रसिद्धमेवैतद्वारिवह्नेर्नियामकम् ॥
उपायोपगृहीतेन तेनैतत्परिशोष्यते ।

उपायः कटाहादिप्रक्षेपः । अतः सर्वमुपायेन कुर्यादित्यर्थः ।

मनुः—

यदि तत्रापि संपश्येद्दोषं संश्रयकारितम् ।
सुयुद्धमेव तत्रापि निर्वितर्कः समाश्रयेत् ॥

इत्याश्रयः

---

एवंविधं मन्त्रं मन्त्रिभिः षाड्गुण्यविदा ब्राह्मणेन च सह कुर्यात् ।

मनुः—

सर्वोपायैस्तथा कुर्यान्नीतिज्ञः पृथिवीपतिः ।
यथास्याभ्यधिका न स्युर्मित्रोदासीनशत्रव इति ॥

तान्द्वादशराजमण्डलोक्त्याह याज्ञवल्क्यः—

अरिर्मित्रमुदासीनोऽनन्तरस्तत्परः परः ।
क्रमशो मण्डलं चिन्त्यं सामादिभिरुपक्रमैः ॥

ते च त्रयस्त्रिविधाः। सहजाः कृत्रिमाः प्राकृताश्चेति । तत्र सहजोऽरिः सापत्नभ्रातृपितृव्यतत्पुत्रादिः । कृत्रिमो रिपुर्यस्यापकृतं येनापकृतं वा । प्राकृतश्चानन्तरदेशाधिपतिः । सहजं मित्रं भागिनेयपैतृष्वस्रीयमातृष्वस्रीयादि । कृत्रिमं मित्रम्, येनोपकृतं यस्य चोपकृतम् । प्राकृतं मित्रमेकान्तरितदेशाधिपतिः । सहजकृत्रिमशत्रुमित्रलक्षणरहितौ सहजकृत्रिमोदासीनौ । प्राकृतोदासीनो द्व्यन्तरदेशाधिपतिः । अरिः पुनश्चतुर्विधः । पातव्योच्छेत्तव्यपीडनीयकर्शनीयभेदेन । तत्र पातव्योऽनन्तरदेशाधिपतिः । व्यसनी हीनबलो रिक्तप्रकृतिः विदुर्गो मित्रहीनो दुर्बलश्चोच्छेत्तव्यः । पीडनीयो मन्त्रबलहीनः । प्रबलमन्त्रयुक्तः कर्शनीयः ।

तथा च राजमानसोल्लासे—

निर्मूलनाशमुच्छेदं पीडनं बलिनिग्रहम् ।
कर्शनं तु पुनः प्राहुः कोशदण्डापकर्शनादिति ॥

मित्रं च द्विविधम् । बृंहणीयं कर्शनीयमिति । कोशबलहीनं बृंहणीयम् । कोशबलाधिकं कर्शनीयम् । प्राकृतारिमित्रोदासीनानाह । अनन्तरस्तत्परः पर इति । अनन्तरः प्राकृतोऽरिस्तत्परः प्राकृतं मित्रम् । तस्मात्परः प्राकृत उदासीनः । शेषाः पुनः प्रसिद्धत्वान्नोक्ताः । एतद्राज-

मण्डलं क्रमशः पूर्वादिक्रमेण चिन्त्यम्, एवं चतुर्दिक्षु त्रयस्त्रय आत्मा चैक इति त्रयोदशराजकं मण्डलं पद्माकारम्। ये च पार्ष्णिग्राहादयस्तेऽप्यत्रैवान्तर्भवन्ति। सामादिभिरित्युक्तं तान्सामादीनुपायानाह याज्ञवल्क्यः—

उपायाः साम दानं च भेदो दण्डस्तथैव च।
सम्यक् प्रयुक्ताः सिद्ध्येयुर्दण्डस्त्वगतिकागतिः॥

भेदः शत्रुसामन्तादीनां परस्परं वैरोत्पादनम्। स एव—

स जेतुं न्यायतोऽशक्यो लुब्धेनाकृतबुद्धिना।
सत्यसंधेन शुचिना सुसहायेन धीमता॥
यथाशास्त्रं प्रयुक्तः स सदेवासुरमानुषम्।
जगदानन्दयेत्सर्वमन्यथा तु प्रकोपयेत्॥
अधर्मदण्डनं स्वर्गकीर्तिलोकविनाशनम्।
सम्यक्तु दण्डनं राज्ञः स्वर्गकीर्तिजयावहम्।

मनुः—

अदण्ड्यान्दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्।
अयशो महदाप्नोति नरकं चैव गच्छतीति॥

दण्डप्रकारं दण्ड्यादण्ड्यव्यवस्थां व्यवहारमयूखे दर्शयिष्यामः। एवं मन्त्रयित्वान्तःपुरं शोधयित्वा प्रविशेत्। यथोक्तम्—

कारयेद्भवनशोधनमादौ
मातुरन्तिकमपि प्रविविक्षुः।
आप्तशस्त्र्यनुगतश्च विशेन्न
संकटे च गहने च न तिष्ठेत्॥

तथा—

निर्गमे च प्रवेशे च राजा मार्गे समन्ततः।
प्रोत्सारितजनं गच्छेत्सम्यगाविष्कृतोन्नतिः॥
यात्रोत्सवसमाजे तु जलसंबाधशालिनः।
प्रदेशान्नावगाहेत नातिवेलं च संपतेत्॥
निषेवितो वर्षधरैः कंचुकोष्णीषशालिभिः।
अन्तःपुरे च विचरेत्कुब्जकैरातवामनैः॥
नीचैरन्तःपुरामात्याः शुचयश्चित्तवेदिनः।

शस्त्राग्निविषवर्जं हि नर्मयेयुर्महीपतिम् ॥

अन्तःपुरशोधनमाह कामन्दकः—

आशीतिकाश्च पुरुषाः पञ्चाशीत्यश्च योषितः ।
बुध्येरन्न च रोधानां शौचमागारिकाश्च ये ॥
अभ्यन्तरगतोऽपीह विश्वासं स्त्रीषु न व्रजेत् ।
देवीगृहगतं भ्राता भद्रसेनमहारयत् ॥
मातुः शय्यान्तरे लीनः कारूषं चौरसः सुतः ।
न हि देवीगृहं गच्छेदात्मीयात्संनिवेशनात् ॥

तथा स्त्रीणां चरितमुक्तं नीतिसारे—

विशेषेण तु संयोज्यमधुनेति विलोभितम् ।
देवी तु काशिराजेन्द्रं निजघान रहोगतम् ॥
विषाक्तेन च सौवीरं मेखलामणिना नृपम् ।
वेण्यां शस्त्रीं समादाय तथा चापि विदूरथम् ॥
इतिवृत्तं परिहरेन्नरांश्चापि प्रयोजयेत् ।
यस्य दाराः सुगुप्ताः स्युः पौरुषैराप्तकारिभिः ॥
सर्वलोकान्वितं तस्य हस्ते लोकद्वयं स्थितम् ।

एवं सावधानोन्तःपुरं प्रविशेत् ।

अथ भार्यागमनमुक्तं कामन्दकेन—

धर्ममिच्छन्नरपतिः सर्वान्दारानतुक्रमम् ।
गच्छेदनुनिशं नित्यं वाजीकरणबृंहितः ॥

वाजीकरणादिकं च कामशास्त्रादवगन्तव्यं विस्तृतिभयान्नेह निरूपितम् । नीतिसारे—

विचार्य कार्यावयवान् दिनक्षये
विसृज्य लोकं प्रमदाहृतक्रियः ।
सशस्त्रबन्धेन हि साधुपाणिना
स्वपित्यसक्तः परमाप्तरक्षितः ॥

तथा—नयेन जाग्रत्यनिशं नरेश्वरे
सुखं स्वपन्तीह निराधयः प्रजाः ।
प्रमत्तचित्ते सति जाग्रति प्रजाः
प्रजागरेणास्य जगत्प्रबाधते ॥ इति ।

एवं तिष्ठतः फलमाह वराहमिहिरः—

आचारस्थः सागरान्तां धरित्रीं
भुङ्क्ते दीर्घं कालमुत्खातशत्रुः ।
यत्राचारस्तत्र धर्मस्य वृद्धि-
र्धर्माद्भोगान्देहभेदेऽपि भुङ्क्ते ॥

भारते—

धृतिः शमो दमः शौचं कारुण्यं वागनिष्ठुरा ।
मित्राणां चानभिद्रोह एताश्च समिधः श्रियः ॥

समिधो, वर्द्धनानि ।

इति सपरिकरस्वामिनिरूपणम् ।

---

## अथामात्यः ।

तत्र पुत्रोऽप्यमात्यमध्ये परिगणितो नीतिसारे—

अमात्यो युवराजश्च भुजावेतौ महीपतेरिति ।

राजपुत्रस्य कृत्यमुक्तम्—

पितृसेवापरस्तिष्ठेत्कायवाङ्मानसैः सदा ।
तत्कर्म कुर्यान्नियतं येन तुष्टो भवेत्पिता ॥
तन्न कुर्याद्येन पिता मनागपि विषीदति ।

तथा—

यस्मिन् पितुर्भवेत्प्रीतिः स्वयं तस्मिन् प्रियं चरेत् ।
यस्मिन् द्वेषं पिता कुर्यात्स्वस्यापि द्वेष्य एव सः ॥
असंमतं विरुद्धं च पितुर्नैव समाचरेत् ।
प्राप्यापि युवराजत्वं प्राप्नुयाद्विकृतिं न च ॥
स्वसंपत्तिमदान्नैव मातरं पितरं तथा ।
भ्रातरं भगिनीं चापि अन्यान्वा राजवल्लभान् ॥
महाजनांस्तथा राष्ट्रे नाऽवमन्येन्न पीडयेत् ।
प्राप्यापि महतीं वृद्धिं वर्तेत पितुराज्ञया ॥
पुत्रस्य पितुराज्ञा हि परमं भूषणं स्मृतम् ।
सोदरेषु च सर्वेषु नाधिक्यं संप्रदर्शयेत् ॥
भ्रातृणामवमानेन बहवो हि विनाशिताः ।

पितुराज्ञोल्लंघनेन प्राप्यापि पदमुत्तमम् ॥
तस्माद्भ्रष्टा भवन्तीह दासवद्राजपुत्रकाः ।
एवं गृहाविरोधेन राजपुत्रो वसन् गृहे ॥
त्यागी च सत्वसंपन्नः सर्वान्कुर्याद्वशे स्वके ।
शनैः शनैः प्रवर्द्धेत शुक्लपक्षमृगाङ्कवत् ॥
एवंवृत्तो राजपुत्रो राज्यं प्राप्याप्यकण्टकम् ।
सहायवान् महामात्यो चिरं भुंक्ते वसुंधराम् ॥

एतच्च राजपुत्रे विशेषमात्रमुक्तम् । सामान्यास्तु पूर्वोक्ता वक्ष्यमाणाश्च गुणाः सर्वे अपेक्षिता एव । तेषां राजपुत्राणां रक्षणं प्रयत्नतः कुर्यादित्याह कामन्दकः—

प्रजार्थं श्रेयसे राजा कुर्वीतात्मजरक्षणम् ।
लोलुभ्यमानास्तेऽर्थेषु हन्युरेनमरक्षिताः ॥
राजपुत्रा मदोद्धूता गजा इव निरंकुशाः ।
भ्रातरं चाभिनिघ्नन्ति पितरं चाभिमानिनः ॥
राजपुत्रैर्मदोद्धूतैः प्रार्थ्यमानमितस्ततः ।
दुःखेन रक्ष्यते राज्यं व्याघ्राघ्रातमिवामिषम् ॥
रक्ष्यमाणा यदिच्छिद्रं कथंचित्प्राप्नुवन्ति ते ।
सिंहशावा इव घ्नन्ति रक्षितारमसंशयम् ॥
विनयोपग्रहान् भृत्यैः कुर्वीत नृपतिः सुतान् ।
अविनीतकुमारं हि कुलमाशु विनश्यति ॥
विनीतमौरसं पुत्रं यौवराज्येऽभ्यषेचयेत् ।
दुष्टं गजमिवोद्वृत्तं कुर्वीत सुखबन्धनम् ॥

तथा—

लालनीयः पालनीयो भूषणीयस्तथैव च ।
अर्थशास्त्रं शिक्षणीयो यथा स्याद्विनयी सुतः ॥

दुर्वृत्तं प्रत्याह—

राजपुत्रः सुदुर्वृत्तः परित्यागं हि नार्हति ।
क्लिश्यमानः स पितरं परानाश्रित्य हन्ति हि ॥
व्यसने सज्जमानं हि क्लेशयेद्व्यसनाश्रयैरिति ।

इति राजपुत्रनिरूपणम् ।

---

अमात्यस्त्रिविधः उत्तममध्यमाधमभेदात् ।

तदुक्तं महाभारते—

त्रिविधाः पुरुषा लोके उत्तमाधममध्यमाः ।
तेषां च समवेतानां गुणदोषान्वदाम्यहम् ।
मन्त्रिभिर्हितसंयुक्तैः समर्थैरर्थनिश्चये ।
मित्रापित्रैव समानार्थैर्बान्धवैरप्यगर्हितैः ।
संमन्त्रयित्वा यः कर्म प्रारंभे संप्रवर्तते ।
धैर्याच्च कुरुते यत्नं तमाहुः पुरुषोत्तमम् ।।
एकोर्थान्विमृशत्येको धर्मे च कुरुते मतिम् ।
एकः कार्याणि कुरुते तमाहुर्मध्यमं नरम् ।।
गुणदोषावनिश्चित्यं दैवमेव व्यपाश्रितः ।
करिष्यामीति यः कार्योपेक्षकः स नराधम इति ।

याज्ञवल्क्यः—

स मंत्रिणः प्रकुर्वीत प्राज्ञान्मौलान् स्थिरान् शुचीन् ।
तैः सार्द्धं चिन्तयेद्राज्यं विप्रेणाथ ततः स्वयमिति ।।

मनुः संख्यामप्याह—

मौलान् शास्त्रविदः शूरान् लब्धलक्षान् कुलोद्भवान् ।
सचिवान्सप्त चाष्टौ वा कुर्वीत सुपरीक्षितानिति ।।

लब्धलक्षांश्चतुरान् । मौलान्स्ववंशपरंपरायातान् ।

नीतिसारे—

कुलीनाः शुचयः शूराः श्रुतवन्तोऽनुरागिणः ।
दण्डनीतेः प्रयोक्तारः सचिवाः स्युर्महीपतेः ।।

तथा—

स्मृतिस्तत्परतार्थेषु वितर्को ज्ञाननिश्चयः ।
दृढतामनुगुप्तिश्च मन्त्रिसंपत्प्रकीर्तिता ।।
सज्जमानमकार्येषु निरुध्युर्मन्त्रिणो नृपम् ।
गुरूणामिव चैतेषां शृणुयाद्वचनं नृपः ।।

पुरोहितकृत्यं तत्रैव—

त्रय्यां च दण्डनीत्यां च कुशलोऽस्य पुरोहितः ।
अथर्वविहितं कर्म कुर्याच्छान्तिकपौष्टिकम् ।।

ताहक्सांवत्सरोऽप्यस्य ज्योतिःशास्त्रस्य चिन्तकः ।
प्रश्नाभिधानकुशलो होरागणिततत्ववित् ॥

इत्यमात्यादिनिरूपणम् ।

---

सुहृन्निरूपणं तु प्रायशः पूर्वं कृतमेव । गुणास्तु केचनोच्यन्ते । अमात्यानां सेवकमध्येन्तर्भावः । सुहृदस्तु मित्राणीति भेदः, तेषां कृत्यमुक्तं कामन्दकेन—

नृपस्य ते हि सुहृदस्त एव गुरवो मताः ।
य एनमुत्पथगतं वारयन्त्यनिवारिताः ॥
सज्जमानमकार्येषु सुहृदो धारयन्ति ये ।
सत्यं तेनैव सुहृदो गुरवो गुरवो हि ते ॥
कृतविद्योऽपि बलिना व्यक्तरागेण रज्यते ।
रागानुरक्तचित्तः सन् किं न कुर्यादसांप्रतम् ॥

तथा—

त्यागविज्ञानसत्याद्यं महापक्षं प्रियंवदम् ।
आयतिक्षेममद्वैष्यं मित्रं कुर्वीत सत्कुलम् ॥
समुत्पन्नेषु कृच्छ्रेषु दारुणेष्वप्यसंशयम् ।
दर्शयत्यच्छहृदयः कुलीनश्चतुरस्तताम् ॥
धर्मार्थकामसंयोगो मित्रात्तु त्रिविधं फलम् ।
यस्मादेतत्त्रयं न स्यात्तन्न सेवेत पण्डितः ॥
शुचिता त्यागिता शौर्यं समानसुखदुःखता ।
अनुरागश्च दाक्ष्यं च सत्यता च सुहृद्गुणाः ॥
तदर्थेहानुरागश्च संक्षिप्तं मित्रलक्षणम् ।
यस्मिन्नैतन्न तन्मित्रं तत्रात्मानं न निक्षिपेत् ॥

न विश्वसेदित्यर्थः ।

प्रायो मित्राणि कुर्वीत सर्वावस्थासु भूपतिः ।
बहुमित्रो हि शक्नोति वशे स्थापयितुं रिपून् ॥
न तत्र तिष्ठति भ्राता न पितान्योऽपि वा जनः ।
पुंसामापत्प्रतीकारे सन्मित्रं यत्र तिष्ठति ॥
अमित्रान्सर्वतो मित्रैर्निगृह्णीयाद्दृढव्रतैरिति ।

इति सुहृन्निरूपणम् ।

---

## कोशः

अथ कोशः। तस्य मुख्यत्वमाह वराहमिहिरः—

कोशो हि राज्यतरुमूलमतो हि शाखाः
पक्षी विपक्ष इव किं निधनः करोति।
अन्नादिवेन्द्रियगणो वसुतस्तथान्नं
तत्प्राप्तिरक्षणविवृद्धिषु यत्नवान्स्यात् ॥

भारते—

मधुदोहं दुहेद्राष्ट्रं भ्रमरा इव पादपम्।
वत्सापेक्षी दुहेच्चैव स्तनांश्च न विकुट्टयेत् ॥

विकुट्टयेत् शोषयेत्।

तथा—

यः कश्चिज्जनयेदर्थं राज्ञा रक्ष्यः स मानवः।
यो राजकोशं नश्यन्तमाचक्षीत युधिष्ठिर ॥
श्रोतव्यमस्य च रहो रक्ष्यश्चामात्यतो भवेत्।
अमात्या ह्युपहर्तारं ज्ञातिं वा घ्नन्ति भारत ॥

उपहर्तारं राज्ञे निवेदयितारम्।

राजकोशस्य गोप्तारं राजकोशाधिगोपकाः।
सर्वे तमनुधावन्ति स विनश्यत्यरक्षितः ॥

अनुधावन्ति मारयितुं धावन्तीत्यर्थः।

कामन्दकः—

वर्द्धमानोल्पनिस्रावः ख्यातः पूजितदैवतः।
ईप्सितद्रव्यसंपूर्णो हृद्य आप्तैरधिष्ठितः ॥
मुक्ताकनकरत्नाढ्यः पितृपैतामहोचितः।
गजेष्वारोपितः साधुशीघ्रयानैरधिष्ठितः ॥
यत्र राजा तत्र कोशः कोशाधीना हि राजता

तथा—

धर्मार्जितो व्ययसहः कोशः कोशज्ञसंमतः।
धर्महेतोस्तथार्थाय भृत्यानां भरणाय च ॥
आपदर्थं च संरक्ष्यः कोशः कोशवता सदा।
पुत्रादपि हि संरक्ष्यो भार्यायाः सुहृदस्तथा ॥

नीतिसारे—

नान्याय्यं च व्ययं कुर्यात्प्रत्यवेक्षेत चान्वहम् ।
कृषिर्वणिग्यशोदुर्गं सेतुः कुञ्जरबन्धनम् ॥
खन्यः करधनादानं स्वस्थचित्तोऽपि वर्द्धयेदिति ।

भागा उक्ताः शिवधर्मे—

तस्मात्त्रिभागं वित्तस्य जीवनाय प्रकल्पयेत् ।
भागद्वयं तु धर्मार्थमनित्यं जीवितं यतः ॥

भागत्रयं वित्तस्य जीवनाय द्वौ धर्माय । भागपञ्चकं कृत्वा त्रितयं जीवनाय भागद्वयं धर्मायेति हेमाद्रिः ।

कृपणाशक्तविषये भारते—

एकां गां दशगुर्दद्याद्दश दद्याच्च गोशती ।
शतं सहस्रगुर्दद्यात्सर्वे समफलाः स्मृताः इति ॥

दशांशं दद्यादिति भावः ॥

इति कोशः ।

---

राष्ट्रमुक्तं नीतिसारे—

राज्यांगानां तु सर्वेषां राष्ट्राद्भवति संभवः ।
तस्मात्सर्वप्रयत्नेन राजा राष्ट्रं प्रसाधयेत् ॥
तस्मादसाधून् पापिष्ठान् निघ्नन्पापैर्न लिप्यते ।
ये ये प्रजाः प्रबाधेरँस्तांस्तान् छिन्द्यान्महीपतिः ॥
यमार्याः क्रियमाणं हि शंसन्त्यागमवेदिनः ।
स धर्मो यं विगर्हन्ति तमधर्मं प्रचक्षते ॥
धर्माधर्मौ विजानन् हि शासनेऽभिरतः सताम् ।
प्रजा रक्षेन्नृपः साधु हन्याच्च परिपन्थिनः ॥
राष्ट्रोपघातं कुर्वीरन् ये पापा राजवल्लभाः ।
एकैकशः संहतान्वा दूष्यांस्तान्परिचक्षते ॥
दूष्यानुपांशुदण्डेन हन्याद्राजा विलंबितम् ।
अदृश्यं वा प्रकाशं वा लोकद्वेषं समाश्रितान् ॥

तथा—

अरक्ष्यमाणाः कुर्वन्ति यत्किंचित्किल्बिषं प्रजाः ।
तस्मात्तु नृपतेरर्द्धं यस्माद्गृह्णात्यसौ करान् ॥

सर्वतो धर्मषड्भागो राज्ञो भवति रक्षितः ।
अधर्मादऽपि षड्भागो भवत्यस्य ह्यरक्षितुः ॥
यथा बीजांकुरः सूक्ष्मः परिपुष्टोभिरक्षितः ।
काले फलाय भवति साधुस्तद्वदियं प्रजा ॥
उद्वेजयति तीक्ष्णेन मृदुना परिभूयते ।
तस्माद्यथार्हतो दण्डं नयेत्पक्षमनाश्रितः ॥

याज्ञवल्क्यः—

पीड्यमानाः प्रजा रक्षेत्कायस्थैश्च विशेषत इति ।

भारतेऽपि—

उच्छिद्यते धर्मवृत्तमधर्मो वर्तते महान् ।
भयमाहुर्दिवारात्रं यदा पापो न वार्यत इति ।

राजधर्मेषु—

विक्रयं क्रयमध्वानं भक्तं च सपरिव्ययम् ।
योगक्षेमं च संप्रेक्ष्य वणिजः कारयेत्करान् ॥
उत्पत्तिं दानवृत्तिं च शिल्पं संप्रेक्ष्य वा सकृत् ।
शिल्पं प्रति करानेव शिल्पिनः प्रति कारयेत् ॥
तथा पन्था न हीयेरन् प्रजाः कुर्यान्महीपतिः ।
संत्यजन्ति परिख्यातं राजानमतिखादिनम् ॥
न कर्म कुरुते वत्सो भृशं दुग्धो युधिष्ठिर ।
राष्ट्रमप्यतिदुग्धं हि न कर्म कुरुते महत् ॥
यो राष्ट्रमनुगृह्णाति परिगृह्य स्वयं नृपः ।
संजातमुपजीवन्स लभते सुमहत्फलम् ॥
पौरान् जानपदान्सर्वान् संश्रितोपाश्रितांस्तथा ।
यथाशक्त्यनुकंपेत सर्वानप्यधनानपि ॥

तथा—

प्रचारं भृत्यभरणं व्यसनं ग्रामतो भयम् ।
योगक्षेमं च संप्रेक्ष्य गोमिनः कारयेत्करम् ॥

तथा—

दयावानप्रमत्तश्च करान्संप्रणयेन्मृदूनिति ॥

इतिराष्ट्रम् ।

---

दुर्गकरणार्थं भुवमाह कामन्दकः—

भूगुणैर्वर्धते राष्ट्रं तद्वृद्धिर्नृपवृद्धये ।
तस्माद्गुणवतीं भूमिं भूत्यै भूपस्तु कारयेत् ॥
सस्याकरवती पुण्या खनिद्रव्यसमन्विता ।
गोहिता भूरिसलिला पुण्यैर्जनपदैर्वृता ॥
रम्या सकुंजरवना वारिस्थलपथान्विता ।
अदेवमातृका चेति शस्यते भूर्विभूतये ॥

निषिद्धभूमिमाह स एव—

सशर्करा सपाषाणा साटवी नित्यतस्करा ।
रूक्षा सकंटकवना सव्याला चेति भूरभूः ॥

रूक्षान्यदेशापेक्षया चतुर्गुणपञ्चगुणादिजलसेकेन सस्यजननी ।

जनपदमाह स एव—

स्वाजीव्यो भूगुणैर्युक्तः सानूपः पर्वताश्रयः ।
शूद्रकारुवणिक्प्रायो महारंभकृषीवलः ॥
सानुरागो रिपुद्वेषी पीडाकरसहः पृथुः ।
नानादेश्यैः समाकीर्णो धार्मिकः पशुमान् धनी ॥
तं वर्द्धयेत्प्रयत्नेन तस्मात्सर्वं प्रवर्तते ॥

पुरमाह—

पृथुसीममहाखातमुच्चप्राकारगोपुरम् ।
समावसेत्पुरं शैलं सरिन्मरुवनाश्रयम् ॥

याज्ञवल्क्यः—

रम्यं पशव्यमाजीव्यं जांगलं देशमावसेत् ।
तत्र दुर्गाणि कुर्वीत जनकोशात्मगुप्तये ॥

पशव्यं पशुवृद्धिकरम्, कन्दमूलफलादिभिराजीव्यम् । जाङ्गलं सजलतरुपर्वतम् ।

दुर्गमाह मनुः—

धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव च ।
नृदुर्गं गिरिदुर्गं च समाश्रित्यावसेत्पुरम् ॥

कामन्दकस्तु ऐरिणमपि पपाठ—

औदकं पार्वतं वार्क्षमैरिणं धन्व मानवम् ।
प्रशस्तं शास्त्रमतिभिर्दुर्गं दुर्गोपचिन्तकैः ॥

इरिणमूषरम् । धन्व निरुदकं स्थलं मरुभूमिरित्यर्थः । महीदुर्गमित्यत्र मह्यां दुर्गं महीरूपमेव वा । तच्च मार्त्तिकं पाषाणमैष्टकं वा ।

तथाच महाभारते—महीदुर्गापेक्षया मृद्दुर्गस्य पृथङ्निर्देशः कृतः ।

धन्वदुर्गं महीदुर्गं गिरिदुर्गं तथैव च ।
मनुष्यदुर्गं मृद्दुर्गं वनदुर्गं च तानि षडिति ॥

बन्धुदुर्गं सोदरादिबन्धूनां राजगृहस्य परितः स्थानानि । तत्र बन्धुदुर्गमनुष्यदुर्गयोः पृथग्ग्रहणं गोबलीवर्दन्यायेन । अन्तरङ्गत्वाच्छूरत्वाच्च बन्धूनां पृथङ्निर्देशः ।

तथा—

यावद्बन्धुदुर्गं संभवति तावदितरमनुष्यदुर्गं न कुर्वीतेति । एवं च दुर्गस्य नवत्वं संपद्यते । धन्वदुर्गं महीदुर्गमित्यत्र द्वे । जलदुर्गं वृक्षदुर्गं नृदुर्गं गिरिदुर्गं बन्धुदुर्गं, ऐरिणदुर्गम् । महीदुर्गे तु मृदादीनां विशेषः पूर्वमुक्त एव ।

दुर्गस्य गुणमाह मनुः—

एकः शतं योधयति प्राकारस्थो धनुर्द्धरः ।
शतं दशसहस्राणि तस्माद्दुर्गं समाश्रयेत् ॥

दशगुणा अपि पराभवं प्राप्नुवन्तीत्यर्थः ।

तत्र सर्वदुर्गाणां प्राशस्त्ये च गिरिदुर्गे विशेषमाह मनुः—

सर्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत् ।
एतेषां बाहुगुण्येन गिरिदुर्गं विशिष्यते ॥

एतेषामिति निर्द्धारणे षष्ठी । तद्विशिनष्टि मनुः—

तत्स्यादायुधसंपन्नं धनधान्येन वाहनैः ।
ब्राह्मणैः शिल्पिभिर्मन्त्रैर्यवसेनोदकेन्धनैः ॥

मन्त्रैः सर्पादिमन्त्रविद्भिर्मनुष्यैरित्यर्थः ।

भारते दुर्गं प्रकृत्य—

शूरान्यजनसंपन्नं ब्रह्मघोषानुनादितम् ।
वश्यामात्यबलो राजा तत्पुरं स्वयमाविशेत् ॥
तत्र कोशं बलं मित्रं व्यवहारं च वर्द्धयेत् । इति ।

मनुः—

तस्य मध्ये तु पर्याप्तं कारयेद्गृहमात्मनः ।
गुप्तं सर्वर्तुकं शुभ्रं जलवृक्षसमन्वितम् ॥ इति ।

सर्वर्तुकम् आरामादिषु तत्तदृतुफलितवृक्षसहितं तत्तदृतूद्भवफलपुष्पादिसहितं वा । तत्तदृतूपयोगिसामग्रीसहितं सर्ववस्तुसमन्वितमित्यर्थः ।

इति दुर्गम्

---

## अथ बलम् ।

तत्र मुहूर्ताद्यपेक्षया बलस्य प्राधान्यमाह वराहमिहिरः—

ग्रहर्क्षतिथ्युद्गमराशिहोरा-
द्रेक्काणभागाद्यनुकूलमात्रम् ।
भवेद्धियासोर्यदि सिद्धिहेतुः
स्त्रयं भवेद्दैवविदेव राजा ॥
मन्त्राभिषेकमणिबन्धनशान्तिकर्म-
होमोपवाससुरयागजपादिमात्रम् ।
स्यात्सिद्धिहेतुरथ चेद्विजिगीषतोऽरीन्
कस्मात्तदा नरपतिर्न भवेत्पुरोधाः ॥

तथा—

बुद्धार्थशास्त्राण्यपि मन्त्रिणोऽपि
कुर्युः प्रणामं न नरेश्वराणाम् ।
यद्याभिजात्यद्विपवाजिपत्ति-
कोशाद्यपेक्षा न भवेत्प्रधानम् ॥

अतोऽवश्यं बलकोशाधीनं राज्यम् ।

ननु जयपराजयादिकं सर्वं कर्माधीनं तत्र किं बलादिनेति चेत् उच्यते । न केवलं सर्वं कर्माधीनं किंतु पुरुषकाराधीनमपि ।

उक्तं च याज्ञवल्क्येन—

यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत् ।
एवं पुरुषकारेण विना दैवं न सिद्ध्यतीति ॥

माघेऽपि—

नालंबते दैष्टिकतां न निषीदति पौरुषे ।
शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षत इति ॥

कथं तर्हि कचित्पुरुषकारे कृतेपि न फलप्राप्तिः । उच्यते । न वयं कर्मणः कारणत्वमेव खंडयामः किं तु तन्मात्रस्य । वस्तुतस्तु नहि

कर्म पुरुषकारापेक्षया भिन्नमस्ति । पूर्वजन्मार्जितः पुरुषकारो हि कर्मोच्यते । अतो यदिह जन्मनि द्वाभ्यामेकजातीये प्रयत्ने कृते फलावाप्तिरेकस्यैकस्य न, ततो नूनमेकस्य प्राक्तनः पुरुषकारो नास्ति । पापरूपो वा स प्रतिबन्धक इति कल्प्यते । अतः सर्वं कर्मापरपर्यायपुरुषकाराधीनमेव ।

अत एवोक्तं भारते—

स्वकर्मणाऽशुभेनापि शुभेनाप्यथवा जनः ।
फलं तदनुरूपं हि प्राप्नोति भरतर्षभ ।।

अतएवोत्तरमीमांसायां कस्यचिद्वर्तमानजन्मनि कर्मभिः पापक्षये जाते सन्यासोत्तरं मुक्तिः । यत्र तु कर्मस्वकृतेषु सन्यासोत्तरं मुक्तिस्तत्र पूर्वजन्मार्जितानि कर्माणि कल्प्यन्ते । अत एव क्षत्रियजनकस्य ज्ञानोत्पत्तिं दृष्ट्वा प्राक्तनः संन्यासोऽपि कल्प्यत इत्युक्तम् । अतो यत्र लोकतः शास्त्रतो दृढतरः कार्यकारणभावोऽवगतस्तत्र कार्यं दृष्ट्वा कारणमनुमीयते इति । अतः सर्वत्र प्राक्तन ऐहिको वा पुरुषकारः कारणमिति । अतः पुरुषकार एव राज्ञा कर्तव्य इति । स च वलाधीन इत्यवश्यं बलसंग्रहः कार्यः ।

अत्र बलं षड्विधमाह कामन्दकः—

षड्विधं तु बलं व्यूह्य द्विषतोऽभिमुखं व्रजेदिति ।

षड्विधं वलमादाय प्रतस्थे दिग्जिगीषयेति कालिदासोपि ।

तद्भेदा उक्ता नीतिसारे—

मौलं भूतं श्रेणिसुहृद्द्विषदाटविकं वलम् ।
पूर्वं पूर्वं गरीयस्तु बलानां व्यसनं स्मृतमिति ।।

पूर्वपूर्वस्य नाशः कठिन इत्यर्थः । तत्र मौलं नाम परंपरागतम् । भूतं यावद्विभवस्थायि । श्रेणिः गमनमार्गे स्थाने स्थाने निवेशितम् । सुहृन्मित्रवलम् । द्विषतां स्वाधीनं यज्जातं तद्विषद्बलम् । आटविकं, अरण्यसंबन्धि ।

तत्र दूरदेशादौ मूलसहितो गच्छेदित्याह—

प्रकृष्टेऽध्वनि काले वा गच्छेन्मौलैः समावृतः ।
मौलास्तु दीर्घकालेऽपि क्षयव्ययसहिष्णवः ।।
एषु वस्तुषु मेधावी भूतादीनि विवर्जयेत् ।

दीर्घाध्वकालखिन्नेषु तेषु भेदभयं भवेत् ॥
बहुत्वाद्भूतसैन्यानां दीर्घकालाध्वखेदतः ।
नित्यं प्रवासायासाभ्यां भेदोऽवश्यं प्रजायते ॥

भेदः स्वामिपरित्यागः । एवमन्येषामपि बलानां गुणदोषा ऊह-नीयाः । तत्र कस्मिन्काले किं बलं ग्राह्यमित्याह कामन्दकः—

स्फीतसारानुरक्तेन बलेनोपचितः परः ।
तत्तुल्येनैव पातव्यः क्षयव्ययसहिष्णुना ॥

कचिद्भूतमपि ग्राह्यमित्याह स एव—

प्रभूतं स्वं भूतबलं मौलमल्पमसारवत् ।
अरेर्वीक्ष्यात्मनस्तद्धि विपरीतं जयेदरीन् ॥

भूतबलेन मौलं जयेदिति विपरीतम् । श्रेणिबलस्योपयोगमाह—

स्फीतं श्रेणिबलं शक्यमाधातुं यानवर्त्मनि ।
नित्यं प्रयासव्यायाममिति श्रेण्या समुत्पतेत् ॥

मित्रबलस्योपयोगमाह—

मित्रसाधारणे कार्ये मित्रायत्ते फलोदये ।
अनुग्राह्ये च पीड्ये च मित्रेणैव सह व्रजेत् ॥

अरिसैन्यस्योपयोगमाह—

प्रभूतेनारिसैन्येन योधयेन्महतो रिपून् ।
अत्युच्छ्रितं कोपनयादभ्यासेन रिपोर्बलम् ॥
वासयेत्कर्षयेच्चैनं दुर्गकण्टकशोधनैः ॥

आटविकस्योपयोगमाह—

नित्यमाटविकं सैन्यं दुर्गकण्टकशोधने ।
परदेशप्रवेशे च पुरः कुर्वीत पण्डितः ॥ इति ।

पूर्वोक्तबलस्य चतुरङ्गतामाह—

हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुर्विधमिति ।

---

## अथ गजनिरूपणम् ।

चतुर्विधा गजाः । भद्रा मन्दा मृगा मिश्राश्चेति ।

तल्लक्षणमाह वराहमिहिरः—

मध्वाभदन्ताः सुविभक्तदेहाः
नचोपदिग्धा न कृशाः क्षमाश्च ।

गात्रैः समैश्चापसमानवंशाः
वराहतुल्यैर्जघनैश्च भद्राः ॥

चापं वंशस्य तत्तुल्यपृष्ठाः ।

वक्षोऽथ कक्षा वलयः श्लथाश्च
लंबोदरस्त्वक्बृहती गलश्च ।
स्थूला च कुक्षिः सह मेचकेन
सैंही च दृक् मन्दमतङ्गजस्य ॥

कक्षाऽग्रिमपादद्वयोरुसन्धिः । सैंही सिंहसदृशच्छविरित्यर्थः ॥

मृगास्तु ह्रस्वाधरबालमेढ्रा-
स्तन्वंघ्रिकण्ठद्विजहस्तकर्णाः ।
स्थूलेक्षणाश्चेति यथोक्तलिङ्गैः
संकीर्णनागा व्यतिमिश्रसंज्ञाः ॥

मिश्रत्वं भद्राणां मन्दादिसंगेन । एवमन्यत्रापि ।

---

## अथ परिमाणमाह ।

पञ्चोन्नतिः सप्त मृगस्य दैर्घ्यं
अष्टौ च हस्ताः परिणाहमानम् ।
एकद्विवृद्धावथ मन्दभद्रौ
संकीर्णनागे नियतप्रमाणः ॥

मन्दस्य षडुन्नतिः अष्टौ दैर्घ्यम् । नवोदरपरिणाहः । भद्रस्य सप्तोन्नतिः । नवदैर्घ्यं दशपरिणाहाः । अन्यत्स्पष्टम् । अत्र ह्रस्वस्तिर्यग्यवोदराणीति कल्पनेन कार्यः ।

तेषां मदवर्णमाह स एव—

भद्रस्य वर्णो हरितो मदश्च
मन्दस्य हारिद्रकसन्निकाशः ।
कृष्णो मृगस्याभिहितो मदस्य
संकीर्णनागस्य मदो विमिश्रः ॥

गजप्राशस्त्यमाह—

ताम्रोष्ठतालुवदनाः कलविंकनेत्राः
स्निग्धोन्नताग्रदशनाः पृथुलायतास्याः ।

चापोन्नतायतनिमग्ननिगूढवंशाः
तन्वेकरोमचितकूर्मसमानकुंभाः ॥

कलविंकश्चटकः । तनून्येकजातीयानि रोमाणि तैः ।

तथा—

विस्तीर्णकर्णहनुनाभिललाटगुह्याः
कूर्मोन्नतैर्द्विनवविंशतिभिर्नखैश्च ।
रेखात्रयोपचितवृत्तकराः सुबाला
धन्याः सुगन्धिमदपुष्करमारुताश्च इति ॥

द्विनवाष्टादशविंशतिर्वा नखानि कूर्मोन्नतानि । पुष्करं शुंडाग्रम् ।

तथा—

मूलमध्यदशनाग्रसंस्थिता
देवदैत्यमनुजाः क्रमात्ततः ।
दन्तभङ्गफलमत्र दक्षिणे
भूपदेशबलविद्रवप्रदम् ॥
वामतः सुतपुरोहिते भयं
हन्ति साटविकदारनायकान् ॥

आटविकोऽटव्यामधिकृतस्तत्सहिता दारनायका दाराधिकृताः पुरुषास्तान् हन्ति । भयं करोतीत्यध्याहारः ।

तथा—

आदिशेदुभयगर्भदर्शना-
त्पार्थिवस्य सकलं कुलक्षयम् ।
सौम्यलग्नतिथिभादिभिः शुभं
वर्द्धते शुभमतोऽन्यथा परम् ॥
क्षीरिमिष्टफलपुष्पपादपै-
श्चापगातटविघट्टनेन च ।
वाममध्यरदभङ्गखण्डनं
शत्रुनाशकृदतोऽन्यथा परम् ॥

वल्मीकस्थाणुगुल्मं क्षुपतरुमथनः स्वेच्छया हृष्टदृष्टि-
र्यायाद्यात्रानुकूलं त्वरितपदगतिर्वक्त्रमुन्नाम्य चोच्चैः ।
भक्ष्यासन्नाहकाले जनयति च मुहुः शीकरं बृंहते वा
तत्कालं वा मदाप्तिर्जयकृदथ रदं वेष्टयन्दक्षिणं च ॥

स्खलितगतिरकस्मात्त्रस्तकर्णोऽतिदीनं
श्वसिति मृदु सुदीर्घं न्यस्तहस्तः पृथिव्याम् ।
द्रुतमुकुलितदृष्टिः स्वप्नशीलो विलोमो
भयकृदहितभक्षी नैकशोऽसृक्शकृच्च ॥

अहितभक्षी रोगजनकतृणादिभक्षी । असृक् रुधिरं तत्सहितं शकृत् ।
तथा—

प्रवेशनं वारिणि वारणस्यं
ग्राहेण नाशाय भवेन्नृपस्य ।
ग्राहं गृहीत्वोत्तरणं द्विपस्य
तोयात्स्थले वृद्धिकरं परं स्यात् ॥

बन्धनभूमीराह—

भद्रमन्दमृगमिश्रदन्तिनां
श्वेतरक्तकनकोपमाः सिताः ।
भूमयो द्विरदपुष्टिवृद्धिदा
भूभुजामपि यशःसुखावहाः ॥

शाला आह—

ज्येष्ठा चतुर्विंशतिरेव हस्ता
द्विद्व्यूनिते मध्यजघन्यशाले ।
विस्तारतस्तद्द्विगुणाश्च दीर्घाः
स्तंभाश्च विस्तारसमुच्छ्रिताः स्युः ॥

एते च शालास्तंभाः । अत्र पूर्वोक्तपरिमाणमध्ये बहूनां हस्तिनाम-सन्निवेशात्प्रतिहस्ति पूर्वोक्ता शाला ज्ञेया । स्तंभानां परिणाहमाह—

ज्येष्ठोऽङ्गुलानि बहुलो दशषड्युतानि
मध्यस्तु पञ्चदशकन्यसकोऽङ्गुलोनः ।
स्तंभप्रमाणविपुलाः क्रमशो निषंगाः
प्रक्तांगुलार्द्धसदृशं बहुलत्वमेषाम् ॥

निषंगा बन्धनरज्जवः । द्वारमाह—

द्वारोच्छ्रयः कुञ्जरयामतुल्यो
विस्तारोऽस्य त्र्यंशहीनः स एव ।

हीनो भूयश्चात्मषष्ठांशकेन
शालाद्वारं प्रागुदक् च प्रशस्तम् ॥

भूयः पुनः आत्मनस्त्र्यंशस्य षष्ठांशेन विस्तारः । एवं च द्वारमुपरि सूक्ष्ममधो भागे महच्च संपन्नं भवति ।

बन्धनार्थं वृक्षानाह—

चन्दनार्जुनशिरीषमधूका
देवदारुसरलार्जुनशालाः ।
रोहिणीखदिरचम्पकशाकाः
स्यंदनश्च सकदंबविशोकः ॥
शीताः शिवाश्च द्विपबन्धनार्थ-
मेते द्रुमाः पुष्टिकरा द्विपानाम् ।
स्तंभार्थमन्येऽपि हि सारवन्तः
कार्याः प्रशस्ता गुणसंप्रयुक्ताः ॥

तथा—

पूर्वाभिमुखो निबध्यते यः
क्षिप्रं स करोति विक्रमम ।
राज्ञः समरेष्वनिर्जितो
दीर्घं चायुरवाप्नुयाद्गजः ॥
उदङ्मुखो बन्धमुपैति नागो
योऽर्थस्य वृद्धिं स करोति भर्तुः ।
प्राप्नोति पुष्टिं चिरजीवितां च
संग्रामकालेष्वपराजयं च । इति ॥

अन्यदिङ्मुखेऽनिष्टमाह—

दक्षिणदिग्वदनस्य च बन्धो
जीवितनाशकरो द्विरदः स्यात् ।
पश्चान्मुखो बन्धमवाप्य नागो
नित्यं भवेद्रोगनिपीडिताङ्गः ॥
नाशं च वित्तस्य करोति राज्ञ-
स्तस्मात्स याम्यापरदिग्विवर्ज्यः । इति ।

बन्धस्तंभमान(?)माह—

दिश्यैशान्यां बन्धनार्थं द्विपानां
स्तंभो राज्ञः श्रेयसे दन्तिनश्च । इति ।

अन्यदिश्यनिष्टम् । तत्परिमाणमाह—

ज्येष्ठो दशोच्चो नव मध्यमश्च
स्तंभोष्टहस्तः कथितः कनीयान् ।
सर्वे निखाताश्चतुरश्च हस्ता
माना धिकोनाश्च शिवाय न स्युः ॥

गजानां मदजनकान्यौषधानि तु हस्तिचिकित्सायां द्रष्टव्यानीति नेह प्रपञ्चितानि ।

इति सपरिकरगजनिरूपणम् ।

---

अथाश्वलक्षणमुक्तं योगयात्रायाम्—

दीर्घग्रीवाक्षिकूटस्त्रिकहृदयपृथुस्ताम्रताल्वोष्ठजिह्वः
सूक्ष्मत्वक्केशवालः सुशफगतिमुखो ह्रस्वकर्णौष्ठपुच्छः ।
जंघाजानूरुवृत्तः समसितदशनश्चारुसंस्थानरूपो
वाजी सर्वाङ्गशुद्धो भवति नरपतेः शत्रुनाशाय नित्यम् ॥

कूटं ललाटोर्ध्वभागः । त्रिकं कटिप्रदेशः । केशाः शरीरस्थिता बाला ग्रीवापुच्छगताः गोबलीवर्दन्यायेन पृथग्ग्रहणम् । जंघायां जानुनि वृत्तः मण्डलाकारः । समा निम्नोन्नतत्वरहिताः । सिताः श्वेताः ।

इष्टानिष्टमाह—

उत्सर्गान्न शुभदमासनापरस्थं
वामे च ज्वलनमतोऽपरत्र शस्तम् ।
सर्वांगज्वलनमवृद्धिदं हयानां
द्वैवर्षे दहनकणाश्च धूपनं च ॥
अन्तःपुरं नाशमुपैति मेढ्रे
कोशः क्षयं यात्युदरे प्रदीप्ते ।
भूपस्य पायौ च पराजयः स्या-
द्वक्त्रोत्तमाङ्गज्वलने जयश्च ॥
स्कंधासनांसज्वलनं जयाय
वधाय पादज्वलनं प्रदिष्टम् ।
ललाटवक्षोक्षिभुजे च धूमः

पराभवाय ज्वलनं जयाय ॥
प्रद्वेषो यवसांभसां प्रपतनं स्वेदो निमित्ताद्विना
कंपो वा वदनाच्च रक्तपतनं धूमस्य वा संभवः ।
अस्वप्नश्च विरोधतो निशि दिवा निद्रालसध्यानता
सादोऽधोमुखता विचेष्टितमिदं नष्टं स्मृतं वाजिनाम् ॥

ह्रेषितपरीक्षामाह मिहिरः—

क्रौञ्चवद्रिपुवधाय ह्रेषितं
ग्रीवया त्वबलया च सोन्मुखम् ।
स्निग्धमुच्चमनुनादि हृष्टव-
द्ग्रासरुद्धवदनैश्च वाजिभिः ॥
पूर्णपात्रदधिविप्रदेवता
गन्धपुष्पफलकाञ्चनादि वा ।
द्रव्यमिष्टमथवा परं भवे-
द्धेषतां यदि समीपतो जयः ॥
वामैश्च पादैरभिताडयन्तो
महीं प्रवासाय भवन्ति भर्तुः ।
संध्यांसुदीप्तामवलोकयन्तो
ह्रेषन्ति चेद्बन्धुपराजयाय ॥
आरोहति क्षितिपतौ विनयोपपन्नो
यात्रानुगोऽन्यतुरगं प्रतिह्रेषितं च ।
वक्त्रेण वा स्पृशति दक्षिणमात्मपार्श्वं
योऽश्वः स भर्तुरचिरात्प्रकरोति लक्ष्मीम् ॥
मुहुर्मुहुर्मूत्रशकृत्करोति
न ताड्यमानोऽप्यनुलोमयायी ।
अकार्यभीतोऽश्रुविलोचनश्च
शिवं न भर्तुस्तुरगोऽभिधत्ते ॥

रथपतिलक्षणं लोकत एव ज्ञेयम् ।

इत्यश्वादिलक्षणम् ।

---

अथाभियोज्यनृपाः योगयात्रायाम्—

शब्दायन्ते मुहुरपि शिवा गर्दभध्वानतुल्यं

त्यक्तस्नेहाः परिजनसुहृद्वाहनोपस्करेषु ।
कष्टं को नः शरणमिति वा वादिनो यस्य सैन्ये
विद्विष्टा वा प्रचुरपुरुषाः सोभियोज्यो नृपेण ॥
कापोतकोलूकमधूनि यस्य
समाश्रयन्ते ध्वजचामराणि ।
छत्रायुधादीनि च सोऽभियोज्यो
यस्याथवानाहततूर्यशब्दः ॥
प्रतीपगत्वं सरितामिषोश्च
शोषोऽथवाऽशोष्यजलाशयानाम् ।
अवारिदेशे सलिलप्रवृत्ति-
रव्वैकृतं चाप्सु तरेच्छिला वा ॥
भंगपातचलनान्यनिमित्तं
रोदनानि च सुरप्रतिमानाम् ।
अग्निरूपमनलेन विनाशः
निश्चलानि च यदा प्रचलन्ति ॥
प्रसूतिवैकृत्यमकालपुष्पा-
ण्यरण्यसत्वस्य पुरप्रवेशः ।
प्रदोषकाले कृकवाकुशब्दा
हिमागमे चान्यभृतप्रलापः ॥

अन्यभृत्कोकिलः ।

दीर्घं दीनं संहताः सारमेयाः
क्रोशन्त्युच्चैर्नित्यमेवानृतौ च ।
हन्युर्योषा योषितो निर्घृणाश्च
श्वेतः काको नक्तमिन्द्रायुधं च ॥

अनृतौ शरत्कालादन्यत्र । अनृतावितीन्द्रायुधेऽप्यन्वेति ।

अह्ना(?)तिरिक्तः पवनोऽतिचण्डो
गन्धर्वसंज्ञस्य भवेत्पुरस्य ।
व्यक्तिर्भवेच्चाह्नि तारकाणां
नक्तं च तारागणसंप्रणाशः ॥

एवं निमित्तानि यदा भवन्ति
तदाभियोज्याः क्षितिपेन देशाः ।

नीतिसारे—

भेदं कुर्वीत यत्नेन मन्त्र्यमात्यपुरोधसाम् ।
तेषु भिन्नेषु भेदे हि युवराजे तथोर्जिते ॥
अमात्यो युवराजश्च भुजावेतौ महीपतेः ।
मन्त्री नेत्रे हि भिन्नेऽस्मिन्नेकस्मिन्नपि तद्विधः ॥
सर्वावस्थं हि मेधावी न कुलीनं विकारयेत् ।
तत्रोपजापः कर्तव्यो यः कोपानुग्रहक्षमः ॥
आगतान्पूजयेत्स्वामी निजांश्च परिसांत्वयेत् ।
भेदं कुर्वीत मतिमान्निगृहीतो बलीयसा ॥
दंडेन हि समाहन्याद्विद्विषारेः संहतं बलम् ।
भिन्नं हि तत्काष्ठमिव जन्तुजग्धं विशीर्यते ॥
इति भेदं नृपः कृत्वा ततो यायाद्रिपोः पुरम् । इति ॥

एवं सामदानभयादिना भेदं कृत्वेत्यर्थः ।

अथ दूतप्रेषणमाह कामन्दकः—

यातव्याय प्रहिणुयाद्दूतं दूत्याभिमानिनम् ।

तं विशिनष्टि—

प्रगल्भः स्मृतिमान्वाग्मी शास्त्रे चास्त्रे च निष्ठितः ।
अभ्यासकर्माभिगतो दूतो भवितुमर्हति ॥

तत्त्रैविध्यमाह—

निसृष्टार्थो मितार्थश्च तथा शासनवाहकः ।

तत्र योऽशिक्षितमेव देशकालोचितं यथायोग्यमन्यस्याग्रे वदति स निसृष्टार्थः । यथा पाण्डवानां दूतो वासुदेवः । यावत्संदिष्टवक्ता मितार्थः । शासनहारः प्रसिद्धः ।

दूतं प्रत्याह—

नाविज्ञातः पुरे शत्रोः प्रविशेच्च न संसदि ।
कालमीक्षेत कार्यार्थमनुज्ञातश्च निष्पतेत् ॥

निष्पतेदुपविशेत् ।

सारवत्तां च राष्ट्रस्य दुर्गं तद्गुप्तिमेव च ।

छिद्रं शत्रोर्विजानीयात्कोशमित्रबलानि च ॥
उद्यतेष्वपि शस्त्रेषु यथोक्तं शासनं वदेत् ।
रागापरागौ जानीयात्प्रकृतीनां च भर्तरि ॥
फलेन नाम्ना द्रव्येण कर्मणा च महीयसा ।
कुर्याच्चतुर्विधं स्तोत्रं पक्षयोरुभयोरपि ॥
तीर्थाश्रमपुरस्थानैः शास्त्रविज्ञानहेतुना ।
उपात्तव्यञ्जनोपेतैः स्वचरैः सह संवदेत् ॥
प्रतापं कुलमैश्वर्यं त्यागमुत्थानसौष्ठवम् ।
अक्षुद्रतां च दाक्ष्यं च भर्तुः सर्वत्र कीर्तयेत् ॥
सहेतानिष्टवचनं कामं क्रोधं च वर्जयेत् ।
वैतसीमाश्रयेद्वृत्तिं नान्यवृक्षाश्रितां सदा ॥
नान्यं शपेन्न भावं स्वं वदेद्विद्यात्परस्य च ।
भावमन्तर्गतं गुप्तं सुप्तो मत्तश्च भाषते ॥
तस्मादेकः स्वपेन्नित्यं स्त्रीमद्ये च विवर्जयेत् ।
राष्ट्राटव्यंतपालानां आत्मसात्करणं तथा ॥
युद्धापसारभूज्ञानं दूतकर्मेति कथ्यते ।
दूतेनैव नरेन्द्रस्तु कुर्वीतारिविमर्षणम् ॥
स्वपक्षे च विजानीयात्परदूतविचेष्टितम् ।

इदं कर्म निसृष्टार्थस्यैव ।

चरा उक्ता नीतिसारे—

तपस्विलिङ्गिनो धूर्ता पण्यशिल्पोपजीविनः ॥
चराश्चरेयुः परितः पिबतो जगतां मनः ।
निर्गच्छेयुर्विशेयुश्च सर्ववार्त्ताविदोऽन्वहम् ॥
सूक्ष्मसूत्रं हि चारेण पश्येद्विविधचेष्टितम् ।
स्वपन्नपि हि जागर्त्ति चारचक्षुर्महीपतिः ॥
विवस्वानिव तेजोभिर्नभस्वानिव चेष्टितैः ।
राजा चरैर्जगत् कृत्स्नं व्याप्नुयाल्लोकसंमतेः ॥
एतैर्ज्ञेयास्तु संचाराः सर्वे नान्योन्यवेदिनः ।
प्रकाशश्चाप्रकाशश्च चरस्तु द्विविधः स्मृतः ॥
अप्रकाशोऽयमुद्दिष्टः प्रकाशो दूत इष्यते ।

तथा—

जडमूकान्धबधिरच्छद्मानः पण्डकास्तथा ॥
किराता वामनाः कुब्जास्तद्विधा ये च कारवः।
भिक्षुकाश्चारणा दास्यो नानाकार्यकलाविदः ॥
अन्तःपुरगतां वार्तां आहरेयुरलक्षिताः।
छत्रव्यजनभृंगारयानवाहनधारिणाम् ॥
महामात्रा बहिर्वार्त्तां विद्युरन्ये च संगताः।
सूदा व्यञ्जनकर्त्तारः कल्पकाः सूचिकास्तथा ॥
प्रसाधका भोजकाश्च गात्रसंवाहका अपि।
जलतांबूलकुसुमगन्धभूषणदायकाः ॥
कर्तव्या वशगा ह्येते ये चान्ये न्यासवर्तिनः।

इति दूतचारप्रपञ्चः ॥

---

अथ प्रयाणे योधस्वरूपमाह मिहिरः—

शूरकृतास्त्रमहाकुलजाताः
स्वामिहिता बलिनः कृतयज्ञाः।
दृष्टगुणा बहुबान्धवमित्रा
नागकरोरुभुजाः कठिनाङ्गाः ॥
व्याघ्रमृगेश्वरगोवृषनादाः
श्येनदृशः शुकसन्निभनासाः।
केकरजिह्मनिमीलितनेत्राः
पुण्यकृतां समरेषु सहायाः ॥
देशगुणैः प्रथिताश्च पुरोगा-
स्ते बहवो गुणलक्षणलक्ष्याः।
काकभृतो भ्रुकुटीकृतवक्त्रा
धर्मभृतो विविधायुधहस्ताः ॥

अथ प्रयाणे विशेषो योगयात्रायाम्—

अन्तःपुराद्वा स्वनिवेशनाद्वा
सिंहासनादग्निपरिस्तराद्वा।
कुर्यान्नरेन्द्रः प्रथमं प्रयाणं

विप्रैः शताग्रैः कृतमङ्गलाशीः ॥
द्विजो विष्णुक्रमाद्रूपं मन्त्रेणानेन दापयेत् ।
इदं विष्णुर्विचक्रम इति पादं समुद्धरेत् ॥
अमुकस्य वधाय दक्षिणं क्षितिपो न्यसेत् ।
मङ्गलानि ततः पश्यन्स्पृशन् शृण्वन् नृपो व्रजेत् ॥

अथ दर्शनशकुनं वराहमिहिरः—

वाचः शुभाः सारसचाषबर्हिणः
कादंबहंसाश्च सजीवजीवकाः ।
काकश्च पंकाक्तवराहपृष्ठगो
श्रीवृक्षवालव्यजनानि चन्दनम् ॥
दधिमधुघृतरोचनाकुमारी-
ध्वजकनकांबुजभद्रपीठसिंहाः ।
सितवृषकुसुमांबराणि मीन-
द्विजगणिकाभजनाश्च(?)चारुवेषाः ॥
ज्वलितशिखिफलाक्षतेक्षुभक्ष्य-
द्विरदमृदंकुशचामरायुधानि ।
मरकतकुरुविन्दपद्मरागाः
स्फटिकमणिप्रमुखाश्च रत्नभेदाः ॥
स्वयमथ रचितान्ययत्नतो वा
पथि यदि कथितानि भवन्ति मङ्गलानि ।
स जयति सकलां ततो धरित्रीं
ग्रहणद्दगालभनश्रुतैरुपास्याम् ॥

इदं मङ्गलं ग्राह्यं द्रष्टव्यं स्प्रष्टव्यं श्रोतव्यं चेत्यर्थः ।

अनिष्टफलान्युक्तानि तेनैव—

कार्पासौपधकृष्णधान्यलवणक्षीबास्थितैलं वशा
पंकांगारगुडाहिचर्मशकृतः केशायतं व्याधिताः ॥
वान्तोन्मत्तजडेन्धनास्तृणतुषक्षुत्क्षामतक्रारयो
मुण्डाभ्यक्तविमुक्तकेशपतिताः काषायिणश्चाऽशुभाः ॥

यानदिने क्षौराभ्यङ्गवर्जनं तु ज्योतिःशास्त्रे ज्ञेयम् । एवं मङ्गलामङ्गलभिन्नदर्शने नाऽनिष्टं नापीष्टलाभ इति ज्ञेयम् ।

देशविशेषे विशेषमाह—

छुछुंदरी शूकरिका शिवा च
श्यामारलापिंगलिकान्यपुष्टा ।
वामाः प्रशस्ता गृहगोधिका च
पुंसंज्ञका ये च पतत्रिणश्च ॥

तथा—

श्येनो रुरुः पूर्णकुटः कपिश्च
श्रीकर्णछिक्कारकपिप्पिकाजाः ।
स्त्रीसंज्ञिता ये च शिखिद्विपौ च
याने हिता दक्षिणभागसंस्थाः ॥
आस्फोटिताक्ष्वेडितशंखतूर्य-
पुण्याहवेदध्वनिगीतशब्दाः ।
वामाः प्रयाणे शुभदा नराणा-
माक्रन्दितं दक्षिणतः परेषाम् ॥

आस्फोटितं मल्लयुद्धम् आक्ष्वेडितं मुखशब्दः

भारद्वाज्यजबर्हिचाषनकुलाः संकीर्तनाद्दर्शना-
त्क्रोशन्तश्च शुभप्रदा न सरटो दृष्टः शिवाय क्वचित् ।
गोधाशूकरजाहकाहिशशकाः पापारुतालोकने
धन्यं कीर्तनमृक्षवानरफलं तद्व्यत्ययाच्छोभनम् ॥

नकुलस्य मृगस्य पक्षिणां
वामो दक्षिणभागसेचनम् ।
शुभदं श्वशृगालयोरिदं
व्यत्ययेन फलदं प्रशस्यते ॥
चाषो नकुलश्च वामगौ
दिवसार्द्धात्परतः शुभप्रदौ ।
मृगवच्च वनेषु कुक्कुराः
शतपत्रोऽस्तमये च दक्षिणः ॥

क्वचिदपवादमाह—

निरुपहतमनोज्ञवृक्षसंस्थाः
शुचिरुचिरावनिसस्यसंस्थिताश्च ।

V-7

शुभतिथिदिवसर्क्षलग्नकाले-
ष्वशुभफलोऽपि शुभप्रदः प्रदिष्टः ॥
प्रभग्नशुष्कद्रुमकण्टकेषु
श्मशानभस्मास्थितुषाकुलेषु ।
प्राकारशून्यालयदुर्दशेषु
सौम्योऽपि पापः शकुनः प्रकल्प्यः ॥

तथा—

द्वंद्वार्तरोगार्दितभीतमत्त-
वैरार्तयुद्धामिषकांक्षिणश्च ।
सीमान्तनद्यन्तरिताश्च सर्वे
न चिन्तनीयाः सदसत्फलेषु ॥
इति प्राणिशकुनः ।

---

अथाऽप्राणिनः । स एव—

रिक्तोऽनुकूलः कलशो जलार्थ-
मभ्युद्यतः सिद्धिकरः प्रयाणे ।
विद्यार्थिनां चौर्यसमुत्थितानां
वणिक्क्रियाभ्युद्यमिनामतीव ॥

विशेषमाह—

यानं धुरेण रहितं बृहता(?)च कन्या
गर्भेण चातिमहता पुरतः स्थिता स्त्री ।
आगच्छ तिष्ठ विश गच्छसि वा किमर्थं
शब्दः स्थिरश्च गमनं प्रतिषेधयन्ति ॥

क्षुते आह—

सर्वत्र पापक्षुतमुद्दिशन्ति
गोस्तु क्षुतं मृत्युकरं यियासोः ।
मार्जाररावः स्खलनं च यातु-
र्वस्त्रस्य भङ्गश्च न शोभनाय ॥

तथा—

द्रव्याणि शुक्लानि तुरङ्गमश्च
पूर्वेण याम्येन शवं च मांसम् ।

पश्चात्कुमारी दधि चातिशस्तं
सौम्येन गोब्राह्मणसाधवश्च ॥

तथा—

काकः शुभो दक्षिणतश्च तेषा-
मन्येषु देशेषु विपर्ययेण ॥

पूर्वदेशे दक्षिणः काकः शुभः । अन्यस्मिन्वाम इत्यर्थः ।

तथा—

क्रोशादूर्ध्वं शकुनविरुतं निष्फलं प्राहुरेके
तत्रानिष्टे प्रथमशकुने मानयेत्पञ्च षट् च ।
विज्ञो यामान्नृपतिरशुभे षोडशे वा द्वितीये
प्रत्यागच्छेत्स्वभवनमिति यद्यनिष्टस्तृतीयः ॥

प्रयाणे प्रथमं यत्राऽशकुनं जातं तत्रैव स्थित्वा एकादशयामानतिवाहयेत् । पुनः प्रस्थाने यद्यशकुनं ततः षोडश । ततोऽप्यशकुने गृहे आगमनम् । एवं शकुनानि ग्रहबलादीनि वीक्ष्य राजा स्वयं यायात् । स्वस्य ग्रहाद्यानुकूल्याभावे तद्वन्तं यशस्विनममात्यं जयार्थं प्रेषयेत् ।

यथोक्तं योगयात्रायाम्—

शत्रोर्वधाय सचिवं शुभदैवयुक्त-
माज्ञापयेन्नृपतिरात्मनि दैवहीने । इति ॥

ग्रहाद्यानुकूल्यं ज्योतिःशास्त्रादवगन्तव्यम् ।

---

## अथ स्कन्धावारस्थलम् ॥

नीतिसारे—

यायाद्वैरिपुराभ्याशे भूभागे साधुसंमते ।
स्कन्धावारविशेषज्ञः स्कन्धावारं निवेशयेत् ॥
भूमिप्रदेशे सामर्थ्यादगारमुपकल्पयेत् ।
गुप्तं स्वच्छं पुराकारं महाद्रिपसमावृतम् ॥
पार्ष्णिग्राहेण शुद्धं च रथपत्तिसमावृतम् ।
तन्मध्ये मानसाल्हादि महन्मौलं बलावृतम् ॥
अन्तःकोशग्रहोपेतं कारयेद्राजमन्दिरम् ।
मौलभूतश्रेणिसुहृद्द्विविधाटविकं बलम् ॥

राजहर्म्यं समावृत्य क्रमेण विनिवेशयेत् ।
अंते च गणिनः शूरान् लुब्धकान् दुष्टकर्मणः ॥
पर्याप्तवेतनानाप्तान्मंडले विनिवेशयेत् ।
हस्तिनो लब्धनामानस्तुरङ्गास्तु मनोजवाः ॥
गृहोपकण्ठे नृपतेर्वसेयुः स्वाप्तरक्षिताः ।
युद्धयोग्यो महामन्त्री सन्नद्धः साध्वधिष्ठितः ॥
तिष्ठेन्नरपतेर्द्वारि वेगवांश्च तुरङ्गमः ।
निशि तान्यो बहिर्गच्छेद्गच्छेच्चेद्द्वारि वारितः ।
सज्जोपकरणं तिष्ठेत्सर्वः कार्योन्मुखो जनः ॥

तथा—

बहिश्च खातान्सञ्छन्नान् तृणैरुपरि संवृतान् ।
परसैन्यविघातार्थं सर्वां भूमिं विनाशयेत् ॥
क्वचित्कण्टकशाखाभिः क्वचित्कीलैरयोमुखैः ।
दूषयेत्परितो भूमिं प्रच्छदप्रवरैरपि ॥
निगूढक्षुपपाषाणस्थाणुवल्मीकनिह्नुताम् ।

उत्तममध्यमभेदास्तत्रैव—

यस्मिन्देशे यथाकालं सैन्यव्यायामभूमयः ।
परस्य विपरीताश्च स्मृतो देशः स उत्तमः ॥
आत्मनश्च परेषां च तुल्यव्यायामभूमयः ।
यत्र मध्यम उद्दिष्टो देशः शास्त्रार्थचिन्तकैः ॥
अरातिसैन्यव्यायामसुपर्याप्तमहीतलः ।
आत्मनो विपरीतश्च स वै देशोऽधमः स्मृतः ॥

स्कन्धावारं विशिनष्टि कामन्दकः—

दिव्यान्तरिक्षैरुत्पातैः पार्थिवैश्चाप्यदूषितः ।
नीचैः प्रवृत्तपवनो भृंगालीततमंगलः ॥
हृष्टपुष्टजनः साधुः सुगन्धिज्वलिताननः ।
इत्यादिलक्षणोपेतः स्कन्धावारः प्रशस्यते ॥
शस्ते तस्मिन्द्विषो भंगो ज्ञेयोऽन्यस्मिन्विपर्ययः ।

शकुनाद्युपेते जयोऽशकुनाद्युपेते भङ्ग इत्यर्थः ।

सेनापतिरुक्तो नीतिसारे—

कुलोद्गतं जानपदं मन्त्रज्ञं मंत्रिसंमतम् ।
दण्डनीतेः प्रयोक्तारमध्येतारं च यत्नतः ॥
प्रभावोत्साहसंपन्नमाजीव्यमनुजीविनाम् ।
नित्याकारणवैराणामकर्तारमनाविलम् ॥
श्रुतानुवन्धिकर्माणमल्पामित्रं बहुश्रुतम् ।
गजाश्वरथचर्यासु शिक्षितं त्यागिनं सहम् ॥
युद्धभूमिविभागज्ञं सिंहवद्गूढविक्रमम् ।
अदीर्घसूत्रं निस्तंद्रममर्षणमनुद्धतम् ॥
हस्त्यश्वरथशस्त्राणां सम्यग्लक्षणवेदिनम् ।
देशभाषास्वभावज्ञं लिपिज्ञं सुदृढं स्मृतम् ॥
निशाप्रचारकुशलं कुशलज्ञाननिश्चितम् ।
दिग्देशमार्गविज्ञानसंपन्नं तद्गसेवितम ॥
क्षुत्पिपासाश्रमत्रासशीतवातोष्णवृष्टिभिः ।
आनाहितभयग्लानिं शत्रुपक्षभयावहम् ॥
भेत्तारं परसैन्यानां दुःसाध्याहितनिश्चयम् ।
भग्नानां च स्वसैन्यानामवष्टंभस्य कारकम् ॥
चरदूतप्रचारज्ञं महारंभफलोपमम् ।
शश्वत्संसिद्धकर्माणं सिद्धिकर्मनिषेवितम् ॥
इत्यादिलक्षणोपेतं कुर्वीत ध्वजिनीपतिम् ।

तस्य कृत्यमुक्तम्—

ध्वजिनीं च सदोद्युक्तः स गोपायेद्दिवानिशम् ।
नद्यद्रिवनदुर्गेषु यत्र यत्र भयं भवेत् ॥
सेनापतिस्तत्र तत्र गच्छेद्व्यूहीकृतैर्बलैः ।

व्यूहस्तु मकरश्येनसूचीशकटवज्रसर्वतोभद्रभेदात्षोढा ।
तेषां विनियोग उक्तो महाभारते—

यायाद्व्यूहेन महता मकरेण पुरोभये ।
श्येनेनोभयपक्षेण सूच्या वा धीरचक्रया ॥
पश्चाद्भये तु शकटं पार्श्वयोर्वज्रसंज्ञितम् ।

अन्ये च गरुडादयो व्यूहभेदा नोक्ताः । तेषामेष्वेवान्तर्भावात् ।

सर्वतः सर्वतोभद्रं भये व्यूहं प्रकल्पयेत् ।

रचनोक्ता नीतिसारे—

नायकः पुरतो यायात्प्रवीरपुरुषावृतः ।
मध्ये कलत्रं कोशश्च स्वामी फल्गु च यद्धनम् ॥
नायकः सेनापतिः । फल्गु अन्नादि तद्रक्षणीयमित्यर्थः ।
पार्श्वयोरुभयोरश्वा वाजिनां पार्श्वयो रथाः ।
रथानां पार्श्वयोर्नागा नागानां चाटवीबलम् ॥
पश्चात्सेनापतिः सर्वं पुरस्कृत्य कृती बलम् ।
यायात्सन्नद्धसैन्यौघैः खिन्नांश्चाश्वासयन् जनान् ॥
पूर्वं सेनापतेरग्रे यानमुक्तम्, अधुना पश्चाद्यानम् । अतो ज्ञायते अग्रे याता पश्चाद्याता चेति सेनापतिद्वयमिति ।
इति सेनापतिव्यूहनिरूपणम् ॥

---

अथ कूटयुद्धेन शत्रुमारणसमय उक्तो नीतिसारे—
दीर्घाध्वनि परिश्रान्तं क्षुत्पिपासाहितश्रमम् ।
व्याधिदुर्भिक्षमरकैः पीडितं दस्युविद्रुतम् ॥
घोराग्निभयवित्रस्तं वृष्टिवातसमाहतम् ।
पंकपांसुजलस्कन्धव्यस्तं श्वासातुरं तथा ॥
प्रसुप्तं भोजने व्यग्रमभूमिष्ठमसंस्थितम् ।
एवमादिषु जातेषु व्यसनेन समाकुलम् ॥
स्वसैन्यं साधु रक्षेत परसैन्यं च घातयेत् ।
विशिष्टो देशकालाभ्यां युक्तः प्रकृतिभिर्बलैः ॥
कुर्यात्प्रकाशयुद्धं च कूटयुद्धं विपर्यये ॥
कूटयुद्धं नाम विषाक्तशस्त्रादिना घातनं लोके प्रसिद्धम् ।
किंचिदुक्तं नीतिसारे—
पुरस्ताद्विषमे देशे पश्चाद्धन्यात्तु वेगवान् ।
जितमेवेत्यविश्वस्तं हन्याच्छत्रुं व्यपाश्रितः ॥
विलोभ्यापि परानीकमप्रमत्तो विनाशयेत् ।
अवस्करप्रायाद्रात्रौ (?) प्रजागरकृतश्रमम ॥
दिवा सुप्तं समाहन्यान्निद्राव्याकुलसैनिकम् ।
प्रातःसंगवसन्नद्धमपराह्णे विनाशयेत् ॥
निशि विस्रंभसंसुप्तं तत्सौप्तिकविधानवित् ।
इत्येवं कूटयुद्धेन हन्याच्छत्रून् लघूत्थितः ॥

वदन्ति सत्रमित्यादि सत्रवत्स प्रकीर्तितः ।
अरिनाशो महीपानां नयशास्त्रविशारद: ॥
साधु प्रमत्तं व्यवसायवर्ती
येन प्रकारेण परं निहन्यात् ।
चरैः समावेदिततत्प्रचारः
शङ्केत तेनैव ततोऽप्रमत्तः ॥
नियतमिति निहन्यात्कूटयुद्धेषु शत्रुं
नहि तिरयति धर्मं छद्मना शत्रुनाशः ।
अचकितमिव सुप्तं पाण्डवानामनीकं
निशि सुनिशितशस्त्रो द्रोणसूनुर्जघान ॥

अत्र ब्राह्मणवर्जं हन्यात् । ब्राह्मणं तु स्वस्य वधार्थमायान्तं निवारयेत् । यदा निवारणमपि कर्तुमशक्तस्तदा हन्यादेव ।

यथाह मनुः—
गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥
नाततायिवधे दोषो हन्तुर्भवति कश्चन । इति ॥

कात्यायनोऽपि—
आततायिनमायान्तमपि वेदान्तगं रणे ।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् । इति ॥

अतो जिघांसत एव विप्रस्य मारणं न सुप्तादेः । अत्र विज्ञानेश्वरः-मनुवाक्ये वाशब्दात्कात्यायनवाक्येऽप्यपिशब्दान्न ब्राह्मणवधे तात्पर्यम् । किंत्वेतादृशो ब्राह्मणोऽपि वध्यः किमुतान्य इतिकैमुतिकन्यायेनैतादृशान्यवधपरमित्याह । वस्तुतस्तु स्ववधोद्यतो ब्राह्मणोपि वध्य एव । पूर्वोक्तवचनयोः स्वार्थत्यागेऽसाधारणमानाभावात् । गालवस्तु अहनने दोषमाह—

उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम् ।
निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत् । इति ॥

आत्मघाती भवेदित्यर्थः ।

बृहस्पतिरपि—
स्वाध्यायिनं कुले जातं यो हन्यादाततायिनम् ।
अहत्वा भ्रूणहा स स्यान्न हत्वा भ्रूणहा भवेदिति ।

सर्वत एवात्मानं गोपायेदितिश्रुतिरपि। अतः स्ववधार्थमागच्छन्ब्राह्मणो वध्यः। परवधार्थं गच्छन्स्वयं न वध्य इति तात्पर्यम्। एतत्परमेव बार्हस्पत्यम्—

आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतम्।
यो न हन्याद्वधप्राप्तं सोऽश्वमेधफलं लभेदिति।

एवमेव चन्द्रिकाशयः। यत्तु धृष्टद्युम्नस्य द्रोणवधे कुत्सनं कृतं न तद्ब्राह्मणवधनिमित्तमेव किं तु न्यस्तशस्त्रवधनिमित्तं, तादृशस्य ब्राह्मणस्य वधेऽन्यापेक्षया दोषातिशयात्।

प्रजापीडनमुक्तं भारते—

उपरुंधन्ति राजानो भूतानि विविधानि च।
त एव विजयं प्राप्य वर्द्धयन्ति पुनः प्रजाः॥

तथा—तावल्लुण्ठेत्पीडयेच्च शत्रोः प्रकृतयः स्वयम्।
वशे जाते पुनस्तासु पितृवद्वृत्तिमाचरेत्॥

अथ धर्मरणमाह मनुः—

समोत्तमाधमै राजा त्वाहूतः पालयन् प्रजाः।
न निवर्तेत संग्रामात्क्षत्रधर्ममनुस्मरन्॥

तथा—आहवेषु मिथोऽन्योन्यं जिघांसंतो महीक्षितः।
युध्यमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः॥

## योधोपदेशः।

योधान्प्रत्युपदेश उक्तो वराहमिहिरेण—

अभिजनयुता यूयं शौर्यं जनाः कथयन्ति वो
धनुषि परशौ शक्त्यां चक्रे तथैव कृतश्रमाः।
मयि च भवतामस्ति स्नेहः कथं न जयो मम
द्विरदतुरगं स्यादाक्रान्तं भवद्भिरिदं यदा॥

तथा पुराणोपदेशैश्च तान्प्रवर्तयेत्। तथाहि—ज्योतिष्टोमादियज्ञैः स्वर्गाद्याप्तिस्तत्र च ज्ञानाद्यनेकं साधनं महत्कष्टायाससाध्यम्। तथोपासनायां पञ्चाग्न्यादितपस्सु च क्लेशादिकं स्पष्टमेव। योगोऽपि वायुनिरोधनाहारनिद्राव्यायामनिरोधनादिना दुःसाध्य एव। सर्वत्र च कीर्तने कृते पुण्यक्षयः। अतः सर्वापेक्षया रणमरणमेव स्वल्पायाससाध्यं साधीयः। तत्र हि पापिनामपि स्वर्गः किमुतान्यस्य।

तदुक्तं योगयात्रायाम्—

द्वैपायनेन मुनिना मनुना च धर्मा
युद्धेषु ये निगदिता विदितास्तु ते वः।
स्वाम्यर्थगोद्विजहिते त्यजतां शरीरं
लोका भवन्ति सुलभा विपुलं यशश्च ॥
तपस्विभिर्या सुचिरेण लभ्यते
प्रयत्नतः सत्रिभिरिज्यया च या।
व्रजन्ति तामाशु गतिं मनस्विनो
रणाश्वमेधे पशुतामुपागताः ॥
स्वर्गस्य मार्गा बहवः प्रदिष्टा-
स्ते कृच्छ्रसाध्याः कुटिलाः सविघ्नाः।
निमेषमात्रेण महाफलोऽय-
मृजुश्च पन्थाः समरे व्यसुत्वम्। इत्यपि ॥

तथा—

संरक्ष्यमाणमपि नाशमुपैत्यवश्य-
मेतच्छरीरमपहाय सुहृत्सुतार्थान्।
तत्किं वरं प्रलुठतः सुदृशां समक्षं
किं निघ्नतः परबलं भृकुटीमुखस्य ॥
हा तात मातेति च वेदनार्तः
किरन् शकृन्मूत्रकफानुलिप्तः।
वरं मृतः किं भवने किमाजौ
संदष्टदन्तच्छदभीमवक्त्रः ॥

तथा—

यस्य तपो न जनाः कथयन्ति
नो मरणं समरे विजयं वा।
न श्रुतदानमहाधनता वा
तस्य भवः कृमिकीटसमानः ॥
लोकोऽशुभस्तिष्ठतु तावदन्यः
पराङ्मुखानां समरेषु पुंसां।
पत्न्योऽपि तेषां न ह्रिया मुखानि

पुरस्सखीनामवलोकयन्ति ॥
शत्रुसैन्यमवदार्य वर्त्ततां
यत्सुखं तु कथयामि तादृशम् ।
शृण्वतां स्वयशसोपपल्लवान्
दिग्वधूवदनकर्णपूरकान् ॥
निपतति शिरसि द्विपस्य सिंहः
स्वतनुशताधिकमांसराशिमूर्तेः ।
पिबति च तदसृङ्मदेष्टगन्धं
वदनगतांश्च शनैः प्रमृज्य मुक्तान् ॥

भारते इन्द्राम्बरीषसंवादे, इन्द्रो यज्ञत्वेन रणवर्णनं कृत्वा तन्मध्ये यो मृतस्तस्य फलमाह—

भर्त्तुरर्थे तु यः शूरो विक्रमेद्वाहिनीमुखे ।
भयान्न विनिवर्त्तेत तस्य लोका यथा मम ॥
यश्च नावेक्षते कंचित्सहायं विजये स्थितः ।
जीवग्राहं प्रगृह्णाति तस्य लोका यथा मम ॥
आहवे निहतं शूलैर्न शोचेत कदाचन ।
अशोच्यो हि हतः शूरः स्वर्गलोके महीयते ॥
न ह्यन्नं नोदकं तस्य न स्नानं नाप्यशौचकम् ।
हतस्य कर्त्तुमिच्छन्ति तस्य लोकान् शृणुष्व मे ॥
वराप्सरस्सहस्राणि शूरमायोधने हतम् ।
त्वरमाणाः प्रधावन्ति मम भर्त्ता भवेदिति ॥
एतत्तपश्च पुण्यं च धर्मश्चैव सनातनः ।
चत्वारश्चाश्रमास्तस्य यो युद्धे न पलायते ॥

तथा—

नहि शौर्यात्परं किंचित्त्रिषु लोकेषु विद्यते ।
शूरः सर्वं पालयति सर्वं शूरे प्रतिष्ठितम् ॥
चराणामचरा अन्नमदंष्ट्रा दंष्ट्रिणामपि ।
अपाणयः पाणिमतामन्नं शूरस्य कातराः ॥
समानपृष्ठोदरपाणिपादाः
पश्चाच्छूरं भीरवोऽनुव्रजन्ति ।

अतो भयार्त्ताः प्रणिपत्य भूयः
कृत्वाञ्जलीनुपतिष्ठन्ति शूरान् ॥

योगयात्रायामपि—

रुचिमत्कुचबाहुपञ्जरे
हरिणाक्ष्यः प्रवरोरुपीडनम् ।
रमयन्ति विमानसंस्थिताः
सुरवध्वोऽतिमुदारिणार्चितान् ॥

एकतोऽस्य सुरसुन्दरीजनः
श्रीः प्रतीच्छति युयुत्सतोऽन्यतः ।
पाप्मना सह पलायते यशः-
श्चैकतः कुलकलंककारकम् ॥

तथा—

चित्रं किमस्मिन्त्वद साहसं वा
यत्स्वामिनोर्थे गणयन्ति नासून् ।
युद्धात्प्रणष्टो विदितोऽरिमध्ये
यद्वालिशस्तिष्ठति साहसं तत् ॥

न केवलं गात्रविभूषणानि
क्षतानि शूरस्य रणे कृतानि ।
यशस्तरोर्मूलकृषिक्षतानि
तान्येव वंशस्य विभूषणानि ॥

भंगे जाते प्रत्यावृत्तौ फलातिशयस्तत्रैव ।

भग्नेषु योधेष्ववपूर्य शस्त्रा-
ण्याजौ प्रवृत्ता व्यसवः कृता ये ।
ऊर्ध्वाननना वाजिकृताप्तलोका-
स्तेषां विमानान्यवलोकयन्ति ॥

अश्वमेधप्राप्तलोकेभ्योऽप्युत्तमं लोकं यान्तीत्यर्थः ।

यैरश्वमेधो विहितः फलं वा
देवैर्द्विजैर्वा श्रुतिशास्त्रकारैः ।
तैरेव भङ्गे प्रतिलोमगस्य
पदे पदे वाजिमखः प्रदिष्टः ॥

संमूर्छितं संयुगसंप्रहारैः
पश्यंति सुप्तप्रतिबुद्धतुल्यम् ।
आत्मानमंकेषु सुरांगनानां
मंदाकिनीमारुतवीजितांगाः ॥

यत्तु पराशरवचनं—

द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखं हतः । इति ॥

तत्र परिव्राज इव रणहतस्यापि मोक्ष इति केचिद्व्याचक्षते । युक्तं तु तमेव विदित्वातिमृत्युमेतीत्यादिभिः श्रुतिभिर्मोक्षं प्रति ज्ञानस्यैव साधनत्वावगमाद्रणस्य च ज्ञानसाधनत्वाभावेन ज्ञानानुत्पत्तेर्न मोक्ष इति । यत्तु वचनं न तदसाधारण्येन रणस्य मोक्षफलं ब्रवीति । योगयुक्तश्चेति पदं योगे जाते ज्ञानोत्पत्तेः प्राङ् मृतस्य ये लोकास्ते रणमृतस्य भवन्तीत्येतत्परत्वेनाप्युपपन्नं न रणमरणस्य मोक्षसाधनत्वं गमयति । योगस्य तु मुक्त्यहेतुत्वमेतेन योगः प्रत्युक्त इति सूत्रे निरूपितमुत्तरमीमांसायाम् । यस्तु काशीमरणेन मोक्ष इति तत्रापि न काशीमरणं साधनं किंतु ज्ञानमेव । ज्ञानं च विशिष्टगुरोः शिवस्योपदेशाच्छीघ्रमेव जायत इति । विस्तरस्तु विस्तरभिया नेह प्रतन्यत इति दिक् । भगवद्गीतायामपि श्रीभगवता युद्धमेव क्षत्रियस्योत्कृष्टमुक्तम्—

स्वधर्ममपि चावेक्ष्य न विकंपितुमर्हसि ॥
धर्म्याद्धि युद्धाच्छ्रेयोन्यत्क्षत्रियस्य न विद्यते ।
यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ।
अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ।
अकीर्त्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ॥
संभावितस्य चाकीर्त्तिर्मरणादतिरिच्यते ।
भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ॥
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ।
अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ॥
निंदन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ।

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ॥
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः । इति ।

तथा विशेषो भारते—

गजो गजेन यातव्यस्तुरगेण तुरङ्गमः ।
रथिना च रथी योज्यः पत्तिना पत्तिरेव च ॥
यथायोग्यं तु संयोज्य घ्नन् धर्मेण न हीयते ।

एवमसंभवे प्रकार उक्तः कामन्दकेन—

अश्वस्य प्रतियोद्धारो भवन्ति पुरुषास्त्रयः ।
प्रतिकल्पास्तु पंचाश्वा विधेयाः कुञ्जरस्य च । इति ॥

पलायने दोषमाह मनुः—

यस्तु भीतः परावृत्तः संग्रामे हन्यते परैः ।
यत्किंचिद्दुष्कृतं भर्तुस्तत्सर्वं प्रतिपद्यते ॥
यच्चास्य सुकृतं किंचिदमुत्रार्थमुपार्जितम् ।
भर्ता तत्सर्वमादत्ते परावृत्तहतस्य च ॥

उपदेशो योगयात्रायाम्—

जीवतोऽपि निहतस्य वा रणे
धर्म एव हि नरस्य युध्यतः ।
निश्चयात्तु मरणं हि संगरे
नैव भीरुरजरामरः क्वचित् ॥
मानमात्रमवलंब्य युध्यते
कीटकोऽथ विहगोऽथवा पशुः ।
को हि नाम पुरुषस्त्यजेद्रणं
स्वर्गमानसुखकीर्तिवित्तदम् ॥

नारायणोऽपि—

यदि समरमपास्य नास्ति मृत्यो-
र्भयमिति युक्तमतोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वम् । इति ॥

अवध्यानाह मनुः—

न च हन्यात्स्थलारूढं न क्लीबं न कृताञ्जलिम् ।

न मुक्तकेशमासीनं न तवास्मीति वादिनम् ॥
न सुप्तं न विसन्नाहं न नग्नं न निरायुधम् ।
नायुध्यमानं पश्यन्तं न परेण समागतम् ॥
न भीतं न परावृत्तं सतां धर्ममनुस्मरन् ।

राजधर्मेषु—

वृद्धो बालो न हन्तव्यो नैव स्त्री नैव च द्विजः ।
तृणपूर्णमुखश्चैव तवास्मीति च यो वदेत् ॥

शंखः—

न पानीयं पिबन्तं न भुञ्जानं नोपानहौ प्रमुञ्चन्तं नावर्माणं सवर्मा न स्त्रियं न करेणुं न वाजिनं न सारथिं न दूतं न ब्राह्मणं न राजानमराजा हन्यात् ।

रणे च दानमुक्तं नीतिसारे—

प्रत्यग्रे कर्मणि कृते श्लाघमानः कृतादरः ।
योधेभ्यस्तु ततो दद्यात्को हि दातुर्न युध्यते ॥

तथा—

रूप्यं हेम च कुप्यं यो यो यज्जयति तस्य तत् ।
दद्याद्वस्त्वनुरूपं च हृष्टो योधान्प्रहर्षयन् । इति ॥

इति वीरोत्साहगर्भं धर्मयुद्धम् ।

---

एवं राजा परराष्ट्रं विजित्य ता एव प्रजाः पितृवत्पालयेत् । तच्चोक्तं पूर्वमेव । अथ वीरोत्साहगर्भो निन्दापरिहारः भारते—युधिष्ठिरप्रश्नो भीष्मं प्रति ।

क्षत्रधर्मान्न पापीयान् धर्मोऽस्ति भरतर्षभ ।
अभियाने च युद्धे च राजा हन्ति महाजनम् ॥
अथ स्म कर्मणा केन लोकान् जयति पार्थिवः ।
विद्वन् जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥
निग्रहेण च पापानां साध्वनुग्रहणेन च ।
यज्ञैर्दानैश्च राजानो भवन्ति शुचयोऽमलाः ॥
उपरुन्धन्ति राजानो भूतानि विजयार्थिनः ।
त एव विजयं प्राप्य वर्द्धयन्ति पुनः प्रजाः ॥
अपविध्यति पापानि दानयज्ञतपोबलैः ।

अनुग्रहेण भूतानां पुण्यमेषां विवर्द्धते ॥
एवं शस्त्राणि मुञ्चन्तो घ्नन्ति वध्याननेकधा ।
तस्यैषा निष्कृतिर्दृष्टा भूतानां भावनं पुनः ॥
यो भूतानि धनाज्ज्यात्या वधात्क्लेशाच्च रक्षति ।
दस्युभ्यः प्राणदानाच्च स धर्मः सुखदो विराट् ॥
स सर्वयज्ञैरीजानो राजाथाभयदक्षिणः ।
अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकताम् ॥
ब्राह्मणार्थे समुत्पन्ने योऽभिनिःसृत्य युद्धयते ।
आत्मानं यूथमुत्सृज्य स यज्ञोऽनन्तदक्षिणः ॥
आभीतो विकिरन् शत्रून् प्रतिगृह्णन् शरांस्तथा ।
न तस्मात्त्रिदशाः श्रेयो भुवि पश्यन्ति किंचन ॥
यस्य यावन्ति शस्त्राणि तनुं भिन्दन्ति संयुगे ।
तावतः सोऽश्नुते लोकान् सर्वान्कामदुघोऽक्षयान् ॥
यदस्य रुधिरं गात्रादाहवेषु प्रवर्तते ।
सह तेनैव रक्तेन सर्वपापैः प्रमुच्यते ॥
यानि दुःखानि सहते व्रणानामभिपातने ।
न तपोभिस्ततो भूय इति धर्मविदो विदुः ॥

तथा—

पतत्यभिमुखः शूरः पराङ्भीतः पलायते ।
आस्थाय स्वर्ग्यमध्वानं सहायान्विषमे त्यजेत् ॥
मा स्म तांस्तादृशांस्तात भरिष्ठाः पुरुषाधमान् ।
ये सहायान् रणे हित्वा स्वस्तिमन्तो गृहान्ययुः ॥
अस्वस्ति तस्मै कुर्वन्ति देवा इन्द्रपुरोगमाः ।
त्यागेन यः सहायानां स्वप्राणांस्त्रातुमिच्छति ॥
संहन्युः काष्ठलोष्टैर्वा दहेयुर्वा कटाग्निना ।
पशुवन्मारयेयुर्वा क्षत्रिया ये ह्यनीदृशाः ॥

अनीदृशः अभीरवः शूरा इत्यर्थः ।

अधर्मः क्षत्रियस्यैष यच्छय्यामरणं भवेत् ।
विसृजन् श्लेष्मपित्तानि कृपणं परिदेवयन् ॥
अविक्षतेन देहेन प्रलयं योऽधिगच्छति ।

क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः ॥
न गृहे मरणं तात क्षत्रियाणां प्रवर्त्तते ।
शौंडीराणामशौण्डीरमधर्मकृपणं च यत् ॥
रणेषु कदनं कृत्वा ज्ञातिभिः परिवारितः ।
तीक्ष्णैः शस्त्रैः सुनिर्भिन्नः क्षत्रियो वधमर्हति ॥
शूरो हि सत्वमन्युभ्यामाविद्धो युद्ध्यते भृशम् ।
कृन्त्यमानानि गात्राणि परैर्नैवावबुध्यते ॥
स संख्ये निधनं प्राप्य प्रशस्तं लोकपूजितम् ।
स्वधर्मं विपुलं प्राप्य शक्रस्यैति सलोकताम् ॥
यत्र तत्र हतः शूरः शत्रुभिः परिवारितः ।
अक्षयान् लभते लोकान् यदि दैन्यं न भाषते ॥
इति वीरोत्साहगर्भो विचिकित्सापरिहारः ॥

---

## अथ क्रीडा ।

नृपादृतां राजनीतिमुक्त्वा शंकरनन्दनः ।
श्रीनीलकंठो वदति क्रीडां बुद्धिबलाश्रिताम् ॥
पटे फले वा भुवि वाथकार्यं
प्रागग्रेवानवकं तथैव ।
उदग्दिगग्रं नवकं समान-
मेवं चतुःषष्टिपदं हि तत्स्यात् ॥
कोणेष्वथो हंसपदैस्तदंकये-
त्तत्पंक्तिगं दिक्षु पदद्वयं द्वयम् ।
मध्ये चतुष्कं च समंक्य तत्र
स्थाप्यं च सांग्रामिकसैन्ययुग्मम् ॥
अन्त्येष्वष्टपदेषु मध्यपदयो राजा च मन्त्री तयो-
रुष्ट्रौ पार्श्वगतौ तयोरपि तथा वाहौ तयोर्दन्तिनौ ।
तल्लग्नाधरपंक्तिगा वसुमिता स्थाप्या बुधैः पत्तयः
स्थाप्यं चाप्यपरत्र सैन्यमुभयं चैवं रणायोद्यतम् ॥
राजा दिक्षु विदिक्षु चाष्टपदगो मन्त्री विदिङ्मात्रग-
श्चैकैकं करभस्तु शृंखलतया मध्यं विहायापरम् ।
वाजी दिक्पदतो विदिग्गतपदेष्वष्टस्वथो कुञ्जरः

पंक्तौ सर्वपदेष्ववक्रगतिमान् पत्तिः पुरो गच्छति ॥
एकैकं विनिहन्ति वक्रगमनेनैवं पदे चान्तिमे
प्राप्तो मन्त्रविदेष जायत इतौ वृत्तः पदे पूर्वगे ।
अन्ते हंसपदे स चेदुपगतस्तत्रैव मन्त्री भवे-
न्नो पूर्वं परिवर्तनेन कथिता भाषेह सम्यक्क्रमात् ॥
अनावृत्तिपरावृत्तिभिदा क्रीडा द्विधेष्यते ।
पदतत्स्थाप्यभेदेन तत्राप्याद्या द्विधा मता ॥
सचिवाग्रगतौ ततः पदाती
सचिवौ तावनु तत्र चालनीयौ ।
पदयुग्ममितीह संप्रदायः
पदगोऽन्योऽपि परैः प्रवर्त्यतेऽत्र ॥
गतागते हयोष्ट्रयोर्नचान्तरा निवर्तकः ।
पुरःस्थिता हयादयो गजस्य ते निवर्तकाः ॥
मन्त्रिणः पृष्ठकोणस्थौ स्थाप्यौ पत्ती स्थिरावुभौ ।
तथा क्रमेलकस्यापि पश्चाच्छृंखलगावुभौ ॥
व्यूहद्वयमिदं चक्रव्यूहवत्परमारणे ।
द्वित्रिप्रकारोद्यमनं दुरोखशः प्रकीर्त्तितः ॥
परस्य राज्ञोऽभिमुखं द्विपं संस्थाप्य मध्यतः ।
स्वीयान्यस्यापसरणात्काटीशः स प्रकीर्त्तितः ॥
न सांग्रामिकः कोऽपि संस्थापनीयो
विना संश्रयं संश्रयो नीच इष्टः ।
न वै संश्रयो भूपतेरन्य इष्टो
न वा मारणं भूपतेस्त्विष्टमेव ॥
संरोधनं राजजयोमतोऽत्र
तदर्द्धतैकाकितया प्रदिष्टा ।
सा चेच्चतुःषष्टिमिता क्रमेण
स्युर्यस्य सोऽप्यत्र पराजितः स्यात् ॥
राजा विरुद्धेशयुतो न चेत्स्यात्
न चास्य पक्षे गतिमान् द्वितीयः ।
प्रमापयेत्सोऽस्य विपक्षपक्षे

समीपगं स्वस्य निरोधनक्षमम्
निरुध्यमानस्य नृपस्य सार्थे
शिष्येत यद्येकतरस्तदैव ।
तत्क्रीडकः संगणयेत्प्रतीपां-
स्तेष्वात्मनो द्वावथ तान् द्विनिघ्नान् ॥
कृत्वा तदंकान् गणयेत्प्रतीप-
क्रीडाश्चतुःषष्टिमिताः स हीनः ।
तन्मध्य एवास्य पराजयः स्या-
त्ततोऽधिकोऽसौ विपरीतकश्च ॥

अथाश्वस्य चतुःषष्टिपदगमनप्रकारः सिंहलद्वीपराज्ञः श्लोकौ—

सिंनहीवनिवप्रज्ञापाकंश्रीदेमनोविल
वाहलश्मद्दुनंतंतिमेपेतुणपधाजिकु ।
श्रीसिंहणमहीपालमेधाविकुलकं बहु
पदेन वाजिनो ज्ञानं चलनं प्रतिवेश्मनि ॥

अत्र चतुःषष्टिपदं मंडलं कृत्वा तत्र नैर्ऋतीमारभ्य सिंनहीत्यादि-श्लोकाक्षराणि वाचयन्नश्वं नयेत् । इति ।

अथ तातचरणानां श्लोकौ—

निनाशंत्रिशमेजन्हकछद्माभिपणाश्वसा ।
एविरोतिषभूरानिवाष्प्रवेहाष्टिहंयगे ॥
नारायणान्हरामेशभूजनिः प्रतिसद्मनि ।
निनाय शंकरो वाहं स्वगेहात्सत्त्रिषष्टिभित् ॥

अथ मामकः प्रकारः—

आद्यं वस्वेकमष्टद्विशिखिविधुपदं वह्निजं नंदिसंज्ञं
नंदैकं पञ्चयुग्मं शरहरनयनं खाशुगं त्रित्रियुक्तम् ।
अश्वद्विव्योमचन्द्रं युगमितमुडुराडक्षिषट्त्रित्रिपञ्चो-
पांत्येवस्वब्धिभूमिज्वलनमुदधिकुद्वैरदं त्रिद्विषष्ठम् ॥
षट्चन्द्रं नेत्रयुग्मं मुनिजमुदधिहङ्नंदब्रह्मयाशुगाब्धि
व्योमर्त्वब्धीषु वेत्थं पुनरयनयदितो वाजिनं नीलकंठः ।

इति श्रीमीमांसकशङ्करभट्टात्मजभट्टनीलकण्ठकृते भगवद्भास्करे नीतिमयूखः समाप्तः ।

---

भगवंतभास्करे

मीमांसकश्रीनीलकण्ठभट्टविरचितः

# व्यवहारमयूखः

कुनवारशिवनाथसिंहसेंगरेण हिंदीभाषायां श्रीभगवन्तदेवस्य
लिखितसंक्षिप्तवृत्तान्तेनसहितः

( षष्ठः )

घारेइत्युपाह्वमहादेवशर्मणा लेलेइत्युपाह्वव्यंकटेशशास्त्रिणाच
संशोधितः ।



चौखम्बा संस्कृत प्रतिष्ठान
( प्राच्यभारती के प्रकाशक एवं वितरक )
३८ यू. ए., जवाहरनगर, बंगलो रोड
दिल्ली ११०००७

# व्यवहारमयूखस्थविषयाणामनुक्रमणिका ।

# व्यवहारमयूखः

षष्ठः ६

श्रीगणेशाय नमः

उक्त्वा नृपनयरीतिं
नत्वा भास्वत्पदाम्बुजं सम्यक् ।
विरचयति नीलकण्ठो
व्यवहारविनिर्णये किञ्चित् ॥ १ ॥

द्विजराजैकमूर्धन्यं वृषाध्यक्षं शिवान्वितम् ।
काश्यां सर्वोपदेष्टारं भावये शंकरं गुरुम् ॥ २ ॥
विरोधिमार्गद्वयदर्शनार्थं द्वेधा बभूवात्र परः पुमान्यः ।
श्रीशंकरो भट्ट इहैकरूपो मीमांसकाद्वैतमुरीचकार ॥ ३ ॥
प्रतारकैरादृतमत्र किंचिन्मया तु निर्मूलतया तदुज्झितम् ।
ऊनोक्तिता नात्र हि तेन काचित्खपुष्पहीनापचिति र्न हीयते॥४॥

विप्रतिपद्यमाननरान्तरगताज्ञाताधर्मज्ञापनानुकूलो व्यापारो व्यवहारः । वादिप्रतिवादिकर्तृकः संभवद्भोगसाक्षिप्रमाणको विरोधिकोटिव्यवस्थापनानुकूलो वा व्यापारः सः । संप्रतिपत्त्युत्तरे तु व्यवहारपदप्रयोगो भाक्त इति मदनरत्ने । वादवितण्डादिव्यावृत्त्यर्थमुत्तरदलम् ।

## अथ तत्पदम् ।

याज्ञवल्क्यः—

स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति यद्राज्ञे व्यवहारपदं हि तत् ॥ ( व्य० श्लो० ५ )

आधर्षितस्तिरस्कृतः । तस्याष्टादशभेदानाह मनुः—

तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः ।
संभूय च समुत्थानं दत्तस्यानपकर्म च ॥
वेतनस्यैव चादानं संविदश्च व्यतिक्रमः ।
क्रयविक्रयानुशयो विवादः स्वामिपाल्योः ॥

सीमाविवादधर्मश्च पारुष्ये दंडवाचिके ।
स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च ॥
स्त्रीपुंधर्मौ विभागश्च द्यूतमाह्वय एव च ।
पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥ इति।(अ.८श्लो० ४–७)

अनपकर्मोप्रदानम् । अनुशयः पश्चात्तापः । द्यूतमप्राणिकरणिका क्रीडा । प्राणिकरणिका समाह्वयः । अत्र–' मनुष्यमारणं स्तेयं परदाराभिमर्शनम् । पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम् ' इति बृहस्पत्युक्तेः स्त्रीसंग्रहणवाक्पारुष्यदण्डपारुष्याणां साहसभेदेऽपि पृथङ्निर्देशो गोबलीवर्दन्यायेन । एतेषां चाष्टादशपदानां स्वरूपमग्रे व्यक्तीकरिष्यते ।

---

## अथ व्यवहारमातृकाः

बृहस्पतिः—

दुर्गमध्ये गृहं कुर्याज्जलवृक्षाश्रितं पृथक् ।
प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्यां कल्पयेत्सभाम् ॥

सैव च धर्माधिकरणम् ,

धर्मशास्त्रविचारेण सारासारविवेचनम् ।
यत्राधिक्रियते स्थाने धर्माधिकरणं हि तत् ॥

इति कात्यायनोक्तेः । मनुः—

व्यवहारान्दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः ।
मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत्सभाम् ॥
विनीतवेषाभरणः पश्येत्कार्याणि कार्यिणाम् । (अ०८ श्लो० १–२)

याज्ञवल्क्यः—

व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ।
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥ ( व्य० श्लो० १ )

नृपः प्रजापालनाधिकृतो यः कश्चिन्न क्षत्रिय एव ।

कात्यायनः—

सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः ।
ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः ॥

अत्र ब्राह्मणोऽनियुक्तः सभ्यास्तु नियुक्ताः । तथाचोक्तं—
नियुक्तो वाऽनियुक्तो वा धर्मज्ञो वक्तुमर्हति । इति ।

प्राड्विवाकस्वरूपमाह बृहस्पतिः—

विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च ।
नयपूर्वं प्राग्वदति प्राड्विवाकस्ततः स्मृतः ॥ इति ।

अमात्यस्वरूपमाह व्यासः—

सर्वशास्त्रार्थवेत्तारमलुब्धं न्यायभाषिणम् ।
विप्रं प्राज्ञं क्रमायातममात्यं स्थापयेद्द्विजम् ॥ इति ।

अत्र पुनर्द्विजग्रहणं विप्राभावे क्षत्रियवैश्ययोरुपादानार्थम् । तथा च कात्यायनः—

यत्र विद्वान्न विप्रः स्यात्क्षत्रियं तत्र योजयेत् ।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥

सभ्यांश्चाह याज्ञवल्क्यः—

श्रुताध्ययनसंपन्ना धर्मज्ञाः सत्यवादिनः ।
राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः॥ इति।(व्य०श्लो०२)

एतेषां संख्यामाह बृहस्पतिः—

लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा ।
यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा ॥ इति ।

स एव—

शब्दाभिधानतत्त्वज्ञौ गणनाकुशलौ शुची ।
नानालिपिज्ञौ कर्तव्यौ राज्ञा गणकलेखकौ ।

शब्दः शब्दशास्त्रम् । अभिधानं कोशः । कात्यायनः—

श्रोतारो वणिजस्तत्र कर्तव्या न्यायदर्शिनः ।

तत्र सभायाम् । बृहस्पतिः—

आकारणे रक्षणे च साक्ष्यर्थिप्रतिवादिनाम् ।
सभ्याधीनः सत्यवादी कर्तव्यस्तु स्वपूरुषः ।

अयं च शूद्र एव । तथाच व्यासः—

साध्यपालस्तु कर्तव्यो राज्ञा साध्यस्य साधकः ।
क्रमायातो दृढः शूद्रो सभ्यानां च मते स्थितः ॥ इति ।

याज्ञवल्क्यः—

अपश्यता कार्यवशाद्व्यवहारान्नृपेण तु ।
सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित् ॥ (व्य०श्लो०३ )

नृपाध्यक्षादीनां कार्यमाह बृहस्पतिः—

वक्ताध्यक्षो नृपः शास्ता सभ्याः कार्यपरीक्षकाः ।
गणको गणयेदर्थं लिखेन्न्यायं च लेखकः ।

स एव—

पूर्वमुखस्तूपविशेद्राजा सभ्या उदङ्मुखाः ।
गणकः पश्चिमास्यस्तु लेखको दक्षिणामुखः ॥

राजसभातो निर्णायकान्तरमाह याज्ञवल्क्यः—

नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च ।
पूर्वं पूर्वं गुरु ज्ञेयं व्यवहारविधौ नृणाम् ॥ (व्य० श्लो० ३० )

नृपेणाधिकृताः प्राड्विवाकादयः, पूगाः नानाकर्मोपजीविनामेकग्रामस्थविजातीयानां समूहाः, पूगविपरीताश्च श्रेणयः, कुलानि ज्ञातिसंबन्धिबन्धूनां समूहाः ।

बृहस्पतिरपि—

ये चारण्यचरास्तेषामरण्ये करणं भवेत् ।
सेनायां सैनिकानां तु सार्थेषु वणिजां तथा ॥

करणं सभा । व्यवहारदर्शने कालमाह कात्यायनः—

सभास्थानेषु पूर्वाह्णे कार्याणां निर्णयं नृपः ।
कुर्याच्छास्त्रप्रणीतेन मार्गेणाऽमित्रकर्शनः ॥
दिवसस्याष्टमं भागं मुक्त्वा भागत्रयं तु यत् ।
स कालो व्यवहाराणां शास्त्रदृष्टः परः स्मृतः ॥ इति ।

आद्ययामार्द्धमष्टमो भागस्तदुत्तरमावर्त्तनात् प्राचीनं भागत्रयम् ।

वर्ज्यास्तिथीश्चाह संवर्त्तः—

चतुर्दशी ह्यमावास्या पौर्णमासी तथाष्टमी ।
तिथिष्वासु न पश्येत व्यवहारान्विचक्षणः ॥ इति ।

बृहस्पतिः—

पूर्वाह्णे तामधिष्ठाय वृद्धामात्यानुजीविभिः ।
पश्येत्पुराणधर्मार्थशास्त्राणि श्रृणुयात्तथा ॥

तां सभाम् । अर्थशास्त्रं नीतिशास्त्रम् । धर्मशास्त्रार्थशास्त्रयोर्विप्रतिपत्तावाह नारदः—

यत्र विप्रतिपत्तिः स्याद्धर्मशास्त्रार्थशास्त्रयोः ।

अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत् ॥ इति ।

धर्मशास्त्रयोर्विरोधे त्वाह याज्ञवल्क्यः—

स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः । ( व्य० श्लो० २१ )

न्यायमनालोचयतो दोषमाह बृहस्पतिः—

केवलं शास्त्रमाश्रित्य न कर्त्तव्यो हि निर्णयः ।
युक्तिहीने विचारे तु धर्महानिः प्रजायते ॥ इति ।

देशाचाराद्यप्यालोचयेदित्याह—

देशजातिकुलानां च ये धर्माः प्राक्प्रवर्तिताः ।
तथैव ते पालनीयाः प्रजाः प्रक्षुभ्यतेऽन्यथा ॥
जनापरक्तिर्भवति बलं कोशश्च नश्यति ।
उद्वुह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ॥
मध्यदेशे कर्मकराः शिल्पिनश्च गवाशिनः ।
मत्स्यादाश्च नराः पूर्वे व्यभिचाररताः स्त्रियः ॥
उत्तरे मद्यपा नार्यः स्पृश्या नृणां रजस्वलाः ।
अनेन कर्मणा नैते प्रायश्चित्तदमार्हकाः ॥ इति ।

पूर्वे प्राच्याः । क्वचित्सर्वे इति पाठः । सर्वे ब्राह्मणाद्याः । दमो दण्डः । यत्वत्र प्रायश्चित्तादिस्मरणं तदेतद्वाक्यानुपात्तदेशपरमिति केचित् । अन्ये तु प्रायश्चित्तरूपो यो दम इति व्याचक्षाणा दण्डाभावमात्रम्, अन्यदेशे दण्डः प्रायश्चित्तं चेत्याहुः ।

व्यासः—

वणिक्शिल्पिप्रभृतिषु कृषिरङ्गोपजीविषु ।
अशक्यो निर्णयो ह्यन्यैस्तज्ज्ञैरेव तु कारयेत् ॥

मनुः—

आश्रमेषु द्विजातीनां कार्ये विवदतां मिथः ।
न विब्रूयान्नृपो धर्मं चिकीर्षन् हितमात्मनः ॥ इति । (८।३९०)

कात्यायनः—

काले कार्यार्थिनं पृच्छेत्प्रणतं पुरतः स्थितम् ।
किं कार्यं का च ते पीडा माभैषीर्ब्रूहि मानव ॥
केन कस्मिन्कदा कस्मात् पृच्छेदेवं समागतम् ।
एवं पृष्टः स यद्ब्रूयात्स सभ्यैर्ब्राह्मणैः सह ॥

विचार्य कार्यं न्याय्यं चेदाह्वानार्थमतः परम् ।
मुद्रां वा निक्षिपेत्तस्मिन् पुरुषं वा समादिशेत् ।।

नारदः—

वक्तव्यार्थे ह्यतिष्ठन्तमुत्क्रामन्तं च तद्वचः ।
आसेधयेद्विवादार्थी यावदाह्वानदर्शनम् ।।

आसेद्धस्य चातुर्विध्यमाह स एव—

स्थानासेधः कालकृतः प्रवासात्कर्मणस्तथा ।।
चतुर्विधः स्यादासेधस्तमासिद्धो न लंघयेत् ।

आसिद्धस्याऽऽसेधातिक्रमे दण्डमाह स एव—

आसेधयोग्ये आसिद्ध उत्क्रामन्दण्डमर्हति ।

कचिदासेद्धुरेव दण्डमाह स एव—

यस्त्विन्द्रियनिरोधेन व्याहारोच्छ्वसनादिभिः ।
आसेधयेदनासेध्यैः स दण्ड्यो न त्वतिक्रमात् ।। इति ।

कचिदासेधातिक्रमे दण्डाभावमाह नारदः—

नदीसंतारकान्तारदुर्देशोपप्लवादिषु ।
आसिद्धस्तंपरासेधमुत्क्रामन्नापराध्नुयात् ।। इति ।

अनासेध्यानासेद्धुर्दण्डमाह कात्यायनः—

आसेधयंस्त्वनासेध्यं राज्ञा शास्य इति स्थितिः । इति ।

अनासेध्यानाह स एव—

वृक्षपर्वतमारूढा हस्त्यश्वरथनौस्थिताः ।
विषमस्थाश्च ते सर्वेऽनासेध्याः कार्यसाधकैः ।।
व्याध्यार्त्ता व्यसनस्थाश्च यजमानस्तथैव च ।

नारद आह्वाने व्यवस्थामाह—

अकल्पबालस्थविरविषमस्थक्रियाकुलान् ।
कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान् ।।
मत्तोन्मत्तप्रमत्तार्त्तभृत्यान्नाह्वानयेन्नृपः ।
न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् ।।
सर्ववर्णोत्तमां कन्यां ता ज्ञातिप्रभुकाः स्मृताः ।
तदधीनकुटुंबिन्यः स्वैरिण्यो गणिकाश्च याः ।।

निष्कुला याश्च पतितास्तासामाह्वानमिष्यते ।
ज्ञात्वाभियोगं येऽपि स्युर्वने प्रव्रजितादयः ॥
तानप्याह्वानयेद्राजा गुरुकार्येष्वकोपयन् ।
कालं देशं च विज्ञाय कार्याणां च बलाबलम् ॥
अकल्पादीनपि शनैः शनैराह्वानयेन्नृपः ।

यानैरिति क्वचित्पाठः । आहूतोऽनागच्छन्दण्ड्यः ।

तथा च बृहस्पतिः—

आहूतो यत्र नागच्छेद्दर्पाद्बन्धुकुलान्वितः ।
अभियोगानुरूपेण तस्य दण्डं प्रकल्पयेत् ॥

अभियोगभेदेन दण्डभेदमाह कात्यायनः—

हीने कर्मणि पञ्चाशन्मध्यमे तु शतावरः ।
गुरुकार्येषु दण्डः स्यान्नित्यं पञ्चशतावरः ॥ इति ।

आहूतस्यागमने यत्कार्यं तदाह पितामहः—

सभायाः पुरतः स्थाप्योऽभियुक्तो वादिना तथा । इति ।

तृतीया सहार्थे । कात्यायनः—

तत्राभियोक्ता प्रब्रूयादभियुक्तस्त्वनन्तरम् ।
तयोरन्ते सदस्यास्तु प्राड्विवाकस्ततः परम् ॥

बृहस्पतिः—

अहंपूर्विकया यातावर्थिप्रत्यर्थिनौ यदा ।
वादो वर्णानुरूपेण ग्राह्यः पीडामवेक्ष्य वा ॥
अप्रगल्भजडोन्मत्तवृद्धस्त्रीबालरोगिणाम् ।
पूर्वोत्तरं वदेद्बन्धुर्नियुक्तोऽन्योऽथवा नरः ॥

नारदः—

अर्थिना संनियुक्तो वा प्रत्यर्थिप्रेरितोऽपि वा ।
यो यस्यार्थे विवदते तयोर्जयपराजयौ ॥

यत्तु कात्यायनः—

यो न भ्राता न च पिता न पुत्रो न नियोगकृत् ।
परार्थवादी दण्ड्यः स्याद्व्यवहारेषु विब्रुवन् ॥ इति ।

तदनियुक्तपरम् । क्वचित्प्रतिनिध्यभावस्तेनैवोक्तः—

ब्रह्महत्यासुरापाने स्तेये गुर्वङ्गनागमे ।

मनुष्यमारणे स्तेये परदाराभिमर्शने ॥
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ।
पारुष्ये कूटकरणे नृपद्रोहे तथैव च ॥
प्रतिवादी न दाप्यः स्यात्कर्त्ता तु विवदेत्स्वयम् । इति ।

आत्यंतिकप्रतिनिधिनिषेधार्थं पुनस्तेयग्रहणम् । प्रतिवादी प्रतिनिधिः। प्रत्यर्थिनि स्थापितेऽर्थिनः कार्यमाह याज्ञवल्क्यः—

प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना ।
समामासतदर्धाहर्नामजात्यादिचिह्नितम् ॥ ( व्य० श्लो० ६ )

स्मृत्यन्तरे—

अर्थवद्धर्मसंयुक्तं परिपूर्णमनाकुलम् ।
साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च ॥
प्रसिद्धमविरुद्धं च निश्चितं साधनक्षमम् ।
संक्षिप्तं निखिलार्थं च देशकालाविरोधि च ॥
वर्षर्तुमासपक्षाहोवेलादेशप्रदेशवत् ।
स्थानावसथसाध्याख्याजात्याकारवयोयुतम् ॥
साध्यप्रमाणसंख्यावदात्मप्रत्यर्थिनामवत् ।
परात्मपूर्वजानेकराजनामभिरङ्कितम् ॥
क्षमालिङ्गात्मपीडावत्कथिताहर्तृदायकम् ।
यदावेदयते राज्ञे तद्भाषेत्यभिधीयते ॥ इति ।

अत्रोक्तवर्षादीनामाधयादिपूपयोगो वक्ष्यते । देशादीनां च क-चिदुपयोग उक्तः स्मृत्यन्तरे—

देशश्चैव तथा स्थानं सन्निवेशस्तथैव च ।
ज्ञातिः संज्ञाधिवासश्च प्रमाणं क्षेत्रनाम च ॥
पितृपैतामहं चैव पूर्वराजानुकीर्तनम् ।
स्थावरेषु विवादेषु दशैतानि प्रवेशयेत् ॥ इति ।

कात्यायनः—

पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोऽभिलेखयेत् ।
पाण्डुलेखेन फलके ततः पत्रे विशोधितम् ॥

शोधनस्यावधिमाह नारदः—

शोधयेत्पूर्ववादं तु यावन्नोत्तरदर्शनम् ।
अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत् ॥

आषाया उत्तरं यावत्प्रत्यर्थी न निवेशयेत् ।
अर्थी तु लेखयेत्तावद्यावद्वस्तु विवक्षितम् ॥ इति ।

एवं पक्षलक्षणे स्थिते तद्विरुद्धाः पक्षाभासा अर्थसिद्धा अप्युक्ताः स्मृत्यन्तरे—

अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम् ।
असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत् ॥ इति ।

अप्रसिद्धं खपुष्पं ममाहृतमिति । निराबाधं मम दीपप्रकाशेनायं व्यवहरतीति । निरर्थं कचटतपं ममापहृतमिति । निःप्रयोजनं मत्प्रातिवेशिकः सुस्वरमधीत इति । असाध्यं सभ्रूभङ्गं हसितोऽनेनेत्यादि । विरुद्धं मूकेनाहं शप्त इति; पुरराष्ट्रादिविरुद्धं वा । तथा च स्मर्यते—

राज्ञाविवर्जितो यस्तु यश्च पौरविरोधकृत् ।
राष्ट्रस्य वा समस्तस्य प्रकृतीनां तथैव च ॥
अन्ये वा ये पुरग्राममहाजनविरोधकाः ।
अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्त्तिताः ॥ इति ।

न चानेकप्रतिज्ञत्वमपि पक्षाभासत्वमिति,

बहुप्रतिज्ञं यत्कार्यं व्यवहारे सुनिश्चितम् ।
कामं तदपि गृह्णीयाद्राजा तत्वबुभुत्सया ॥

इति कात्यायनीयेन विरोधापत्तेः । यत्तु—

अनेकपदसंकीर्णः पूर्वपक्षो न सिद्धयति ।

इति तद्युगपन्न सिद्धयति क्रमेण तु सिद्धयतीति व्याख्येयम् । एवं पूर्वपक्षे लिखिते यत्कार्यं तदाह याज्ञवल्क्यः—

श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसंनिधौ ॥ इति । (व्य० श्लो०७)

उत्तरं लक्षयति नारदः—

पक्षस्य व्यापकं सारमसंदिग्धमनाकुलम् ।
अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः ॥ इति ।

अस्य चातुर्विध्यमाह कात्यायनः—

मिथ्या संप्रतिपत्त्या वा प्रत्यवस्कन्दनेन वा ।
प्राङ्न्यायप्रतिषिद्धया वा उत्तरं स्याच्चतुर्विधम् ॥ इति ।

मिथ्योत्तरं च लक्षयति स एव—

अभियुक्तोऽभियोगस्य यदि कुर्यादपह्नवम् ।

मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः ॥ इति ।

तच्च चतुर्विधमित्याह स एव—

मिथ्यैतन्नाभिजानामि तदा मेऽभूदसंनिधिः ।
अजातश्चास्मि तत्काल इति मिथ्या चतुर्विधम् ॥ इति ।

संप्रतिपत्त्युत्तरं तूक्तं स्मृत्यन्तरे—

साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता । इति ।

प्रत्यवस्कन्दनोत्तरं लक्षयति नारदः—

अर्थिना लिखितो योऽर्थः प्रत्यर्थी यदि तं तथा ।
प्रपद्य कारणं ब्रूयात्प्रत्यवस्कन्दनं स्मृतमिति ॥

प्राङ्न्यायोत्तरं लक्षयति कात्यायनः—

आचारेणावसन्नोऽपि पुनर्लेखयते यदि ।
सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते ॥ इति ।

एवमुत्तरलक्षणे स्थिते तद्रहितानामुत्तराभासत्वमर्थसिद्धमपि स्पष्टीकृतं स्मृत्यन्तरे—

संदिग्धमन्यत्प्रकृतादत्यल्पमतिभूरि च ।
पक्षैकदेशव्याप्यन्यत्तथानैवोत्तरं भवेत् ॥
यद्व्यस्तपदमव्यापि निरूढार्थं तथाऽऽकुलम् ।
व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये ॥ इति ।

कात्यायनोऽपि—

पक्षैकदेशे यत्सत्यमेकदेशे च कारणम् ।
मिथ्या चैवैकदेशे च संकरात्तदनुत्तरम् ॥ इति ।

अनुत्तरत्वे च कारणमाह स एव—

नचैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ।
नचार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम् ॥ इति ।

अत्रायमर्थः—मिथ्याकारणोत्तरयोः संकरे द्वयोरपि वादिनोः क्रिया प्राप्नोति 'मिथ्या क्रिया पूर्ववादे कारणे प्रतिवादिनि' इति नारदोक्तेः, तदुभयमेकस्मिन् व्यवहारे विरुद्धम् । तथा कारणप्राङ्न्यायसंकरे तु प्रत्यर्थिन एव क्रियाद्वयम् 'प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्' इति व्यासोक्तेः । अत्र च 'प्राङ्न्याये जयपत्रेण प्राड्विवाकादिभिस्तथा' इति व्यासोक्त्यैव प्राङ्न्याये जयपत्रेण प्राङ्न्यायदर्शि

भिर्वा भावयितव्यम्, कारणोत्तरे तु साक्षिलेख्यादिभिरित्यत्रापि विरोधः । एवं त्रिचतुःसंकरेऽपि द्रष्टव्यम् ।

एतेषां चानुत्तरत्वं यौगपद्येन । क्रमेणतूत्तरत्वमेव । क्रमश्चार्थिप्रत्यर्थिसभ्येच्छया भवति । तथा च हारीतः—

मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे ।
सत्यं चापि सहान्येन तत्र ग्राह्यं किमुत्तरम् ॥
यत्प्रभूतार्थविषयं यत्र वा स्यात्क्रियाफलम् ।
उत्तरं तत्र तज्ज्ञेयमसंकीर्णमतोऽन्यथा ॥

संकीर्णं भवतीति शेषः । अस्यार्थः—सुवर्णवस्त्राभियोगे सुवर्णं न गृहीतं वस्त्रं तु गृहीतं प्रतिदत्तं चेत्यत्रादौ सुवर्णविषये व्यवहृत्य पश्चाद्वस्त्रविषये व्यवहर्त्तव्यम् । एवं मिथ्याप्राङ्न्याययोः कारणप्राङ्न्याययोश्च संकरे योज्यम् । तथा तत्रैवाभियोगे सुवर्णं गृहीतं वस्त्रं तु न गृहीतं प्रतिदत्तमिति वा वस्त्रविषये पूर्वं जित इति वोच्यते तत्र वस्त्रविषय एव व्यवहर्त्तव्यं न सुवर्णविषये । भूरिविषयत्वेऽपि क्रियाभावात् । यत्र त्वियं गौर्मदीयाऽमुकस्मिन्काले नष्टाऽद्यास्य गृहे दृष्टेत्यभियोगे मिथ्यैतदेतत्प्रदर्शितकालात्पूर्वमेवास्मद्गृहे स्थितेति "मिथ्याकारणयोः कृत्स्नपक्षव्यापित्वं तत्र नानुत्तरत्वं, सकारणं मिथ्योत्तरमिदम् । अत्र च प्रत्यर्थिन एव क्रिया नार्थिनोऽपि, "मिथ्याकारणयोर्वापि ग्राह्यं कारणमुत्तरम्" इति हारीतोक्तेः । एवं मिथ्याप्राङ्न्याययोः कारणप्राङ्न्याययोश्च कृत्स्नपदव्यापित्वे सति नानुत्तरत्वम् । अत्रोभयत्रापि प्रत्यर्थिन एव क्रियेति न क्वाप्येकस्मिन् व्यवहारे द्वयोः क्रियेत्यलम् ।

उत्तरलेखनोत्तरं साधनोक्तौ क्रममाह याज्ञवल्क्यः—

ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ।
तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा ॥ (व्य० ७–८) इति ।

इदं च मिथ्योत्तरविषयम् । उत्तरान्तरे तु प्रत्यर्थिन एव साधनोपन्यासः । यथाह हारीतः—

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम् ।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत् ॥ इति ।

एवं व्यवहारस्य चतुष्पात्त्वमाह याज्ञवल्क्यः—

चतुष्पाद्व्यवहारोऽयं विवादेषूपदर्शितः । ( व्य० ८ ) इति ।

पादचतुष्टयं तु व्यक्तीकृतं स्मृत्यन्तरे—

भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवृत्तिभिः।
आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयते ॥ इति ।

इदं च संप्रतिपत्त्यतिरिक्तोत्तरविषयं संप्रतिपत्तेर्द्विपात्त्वात् ।

यथाह बृहस्पतिः—

मिथ्योत्तरे चतुष्पात्स प्रत्यवस्कन्दने तथा ।
व्यवहारस्तु विज्ञेयो द्विपात्संप्रतिपत्तिषु ॥ इति ।

याज्ञवल्क्यः—

अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ।
अभियुक्तं च नान्येन नोक्तं विप्रकृतिं नयेत् ॥
कुर्यात्प्रत्यभियोगं च कलहे साहसेषु च । ( व्य० १० )

नारदः—

पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः ।
वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः ॥

हीनवादी दण्ड्यो भवति न प्रकृतादर्थाद्धीयत इत्यर्थः । एतच्चार्थव्यवहारे ज्ञेयम् । यथाह स एव—

सर्वेष्वर्थविवादेषु वाक्छले नावसीदति ।
परस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयते ॥ इति ।

पूर्वार्धस्योदाहरणार्थमुत्तरार्धम् । याज्ञवल्क्यः—

साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ।
पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ॥ ( व्य० १७ )

पूर्ववादिनः प्रतिज्ञावादिनः । पूर्वपक्षः प्रतिज्ञा । अधरीभूते कारणोत्तरोपन्यासेन प्रत्यर्थिस्वीकारेणासाध्ये । साक्षिग्रहणं प्रमाणान्तरस्याप्युपलक्षणार्थम् । स एव—

उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ।

निर्णयस्य कार्यं कार्यनिर्णय इति ।

प्रतिभूत्वेनाग्राह्यानाह कात्यायनः—

न स्वामी न च वै शत्रुः स्वामिनाधिकृतस्तथा ।
निरुद्धो दण्डितश्चैव संशयस्थो न च क्वचित् ॥
नैव रिक्थी न रिक्तश्च नचैवान्यत्र वासितः ।

राजकार्यनियुक्तश्च ये च प्रव्रजिता नराः ।
नाशक्तो धनिने दातुं दण्डं राज्ञे च तत्समम् ॥
नाविज्ञातो ग्रहीतव्यः प्रतिभूत्वक्रियां प्रति । इति ॥

निरुद्धो निगडादिबद्धः । संशयस्थो व्यसनी । रिक्थी पुत्रपौत्रादिद्रव्यग्रहणाधिकारी । रिक्तो दरिद्रः । अन्यत्र वासितो देशाद्बहिष्कृतः ।

याज्ञवल्क्यः—

भ्रातृणामथदंपत्योः पितुः पुत्रस्य चैव हि ।
प्रातिभाव्यमृणं साक्ष्यमविभक्तेन तु स्मृतम् ॥ ( व्य. ५२ )

लग्नकाभावे त्वाह कात्यायनः—

अथ चेत्प्रतिभूर्नास्ति कार्ययोग्यस्य वादिनः ।
स रक्षितो दिनस्यान्ते दद्याद्भृत्याय वेतनम् । इति ॥

स एव—

द्विजातिः प्रतिभूहीनो रक्ष्यः स्याद्बाह्यचारिभिः ।
शूद्रादीन्प्रतिभूहीनान्बन्धयेन्निगडेन तु । इति ॥

हीनवादिलक्षणान्याह नारदः—

पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः ।
वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः।इति॥(प्र.अ.२श्लो.२४)

दुष्टं लक्षयति याज्ञवल्क्यः—

देशाद्देशान्तरं याति सृक्किणी परिलेढि च ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥
स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः ।
अभियोगे च साक्ष्ये च दुष्टः स परिकीर्तितः ॥ (व्य.१३-१५)

सृक्किणी ओष्ठप्रान्तौ ।

---

## अथ प्रमाणम् ।

याज्ञवल्क्यः—

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥ ( व्य. २२ )

कात्यायनोऽपि—

यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम् ।
मानुषीं तत्र गृह्णीयान्नतु दैवीं क्रियां नृपः ॥
यद्येकदेशव्याप्तापि क्रिया विद्येत मानुषी ।
सा ग्राह्या न तु पूर्णापि दैविकी वदतां नृणाम् ॥
क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु ।
लेख्ये च सति वादेषु न स्याद्दिव्यं न साक्षिणः ॥
पूगश्रेणिगणादीनां या स्थितिः परिकीर्तिता ।
तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः ॥
दत्वाऽदत्ते तथाऽऽदत्ते स्वामिनां निर्णये सति ।
विक्रयादानसंबन्धे क्रीत्वा धनमनिच्छति ॥
द्यूते समाह्वये चैव विवादे समुपस्थिते ।
साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकम् ॥
द्वारमार्गक्रियाभोगे जलवाहादिके तथा ।
भुक्तिरेव हि गुर्वी स्यान्न लेख्यं न च साक्षिणः ॥

दत्त्वादत्ते दत्तमिति प्रतिश्रुत्य अनर्पिते । तथा—आदत्ते दत्त्वा पुनराच्छिद्य गृहीते । स्वामिनां निर्णये सतीति एतत्स्वाम्रिकमेतदिति निश्चये सति ।

क्वचिद्दिव्यप्राबल्यमाह बृहस्पतिः—

मणिमुक्तानाणकानां कूटकृन्न्यासहारकः ।
हिंसकोऽन्याङ्गनासेवी परीक्ष्याः शपथैः सदा ॥
महापापाभिशापेषु विद्यमानेषु साक्षिषु ।
दिव्यमालम्बते वादी न पृच्छेत्तत्र साक्षिणः । इति ॥

व्यासः—

न मयैतत्कृतं लेख्यं कूटमेतेन कारितम् ।
अधरीकृत्य तत्पत्रमर्थे दिव्येन निर्णयः ॥
अरण्ये विजने रात्रावन्तर्वेश्मनि साहसे ।
न्यासापह्नवने चैव दिव्या संभवति क्रिया ॥

बृहस्पतिः—

लिखिते साक्षिवादे च संदिग्धं यत्र जायते ।
अनुमाने च संभ्रान्ते तत्र दिव्यं विशोधनम् ॥

क्वचित्साक्षिदिव्ययोर्विकल्पमाह स एव—

प्रक्रांते साहसे वादे पारुष्ये दंडवाचिके ।
बलोद्भूतेषु कार्येषु साक्षिणो दिव्यमेव च ॥
ऋणे लेख्यं साक्षिणो वा युक्तिलेशाद्योपि वा ।
दैविकी वा क्रिया प्रोक्ता प्रजानां हितकाम्यया । इति ॥

युक्तिलेशो युक्त्येकदेशः । वाचिके पारुष्ये ब्रह्महासीत्येवमाद्याक्रोशात्मके इत्यर्थः । यत्तु कात्यायनः—

वाक्पारुष्ये च भूमौ च दिव्यं न परिकल्पयेत् । इति ।

तदल्पवाक्पारुष्यपरम् । भूमिग्रहणं स्थावरमात्रोपलक्षणार्थम् । यथाह पितामहः—

स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत् । इति,

साक्ष्यादिसत्वेऽयं दिव्यनिषेधः । तथाच स एव—

साक्षिभिर्लिखितेनाथ भुक्त्या चैतान्प्रसाधयेत् । इति ॥

स एव—

लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः ।
न च दिव्यावतारोस्ति प्रमाणं तत्र पार्थिवः ॥
निश्चेतुं ये न शक्या स्युर्वादाः संदिग्धरूपिणः ।
तेषां नृपः प्रमाणं स्यात्स सर्वस्य प्रभुर्यतः ॥

इति व्यवहारमातृकाः समाप्ताः ।

---

## अथ लेख्यम् ।

तत्र बृहस्पतिः—

राजलेख्यं स्थानकृतं स्वहस्तलिखितं तथा ।
लेख्यं तु त्रिविधं प्रोक्तं भिन्नं तद्बहुधा पुनः ॥ इति ।

यत्तु वसिष्ठेन—

लौकिकं राजकीयं च लेख्यं विद्याद्विलक्षणम् ।

इति द्वैविध्यमुक्तं तत् स्थानकृतस्वहस्तलिखितयोर्भेदमाश्रित्य । लौकिकं जानपदमितिपर्यायौ, 'राजकीयं जानपदं लिखितं द्विविधं स्मृतम्' इति संग्रहकारोक्तेः ।

बृहस्पतिः—

भागदानक्रयाधानसंविद्दासऋणादिभिः ।
सप्तधा लौकिकं लेख्यं त्रिविधं राजशासनम् ॥
भ्रातरः संविभक्ता ये स्वरुच्या तु परस्परम् ।
विभागपत्रं कुर्वन्ति भागलेख्यं तदुच्यते ॥
भूमिं दत्त्वा तु यत्पत्रं कुर्याच्चंद्रार्ककालिकम् ।
अनाच्छेद्यमनाहार्यं दानलेख्यं तु तद्विदुः ॥
गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम् ।
पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते ॥
जंगमं स्थावरं बन्धं दत्त्वा लेख्यं करोति यत् ।
गोप्यभोग्यक्रियायुक्तमाधिलेख्यं तदुच्यते ॥
ग्रामो देशश्च यत्कुर्यान्मतं लेख्यं परस्परम् ।
राजाविरोधि धर्मार्थं संवित्पत्रं वदन्ति तत् ॥
वस्त्रान्नहीनः कान्तारे लिखितं कुरुते तु यत् ।
कर्माणि ते करिष्यामि दासपत्रं तदुच्यते ॥
धनं वृद्धया गृहीत्वा तु स्वयं कुर्याच्च कारयेत् ।
उद्धारपत्रं तत्प्रोक्तमृणलेख्यं मनीषिभिः ॥

आदिशब्दाद्विशुद्धयादिपत्रग्रहणम् । विशुद्धयादिपत्राण्याह कात्यायनः—

अभिशापे समुत्तीर्णे प्रायश्चित्ते कृते जनैः ।
विशुद्धिपत्रिकं ज्ञेयं तेभ्यः साक्षिसमन्वितम् ॥
उत्तमेषु समस्तेषु अभिशापे समागते ।
वृत्तानुवादे लेख्यं यत्तज्ज्ञेयं सन्धिपत्रकम् ॥
सीमाविवादे निर्णीते सीमापत्रं विधीयते । इति ॥

अन्वाधिपत्रमाह प्रजापतिः—

धनी धनेन तेनैव परमाधिं नयेद्यदि ।
कृत्वा तदधिलिखितं पूर्वं चास्य समर्पयेत् ॥

याज्ञवल्क्योऽपि—

दत्त्वर्णं पाटयेल्लेख्यं शुद्धयै वान्यत्तु कारयेत् । (व्य. ९४)

पूर्वोक्तयोः स्वहस्तकृतान्यकृतयोर्विशेषमाह नारदः—

लेख्यं तु द्विविधं प्रोक्तं स्वहस्तान्यकृतं तथा ।
असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः । इति ।। (१।१३५)

याज्ञवल्क्यः—

विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् ।
तत्प्रमाणं स्मृतं लेख्यं बलोपधिकृतादृते ।। (व्य. ८९)

बलं बलात्कारः । उपधिर्लोभादिः । अन्यकृते विशेषमाह स एव—

यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम् ।
लेख्यं तु साक्षिमत्कार्यं तस्मिन्धनिकपूर्वकम् ।।
समामासतदर्द्धाहर्नामजातिस्वगोत्रकैः ।
सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् । इति ।। (व्य. ८४–५)

सब्रह्मचारिकं, बह्वृचादिशाखाप्रयुक्तं गुणनाम बह्वृचः कठ इत्यादि ।

स एव—

समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् ।
मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम् ।।
साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम् ।
अत्राहममुकः साक्षी लिखेयुरिति ते समाः ।।
उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना ।
लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो लिखेत् ।। (व्य.८६-८८)

समाः संख्यातो गुणतश्च । क्वचिदसमा इत्यकारप्रश्लेषः ।

नारदः—

अलिपिज्ञ ऋणी यः स्यात्स्वमतं तु स लेखयेत् ।
साक्षी वा साक्षिणाऽन्येन सर्वसाक्षिसमीपतः ।।

त्रिविधं राजशासनमित्युक्तं तद्दर्शयतो याज्ञवल्क्यबृहस्पती—

दत्त्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् ।
आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ।।
पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् ।
अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ।।
प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम् ।
स्वहस्तकालसंपन्नं शासनं कारयेत्स्थिरम् ।। (या.आ.३१९-२०)

निबन्धः आकरादौ राजादिदत्तं नियतलभ्यम्। प्रतिगृह्यते यस्य प्रतिग्रहो भूम्यादिः तस्य परिमाणमियत्ता। दीयते यत्तद्दानं गृहादि तस्य छेदो मर्यादा तस्य उपवर्णनं कथनम्।

तथा—

देशादिकं यस्य राजा लिखितेन प्रयच्छति।
सेवाशौर्यादिना तुष्टः प्रसादलिखितं तु तत्॥
पूर्वोत्तरक्रियावादनिर्णयान्ते यदा नृपः।
प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते। इति॥

राज्ञोऽनुकरमाह व्यासः—

राज्ञा तु स्वयमादिष्टः सन्धिविग्रहलेखकः।
ताम्रपट्टे पटे वापि प्रलिखेद्राजशासनम्॥

अत्र च राज्ञा स्वमतं लेख्यमित्याह स एव—

संनिवेशं प्रमाणं च स्वहस्तेन लिखेत्स्वयम्।
मतं मेऽमुकपुत्रस्य अमुकस्य महीपतेः॥

सन्निवेशं प्रमाणं चेति पूर्ववाक्येनान्वयः। वसिष्ठस्तु राजलेख्यस्य चातुर्विध्यमाह—

शासनं प्रथमं ज्ञेयं जयपत्रं तथा परम्।
आज्ञाप्रज्ञापनापत्रे राजकीयं चतुर्विधम्॥
सामन्तेष्वथ भृत्येषु राष्ट्रपालादिकेषु च।
कार्यमादिश्यते येन तदाज्ञापत्रमुच्यते॥
ऋत्विक्पुरोहिताचार्यमान्येष्वभ्यर्थितेषु च॥
कार्यं निवेद्यते येन पत्रं प्रज्ञापनाय तत्।

शासनजयपत्रे प्रागुक्ते।

याज्ञवल्क्यः—

देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा।
भिन्ने दग्धे तथा छिन्ने लेख्यमन्यत्तु कारयेत्॥ (व्य. ९१)

नारदः—

लेख्ये देशान्तरन्यस्ते शीर्णे दुर्लिखिते हृते।
सतस्तत्कालकरणमसतो द्रष्टृदर्शनम्॥ (१।१४२)

द्रष्टारः साक्षिणः। तदभावे दिव्यम् 'अलेख्यसाक्षिके दैवीं व्यवहारे विनिर्दिशेत्' इति कात्यायनोक्तेः।

याज्ञवल्क्यः—

संदिग्धलेख्यशुद्धिः स्यात् स्वहस्तलिखितादिभिः ।
युक्तिप्राप्तिक्रियाचिह्नसंबन्धागमहेतुभिः ॥ ( व्य. ९२ )

युक्तिरर्थापत्तिः, प्राप्तिर्द्वयोरेकत्रावस्थानम्, क्रिया साक्ष्यादि, चिह्नं मुद्रादि, संबन्धोऽनागतः, आगमः संभावितः, प्राप्त्युपायः, हेतुरनुमानम् । प्रजापतिः—

कार्यो यत्नेन महता निर्णयो राजशासने ।
राज्ञां स्वहस्ततो मुद्रालेखकाक्षरदर्शनात् ॥

दुष्टलेख्यान्याह बृहस्पतिः—

मुमूर्षुशत्रुभीतार्तस्त्रीमत्तव्यसनातुरैः ।
निशोपधिबलात्कारकृतं लेख्यं न सिद्ध्यति ॥
दूषितो गर्हितः साक्षी यत्रैको विनिवेशितः ।
कूटलेख्यं तु तत्प्रोक्तं लेखको वापि तद्विधः । इति ॥

इति लेख्यप्रकरणम् ।

---

## अथ भुक्तिः ।

नारदः—

आगमेन विशुद्धेन भोगो याति प्रमाणताम् ।
अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति ॥ ( १।८५ )

सागमत्ववद्विशेषणान्तरवैशिष्ट्यमप्याह व्यासः—

सागमो दीर्घकालश्चाविच्छेदोपरवोज्झितः ।
प्रत्यर्थिसन्निधानश्च पञ्चाङ्गो भोग इष्यते ॥

भुक्तिमात्रेण साध्यां सिद्धिमाह नारदः—

संभोगं केवलं यस्तु कीर्त्तयेन्नागमं क्वचित् ।
भोगच्छलापदेशेन विज्ञेयः स तु तस्करः । इति ॥ (१·८६)

इदं चागमस्मरणयोग्ये काले ज्ञेयम् । तदयोग्ये तु भुक्तिमात्रमपि प्रमाणमित्याह स एव—

स्मार्ते काले क्रिया भूमेः सागमा भुक्तिरिष्यते ।
अस्मार्तेऽनुगमाभावात्क्रमात्त्रिपुरुषागता । इति ॥ (१।८९)

अनुगमाभावात् योग्यानुपलब्ध्या आगमाभावनिश्चयस्यासंभवात् । अस्मार्तेऽप्यागमाभावस्मरणानुवृत्तावाह स एव—

अनागमं तु यो भुंक्ते बहून्यब्दशतान्यपि ।
चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः । इति ॥ (१।८७)

यत्तु स एव—

अन्यायेनापि यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः ।
न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम् । इति ॥ (१।९१)

तदागमं विनाप्यन्यायेनापि यत्पित्रा सह पूर्वतरैस्त्रिभिर्भुक्तं तदपाहर्तुं न शक्यं किंपुनरागमाभावनिश्चयासंभव इति योज्यम् । यदपि हारीतीयम्—

यद्विनागममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत् ।
न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम् । इति ॥

तदत्यन्तोपलभ्यमानागमं विनेतिव्याख्येयं न ह्यागमस्वरूपं विनेति । यत्पुनर्याज्ञवल्कीयम्—

आगमस्तु कृतो येन सोभियुक्तस्तमुद्धरेत् ।
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी । इति ॥ (व्य.२८)

तदागमकर्तुरेवागमानुद्धारे दण्डो न तत्पुत्रादीनामित्येवंपरं नत्वर्थसिद्धिरिति । यदाह हारीतः—

आगमस्तु कृतो येन स दण्ड्यस्तमनुद्धरन् ।
न तत्सुतस्तत्सुतो वा भोग्यहानिस्तयोरपि । इति ॥

याज्ञवल्क्यः—

योऽभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत् ।
न तत्र कारणं भुक्तिरागमेन विना कृता । (व्य. २९)

रिक्थी अंशभागी पुत्रादिः । तमागमम् ।

ननु दीर्घकालभोगः प्रमाणमिति विरुद्धं यतः स्वल्पकालोपभोगेनापि अभियोक्तुर्हानिः प्रतीयते । यथाह स एव—

पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी ।
परेण भुज्यमानाया धनस्य दशवार्षिकी । इति ॥ (व्य.२४)

उच्यते । एतत्पश्यतोऽप्रतिषेधतस्तावत्कालीनभोगे तद्भूम्यादिजन्यफलहानिर्भवतीत्येवंपरं न तु तद्भूम्यादिवस्तुहानिरपीति । अनागमं तु यो भुङ्क्त इत्युदाहृतवचनविरोधात् । कात्यायनः—

नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा ।
पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः ॥

नारदः—

आधिः सीमा बालधनं निक्षेपोपनिधिः स्त्रियः ।
राजस्वं श्रोत्रियस्वं च नोपभोगेन नश्यति ॥ ( १।८१ )

मनुः—

संप्रीत्या भुज्यमानानि न नश्यन्ति कदाचन ।
धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते ॥ (८।१४६)

दम्यः प्रयुज्यते दमनार्थं यः समर्प्यते ।

इति भुक्तिप्रकरणम्

---

## अथ साक्षिणः ।

टोडरानन्दे नारदः—

संदिग्धेषु तु कार्येषु द्वयोर्विवदमानयोः ।
दृष्टश्रुतानुभूतत्वात्साक्षिभ्यो व्यक्तदर्शनम् ॥ (१।१४७)

तद्भेदानाह बृहस्पतिः—

लिखितो लेखितो गूढः स्मारितः कुल्यदूतकौ ।
यादृच्छिकश्चोत्तरश्च कार्यमध्यगतोऽपरः ॥
नृपोऽध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः ।

अर्थिना पत्रे विनिवेशितो लिखितः । प्रत्यर्थिनार्थिप्रेरणया निवेशितो लेखितः । कुड्यादिव्यवधानेन श्रावितो गूढः । पुनः पुनः कार्यं स्मार्यमाणः स्मारितः । यदृच्छयैवागतः साक्षी क्रियमाणो यादृच्छिकः । श्रवणाच्छ्रावणाद्वा साक्षिणामप्युपर्युपरिभाषमाण उत्तरः । अध्यक्षः प्राड्विवाकः । इदं च सभ्यादीनामुपलक्षणम्,

लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः ।

इति कात्यायनवाक्यात् । स एव—

नव सप्त पञ्च वा स्युश्चत्वारस्त्रय एव वा ।
उभौ वा श्रोत्रियौ ग्राह्यौ नैकं पृच्छेत्कदाचन ॥
लिखितौ द्वौ तथा गूढौ त्रिचतुःपञ्च लेखिताः ।
यदृच्छास्मारिताः कुल्यास्तथा चोत्तरसाक्षिणः ॥

दूतकः खटिकाग्राही कार्यमध्यगतस्तथा ।
एक एव प्रमाणं स्यान्नृपोऽध्यक्षस्तथैव च ॥

लिखितादीनामुभयानुमतत्वे एकस्यापि ग्रहणमाह याज्ञवल्क्यः—

उभयानुमतः साक्षी भवेदेकोऽपि धर्मवित् । ( व्य. ७२ )

व्यासः—

शुचिक्रियश्च धर्मज्ञः साक्षी यस्त्वनुभूतवाक् ।
प्रमाणमेको भवति साहसेषु विशेषतः ॥

अनुभूतवाक् प्रायो दृष्टसत्यवचनः निक्षेपादिष्वनाप्तमप्येकमाह कात्यायनः—

अभ्यन्तरस्थनिक्षेपे साक्ष्यमेकोऽपि वाच्यते ।
अर्थिना प्रहितः साक्षी भवेदेकोऽपि याचिते ॥

याचितं विवाहाद्यर्थमानीतमाभरणादिकं कुण्डलादि । पण्यविवादेऽप्येकमाह स एव—

संस्कृतं येन यत्पण्यं तत्तेनैव विभावयेत् ।
एक एव प्रमाणं स विवादे तत्र कीर्तितः ॥

तेषां च स्वरूपमाह व्यासः—

धर्मज्ञाः पुत्रिणो मौलाः कुलीनाः सत्यवादिनः ।
श्रौतस्मार्तक्रियायुक्ता विगतद्वेषमत्सराः ॥
श्रोत्रिया न पराधीनाः सूरयश्चाप्रवासिनः ।
युवानः साक्षिणः कार्या ऋणादिषु विजानता ॥

नारदः—

श्रेणीषु श्रेणिपुरुषाः स्वेषु वर्गेषु वर्गिणः ।
बहिर्वासिषु बाह्याः स्युः स्त्रियः स्त्रीषु तु साक्षिणः ॥ (१।१५५)

वर्गिण आह कात्यायनः—

लिङ्गिनः श्रेणिपूगाश्च वणिग्जातास्तथा परे ।
समूहस्थाश्च ये चान्ये वर्गास्तानब्रवीद्भृगुः ॥
दासचारणमल्लानां हस्त्यश्वरथजीविनाम् ।
प्रत्येकैकसमूहानां नायका वर्गिणः स्मृताः ॥

विजातीयानप्याह याज्ञवल्क्यः—

त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः ।
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः ॥ ( व्य. ६९ )

वर्ज्यानप्याह स एव—

स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः ।
रङ्गावतारिपाखंडिकूटकृद्विकलेन्द्रियाः ॥
पतिताप्तार्थसंबन्धिसहायरिपुतस्कराः ।
साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिणः ॥ ( ७०–७१ )

निर्धूतः स्वजनैस्त्यक्तः, आदिशब्देन दासाद्याः ।

बृहस्पतिः—

मातुः पिता पितृव्यश्च भार्याया भ्रातृमातरौ ॥
भ्राता सखा च जामाता सर्ववादेष्वसाक्षिणः ।

नारदः—

अनिर्दिष्टस्तु साक्षित्वे स्वयमेवैत्य यो वदेत् ।
स्वयमुक्तिः स शास्त्रेषु न स साक्षित्वमर्हति ॥ ( १।१६१ )

कात्यायनः—

साक्षिणां लिखितानां च निर्दिष्टानां च वादिनाम् ।
तेषामेकोन्यथावादी भवेत्सर्वे न साक्षिणः ॥

एतेषामपि क्वचित्साक्षित्वमाह नारदः—

असाक्षिणो ये निर्दिष्टा दासनैष्कृतिकादयः ।
कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः ॥ ( १।१८८ )

असंभवे मनुः—

स्त्रियाप्यसंभवे कार्यं बालेन स्थविरेण वा ।
शिष्येण बन्धुना वापि दासेन भृतकेन वा ॥ ( ८।७० )

याज्ञवल्क्यः—

सर्वः साक्षी संग्रहणे चौर्यपारुष्यसाहसे । ( व्य. ७२ )

अत्र स्त्रीसंग्रहादीनां साहसत्वेऽपि पृथगुपादानं गुप्ततया क्रियमाण-स्त्रीसंग्रहादिपरम् ।

उशना—

दासोऽन्धो बधिरः कुष्ठी स्त्रीबालस्थविरादयः ।

एतेप्यनभिसंबद्धाः साहसे साक्षिणो मताः ॥

अनभिसंबद्धा अपक्षपातिनः ।

बृहस्पतिः—

साक्षिणोऽर्थे समुद्दिष्टान्सत्सु दोषेषु दूषयेत् ।
अदुष्टान्दूषयन्वादी तत्समं दण्डमर्हति ॥

वाद्यत्र प्रत्यर्थी । तत्समं विवादविषयीभूतद्रव्यसमम् ।

व्यासः—

साक्षिदोषाः प्रयोक्तव्याः संसदि प्रतिवादिना ।
पत्रेभिलिखितान्सर्वान्वाच्याः प्रत्युत्तरं तु ते ॥

पत्रे लिखितान्साक्षिदोषान्प्रति लक्षीकृत्य तद्विषयं परिहारं ते साक्षिणः सभ्यैर्वाचनीया इत्यर्थः ।

स एव—

प्रतिपत्तौ न साक्षित्वमर्हन्ति तु कथंचन ।
अतोऽन्यथा भावनीयाः क्रियया प्रतिवादिना ॥
अभावयन्दमं दाप्यः प्रत्यर्थी साक्षिणः स्फुटम् ।
भाविताः साक्षिणो वर्ज्याः साक्षिधर्मनिराकृताः ॥
तथैव विनयं दाप्यः शास्त्रदृष्टेन कर्मणा ।
यदि वादी निराकाङ्क्षः साक्षिसत्त्वे व्यवस्थितः । इति ॥

अतोऽन्यथा असंप्रतिपत्तौ भावनीया अङ्गीकारयितव्याः । क्रियया प्रमाणेन स्फुटं यथा स्यात्तथा भावयन्नित्यन्वयः । यत्तु—

सभासदां दूषणं यल्लोकसिद्धमथापि वा ।
साक्षिणां दूषणं ग्राह्यं न साध्यं दोषवर्जनात् । इति ॥

तल्लोकावधारितातप्तसाक्षिविषयम् । प्रतिवादिना दोषाज्ञाने स एव—

प्रमाणस्य हि ये दोषा वक्तव्यास्ते विवादिना ।
गूढास्तु प्रकटाः सभ्यैः काले शास्त्रप्रदर्शनात् ॥

गूढाः शास्त्रप्रदर्शनेन साक्षिवादात्पूर्वकाले वक्तव्या इत्यर्थः । अनन्तरं तु न वक्तव्या इत्याह बृहस्पतिः—

लेख्यदोषास्तु ये केचित्साक्षिणां चैव ये स्मृताः ।
वादकाले तु वक्तव्याः पश्चादुक्तान्न दूषयेत् ॥

उक्तानुक्तवतः वक्तुमारब्धवत इत्यर्थः। आदिकर्मणि क्तः कर्तरि चेति कर्तरि क्तः। अत्र दण्डमाह कात्यायनः—

उक्तेऽर्थे साक्षिणो यस्तु दूषयेत्प्रागदूषितान्।
न च तत्कारणं ब्रूयात्प्राप्नुयात्पूर्वसाहसम्॥

साक्षिणां स्वदूषणपरिहाराशक्तावर्थी तं कुर्यादित्याह बृहस्पतिः—

लेख्यं वा साक्षिणो वाऽपि विवादे यस्य दूषिताः।
तस्य कार्यं न सिद्ध्येत्तु यावत्तन्न विशोधयेत्॥

तल्लेख्यादिकम्। कूटसाक्षिकर्तुर्दण्डमाह कात्यायनः—

येन कार्यस्य लोभेन निर्दिष्टाः कूटसाक्षिणः।
गृहीत्वा तस्य सर्वस्वं कुर्यान्निर्विषयं ततः॥

निर्विषयं विवादविषयीभूतार्थरहितम्। दुष्टसाक्षिणां निश्चयोपायमाह नारदः—

यस्त्वात्मदोषदुष्टत्वादस्वस्थ इव लक्ष्यते।
स्थानात्स्थानान्तरं गच्छेदेकैकं वानुधावति॥
कासत्यकस्माच्च भृशमभीक्ष्णं निःश्वसत्यपि।
विलिखत्यवनिं पद्भ्यां बाहू वासश्च धूनयेत्॥
भिद्यते मुखवर्णोऽस्य ललाटं स्विद्यते तथा।
शोषमागच्छतश्चोष्ठावूर्ध्वं तिर्यक् च वीक्षते॥
त्वरमाण इवाबद्धमपृष्टो बहु भाषते।
कूटसाक्षी स विज्ञेयस्तं पापं विनयेद्भृशम्॥

साक्षिणां प्रश्नप्रकारमाह कात्यायनः। मनुरपि—

देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान्।
उदङ्मुखान्प्राङ्मुखान्वा पूर्वाह्णे च शुचिः शुचीन्॥
सभान्तः साक्षिणः सर्वानर्थिप्रत्यर्थिसन्निधौ।
प्राड्विवाकोऽनुयुंजीत विधिनानेन सान्त्वयन्॥
यद्द्वयोरनयोर्वेत्थ कार्येऽस्मिन्चेष्टितं मिथः।
तद्ब्रूत सर्वं सत्येन युष्माकं ह्यत्र साक्षिता॥
(अ. ८ श्लो. ८७।७९।८०)

गवाश्वादिविवादेषु विप्रतिपन्नार्थसान्निध्यमप्याह स एव—

अर्थिप्रत्यर्थिसान्निध्ये साध्यार्थस्य च सन्निधौ।

प्रत्यक्षं चोदयेत्साक्ष्यं न परोक्षं कथंचन ॥
अर्थस्योपरि कर्तव्यं तयोरपि विना क्वचित् ।
चतुष्पादेषु धर्मोऽयं द्विपदस्थावरेषु च ॥
तौल्यगणिममेयानामभावेऽपि हि वादयेत् ।
क्रियाकारेषु सर्वेषु साक्षित्वं न त्वतोऽन्यथेति ।

तयोरपि विना क्वचित् तयोर्वादिप्रतिवादिनोर्विना अपि अर्थसन्निधाने क्वचिच्चतुष्पादादिष्वित्यर्थः । तौल्यं तोलनयोग्यं सुवर्णादि, गणिमं गणनीयं नाणकादि, मेयं मानयोग्यं व्रीहिगोधूमादि, अभावेऽपि साध्यार्थसन्निधानाभावेऽपि । क्रियाकारेषु व्यवहारेषु ।

वधरूपे विवादपदे साक्षिभाषणं शिवसन्निधावित्याह स एव—

वधे चेत्प्राणिनां साक्ष्यं वादयेच्छिवसन्निधौ ।
तद्भावे तु चिह्नस्य नान्यथैतत्प्रवादयेत् ॥

तत्साक्षिभाषणं वधचिह्नस्याभावे कार्यम् । अन्यथा वधचिह्नसद्भावे ।

स एव—

न कालहरणं कार्यं राज्ञा साक्षिप्रभाषणे ।
महादोषो भवेत्कालाद्धर्मव्यावृत्तिलक्षणः ॥

नारदः—

आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम् ।
समस्तान्विदिताचारान् विज्ञातार्थान् पृथक् पृथक् ॥

वसिष्ठः—

समवेतैस्तु यद्दृष्टं वक्तव्यं तु तथैव तत् ।
विभिन्नैनैव तत्कार्यं वक्तव्यं तु पृथक्पृथक् ॥
भिन्नकाले तु यत्कार्यं विज्ञातं यत्र साक्षिभिः ।
एकैकं वादयेत्तत्र विधिरेष प्रकीर्तितः ॥

मनुः—

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥ (८।११३)
गोरक्षकान्वणिजकांस्तथा कारुकुशीलवान् ।
प्रेष्यान्वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥ (८।१०२)
ये व्यपेताः स्वकर्मभ्यः परपिण्डोपजीविनः ।

द्विजत्वमभिवाञ्छन्ति तांस्तु शूद्रवदाचरेत् । इति ॥

अन्यथाब्रुवतः सत्यं ते नश्यतीत्येवमादिप्रकारेणेत्यर्थः । साक्षिवचनपरीक्षामाह—

देशकालवयोद्रव्यसंज्ञाज्ञातिप्रमाणतः ।
अन्यूनं चेन्निगदितं सिद्धं साध्यं विनिर्दिशेत् ॥

साक्षिणां विप्रतिपत्तौ निर्णयमाह याज्ञवल्क्यः—

द्वैधे बहूनां वचनं समेषु गुणिनां तथा ।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः ॥ ( व्य. ७८ )

साक्ष्यमङ्गीकृत्यानभिधाने दण्डमाह स एव—

अब्रुवन्हि नरः साक्ष्यमृणं सदशबन्धकम् ।
राज्ञा सर्वं प्रदाप्यः स्यात् षट्चत्वारिंशकेऽहनि ॥ ( व्य. ७६ )

सर्वं वृद्धिसहितम् । सदशबन्धकम् दशमांशसहितम् । दशमांशो राज्ञा ग्राह्यः । सवृद्धिकमृणमुत्तमर्णेन ग्राह्यमिति मिताक्षरायाम् ।

जानतः साक्ष्यानङ्गीकारे दण्डमाह स एव—

यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः ।
स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत् ॥ ( व्य. ८२ )

विवादपराजये यो दण्डस्तं दण्डमष्टगुणं दाप्यः । दण्डदानासमर्थस्तु ब्राह्मणो निर्वास्यः । क्षत्रियादिः स्वोचितं कर्म कारयितव्यः इति मिताक्षरायाम् ।

मनुः—

यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः ।
रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः ॥ ( ८।१०८ )

याज्ञवल्क्यः—

उक्तेपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तराः ।
द्विगुणा वाऽन्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ॥ (व्य. ८०)

नारदः—

निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत् ।
लिखितं साक्षिणो वाऽपि पूर्वमावेदितं न चेत् ॥

क्वचित्साक्षिणोऽनृतवचनानुज्ञां प्रायश्चित्तं चाह याज्ञवल्क्यः—

वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ।
तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ॥ ( व्य. ८३ )

शूद्रस्य प्रायश्चित्तमाह विष्णुः—शूद्रश्चैकाहिकं गोदशकस्य ग्रासं दद्या-दिति । एकाहिकमेकस्मिन्नहनि भक्षयितुं पर्याप्तम् ।

इति साक्षिनिरूपणम् ।

---

## अथ दिव्यम् ।

तत्तु मानुषप्रमाणानिर्णीतार्थनिर्णायकम् । तच्च तत्कालकालान्तर-निर्णायकतया द्वेधा । तत्राद्यभेदानाह बृहस्पतिः—

घटोऽग्निरुदकं चैव विषं कोशश्च पञ्चमम् ।
षष्ठं च तण्डुलाः प्रोक्तं सप्तमं तप्तमाषकः ॥
अष्टमं फालमित्युक्तं नवमं धर्मजं स्मृतम् ॥

तत्राद्यानि पञ्च महाभियोग एवेत्याह याज्ञवल्क्यः—

तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये ।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥ (व्य. ९५)

शीर्षकस्थे पाराजयिकदण्डभाजि । पितामहः—

सावष्टंभाभियुक्तानां घटादीनि विनिर्दिशेत् ।
तण्डुलाश्चैव कोशश्च शङ्कास्वेतानि योजयेत् । इति ॥

अवष्टम्भो निश्चयः । तेन कोशोऽवष्टंभे शङ्कायां च भवति । कालिकापुराणे—

परदाराभिशापे च चौर्यागम्यागमेषु च ।
महापातकशस्ते च स्याद्दिव्यं नृपसाहसे ॥
विप्रतिपत्तौ विवादेऽवर्णस्य स्थापने कृते ।
तत्रैव स्थापयेद्दिव्यं शिरःपूर्वं महीपतिः ॥
परदाराभिशापे च बहवो यत्र वादिनः ।
शिरोहीनं भवेद्दिव्यमात्मनः शुद्धिकारणात् ।

अगम्याः परदारभिन्नाः साधारणा वेश्याद्याः । शस्तेऽभिशस्ते । साहसं बलादन्यायः । अवर्णो निन्दा । शिरो दण्डः । परदाररूपं विशेषणमविवक्षितमभिशापस्यानुवाद्यत्वात् । एवं बहव इत्याद्यपि । तेन वाद्यभावेऽपि सर्वाभिशापे दिव्यं भवति । शुद्धिकारणादितिहेतु-निर्देशोऽप्येवं संगच्छते, 'विनापि शीर्षकं कुर्यान्नृपद्रोहेऽथ पातके' इति सामान्योक्तिश्च ।

नारदः—

राजभिः शंकितानां च निर्दिष्टानां च दस्युभिः ।
आत्मशुद्धिपराणां च देयं दिव्यं शिरो विना ॥ इति ।

कालान्तरे निर्णायकं दिव्यं, शपथः । तद्भेदानाह नारदः—

सत्यवाहनशस्त्राणि गोबीजकनकानि च ।
देवतापितृपादांश्च दत्तानि सुकृतानि च ॥
स्पृशेच्छिरांसि पुत्राणां दाराणां सुहृदां तथा ।
अभियोगेषु सर्वेषु कोशपानमथापि वा ॥
इत्येते शपथाः प्रोक्ता मनुना स्वल्पकारणात् ।

कोशस्य कालान्तरनिर्णायकत्वेपि महाभियोगविषयतयाद्येषु पाठः ।

याज्ञवल्क्यः—

रुच्या वान्यतरः कुर्यादितरो वर्त्तयेच्छिरः ।

अयं च विकल्पोऽभियोक्तुरिच्छायामेव । तदनिच्छायां त्वभियोज्यस्यैव दिव्यम् ।

न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत् ।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः ॥

इति दिव्यतत्वे कात्यायनीयोक्तेः ।

---

## अथाधिकारिव्यवस्था ।

याज्ञवल्क्यः—

तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम् ।
अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा ॥ (व्य. ९६)

स्त्री जातिवयोवस्थाविशेषानादरेण । षोडशाब्दावधिको बालः सर्वजातीयोऽपि । अशीतिवर्षाधिको वृद्धः । अत्र ब्राह्मणस्य वक्ष्यमाणसाधारणकाले तुलैव नियता । अग्न्यादिकाले तु तान्यपि भवन्ति । अत एव पितामहः—

सर्वेषामेव वर्णानां कोशाच्छुद्धिर्विधीयते ।
सर्वाण्येतानि सर्वेषां ब्राह्मणस्य विषं विना ॥

कालिकापुराणे—

वर्णान्त्यस्य सदा देयं माषकं तप्तहेमजम् ।

नारदः—

क्लीबान्नरान्सत्त्वहीनान्परितश्चार्दितान्तरान् ।
बालवृद्धातुरान् स्त्रीश्च परीक्षेत धटे सदा ॥
स्त्रीणां तु न विषं प्रोक्तं न चापि सलिलं स्मृतम् ।
धटकोशादिभिस्तासामन्तस्तत्त्वं विचारयेत् ॥
नार्त्तानां तोयशुद्धिः स्यान्न विषं पित्तरोगिणाम् ।
श्वित्र्यन्धकुनखादीनां नाग्निकार्यं विधीयते ॥
न मज्जनीयाः स्त्रीबाला धर्मशास्त्रविचक्षणैः ।
रोगिणो ये च वृद्धाः स्युः पुमांसो ये च दुर्बलाः ॥
निरुत्साहान्व्याधिक्लिष्टान्नार्त्तांस्तोये निमज्जयेत् ।
सद्यो म्रियन्ते मज्जन्तः स्वल्पप्राणा हि ते स्मृताः ॥
साहसेऽप्यागतानेतान्नैव तोये निमज्जयेत् ।
न चापि हारयेदग्निं न विषेण विशोधयेत् ॥

विष्णुः—

न श्लेष्मिणां व्याधितानां भीरूणां श्वासकासिनाम् ।

कात्यायनः—

न लोहशिल्पिनामग्निः सलिलं नाम्बुसेविनाम् ।
मन्त्रयोगविदां चैव विषं दद्यात्तु न क्वचित् ॥
तण्डुलैर्न नियुञ्जीत व्रतिनं मुखरोगिणम् ।

व्रती पयोव्रतादिमान् । पितामहः—

मद्यपस्त्रीव्यसनिनां कितवानां तथैव च ।
कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः ॥

नारदः—

महापराधे निर्धर्मे कृतघ्ने क्लीबकुत्सिते ।
नास्तिके दृष्टदोषे च कोशदानं विवर्जयेत् ॥

कात्यायनः—

अस्पृश्याधमदासानां म्लेच्छानां पापकारिणाम् ।
प्रातिलोम्यप्रसूतानां निश्चयो न तु राजनि ॥
तत्प्रसिद्धानि दिव्यानि समये तेषु निर्दिशेत् ।

तत्प्रसिद्धानि धटसर्पादीनि । दिव्यकारिणोऽशक्तौ प्रतिनिधिमाह दिव्यतत्त्वे स एव—

देशकालाऽविरोधे तु यथायुक्तं प्रकल्पयेत् ।
अन्येन हारयेद्दिव्यं विधिरेष विपर्यये ॥

अन्येन हारयेत्प्रतिनिधिना कारयेत् । विपर्यये दिव्यकारिणोऽसामर्थ्ये युक्तं प्रकल्पयेत् । पूर्वं पित्रादिघातो महापापं वा कृतमिति निश्चये कालान्तरे चार्थान्तरसंदेहेऽपि प्रतिनिधिद्वारैव दिव्यमाह स एव—

मातापितृद्विजगुरुवृद्धस्त्रीबालघातिनाम् ।
महापातकयुक्तानां नास्तिकानां विशेषतः ॥
लिङ्गिनां प्रमदानां च मन्त्रयोगक्रियाविदाम् ।
वर्णसंकरजातानां पापाभ्यासप्रवर्तिनाम् ॥
एतेष्वेवाभियोगेषु निन्द्येष्वेव प्रयत्नतः ।
दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः ॥
एतैरेव नियुक्तानां साधूनां दिव्यमर्हति ।
न सन्ति साधवो यत्र तत्र शोध्याः स्वकैर्नरैः ॥

स्वकैराप्तैः ।

---

## अथ कालः ।

पितामहः—

चैत्रो मार्गशिरश्चैव वैशाखश्च तथैव च ।
एते साधारणा मासा दिव्यानामविरोधिनः ॥
धटः सर्वर्त्तुकः प्रोक्तो वाति वाते विवर्जयेत् ।
अग्निः शिशिरहेमन्तवर्षासु परिकीर्त्तितः ॥
शरद्ग्रीष्मे तु सलिलं हेमन्ते शिशिरे विषम् ।

विषे हेमन्तशिशिरयोरेवोपादानं कालान्तरस्याप्युपलक्षणम् । वर्षे चतुर्यवामात्रेत्याद्यग्रे वक्ष्यमाणत्वात् ।

नारदः—

कोशस्तु सर्वदा देयस्तुला स्यात्सार्वकालिकी ।

पितामहः—

पूर्वाह्णेऽग्निपरीक्षा स्यात्पूर्वाह्णे च धटो भवेत् ।
मध्याह्ने तु जलं देयं धर्मतत्त्वमभीप्सता ॥
दिवसस्य तु पूर्वाह्णे कोशशुद्धिर्विधीयते ।

रात्रौ तु पश्चिमे यामे विषं देयं सुशीतलम् । इति ॥
एतानि च दिव्यान्यादित्यवारे कार्याणीति शिष्टाः ।

## अथ देशः ।

पितामहः—

प्राङ्मुखो निश्चलः कार्यः शुचौ देशे घटः सदा ।
इन्द्रस्थाने सभायां वा राजद्वारे चतुष्पथे ॥

नारदः—

सभाराजकुलद्वारे देवायतनचत्वरे । इति ।

कात्यायनः—

इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम् ।
नृपद्रोहप्रवृत्तानां राजद्वारे प्रयोजयेत् ॥
प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे ।
अतोऽन्येषु तु कार्येषु सभामध्ये विदुर्बुधाः । इति ।

नारदः—

अदेशकालदत्तानि बहिर्वादिकृतानि च ।
व्यभिचारं सदार्थेषु कुर्वन्तीह न संशयः । इति ।

## अथ सर्वदिव्यसाधारणो विधिः ।

पितामहः—

तत आवाहयेद्देवान्विधिनानेन धर्मवित् ।
प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत् ॥
एह्येहि भगवन् धर्म अस्मिन्दिव्ये समाविश ।
सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः ॥
आवाह्य तु घटे धर्मं पश्चादङ्गानि विन्यसेत् ।

स एव—

इन्द्रं पूर्वे तु संस्थाप्य प्रेतेशं दक्षिणे तथा ।
वरुणं पश्चिमे भागे कुबेरं चोत्तरे तथा ॥
अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् ।
इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः ॥
कुबेरश्च सुवर्णाभ अग्निश्चापि सुवर्णभः ।

तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते ॥
ईशानस्तु भवेद्रक्त एवं ध्यायेत्क्रमादिमान् ।
इन्द्रस्य दक्षिणे पार्श्वे वसूनावाहयेद्बुधः ॥
धरो ध्रुवस्तथा सोम आपश्चैवाऽनिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः ॥
देवेशेशानयोर्मध्ये आदित्यानां तथायनम् ।
धातार्यमा च मित्रश्च वरुणोंशो भगस्तथा ॥
इन्द्रो विवस्वान्पूषा च पर्जन्यो दशमस्तथा ।
ततः स्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ॥
एते तु द्वादशादित्या नामभिः परिकीर्त्तिताः ।
अग्नेः पश्चिमभागे तु रुद्राणामयनं विदुः ॥
वीरभद्रश्च शंभुश्च गिरिशश्च महायशाः ।
अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ॥
भुवनाधीश्वरश्चैव कपाली च विशांपतिः ।
स्थाणुर्भर्गश्च भगवान्रुद्रास्त्वेकादश स्मृताः ॥
प्रेतेशरक्षो मध्ये च मातृस्थानं प्रकल्पयेत् ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥
वाराही चैव माहेन्द्री चामुंडा गणसंयुता ।
निर्ऋतेरुत्तरे भागे गणेशायतनं विदुः ॥
वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते ।
गगनस्पर्शनो वायुरनिलो मारुतस्तथा ॥
प्राणः प्राणेशजीवौ च मारुतः सप्त कीर्त्तिताः ।
घटस्योत्तरभागे तु दुर्गामावाहयेद्बुधः ॥
एतासां देवतानां तु स्वनाम्ना पूजनं विदुः ।
भूषावसानं धर्माय दत्त्वा चार्घादिकं क्रमात् ॥
अर्घ्यादि पश्चादङ्गानां भूषान्तमुपकल्पयेत् ।
गन्धादिकां निवेद्यान्तां परिचर्यां प्रकल्पयेत् ॥
चतुर्दिक्षु तथा होमः कर्त्तव्यो वेदपारगैः ।
आज्येन हविषा चैव समिद्भिर्होमसाधनैः ॥
सावित्र्या प्रणवेनाथ स्वाहान्तेनैव होमयेत् ।

हविश्चरुः । आज्यहविःसमिधां संप्रतिपन्नदेवताकत्वान्मिलितानामेव होमः सान्नाय्ययोरिवेति दिव्यतत्वे गौडमीमांसकाः । तन्न । आज्ये स्रुवेणावद्यतीति स्रुवस्य, चरौ सकृदुपस्तृणाति मध्यात्पूर्वार्द्धाच्च द्विर्हविषोऽवद्यति अभिघारयति हविरवत्तं चैषोऽवदानधर्म इत्याश्वलायनादिसूत्रात्स्रुचः, समित्सु सामर्थ्याद्धस्तस्येतिभिन्नसाधनकत्वात्तन्त्रतानुपपत्तेः । सान्नाय्यहोमयोस्तु जुह्वा एव साधनत्वाद्युक्ता तन्त्रतेति । स एव—

यमर्थमभियुक्तः स्याल्लिखित्वा तं तु पत्रके ।
मन्त्रेणानेन सहितं तत्कार्यं च शिरोगतम् ॥

मन्त्रश्च—

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तम् । इति ॥

नारदः—

प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपारगः ।
श्रुतवृत्तोपसंपन्नः शान्तचित्तो विमत्सरः ॥
सत्यसन्धः शुचिर्दक्षः सर्वप्राणिहिते रतः ।
उपोषितश्चार्द्रवासाः कृतदन्तानुधावनः ॥
सर्वासां देवतानां च पूजां कृत्वा यथाविधि । इति ।

याज्ञवल्क्यः—

सचैलं स्नातमाहूय सूर्योदय उपोषितम् ।
कारयेत्सर्वदिव्यानि नृपब्राह्मणसन्निधौ ॥ ( व्य. ९७ )

पितामहोऽपि—

एकरात्रोपोषिताय त्रिरात्रोपोषिताय वा ।
नित्यं देयानि दिव्यानि शुचये चार्द्रवाससे । इति ॥

स एव—

सद्भिः परिवृतो राजा शुद्धिमेतां प्रपूजयेत् ।
ऋत्विक्पुरोहिताचार्यान्दक्षिणाभिस्तु तोषयेत् ॥
एवं कारयिता राजा भुक्त्वा भोगान् मनोरमान् ।
महतीं कीर्त्तिमाप्नोति ब्रह्मभूयाय कल्पते ॥

---

## अथ घटविधिः ।

पितामहः—

विशालामुच्छ्रितां शुभ्रां घटशालां तु कारयेत् ।
यन्त्रस्थो नोपहन्येत श्वभिश्चाण्डालवायसैः ॥
कपाटबीजसंयुक्तां परिवारकरक्षिताम् ।
पानीयादिसमायुक्तामशून्यां कारयेन्नृपः ॥

नारदः—

खादिरं कारयेत्तत्र निर्व्रणं शुक्लवर्जितम् ।

शुक्लखादिरवर्जितमित्यर्थः ॥

शांशपं तदभावे वा शालं वा कोटरैर्विना ।
अञ्जनं तिंदुकीसारं तिनिशं रक्तचन्दनम् ॥ (१२६४)

माधवस्तु—

अर्जुनस्तिलकोऽशोकस्तिनिशो रक्तचन्दनः । इति पपाठ ।
एवंविधानि काष्ठानि घटार्थं परिकल्पयेत् ।

एवंविधानीत्यादीनि अन्यान्यपि यज्ञियान्यौदुंबरादीनि इति मदनः । अत एव पितामहः—

छित्वा तु यज्ञियं वृक्षं यूपवन्मन्त्रपूर्वकम् ।
प्रणम्य लोकपालेभ्यस्तुला कार्या मनीषिभिः ॥
मन्त्रः सौम्यो वानस्पत्यश्छेदने जप्य एव च ।

यूपवदोषधे त्रायस्वैनमित्यादिमन्त्रपूर्वकम् । सौम्यवानस्पत्ययोर्जपमन्त्रत्वेनादृष्टार्थत्वात्समुच्चयः । सौम्याः प्रसिद्धाः । वानस्पत्यो वनस्पते शतवल्शो विरोहेति । अस्य यूपवदित्यतिदेशात्सिद्धस्यैवानुवादः ।

पितामहः—

चतुर्हस्ता तुला कार्या पादौ कार्यौ तथाविधौ ।
अन्तरं तु तयोर्हस्तौ भवेदध्यर्द्धमेव च ॥

व्यासः—

हस्तद्वयं निखेयं तु पादयोरुभयोरपि । इति ॥

पितामहः—

चतुरस्रा तुला कार्या दृढा ऋज्वी तथैव च ।
कटकानि च देयानि त्रिषु स्थानेषु यत्नतः ॥

स एव—

शिक्यद्वयं समासज्य पार्श्वयोरुभयोरपि ।
प्रागग्रान्कल्पयेद्दर्भाञ्छिक्ययोरुभयोरपि ॥
पश्चिमे तोलयेत्कर्तृनन्यस्मिन्मृत्तिकां शुभाम् ।
इष्टकाभस्मपाषाणकपालास्थिविवर्जिताम् ॥

नारदः—

शिक्यद्वयं समासज्य धटकर्कटयोर्दृढम् ।
एकत्र शिक्ये पुरुषमन्यत्र तुलयेच्छिलाम् ॥
धारयेदुत्तरे पार्श्वे पुरुषं दक्षिणे शिलाम् ।
पिटकं पूरयेत्तस्मिन्निष्टकायां सुलोष्टकैः ॥

परीक्षाप्रकारमाह स एव—

कार्यः परीक्षकैर्नित्यमवलंबसमो धटः ।
उदकं च प्रदातव्यं धटस्योपरि पंडितैः ॥
यस्मिन्न प्लवते तोयं स विज्ञेयः समो धटः ।

साम्यार्थमवलंबावाह पितामहः—

तोरणे च तथा कार्ये पार्श्वयोरुभयोरपि ।
धटादुच्चतरे स्यातां नित्यं दशभिरंगुलैः ॥
अवलंबौ च कर्त्तव्यौ तोरणाभ्यामधोमुखौ ।
मृन्मयौ सूत्रसंबद्धौ धटमस्तकचुंबिनौ ॥

पितामहः—

तोलयित्वा नरं पूर्वं तस्मात्तमवतार्य तु ।
धटं तु कारयेन्नित्यं पताकाध्वजशोभितम् ॥
तत आवाहयेद्देवान् विधिनानेन मन्त्रवित् ।
वादित्रतूर्यनिर्घोषैर्गन्धमाल्यानुलेपनैः ॥

नारदः—

रक्तैर्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः ।
अर्चयेत्तु धटं पूर्वं ततः शिष्टांस्तु पूजयेत् ॥

याज्ञवल्क्यः—

तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः ।
प्रतिमानसमीभूतो रेखां कृत्वावतारितः ॥

त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता ।
तत्सत्यं वद कल्याणि संशयान्मां विमोचय ॥
यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय ।
शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥(व्य.१००-१०२)

नारदः—

समयैः परिगृह्याथ पुनरारोहयेन्नरम् ।
निर्वाते वृष्टिरहिते शिरस्यारोप्य पत्रकम् ॥ (१।२७६)

समयैः परिगृह्य शपथैर्नियम्य । तानाह विष्णुः—

ब्रह्मघ्ना ये स्मृता लोका ये लोकाः कूटसाक्षिणः ।
तुलाधारस्य ते लोकास्तुलां धारयतो मृषा ॥ इति ।

पुनरारोहणकालेऽभिमन्त्रणमाह नारदः—

त्वं वेत्सि सर्वलोकानां पापानि सुकृतानि च ।
त्वमेव देव जानीषे न विदुर्यानि मानवाः ॥
व्यवहाराभिशस्तोऽयं मानवस्तोल्यते त्वयि ।
तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि ॥
देवासुरमनुष्याणां सत्यैस्त्वमतिरिच्यसे ।
सत्यसंधोऽसि भगवन् शुभाशुभविभावने ॥
आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च संध्ये
धर्मश्च जानाति नरस्य वृत्तम् । इति ॥

पितामहः—

ज्योतिर्विद्ब्राह्मणः श्रेष्ठः कुर्यात्कालपरीक्षणम् ।
विनाड्यः पञ्च विज्ञेयाः परीक्षाकालकोविदैः ॥
साक्षिणो ब्राह्मणश्रेष्ठा यथादृष्टार्थवादिनः ।
ज्ञानिनः शुचयोऽलुब्धा नियोक्तव्या नृपेण तु ॥
शंसन्ति साक्षिणः सर्वे शुद्ध्यशुद्धी नृपे तदा ।

विनाड्यः पलानि । 'दशगुर्वक्षरः प्राणः षट्प्राणाः स्याद्विनाडिका'
इतिस्मृतेः ।

४

नारदः—

तुलितो यदि वर्धेत विशुद्धः स्यान्न संशयः ।
समो वा हीयमानो वा न विशुद्धो भवेन्नरः ॥

वृद्धिरूर्ध्वगतिः । हानिरधोगतिः ।

पितामहः—

अल्पपापः समो ज्ञेयो बहुपापस्तु हीयते ।

अल्पत्वं सकृदमतिकृतत्वेन । यत्र तु शिरःस्थायिवचनेनैव सकृदमतिकृतत्वनिश्चयः पापमात्रे च विप्रतिपत्त्या तद्दिव्ये कृते समता तत्र दोषाल्पत्वासंभवात्पुनःकरणम् । अत एव बृहस्पतिः—

तत्समस्तु पुनस्तोल्यो वर्द्धितो विजयी भवेत् । इति ॥

पुनःकरणे कारणान्तरमाह कात्यायनः—

शिक्यच्छेदे तुलाभंगे तथा चापि गुणस्य वा ।
शुद्धेश्च संशये चैनं परीक्षेत पुनर्नरम् ॥

व्यासः—

कक्षच्छेदे तुलाभङ्गे घटकर्कटयोस्तथा ।
रज्जुच्छेदेऽक्षभङ्गे वा दद्याच्छुद्धिं पुनर्नृपः ॥

इदं तु दृष्टकारणकभङ्गपरम् । आकस्मिकभङ्गादौ त्वशुद्ध एव ।

कक्षच्छेदे तुलाभङ्गे घटकर्कटयोस्तथा ।
रज्जुच्छेदेऽक्षभङ्गे वा तथैवाशुद्धिमादिशेत् । इति स्मृत्यंतरात् ।

कक्षं शिक्यतलम्, अक्षः स्तंभोपरि स्थापितस्तुलाधारः । आवृत्तिस्तोलनमात्रस्य न साङ्गप्रयोगस्येति प्राच्याः । एवं तु वैगुण्यापरिहारात्साङ्गः प्रयोग आवर्तनीय इति मदनः ।

---

## अथ प्रयोगः ।

कर्ता शुभेऽह्नि पूर्वाह्णे पूर्वोक्तान्यतमवृक्षसमीपे गत्वा ओषधे त्रायस्वैनमिति मन्त्रेण वृक्षं छित्वा, सोमो धेनुं गौतमः सोमस्त्रिष्टुप् जपे विनियोगः सोमो धेनुं० । वनस्पते गाथिनो विश्वामित्रो वनस्पतिस्त्रिष्टुप् जपे० वनस्पते शतवल्शो इति जप्त्वा इन्द्रादिलोकपालान्प्रत्येकं नत्वा चतुर्हस्तां दीर्घां चतुरंगुलस्थूलां चतुरस्रां मध्ये तयोश्चतुरंगुलवृत्ता मध्य उपरिभागे तयोश्चाधोभागे च त्रिभिः कर्कटैः कटकैर्वा युतां तुलां

कुर्यात् । ततः सप्तहस्तां पञ्चहस्तां वा चतुरंगुलोन्नतां वेदिं च कुर्यादिति केचित् । ततस्तस्यां शुचिदेशान्तरे वा चतुरस्रं षड्ढस्तं षड्ढस्तात्रिकांश-कृतचूडं स्तंभद्वयं हस्तद्वयं भूमौ निखेयम् । भूमेरुपरि हस्तचतुष्टयं चूडांशश्चाधिकः । स्तंभान्तरं तु हस्तद्वयं सार्द्धहस्तं वा । तच्चूडयो-र्मध्येऽधोभागे लौहकर्कटकटकवडिशाद्याकारतुलावलंबनयुतं काष्ठं नि-वेश्य, तस्मिंस्तुला स्वोपरितनकर्कटवडिशादिनावलंबनीया । प्रान्तयोश्च फलकद्वयं तिसृभिस्तिसृभीरज्जुभिर्बन्धनीयम् । तुलायाः प्राच्यां हस्त-द्वयान्तराले दक्षिणोत्तरयोः स्तंभद्वयं निखाय तयोरुपर्युत्तराङ्गं काष्ठं दद्यात् । तदेतत्तोरणम् । तच्च धटाद्दशाङ्गुलोच्चम् । एतादृशं पश्चिमायामपि कार्यम् । तोरणाभ्यामधोलंबमानौ मृन्मयौ सूत्रसंबद्धौ गोलकरूपाव-वलंबौ तुलाप्रान्तस्पृशौ कार्यौ साम्यज्ञानाय । फलकयोश्च प्रागग्रान्कुशा-नास्तृणीयात् । ततः कृतैकोपवासं शक्तौ महाभियोगे वा कृतोपवासत्रयं रविवारे सूर्योदयोत्तरं सचैलस्नातं शोध्यं कृतैकोपवासः प्राड्विवाकः पश्चिमे शिक्य आरोप्य पूर्वशिक्ये पाषाणेष्टकामृदाद्यारोप्य समं तोलयेत् । तत्परीक्षामुदकप्रक्षेपादिना सत्यवादिनो विप्रा हेमकाराश्च कुर्युः । तत-स्तोलनकाले येन सन्निवेशेनोपविष्टं तत्संनिवेशज्ञानाय तादृशीं रेखां कृत्वा तमवतारयेत् । ततः शोध्यो देशकालौ संकीर्त्यात्मशुद्धिज्ञापना-यामुकदिव्यं करिष्य इतिसंकल्प्य प्राड्विवाकमेकं चतुर ऋत्विजश्च वस्त्रादिना वृणुयात् । स्वस्तिवाचनाद्यपि कार्यमिति स्मार्तभट्टाचार्याः । प्राड्विवाकश्च प्राञ्जलिः सतूर्यनादं,

ॐ एह्येहि भगवन्धर्म अस्मिन्दिव्ये समाविश ।
सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः । इति ॥

एवं धटे धर्ममावाह्य पश्चादङ्गदेवता आवाहयेत् । इन्द्रं विश्वा माधु-च्छन्दस इन्द्रोऽनुष्टुप् । इन्द्रावाहने विनियोगः । एवं सर्वत्र वि.नि.योग । ॐ इन्द्रं विश्वा० इन्द्र इहागच्छेह तिष्ठेति पूर्वे इन्द्रमावाह्य पीतं ध्यायेत् । यमाय सोमं यमो यमोऽनुष्टुप् । ॐ यमाय सोमं० यम इहागच्छेह तिष्ठेति दक्षिणे यममावाह्य श्यामं ध्यायेत् । राजाधिराजायेति यजुषा कुबेर इहागच्छेह तिष्ठेति उत्तरे कुबेरमावाह्य स्वर्णाभं ध्यायेत् । त्वं नो वामदेवो वरुणस्त्रिष्टुप् । ॐ त्वन्नो अग्ने व० । वरुणेहागच्छेह तिष्ठेति पश्चिमे वरुणमावाह्य स्फटिकाभं ध्यायेत् । अग्निं मेधातिथिरग्निर्गायत्री ।

अग्निं दूतं। अग्ने इहागच्छेह तिष्ठेति आग्नेये अग्निमावाह्य सुवर्णवर्णं ध्यायेत्। मोषुणो घोरः कण्वो निर्ऋतिर्गायत्री। ॐ मोषुणः० इहेत्यावाह्य श्यामं० ध्यायेत्। तव वायोव्यश्वोवायुर्गायत्री। तव वाय० इहेति पूर्ववत्। धूम्रं ध्यायेत्। तमीशानं गौतम ईशानो जगती। ॐ तमीशानं० इहेत्यावाह्य रक्तं ध्यायेत्। इन्द्राद्दक्षिणतः ज्मया अत्र वसवो मैत्रावरुणो वसिष्ठो वसवस्त्रिष्टुप्। ज्मया अत्र० वसव इहागच्छतेत्यष्टौ वसून्। धरो ध्रुवस्तथा सोम आपश्चैवानिलोऽनलः। प्रत्यूषश्च प्रभासश्च वसवोष्टौ प्रकीर्त्तिताः। इन्द्रेशानयोर्मध्ये त्यान्नु सामदो मत्स्यो द्वादशादित्या गायत्री। त्यान्नुक्षत्रियान् इत्यादिद्वादशादित्यानावाह्य,

धातार्यमा च मित्रश्च वरुणोंऽशो भगस्तथा।
इन्द्रो विवस्वान्पूषा च पर्जन्यो दशमस्तथा॥
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः।
इत्येते द्वादशादित्या नामभिः परिकीर्त्तिताः॥

अग्नेः पश्चिमे। आरुद्रासः श्यावाश्व एकादशरुद्रा जगती। आरुद्रासः० इहेति रुद्रानावाह्य—

वीरभद्रश्च शंभुश्च गिरिशश्च महायशाः।
अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः॥
भुवनाधीश्वरश्चैव कपाली च विशांपतिः।
स्थाणुर्भवश्च भगवान् रुद्रा एकादश स्मृताः॥

यमनिर्ऋतिमध्ये ब्रह्मजज्ञानं गौतमो वामदेवो ब्रह्मा त्रिष्टुप्। ॐ ब्रह्मजज्ञानं० इहेत्यादिब्रह्माणमावाह्य, गौरीर्मिमायेत्यस्य दीर्घतमा उमा जगती, गौरीर्मिमाय० मातर इहागच्छतेह तिष्ठतेति मातॄरावाह्य,

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा।
वाराही च तथेन्द्राणी चामुंडाः सप्त मातरः॥

निर्ऋतेरुत्तरतः—

गणानां त्वा गृत्समदो गणाधिपतिर्जगती। ॐ गणानां त्वा० इहेत्यादि गणेशं। वरुणादुत्तरे मरुतो यस्य राहूगणो मरुतो गायत्री ॐमरुतो यस्य० इहेत्यादि मरुतः,

गगनस्पर्शनो वायुरनिलो मारुतस्तथा।
प्राणः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्तिताः॥

घटादुत्तरे जातवेदसे कश्यपो दुर्गा त्रिष्टुप् । ॐजातवेदसे० इहेति दुर्गाम् । एवमेता देवता आवाह्य पूजयेत् । धर्मायार्घ्यं प्रकल्पयामि नमः इत्यादि प्रयोगेणार्घ्यपाद्याचमनीयमधुपर्काचमनीयस्नानवस्त्रयज्ञोपवीताचमनीयमुकुटकटकादिभूषान्तं धर्माय दत्वा इन्द्रादीनां प्रणवाद्यैः स्वस्वनामभिश्चतुर्थ्यन्तनमोन्तैरर्घ्यादिभूषणान्तं पदार्थानुसमयेन दत्वा धर्माय गन्धपुष्पधूपदीपनैवेद्यानि दद्ध्यपूपाक्षतानि च दत्वा इन्द्रादीनां गन्धादीनि पूर्ववद्दद्यात् । गन्धपुष्पादीनि च धटे धर्मपूजायां च रक्तानि कार्याणि । इन्द्रादीनां यथालाभम्, एतदन्तं प्राड्विवाकः कुर्यात् । ततश्चतुर्भिर्ऋत्विग्भिश्चतसृषु दिक्षु लौकिकाग्निस्थापनादिपूर्वं होमः कार्यः । तत्र सप्रणवां गायत्रीमुच्चार्य पुनः स्वाहाकारान्तं प्रणवमुच्चार्य आज्यचरुसमिधः प्रत्येकमष्टोत्तरशतं सवित्रे जुहुयुः । ततोभियुक्तमर्थं पत्रे लिखेदभियुक्तः ।

आदित्यचन्द्रावनिलोऽनलश्च-<br>
द्यौर्भूमिरापो हृदयं यमश्च ।<br>
अहश्च रात्रिश्च उभे च सन्ध्ये<br>
धर्मश्च जानाति नरस्य वृत्तम् ॥

इति मन्त्रं च लिखेत् । तत्र पत्रं संशोध्याभियुक्तशिरोगतं कुर्यात् । इदं च धर्मावाहनादि शिरःपत्रदानान्तं सर्वदिव्यसाधारणम् । ततः प्राड्विवाको घटमभिमन्त्रयेत्—

त्वं धट ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् ।<br>
धकाराद्धर्मभूतस्त्वं टकारात्कुटिलं नरम् ॥<br>
धृतो भावयसे यस्मात् धटस्तेनाभिधीयसे ।<br>
त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च ॥<br>
त्वमेव देव जानीषे न विदुर्यानि मानवाः ।<br>
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ॥<br>
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ।

इति मन्त्रेण । ततोऽभियुक्तः—

त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता ॥<br>
तत्सत्यं वद कल्याणि संशयान्मां विमोचय ।

यद्यहं पापकृन्मातस्ततो मां त्वमधो नय ॥
शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ।

ततः प्राड्विवाकः शिरोगतपत्रकमभियुक्तं यथास्थानं यथासंनिवेशं च धटमारोप्य पञ्चपलकं तत्रैव स्थापयेत् । तस्मिश्च काले शुद्ध्यशुद्धी परीक्ष्य शुचिभिर्ब्राह्मणै राज्ञे सभ्येभ्यश्च निवेदनीये । ततस्ततोऽनन्तरं प्राड्विवाकब्रह्मर्त्विजो यथाविभवं दक्षिणादिभिस्तोषयेत् । ततो देवता उत्तिष्ठ ब्रह्मणस्पते यान्तु देवगणा इति विसृज्य सर्वं प्राड्विवाकाय समर्पयेत् ।

---

## अथाग्निविधिः ।

पितामहः—

अग्नेर्विधिं प्रवक्ष्यामि यथावच्छास्त्रचोदितम् ।
कारयेन्मंडलान्यष्टौ पुरस्तान्नवमं तथा ॥
आग्नेयं मण्डलं चाद्यं द्वितीयं वारुणं तथा ।
तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम् ॥
पञ्चमं त्विन्द्रदैवत्यं षष्ठं कौबेरमुच्यते ।
सप्तमं सोमदैवत्यं सावित्रं त्वष्टमं तथा ॥
नवमं सर्वदैवत्यमिति वेदविदो विदुः ।

मदनस्तु—अष्टमं सर्वदैवतम् ।

पुरस्तान्नवमं यत्तु तन्महत्पार्थिवं विदुः ।
गोमयेन कृतानि स्युरद्भिः पर्युक्षितानि च । इति पपाठ ।

मण्डलपरिमाणमाह स एव—

द्वात्रिंशदंगुलं प्राहुर्मण्डलान्मण्डलान्तरम् ।
अष्टभिर्मण्डलैरेवमङ्गुलानां शतद्वयम् ॥
षट्पञ्चाशत्समधिकं भूमेस्तु परिकल्पना ।

मण्डलान्मण्डलादेः मण्डलभुवोन्तरालभुवश्च मिलित्वा द्वात्रिंशदङ्गुलानीत्यर्थः । तत्र षोडशाङ्गुलं मण्डलं मण्डलयोरन्तरालं च तावदेव षोडशाङ्गुलाधिकं ज्ञेयं, मण्डलं तावदन्तरमिति याज्ञवल्क्योक्तेः ( व्य० श्लो० १०६ ) । यदि शोध्यपदं षोडशाङ्गुलाधिकं तदन्तरालं षोडशाङ्गुलन्यूनमेव भवति । यदि शोध्यपदं षोडशाङ्गुलादल्पं तदा षोडशा-

ङ्गुलमण्डलमध्ये पदपरिमाणमवान्तरमण्डलं कार्यम् । यत्तु नारद एव 'शतद्वयमित्यस्याग्रे चत्वारिंशत्समधिकं भूमेरङ्गुलमानतः' इति पपाठ तदष्टमनवममण्डलान्तरालभूभागं विहाय योज्यम् । तस्य गमनानर्हत्वात् । एवं 'चतुर्विंशतिराख्याता भूमेस्तु परिकल्पना' इति कल्पतरूक्ते पाठेऽप्याद्यमवस्थितिमण्डलं विहायाङ्गुलपरिमाणं योज्यम् ।

मण्डले मण्डले देयाः कुशाः शास्त्रप्रचोदिताः ।
विन्यसेच्च पदान्तेषु कर्त्ता नित्यमिति स्थितिः ।

मिताक्षरायां मदनरत्ने च—

शान्त्यर्थं जुहुयादग्नौ घृतमष्टोत्तरं शतम् ।

अयं च होमो 'अग्नये पावकाय स्वाहा' इतिमन्त्रेण कार्य इति विज्ञानेश्वरः ।

नारदः—

जात्यैव लोहकारो यः कुशलश्चाग्निकर्मणि ।
दृष्टप्रयोगश्चान्यत्र तेनाऽयोऽग्नौ प्रतापयेत् ॥
अग्निवर्णमयःपिण्डं सस्फुलिङ्गं सुरक्षितम् ।

पितामहः—

अस्त्रिहीनं समं कृत्वा अष्टाङ्गुलमयोमयम् ।
पिण्डं तु पातयेदग्नौ पञ्चाशत्पलिकं समम् ॥

कालिकापुराणे—

शतार्द्धपलिकं वृत्तं द्वादशाङ्गुलमायतम् ।
लौहमग्निमयं ध्मातं देयं राज्ञाऽभिशापिने ।

शंखलिखितौ तु पिण्डस्य षोडशपलत्वमाहतुः—'अथवा सप्ताश्वत्थपत्रान्तरितं षोडशपलमग्निवर्णं पिण्डमञ्जलिनादाय' इत्यादि । एतच्चाशक्तौ । तृतीयतापे तप्यन्तमितिनारदोक्तेस्त्रिवारं पिण्डः संताप्यः । तत्र संताप्य जले क्षिप्त्वा पुनः संताप्य जले क्षिप्त्वा पुनस्ताप्यमाने प्राड्विवाको धर्मावाहनादिशिरःपत्रारोपणान्तं कुर्यात् । तत्र वह्निपूजायां विशेषमाह पितामहः—

तत्र पूजां हुताशस्य कारयेन्मनुजाधिपः ।
रक्तचन्दनधूपाभ्यां रक्तपुष्पैस्तथैव च ॥

हारीतः—

प्राङ्मुखस्तु ततस्तिष्ठेत्प्रसारितकराङ्गुलिः ।
आर्द्रवासाः शुचिश्चैव शिरस्यारोप्य पत्रकम् ॥

शोध्य इति शेषः । नारदः—

हस्तक्षतेषु सर्वेषु कुर्याद्धंसपदानि तु ।
तान्येव पुनरालक्षयेद्धस्तौ बिन्दुविचित्रितौ ॥

याज्ञवल्क्यः—

करौ विमृदितव्रीहेरंकयित्वा ततो न्यसेत् ।
सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत् ॥ ( व्य० १०३ )

तावदिति क्रियाविशेषणं तेन सप्तवारं वेष्टयेदिति विज्ञानेश्वरादयः । तावतां सूत्राणां समाहारस्तावत्सूत्रं तेन तावत्सूत्रेण सप्तसूत्र्या सकृद्वेष्टयेदित्यर्थ इति मदनः ।

पितामहः—

सप्त पिप्पलपत्राणि अक्षतान्सुमनो दधि ।
हस्तयोर्निक्षिपेत्तत्र सूत्रेण वेष्टनं तथा ॥

अत्र प्राड्विवाकस्य पिण्डस्थाग्न्यभिमन्त्रणमन्त्राः प्रयोगे वक्ष्यन्ते ।

याज्ञवल्क्यः—

त्वमग्ने सर्वभूतानामन्तश्चरसि पावक ।
साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम ॥ ( व्य० १०४ )
तस्येत्युक्तवतो लौहं पञ्चाशत्पलिकं समम् ।
अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि ॥

पितामहः—

ततस्तं समुपादाय धर्मराजपरायणः ।
संदंशेन नियुक्तो वा हस्तयोस्तस्य निक्षिपेत् ॥

नारदः—

हस्ताभ्यां तं समादाय प्राड्विवाकसमीरितः ।
स्थित्वैकस्मिंस्ततोन्यानि व्रजेत्सप्त त्वजिह्मगः ॥

पितामहः—

त्वरमाणो न गच्छेत्तु स्वस्थो गच्छेच्छनैःशनैः ।
न मण्डलं व्यतिक्रामेन्नान्तरा स्थापयेत्पदम् ॥

अष्टमं मण्डलं गत्वा नवमे निक्षिपेद्बुधः । इति ॥

पिण्डस्तु सतृणे नवममण्डले निक्षेप्यः ।

मण्डलानि तथा सप्त षोडशाङ्गुलमानतः ।
तावदन्तरतो गच्छेद्गत्वा नवतृणे क्षिपेत् ॥

इति कालिकापुराणात् । पितामहः—

ततस्तद्धस्तयोः प्रास्येद्व्रीहीन्वा यदि वा यवान् ।
निर्विशंकेन तेषां तु हस्ताभ्यां मर्दने कृते ॥
निर्विकारे दिनस्यान्ते शुद्धिं तस्य विनिर्दिशेत् ।

कात्यायनः—

प्रस्खलत्यभियुक्तश्चेत्स्थानादन्यत्र दह्यते ।
न तद्दग्धं विदुर्देवास्तस्य भूयोऽपि दापयेत् ॥

याज्ञवल्क्यः—

अन्तरापतिते पिण्डे संदेहे वा पुनर्हरेत् । ( व्य० १०७ )

## अथ प्रयोगः ।

पूर्वेद्युर्भूशुद्धिं विधाय परेद्युर्नवमण्डलानि कार्याणि । तत्राद्यं षोडशाङ्गुलं विधायाऽग्रेद्वात्रिंशदङ्गुलं भूभागं द्विधा विभज्य द्वितीयभागे गंतृपदप्रमाणं द्वितीयं मण्डलं कार्यम् । अवशिष्टमन्तरालं भवति । एवमेव तृतीयाद्यष्टमपर्यन्तमन्तरालसहितं निर्वर्त्याग्रे षोडशाङ्गुलमन्तरालं मुक्त्वा नवममपरिमिताङ्गुलप्रमाणं कार्यम् । तथाचाष्टानां मण्डलानामन्तरालं च मिलित्वाङ्गुलानां षट्पञ्चाशदधिकं शतद्वयं संपद्यते ।

तिर्यग्यवोदराण्यष्टावूर्ध्वाग्रा व्रीहयस्त्रयः ।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलः ॥
हस्तौ वितस्तिद्वितयं दण्डो हस्तचतुष्टयम् ।
तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम् ॥

वितस्त्याद्युत्तरत्रोपयोक्ष्यते । ततः पश्चिमादिषु नवसु मण्डलेष्वधिदेवताः क्रमेणाग्निं वरुणं वायुं यममिन्द्रं कुबेरं सोमं सवितारं सर्वदेवताश्च संपूज्य मण्डलभूभागाद्दक्षिणप्रदेशे लौकिकमग्निमुपसमाधायाग्नये पावकाय स्वाहेत्याज्येनाष्टोत्तरशतं जुहुयात्प्राड्विवाकः शान्त्यर्थम् । ततस्तस्मिन्नग्नावस्त्रिरहितं वृत्तं श्लक्ष्णमष्टाङ्गुलायामं पञ्चाशत्पलसम्मितमयःपिण्डं प्रक्षिप्य तस्मिंस्ताप्यमाने धर्मावाहनादिहवनान्तं घटविध्युक्तम-

नुष्ठानकाण्डं कृत्वा तृतीये तापे वर्त्तमानेऽयःपिण्डस्थमग्निमभिमन्त्रये-देभिर्मन्त्रैः प्राड्विवाकः—

त्वमग्ने वेदाश्चत्वारस्त्वं च यज्ञेषु हूयसे ।
त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम् ॥
जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम् ।
पाप पुनासि वै यस्मात्तस्मात्पावक उच्यसे ॥
पापेषु दर्शयात्मानमर्चिष्मान्भव पावक ।
अथवा शुद्धभावेषु शुद्धो भव हुताशन ॥
त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेव देव जानीषे न विदुर्यानि मानवाः ॥
व्यवहाराभिशस्तोऽयं मानवः शुद्धिमिच्छति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि । इति ॥

लोहशुद्ध्यर्थं सुतप्तलोहपिण्डमुदके निक्षिप्य पुनः संताप्योदके निक्षिप्य पुनः संतापनं तृतीयस्तापः । एवमभिमन्त्रितं सुतप्तमग्निवर्णमयःपिण्डं संदंशेन गृहीत्वा प्राड्विवाक उपोषितस्य स्नातस्यार्द्रवाससा शिरोबद्धप्रतिज्ञापत्रस्य पश्चिमे मण्डले तिष्ठतो दिव्यकर्त्तुः पुरत उपनीय,

त्वमग्ने सर्वभूतानामन्तश्चरसि पावक ।
साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम ॥

इति दिव्यकर्त्राभिमन्त्रितं तस्य कृतसंस्कारयोर्हस्तयोर्निक्षिपेत् । कृतसंस्कारयोर्व्रीहीन्मर्दयित्वाञ्जलीकृतयोस्तिलकालव्रणकिणादिस्थानेष्वलक्तकरसादिनाङ्कयित्वा समान्यश्वत्थस्य पत्राणि अलाभेऽर्कपत्राणि सप्त शमीपत्राणि सप्त दूर्वापत्राणि अक्षतान्दध्यक्ताऽक्षतान्पुष्पाणि च विन्यस्य सप्तभिः शुक्लसूत्रैः सप्तकृत्वा वेष्टितयोः । ततो दिव्यकर्त्ता द्वितीयादीन्यष्टमान्तानि मण्डलानि तेष्वेव पदं निक्षिपन्सप्त पदानि शनैर्गत्वाञ्जलिस्थमयःपिण्डं सतृणे नवमे निक्षिपेत् । ततः पुनः कराभ्यां व्रीहीन्संघृष्यादग्धहस्तश्चेच्छुद्धो भवति ॥ इत्यग्निदिव्यविधिः ॥

---

## अथ जलविधिः ।

पितामहः—

तोयस्यातः प्रवक्ष्यामि विधिं धर्म्यं सनातनम् ।
मण्डलं धूपदीपाभ्यां कारयेत विचक्षणः ॥

शरान्संपूजयेद्भक्त्या वैणवं च धनुस्तथा ।
मङ्गलैः पुष्पधूपैश्च ततः कर्म समाचरेत् ॥

धूपदीपाभ्यां शरान्संपूजयेदित्यन्वयः । पूजा च मण्डले कार्या ।
धनुःपरिमाणान्याह नारदः—

क्रूरं धनुः सप्तशतं मध्यमं षट्शतं स्मृतम् ।
मन्दं पञ्चशतं ज्ञेयमेष ज्ञेयो धनुर्विधिः ॥
मध्यमेन तु चापेन प्रक्षिपेच्च शरत्रयम् ।
हस्तानां तु शते सार्द्धे लक्ष्यं कृत्वा विचक्षणः ॥

सप्तशतं सप्ताधिकशताङ्गुलम् । एवं षट्शतं पञ्चशतं च ।
कात्यायनः—

शरांश्चानायसाग्रांश्च प्रकुर्वीत विशुद्धये ।
वेणुकाण्डमयाश्चैव क्षेप्ता तु सुदृढं क्षिपेत् ॥

नारदः—

गत्वा तु तज्जलस्थानं तटे तोरणमुच्छ्रितम्[1] ।
कुर्वीत कर्णमात्रं तु भूमिभागे समे शुचौ ॥
गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः ।
वरुणाय प्रकुर्वीत पूजामादौ समाहितः ॥
ब्राह्मणः क्षत्रियो वैश्यो रागद्वेषविवर्जितः ।
नाभिमात्रे जले स्थाप्यः पुरुषः स्थाणुवद्बली ॥

पितामहः—

स्थापयेत्प्रथमं तोये स्तंभवत्पुरुषं नृपः ।
आगतं प्राङ्मुखं कृत्वा तोयमध्येतु[2]कारिणम् (?) ॥
ततस्त्वावाह्येद्देवान्सलिलं चानुमन्त्रयेत् ।

देवान्धर्मादीन् । धर्मावाहनादिशिरःपत्रारोपणान्तं कुर्यादित्यादि ।
अनुमन्त्रणमन्त्राः प्रयोगे द्रष्टव्याः । व्यासः—

सत्येन माऽभिरक्ष त्वं वरुणेत्यभिशाप्य कम् ।
नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत् ॥

कमुदकमभिशाप्याभिमन्त्र्येत्यर्थः । बृहस्पतिः—

अप्सु प्रवेश्य पुरुषं प्रक्षिपेत्सायकत्रयम् ।

---

१ मण्डिते इति पाठः । २ सतोरणायेति पाठः । ३ ऽनुकारिणमिति पाठः ।

पितामहः—

क्षेप्ता तु क्षत्रियः कार्यस्तद्वृत्तिर्ब्राह्मणोऽपि वा ।
अक्रूरहृदयः शान्तः सोपवासस्तथा शुचिः ॥

कात्यायनः—

क्षिप्तेषु मज्जनं कार्यं गमनं समकालिकम् ।

मज्जनसमकालिकमित्यर्थः । नारदपितामहौ—

शरप्रक्षेपणस्थानाद्युवा जवसमन्वितः ।
गच्छेत्परमया शक्त्या यत्रासौ मध्यमः शरः ॥
मध्यमं शरमादाय पुरुषोऽन्यस्तथाविधः ।
प्रत्यागच्छेत्तु वेगेन यतः स पुरुषो गतः ॥
आगतस्तु शरग्राही न पश्यति तथा जले ।
अन्तर्जलगतं सम्यक् तदा शुद्धं विनिर्दिशेत् ॥
अन्यथा न विशुद्धः स्यादेकाङ्गस्यापि दर्शनात् ।
स्थानाद्वान्यत्र गमनाद्यस्मिन्पूर्वं निवेशितः ॥

एकाङ्गस्येति कर्णपरम् । तथाच कात्यायनः—

शिरोमात्रं तु दृश्येत न कर्णौ नापि नासिका ।
अप्सु प्रवेशने यस्य शुद्धं तमपि निर्दिशेत् ॥

पितामहः—

शरस्य पतनं ग्राह्यं सर्पणं परिवर्जयेत् ।

नारदः—

पञ्चशतो धावकानां यौ स्यातामधिकौ जवे ।
तौ च तत्र नियोक्तव्यौ शरानयनकारणात् ॥

---

## अथ प्रयोगः ।

जलस्थानं नदीसागरहृददेवखातसरस्तडागादि स्थिरतोयं योज्यम् । अल्पमाहार्यतृणशैवालोर्मिपङ्कग्राहजलूकमत्स्यादियुक्तं शीघ्रवेगमित्यादि वर्ज्यम् । तत्र नाभिदघ्ने जले यज्ञियवृक्षोद्भवा स्थूणा कार्या । तत्सन्निधौ पश्चिमतीरदेशे शोध्यकर्णोच्छ्रितं तोरणं कार्यम् । तत्समीपे षडुत्तरशताङ्गुलं वैणवं धनुरनायसाग्रा वैणवास्त्रयः शराश्च स्थाप्याः । तोरणात्सार्द्धशतहस्तमिते सुदेशे लक्ष्यं स्थाप्यम् । ततः सशरं धनुः श्वेतगन्धमाल्यादिभिः संपूज्य जलाशये वरुणमावाह्य पूजयित्वा तत्तीरे

धर्मावाहनादिहवनान्तं पूर्वोक्तं निर्वर्त्य शोध्यशिरसि प्रतिज्ञापत्रमाबध्य प्राड्विवाको जलमभिमन्त्रयेदेवम्—

तोय त्वं प्राणिनां प्राणः सृष्टेराद्यं तु निर्मितम् ।
शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनां तथा ॥
अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे । इति ॥

ततः शोध्योऽपि—

सत्येन माऽभिरक्ष त्वं वरुणेत्यभिमन्त्रयेत् ।

ततोऽवष्टब्धधर्मस्थूणस्य प्राङ्मुखस्य नाभिदघ्नोदकावस्थितस्य बलीयसः पुरुषस्य समीपं गच्छेच्छोध्यः । ततो धनुःस्थानात्क्षत्रियस्तद्वृत्तिर्ब्राह्मणो वाऽनायसाग्रांस्त्रीञ्छराँल्लक्ष्यं प्रति सुदृढं क्षिपेत् । तत एकस्मिन् जविनि पुरुषे मध्यमं शरं गृहीत्वा तस्य प्रसर्पणस्थानं विहाय पतनस्थाने स्थितेऽन्येन जविना शरमोक्षस्थाने तोरणमूले स्थातव्यम् । जवी च पञ्चशतो धावकानां मध्ये जवाधिकः । ततः तोरणमूलस्थितेन प्राड्विवाकेन करतालिकात्रये दत्ते तृतीयकरतालिकासमकालमेव शोध्यतोरणमूलस्थजविभ्यां मज्जनद्रुततरगमने कार्ये । मज्जनं चावष्टब्धधर्मस्थूणस्योरू गृहीत्वा कार्यम् । ततस्तस्मिन्मध्यमशरपातस्थानं गते तत्र स्थितः शरग्राही द्रुततरं तोरणं गत्वा जलान्तर्गतं शोध्यं यदासौ पश्यति तदासौ शुद्धः । शिरोमात्रदर्शनेऽपि शुद्धो न कर्णाद्यङ्गान्तरदर्शने निमज्जस्थानादन्यत्र गते वा ।

इत्युदकविधिः ।

---

## अथ विषदिव्यविधिः ।

तत्र नारदः—

दद्याद्विषं सोपवासो देवब्राह्मणसंनिधौ ।
धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम् ॥
द्विजानां सन्निधावेव दक्षिणाभिमुखे स्थिते ।
उदङ्मुखः प्राङ्मुखो वा दद्याद्विप्रः समाहितः ॥

तत्परिमाणमाह स एव—

वर्षे चतुर्यवा मात्रा ग्रीष्मे पञ्चयवा स्मृता ।
हेमन्ते सा सप्तयवा शरद्यल्पा ततोऽपि हि ॥

अल्पा त्रियवा, हेमन्तः शिशिरस्याप्युपलक्षकः तयोः समासश्रुतेः

वसन्तस्तु सर्वदिव्यसाधारण्येन प्राप्त एव। तत्रापि सप्तयवा मात्रेति विज्ञानेश्वरः। विषं च त्रिंशद्गुणघृतयुतं देयम्—

पूर्वाह्णे शीतले देशे विषं देयं तु देहिनाम्।
घृतेन योजितं सम्यक्पिष्टं त्रिंशद्गुणान्वितम्॥

इति कात्यायनोक्तेः। विषाभिमन्त्रणमाह याज्ञवल्क्यः—

विष त्वं ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः।
त्रायस्वास्मादभीशापात्सत्येन भव मेऽमृतम्॥

नारदः—

छायानिवेशितो रक्ष्यो दिनशेषमभोजनः।
विषवेगक्रमातीतः शुद्धोऽसौ मनुरब्रवीत्॥

विषपरिमाणबाहुल्ये त्ववध्यन्तरमाह स एव—

पञ्चतालशतं कालं निर्विकारो भवेद्यदा।
तदा भवति संशुद्धस्ततः कुर्याच्चिकित्सितम्। इति॥

विषवेगश्च विषतन्त्रे—

वेगो रोमाञ्चमाद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ
तस्योर्ध्वस्तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ।
यो वेगः पञ्चमोऽसौ नयनविवशतां कण्ठभङ्गं च हिक्कां
षष्ठो निश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य॥

अत्र सोपवासेन प्राड्विवाकेन महादेवाग्रे विषं संस्थापितं भक्षयेदिति।

---

## अथ कोशः।

पितामहः—

भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम्।
समभावे तु देवानामादित्यस्य तु पाययेत्॥
दुर्गायाः पाययेच्चौरान् ये च शस्त्रोपजीविनः।
भास्करस्य तु यत्तोयं ब्राह्मणं तन्न पाययेत्॥

बृहस्पतिः—

यद्भक्तः सोऽभियुक्तः स्यात्तद्देवायुधमण्डलम्।
प्रक्षाल्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयम्॥

नारदः—

तमाहूयाभिशस्तं तु मण्डलाभ्यन्तरे स्थितम्।

आदित्याभिमुखं कृत्वा पाययेत्प्रसृतित्रयम् ॥
पूर्वोक्तेन विधानेन स्नातमार्द्राम्बरं शुचिम् ।
अर्चयित्वा तु तं देवं प्रक्षाल्य सलिलेन तु ॥
एनश्च श्रावयित्वा तु पाययेत्प्रसृतित्रयम् ।

अत्र सोपवासः प्राड्विवाकः पूर्वाह्णे देवमभ्यर्च्य तत्स्नानोदकं गृहीत्वा धर्मावाहनादिशिरःपत्रारोपणान्तं कृत्वा जलदिव्योक्तमन्त्रेण तज्जलमभिमन्त्रयेत् । शोध्योऽपि तदुक्तेनैवाभिमन्त्र्य भक्षयेदिति ।

बृहस्पतिः—

सप्ताहाद्वा द्विसप्ताहाद्यस्यार्तिर्न प्रदृश्यते ।
पुत्रदारधनानां च स शुद्धः स्यान्न संशयः ॥

---

## अथ तण्डुलविधिः ।

पितामहः—

तण्डुलानां प्रवक्ष्यामि विधिं लक्षणबोधितम् ।
चौर्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः ॥
तण्डुलान्कारयेच्छुक्लान् शालेर्नान्यस्य कस्यचित् ।
मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥
स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत् ।
आवाहनादि पूर्वं तु कृत्वा रात्रौ विधानतः ॥

कात्यायनोऽपि—

देवतास्नानपानीयदिग्धतण्डुलभक्षणे ।
शुद्धनिष्ठीवनाच्छुद्धो नियम्योऽशुचिरन्यथा ॥

पितामहः—

शोणितं दृश्यते यस्य हनुस्तालु च शीर्यति ।
गात्रं च कंपते यस्य तमशुद्धं विनिर्दिशेत् ॥

---

## अथ तप्तमाषविधिः ।

पितामहः—

तप्तमाषस्य वक्ष्यामि विधिमुद्धारणे शुभम् ।
कारयेदायसं पात्रं मानं वा षोडशाङ्गुलम् ॥
चतुरङ्गुलखातं तु मृन्मयं वापि मण्डलम् ।

पूरयेद्घृततैलाभ्यां विंशत्या च पलैस्तु तत् ॥
सुवर्णमाषकं तस्मिन् सुतप्ते निक्षिपेत्ततः ।
अङ्गुष्ठाङ्गुलियोगेन तप्तमाषकमुद्धरेत् ॥
कराग्रं यो न धुनुयाद्विस्फोटो वा न जायते ।
शुद्धो भवति धर्मेण निर्विकारकराङ्गुलिः ।

प्रकारान्तरमाह स एव—

सौवर्णे राजते ताम्रे आयसे मृन्मयेऽपि वा ।
गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः ॥
सौवर्णीं राजतीं ताम्रीमायसीं वा सुशोभिताम् ।
सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम् ॥
भ्रमद्वीचितरङ्गाढ्ये अनखस्पर्शगोचरे ।
परीक्षेतार्द्रपर्णेन चुरुकारं सुघोषकम् ॥

ततश्चानेन मन्त्रेण सकृत्तमभिमन्त्रयेत्—

परं पवित्रममृतं घृत त्वं यज्ञकर्मणि ।
दह पावक पापं त्वं हिमशीतं शुचौ भव ॥
उपोषितं ततः स्नातमार्द्रवाससमागतम् ।
ग्राहयेन्मुद्रिकां तां तु घृतमध्यगतां तथा ।
प्रदेशिनीं च तस्याथ परीक्षेयुः परीक्षकाः
यस्य विस्फोटका न स्युः शुद्धोऽसावन्यथाऽशुचिः ॥

## अथ फालविधिः ।

बृहस्पतिः—

आयसं द्वादशपलं घटितं फालमुच्यते ।
अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तृतम् ॥
अग्निवर्णं तु तच्चौरो जिह्वया लेलिहेत्सकृत् ।
न दग्धश्चेच्छुद्धिमियादन्यथा तु स हीयते ॥

## अथ धर्मजविधिः ।

पितामहः—

अधुना संप्रवक्ष्यामि धर्माधर्मपरीक्षणम् ।
हन्तॄणां याचमानानां प्रायश्चित्तार्थिनां नृणाम् ॥

राजतं कारयेद्धर्ममधर्मं सीसकायसम् ।
लिखेद्भूर्जे पटे वापि धर्माधर्मौ सितासितौ ॥
अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत् ।
सितपुष्पस्तु धर्मः स्यादधर्मोऽसितपुष्पधृक् ॥
एवं विधायोपलिप्य पिण्डयोस्तौ निधापयेत् ।
गोमयेन मृदा वापि पिण्डौ कार्यौ समंततः ॥
मृद्भाण्डकेऽनुपहते स्थाप्यौ चानुपलक्षितौ ।
उपलिप्ते शुचौ देशे देवब्राह्मणसन्निधौ ॥
आवाहयेत्ततो देवान् लोकपालांश्च पूर्ववत् ।
धर्मावाहनपूर्वं तु प्रतिज्ञापत्रकं लिखेत् ॥
यदि पापविमुक्तोऽहं धर्मस्त्वायातु मे करे ।
अभियुक्तस्ततश्चैकं प्रगृह्णीताविलंबितम् ॥
धर्मे गृहीते शुद्धः स्यादधर्मे तु स हीयते ।
एवं समासतः प्रोक्तं धर्माधर्मपरीक्षणम् ॥

बृहस्पतिः—

पत्रद्वये लेखनीयौ धर्माऽधर्मौ सिताऽसितौ ।
जीवदानादिकैर्मन्त्रैर्गायत्राद्यैश्च सामभिः ॥
आमन्त्र्य पूजयेद्गन्धैः कुसुमैश्च सितासितैः ।
अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ ततः ॥
समौ कृत्वा तु मृत्कुंभे स्थाप्यौ चानुपलक्षितौ ।
ततः कुंभात्पिण्डमेकं प्रगृह्णीताविलंबितम् ॥
धर्मे गृहीते शुद्धः स्यात्संपूज्यश्च परीक्षकैः ।

---

## अथ प्रयोगः ।

पत्रद्वये शुक्लं धर्मं कृष्णमधर्मं पुत्तलरूपं विधाय आंह्रींक्रोंहंयंरंलंवं- शंषंसंहंसोहं धर्मस्य प्राणा इह प्राणाः, पुनरपीमं मन्त्रं पठित्वा धर्मस्य जीव इह स्थितः, पुनरपि तमेव पठित्वा धर्मस्य सर्वेन्द्रियाणि वाङ्मनो- नेत्रश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा इत्यनेन जीवदानं धर्मप्रतिमायाः कृत्वा गायत्रादिसामज्ञाने तेनैव नोचेत्सव्याहृ- तिप्रणवां गायत्रीं पठित्वा आवाहनादि कृत्वा यथाक्रमं शुक्लकृष्णपु-

ष्पाभ्यां धर्माधर्मौ संपूज्य प्रणवेन पञ्चगव्यमादायाभ्युक्ष्य शुक्लपुष्पयुक्तं धर्मं कृष्णपुष्पयुक्तमधर्मं मृत्पिण्डद्वये कृत्वा नवे कुंभे स्थापयेत्प्राड्विवाकः। ततो धर्मावाहनादिहवनान्तं कर्म कृत्वा समन्त्रकप्रतिज्ञापत्रं संशोध्य ( शोध्य ) शिरसि बध्नीयात्। शोध्यस्तु "यदि पापविशुद्धोऽहं धर्मस्त्वायातु मे करम्" इत्युच्चार्य कुंभात्तयोरेकं गृह्णीयात्। धर्मे गृहीते शुद्ध इति। ततो दक्षिणां दद्यात्।

---

## अथ शपथाः।

मनुः—

> सत्येन शपयेद्विप्रं क्षत्रियं वाहनायुधैः।
> गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः॥

बृहस्पतिः—

> सत्यं वाहनशस्त्राणि गोबीजकनकानि च।
> देवब्राह्मणपादांश्च पुत्रदारशिरांसि च॥
> एते च शपथाः प्रोक्ताः स्वल्पेऽर्थे सुकराः सदा।
> साहसेष्वभिशापेषु दिव्यान्याहुर्विशोधनम्॥

याज्ञवल्क्यः—

> अर्वाक्चतुर्दशादह्नो यस्य नो राजदैविकम्।
> व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः॥

घोरं महत्। स्वल्पस्य देहिनामपरिहार्यत्वादिति मिताक्षरायाम्।

कात्यायनोऽपि—

> आचतुर्दशकादह्नो यस्य नो राजदैविकम्।
> व्यसनं जायते घोरं स ज्ञेयः शपथैः शुचिः॥

व्यसनमापत्। घोरमतिपीडाकरं। स्वल्पस्य शरीरधर्मत्वादिति वाचस्पतिमिश्रस्मार्त्तभट्टाचार्य्यौ। पुनः कात्यायनः—

> अथ दैवविसंवादे द्विसप्ताहात्तु दापयेत्।
> अभियुक्तं प्रयत्नेन तमर्थं दण्डमेव च॥
> तस्यैकस्य न सर्वस्य जनस्य यदि तद्भवेत्।
> रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः॥
> ज्वरातीसारविस्फोटगूढास्थिपरिपीडनम्।

नेत्ररुग्गलरोगस्तु तथोन्मादः प्रजायते ॥
शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणाम् ।

दैवविसंवादे ज्ञातिमरणादौ तस्यैकस्येति । तेन देशव्यापकमार्यादिव्यावृत्तिः । अत्र तस्येत्यनेन पूर्वोक्ताभियुक्तपरामर्शादभियुक्तस्यैव रोगादिर्भङ्गलिङ्गम्, न तु तत्पुत्रादेः। सोपि च महान्न स्वल्प इति प्रागेवोक्तम् । एतदभिप्रायेणैवाभियुक्तस्यासाधारणरोगादिभिर्भङ्गलिङ्गमित्यर्थ इतिवाचस्पतिमिश्राः । अत एव ज्ञातिमरणमित्येवोक्तं न तु ज्ञातिरोगादिरिति ।

---

## स्वत्वनिरूपणम् ।

अथ दायनिर्णयोपयोगि स्वत्वम् । तच्च क्रयप्रतिग्रहादिजन्यः शक्तिविशेषः । तत्कारणता तु क्रयादीनां लोकव्यवहारादेव गम्यते न शास्त्रात्, तदनभिज्ञानामपि तद्दर्शनात् । शास्त्रकल्पनायां गौरवाच्च । नयविवेके भवनाथोऽप्येवम् ।

यत्तु गौतमः—स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु, 'ब्राह्मणस्याधिकं लब्धं विजितं क्षत्रियस्य स्वनिर्विष्टं वैश्यशूद्रयोः,' इति तल्लोकसिद्धकारणानुवादकम् । स्वामिस्वत्वध्वंसमात्रेण यत्स्वस्य भवति तस्मिन् रिक्थमिति प्रयुञ्जते लोकाः । क्रयप्रतिग्रहादि वारयितुं मात्रपदम् । अत्र तादृशध्वंस एव रिक्थपदं शक्तम्, क्रयादिस्वत्वोपायसमभिव्याहारात्, नागृहीतविशेषणान्यायाच्च । पितरि जीवति तद्द्रव्ये पुत्रादीनां पूर्वमनुत्पन्नमेव स्वत्वं संविभागेन जन्यते इति धारेश्वराचार्यः स्मृतिसंग्रहकारश्च तन्न, उत्पत्त्यैवार्थस्वामित्वं लभन्त इत्येवमादिवचनेन पुत्रोत्पत्तेरेव पितृधने पुत्रनिरूपितस्वत्वोत्पादकत्वबोधनात्,

भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा ।
तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः ॥

इति याज्ञवल्क्यवचनाच्च ।

न चेदं पितामहमरणस्यैव स्वत्वोत्पत्तिहेतुत्वं गमयति न पुत्रोत्पत्तेः । मरणकालेऽनुत्पन्ने पौत्रे तदभावप्रसंगात् । वस्तुतस्तु पितामहपदमविवक्षितमन्यथा प्रपितामहाद्युपात्ते सदृशस्वाम्याभावप्रसक्तेः । अनुवाद्यविशेषणत्वाच्च । यत्तु देवलः—

पितर्युपरते पुत्रा विभजेयुर्धनं पितुः ।

अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते ॥ इति ।

तत्र पूर्वार्द्धे तावद्विभागकालविधायकं विधिप्रत्ययश्रवणात् । उत्तरार्द्धे तु तस्यैव स्तुत्यर्थतयाऽस्वातन्त्र्यपरम्, न तु स्वत्वाभावपरम् । एतेन 'न जीवति पितरि पुत्रा रिक्थं विभजेरन्, यद्यपि स्यात्पश्चादधिगतं तैर-नर्हा एव पुत्रा अर्थधर्मपरेऽस्वातन्त्र्यात्' इति शंखवचोऽपि व्याख्यातम् । पूर्वनिषेधार्थवादार्थोऽनन्तराऽस्वातन्त्र्योक्तिरिति । यद्यपि तैः पश्चादधि-गतमित्यन्वयः । तैः पुत्रैः पश्चादुत्पत्तेः अधिगतं प्रतिग्रहादिना प्राप्तम् । पुत्रादिभिः प्रतिगृहीते स्वत्वाविवादात्तत्राप्यस्वातन्त्र्यं, किमुत पित्रर्जित इति तात्पर्यार्थः । इदं चास्वातन्त्र्यं विभागकाम्यधर्मव्यवसायादिवि-षयम् । अत एव हारीतः—जीवति पितरि पुत्राणामर्थादानविसर्गवि-भागाक्षेपेष्वस्वातन्त्र्यमिति । आदानविसर्गपदेन व्यवसायो लक्ष्यते । आक्षेपो दास्यादिभर्त्सनमिति मदनः । यत्तु—

मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः ।
स्थावरस्य तु सर्वस्य न पिता न पितामहः ॥ इति ।

तत्कुण्डलाङ्गुलीयकधारणादावेव पितुः स्वातन्त्र्यमात्रार्थं न तु दा-नादौ न वा पुत्रोत्पत्तेः स्वत्वकारणत्वनिवृत्त्यर्थम् । भोगानाश्यमण्याद्यु-पादानादप्येष एवार्थः प्रतीयते । अत एव—

स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम् ।
असंभूय सुतान्सर्वान्न दानं न च विक्रयः ॥

इति दानविक्रयादीनामेव निषेधो न भोगस्य । अतः पूर्वमनेकभ्रात्रा-दीनामपरिच्छिन्नं स्वत्वं संविभागेन व्यवस्थाप्यते । तत्र समुदितद्रव्यगत-पूर्वस्वत्वनाशेन तदेकदेशे विलक्षणं तदुत्पद्यत इति केचित् । युक्तं तु पूर्वनाशस्वत्वान्तरोत्पत्तिकल्पने गौरवात्पूर्वमेकदेशस्थितमेवोत्पन्नं विभा-गेन पदार्थविशेषनिष्ठतया ज्ञाप्यते । प्रकृतमुच्यते ब्राह्मणस्याधिकं लब्धमिति । प्रतिग्रहलब्धं विप्रस्याधिकं फलजनकमिति केचित् । रिक्थाद्यपेक्षया विप्रस्यैवायमधिक उपाय एवं क्षत्रियादेर्जयादिरिति तु युक्तम् । जयेऽपि जितस्य यत्र ग्रहक्षेत्रद्रव्यादौ स्वत्वमासीत्, तत्रैव जेतुरप्युत्पद्यते जितस्य करग्राहितायां तु जेतुरपि सैव न स्वत्वम् । अत एव सार्वभौमेन संपूर्णा पृथ्वी माण्डलिकेन च मण्डलं न देयमित्युक्तं षष्ठे । संपूर्णपृथिवीमण्डलस्य तत्तद्ग्रामक्षेत्रादौ स्वत्वं तु तत्तद्भौमिकादीनामेव ।

राज्ञां तु करग्रहणमात्रम् । अत एव इदानींतनपारिभाषिकक्षेत्रदानादौ न भूदानसिद्धिः किंतु वृत्तिकल्पनमात्रमेव । भौमकेभ्यः क्रीते तु गृहक्षेत्रादौ स्वत्वमप्यस्त्येव । तेन तत्र भूदानस्यापि फलं भवति । निर्विष्टं कुसीदकृषिवाणिज्यपशुपालनलब्धं सेवालब्धं च । निर्वेशो भृतिभोगयोरित्यभिधानात् । भृतिः सेवा । भोगः कुसीदादिः । तत्राद्यं वैश्यस्य । द्वितीयं शूद्रस्य । अतो लोकसिद्धैव क्रयादीनां कारणता । एवं च स्वीयगवादिजातवत्सादौ स्वत्वव्यवहारः संगच्छते । उपायानां शास्त्रगम्यत्वे तु न स्यात् । स्वीयगवादिजननरूपोपायस्य शास्त्रेणाबोधनात् । ननु स्वीयगवादिजननेनेव स्वभार्यायामुत्पत्त्या कन्यापुत्रादावपि स्वत्वं स्यात् । इष्टापत्तौ विश्वजिति सर्वस्वं ददातीतिविहिते सर्वस्वदाने कन्यापुत्रादिदानापत्त्या कन्यापुत्रादि न देयमिति षाष्ठसिद्धान्तविरोध इति चेन्न । गवादाविव भार्यायां स्वत्वाभावेन तस्यामुत्पन्नेऽपत्येऽपि तदभावात् । लोके च स्वत्वास्पदीभूतोत्पत्तेरेव स्वत्वकारणत्वं क्लृप्तम् । भार्यायामपि प्रतिग्रहेण स्वत्वं स्यादेवेति चेन्न । क्षत्रियादीनां प्रतिग्रहाभावेन तद्भार्यासु स्वत्वाभावात्तदपत्येष्वपि तदभावः । तेन 'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' इति सजातीयस्यैव दत्तकस्य ग्राह्यत्वात् क्षत्रियादीन्प्रति तावद्दत्तकप्रतिग्रहो गौण एव । न च विप्रान्प्रति स मुख्यः संभवति, तद्विधौ युगपद्वृत्तिद्वयविरोधात् । नचै पुत्रप्रतिग्रहविधिर्विप्राधिकारिक एव न क्षत्रियाद्यधिकारिक इति वाच्यम् । 'दौहित्रो भागिनेयश्च शूद्रस्यापि च दीयते' इत्यादिशौनकादिवचोभिस्तदधिकारिकत्वस्याप्यवगमात् । एवं ब्राह्मविधिना क्षत्रियादिकन्यया सह विप्रस्योद्वाहे दानप्रतिग्रहयोर्गौणत्वमङ्गीकार्यम् । अन्यत्र मुख्यत्वमितिवृत्तिद्वयविरोधः । क्षत्रियान्प्रति ब्राह्मादिविवा[ह?हा] प्रवृत्तिस्तु सर्वेषामविप्रतिपन्नैव । अत एव पुत्रादीनां दानं गौणमिति तत्त्वरत्ने मिश्राः । नच स्वभार्यापुत्रकन्या इति शाब्दव्यवहारात्स्वत्वकल्पना । तस्य स्वः पिता स्वा मातेत्यादाविव ज्ञातिवाचकत्वेनाप्युपपत्तेः । अस्ति च ज्ञातावपि स्वशब्दस्य शक्तिः । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीयेस्वोऽस्त्रियां धने' इति कोशात् । यत्तु षष्ठे गर्भदासदानमुक्तं तच्चिन्त्यम् । तन्मातरि मुख्यदानप्रतिग्रहक्रयविक्रयाद्यभावेन स्वत्वाभावे तदुत्पन्ने गर्भदासे सुतरां तदयोगात् । इत्यस्तु प्रासङ्गिकम् ।

---

## अथ दायः ।

असंसृष्टं विभजनीयं धनं दायः । लाभाद्यर्थसंसृष्टधनव्यावृत्तयेऽसंसृष्टमिति। वणिग्भिरेकीकृत्य विभज्यमाने दायभागशब्दाप्रयोगात् । एवं वक्ष्यमाणपारिभाषिकसंसर्गवतोऽपि निवृत्तिः । अत एव स्मृतिसंग्रहे—

पितृद्वारागतं द्रव्यं मातृद्वारागतं च यत् ।
कथितं दायशब्देन तद्विभागोऽधुनोच्यते ॥ इति ।

निघण्टौ च—

विभक्तव्यं पितृद्रव्यं दायमाहुर्मनीषिणः ॥ इति ।

पितृपदं संबन्धिमात्रोपलक्षणं, अयं दायो द्वेधा—सप्रतिबन्धोऽप्रतिबन्धश्च । यत्र धनस्वामिनस्तत्पुत्रादेश्च जीवनं प्रतिबन्धकं स सप्रतिबन्धः । यथा पितृव्यादिधनम् । यत्तु स्वामिसबन्धादेव पुत्रादेर्धनार्जनोपायान्तरनिरपेक्षात्स्वं भवति सोऽप्रतिबन्धो यथा पितृधनम् ।

इतिदायस्वरूपम् ।

---

## अथ तद्विभागः ।

तमाह नारदः—

विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते ।
दायभाग इति प्रोक्तं तद्विवादपदं बुधैः ॥

पुत्रैरिति पौत्रादीनामप्युपलक्षणं, पित्र्यस्येति पितामहादीनाम् । मदनस्तु पित्र्यादेरित्येव पपाठ । इदं च दायभागस्वरूपमुक्तं; द्रव्यसामान्याभावेऽपि त्वत्तोऽहं विभक्त इति व्यवस्थामात्रेणापि भवत्येव विभागः । बुद्धिविशेषमात्रमेव हि विभागः । तस्यैवाभिव्यञ्जिकेयं व्यवस्था ।

---

## अथ विभागकालः ।

मनुः—

ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम् ।
भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः ॥

चशब्दोपादानेऽपि मरणसमुच्चयो न विवक्षितः । अत एव मदनरत्ने स्मृतिसंग्रहे—

पितृद्रव्यविभागः स्याज्जीवन्त्यामपि मातरि ।

न स्वतंत्रतया स्वाम्यं यस्मान्मातुः पतिं विना ॥
मातृद्रव्यविभागोऽपि तथा पितरि जीवति ।
सत्स्वपत्येषु यस्मान्न स्त्रीधनस्य पतिः पतिः ॥

एतदपवदति बृहस्पतिः—

पित्रोरभावे भ्रातृणां विभागः संप्रदर्शितः ।
मातुर्निवृत्ते रजसि जीवतोरपि शस्यते ॥

नारदः—

अत ऊर्ध्वं पितुः पुत्रा विभजेयुर्धनं समम् ।
मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च ॥
निवृत्ते चापि रमणे पितर्युपरतस्पृहे ॥

रमणः कामः । उपरतस्पृहो विरक्तः । प्रत्तासु भगिनीषु चेति काकाक्षिवद्रजोरमणनिवृत्त्योर्विशेषणम् । गौतमः—'ऊर्ध्वं पितुः पुत्रा रिक्थं विभजेरन्निवृत्ते रजसि मातुर्जीवति पितरि वेच्छति' इति । इच्छतीत्यनेन रजोनिवृत्तिं विनापि पितुरिच्छया विभाग उक्तः । क्वचिदिच्छां विनापि विभागमाह बृहस्पतिः—

क्रमागते गृहक्षेत्रे पितापुत्राः समांशिनः ।
पैतृकेन विभागार्हाः सुताः पितुरनिच्छया ॥

अर्थात्पितामहाद्यर्जिते तदनिच्छयापि विभागार्हा इत्यर्थः । पैतामहेऽपि क्वचित्पितुरिच्छयैव विभागमाहतुर्मनुविष्णू—

पैतृकं तु पिता द्रव्यमनव्याप्तं यदाप्नुयात् ।
न तत्पुत्रैर्भजेत्सार्द्धमकामः स्वयमर्जितम् ॥

बृहस्पतिः—

पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितम् ।
विद्याशौर्यादिनावाप्तं तत्र स्वाम्यं पितुः स्मृतम् ॥
प्रदानं स्वेच्छया कुर्याद्भोगं चैव ततो धनात् ।

नारदः—

व्याधितः कुपितश्चैव विषयासक्तमानसः ।
अन्यथाशास्त्रकारी च न विभागे पिता प्रभुः ॥

हारीतः—

अकामे पितरि रिक्थभागो वृद्धे विपरीतचेतसि दीर्घरोगिणि चेति ।

अकामे विभागेच्छारहित इतिमदनरत्ने । विपरीतचेता अधर्मवर्त्ती । पितुरनिच्छायामपि विभागो भवतीतिभावः । पितर्यसमर्थे ज्येष्ठपुत्रानुमत्या विभागमाह हारीतः—कामं दीने प्रोषिते आर्तिं गते वा ज्येष्ठोऽर्थांश्चिन्तयेदिति। शंखलिखितौ—पितर्यशक्ते कुटुंबस्य व्यवहारं ज्येष्ठः कुर्यात्तदनन्तरो वा कार्यज्ञस्तदनुमतेनेति । अनन्तरोऽनुजः । कुटुंबभरणादिसमर्थेच्छया विभागः । सर्वेषां तथात्वे त्वनियम इति निष्कर्षः ।

याज्ञवल्क्यः—

विभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान् ।
ज्येष्ठं वा ज्येष्ठभागेन सर्वे वा स्युः समांशिनः ॥

ऐच्छिकविभाग एव विवृत उत्तरार्द्धेन । इच्छायाः संभवति उक्तपक्षद्वयालंबनत्वे स्वातन्त्र्यायोगात् । वाक्यभेदापत्तेः । एकस्मै लक्षं कस्मैचित्कपर्दकमन्यस्मै न किमपीत्यव्यवस्थापत्तेश्च । ज्येष्ठविभागे विशेषमाह मनुः—

ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् ।
तदर्धं मध्यमस्य स्यात्तदर्द्धं तु कनीयसः ॥
उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना ।
एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्द्धं ततोऽपरः ॥
अंशमंशं यवीयांस इति धर्मो व्यवस्थितः ।

यमलयोर्मध्ये प्रथमप्रसूतस्य ज्यैष्ठ्यं मनुराह—

जन्मज्येष्ठेन चाव्हानं सुब्रह्मण्यास्वपि स्मृतम् ।
यमयोश्चैव संज्ञासु जन्मतो ज्येष्ठता मता ॥
यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम् ।
संतानः पितरश्चैव तस्मिन् ज्यैष्ठ्यं प्रतिष्ठितम् । इति ॥

यत्तु पिण्डसिद्ध्यादिवैद्यकग्रन्थेष्वनन्तरप्रसूतस्य ज्यैष्ठ्यमुक्तं तदनेन कार्यांशे बाध्यते तस्याश्रुतिमूलत्वात् । मासेन शुद्धिर्भवतीतिवत् । यत्तु 'द्वौ तदा भवतो गर्भौ सूतिवेशविपर्ययात्' इत्यादिना भागवते पश्चाज्जातस्य ज्यैष्ठ्यमुक्तं तदप्यनेन बाध्यते । पुराणेषु स्मृतिविरुद्धाचाराणां बहुशो दर्शनात् । देशाचारतो व्यवस्था ज्ञेयेति केचित् । युक्तं तु पूर्वोक्तमेव । अयं चोद्धारविभागः कलौ निषिद्धः । कलिवर्ज्येषु पाठात् । निर्णीतं चेदं समयमयूखेऽस्माभिः ।

पितुरंशद्वयमाह नारदः—

द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता ।

इदं त्वेकपुत्रपरम् । स यद्येकपुत्रः स्याद्द्वौ विभागावात्मनः कुर्यादिति शंखलिखितोक्तेरिति मदनरत्ने । एकपदं श्रेष्ठपरम् । एके मुख्यान्यकेवला इत्यमरोक्तेः । गुणवत्पुत्र इतियावदिति पारिजाते । पितामहार्जिते त्वेकपुत्रेणापि सह समांशित्वमाह बृहस्पतिः—

द्रव्ये पितामहोपात्ते स्थावरे जंगमे तथा ।
सममंशित्वमाख्यातं पितुः पुत्रस्य चैव हि ॥

याज्ञवल्क्यः—

भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा ।
तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः ॥

कात्यायनः—

सकलं द्रव्यजातं तद्भागैर्गृह्णन्ति तत्समैः ।
पितरो भ्रातरश्चैव विभागो धर्म्य उच्यते ॥

यत्तु याज्ञवल्क्यः—

न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः स्मृतः । इति ॥

तत्र पितृकृतो धर्म्यश्चेत्स्मृतो न परावर्त्तनीय इति मदनविज्ञानेश्वरादयः ।

यदपि नारदः—

पित्रैव तु विभक्ता ये समन्यूनाधिकैर्धनैः ।
तेषां स एव धर्म्यः स्यात्सर्वस्य हि पिता प्रभुः । इति

तद्युगान्तरपरम् । स्वस्य पुत्राणां च समांशपक्षे पत्न्या अप्यंशमाह याज्ञवल्क्यः—

यदि कुर्यात्समानंशान्पत्न्यः कार्याः समांशिकाः ।
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण च ॥

इति । दत्ते त्वर्धं देयम् । दत्ते त्वर्द्धं प्रकल्पयेदितिवचनात् । अर्द्धं पूर्वदत्तं स्त्रीधनं यावता पुत्रांशसमं भवति तावदित्यर्थः । अंशाधिकधनायास्तु नांशः । अर्जनसमर्थस्य पुत्रस्य दायजिघृक्षाऽभावे आह स एव—

शक्तस्यानीहमानस्य किंचिद्दत्त्वा पृथक्क्रिया ।

किंचिद्दानं च तत्पुत्राणां दायजिघृक्षानिवृत्त्यर्थमिति मिताक्षरायाम् ।

पितृमरणानन्तरं समविभाग उक्तः स्मृत्यन्तरे—

विभजेरन्सुताः पित्रोरूर्ध्वं रिक्थमृणं समम् ।

हारीतः—समानो मृते पितरि रिक्थभाग इति ।

याज्ञवल्क्यः—

पितुरूर्ध्वं विभजतां माताप्यंशं समं हरेत् ।

विष्णुः—मातरः पुत्रभागानुसारिभागहारिण्यः ।

स्मृत्यन्तरे—

जननी(त्व?स)धना पुत्रैर्विभागेंऽशं समं हरेत् ।

सधना तु यावता स्वधनस्य पुत्रांशसमभागता भवति तावदेव हरे-दित्यर्थः । अंशाधिकधनायास्तु नांशः । सपत्नमातुः पितामह्याश्चांशमाह व्यासः—

असुताश्च पितुः पत्न्यः समानांशाः प्रकीर्त्तिताः ।

पितामह्यश्च ताः सर्वा मातृतुल्याः प्रकीर्त्तिताः ।

सर्वा इत्यनेन पितामहीसपत्न्योऽपि गृह्यन्ते । अनेकभ्रातृपुत्राणां विभागप्रकारमाह याज्ञवल्क्यः—

अनेकपितृकाणां तु पितृतो भागकल्पना ।

एकस्यैकः पुत्रोऽपरस्य द्वावन्यस्य त्रयस्तेषां पितृसंख्ययैव विभागो न विभाजकसंख्ययेत्यर्थः

कात्यायनः—

अविभक्तेऽनुजे प्रेते तत्सुतं रिक्थभागिनम् ।

कुर्वीत जीवनं येन लब्धं नैव पितामहात् ॥

लभेतांशं स पित्र्यं तु पितृव्यात्तस्य वा सुतात् ।

स एवांशस्तु सर्वेषां भ्रातॄणां न्यायतो भवेत् ॥

लभते तत्सुतो वापि निर्वृत्तिः परतो भवेत् ।

अनुजपदं ज्यायसोप्युपलक्षणम् । परतः प्रपौत्रात् । प्रपौत्रपुत्रादिः पितृपितामहप्रपितामहेषु मृतेषु अनन्तरं वृद्धप्रपितामहेऽन्यस्मिंश्च तत्पुत्रादिके जीवति तद्धनं न लभते पुत्रपौत्रप्रपौत्रसामान्याभावे सोऽपि लभत एवेत्यर्थः । इदं च नाविभक्तपरं किंतु संसृष्टपरम् ।

अविभक्तविभक्तानां कुल्यानां वसतां सह ।

भूयो दायविभागः स्यादाचतुर्थादिति स्थितिः । इति देवलोक्तः॥

अविभक्तविभक्तानां वृद्धप्रपितामहतत्पुत्राणां च संसृष्टानामित्यर्थः। इदं च समदेशस्थितपरम् । देशान्तरस्थस्तु पञ्चमादिरपि लभत एव—

ऋणं लेख्यं गृहं क्षेत्रं यस्य पैतामहं भवेत् ।
चिरकालप्रोषितो वा भागभागागतस्तु सः ॥
गोत्रसाधारणं त्यक्त्वा योऽन्यं देशं समाश्रितः ।
तद्वंशस्यागतस्यांशः प्रदातव्यो न संशयः ॥
तृतीयः पञ्चमश्चैव सप्तमश्चापि यो भवेत् ।
जन्मनामपरिज्ञाने लभेतांशं क्रमागतम् ॥

इति देशान्तरप्रक्रमेण बृहस्पतिस्मृतेः । क्वचिन्मातृतो विभागमाह बृहस्पतिः—

यद्येकजाता बहवः समाना जातिसंख्यया ।
सापत्न्यास्तैर्विभक्तव्यं मातृभागेन धर्मतः ॥

व्यासः—समानजातिसंख्या ये जातास्त्वेकेन सूनवः ।
विभिन्नमातृकास्तेषां मातृभागः प्रशस्यते ॥

एतत्प्रत्युदाहरणमाह बृहस्पतिः—

सवर्णा भिन्नसंख्या ये पुंभागस्तेषु शस्यते ।

विजातीयविभागमाह याज्ञवल्क्यः—

चतुस्त्रिद्व्येकभागाः स्युः क्रमशो ब्राह्मणात्मजाः ।
क्षात्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिनः ॥

ब्राह्मणात्मजा ब्राह्मणीक्षत्रियावैश्याशूद्रासु जाताः । क्षात्रजाः क्षत्रियावैश्याशूद्रासु । विड्जा वैश्याशूद्रयोः ।

बृहस्पतिः—

न प्रतिग्रहभूर्देया क्षत्रियायाः सुताय वै ।
यद्यप्येषां पिता दद्यान्मृते विप्रासुतो हरेत् ॥

दे[illegible]—

शूद्र्यां द्विजातिभिर्जातो न भूमेर्भागमर्हति ।
सजातावाप्नुयात्सर्वमिति धर्मो व्यवस्थितः ॥

द्रव्यस्य तु लभत एव । अपरिणीतशूद्रापुत्रस्तु द्रव्यांशमपि न लभते । तथा च मनुः—

ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक् ।

यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत् ॥

पितृमरणोत्तरं विशेषमाह बृहस्पतिः—

अनपत्यस्य शुश्रूषुर्गुणवान् शूद्रयोनिजः ।
लभेत जीवनं शेषं सपिण्डाः सममाप्नुयुः ॥

गौतमः—शूद्रापुत्रोऽप्यनपत्यस्य शुश्रूषुश्चेल्लभते वृत्तिमूलम् । वृत्तिमूलं जीवनकारणम् । स एव—शूद्रापुत्रवत्प्रतिलोमास्विति । प्रतिलोमास्तूत्पादकापेक्षयोत्कृष्टवर्णस्त्रीषूत्पन्ना इत्यर्थः । शूद्रेणापरिणीतायामुत्पन्ने विशेषमाह याज्ञवल्क्यः—

जातोऽपि दास्यां शूद्रेण कामतोंऽशहरो भवेत् ।
मृते पितरि कुर्युस्तं भ्रातरस्त्वर्द्धभागिकम् ॥

कामः पितुरिच्छा । शूद्रेणेति । द्विजातिभिर्दास्यामुत्पन्नस्तु पितुरिच्छयापि नांशभाक् । नापि पितृमरणोत्तरमर्धं नापि पुत्राद्यभावे सर्वमिति मदनरत्नादिषु ।

विभागानन्तरोत्पन्नपुत्रे विशेषमाह गौतमः—विभक्तजः पित्र्यमेवेति । बृहस्पतिरपि—

पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्जितम् ।
विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृताः ॥
यथा धने तथर्णे च दानादानक्रयेषु च ।
परस्परमनीशास्ते मुक्त्वाशौचोदकक्रियाम् ॥

ऋणमात्रसत्त्वे तु पूर्वविभक्तेभ्यो विभागग्रहणं विना तेन ऋणं नैव देयम् । रिक्थग्राही ऋणं दाप्य इतिवक्ष्यमाणत्वात् । कस्मिंश्चित्संसृष्टे तु तेन सह विभागः—

ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम् ।
संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह ॥ इति मनूक्तेः ।

पितृमरणोत्तरविभागकालेऽस्पष्टगर्भायां मातरि तत्सपत्न्यां भ्रातृपत्न्यां वाऽनन्तरमुत्पन्ने विशेषमाह याज्ञवल्क्यः—

विभक्तेषु सुतो जातः सवर्णायां विभागभाक् ।

विभागश्च सर्वैर्भ्रात्रादिभिः स्वस्वांशात्किंचित्किंचिदुद्धृत्य यथा स्वांशसमो भवति तथा कार्यः । विष्णुः—पितृविभक्ता विभागानन्तरोत्पन्नस्य विभागं दद्युः । इदं च तदंशेषु रेक सेक(स?र)हितेषु ज्ञेयम् । तत्सत्त्वे तु स एवाह—

दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात् ।

दृश्याद्विद्यमानद्रव्यात् । भ्रातृणां विभागकाले विशेषमाह वसिष्ठः—

अथ भ्रातृणां दायविभागो याश्चानपत्याः स्त्रियस्तासामा पुत्रलाभा-दिति । प्रतीक्षा कार्येति शेषः । पितृमरणोत्तरं विभागे विशेषमाह बृहस्पतिः—

असंस्कृता भ्रातरस्तु संस्कार्यास्ते यवीयसः ।

यवीयस इत्यत्र नुमुदीर्घाभावश्चच्छान्दसः । भ्रातृग्रहणं भगिनी-नामप्युपलक्षणम् । तथा च स एव—

असंस्कृतास्तु यास्तत्र पैतृकादेव ता धनात् ।
संस्कार्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च यथाविधि ॥ इति ।

याज्ञवल्क्यः—

असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।
भगिन्यश्च निजादंशाद्दत्वांशं तु तुरीयकम् ॥

यज्जातीया कन्यास्तज्जातीयपुत्रस्य यावान्भागस्तस्य चतुर्थमंशं प्रत्येकं भगिनीभ्यो दत्त्वा ताः संस्कर्त्तव्या इत्यर्थः । दायग्रहणव्यवस्थोपयोगि-तया मुख्यगौणपुत्रव्यवस्थामाह याज्ञवल्क्यः—

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।
कानीनः कन्यकाजातो मातामहसुतो मतः ॥
अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः ।
दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत् ॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयंकृतः ।
दत्तात्मा तु स्वयंदत्तो गर्भे विन्नः सहोढजः ॥
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः ।

सवर्णायां धर्मपत्न्यामुत्पन्नः औरसः पुत्रो मुख्यः । पुत्रिकासुतो द्वेधा । तत्राद्यमाह वसिष्ठः—

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति ॥ इति ।

अन्त्यमाह स एव ' तृतीयः पुत्रिकैव ' इति । अस्मिन्पक्षे कन्यैव

पितुरौर्ध्वदैहिकादि कार्यम् । क्षेत्रजः—अपुत्रभ्रात्रादिपत्न्यां गुर्वाज्ञया देवरादिसगोत्रेणोत्पन्नः । अक्षतायां पूर्ववोढ्रभुक्तायाम् । क्षतायां तेन भुक्तायां वा वोढ्रन्तरेणोत्पन्नः पौनर्भवः । अत्र दत्तकभिन्ना गौणाः पुत्राः कलौ वर्ज्याः । 'दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः' इति तन्निषेधेषु पाठात् ।

## अथ दत्तकप्रकरणम् ।

अथ दत्तकविधिः । मनुः—

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः ॥

वाशब्दान्मात्रभावे पितैव दद्यात्, पित्रभावे मातैवोभयसत्त्वे तूभावपीति मदनः । आपद्ग्रहणादनापदि न देयः । अयं निषेधो दातुरेव पुरुषार्थो न क्रत्वर्थ इति विज्ञानेश्वरः । तन्न, अस्य वाक्यादृष्टार्थतया क्रत्वर्थत्वावगमात् । कथंचिद्दृष्टार्थत्वेऽपि वा नियमादृष्टस्य आवश्यकत्वान्न तदतिक्रमे कार्यविशेषप्रयोजकादृष्टसिद्धिः । केचित्त्वापच्छब्दस्य स्वार्थत्यागाद्यापत्तेरनापत्परिसंख्यापकत्वाभावेन न निषेधार्थकत्वं किंत्वापदो निमित्तमात्रबोधकत्वमेव । नच नैमित्तिकत्व आपदि पुत्राऽदाने प्रत्यवायापत्तिः । एतद्वाक्यस्य संज्ञासंज्ञिसंबन्धमात्रबोधकत्वादापदि निमित्ते दानविधायकत्वाभावात् । यदपि विवाहप्रकरणे तेनैवोक्तं रोगिण्यादिनिषेधातिक्रमे दृष्टविरोध एव, भार्यात्वं तूत्पद्यत एवेति तदप्यनेनैवापास्तम् । सदृशं कुलगुणादिभिर्न जात्या, अतः क्षत्रियादिरपि विप्रादेर्दत्तको भवतीति मेधातिथिः । सदृशं जात्येति कुल्लूकभट्टः । युक्तं चेदम् । याज्ञवल्क्येन, औरसो धर्मपत्नीज इति द्वादशापि पुत्राननुक्रम्य, सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिरित्युपसंहारात् । स्पष्टीकरिष्यते चेदं वक्ष्यमाणशौनकवचोभ्याम् । विज्ञानेश्वरोप्येवम् । 'ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः' इति ज्येष्ठस्यैव पुत्रकार्यकरणे मुख्यत्वात्स न देय इत्ययमपि निषेधो दातुरेव न प्रतिग्रहीतुरित्यपि सः । स्यादयं प्रतिषेधो दातुरेव यद्येतस्य ज्येष्ठदाननिषेधकता स्यान्न तु सास्ति मानाभावात्, पुत्री भवतीत्यनेन पुत्रित्वमात्रोक्त्या ऋणापाकरणमात्रपरत्वाच्च । अत एव 'पितॄणामनृणश्चैव स तस्मात्सर्वमर्हति' इत्युत्तरार्धं संगच्छते । सर्वं द्रव्यम् । दत्तकश्च पुमानेव भवति न कन्या 'स

ज्ञेयो दत्रिमः सुतः ' इति संज्ञासंज्ञिसंबंधबोधकवाक्यगतेन सहति सर्व-नाम्ना मातापितृकर्तृकप्रीतिजलगुणकापन्निमित्तकदानकर्मीभूतसजातीयपुंस एवाष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीतेति तच्छब्देनाष्टवर्षब्राह्मण्यपुंस्त्वोपनयनादिसंस्कृतस्यैव परामर्शात् । एतेन ' क्त्रेर्मम्नित्यम् ' इति भवन्तो दत्रिमशब्दो दाननिर्वृत्तकर्मत्वाविशेषाद्धूरायान्यस्मै वा दत्तां कन्यामप्यभिधत्त इति केषांचिदुक्तिः परास्ता । पुत्रप्रतिग्रहप्रकारमाह शौनकः—

शौनकोऽहं प्रवक्ष्यामि पुत्रसंग्रहमुत्तमम् ।
अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च ॥
वाससी कुण्डले दत्वा उष्णीषं चाङ्गुलीयकम् ।
आचार्यं धर्मसंयुक्तं वैष्णवं वेदपारगम् ॥
वर्हिः कुशमयं चैव पालाशं चेध्ममेव च ॥
एतानाहृत्य बन्धूंश्च ज्ञातीनाहूय सत्तमः ।
बन्धूनन्नेन संभोज्य ब्राह्मणांश्च विशेषतः ॥
अन्वाधानादि यत्तन्त्रं कृत्वाऽऽज्योत्पवनादिकम् ।
दातुः समक्षं गत्वा तु पुत्रं देहीति याचयेत् ॥
दाने समर्थो दातास्मै येयज्ञेनेतिपञ्चभिः ।
देवस्यत्वेतिमन्त्रेण हस्ताभ्यां प्रतिगृह्य च ॥
अङ्गादङ्गेत्यृचं जप्त्वा चाघ्राय शिशुमूर्धनि ।
वस्त्रादिभिरलंकृत्य पुत्रच्छायावहं सुतम् ॥
नृत्यगीतैश्च वाद्यैश्च स्वस्तिशब्दैश्च संयुतम् ।
गृहमध्ये तमादाय चरुं हुत्वा विधानतः ॥
यस्त्वाहृदेत्यृचा चैव तुभ्यमग्नऋचैकया ।
सोमोददित्येताभिर्ऋग्भिस्तु पञ्चभिस्तथा ॥
स्विष्टकृदादिहोमं च कृत्वा शेषं समापयेत् ।
ब्राह्मणानां सपिंडेषु कर्त्तव्यः पुत्रसंग्रहः ॥
तदभावेऽसपिंडो वा अन्यत्र तु न कारयेत् ।
क्षत्रियाणां स्वजातौ वा गुरुगोत्रसमोऽपि वा ॥
वैश्यानां वैश्यजातेषु शूद्राणां शूद्रजातिषु ।
सर्वेषां चैव वर्णानां ज्ञातिष्वेव च नान्यतः ॥

> दौहित्रो भागिनेयश्च शूद्रस्यापि च दीयते ।
> नैकपुत्रेण कर्त्तव्यं पुत्रदानं कदाचन ॥
> बहुपुत्रेण कर्त्तव्यं पुत्रदानं प्रयत्नतः ।
> दक्षिणां गुरवे दत्त्वा यथाशक्ति द्विजोत्तमः ॥
> नृपस्तु राष्ट्रमेवापि वैश्यो वित्तशतत्रयम् ।
> शूद्रः सर्वस्वमेवापि अशक्तश्चेद्यथाबलम् ।

छायावहं सदृशम् । दौहित्रो भागिनेयश्चेति यथा भूतभाव्युपयोगित्वेन दण्डस्य 'मैत्रावरुणाय दण्डं प्रयच्छति' इत्यत्र संभवत्यपि भाव्यत्वे, चतुर्थ्या 'दण्डी प्रैषानन्वाह' इति प्रैषानुवचनकर्तृत्वेन भाव्युपयोगिनो मैत्रावरुणस्यैव भाव्यत्वमुक्तं; तथेहाप्यनपाकृतर्णत्वेन चतुर्थ्यर्थषष्ठ्या शूद्रस्यैव दौहित्रभागिनेयावपि प्रति शेषितया भाव्यत्वम् । अतस्तयोरेव विधेयत्वेन दौहित्रभागिनेयावेव शूद्रस्येति नियमविधिविषयताप्युक्ता । शूद्रस्य त्वविधेयत्वेन तद्विषयत्वायोगात् । तौ शूद्रस्यैवेतिवचनव्यक्तौ विप्रादिशेष्यन्तरपरिसंख्यापत्तेः । तस्माद्दौहित्रभागिनेयावेव शूद्रस्य मुख्यौ तदभावे त्वन्योऽपि सजातीयः, शूद्राणां शूद्रजातिष्विति तेनैवोक्तेः । न चेदं जातिपदं दौहित्रभागिनेययोरेवोपसंह्रियते । दौहित्रभागिनेयत्वयोः सजातीयत्वस्य च परस्परव्यभिचारित्वात् , एकस्मृतौ सामान्यवाक्यवैयर्थ्यापत्तेश्च । विवृतं चैतद्द्वैतनिर्णये तातचरणैः । शिष्टाचारो-

---

१ प्रयोगपारिजाते दत्तकोक्तौ पुत्रप्रतिग्रहविधिः शौनकोक्तो लिखितः। तत्र वाक्यम् । 'दौहित्रो भागिनेयश्च शूद्रस्यापि च दीयते' इति ॥ तत्र केचिच्छूद्रस्यैवेमौ द्वौ नान्यस्य ब्राह्मणादेरिति नियमं प्रतिपेदिरे । तन्न । ब्राह्मणाय गां दद्यादित्यादावेव ब्राह्मणादेर्भूतभाव्युपयोगाभावाद्गुणत्वेन विधेयत्वान्नियमविधिविषयता युक्ता । न त्विह शूद्रस्य सा युक्ता । भाव्युपयोगित्वाद्गुणत्वेनाविधेयत्वादविधेये च नियमविध्यसंभवात् ॥ कथं शूद्रो भाव्युपयोगीति चेदुच्यते—'नापुत्रस्य लोकोऽस्ति जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते यज्ञेन देवेभ्यः प्रजया पितृभ्यो विद्यया ऋषिभ्यः' इति च श्रुतिः । तत्र श्रुतौ ब्राह्मणग्रहणमुपलक्षणमित्युक्तं 'ब्राह्मणस्य सोमविद्याप्रजमृणवाक्येन संयोगात्( जै० ६।२।३१)इत्यधिकरणे । एवं च शूद्रस्यापि पितृऋणापाकरणविशिष्टत्वेन भाव्यत्वं चतुर्थ्यर्थषष्ठ्या भवति । यथा दण्डी प्रैषानन्वाहेति दण्डित्वेन प्रैषानुवचने मैत्रावरुणस्य विनियोगाद्भाव्युपयोगिनो 'मैत्रावरुणाय दण्डं प्रयच्छति' इति दण्डितया भाव्यत्वं चतुर्थ्या । ततश्च यथा तत्र दण्डस्य यजमानसंस्कारेण कृतकरस्यापि(?)भाव्यत्वं त्यक्त्वा दण्डदानेन मैत्रावरुणं भावयेदिति वाक्यार्थे दण्डस्य विधेयत्वमेवमिह—

प्येवम् । एवं च निषादस्थपतिवत्तस्याधिकारे सिद्धे यच्छुद्धिविवेक उक्तं वैदिकमन्त्रसाध्यहोमवति पुत्रप्रतिग्रहे शूद्रस्यानधिकार इति तदपास्तम् ।

---

'पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते' इति संभवत्यपि पुत्रस्य भाविविनियोगत्वेन भाव्यत्वे तत्यक्त्वा भागिनेयदौहित्रदानेन शूद्रं भावयेदितिवाक्यार्थे दौहित्रभागिनेययोर्विधेयत्वेन तयोरेव नियमविधिविषयत्वं युक्तम् । शूद्रस्य तु शेषितया तन्नियमे परिसङ्ख्यापद्येत यथा 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इति । सा च त्रिदोषा । न चैकत्र वाक्ये नियमपरिसङ्ख्ययोः सम्भवः । तेन ब्राह्मणादिभिरपि दौहित्रभागिनेयौ पुत्रत्वेन ग्राह्याविति सिद्धम् । तथा शूद्रेण सति संभवे दौहित्रभागिनेयावेव ग्राह्यौ । ननु दौहित्रभागिनेयनियमाच्छूद्रस्य तद्यतिरिक्तो न स्यादेव । अतः सति संभव इतीदमप्रमाणकम् । तत्र केचित्–ब्राह्मणस्य सोमविद्याप्रजमित्यधिकरणे प्रजोत्पादनस्य नित्यत्वोक्तेः पुत्रप्रतिग्रहविधेरपि भाव्याकाङ्क्षायां पुत्रशब्देनोपस्थितस्य तत्कार्यस्य पितृऋणापाकरणादेव प्रजोत्पादनफलस्य भाव्यत्वावगमे प्रजोत्पादनवदेव फलतो नित्यत्वेन यथाशक्तिन्यायाद्दौहित्रभागिनेयनियमानादरोऽपि युक्त इति तन्न । प्रयोगविधिप्रयोज्येष्वेवाङ्गेषु यथाशक्तिन्यायप्रवृत्तेरिष्टत्वात् ॥ अतश्च यत्प्रयोगविधिप्रयोज्यं प्रतिग्रहाङ्गं होमादि तस्यैव यथाशक्तिन्यायेन त्यागो न तु प्रयोगविध्यप्रयोज्यस्य दौहित्रत्वभागिनेयत्वादेः । अत एव सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिरिति मनूक्तसजातीयत्वनियमस्यापि न त्यागः । तस्मात्सति संभव इत्ययुक्तमिति । अत्रोच्यते—शौनकेनैव 'वैश्यानां वैश्यजातेषु शूद्राणां शूद्रजातिषु' इति नियमनात्, मनुनाऽपि, सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिरिति सजातीयत्वनियमनाद्दौहित्रत्वशूद्रत्वयोश्च परस्परव्यभिचारात्सामान्यविशेषभावाभावेनोपसंहारस्याप्ययोगाद्वैयर्थ्यपरिहारार्थं दौहित्रभागिनेयातिरिक्तशूद्रविधानार्थत्वे शूद्रवाक्यस्य निर्णीते, दौहित्रभागिनेययोः पूर्वत्र स्वावयवानामुत्तरत्र स्वपित्रवयवानामनुवृत्तेरन्तरङ्गत्वात्सति सम्भवे तावेव तदसम्भवे तु शूद्रान्तरमपि पुत्रो भवत्येवेति । एवं च न शिष्टाचारविरोधोऽपि कश्चिदिति सर्वं निरवद्यम् ॥ इति श्रीमत्पदवाक्यप्रमाणपारावारीणधुरीणमीमांसाद्वैतसाम्राज्यधुरन्धरश्रीभट्टनारायणात्मजभट्टशंकरोन्नीते धर्मद्वैतनिर्णये पुत्रप्रतिग्रहविधिसंशयोद्भेदपरिच्छेद इत्युक्तम् ॥

सर्वशास्त्रतत्त्वज्ञकृष्णभट्टेनापि स्वकृतनिर्णयसिन्धुटीकायां तृतीयपरिच्छेदे दत्तकप्रकरण इदमुपन्यस्तम् । तद्यथा ॥—

भट्टास्तु शूद्रस्यैव दौहित्रभागिनेयौ द्वौ नेतरस्येति न नियमः ॥ यथा दण्डी प्रैषानन्वाहेति दण्डित्वेन प्रैषानुवचने मैत्रावरुणस्य विनियोगात् प्रैषानुवचनकर्तृत्वेन भाव्युपयोगिनो मैत्रावरुणस्यैव मैत्रावरुणाय दण्डं प्रयच्छतीत्यत्र दण्डितया भाव्यत्वं यजमानः स्वदण्डदानेन मैत्रावरुणं भावयेदित्यर्थात् । तथेहाप्यनपाकृतर्णत्वेन चतुर्थ्यर्थ-

समन्त्रहोमस्तु तेन विप्रद्वारा कार्यः 'उपवासो व्रतं होमस्तीर्थस्नानजपादिकम् । विप्रैः संपादितं यस्य संपन्नं तस्य तत्फलम्' इति पराशरोक्तेः। स्मार्तहरिनाथावप्येवमेव । यत्तु पराशर एव—

दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धविः ।
ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेत् ॥ इति ।

तत्तु शूद्रस्य कर्मसाद्गुण्यं विप्रस्य च दोषं प्रतिपादयतीति माधवः । स्त्रिया अपि शूद्रवदेवाधिकारः 'स्त्री शूद्राश्च सधर्माणः' इति वाक्यात् ।

वसिष्ठः—'शुक्रशोणितसंभवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतो नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि त्रायते पुरुषं, न तु स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्तुः। पुत्रं प्रतिग्रहीष्यन्बन्धूनाहूय राजनि चावेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वाऽदूरेबान्धवं सन्निकृष्टमेव प्रतिगृह्णीयात् । संदेहे चोत्पन्ने दूरेबान्धवं शूद्रमिव स्थापयेद्विज्ञायते ह्येकेन बहूंस्तारयेदिति । तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागी स्यात्' इति ।

भर्त्रनुज्ञा तु सधवाया एव दृष्टार्थत्वात् । विधवायास्तु तां विनापि पितुस्तदभावे ज्ञातीनामाज्ञया भवति । अत एव—

रक्षेत्कन्यां पिता विन्नां पतिः पुत्रास्तु वार्द्धके ।
अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं कचित्स्त्रियाः ॥

इति याज्ञवल्क्येनावस्थाविशेष एव भर्तुः पारतन्त्र्यमुक्तम् । तदभावे वार्द्धकादिना तस्याक्षमतायां वा पुत्रादीनामपि ।

कात्यायनेनापि—

नारी खल्वननुज्ञाता पित्रा भर्त्रा सुतेन वा ।
विफलं तद्भवेत्तस्या यत्करोत्यौर्ध्वदैहिकम् ॥

---

षष्ठ्या दौहित्रभागिनेयदानेन शूद्रं भावयेदित्यर्थः ॥ एवं च दौहित्रभागिनेययोर्विधेयत्वेन नियमविधिविषयत्वं युक्तम् । शूद्रस्य तु शेषितया तन्नियमे परिसङ्ख्यापत्तेः । यथा इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते इति । सा च त्रिदोषेति ॥ तस्माद्दौहित्रभागिनेयावेव शूद्रस्य मुख्यौ तदभावे तु अन्योऽपि सजातीयः शूद्राणां शूद्रजातिष्विति तेनैवोक्तेः । न चेदं जातिपदं दौहित्रभागिनेययोरुपसंह्रियत इति वाच्यम् । तथा सत्येकस्मृतौ सामान्यवाक्यवैयर्थ्यापत्तेः ॥ एवं च ब्राह्मणादिभिरपि दौहित्रभागिनेयौ ग्राह्यौ बाधकाभावादिति वदन्ति । ( मंडलीक मु. पु. )

इति अवस्थाविशेष एव पितृभर्त्राद्यनुज्ञोक्ता । और्ध्वदेहिकं पारलौकिकम् । अतो यस्यामवस्थायां भर्त्तुरनुज्ञा प्राप्ता सैवात्रानूद्यते नत्वपूर्वा विधीयते । अतो विधवाया भर्त्तुराज्ञां विनाप्यधिकारः । अदूरेबान्धवो यथायथं संन्निहितः सपिण्डः, सन्निहितेष्वपि भ्रातृपुत्रो मुख्यः—

भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।
सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥

इति मनूक्तेरिति मिताक्षरायाम् । इदमेव चैतद्वचसः प्रयोजनं युक्तमन्यासंभवात् । दूरेबान्धवं विजातीयम् । दत्तकस्तु परिणीत उत्पन्नपुत्रोऽपि च भवतीति तातचरणाः । युक्तं चेदं बाधकाभावात् ।

यत्तु कालिकापुराणे—

पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते ।
आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः ॥
चूडोपनयसंस्कारा निजगोत्रेण वै कृताः ।
दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते ॥
ऊर्ध्वं तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप ।
गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमं चरेत् ॥ इति ।

तदसगोत्रपरम् । आचूडान्तमित्याङभिव्याप्त्यर्थो मर्यादार्थत्वे चूडोपनयसंस्कारा इत्यनेन विरोधापत्तेः । इदं तु वचो न तथा विस्रंभणीयम् । द्वित्रिकालिकापुराणपुस्तकेष्वदर्शनात् ।

अयं च दत्तको द्विविधः । केवलो द्व्यामुष्यायणश्च । संविदं विना दत्त आद्यः । आवयोरसाविति संविदा दत्तस्त्वन्त्यः । तत्राद्यः प्रतिग्रहीतुरेवौर्ध्वदेहिकश्राद्धादि कुर्यात् । तथाहि—पुत्रप्रतिग्रहस्य भाव्याकांक्षायां पुत्रं प्रतिग्रहीष्यन्नित्यादिके तद्विधौ पुत्रमितिद्वितीयान्तेन पुत्रस्य भाव्यत्वमुक्तम् । नच जन्यपुंस्त्वाख्यपुत्रत्वं भावयितुं शक्यम् । तेन पुत्रशब्देन सर्वं पुत्रकार्यं लक्षयित्वा तत्प्रयोजकमदृष्टं भाव्यमङ्गीकर्तव्यम् । अतः प्रतिग्रहीतृकुले पुत्रपित्रादिसंबन्धविशेषप्रयुक्तानि कार्याणि प्रवर्तन्ते । अत एवाह मनुः—

गोत्ररिक्थे जनयितुर्न भजेद्दत्रिमः सुतः ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ।

गोत्ररिक्थे अनुगच्छतीति गोत्ररिक्थानुगः प्रायस्तत्समनियत इति यावत्। दत्रिमः केवलः। द्व्यामुष्यायणे गोत्राद्यनुवृत्तेर्वक्ष्यमाणत्वात्।पिण्डः सापिण्ड्यम्। स्वधौर्ध्वदेहिकश्राद्धादीत्यपरे। वस्तुतस्तु यथा, जातपुत्रः कृष्णकेशोऽग्निमादधीतेत्यत्र वयोवस्थाविशेषो यथावाऽर्थमन्तर्वेदि मिनोत्यर्द्धं बहिर्वेदीत्यनेन देशविशेषो लक्ष्यते तथात्र गोत्ररिक्थपिण्डस्वधापदैर्जनकादीनां संबन्धप्रयुक्तं कार्यमात्रं लक्षयित्वा तन्निवृत्तिरुच्यते। तेन सोदरपितृव्यादिसंबन्धनिवृत्तिरपि सिद्धा भवति। अत एव केवलदत्तकजन्यः पुत्रोऽपि पितुः सपिण्डीकरणपार्वणश्राद्धादि प्रतिग्रहीत्रैव सह कुर्यात्। एवं तत्पुत्रोऽपि।यत्तु 'अथ चेद्दत्तकक्रीतपुत्रिकापुत्राः परपरिग्रहेणानार्षेयास्ते द्व्यामुष्यायणा भवन्ति' इत्यादिना द्व्यामुष्यायणानुपक्रम्य कात्यायनः—'अथ यद्येषां स्वासु भार्यासु अपत्यं न स्याद्रिक्थं हरेयुः पिण्डं चैभ्यस्त्रिपुरुषं दद्युरथ यद्युभयोर्न स्यादुभाभ्यां दद्युरेकस्मिन् श्राद्धे पृथगुद्दिश्य द्वावनुकीर्तयेत्प्रतिग्रहीतारं चोत्पादयितारं चातृतीयात्पुरुषात्' इति तद् द्व्यामुष्यायणपरं द्व्यामुष्यायणा भवन्तीत्युपक्रमात्। तेन द्व्यामुष्यायणो जनकस्य प्रतिग्रहीतुर्वा पुत्रान्तरासत्त्वे तस्मै पिण्डं दद्याद्रिक्थं च गृह्णीयात्, न तत्सत्त्वे। यदा तूभयोरप्यौरसाः पुत्राः सन्ति तदा कस्मा अपि न दद्यात्, प्रतिग्रहीत्रौरसांशस्य चतुर्थं भागं च हरेत् 'तस्मिंश्चेत्प्रतिगृहीते औरस उत्पद्येत चतुर्थभागभागी स्यात् इति वसिष्ठोक्तेः,

> उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः।
> सवर्णा असवर्णास्तु ग्रासाच्छादनभाजनाः॥

इति कात्यायनोक्तेश्च। तृतीयांशहरा इति तु कल्पतरौ पाठः। सवर्णाः क्षेत्रजदत्तकादय इतिविज्ञानेश्वरः। यदा तूभयोः पुत्राभावस्तदा एकस्मिन् श्राद्ध इत्याद्युक्तप्रकारेणोभयोरप्येकमेव श्राद्धं कुर्यात्। यदपि हेमाद्रौ कार्ष्णाजिनः—

> यावन्तः पितृवर्गाः स्युस्तावद्भिर्दत्तकादयः।
> प्रेतानां योजनं कुर्युः स्वकीयैः पितृभिः सह॥
> द्वाभ्यां सहाथ तत्पुत्राः पौत्रास्त्वेकेन तत्समम्।
> चतुर्थे पुरुषे छन्दस्तस्मादेषां त्रिपौरुषी॥
> साधारणेषु कालेषु विशेषो नास्ति वर्गिणाम्।
> मृताहे त्वेकमुद्दिश्य कुर्युः श्राद्धं यथाविधि॥ इति।

तदपि कात्यायनीयसमानार्थमेव । अयमर्थः,—द्व्यामुष्यायणदत्तकादयो जनकप्रतिग्रहीत्रोः कुले मृतानां स्ववर्गैस्तत्पित्रादिभिः सह सपिण्डीकरणं कुर्युः । दत्तकादिपुत्रास्तु तेषां जनकप्रतिग्रहीतृभ्यां सह कुर्युः । तत्पौत्रा अपि स्वपितरं दत्तकेन पितामहेन तज्जनकेन प्रपितामहेन । चतुर्थे पुरुषे तत्प्रपौत्रे छन्दः इच्छा । प्रतिग्रहीतारमुच्चारयेन्न वेति जनकं तूच्चारयेदेव । साधारणेष्वमावास्यादिकालेषु जनकप्रतिग्रहीतृवर्गिणां श्राद्धं कार्यम् । मृताहे त्वेकमेवोद्दिश्यैकोद्दिष्टं श्राद्धं कुर्यादिति ।

केचित्तु केवलदत्तकस्याविधानात्स नास्त्येव । आवयोरसाविति संविदश्च विधानाभावात्तां विना गृहीतोऽपि द्व्यामुष्यायण एव । तेनैव च जनकप्रतिग्रहीत्रोरुद्देशेनामावास्यादिषु श्राद्धद्वयमेकं वा श्राद्धं कार्यम् । तत्पुत्रेण तु दत्तकस्य तज्जनकप्रतिग्रहीतृभ्यां द्वाभ्यामपि सह सपिण्डीकरणपार्वणश्राद्धादि कार्यम् । एवं तत्पुत्रादिभिरपीत्याहुः । तच्चिन्त्यम् यद्यपि केवलदत्तकः क्वापि शब्दतो नोक्तस्तथापि पूर्वोक्तमनुवचनेन जनकादीनां संबन्धमात्रनिवृत्तेरुक्तत्वाद्व्यामुष्यायणे तदभावादर्थात्सिध्यत्येव । किञ्च 'ऊर्ध्वं सप्तमात्पितृबन्धुभ्यो बीजिनश्च मातृबन्धुभ्यः पञ्चमात्' इतिगौतमीयेन बीजिकुले सप्तपुरुषं यावद्विवाहो निषिद्धः स द्व्यामुष्यायणे व्यर्थः स्यात्, तस्मिन् सापिण्ड्यसत्त्वात् । अतोऽवश्यमेतत्सार्थक्यार्थं केवलदत्तको वाच्यः । तत्र सापिण्ड्यनिवृत्तेरुक्तत्वाच्च । अपि च प्रवराध्याये—

> द्व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः ।
> गोत्रद्वयेऽप्यनुद्वाहः शौङ्गशैशिरयोर्यथा ॥

इत्येतेन गोत्रद्वयमपि द्व्यामुष्यायणस्योक्तम् मानवीयेन च जनकगोत्रनिवृत्तिरुक्तेति विरोधः केवलद्व्यामुष्यायणभेदेनैव परिहरणीयः, तेन सिद्ध्यत्येव केवलोऽपि दत्तकः । अत एव शूरेण कुन्तिभोजाय दत्रिमत्वेन दत्तायाः कुन्त्याः सुतस्यार्जुनस्य शूरपुत्रवसुदेवदुहितुः सुभद्रायाः सापिण्ड्यनिवृत्तिं मनुवचनेनोक्त्वा अस्य गौतमीयस्य बीजिसंतानजाया अपि निषेधमात्रपरत्वमेव चोक्त्वा अर्जुनेन न सुभद्रा परिणीयेत्याशङ्क्य वार्त्तिकोक्तं संबन्धव्यवधानकल्पनाख्यं समाधानमाह भट्टसोमेश्वरः । यत्तु कश्चित्सोमेश्वरेण गौतमवचनात्कुन्त्याः शूरकुलेऽपि साप्तपौरुषं सापिण्ड्यमुक्तमित्याह तद्ग्रन्थानध्ययननिबन्धनम् । तेन हि सापिण्ड्यनि-

वृत्तिं पूर्वमुक्त्वा गौतमीयस्य जनककुले निषेधपरत्वमुक्तं न तु सापिण्ड्यबोधकत्वम् । एवं सिद्धे केवले द्व्यामुष्यायणे च, आवयोरसाविति संविदपि सिध्यति प्रतिग्रहीतुर्द्व्यामुष्यायणत्वज्ञानार्थत्वेन दृष्टार्थत्वात् । अत्र केवलदत्तकस्य पालकपितृकुले साप्तपौरुषं मातृकुले च पाञ्चपौरुषं सापिण्ड्यम् ।

यत्तु वृद्ध गौतमः—

स्वगोत्रेण कृता ये स्युर्दत्तक्रीतादयः सुताः ।
विधिना गोत्रमायान्ति न सापिंड्यं विधीयते ॥

यच्च बृहन्मनुः—

दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिंडता ।
पञ्चमी सप्तमी चैव गोत्रित्वं पालकस्य च ॥

यदपि नारदः—

धर्मार्थं वर्द्धिताः पुत्रास्तत्तद्गोत्रेण पुत्रवत् ।
अंशपिंडविभागित्वं तेषु केवलमिष्यते । इति

तान्यनाकराणि । साकरत्वेऽपि द्व्यामुष्यायणस्य प्रतिग्रहीतृकुले साप्तपौरुषसापिण्ड्याभावप्रतिपादनार्थत्वं; केवलदत्तके पूर्वोक्तगौतमीयेन पालककुले साप्तपौरुषसापिंड्यस्योक्तत्वात् , मानवीयेन च जनककुले सापिंड्यनिवृत्तेरुक्तत्वात् । यस्तु सापिंड्यनिर्णये केषांचिन्मान्यानां लेखः—जनकगोत्रेणोपनयनादिसंस्कृतस्य जनककुले पितृतो मातृतश्च पाञ्चपौरुषं साप्तपौरुषं च सापिंड्यम् । प्रतिग्रहीतुः कुले तु त्रिपुरुषं प्रतिग्रहीतरि मुख्यगौणपितृत्वप्रयोजकस्योत्पादकत्वस्योपनेतृत्वस्य चाभावात् । प्रतिग्रहीतृगोत्रेण संस्कृतस्य तु प्रतिग्रहीत्रादिभिरेव साप्तपौरुषं पाञ्चपौरुषं चेति । तत्र मूलं न विद्मः । किंच—यदि प्रतिग्रहीतर्युत्पादकत्वोपनेतृत्वाद्यभावान्न पितृत्वं कथं तर्हि त्रिपुरुषं सापिण्ड्यं प्रतिग्रहीत्रादिश्राद्धादिकर्तृत्वं वा दत्तकस्य । न च पितृत्वव्याप्यं सापिण्ड्यं येन तदभावात्सापिंड्याभावः स्यात् । वस्तुतस्तु ऊर्ध्वं सप्तमात्पितृबन्धुभ्य इति गौतमादिवचनैः प्रतिग्रहीत्रादिभिः सह सापिण्ड्यं पूर्वमुक्तमेवेति दिक् ।

# अथ पुत्रदानप्रतिग्रहविधिः ।

तत्रानेकपुत्राणामज्येष्ठदान एवाधिकारः सर्वेषाम् । प्रतिग्रहे त्वजातपुत्राणां मृतपुत्राणां वा स्त्रीणां सधवानां भर्त्तुरनुज्ञया । भर्त्रभावे पित्रादीनाम् । शूद्रेण दौहित्रो भागिनेयो वा ग्राह्यो नान्यः । अन्यैस्तु संनिहितः सपिण्डस्तदभावे विप्रकृष्टो न त्वन्यजातीय इति । अथ दाता प्रतिग्रहदिने कालादि स्मृत्वाऽस्मदादीनामस्य च पुत्रस्य परस्परं वर्त्तमानपितृपुत्रादितत्तत्संवन्धनिमित्तकतत्तत्कार्यनिवृत्तये प्रतिग्रहीत्रादीनामस्य च परस्परं पितृपुत्रादितत्तत्सम्बन्धनिमित्तकतत्तत्कार्यप्रवृत्तये च पुत्रदानं करिष्ये ' इति संकल्प्य गणेशपूजास्वस्तिवाचनमातृकापूजावृद्धिश्राद्धादि कुर्यात् । प्रतिग्रहीता तु प्रतिग्रहदिनपूर्वदिने उपोष्यापरदिने बंधूनाहूय पुत्रप्रतिग्रहं राज्ञे निवेद्य कालादि स्मृत्वा ग्रहीष्यमाणपुत्रस्य तज्जनकादीनां च परस्परं वर्तमानपितृपुत्रादितत्तत्संबंधनिवृत्तयेऽस्मदादीनां च परस्परं पितृपुत्रादितत्तत्संबन्धनिमित्तकतत्तत्कार्यप्रवृत्तये च पुत्रं प्रतिग्रहीष्य इति संकल्प्य गणेशपूजास्वस्तिवाचनमातृकापूजावृद्धिश्राद्धाचार्यवरणानि कुंडलांगुलीयकवासोयुगलोष्णीषमधुपर्कादिभिराचार्यपूजनं च संकल्पपूर्वकं कृत्वा त्रीन्विप्रान्बंधूंश्च भोजयेत् । अथाचार्यः स्वकर्म करिष्य इति संकल्प्य स्थंडिलोल्लेखनाद्यग्निप्रतिष्ठापनान्तं कृत्वाऽन्वाधाने चक्षुषी आज्येनेत्यंतमुक्त्वाऽत्र प्रधानमग्निं वायुं सूर्यं प्रजापतिं चैकैकयाऽऽहुत्या अग्निमेकया सूर्यासावित्रीं च षड्भिश्चर्वाहुतिभिर्यक्ष्ये शेषेण स्विष्टकृतमित्याद्याज्योत्पवनान्तं कुर्यात् । अथ प्रतिग्रहीता दातृनिकटे गत्वा ' पुत्रं देहीति ' याचयेत् । दाता तु " ये यज्ञेनेति " ऋक्पञ्चकमुक्त्वा कालादि स्मृत्वाऽस्मदादीनामित्यादिप्रवृत्तयइत्यन्तमुक्त्वा 'अमुं पुत्रं यथाशक्त्यलंकृतं तुभ्यमहं संप्रददे' इति वदेत् । ' ये यज्ञेनेति ' पञ्चानां मानवपुत्रो नाभानेदिष्टो विश्वेदेवा जगती पुत्रदाने विनियोगः । प्रतिग्रहीता तु ' देवस्यत्वे'त्यनेन प्रतिगृह्य स्वशाखोक्तां कामस्तुतिं पठित्वा 'अङ्गादङ्गादि'त्यृचं च जप्त्वा पुत्रं मूर्धन्याघ्राय वस्त्रादिभिरलंकृत्य मङ्गलशब्दैर्गृहान्तर्नयेत् । अथाचार्य आज्यस्थापनाद्याज्यभागान्तं कृत्वा आज्येनैव व्यस्तसमस्तव्याहृतिभिर्हुत्वा चरुणा जुहुयात् । " यस्त्वा हृदा वसुश्रुतोऽग्निस्त्रिष्टुप् पुत्रप्रतिग्रहप्रधानचरुहोमे विनियोगः । ॐ यस्त्वा हृदा० । अग्नय इदं न ममेति "

त्यागः । एवमग्रेऽपि । तुभ्यमग्र इत्यस्य सूर्यासावित्रीसूर्यासावित्र्य० नुष्टुप् । तुभ्यमग्ने० सूर्यासावित्र्या इदं न मम । सोमो ददिति पञ्चानां सूर्यासावित्री सूर्यासावित्र्यनुष्टुप् विनियोगः प्राग्वत् । ॐसोमो ददत्० ततः स्विष्टकृदादि समापयेत् । इति विधिः ।

---

प्रकृतमनुसरामः । ऋणविभागे विशेषमाह कात्यायनः—

पित्र्यं पित्र्यर्णसंबद्धमात्मीयं वाऽऽत्मना कृतम् ।
ऋणमेवं कृतं शोध्यं विभागे बन्धुभिः सह ॥

पित्र्यर्णसंबद्धं पितुर्ऋणापाकरणार्थं कृतम् । आत्मीयं स्वकुटुम्बभरणाद्यर्थमन्येन कृतम् । स एव—

भ्रात्रा पितृव्यमातृभ्यां कुटुम्बार्थमृणं कृतम् ।
विभागकाले देयं तद्रिक्थिभिः सर्वमेव तु ।

रिक्थादल्पर्णविषयेऽपि स एव—

ऋणं प्रीतिप्रदत्तं तु दत्त्वा शेषं विभाजयेत् ।

प्रदत्तं प्रतिश्रुतम् । नारदः—

यच्छिष्टं पितृदायेभ्यो दत्त्वर्णं पैतृकं च यत् ।
भ्रातृभिस्तद्विभक्तव्यमृणी स्यादन्यथा पिता ॥

पितृदायः पित्रा प्रतिश्रुतम् । स एव—

धर्मार्थं प्रीतिदत्तं च यद्दणं स्वेन योजितम् ।
तद्दृश्यमानं विभजेन्न दानं पैतृकाद्धनात् ॥

धर्मार्थं प्रीत्या च यद्दत्तं दातुं प्रतिश्रुतं पित्रा, स्वेन योजितं स्वयंकृतं तद्दणं दृश्यमानं च द्रव्यं विभजेत् । एतद्दणातिरिक्तस्य पैतृकाद्धनाद्दानं नास्तीत्यर्थः । अदृश्यमानशंकायामपि स एव—

दृश्यमानं विभज्येत गृहक्षेत्रं चतुष्पदम् ।
गूढद्रव्याभिशंकायां प्रत्ययस्तत्र कीर्त्तितः ॥
गृहोपस्करवाह्याश्च दोह्याभरणकर्मिणः ।
दृश्यमाना विभज्यन्ते कोशं गूढेऽब्रवीन्मनुः ।

कर्मिणो दासाद्याः । अत एव दिव्यप्रकरणेऽस्मिन्विषये कोश एव नियमितस्तेनैव—

शंका विश्वाससंधाने विभागे रिक्थिनां सदा ।
क्रियासमूहकर्त्तृत्वे कोशमेव प्रदापयेत् ॥

---

## अथाविभाज्यम् ।

मनुः—

विद्याधनं तु यद्यस्य तत्तस्यैव धनं भवेत् ।
मैत्रमौद्वाहिकं चैव माधुपर्किकमेव च ॥

व्यासः—

विद्याप्राप्तं शौर्यधनं यच्च सौदायिकं भवेत् ।
विभागकाले तत्तस्य नान्वेष्टव्यं स्वरिक्थिभिः ॥

सौदायिकं च वक्ष्यते । एतच्च पितृद्रव्याविरोधेनार्जितं ज्ञेयम् । तथाच याज्ञवल्क्यः—

पितृद्रव्याविरोधेन यदन्यत्स्वयमर्जितम् ।
मैत्रमौद्वाहिकं चैव दायादानां न तद्भवेत् ॥
क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः ।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥

क्रमागतायामुद्धृतायां भुवि विशेषमाह शंखः—

पूर्वनष्टां तु यो भूमिमेकश्चेदुद्धरेत्क्रमात् ॥
यथाभागं लभन्त्यन्ये दत्त्वांशं तु तुरीयकम् ।

उद्धृतायाश्चतुर्थमंशमुद्धर्त्रे दत्वावशिष्टमुद्धर्त्रा सह विभजेयुः ।

मनुः—

अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जयेत् ।
दायादेभ्यो न तद्दद्याद्विद्यालब्धं च यद्धनम् ॥

विद्यालब्धं विशिनष्टि कात्यायनः—

परभक्तोपयोगेन विद्या प्राप्तान्यतस्तु या ।
तया लब्धं धनं यत्तु विद्याप्राप्तं तदुच्यते ॥

एतदेव विशदयति स एव—

उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्वकम् ।
विद्याधनं तु तद्विद्याद्विभागे न विभज्यते ॥
शिष्यादाचार्यतः प्रश्नात्संदिग्धप्रश्ननिर्णयात् ।
स्वज्ञानशंसनाद्वादात् लब्धं प्राध्ययनाच्च यत् ॥
विद्याधनं तु तत्प्राहुर्विभागे न विभज्यते ।
शिल्पिष्वपि हि धर्मोऽयं मूल्याद्यच्चाधिकं भवेत् ॥

VI-6

विद्यालब्धकृतं चैव याज्यतः शिष्यतस्तथा ।
एतद्विद्याधनं प्राहुः सामान्यं यदतोऽन्यथा ॥
परं निरस्य यल्लब्धं विद्यया पणपूर्वकम् ।
विद्याधनं तु तद्विद्यान्न विभाज्यं बृहस्पतिः ॥
विद्याप्रतिज्ञया लब्धं शिष्यादाप्तं च यद्भवेत् ।
ऋत्विङ्न्यायेन यल्लब्धमेतद्विद्याधनं भृगुः ॥

उपन्यासः क्रमजटादीनां संकलितानां पाठः इति मदनरत्ने । सभायां गूढप्रमेयविधृतिरिति केचित् । पणपूर्वमुपन्यस्तमित्यन्वयः । शंसनं प्रख्यापनम् । प्राध्ययनं प्रकृष्टाध्ययनम् । शिल्पिष्वपीति । अयं विद्याधर्मः शिल्पिष्वपि ज्ञेय इत्यर्थः । मूल्याधिकं पारितोषिकम् । ऋत्विङ्न्याय उपदर्शनम् । अत्र सर्वत्रापि विद्याधिगमतया द्रव्यार्जने च पितृद्रव्याविरोधे सत्येवाविभाज्यत्वं विरोधे तु विभाज्यमेव ।

अत एव कात्यायनः—

कुले विनीतविद्यानां भ्रातॄणां पितृतोऽपि वा ।
शौर्यप्राप्तं तु यद्वित्तं विभाज्यं तद्बृहस्पतिः ॥

पितृद्रव्यविरोधेऽप्यर्जकस्यांशद्वयमस्त्येव 'येन चैषां स्वयमुपार्जितं स्यात्स द्व्यंशमेव हरेत्' इति वसिष्ठोक्तेः । कस्मिंश्चिद्विद्याधने विशेषमाह नारदः—

कुटुंबं बिभृयाद्भ्रातुर्यो विद्यामधिगच्छतः ।
भागं विद्याधनात्तस्मात्स लभेताश्रुतोऽपि सन् ॥

अश्रुतः अविद्य इति मदनरत्ने । भागं दास्यामीत्यप्रतिश्रुत इति तु युक्तम् । पितृद्रव्याविरोधार्जितेऽपि विशेषमाह गौतमः—स्वमर्जितं वैद्यो वैद्येभ्यः कामं दद्यादिति । विद्यां वेत्तीति वैद्यः । स इच्छया विद्वद्भ्यो भ्रातृभ्यो दद्यादित्यर्थः ।

कात्यायनः—

नावैद्यानां तु वैद्येन देयं विद्याधनं क्वचित् ।
समविद्याधिकानां तु देयं वैद्येन तद्भवेत् ॥
वैद्यो वैद्याय नाकामो दद्यादंशं स्वतो धनात् ।
पितृद्रव्यं समाश्रित्य न चेत्तेन तदाहृतम् ॥

अयं च निषेधोऽविद्यभ्रातॄणां धनान्तरसत्त्वे, धनान्तराभावे तु तेभ्योऽपि देयमेवेति मदनः । पित्रादिदत्तस्याविभाज्यत्वमाह बृहस्पतिः—

पितामहपितृभ्यां च दत्तं मात्रापि यद्भवेत् ।
तस्य तन्नापहर्तव्यं शौर्यभार्याधने तथा ॥

नारदः—

शौर्यभार्याधने चोभे यच्च विद्याधनं भवेत् ।
त्रीण्येतान्यविभाज्यानि प्रसादो यश्च वै पितुः ॥

कात्यायनः—

ध्वजाहृतं भवेद्यत्तु विभाज्यं नैव तत्स्मृतम् ।
संग्रामादाहृतं यच्च विद्राव्य द्विषतां बलम् ॥
स्वाम्यर्थे जीवितं त्यक्त्वा तत् ध्वजाहृतमुच्यते ।

स एव—

आरुह्य संशयं यत्र प्रसभं कर्म कुर्वते ।
तस्मिन्कर्मणि तुष्टेन प्रसादः स्वामिना कृतः ॥
तत्र लब्धं तु यत्किंचिद्धनं शौर्येण तद्भवेत् ।

अत्र विशेषमाह व्यासः—

साधारणं समाश्रित्य यत्किंचिद्वाहनादिकम् ।
शौर्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः ॥
तस्य भागद्वयं देयं शेषास्तु समभागिनः ।

सौदायिकस्वरूपमाह व्यासः—

ऊढया[1] कन्यया वापि पत्युः पितृगृहादपि ।
भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥

कात्यायनः—

यल्लब्धं लाभकाले[2] तु स्वजात्या कन्यया सह ।
कन्यागतं तु तद्वित्तं शुद्धं वृद्धिकरं स्मृतम् ॥
वैवाहिकं तु तद्विद्याद्भार्यया यत्सहागतम् ।
धनमेवंविधं सर्वं विज्ञेयं धर्मसाधनम् ॥

आदायार्षस्तु गोद्वयमिति प्रकारेण लब्धं कन्यागतम् । अत्रापि विद्याधनवदेव पितृद्रव्याविरोधश्चेदविभाज्यत्वं विद्यादिव्यतिरिक्तप्रकारेण तु लब्धं विभाज्यमेव ।

---

१ कुढया, कुदया, कुव्ढयेति च पाठाः । २ लग्नकाले इति मुद्रितेषु पाठः ।

तथा च मनुः—

अविद्यानां तु सर्वेषामीहातश्चेद्धनं भवेत् ।

समस्तत्र विभागः स्यादपित्र्य इति धारणा ॥

ईहा कृष्यादिचेष्टा । अपित्र्ये पितृद्रव्यानाश्रयणे ।

अन्यदप्यविभाज्यमाह मनुः—

वस्त्रं पत्रमलंकारं कृतान्नमुदकं स्त्रियः ।

योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते ॥

पत्रं वाहनम् । वस्त्रपत्रालंकारा ये येन धृतास्ते तस्यैव सममूल्याश्चेत् । न्यूनाधिकमूलास्तु विभाज्या एव । पितृधृतं तु वस्त्रादि तच्छ्राद्धभोक्त्रे देयम्—

वस्त्रालंकारशय्यादि पितुर्यद्वाहनादिकम् ।

गन्धमाल्यैः समभ्यर्च्य श्राद्धभोक्त्रे तदर्पयेत् ॥

इति बृहस्पत्युक्तेः । विषमेष्वजादिषु विशेषमाह मनुः—

अजाविकं सैकशफं न जातु विषमं भजेत् ।

अजाविकं सैकशफं ज्येष्ठस्यैव विधीयते ॥

कृतान्नोदके यथासंभवमुपयोज्ये । स्त्रियो दास्यो विषमा यथासंभवं कर्म कारणीयाः । समास्तु विभाज्याः । पित्रवरुद्धास्तु समा अपि न विभाज्याः । स्त्रीषु च संसक्तास्वविभाग इति गौतमोक्तेः । योगक्षेमशब्देन मन्त्रिपुरोहितादय उच्यन्त इति कल्पतरौ । लौगाक्षिस्तु—

क्षेमं पूर्तं योगमिष्टमित्याहुस्तत्त्वदर्शिनः ।

अविभाज्ये तु ते प्रोक्ते शयनासनमेव च ॥

इत्याह । तत्र पूर्तं तडागारामादि । इष्टं यागविप्रभोजनादि । तदर्थमविभागदशायां सर्वानुमत्या यद्द्रव्यं येनोत्सृज्य पृथक् स्थापितं तेन द्रव्येण स धर्मस्तेनैव कार्यो नान्येन वा संभूय सर्वैरित्यर्थः । प्रचारो, गृहादिमार्गः । गवादिप्रचारार्था भूश्च । यत्तु शंखलिखितौ—न वास्तुविभागो नोदपात्रालंकारोपयुक्तवाससामिति, यच्च व्यासः—

अविभागः सगोत्राणामासहस्रकुलादपि ।

याज्यं क्षेत्रं च पत्रं च कृतान्नमुदकं स्त्रियः ॥ इति,

वास्तुक्षेत्रयोरविभाज्यत्वमाहुस्तद्धर्मवास्तुगोचरक्षेत्रादिपरम् । प्रति-ग्रहोपात्तयोस्तयोः क्षत्रियादिविभागप्रतिषेधपरम् । पूर्वोक्तनिषेधात् । अल्पमूल्ययोर्मूल्येन विभागो न स्वरूपत इत्येवं परं वा । वस्त्रादिषु विशेषमाह बृहस्पतिः—

वस्त्रादयो विभाज्या यैरुक्तं तैर्न विचारितम् ।
धनं न चेत्समृद्धानां वस्त्रालंकारसंश्रितम् ॥
मध्यस्थितमनाजीव्यं दातुं नैकस्य शक्यते ।
युक्त्या विभजनीयं तदन्यथाऽनर्थकं भवेत् ॥
विक्रीय वस्त्राभरणमृणमुद्धाह्य लेखितम् ।
कृतान्नं वा कृतान्नेन परिवर्त्य विभज्यते ॥
उद्धृत्य कूपवाप्यंभः स्वानुसारेण भुज्यते ।
एकां स्त्रीं कारयेत्कर्म यथांशेन गृहे गृहे ॥
वह्वयः समांशतो देया दासानामप्ययं विधिः ।
यथाभागानुसारेण सेतुक्षेत्रं विभज्यते ॥
प्रचारश्च यथांशेन कर्तव्यो रिक्थिभिः सदा । इति ।

उद्धाह्येति अधमर्णादुद्धृत्येत्यर्थः ॥

कात्यायनः—

धनं पत्रनिविष्टं तु धर्मार्थं यन्निरूपितम् ।
उदकं चैव दासश्च निबन्धो यः क्रमागतः ॥
धृतं वस्त्रमलंकारो नानुरूपं तु यद्भवेत् ।
यथाकालोपयुक्तानि तथा योज्यानि बन्धुभिः ॥ इति ।

धनमिति धर्मांशेनोत्सृज्य पत्रे लिखितमित्यर्थः, उदकं कूपादिगतम् । निबन्धो वृत्तिः । नानुरूपं विभागयोग्यम् । भ्रात्रादिवञ्चनया स्थापि-तद्रव्यस्य विभागमाह याज्ञवल्क्यः—

अन्योन्यापहृतं द्रव्यं विभक्ते यत्तु दृश्यते ।
तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः ॥

अन्योन्यापहृतं ज्येष्ठकनिष्ठाद्यपहृतम् । यत्तु मनुः—

यो लोभाद्विनिकुर्वीत ज्येष्ठो भ्रातॄन् यवीयसः ।
स ज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः ॥ इति ।

तत्रापि ज्येष्ठपदं दण्डापूपिकनीत्या दायादमात्रोपलक्षकम् । ज्येष्ठ-स्यापि दोषः किमुत यवीयसामित्यर्थः । अतएव गौतमः—यो वै भागिनं भागात् नुदते च यत एवैनं सपदि चैनं न चयतेऽथ पुत्रमथ पौत्रं चयत इति । भागिनं भागार्हं भागान्नुदतेऽपाकरोति स नुन्न एनं नोत्तारं चयते नाशयति । यदि तं न नाशयति तत्पुत्रं पौत्रं वा नाशयतीत्यर्थः ।

नारदः—

विभक्तेनैव यत्प्राप्तं तत्तस्यैव धनं भवेत् ।
हृतं नष्टं च यल्लब्धं प्रागुक्तं च पुनर्भवेत् । इति ॥

प्रागुक्तं दायादमध्ये केनचित्प्रच्छादितं पुनर्भवेद्विभाग इति शेषः ॥

मनुः—

विभागे तु कृते किंचित्सामान्यं यत्तु दृश्यते ।
नासौ विभागो विज्ञेयः कर्त्तव्यः पुनरेव हि । इति ॥

केनचिद्विभागस्यापलापे निर्णायकान्याह याज्ञवल्क्यः—

विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः ।
विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः ॥

यौतकैः पृथक् दत्तैर्गृहक्षेत्रैरिति विशेषणविशेष्यभावः ।

नारदः—

विभागधर्मसंदेहे दायादानां विनिर्णयः ।
ज्ञातिभिर्भागलेख्येन पृथक्कार्यप्रवर्त्तनात् ॥

स एव—

भ्रातॄणामविभक्तानामेको धर्मः प्रवर्त्तते ।
विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक् ॥

अत्राविभक्तानामित्येवोद्देश्यसमर्पकम् । भ्रातॄणामिति तु तद्विशेष-णत्वादविवक्षितम् । तेन पितृपितामहपुत्रपौत्रपितृव्यभ्रातृपुत्रादि-ष्वविभक्तेष्वेक एव धर्मः । अत्र देशकालकर्त्रादीनामैक्ये कर्मणोनेकप्र-योगविषयिणी न्यायेन प्राप्तापि तन्त्रताविभक्तकर्तृभेदेऽपि वचनेन बोध्यते । तेन श्रौतस्मार्त्ताग्निसाध्यास्तावद्धर्मा अविभक्तानां पृथगेव आहवनीयत्वावसथ्यत्वादीनां ससंबन्धिकत्वेन भेदात् । एवं श्राद्धमपि

पितृव्यभ्रातृपुत्रादीनाममावास्यादौ देवताभेदात् पृथगेव । भ्रातॄणां निरग्निकानां तन्त्रेणैव दैवतैक्यात् । प्रवासादिना देशभेदे तु पृथगेव । साग्निकानामग्निसाध्यान्यपि पृथगेव । गृहस्थदेवतापूजावैश्वदेवादि तु तन्त्रेणैव ।

अत एव शाकलः—

एकपाकेन वसतामेकं देवार्चनं गृहे ।
वैश्वदेवं तथैवैकं विभक्तानां गृहे गृहे ॥ इति ।

यत्तु पारिजाते आश्वलायनः—

एकपाकेन वसतां विभक्तानामपि प्रभुः ।
एकस्तु चतुरो यज्ञान्कुर्याद्वाग्यज्ञपूर्वकान् ॥
अविभक्ता विभक्ताश्च पृथक्पाका द्विजातयः ।
कुर्युः पृथक् पृथक् यज्ञान्भोजनात्प्राग्दिने दिने ॥ इति ।

तत्संसृष्टिपरम् । विभक्तानामप्येकपाकेन वसतामित्यनेन विभक्ता अविभक्ताश्चेत्यनेन च तत्प्रतिपादनात् । अतः संसृष्टिनां कदाचित्पृथक्पाके पृथङ्महायज्ञाः । वाग्यज्ञो ब्रह्मयज्ञः । तत्पूर्वकानित्यतद्गुणसंविज्ञानः । तद्गुणसंविज्ञाने तु वाग्यज्ञेत्याद्यनर्थकम् । प्रथमत्यागे कारणाभावादितिन्यायादेव चतुर्णां प्राप्तिसंभवात् । अतो ब्रह्मयज्ञः पृथगेव कार्यः । इदं तु वचनद्वयं शिष्टैस्तथा नाद्रियते । यानि तु धर्मप्रवृत्तौ वचांसि—

अविभक्ताः सुताः पित्रोरेकं कुर्युर्मृताहिकम् ।
देशान्तरे पृथक्कुर्युर्दर्शश्राद्धानुमासिकम् ॥
ग्रामान्तरं व्रजेयुश्चेदविभक्ताः सदैव हि ।
दर्शे च मासिकं श्राद्धं कुर्युः पित्रोः पृथक् पृथक् ॥
अविभक्ताः पृथग्ग्रामाः स्वस्वार्जितधनाशिनः ।
कुर्युस्ते भ्रातरः श्राद्धं पार्वणं च पृथक् पृथक् । इति ॥

यच्च स्मृतिसमुच्चये—

वैश्वदेवः क्षयाहश्च महालयविधिस्तथा ।
देशान्तरे पृथक्कार्यो दर्शश्राद्धं तथैव च ॥ इति ।

तान्यपि देशान्तरस्थसंसृष्टिविषयाणीति केचित्। वस्तुतस्त्वेतानि निर्मूलान्येव। अथवा देशकालकर्त्रादीनामैक्ये न्यायेन प्राप्ता तन्त्रता, कर्तृभेदे तु वाचनिकी, देशभेदे तु वचनस्य न्यायस्य चाभावात्पृथगेव श्राद्धादीतियुक्तिमूलकानि केनचित्कृतानीति दिक्।

अन्यान्यपि विभागलिंगान्याह नारदः—

साक्षित्वं प्रातिभाव्यं तु दानं ग्रहणमेव च।
विभक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम्॥
दानग्रहणपश्वन्नगृहक्षेत्रप्रतिग्रहाः।
विभक्तानां पृथग् ज्ञेया दानधर्मागमव्ययाः॥
येषामेताः क्रिया लोके प्रवर्त्तन्ते स्वरिक्थिषु।
विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण तान्॥ इति।

दानग्रहणे ऋणविषये। ते एव दानग्रहणे द्वितीयश्लोकेऽनूद्येते स्पष्टतार्थम्। पश्वादिप्रतिग्रहा विभक्तानां पृथक् पृथगनुष्ठिता एव स्वत्वोत्पादकाः। अविभक्तानां त्वेकेन कृताः परस्यापि स्वत्वजनका इत्यर्थः। दानधर्मो लेख्यादिः। आगमो मूलकलाप्रवेशादिः। बृहस्पतिः—

पृथगायव्ययाधानं कुसीदं च परस्परम्।
वणिक्पथं च ये कुर्युर्विभक्तास्ते न संशयः॥

वणिक्पथं वाणिज्यम्। याज्ञवल्क्यः—

भ्रातृणामथ दंपत्योः पितुः पुत्रस्य चैव हि।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम्॥

एतल्लिङ्गाभावे तु दिव्यम्, 'एषामन्यतमाभावे दिव्यान्यतममुच्यते' इति तेनैवोक्तत्वात्। यत्तु वृद्धयाज्ञवल्क्यः—

विभागधर्मसंदेहे बन्धुसाक्ष्यभिलेखितैः।
विभागभावना कार्या न भवेद्दैविकी क्रिया॥ इति,

तल्लिङ्गान्तरसद्भावपरम्। कथंचिदपि विभक्ताविभक्तसंदेहानपगमे पुनर्विभागमाह मनुः—

विभागे यत्र संदेहो दायादानां परस्परम्।
पुनर्विभागः कर्त्तव्यः पृथक्स्थानस्थितैरपि॥

विभक्तकृत्यमाह नारदः—

यद्येकजाता बहवः पृथग्धर्माः पृथक्क्रियाः।
पृथक्कर्मगुणोपेता न चेत्कार्येषु संमताः॥
स्वभावाद्यदि दद्युस्ते विक्रीणीयुरथापि वा।
कुर्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य वा। इति॥

धर्मा वैधाः, पञ्चमहायज्ञाद्याः। क्रियाः, वाणिज्याद्या लौकिक्यः। कर्मगुणाः कर्मसाधनानि गृहोपस्करादीनि। एतेषां पार्थक्येन विभागो लक्ष्यते। ते विभक्ताः परस्परानुमतिं विनापि दानविक्रयादि कुर्युरित्यर्थः। यत्तु बृहस्पतिः—

अविभक्ता विभक्ता वा दायादाः स्थावरे समाः।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये। इति॥

तद्द्व्यांशे विभक्तानामप्यविभक्तक्षेत्राद्युत्पन्नसस्यादिदानादावनुमतिं विनाधिकारप्रतिषेधार्थमिति मदनः। विभक्ताविभक्तसंदेहनिरसार्थं विभक्तानुज्ञया व्यवहारसौकर्यार्थमिति विज्ञानेश्वरादयः। स्वेच्छया विभक्तं पुनश्च विवदमानं प्रत्याह स एव—

स्वेच्छाकृतविभागो यः पुनरेव विसंवदेत्।
स राज्ञांशे स्वके स्थाप्यः शासनीयोऽनुबन्धकृत्॥

अनुबन्धो निर्बन्धः।

---

## अथ सप्रतिबन्धदायहरणक्रमः।

तत्र विभक्तस्यासंसृष्टिनो धनग्रहणे क्रममाह याज्ञवल्क्यः—

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।
तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः॥
एषामभावे पूर्वस्य धनभागुत्तरोत्तरः।
स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः॥ इति।

पत्नी पतिव्रता धनहारिणी न व्यभिचारिणी।

पत्नी भर्तुर्धनहरी या स्यादव्यभिचारिणी॥ इति कात्यायनोक्तेः।
विधवा यौवनस्था चेन्नारी भवति कर्कशा।
आयुष्यक्षपणार्थं तु दातव्यं जीवनं तदा। इति हारीतोक्तेः।

प्रजापतिः—

पूर्वं मृता त्वग्निहोत्रं मृते भर्तरि तद्धनम्।
लभेत्पतिव्रता नारी धर्म एष सनातनः॥

अग्निहोत्रमग्नीन्। स एव—

जंगमं स्थावरं वापि कुप्यं हेमरसांबरम्।
आदाय दापयेच्छ्राद्धं मासषाण्मासिकाब्दिकम्॥
पितृव्यगुरुदौहित्रान्भर्तुः स्वस्रीयमातुलान्।
पूजयेत्कव्यपूर्ताभ्यां वृद्धांश्चाप्यतिथीन्स्त्रियः॥ इति।

कुप्यं त्रपुसीसादि। यत्तु बृहस्पतिः—

यद्विभक्ते धनं किंचिदाध्यादि विविधं स्मृतम्।
तज्जाया स्थावरं मुक्त्वा लभेत मृतभर्तृका॥
वृत्तस्थापि कृतेऽप्यंशे न स्त्री स्थावरमर्हति॥ इति।

तद्दुहितृरहितपत्नीपरम्। दुहितृमती तु स्थावरमपि लभत इति स्मृतिचन्द्रिकायाम्। दायादानुमतिं विना स्थावरविक्रयादिनिषेधपरमिति माधवः।

यत्तु कात्यायनः—

मृते भर्तरि भर्त्रंशं लभेत कुलपालिका।
यावज्जीवं न हि स्वाम्यं दानाधमनविक्रये॥ इति।

तद्बन्दिचारणाद्यर्थदानादिनिषेधपरम्। अदृष्टार्थदानतदुपयोग्याधमनादि तु भवत्येव। जंगमं स्थावरं चेत्यादिपूर्वोक्तवाक्यात्,

व्रतोपवासनिरता ब्रह्मचर्ये व्यवस्थिता।
दमदानरता नित्यमपुत्रापि दिवं व्रजेत्॥ इति कातीयाच्च।

यदपि स एव—

अदायकं राजगामि योषिद्भृत्यौर्ध्वदेहिकम्।
अपास्य श्रोत्रियद्रव्यं श्रोत्रियेभ्यस्तदर्पयेत्॥ इति।

यदपि नारदः—

अन्यत्र ब्राह्मणात्किंचिद्राजा धर्मपरायणः।
तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः॥ इति।

तदवरुद्धस्त्रीपरम्। पत्नीपदाश्रवणात्। यत्तु नारदः—

भ्रातॄणामप्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेत वा।
विभजेरन् धनं तस्य शेषास्ते स्त्रीधनं विना॥
भरणं चास्य कुर्वीरन् स्त्रीणामा जीवनक्षयात्।
रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु तु॥ इति।

तदविभक्तसंसृष्टमृतस्त्रीपरम्। तत्प्रक्रमे पाठादिति मदनः।

कात्यायनः—

स्वर्याते स्वामिनि स्त्री तु ग्रासाच्छादनभागिनी।
अविभक्ते धनांशं तु प्राप्नोत्यामरणान्तिकम्॥

अविभक्तपदं संसृष्टस्याप्युपलक्षकम्। तुशब्दो वाशब्दार्थे। तेन पक्षद्वयम्। तत्रान्त्यः पत्नीपर आद्योऽवरुद्धापर इति मदनः। एतद्व्यवस्थामूलं चिन्त्यम्। तात्त्विकीं तु व्यवस्थामाह स एव—

भोक्तुमर्हति क्लृप्तांशं गुरुशुश्रूषणे रता।
न कुर्याद्यदि शुश्रूषां चैलं पिण्डं नियोजयेत्॥ इति।

गुरुः श्वशुरादिः। तदिच्छायामंशभाक्त्वम्। अन्यथा ग्रासाच्छादनमात्रमित्यर्थः। स एव—

अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिनी।
व्यभिचाररता या च स्त्रीधनं न च सार्हति॥

यत्तु—

एवमेव विधिं कुर्याद्योषित्सु पतितास्वपि।
वस्त्रान्नमासां देयं तु वसेयुश्च गृहान्तिके॥ इति।

तद्भर्तृपरमिति ग्रन्थकर्ता। एवं विधिं पतितत्यागरूपम्। शंकितव्यभिचाराया अपि भरणमात्रमेव।

विधवा यौवनस्था चेन्नारी भवति कर्कशा।
आयुषः क्षपणार्थं तु दातव्यं जीवनं तदा। इति हारितोक्तेः।

कर्कशा शंकितव्यभिचारेति मिताक्षरायाम्। तत्सिद्धं संयता पत्नी धनग्राहिणीति। अनेकास्तु ता विभज्य गृह्णीयुः। तस्या अभावे दुहिता।

अत एव मनुः—

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत्॥

दुहितरोऽनेकाश्चेद्विभज्य गृण्हीयुः। तत्रापि काचिदूढा काचिदनूढा चेदनूढैव—

पत्नी भर्तुर्धनहरा या स्यादव्यभिचारिणी।
तदभावे तु दुहिता यद्यनूढा भवेत्तदा। इति कातीयात्।

ऊढा तु काचित्सधना परा निर्धना चेत्सैव लभेत। स्त्रीधनं दुहितृ-

णामप्रत्तानामप्रतिष्ठितानां चेति गौतमोक्तेः । अप्रतिष्ठिता निर्धनाः । स्त्रीपदं पितुरप्युपलक्षकमिति सांप्रदायिकाः । दुहित्रभावे दौहित्रः—

अपुत्रपौत्रसंताने दौहित्रा धनमाप्नुयुः ।
पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रका मताः । इति विष्णूक्तेः ।

दौहित्राभावे पिता । तदभावे माता । तथाच कात्यायनः—

अपुत्रस्यास्य कुलजा पत्नी दुहितरोऽपि वा ।
तदभावे पिता माता भ्राता पुत्राः प्रकीर्तिताः ।

विष्णुश्च—अपुत्रधनं पत्न्यभिगामि । तदभावे दुहितृगामि तदभावे दौहित्रगामि । तदभावे पितृगामि । तदभावे मातृगामि । तदभावे भ्रातृगामि । तदभावे भ्रातृपुत्रगामि । तदभावे सकुल्यगामीति । यत्तु विज्ञानेश्वरः-द्वंद्वापवादके पितरावित्येकशेषे क्रमाप्रतीतावपि तदर्थबोधके विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातादपवाद्यद्वंद्वक्रमानुसारात्पितुः पुत्रान्तरसाधारण्यात् मातुस्त्वसाधारण्याच्चादौ मातुस्तदभावे पितुर्धनग्रहणमूचे तदेतद्वचोविरोधादपास्तं; विग्रहवाक्ये मातृशब्दपूर्वनिपाते एकशेषस्य द्वंद्ववैकल्पिकत्वेन तदपवादत्वे साधारण्यासाधारण्ययोः क्रमनियामकत्वे मानाभावाच्च । मातुरभावे भ्राता सोदरः । तदभावे तत्पुत्रः। यत्तु विज्ञानेश्वरादयः—सोदराभावे भिन्नोदरास्तदभावे सोदरसुता इत्याहुः तन्न । भ्रातृपदस्य सोदरे शक्त्या भिन्नोदरे च गौण्या वृत्तिद्वयविरोधात् । केचित्तु भ्रातर इत्यत्र भ्रातृपुत्रौ स्वसृदुहितृभ्यामित्यनुशासनात् भ्रातरश्च स्वसारश्च भ्रातर इति विरूपैकशेषेण भ्रात्रभावे भगिन्य इत्याहुः । तन्न । विरूपैकशेषे मानाभावात् । भ्रातृपुत्रा अपि पितृव्यमरणकाले जीवत्पितृकतयाऽसंजातधनसंबन्धाश्चेदनेकपितृकाणां तु पितृतो भागकल्पनेतिन्यायेन पित्र्यमंशं पितृव्यान्तरैः सह विभज्य गृह्णीयुः । भ्रातृपुत्राभावे गोत्रजाः सपिण्डाः । तत्राप्यादौ पितामही, मातर्यपि च वृत्तायां पितुर्माता हरेद्धनमिति मनूक्तेः । यद्यपीयं मातुरनन्तरं श्रुता तथापि बद्धक्रमभ्रातृपुत्रान्तेषु मध्ये निवेशायोगादागन्तूनामन्ते निवेश इतिवद्भ्रातृपुत्रान्ते निवेश्या । तदभावे भगिनी,

अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत् । इति मनूक्तेः,
बहवो ज्ञातयो यत्र सकुल्या बान्धवास्तथा ।
यस्त्वासन्नतरस्तेषां सोऽनपत्यधनं हरेत् । इति बृहस्पत्युक्तेः,

तस्या अपि भ्रातृगोत्र उत्पन्नत्वेन गोत्रजत्वाविशेषाच्च । सगोत्रता परं नास्ति । न च सात्र धनग्रहणप्रयोजकत्वेनोक्ता । तदभावे पितामहसपत्नभ्रातरौ विभज्य गृह्णीतः । स्वजनकजनकत्वेन स्वजनकजन्यत्वेन च समानप्रत्यासत्तेः । प्रत्यासत्तिसाम्ये पाठक्रमाद्यणुविशेषान्तराभावे चान्यत्राप्येवमेव । तेन तयोरभावे प्रपितामहपितृव्यभिन्नोदरभ्रातृपुत्राः विभज्य गृह्णीयुः । सर्वसपिण्डाः समानोदकाश्च प्रत्यासत्तिक्रमेण । तांश्चाह मनुः—

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।
समानोदकभावस्तु जन्मनाम्नोरवेदने ॥ इति ।

सप्तमेऽतीते इत्यर्थः । सोदकाभावे बन्धवः । ते च स्मृत्यन्तरे—

आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः ।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥
पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः ।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥
मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥

अत्र क्रमः पाठिक एव ।

ननु पत्न्यादीनां सर्वेषां मृतनिरूपितानामेव धनभाक्त्वं बान्धवानामपि तथैवास्तु । अतः कथं पितुर्मातुश्च बान्धवानां धनसंबन्धः । पितुः पितृष्वसुः पुत्रा इत्यादि तु संज्ञासंज्ञिसंबन्धमात्रार्थं न धनसंबन्धार्थमिति चेत् । उच्यते । विनाप्येतद्वचनं पितृमातुलपितृपितृव्यादिष्विव पितृमातृबान्धवेष्वपि योगेनैव तच्छब्दप्रवृत्तिसंभवे संज्ञासंज्ञिसंबन्धबोधनानर्थक्यापत्तिः । तेन बन्धूनुद्दिश्य धनसंबन्धविधौ पितृमातृबन्धुप्रापणेनैव वचोऽर्थवत्ता । बंधूद्देशेनाशौचादिविधावप्येवमेवेति दिक् । बन्धूनामभाव आचार्यस्तदभावे शिष्यः, पुत्राभावे प्रत्यासन्नः सपिण्डस्तदभाव आचार्यस्तदभावेऽन्तेवासीत्यापस्तंबोक्तेः । शिष्याभावे सहाध्यायी । तदभावे श्रोत्रियः । श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थं भजेरन्निति गौतमोक्तेः । तदभावेऽन्यो ब्राह्मणः,

---

१ श्रीकृष्णतर्कालङ्कारभट्टाचार्यकृतजीमूतवाहनदायभागटीकायां तु मृतपुरुषधनाधिकारक्रम एवं दर्शितः—अत्रायं मृतपुन्धनाधिकारक्रमः । तत्र प्रथमं पुत्रः । तदभावे

सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः ।
त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते ॥

पौत्रः । तदभावे प्रपौत्रः । मृतपितृकपौत्रमृतपितृपितामहकप्रपौत्रयोस्तु पुत्रेण सह युगपदधिकारः । प्रपौत्रपर्यन्ताभावे पत्नी । सा च प्राप्तभर्तृदाया भर्तृकुलं तदभावे पितृकुलं वा समाश्रिता सती शरीररक्षार्थं भर्तृदायं भुञ्जीत । तथा । भर्तुरुपकारार्थं यथाकथंचिद्दानादि किमपि कुर्वीत न तु स्त्रीधनवत्स्वच्छन्दं विनियुञ्जीत । तदभावे दुहिता । तत्र प्रथमं कुमारी । तदभावे वाग्दत्ता । तदभावे चोढा । सा च पुत्रवती संभावितपुत्रा च द्वे युगपदेवाधिकारिण्यौ । वन्ध्या विधवा च पुत्रहीना नाधिकारिणी । ऊढाया अभावे दौहित्रः । तदभावे पिता । तदभावे माता । तदभावे भ्राता । तत्रापि प्रथमं सोदरः । तदभावे वैमात्रेयः । मृतस्य भ्रातृसंसृष्टत्वे तु सोदरभ्रातृविषये प्रथमं संसृष्टसोदर एवाधिकारी तदभावे च असंसृष्ट–सोदरः । एवं वैमात्रेयमात्रविषये प्रथमं संसृष्टवैमात्रेयः । तदभावे चासंसृष्टवैमात्रेयः । यदा तु संसृष्टो वैमात्रेयः सोदरश्चासंसृष्टः तदा तावुभौ तुल्यवदधिकारिणौ । भ्रातॄणामभावे भ्रातुः पुत्रः । तत्रापि प्रथमं सोदरभ्रातृपुत्रः । तदभावे वैमात्रेयभ्रातृपुत्रः । संसर्गे तु सोदरभ्रातृपुत्रमात्रविषये प्रथमं संसृष्टसोदरभ्रातृपुत्रः । तदभावे चासंसृष्टसोदरभ्रातृपुत्रः वैमात्रेयभ्रातृपुत्रमात्रविषये प्रथमं संसृष्टवैमात्रेयभ्रातृपुत्रः । तदभावे चासंसृष्टवैमात्रेयभ्रातृपुत्रः । यदा तु सोदरभ्रातृपुत्रोऽसंसृष्टो वैमात्रेयभ्रातृपुत्रश्च संसृष्टः तदा द्वौ भ्रातृवत्तुल्याधिकारिणौ । भ्रातृपुत्राभावे भ्रातृपौत्रः । तत्रापि भ्रातुः सोदरासोदरक्रमः संसर्गासंसर्गक्रमश्च बोध्यः । तदभावे पितृदौहित्रः । स च सोदरभगिनीपुत्रः । तदभावे वैमात्रेयभगिनीपुत्रश्च । तदभावे पितुः सहोदरः । तदभावे पितुर्वैमात्रेयः । तदभावे पितृसोदरपुत्रपितृवैमात्रेयपुत्रपितृसोदरपौत्रपितृवैमात्रेयपौत्राणां क्रमेणाधिकारः । तदभावे पितामहदौहित्रः । तत्रापि पितृसोदरभगिनीपुत्रः वैमात्रेयभगिनीपुत्रश्च । वक्ष्यमाणप्रपितामहदौहित्राधिकारेऽप्येवम् । तदभावे पितामहः । तदभावे पितामही । तदभावे पितामहसोदरभ्रातृवैमात्रेयभ्रातृतत्पुत्रपौत्रप्रपितामहदौहित्राः क्रमेणाधिकारिणः । एतावत्पर्यन्तानां धनिभोग्यपिण्डदातॄणां त्वभावे धनिदेयपिण्डदातॄणां मातुलादीनामधिकारस्तदभावे धनिमातृष्वस्रीयस्याधिकारः । तदभावे मातुलपुत्रपौत्राणां क्रमेणाधिकारः । तदभावे चाधस्तनसकुल्यानां धनिभोग्यलेपदातॄणां प्रतिप्रणप्तृप्रभृतिपुरुषत्रयाणां क्रमेणाधिकारः । तदभावे पुनरूर्ध्वतनसकुल्यानां धनिदेयलेपदातॄणां वृद्धप्रपितामहादिसन्ततीनामासत्तिक्रमेणाधिकारः । तदभावे समानोदकानामधिकारः । तेषामभावे चाचार्यस्य तदभावे शिष्यस्य तदभावे सहवेदाध्यायिब्रह्मचारिणोऽधिकारः । तदभावे चैकग्रामस्थसगोत्रसमानप्रवरयोः क्रमेणाधिकारः । उक्तपर्यन्तानां सर्वेषां सम्बन्धिनामभावे ब्राह्मणधनवर्जं राजा गृह्णीयात् । ब्राह्मणधनं तु त्रैविद्यादिगुणयुक्ता ब्राह्मणा गृह्णीयुः । एवं वानप्रस्थधनं भ्रातृत्वेनानुमतोऽपरो वान-

इति कातीयात् । नारदश्च—

सर्वत्रादायिकं राजा हरेद्ब्रह्मस्ववर्जितम् ।
आदायिकं तु ब्रह्मस्वं श्रोत्रियेभ्यः प्रदापयेत् ।

बृहस्पतिः—

येऽपुत्राः क्षत्रविट्शूद्राः पत्नीभ्रातृविवर्जिताः ।
तेषां धनहरो राजा सर्वस्यापि पतिर्हि सः ॥

यत्यादिरिक्थे विशेषमाह याज्ञवल्क्यः—

वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः ।
क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः ॥

ब्रह्मचारी नैष्ठिकः । उपकुर्वाणस्य तु पित्रादय एव । धर्मभ्राता प्रतिपन्नो भ्राता । एकतीर्थः एकाश्रमी । धर्मभ्राता चासावेकतीर्थीति कर्मधारयः । आचार्यादीनां प्रातिलोम्येनेति विज्ञानेश्वरः । वनस्थस्य धनमाचार्यो गृह्णीयाच्छिष्यो वेति विष्णूक्तेरनुलोम्येनेति मदनः । मृतस्य रिक्थग्राहिणा येन केनापि राजपर्यन्तेनौर्ध्वदेहिकं दशाहान्तं कार्यम् । तथाच विष्णुः—यश्चार्थहरः स पिण्डदायी स्मृत इति । निरूपितं चेदं श्राद्धमयूखेऽधिकारिनिर्णये मया ।

---

## अथ संसृष्टिनिर्णयः ।

तत्र संसर्गमाह बृहस्पतिः—

विभक्तो यः पुनः पित्रा भ्रात्रा वैकत्र संस्थितः ।
पितृव्येणाथ वा प्रीत्या स तत्संसृष्ट उच्यते ॥

अत्र पितृभ्रातृपितृव्यैरेव सह संसृष्टता नान्येन वचनेनुपादाना-दिति मिताक्षरादिषु । विभागकर्तृसामानाधिकरण्येनैव सेति युक्तम् । पित्रादिपदानि तु विभागकर्तृमात्रलक्षकाणि अर्द्धमन्तर्वेदिमिनोत्यर्द्धं बहिर्वेदीतिवत् । अन्यथा वाक्यभेदात् । तेन पत्नीपितामहभ्रातृपौत्र-पितृव्यपुत्रादिभिरपि सह संसृष्टता भवति । विभक्तो यः एकत्र स्थितः स संसृष्ट इति सामानाधिकरण्याद्विभक्तभ्रात्रोः पुत्रादीनां न संसर्गः । विद्यमानं भावि वा धनमावयोः पुनर्विभागावधिसाधारणमित्याकारिका

---

प्रस्थ एकतीर्थसेवी गृह्णीयात् । तथा यतिधनं सच्छिष्यः नैष्ठिकब्रह्मचारिणो धनमाचार्यः उपकुर्वाणस्य तु ब्रह्मचारिणो धनं पित्रादिर्गृह्णीयादितिसङ्क्षेपः ॥ ( मंडलीक० )

वुद्धिरिच्छा वा संसर्गः। तत्र संसृष्टिनां पुनर्विभागे विशेषमाह मनुः—

संसृष्टाः सह जीवन्तो विभजेरन्पुनर्यदि ।
समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते ॥

अत्र समस्तत्र विभागः स्यादित्यनेनैव वैषम्ये निरस्ते पुनर्ज्यैष्ठ्यप्रतिषेधो ज्यैष्ठ्यकृतमेव वैषम्यं नास्ति । संसर्गकालीनद्रव्यन्यूनाधिक्यकृतं तु विभागे वैषम्यमस्त्येवेतिज्ञापनार्थमिति केचित् । ज्यैष्ठ्यमित्यादेरर्थवादमात्रत्वात् द्रव्यन्यूनाधिक्येऽपि सम एव भागः । आचारोऽप्येवम् । तेनाचारमूलकत्वेऽस्य वचसः संभवति तद्विरुद्धश्रुतिकल्पनमन्याय्यम् । व्यवहारशास्त्रस्य व्याकरणवत्प्रायेणाचारमूलकत्वाच्चेति तु परे ।

बृहस्पतिः—

संसृष्टिनां तु यः कश्चिद्विद्याशौर्यधनादिभिः ।
प्राप्नोति तस्य दातव्यो द्व्यंशः शेषाः समांशिनः ॥

अर्जकस्य द्वौ भागावित्यनेनैव भागद्वयसिद्धावसंसृष्टविभागे पितृद्रव्याविरोधेनैवार्जने भागद्वयं संसृष्टिभागे तु संसृष्टधनविरोधेनाप्यर्जने भागद्वयमित्यर्थवदेतद्वचनमिति मदनः। संसृष्टिधनहरणाधिकारिणमाह,

याज्ञवल्क्यः—संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ।

पत्नी दुहितर इत्यादेरपवादोऽयं तेनायमर्थः—संसृष्टिधनहरणाधिकारितावच्छेदकं न पत्नीत्वादि किंतु संसृष्टित्वमिति । यत्तु विज्ञानेश्वरमदनादयोऽपवादस्योत्सर्गसमानविषयत्वनियमात्पूर्वोक्तस्वर्यातस्यापुत्रस्येत्येतत्पदानुषङ्गाच्चैतदपि पुत्रपौत्रप्रपौत्रहीनविषयमतस्तादृशमृतसंसृष्टिसन्निहितपत्न्यादिसद्भावेऽप्यन्यः संसृष्टचेत्र गृह्णीयादिति, तच्चिन्त्यम्, तेन विनापि गतौ संभवन्त्यामनुषङ्गे मानाभावात् । समानविषयत्वं तु न सर्वांशेऽपेक्षितं, किंतु यथाकथंचिन्मृतसपिण्डविषयतया । अपुत्रस्येति पदस्यानुषङ्गाभावे स्वर्यातस्येत्यस्याप्यनुषङ्गाभावेन मृतस्येति न लभ्येतेति चेन्न, ह्रीयेतांशप्रदानतः म्रियेतान्यतरो वापीति वक्ष्यमाणमनूत्त्या तल्लाभात् । अनुषङ्गे तु पित्रा सह संसृष्टासंसृष्टिनोः पुत्रयोः पुत्रपौत्रयोर्वा तुल्यांशापत्तिः। स्वपुत्रंप्रत्येतद्वचनाप्रवृत्तेः, तत्र च व्यवहारशास्त्रप्रामाण्यनिदानव्यवहारविरोधः । नन्वनुपङ्गाभावे सपुत्रं प्रत्यप्येतद्वचनप्रवृत्तेरसंसृष्टिपुत्रसंसृष्टिभ्रात्रादीनां समवाये भ्रात्रादिरेव लभते न पुत्रादिरिति चेन्न। उत्तरार्धव्याख्यायां परिहरिष्यमाणत्वात्। अमुं

प्रथमपादार्थमपवदति सोदरस्येति। संसृष्टिनः संसृष्टीत्यनुषज्यते। मृतसंसृष्टिनो धनं संसृष्टिनोः सोदरासोदरयोः समवाये सोदर एव संसृष्टी गृह्णीयादित्यर्थः। उत्तरार्धे 'दद्याच्चापहरेच्चांशं जातस्य च मृतस्य च' इति मृतसंसृष्टिनो द्रव्यविभागकाले तत्पत्न्यामस्पष्टगर्भायां पश्चादुत्पन्नस्य पुत्रस्यांशं तस्मै संसृष्टः पितृव्यादिर्दद्यात्तदसत्त्वे तु स्वयमेवांशं हरेदित्यर्थः। अत्र पुत्रत्वमात्रं पित्रंशग्रहणाधिकारितावच्छेदकं न विभागोत्तरोत्पन्नत्वमप्रयोजकत्वाद्गौरवाद्देशान्तरे विभागात्प्रागुत्पन्नेऽज्ञाते चांशानधिकारितापत्तेः। अतः पूर्वोत्पन्नायासंसृष्टिनेऽपि पुत्राय संसृष्टयपि पितृव्यादिस्तदंशं दद्यादेव। असंसृष्टिसोदरसंसृष्टिभिन्नोदरयोर्विभज्य धनग्रहणमाह स एव—

अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत्।<br>असंसृष्टयपि चादद्यात्संसृष्टो नान्यमातृजः॥ इति।

अत्रान्योदर्यान्यमातृजादिपदैर्न सापत्नो भ्रातैवोच्यते किंतु पितृव्यादिरपि योगाविशेषात्। अन्यथा पितृव्यादिभिः संसर्गप्रतिपादनस्यानर्थक्यापत्तिः। संसृष्टिताप्रयुक्तकार्यान्तराभावात्। असंसृष्टयपीति देहलीदीपवत्पूर्वोत्तरपादाभ्यामन्वेति। संसृष्टपदं चावृत्त्या द्रव्यसंसर्गवत उदरसंसर्गवतश्च सोदरस्य बोधकम्। आद्येर्थेऽपिशब्दोऽपि तदनन्तरं बोध्यः। श्लोकान्ते एवकारोऽध्याहार्यः। तदेते वाक्यार्थाः। अन्योदर्यो भिन्नोदरः पत्नीपितृपितामहसपत्नभ्रातृपितृव्यादिस्संसृष्टी चेद्धनं हरेत्। असंसृष्टयप्यन्योदर्यो नेति। तेनान्योदरस्यान्वयव्यतिरेकाभ्यां संसर्गो धनग्रहणे कारणमुक्तम्। असंसृष्टयपि संसृष्टयाख्यः सोदरो गृह्णीयात्। अनेन सोदरत्वमात्रमेव कारणत्वमुक्तम्। संसृष्टो द्रव्यसंसर्गवान् अन्यमातृज एव केवलं न गृह्णीयात् इति। तेनैकः संसृष्टत्वेन परः सोदरत्वेनेति द्वावपि विभज्य गृह्णीयातामिति निगर्वः। असंसृष्टिसोदरपुत्रे संसृष्टयसोदरपुत्रे चायमेव पन्थाः। एवमेवार्थं संसृष्टयधिकारे स्पष्टयति मनुः—

येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः।<br>म्रियेतान्यतरो वापि तस्य भागो न लुप्यते॥<br>सोदर्या विभजेयुस्ते समेत्य सहिताः समम्।<br>भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः॥ इति।

हीयेताश्रमान्तरगतपातित्यादिना । सोदर्या भ्रातर इत्यन्वयः । ये च संसृष्टाः पत्नीपितृपितामहसपत्नभ्रातृपितृव्यादयः । अत्र विशेषमाह प्रजापतिः—

अन्तर्धनं तु यत्किंचित्संसृष्टानां तु तद्भवेत् ।
भूमिं गृहं त्वसंसृष्टाः प्रगृह्णीयुर्यथांशतः ॥

अन्तर्धनं भूनिक्षेपादिना गोपितुं शक्यं सुवर्णरूप्यादि संसृष्टो भिन्नोदरो गृह्णीयात् । भुवं तु सोदरभ्रातरः । गवाश्वादि तु सोदराऽसोदर इत्यर्थः । भिन्नोदरः संसृष्टयेव गृहाश्वाद्यपीति मदनः । तदेतद्वचनानारूढम् । अन्तर्धनभूमिगवाद्यन्यतरमात्रसत्वे त्वसंसृष्टोऽपि सोदर एवेति स्मृतिचन्द्रिकायाम् । तत्र मानं चिन्त्यम् । सोदरेष्वपि केचित्संसृष्टिनः परे तु न तत्रापि संसृष्टिन एव गृह्णीयुः सोदरत्वसंसृष्टित्वकारणद्वयसद्भावात् । अत एव गौतमः—संसृष्टिनि प्रेते संसृष्टो रिक्थभागिति ।

बृहस्पतिः—

संसृष्टौ यौ पुनः प्रीत्या तौ परस्परभागिनौ ॥ इति ।

अत्रायं निर्गलितोऽर्थः—पुत्रः पित्रा संसृष्टोऽसंसृष्टो वा कृत्स्नं पित्र्यमंशं गृह्णीयात् । पुत्रत्वस्यैवांशग्रहणाधिकारितावच्छेदकत्वात् । पुत्रेष्वप्येकः संसृष्टः परो न चेत्संसृष्ट एव । संसृष्टिनस्तु संसृष्टीत्युक्तेः । संसृष्टपुत्रापुत्रसमवाये पुत्र एव । दद्याचापहरेचांशमित्यत्र व्याख्यातत्वात् पुत्रभिन्नसंसृष्टपितृभ्रातृपितृव्यादीनां समवाये पितरावेव तत्राप्यादौ माता ततः पितेति मदनः । भ्रातृपितृव्यादयस्तु विभज्यैव गृह्णीयुः । सर्वेषु संसृष्टत्वरूपग्रहणाधिकारितावच्छेदकसद्भावात् । असंसृष्टभ्रातुः संसृष्टपितृव्यसपत्नभ्रात्रादीनां च समवायेऽपि विभज्यैव । असंसृष्ट्यपि चादद्यात्संसृष्टो नान्यमातृज इत्युक्तेः । केवलायाः पत्न्या एव संसृष्टत्वे सैव गृह्णीयात् । संसृष्टिनस्तु संसृष्टीत्युक्तेः । संसृष्टयापि तया सहान्येषां संसृष्टिनां समवाये त एव न सा । तथाच संसृष्टिप्रक्रमे शंखनारदौ—

भ्रातृणामप्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेत वा ।
विभजेरन्धनं तस्य शेषास्ते स्त्रीधनं विना ॥
भरणं चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात् ।
रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु तु ॥

या तस्य दुहिता तस्याः पित्र्यंशाद्भरणं मतम् ।
आ संस्काराद्भरेद्भागं परतो बिभृयात्पतिः ॥

अत्र यथा यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्स त्रेधा तण्डुलान्विभजेदित्यत्र हविरभ्युदियादित्यनेनैव हविःप्रत्यवगमान्निर्वापाविवक्षा तथा प्रक्रमादेव मरणप्रव्रज्याविभागादिषु संसृष्टिनां कर्तृत्वावगमाद्भ्रातृणामित्यविवक्षितम् । यत्तु संसृष्टिप्रक्रमे शंखः—स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा पत्नीति तद्येन पितृव्यभ्रातृपुत्रसपत्नभ्रात्रा सह संसर्गस्तन्मरणोत्तरं संसृष्टिमरणे तदीयासंसृष्टिभ्रात्रादीनां क्रमनियमार्थमिति मदनः । तत्राप्यादौ माता ततः पितेत्यपि स एव । ज्येष्ठा संयता पत्न्यभावे भगिनी । तथा च गुरुः—

या तस्य भगिनी सा तु ततोंशं लब्धुमर्हति ।
अनपत्यस्य धर्मोऽयमभार्यापितृकस्य च ॥

केचित्तु या तस्य दुहितेति पेठुः । दुहितृभगिन्योरभावेऽनन्तरः सपिण्डः ।

---

## अथ स्त्रीधनम् ।

मनुः—

अध्यग्न्यध्यावहनिकं दत्तं च प्रीतिकर्मणि ।
भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥

षडिति न्यूनसंख्याव्यवच्छेदार्थम्, तेन,

पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् ।
आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्तितम् ।

इति याज्ञवल्कीयमादिपदं संगच्छते । विष्णुश्चाधिकमाह—

पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतम् ।
आधिवेदनिकं बंधुदत्तं शुल्कान्वधायकम् । इति ॥

अध्यग्न्यादीन्याह कात्यायनः—

विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसंनिधौ ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्तितम् ॥
यत्पुनर्लभते नारी नीयमाना पितुर्गृहात् ।

अध्यावहनिकं नाम स्त्रीधनं तदुदाहृतम् ॥
प्रीत्या दत्तं तु यत्किंचिच्छ्वश्र्वा वा श्वशुरेण वा ।
पादवन्दनिकं चैव प्रीतिदत्तं तदुच्यते ॥
विवाहात्परतो यत्तु लब्धं भर्तृकुलात्स्त्रिया ।
अन्वाधेयं तु तत्प्रोक्तं यल्लब्धं स्वकुलात्तथा ॥
गृहोपस्करवाह्यानां दोह्याभरणकर्मणाम् ।
मूल्यं लब्धं तु यत्किंचिच्छुल्कं तत्परिकीर्तितम् ॥

गृहोपस्कराद्यलाभे तन्मूल्यं कन्यादानकाले कन्यायै दत्तं तच्छुल्कमित्यर्थः । आधिवेदनिकं विवृणोति याज्ञवल्क्यः—

अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम् ।
न दत्तं स्त्रीधनं यासां दत्ते त्वर्द्धं प्रकल्पयेत् ॥

अर्धमिति यावताधिवेदनिकद्रव्यसमं भवति तावदित्यर्थः । देवलः—

भर्त्रा प्रतिश्रुतं देयमृणवत्स्त्रीधनं सुतैः ।

प्रतिश्रुतं स्त्रियै । स्त्रीभ्यो धनदाने विशेषमाह
कात्यायनः—

पितृमातृपितृभ्रातृज्ञातिभिः स्त्रीधनं स्त्रियै ।
यथाशक्त्या द्विसाहस्राद्दातव्यं स्थावरादृते ॥

स्थावरातिरिक्तं सहस्रद्वयपणावधि देयमिति मदनः ।
व्यासोऽपि—

द्विसाहस्रः परो दायः स्त्रिया देयो धनस्य च ।

इदं च द्विसाहस्रावधिकं दानं प्रतिवर्षम् । अनेकवर्षेषु इतोऽधिकमपि, शक्तौ स्थावरमपि च देयमित्यपि स एव । दायादवञ्चनेन दत्ते द्रव्ये धारणमात्रार्थं दत्ते च भूषणादौ स्त्रीस्वत्वं नास्तीत्याह, कात्यायनः—

तत्र सोपधि यद्दत्तं यच्च योगवशेन वा ।
पित्रा भ्रात्राथ पत्या वा न च स्त्रीधनमुच्यते ॥

शिल्पप्राप्ते पित्रादिभिन्नसख्यादिप्राप्तेऽपि स्त्रीधनत्वं नास्तीत्याह स एव—

प्राप्तं शिल्पैस्तु यत्किंचित्प्रीत्या चैव यदन्यतः ।
भर्तुः स्वाम्यं तदा तत्र शेषं तु स्त्रीधनं स्मृतम् ॥

यत्तु—

भार्या पुत्रश्च दासश्च निर्धनाः सर्व एव ते ।
यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥ इति ।

तदपि शिल्पाद्यर्जितधनपरम् । आधिवेदनिकादिष्वप्यस्वातन्त्र्यपरमिति तु युक्तम् । अत एव मनुः—

न निर्हारं स्त्रियः कुर्युः कुटुंबाद्बहुमध्यगात् ।
स्वकादपि च वित्ताद्धि स्वस्य भर्तुरनाज्ञया ॥ इति ।

निर्हारो व्ययः । कस्मिंश्चिद्धने स्वातन्त्र्यमाह कात्यायनः—

ऊढया कन्यया सार्द्धं पत्युः पितृगृहेऽपि वा ।
भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥
सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते ।
यस्मात्तदानृशंस्यार्थं तैर्दत्तमुपजीवनम् ॥
सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्तितम् ।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥

भर्तृदत्ते स्थावरे तु न स्वातन्त्र्यम्—

भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत् ।
सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते ॥ इति नारदोक्तेः

भर्त्रादीनां स्त्रीधने स्वातन्त्र्याभावमाह स एव—

न भर्ता नैव च सुतो न पिता भ्रातरो न च ।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः ॥
यदि त्वेकतरो ह्येषां स्त्रीधनं भक्षयेद्बलात् ।
सवृद्धिकं स दाप्यः स्याद्दण्डं चैव समाप्नुयात् ॥
तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्वकम् ।
मूलमेव स दाप्यः स्याद्यदा स धनवान् भवेत् ॥

मनुः—

जीवन्तीनां तु तासां ये तद्धरेयुः स्वबान्धवाः ।
ताञ्छिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः ॥
पत्यौ जीवति यः स्त्रीभिरलंकारो धृतो भवेत् ।
न तं भजेरन्दायादा भजमानाः पतन्ति ते ॥ इति ।

धृतो भर्त्रादिना तस्यै दत्तः स तया धृत इत्यर्थः । देवलः—

वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत् ।
भोक्त्री च स्वयमेवेदं पतिर्नार्हत्यनापदि ॥
वृथा मोक्षे च भोगे च स्त्रियै दद्यात्सवृद्धिकम् ।
पुत्रार्तिहरणे वापि स्त्रीधनं भोक्तुमर्हति ।

वृत्तिर्जीवनार्थं पित्रादिदत्तं धनम् । लाभो वृद्धिः । मोक्षस्त्यागो दानमिति यावत् । पुत्रपदं कुटुम्बोपलक्षकम् । याज्ञवल्क्यः—

दुर्भिक्षे धर्मकार्ये च व्याधौ संप्रतिरोधके ।
गृहीतं स्त्रीधनं भर्त्रा नाकामो दातुमर्हति ॥

अत्र भर्तृग्रहणात्तद्भिन्नेन दुर्भिक्षाद्यापद्यपि स्त्रीधनं न ग्राह्यमित्युक्तम्, धर्मकार्यमावश्यकम् । संप्रतिरोधके बन्धने । क्वचिदकामो दद्यादित्याह देवलः—

अथ चेत्स द्विभार्यः स्यान्न च तां भजते पुनः ।
प्रीत्या निसृष्टमपि च पतिर्दाप्यश्च तद्बलात् ॥
ग्रासाच्छादनवासानामाच्छेदो यत्र योषितः ।
तत्र स्वमाददीत स्त्री विभागं रिक्थिनस्तदा ॥

रिक्थिनः सकाशादित्यर्थः । इदं च साध्वीपरम् । दुष्टा तु न विभागमर्हति । तथा च स एव—

अपकारक्रियायुक्ता निर्मर्यादार्थनाशिका ।
व्यभिचाररता या च स्त्रीधनं न च सार्हति ॥

स एव—

यज्ञार्थं द्रव्यमुत्पन्नं तस्माद्द्रव्यं नियोजयेत् ।
स्थानेषु धर्मयुक्तेषु न स्त्रीमूर्खविधर्मिषु ॥

स्त्रीमरणोत्तरमन्वाधेयाख्यतद्धनग्रहण अधिकारिव्यवस्थामाह मनुः—

अन्वाधेयं च यद्दत्तं पत्या प्रीतेन चैव यत् ।
पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनं भवेत् ॥

प्रजां विशिनष्टि स एव—

जनन्यां संस्थितायां तु समं सर्वे सहोदराः ।
भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः ॥

यत्र दुहित्राद्यभावेन पुत्राणामेव साहित्येनाधिकारः प्राप्तस्तत्र तत्साहित्यम्, यत्र तु कन्यानामेवाधिकारः प्राप्तस्तत्र तत्साहित्यमनूद्यते ।

नतु कन्यापुत्रयोः परस्परमप्राप्तं साहित्यं विधीयत इतिमिताक्षराशयः। परे तु अन्वाधेयभर्तृप्रीतिदत्तविषये कन्यापुत्रयोरपूर्वं साहित्यं विधीयत इत्याहुः।

भगिनीषु विशेषमाह मनुः—

स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी।
अप्रत्ता चेत्समूढा तु लभते मानमात्रकम्॥

तदंशिनी पुत्रसमांशिनी। अप्रत्ता अविवाहिता। तस्याः सत्वे ऊढा मानमात्रं किंचिन्मात्रं लभते इत्यर्थः। अप्रत्ताभावे सधवानां भ्रातृसमोंऽशः। 'भगिन्यो बान्धवैः सार्द्धं विभजेरन्सभर्तृकाः' इति कात्यायनोक्तेः। दौहित्रीभ्योऽपि किंचिद्देयम्—

यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः।
मातामह्या धनात्किंचित्प्रदेयं प्रीतिपूर्वकम्॥ इति मनूक्तेः।

यौतकं त्वनूढानामेव न पुत्राणाम्। तथाच स एव—

मातुस्तु यौतकं यत्स्यात्कुमारीभाग एव सः।

यौतकं विवाहादिकाले पत्या सहैकासने प्राप्तं युतयोर्यौतकमिति निघण्टूक्तेरिति मदनः। अन्वाधेयभर्तृप्रीतिदत्तभिन्ने पूर्वोक्तपारिभाषिके स्त्रीधने तु विशेषमाह गौतमः—स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां चेति। अप्रतिष्ठिता निर्द्धनाः। ब्राह्मणीकन्या तु सपत्नमातुरपि धनं गृह्णीयादित्याह मनुः—

स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथंचन।
ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत्॥

वाकारश्चार्थे, तेन विभज्येति लभ्यते। ब्राह्मणीपदं समोत्तमजातिकन्योपलक्षकमिति केचित्, मानं तु तत्र चिन्त्यम्।

दुहितॄणामभावे दुहितृसंततिः।'मातुर्दुहितरोऽभावे दुहितॄणां तदन्वय' इति नारदोक्तेः। भिन्नमातृकाणां दुहितॄणां दौहित्राणां च अनेकपितृकाणां तु पितृतो भागकल्पनेति न्यायेनांशकल्पना। यत्तु याज्ञवल्क्यः—मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेन्वय इति। तत्राप्यन्वयपदं कन्यासंततिपरमिति केचित्। परे तु दुहित्रभावे पुत्रा एव गृह्णीयुः नारदीये तच्छब्देन मातुरेव परामर्शादित्याहुः। आचारसंवादी चायं पक्षः। शेषमृणादिति ऋणसमं तन्न्यूनं वा पुत्रा एव गृह्णीयुरिति सांप्र-

दायिकाः। दुहित्रादीनामभावे पुत्रपौत्राद्या गृह्णीयुः। 'दुहितृणामभावे तु रिक्थं पुत्रेषु तद्धनम्' इति कात्यायनोक्तेः।

अयं दुहित्रादीनां मातृधनाधिकारः अध्यग्न्यध्याहवनिकमित्यादिपूर्वोक्तपारिभाषिकस्त्रीधन एव। मातृस्वामिकधनमात्रपरत्वे परिभाषावैयर्थ्यं तेन स्त्रीधनं स्यादपत्यानां स्त्रीधनं दुहितृणामित्यादीनि पूर्वोक्तानि स्त्रीधनपदवन्ति बृहस्पतिगौतमादिवचनानि पारिभाषिकपराण्येव। यानि तु स्त्रीधनपदाभावेऽप्येकार्थकानि भजेरन्मातृकं रिक्थमित्यादीनि तान्यप्येतत्पराण्येव। एकमूलकल्पनालाघवात्। यत्तु विभजेरन्सुताः पित्रोरूर्द्ध्वं रिक्थमृणं सममिति याज्ञवल्क्योक्तं तत्पारिभाषिकातिरिक्तविभागकर्त्तनादिलब्धपरम्। तेन पारिभाषिकातिरिक्तं मातृधनं दुहितृसत्वे च पुत्रादय एव लभेरन्। उभयविधसंतत्यभावे तु पारिभाषिकस्त्रीधनं प्रकृत्य विशेषमाह याज्ञवल्क्यः—

अतीतायामप्रजसि बान्धवास्तदवाप्नुयुः।

विवाहभेदेन बान्धवव्यवस्थामाह स एव—

अप्रजःस्त्रीधनं भर्तुर्ब्राह्मादिषु चतुर्ष्वपि।
दुहितॄणां प्रसूता चेच्छेषेषु पितृगामि तत्॥

भर्तुरभावे तत्कुले तस्याः प्रत्यासन्नो लभते पित्रभावे च पितृकुले तस्याः प्रत्यासन्नः। अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेदिति मनुना मृतनिरूपितायां एव प्रत्यासत्तेर्धनाधिकारितावच्छेदकत्वेनाभिधानात्।

यत्तु मिताक्षरायां भर्त्रभावे तत्प्रत्यासन्नानां सपिण्डानां पित्रभावे च तत्प्रत्यासन्नानां सपिण्डानामिति, तत्रापि तेनास्याः प्रत्यासन्नास्तत्प्रत्यासन्नास्तद्द्वारा तत्कुले प्रत्यासन्ना इति यावदित्येवं व्याख्येयम्। ब्राह्मादिषु चतुर्ष्वपीति विप्रपरम्। तेषामेव तं प्रति धर्म्यत्त्वात्। यस्य तु क्षत्रियादेर्गान्धर्वोऽपि धर्म्यस्तस्य तदूढाधनमपि भर्तुरेव,

तथा च मनुः—

ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम्।
अतीतायामप्रजसि भर्तुरेव तदिष्यते॥
यत्वस्यै स्याद्धनं दत्तं विवाहेष्वासुरादिषु।
अतीतायामप्रजसि मातापित्रोस्तदिष्यते॥

ब्राह्मादिषु विवाहेषु भर्तुरभावे आसुरादिषु च पित्रोरभावे पारिभाषिकस्त्रीधनेऽधिकारिण आह,

बृहस्पतिः—

मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा।
श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः॥
यदासामौरसो न स्यात्सुतो दौहित्र एव वा।
तत्सुतो वा धनं तासां स्वस्त्रीयाद्याः समाप्नुयुः॥

दुहितृदौहित्र्योरप्यभावोऽत्र बोध्यः। तदभाव एवौरसदौहित्रयोरधिकारात्।

आसुरादिविवाहेषु बन्धुदत्तेषु कात्यायनः—

बन्धुदत्तं तु बन्धूनामभावे पुत्रगामि तत्।

शुल्कविषये तु गौतमः—भगिनीशुल्कं च सोदर्याणामूर्ध्वं मातुरिति।

यत्तु शंखः—

शुल्कं च स्वयं वोढेति तद्विवाहात्प्राङ्मृतायां बोध्यम्।

अत्र विशेषमाह याज्ञवल्क्यः—

मृतायां दत्तमादद्यात्परिशोध्योभयव्ययम्।

एवं दत्तं शुल्कं मृतायां कन्यायां स्वस्य तस्याः पितुश्च व्ययादवशिष्टं भर्ता गृह्णीयादित्यर्थः।

कचिद्विशेषमाह बौधायनः—

रिक्थं मृतायाः कन्याया गृह्णीयुः सोदराः समम्।
तदभावे तु तन्मातुस्तदभावे पितुर्भवेत्॥ इति।

इदं तु विवाहात्प्राक् मृतायां वाग्दानकालीनमातामहादिदत्तालंकारादिविषयमिति सांप्रदायिकाः।

---

## अथानंशाः।

याज्ञवल्क्यः—

क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः।
अन्धोऽचिकित्स्यरोगश्च भर्तव्याः स्युर्निरंशकाः॥

तज्जः पतितोत्पन्नः। विभागोत्तरमौषधादिना पुंस्त्वादियुक्तास्त्वंशं लभन्त एव विभक्तोत्पन्नवत्।

मनुः—

अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा ।
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥

निरिन्द्रिया घ्राणादिरहिताः ।

नारदः—

पितृद्विट् पतितः षण्ढो यश्च स्यादपयात्रितः ।
औरसा अपि नैवांशं लभेरन् क्षेत्रजाः कुतः ॥
दीर्घतीव्रामयग्रस्ता ये जडोन्मत्तपङ्गवः ।
भर्तव्याः स्युः कुलस्यैते तत्पुत्रास्त्वंशभागिनः ॥

अपयात्रितः राजद्रोहाद्यपराधेन बंधुभिर्घटस्फोटादिना बहिष्कृत इति मदनः। व्यवसायार्थं समुद्रमध्ये द्वीपान्तरेगतइति तु युक्तम्, द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रह इति तस्य कलौ संसर्गनिषेधात् । राजद्रोहादौ घटस्फोटबहिष्कारयोरविधानाच्च । शंखलिखितौ—अपयात्रिते रिक्थपिंडोदकादीनि व्यावर्त्तन्त इति । वसिष्ठः—अनंशास्त्वाश्रमान्तरं गता इति नैष्ठिकब्रह्मचारिवानप्रस्थयतयः ।

कात्यायनः—

अक्रमोढासुतश्चैव सगोत्राद्यश्च जायते ।
प्रव्रज्यावसितश्चैव न रिक्थं तेषु कर्हिचित् ।

सगोत्रादिति सगोत्रेणोढायां तस्यां जात इत्यर्थः । अक्रमोढासुतः क्षेत्रजकानीनादिरिति केचित्। ज्येष्ठायां कन्यायामपरिणीतायां कनिष्ठा कृतविवाहा चेत्तदा ते द्वे अपि अक्रमोढाशब्देनोच्येते इति तु युक्तम् ।

तस्य पितृसवर्णत्वेंऽशभाक्त्वमाह स एव—

अक्रमोढासुतो रिक्थी सवर्णश्च यदा पितुः ।
असवर्णाप्रसूतश्च क्रमोढायां च यो भवेत् ।

प्रतिलोमप्रसूतायां भर्त्राप्युत्पन्नः पुत्रो नांशभाक् ।

तथाच स एव—

प्रतिलोमप्रसूतायास्तस्याः पुत्रो न रिक्थभाक् ।
ग्रासाच्छादनमत्यन्तं देयं तद्बन्धुभिर्मतम् ॥ इति ।

गुणवत्पुत्रान्तरसत्वे दुर्वृत्तस्यांशानर्हतामाह मनुः—

सर्व एव विकर्मस्था नार्हन्ति भ्रातरो धनमिति ।

बृहस्पतिः—

सवर्णजोऽप्यगुणवान् नार्हः स्यात्पैतृके धने ।
तत्पिण्डदाः श्रोत्रिया ये तेषां तत्तु विधीयते ॥
उत्तमर्णाधमर्णेभ्यः पितरं त्रायते सुतः ।
अतस्तु विपरीतेन तेन नास्ति प्रयोजनम् ॥

एते चानंशा रिक्थग्राहिभिर्यावज्जीवं पोषणीयाः ।

सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिभिः ॥
ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत् ॥ इति मनूक्तेः ।

अत्यन्तं यावज्जीवं, भर्तव्यास्ते निरंशका इति पूर्वोक्तयाज्ञवल्क्योक्तेश्च । आश्रमान्तरगतपतितपुत्रास्तु न भर्तव्याः ।

तथा च वसिष्ठः—

अनंशास्त्वाश्रमान्तरगताः क्लीबोन्मत्तव्याधिताश्च ।

भरणं क्लीबोन्मत्तानामिति । अत्र द्वयोर्भरणश्रवणे इतरयोः परिसंख्यार्थम् । देवलः—

मृते पितरि न क्लीबकुष्ठ्युन्मत्तजडान्धकाः ।
पतितस्तदपत्यं च लिङ्गी दायांशभागिनः ॥
तेषां पतितवर्जेभ्यो भक्तवस्त्रं प्रदीयते ।

लिङ्गी निषिद्धलिङ्गधारी । बौधायनः—

अतीतव्यवहारान् ग्रासाच्छादनैर्बिभृयुरन्धजडक्लीबव्यसनिव्याधितांश्चाकर्मिणः पतिततज्जवर्जमिति । सन्यासच्युततत्पुत्रा अपि न भरणीया इति मदनादयः । अनंशपुत्रास्तु निर्दोषा भागं लभन्त एव । तेषामेवौरसाः पुत्रा भागहारिणो न तु पतितस्य पतनीये कर्मणि कृते अनन्तरोत्पन्नाः प्रतिलोमासु स्त्रीषूत्पन्नाश्चाभागिनस्तत्पुत्राः इतिविष्णूक्तेः । औरसाः क्षेत्रजास्तेषां निर्दोषा भागहारिण इति याज्ञवल्क्योक्तेश्च । तत्कन्यासु पत्नीषु च विशेषमाह स एव—

सुताश्चैषां प्रभर्तव्या यावद्वै भर्तृसात्कृताः ।
अपुत्रा योषितश्चैषां भर्तव्याः साधुवृत्तयः ॥
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ।

व्यभिचारे बहिर्निष्कासनमपोषणं वा, प्रातिकूल्ये बहिर्निष्कासनमेव, भरणं तु कार्यमेवेति मदनादयः ।

इति दायभागः ।

---

## अथ ऋणादानम् ।

तत्र धनिकस्य प्रयोगप्रकारमाह बृहस्पतिः—

परिपूर्णं गृहीत्वाधिं बन्धं वा साधुलग्नकम् ।
लेख्यारूढं साक्षिमद्वा ऋणं दद्याद्धनी सदा ॥

यावत्तावकमृणं न शोध्यते तावदेतद्गृहक्षेत्रादेर्दानविक्रयाधिकरणाद्यहं न करिष्यामीति निर्बन्धो बन्धः । लग्नकः प्रतिभूः । स एव—

कुत्सितात्सीदतश्चैव निर्विशंकैः प्रगृह्यते ।
चतुर्गुणं चाष्टगुणं कुसीदाख्यमतः स्मृतम् ॥

कात्यायनः—

ऋणिकेन तु या वृद्धिरधिका संप्रकल्पिता ।
आपत्कालकृता नित्यं दातव्या कारिता तु सा ।
प्रतिकालं ददात्येव शिखावृद्धिस्तु सा स्मृता ॥ इति ।

प्रतिकालं प्रतिदिनं प्रतिमासं प्रतिवर्षं वेत्यर्थः ।

याज्ञवल्क्यः—

अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ।
वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा ॥

अन्यथाऽबन्धके ।

व्यासः—

सबन्धे भाग आशीतः षाष्टो भागः सलग्नके ।
निराधाने द्विकशतं मासलाभ उदाहृतः ॥

याज्ञवल्क्यः—

कान्तारगास्तु दशकं सामुद्रा विंशकं शतम् ।

दद्युरित्युत्तरवाक्यस्थस्यानुषङ्गः ।

दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ॥ इति ।

विष्णुः—

यो गृहीत्वा ऋणं सर्वं श्वो दास्यामीति सामकम् ।
न दद्याल्लोभतः पश्चाद्दिनाद्वृद्धिमवाप्नुयात् ॥

याचितके वृद्धिमाह कात्यायनः—

यो याचितकमादाय तमदत्वा दिशं व्रजेत् ।
उर्ध्वं संवत्सरात्तस्य धनं वृद्धिमवाप्नुयात् ॥

कृत्वोद्धारमदत्वा यो याचितस्तु दिशं व्रजेत् ।
ऊर्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥
स्वदेशेऽवस्थितो यस्तु न दद्याद्याचितः क्वचित् ।
तं ततोऽकारितां वृद्धिमनिच्छन्तं च दापयेत् ॥

नारदः—

न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित् ।
अनाकारितमप्यूर्ध्वं वत्सरार्द्धाद्धि वर्द्धते ॥

कात्यायनः—

प्रीतिदत्तं न वर्द्धेत यावन्न प्रतियाचितम् ।
याच्यमानमदत्तं चेद्वर्द्धते पञ्चकं शतम् ॥
पण्यं गृहीत्वा यो मूल्यमदत्वैव दिशं व्रजेत् ।
ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात् ॥
निक्षिप्तं वृद्धिशेषं च क्रयं विक्रयमेव च ।
याच्यमानमदत्तं चेद्वर्द्धते पञ्चकं शतम् ॥

नारदः—

पण्यमूल्यं भृतिर्न्यासो दण्डो यश्च प्रकल्पितः ।
वृथादानाक्षिकपणा वर्द्धन्ते नाविवक्षिताः ॥

आक्षिकोऽक्षक्रीडासम्बन्धी । अविवक्षिता अपरिभाषिताः

याज्ञवल्क्यः—

दीयमानं न गृह्णाति प्रयुक्तं यत्स्वकं धनम् ।
मध्यस्थस्थापितं तत्स्याद्वर्द्धते न ततः परम् ॥

बृहस्पतिः—

हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्रकुप्यके ।
धान्ये चतुर्गुणा प्रोक्ता शदवाह्यलवेषु च ॥

शदः, पुष्पमूलफलादि । वाह्यो, बलीवर्दादिः । लवो मेषोर्णाचमरी-केशादिः । यत्तु मनुः—

धान्ये शदे लवे वाह्ये नातिक्रामति पञ्चताम् ॥ इति ।

तत्पाकुण्यादिनिषेधपरम् ।

कात्यायनः—

मणिमुक्ताप्रवालानां सुवर्णरजतस्य च ।
तिष्ठति द्विगुणा वृद्धिः फलकैटाविकस्य च ॥

कैटं, कीटप्रभवं पट्टदुकूलतसरीवस्त्रादि ।

वसिष्ठः—

ताम्रायःकांस्यरीतीनां त्रपुणः सीसकस्य च ।
त्रिगुणा तिष्ठतो वृद्धिः कालाच्चिरकृतस्य तु ॥

व्यासः—

शाककार्पासबीजेषु षड्गुणा परिकीर्तिता ।

कात्यायनः—

तैलानां चैव सर्वेषां मद्यानामथ सर्पिषाम् ।
वृद्धिरष्टगुणा ज्ञेया गुडस्य लवणस्य च ॥

विष्णुः—

हिरण्यस्य द्विगुणा वृद्धिस्त्रिगुणा वस्त्रस्य धान्यस्य चतुर्गुणा रसस्याष्टगुणा सन्ततिः स्त्रीपशूनामिति । पुष्पमूलफलानि च तुलाधृतमष्टगुणमिति । नारदः—

ऋणानां सार्वभौमोऽयं विधिर्वृद्धिकरः स्मृतः ।
देशाचारस्थितिस्त्वन्या यादृशी यत्र तिष्ठते ॥

सार्वभौमः सार्वत्रिकः । इदं च द्वैगुण्यादि सकृत्प्रयोग एव कालान्तरेण पुरुषान्तरेण तत्रैव रेकसेकादिना वा प्रयोगान्तरे तु परमवृद्धेरप्यधिका भवति । तथा च मनुः—

कुसीदवृद्धिर्द्वैगुण्यान्नात्येति सकृदाहिता एकप्रयोगमध्येऽन्तरान्तरा गृह्यमाणेऽपि परमवृद्धेरप्याधिक्यमिति सांप्रदायिका विज्ञानेश्वरादयः ।

---

## अथाधिविधिः ।

बृहस्पतिः—

आधिर्बन्धः समाख्यातः स च प्रोक्तश्चतुर्विधः ।
जङ्गमः स्थावरश्चैव गोप्यो भोग्यस्तथैव च ॥

नारदः—

अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः ।
कृतकालोपनेयश्च यावद्देयोद्यतस्तथा ॥

हारीतः—

बन्धं यथा स्थापितं स्यात्तथैव परिपालयेत् ।
अन्यथा नश्यते लाभो मूलं नश्येद्व्यतिक्रमात् ॥

व्यतिक्रम आधिनाशः। याज्ञवल्क्यः—

गोप्याधिभोगतो वृद्धिः सोपकारेऽथ हापिते ॥ इति।

हापित उपकाराक्षमतां नीत इत्यर्थः।

कात्यायनः—

अकाममननुज्ञातमाधिं यः कर्म कारयेत्।
भोक्ता कर्मफलं दाप्यो वृद्धिं वा न लभेत सः ॥

कर्म कारयेदुपयुञ्जीत। कर्मफलं भाटकम्। याज्ञवल्क्यः—

नष्टो देयो विनष्टश्च दैवराजकृताहृते।

नष्टो विकृतिं गतः पूर्ववत्कृत्वा देयः ॥

बृहस्पतिः—

भुक्ते त्वसारतां प्राप्ते मूलहानिः प्रजायते।

आधेर्विनाशे तन्मूल्यं दातव्यमित्याह व्यासः—

ग्रहीतृदोषान्नष्टश्चेद्बन्धो हेमादिको भवेत्।
ऋणं सलाभं संशोध्य तन्मूल्यं दापयेद्धनी ॥

नारदः—

विनष्टे मूलनाशः स्याद्दैवराजकृताहृते।

मनुः—

मूल्येन तोषयेच्चैनमाधिस्तेनोऽन्यथा भवेत्।

बृहस्पतिः—

दैवराजोपघातेन यत्राधिर्नाशमाप्नुयात्।
तत्राधिं दापयेद्दद्यात्सोदयं वा धनं ऋणी ॥

व्यासः—

दैवराजोपघाते तु न दोषो धनिनः क्वचित् ॥ इति।

कात्यायनः—

न चेद्धनिकदोषेण निपतेद्वा म्रियेत वा।
आधिमन्यं स दाप्यः स्याद्दणान्मुच्येत नर्णिकः ॥

याज्ञवल्क्योपि—

आधेः स्वीकरणात्सिद्धी रक्ष्यमाणोऽप्यसारताम्।
यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत् ॥

नारदः—आधिस्तु द्विविधः प्रोक्तो जंगमः स्थावरस्तथा।

सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथा ॥

वसिष्ठोपि—

तुल्यकाले निसृष्टानां लेख्यानामाधिकर्मणि ।
येन भुक्तं भवेत्पूर्वं तस्याधिर्बलवत्तरः ॥

स एव—

यद्येकदिवसे तौ तु भोक्तुकामावुपागतौ ।
विभज्याधिः समस्तत्र भोक्तव्य इति निश्चयः ॥

कात्यायनः—

आधिमेकं द्वयोर्यस्तु कुर्यात्तं प्रति यद्भवेत् ।
तयोः पूर्वकृतं ग्राह्यं तत्कर्ता चौरदण्डभाक् ॥

याज्ञवल्क्यः—

आधिः प्रणश्येद्द्विगुणे धने यदि न मोच्यते ।
काले कालकृतो नश्येत्फलभोगो न नश्यति ॥

बृहस्पतिः—

हिरण्ये द्विगुणीभूते पूर्णे काले धृतावधौ ।
बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य तु ॥

व्यासः—

गोप्याधिर्द्विगुणादूर्ध्वं कृतकालः कृतावधेः ।
आवेदयित्वर्णिकुले भोक्तव्यस्तदनन्तरम् ॥

बृहस्पतिः—

हिरण्ये द्विगुणीभूते मृते नष्टेऽधमर्णिके ।
द्रव्यं तदीयं संगृह्य विक्रीणीतससाक्षिकम् ॥

याज्ञवल्क्यः—

चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनम् ।
सत्यंकारकृतं द्रव्यं द्विगुणं प्रतिदापयेत् ॥

धनिकविश्वासेनाल्पद्रव्यार्थमतिबहुमूल्यः स्थापितश्चेदृणिकविश्वासेन वात्यल्पमूल्योऽपि बहुद्रव्यार्थे स्थापितश्चेच्चरित्रबन्धकम् । अथवा चरित्रं गङ्गादेः स्नानादिपुण्यमाधिकृतं चरित्रबन्धकम् । एतदुभयविधमपि चरित्रबन्धकं द्विगुणीभूतेऽपि द्रव्ये न नश्यति । द्विगुणीभूतमपि द्रव्यमेव देयं नाधिनाश इति । सत्यंकारकृतं तदपि द्विगुणीभूते द्रव्ये न नश्यतीत्यर्थः । स एव—

उपस्थितस्य मोक्तव्य आधिः स्तेनोऽन्यथा भवेत् ।
प्रयोजकेऽसति धनं कुलेऽन्यस्याधिमाप्नुयात् ॥
तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः ।

उत्तमर्णेऽसन्निहिते तस्य कुलेऽन्यस्य हस्ते सवृद्धिकं धनं दत्त्वाधिर्ग्राह्यः । आधिविक्रयेण तु धनदित्सायां तत्कालं मूल्यं कृत्वा वृद्धिरहितः स्थाप्य इत्यर्थः ।

बृहस्पतिः—

क्षेत्राधिकं यदा भुक्तमुत्पन्नमधिकं ततः ।
मूलोदयं प्रविष्टं चेत्तदाधिं प्राप्नुयाद्दणी ॥

याज्ञवल्क्यः—

यदा तु द्विगुणीभूतमृणमाधौ तदा खलु ।
मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने ॥

इत्याधिविधिः

---

## अथ प्रतिभूः ।

तत्रैविध्यमाह याज्ञवल्क्यः—

दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते ।

प्रत्ययः समीचीनोऽयमित्युक्त्या विश्वासोत्पादनम् । बृहस्पतिस्तु चातुर्विध्यमाह—

आहैको दर्शयामीति साधुरित्यपरोऽब्रवीत् ।
दाताहमेतद्द्रविणमर्पयामीति चापरः ॥

अर्पयामि दापयिष्यामीत्यर्थः ।

कात्यायनः—

नष्टस्यान्वेषणार्थं तु देयं पक्षत्रयं परम् ।
यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत् ॥

पक्षत्रयमित्युपलक्षणम् । यावान्कालोऽपेक्षितस्तावन्तं दद्यादित्यर्थः ।

कात्यायनः—

दर्शनप्रतिभूर्ग्राह्यं देशे काले न दर्शयेत् ।
निबन्धमावहेत्तत्र दैवराजकृताद्दते ॥

निबन्धमावहेद्धनिकद्रव्यं दद्यात् ।

बृहस्पतिः—

आद्यौ तौ वितथे दाप्यौ तत्कालावेदितं धनम् ।
उत्तरौ तु विसंवादे तौ विना तत्सुतौ तथा ॥

कात्यायनः—

प्रातिभाव्यागतं पौत्रैर्दातव्यं तु न तत्क्वचित् ।
पुत्रेणापि समं देयमृणं सर्वत्र पैतृकम् ॥

व्यासः—ऋणं पैतामहं पौत्रः प्रातिभाव्यागतं सुतः ।
समं दद्यात्तत्सुतौ तु न दाप्याविति निश्चयः ॥

पैतामहमृणं पौत्रो मूलमात्रं दद्यात्प्रातिभाव्यागतं सुतोऽपि मूलमात्रं दद्यात् । इदं तु द्रव्यमगृहीत्वा प्रातिभाव्याङ्गीकारे । द्रव्यग्रहणे प्रातिभाव्याङ्गीकारे तु पुत्रपौत्राभ्यामपि सवृद्धिकं देयम् । तथा च

कात्यायनः—

गृहीत्वा बन्धकं यत्र दर्शनेऽस्य स्थितो भवेत् ।
विना पित्र्यधनात्तस्माद्दाप्यः स्यात्तदृणं सुतः ॥

याज्ञवल्क्यः—

बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम् ।
एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि ॥

अहमेव सर्वं दास्यामीति प्रत्येकं प्रतिज्ञा एकच्छाया । तामाश्रितेष्वापन्नेषु धनिकेच्छया यः कश्चिद्दद्यात् । अंशैर्दास्याम इति प्रतिज्ञायां तु तथादेयमित्यर्थः ।

कात्यायनः—

एकच्छायाप्रविष्टानां दाप्यो यस्तत्र दृश्यते ।
प्रोषिते तत्सुतः सर्वं पित्रंशात्तु मृते सुतः ॥

पित्रंशात्पित्रंशानुसारेण,

याज्ञवल्क्यः—

प्रतिभूर्दापितो यत्तु प्रकाशं धनिने धनम् ।
द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत् ॥

बृहस्पतिः—

प्रातिभाव्यं च यो दद्यात्पीडितः प्रतिभावितः ।
त्रिपक्षात्परतः सोऽर्थं द्विगुणं लब्धुमर्हति ॥

## अथोत्तमर्णस्यर्णग्रहणप्रकारः ।

बृहस्पतिः—

प्रतिपन्नमृणं दाप्यः सामादिभिरुपक्रमैः ।
धर्मोपधिबलात्कारैर्गृहसंरोधनेन च ॥

प्रतिपन्नमधमर्णेनाङ्गीकृतम् । उपक्रमैः उपायैः । तान्विवृणोति स एव—

सुहृत्संम्बन्धिसंदिष्टः सामोक्त्यानुगमेन च ।
प्रायेण वा ऋणी दाप्यो धर्म एष उदाहृतः ॥
इच्छया याचितं चार्थमानीय ऋणिकाद्धनी ।
अन्वाहितादि संगृह्य दाप्यते यत्र सोपधिः ॥
बद्ध्वा स्वगृहमानीय ताडनाद्यैरुपक्रमैः ।
ऋणिको दाप्यते यत्र बलात्कारः स कीर्तितः ॥
पुत्रदारपशून्बद्ध्वा कृत्वा द्वारोपवेशनम् ।
यत्रर्णिको दाप्यतेऽर्थं तदाचरितमुच्यते ॥

अनुगमोऽनुसरणम् । प्रायः प्रार्थना । अन्वाहितमन्यस्मै दापितुं दत्तमलंकारादि । धर्मे उपायानां नियममाह

कात्यायनः—

राजानं स्वामिनं विप्रं सांत्वेनैव प्रदापयेत् ।
रिक्थिनं सुहृदं वापि छलेनैव प्रदापयेत् ।
वणिजः कर्षकांश्चैव शिल्पिनश्चाब्रवीद्भृगुः ॥
देशाचारेण दाप्याः स्युर्दुष्टान्संपीड्य दापयेत् ।

स एव—

धार्योऽवरुद्धस्त्वृणिकः प्रकाशं जनसंसदि ।
यावद्देयं तदादेयं देशाचारस्थितिर्यथा ॥

अवरुद्धस्य विण्मूत्रशंकायामवरोधनं निषेधयति स एव—

विण्मूत्रशंका यत्र स्याद्धार्यमाणस्य देहिनः ।
पृष्ठतश्चानुगन्तव्यो निबन्धं वा समुत्सृजेत् ॥

निबंधं स्वप्रतिनिधिभूतं पुत्रादिकम् । अवरुद्धो दर्शनप्रतिभुवं गृहीत्वा भोक्तुं मोक्तव्य इत्याह स एव—

स कृतप्रतिभूश्चैव मोक्तव्यः स्याद्दिनेदिने ।

आहारकाले रात्रौ च निबन्धे प्रतिभूः स्थितः ॥
यो दर्शनप्रतिभुवं नाधिगच्छेन्न चाश्रयेत् ।
स चारके निरोद्धव्यः स्थाप्यो वाऽऽवेद्यरक्षिणः ॥
न चारके निरोद्धव्य आर्यः प्रात्ययिकः शुचिः ।
सोऽनिबन्धः प्रमोक्तव्यो निबद्धः शपथेन वा ॥

नचाश्रयेन्न दद्यात् । चारके कारागारे रक्षिकानावेद्य स्थाप्यः । प्रात्ययिको विश्वास्यः ।

बृहस्पतिः—

पूर्णावधौ शान्तलाभमृणमुद्ग्राहयेद्धनी ।
कारयेद्वा ऋणी लेख्यं चक्रवृद्धिव्यवस्थया ।

पूर्णावधौ द्वैगुण्यादिके जाते अत एव शान्तलाभं चोपपद्यते । धनी ऋणमुद्ग्राहयेद्गृह्णीयात् । वृद्धिमपि मूले प्रक्षिप्य तस्याऽपि वृद्धिकरणं चक्रवृद्धिः ।

नारदः—

अथ शक्तिविहीनः स्यादृणी कालविपर्ययात् ।
शक्त्यपेक्ष्यमृणं दाप्यः काले काले यथोदयम् ॥

मनुः—

कर्मणापि समं कुर्याद्धनिकस्याधमर्णिकः ।
समोपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैः ॥

यत्तु याज्ञवल्क्यः—

जातिकर्मपरिक्षीणमृणार्थे कर्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥ इति ।

अत्र ब्राह्मणपदमुत्कृष्टजातिपरम् ।

स एव—

प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत् ।
साध्यमानो नृपं गच्छन्दण्डं दाप्यश्च तद्धनम् ॥

बृहस्पतिः—

प्रतिपन्नस्य धर्मोऽयं व्यपलापी तु संसदि ।
लेख्येन साक्षिभिर्वापि भावयित्वा प्रदाप्यते ॥
न रोद्धव्यः क्रियावादी संदिग्धेऽर्थे कथंचन ।
आसेधयंस्त्वनासेध्यं दंड्यो भवति धर्मतः ॥

आसेधो राजाज्ञयावरोधः। स एव—

प्रदातव्यं यद्भवति न्यायतस्तद्ददाम्यहम्।
एवं यत्रर्णिको ब्रूते क्रियावादी स उच्यते॥

कात्यायनः—

पीडयेत्तु धनी यत्र ऋणिकं न्यायवादिनम्।
तस्मादर्थात्स हीयेत तत्समं चाप्नुयाद्दमम्॥

बृहस्पतिः—

अनावेद्य तु राज्ञे यः संदिग्धेऽर्थे प्रवर्त्तते।
प्रसह्य स विनेयः स्यात्स चाप्यर्थो न सिद्ध्यति॥

यमः—

ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति।
राज्ञा दापयितव्यः स्याद्गृहीत्वा द्विगुणं ततः॥

याज्ञवल्क्यः—

राज्ञाधमर्णिको दाप्यः साधितादृशकं शतम्।
पञ्चकं च शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः॥

दाप्यस्तस्मै। दशकं दशोत्तरं पञ्चकं पञ्चोत्तरम्। दशांशो विंशांशश्चेत्यर्थः। तत्रैतावंशौ राज्ञो अन्यदुत्तमर्णस्येति भावः। दशकग्रहणं निर्धनिकपरं सधने तु विशेषमाह नारदः—

ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति।
राज्ञा दापयितव्यः स्याद्गृहीत्वांशं तु विंशकम्॥

शतं प्रति विंशतिरित्यर्थः। अनेकोत्तमर्णानां युगपदुपस्थितौ क्रममाह, याज्ञवल्क्यः—

गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः।
दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनंतरम्॥

विवादरत्नाकरे कात्यायनः—

नानर्णसमवाये तु यद्यत्पूर्वकृतं भवेत्।
तत्तदेवाग्रतो देयं राज्ञः श्रोत्रियतोऽनु च॥
एकाहे लिखितं पत्रं तत्र कुर्याद्दणं समम्।
ग्रहणं रक्षणं लाभमन्यथा तु यथाक्रमम्॥
यस्य द्रव्येण यत्पुण्यं साधितं यो विभावयेत्।

तद्द्रव्यमृणिकेनैव दातव्यं तस्य नान्यथा ॥
लेख्यस्य पृष्ठेऽभिलिखेद्दत्वा दत्वर्णिको धनम् ॥

याज्ञवल्क्यः—

धनी वोऽपगतं दद्यात्स्वहस्तपरिचिह्नितम् ।

नारदः—

लेख्यं दद्याद्विशुद्धेर्णे तदभावे प्रतिश्रवः ।
धनिकर्णिकयोरेवं विशुद्धः स्यात्परस्परम् ॥

प्रतिश्रवः प्रतिदानश्रवणाय शुद्धिपत्रम् । ऋणादानेऽधर्मणस्यानिष्टं फलमाह

कात्यायनः—

उद्धारादिकमादाय स्वामिने न ददाति यः ।
स तस्य दासो भृत्यः स्त्री पशुर्वा जायते गृहे ॥

उद्धारः ऋणम् । आदिना याचितनिक्षेपयोर्ग्रहणम् । दासो गर्भदासः । भृत्यो मूल्योपात्तः

नारदः—

याच्यमानं न दद्याद्येदृणं वापि प्रतिग्रहम् ।
तद्द्रव्यं वर्द्धते तावद्यावत्कोटिशतं भवेत् ॥
ततः कोटिशते पूर्णे वेष्टितस्तेन कर्मणा ।
अश्वः खरो वृषो दासो भवेज्जन्मनि जन्मनि ॥

प्रतिग्रहं दातुं प्रतिश्रुतम् । व्यासोऽपि—

तपस्वी चाग्निहोत्री च ऋणवान् म्रियते यदि ।
तपश्चैवाग्निहोत्रं च सर्वं तद्धनिनो भवेत् ॥

बृहस्पतिः—

ऋणं चात्मीयवत्पित्र्यं पुत्रैर्देयं विभावितम् ।
पैतामहं समं देयं न देयं तत्सुतस्य च ॥

याज्ञवल्क्यः—

पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा ।
पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम् ॥

विंशतिवर्षवयसा पुत्रादिना ऋणं देयमित्याह नारदः—

नार्वाक् संवत्सराद्विंशत्पितरि प्रोषिते सुतः ।
ऋणं दद्यात्पितृव्ये च ज्येष्ठे भ्रातर्यथापि वा ॥

कात्यायनः—

विद्यमानेऽपि रोगार्त्ते स्वगृहात्प्रोषिते तथा ।
विंशात्संवत्सराद्देयमृणं पितृकृतं तथा ॥

प्रोषितपदं मृतस्याप्युपलक्षकम् । अत एव विष्णुः—धनग्राहिणि प्रेते प्रव्रजिते द्विदशाः समाः प्रोषिते वा तत्पुत्रपौत्रैर्धनं देयम् ।

नारदः—

पितर्युपरते पुत्रा ऋणं दद्युर्यथांशतः ।
विभक्ता अविभक्ता वा यो वा तामुद्वहेद्धुरम् ॥

कात्यायनः—

पित्र्यर्णे विद्यमाने तु न च पुत्रो धनं हरेत् ।
देयं तद्धनिके द्रव्यमृते पुत्रस्तु दाप्यते ॥

द्रव्यमृते इति संबन्धः । द्रव्यं विनेत्यर्थः ।

बृहस्पतिः—

पित्र्यमेवाग्रतो देयं पश्चादात्मीयमेव च ।
तयोः पैतामहं पूर्वं देयमेवमृणं सदा ॥

याज्ञवल्क्यः—

सुराकामद्यूतकृतं दंडशुल्कावशिष्टकम् ।
वृथाऽदानं तथैवेह पुत्रो दद्यान्न पैतृकम् ॥

बृहस्पतिः—

सौराक्षिकं वृथादानं कामक्रोधप्रतिश्रुतम् ।
प्रातिभाव्यं दंडशुल्कशेषं पुत्रं न दापयेत् ॥

उशना—

दण्डं वा दण्डशेषं चं शुल्कं तच्छेषमेव च ।
न दातव्यं तु पुत्रेण यच्च न व्यावहारिकम् ॥

ऋणदानाधिकारिणां क्रममाह । याज्ञवल्क्यः—

रिक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च ।
पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः ॥

क्लैव्यादिदोषयुक्ते पुत्रे विद्यमानेऽपि यो न्यायेन दोषाभावेप्यन्यायेन वा तत्पितृरिक्थं हरते स रिक्थग्राहः । एवमेव परस्त्रीहर्ता योषिद्ग्राहः । [अन्यमाश्रितमन्याश्रितं, अन्याश्रितं मातृपितृसंबंधिद्रव्यं यस्यासावन्या-

श्रितद्रव्यः न अन्याश्रितद्रव्यः अनन्याश्रितद्रव्यः । ] अत्रादौ रिक्थग्राहः तदभावे योषिद्ग्राहस्तदभावेऽनन्याश्रितद्रव्यः पुत्रः तदभावे पौत्रो मूलमात्रं तदभावे प्रपौत्रपत्नीकन्यादयो रिक्थिनो द्रव्यग्राहिणश्चेद्दद्युरित्यर्थः । रिक्थग्रहणाभावे प्रपौत्रेण पत्न्यादिभिश्च न देयम् । रिक्थं चाल्पमपि गृहीतं भूयसोपि ऋणापाकारणे प्रयोजकम् । न तु तत्समं ततोधिकमेव वेति नियमः । पुत्रहीनस्योत्तमर्णस्य रिक्थिनो द्रव्यग्रहणाधिकारिणः पत्नीकन्यादयः पत्यादीनामधमर्णादृणं गृण्हीयुरित्यन्योऽन्तिमपादार्थः ।

विष्णुः—

सपुत्रस्य वाप्यपुत्रस्य रिक्थग्राही ऋणं दद्यादिति ।

बृहस्पतिः—

स्त्रीहारी च तथैव स्यादभावे धनहारिणः ॥

कात्यायनः—

ऋणं तु दापयेत्पुत्रं यदि स्यान्निरुपद्रवः ।
द्रविणार्हश्च धुर्यश्च नान्यथा दापयेत्सुतम् ॥
पूर्वं दद्याद्धनग्राहः पुत्रस्तस्मादनन्तरम् ।
योषिद्ग्राहः सुताभावे पुत्रे वात्यन्तनिर्द्धने ॥

नारदः—

या तु सप्रधनैव स्त्री सापत्या वान्यमाश्रयेत् ।
सोऽस्या दद्यादृणं भर्त्तुरुत्सृजेद्वा तथैव ताम् ॥

कात्यायनः—

निर्द्धनैरनपत्यैस्तु यत्कृतं शौंडिकादिभिः ।
तत्स्त्रीणामपि भोक्ता तु दद्यात्तदृणमेव हि ॥

नारदः—

धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत् ।
पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः । इति ॥

सधनपुत्राभावे स्त्रीहारी ऋणं दद्यादित्यन्तपादार्थः । पूर्वोक्तयाज्ञवल्क्यवाक्यात् ।

कात्यायनः—

प्रोषितस्यामतेनापि कुटुंबार्थमृणं कृतम् ।
दासस्त्रीमातृशिष्यैर्वा दद्यात्पुत्रेण वा भृगुः ॥

याज्ञवल्क्यः—

न योषित्पतिपुत्राभ्यां न पुत्रेण कृतं पिता।
दद्यादृते कुटुंबार्थान्न पतिः स्त्रीकृतं तथा॥

कात्यायनः—

देयं प्रतिश्रुतं यत्स्याद्यच्च स्यादनुमोदितम्।

नारदः—

कृतं वा यदृणं कृच्छ्रे दद्यात्पुत्रस्य तत्पिता॥

याज्ञवल्क्यः—

गोपशौंडिकशैलूषरजकव्याधयोषिताम्।
ऋणं दद्यात्पतिस्तासां यस्माद्वृत्तिस्तदाश्रया॥

स एव—

प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम्।
स्वयं कृतं वा यदृणं नान्यत्स्त्री दातुमर्हति॥

अप्रतिपन्नमपि रिक्थग्राहिणी स्त्री दद्यात्।

तथाच कात्यायनः—

मर्त्तुकामेन या भर्त्रा उक्ता देयमृणं त्वया।
अप्रपन्नापि सा दाप्या धनं दद्यात्स्थितं स्त्रिया॥

नारदः—

पुत्रिणी तु समुत्सृज्य पुत्रं स्त्री यान्यमाश्रयेत्।
तस्या ऋणं हरेत्सर्वं निःस्वायाः पुत्र एव तु॥

इदं तु रिक्थग्राहपुत्रपरम्। नारदः—

पितृव्येणाविभक्तेन भ्रात्रा वा यदृणं कृतम्।
मात्रा वा यत्कुटुंबार्थे दद्युः सर्वेऽपि रिक्थिनः॥

उत्तमर्णतत्पुत्राद्यभावे ऋणदाने प्रकारमाह

नारदः—

ब्राह्मणस्य तु यद्देयं सान्वयश्च न चास्ति सः।
निर्वपेत्तत्सकुल्येषु तदभावेऽस्य बन्धुषु॥
यदा तु न सकुल्याः स्युर्न च संबन्धिबान्धवाः।
तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेत्॥

प्रजापतिरपि—

बन्ध्वभावेऽपि विप्रेभ्यो देयं क्षेप्यं जलेऽपि वा।

जले क्षिप्तं तथाग्नौ च धनं स्यात्पारलौकिकम् ॥
यदा तु जलादौ क्षिप्ते धन्यायाति तदासौ प्राप्नोत्येव ।

इति ऋणादानप्रकरणम् ।

---

## अथ निक्षेपः ।

नारदः—

स्वद्रव्यं यत्र विश्रंभान्निक्षिपत्यविशंकितः ।
निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः ॥
असंख्यातमविज्ञातमसमुद्रं यन्निधीयते ।
तं जानीयादुपनिधिं निक्षेपं गणिकं विदुः ॥

बृहस्पतिः—

ददतो यद्भवेत्पुण्यं हेमकुप्याम्बरादिकम् ।
तस्मात्पालयतो न्यासं यथैव शरणागतम् ॥
स्थापितं येन विधिना येन यच्च यथाविधि ।
तथैव तस्य दातव्यं न देयं प्रत्यनन्तरे ॥

न्यासो निक्षेपः । प्रत्यनन्तरः स्थापयितुः सन्निहितः ।

मनुः—

यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते ।
तावुभौ चौरवच्छास्यौ दाप्यौ वा तत्समं दमम् ॥ इति ।

बृहस्पतिः—

भेदेनोपेक्षया न्यासं गृहीत्वा यदि नाशयेत् ।
याच्यमानो न दद्याद्वा दाप्यं तत्सोदयं भवेत् ॥

भेदः स्वद्रव्यतारतम्यम् । तेन स्वद्रव्येण सहोपेक्षया नाशे न दोषः ।

याज्ञवल्क्यः—

आजीवन्स्वेच्छया दण्ड्यो दाप्यस्तं चापि सोदयम् ।

आजीवन् भोगवृद्ध्यर्थं प्रयोगादिनोपजीवन् । उदयो वृद्धिः ।

तस्य विशेषमाह कात्यायनः—

निक्षेपं वृद्धिशेषं च क्रयं विक्रयमेव च ।
याच्यमानं न चेद्दद्याद्वर्द्धते पञ्चकं शतम् ॥ इति ।

मनुः—

निक्षेपस्यापहर्त्तारं तत्समं दापयेद्दमम् ।
तथोपनिधिहर्त्तारं विशेषेणैव पार्थिवः ॥

बृहस्पतिः—

दैवराजोपघातेन यदि तन्नाशमाप्नुयात् ।
गृहीतद्रव्यसहितं तत्र दोषो न विद्यते ॥

याज्ञवल्क्यः—

न दाप्योऽपहृतं यत्तु राजदैविकतस्करैः ।
स्वयमेव तु यो दद्यान्मृतस्य प्रत्यनन्तरे ॥
न स राज्ञाभियोक्तव्यो न निक्षेप्तुश्च बन्धुभिः ।

प्रत्यनन्तरः सन्निहितः । प्रमाणं विनाधिकविषये नाभियोज्य इत्यर्थः । सर्वमप्यमुं निक्षेपन्यायमन्यत्राप्यतिदिशति बृहस्पतिः—

अन्वाहिते याचितके शिल्पिन्यासे सबन्धके ।
एष एवोदितो धर्मस्तथा च शरणागते ॥

अन्वाहितममुकेन मयि स्थापितं त्वया तस्मै देयमिति पुरुषान्तरहस्तेऽर्पितम् । याचितमुद्वाहादौ शोभाद्यर्थं नीतमलंकारादि । शिल्पिन्यासो हेमकारादिषु कुण्डलाद्यर्थं निक्षिप्तम् ।

नारदोपि—

एष एव विधिर्दृष्टो याचितान्वाहितादिषु ।
शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च ॥

प्रतिन्यासः स्वामिना यत्र निक्षिप्तं तेनाप्यन्यत्र निक्षिप्तं, राजदैवादिनष्टस्यापि शिल्पिन्यासस्य क्वचित्प्रतिदानमाह,

कात्यायनः—

यश्च संस्क्रियते न्यासो दिवसैः परिनिष्ठितैः ।
तदूर्ध्वं स्थापयेच्छिल्पी दाप्यो दैवागतेऽपि तम् ॥

नारदः—

मूल्याष्टभागे हीयेत सकृद्धौतस्य वाससः ।
द्विपादस्तु तृतीयांशश्चतुर्थौतेर्द्धमेव च ॥
अर्द्धक्षयात्तु परतः पादांशापचयः क्रमात् ।

याज्ञवल्क्यः—

वसानस्त्रीन्पणान्दण्ड्यो नेजकस्तु परांशुकम् ।
विक्रयाऽवक्रयाधानयाचितेषु पणान्दश ॥

अवक्रयो भाटकं गृहीत्वान्यत्रार्पणम् । आधानमाधीकरणम् । सुवर्णादीनामग्नौ ध्मायमाने ह्रासनियममाह स एव—

अग्नौ सुवर्णमक्षीणं रजते द्विपलं शते ।
अष्टौ त्रपुणि सीसे च ताम्रे पञ्चदशायसि ॥

इतोऽधिके रूप्यादेः क्षये हेमकारादेर्दण्डः । कचिद्वस्त्राद्यर्थतन्तुसमर्पणे वृद्धौ विशेषमाह स एव—

शते दशपलावृद्धिरौर्णकार्पाससौत्रिके ।
मध्ये पञ्चपला वृद्धिः सूक्ष्मे द्वित्रिपला मता ॥

कचित्क्षयमाह स एव—

कार्मिके रोमबन्धे च त्रिंशद्भागः क्षयो मतः ।
न क्षयो न च वृद्धिश्च कौशेये वल्कलेषु च ॥ इति ।

कार्मिके सिद्धपट्टादौ पट्टसूत्रादिना स्वस्तिकाद्याकारनिर्माणे । नियतावधिके शिल्पिन्यस्तेऽवधिमध्ये याचितेऽदत्ते नष्टेऽपि च शिल्पिनो दोषाभावमाह स एव—

यदि तत्कार्यमुद्दिश्य कालं परिनियम्य वा ।
याचितोऽर्द्धंकृते तस्मिन्नप्राप्ते न तु दाप्यते ॥

एतद्विपर्ययमाह स एव—

प्राप्तकाले कृते कार्ये न दद्याद्याचितोऽपि सन् ।
तस्मिन्नष्टे हृते वापि ग्रहीता मूल्यमावहेत् ॥

स एव—

यो याचितकमादाय न दद्यात्प्रतियाचितः ।
स निगृह्य बलाद्दाप्यो दण्ड्यश्च न ददाति यः ॥

इति निक्षेपप्रकरणम् ।

---

## अथास्वामिविक्रयः ।

व्यासः—

याचितान्वाहितन्यासं हृत्वा चान्यस्य यद्धनम् ।

विक्रीयते स्वाम्यभावे स ज्ञेयोऽस्वामिविक्रयः ॥

कात्यायनः—

अस्वामि विक्रयं दानमाधिं वा विनिवर्तयेत् ।

अस्वामीति पृथक् पदं क्रियाविशेषणं च । नारदोऽपि—

प्रकाशतः क्रयः शुद्धः क्रेतुः स्तेयं रहःक्रयात् ।
अस्वाम्यनुमताद्दासाद्धसतश्च जनाद्रहः ॥
हीनमूल्यमवेलायां क्रीणंस्तद्दोषभाग्भवेत् ।

तद्दोषश्चौरदोषः । याज्ञवल्क्यः—

आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा ।
पञ्चबन्धो दमस्तस्य राज्ञे तेनाविभाविते ॥

पञ्चबन्धो नष्टद्रव्यपञ्चमांशः । नाष्टिकोपन्यस्तसाक्षिणां विरुद्धोक्तौ नष्टद्रव्याद्द्विगुणं दंडमाह व्यासः—

वादी चेन्मार्गितं द्रव्यं साक्षिभिर्न विभावयेत् ।
दाप्यः स्याद्द्विगुणं दण्डं क्रेता तद्द्रव्यमर्हति ॥ इति ।

क्रेतुः कृत्यमाह स एव—

मूले समाहृते क्रेता नाभियोज्यः कथंचन ।
मूलेन सह वादस्तु नाष्टिकस्य विधीयते ॥

बृहस्पतिः—

विक्रेता दर्शितो यत्र हीयते व्यवहारतः ।
क्रेत्रे राज्ञे मूल्यदण्डौ प्रदद्यात्स्वामिने धनम् ॥

कात्यायनः—

मूलानयनकालश्च तत्र देयोऽध्वसंख्यया ।
असमाहार्यमूलस्तु क्रयमेव विशोधयेत् ॥
विशोधिते क्रये राज्ञा वक्तव्यः स न किंचन ।
अभियोक्ता धनं कुर्यात्प्रथमं ज्ञातिभिः स्वकम् ॥
पश्चादात्मविशुद्ध्यर्थं क्रयं क्रेता स्वबन्धुभिः ।

क्रेत्रा क्रये साधितेऽपि द्रव्यं नाष्टिक एव लभते ।

तथा च मनुः—

अथ मूलमनाहार्यं प्रकाशक्रयशोधितम् ।
अदंड्यो मुच्यते राज्ञा नाष्टिको लभते धनम् ॥

अनाहार्याप्रदर्श्य प्रकाशेन क्रयेण शोधितं द्रव्यमित्यर्थः ।

कात्यायनः—

अनुपस्थापयन्मूलं क्रयं वाप्यविशोधयन् ।
यथाभियोगं धनिने धनं दाप्यो दमं च सः ॥

बृहस्पतिः—

वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः ।
अविज्ञाताश्रयात्क्रीतं विक्रेता यत्र वा मृतः ॥
स्वामी दत्त्वार्द्धमूल्यं तु प्रगृह्णीत स्वकं धनम् ।
अर्द्धं द्वयोरपि हृतं तत्र स्याद्व्यवहारतः ॥

मरीचिः—

अविज्ञातनिवेशत्वाद्यत्र मूलं न लभ्यते ।
हानिस्तत्र समा कल्प्या क्रेतृनाष्टिकयोर्द्वयोः ॥

निवेशो विक्रेतृस्थलम् ।

नारदः—

उद्दिष्टमेव भोक्तव्यं स्त्री पशुर्वसुधापि वा ।
अनर्पितं तु यो भुंक्ते भुक्तभोगं प्रदापयेत् ॥

उद्दिष्टमनुज्ञातम् । भुक्तभोगं भोगानुरूपकभाटकम् ।

याज्ञवल्क्यः—

शौल्ककैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।
अर्वाक्संवत्सरात्स्वामी हरेत परतो नृपः ॥

यत्तु मनुः—

प्रनष्टस्वामिकं द्रव्यं राजा त्र्यब्दं निधापयेत् ।
अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो नृपतिर्हरेत् ॥ इति ।

तच्छ्रोत्रियविप्रस्वामिकद्रव्यविषयम् । स एव—

आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः ।
दशमं द्वादशं वाऽपि सतां धर्ममनुस्मरन् ॥ इति

तत्र प्रथमे वर्षे सर्वं दद्यात् । द्वितीये वर्षे द्वादशं भागं गृहीत्वा दद्यात् । तृतीये वर्षे दशमम् । चतुर्थादौ षष्ठमिति । हरेत परतो नृप इत्येतत्स्वामिन्यनागते त्र्यब्दादूर्ध्वं व्ययीकरणाभ्यनुज्ञामात्रपरम् । आगते तु स्वामिनि व्ययीकृतमपि देयमिति मिताक्षरायाम् । इदं तु स्वामि-

नोऽज्ञाने । यदा त्वमुक इदं द्रव्यं विस्मृत्य गत इत्यवधारणं तदा त्रिवर्षादूर्ध्वमपि लभते । राज्ञोऽपि न व्ययाद्यधिकारः । भागं तु किंचि-द्गृह्णीयादेव ।

परस्वामिकनष्टलब्धपशूनामेकदिनरक्षणे भृतिमाह । याज्ञवल्क्यः—

पणानेकशफे दद्याच्चतुरः पंच मानुषे ।
महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके ॥

भक्षितुं देयमेव । निधिप्राप्तौ याज्ञवल्क्यः—

राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्धं द्विजः पुनः ।
विद्वानशेषमादद्यात्स सर्वस्य प्रभुर्यतः ॥
इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत् ।
अनिवेदितविज्ञानो दाप्यस्तं दण्डमेव च ॥ इति

यदा तु कश्चिच्चिह्नमानादिना स्वकीयं निधिं भावयति तदाऽधिगन्त्रे द्वादशं भागं दत्त्वा स्वयं षष्ठं गृहीत्वा तस्मै दद्यात् । यदाह मनुः—

ममायमिति यो ब्रूयान्निधिं सत्येन मानवः ।
तस्याददीत षड्भागं राजा द्वादशमेव च ॥ इति ।

द्वादशस्त्वधिगन्त्रे । चौरहृतं प्रत्याह स एव—

दातव्यं सर्ववर्णेभ्यो राज्ञा चौरैर्हृतं धनम् ।
राजा तदुपभुञ्जानश्चौरस्याप्नोति किल्बिषम् ॥

यदा त्वाहरणेऽशक्तस्तदाऽऽह कृष्णद्वैपायनः—

प्रत्याहर्तुमशक्तस्तु धनं चौरैर्हृतं यदि ।
स्वकोशात्तद्धि देयं स्यादशक्तेन महीभृता ॥ इति ।

इति अस्वामिविक्रयनिरूपणम् ।

---

## अथ संभूयसमुत्थानम् ।

नारदः—

वणिक्प्रभृतयो यत्र कर्म संभूय कुर्वते ।
तत्संभूयसमुत्थानं व्यवहारपदं स्मृतम् ॥

बृहस्पतिः—

बहूनां संमतो यस्तु दद्यादेको धनं नरः ।
करणं कारयेद्वाऽपि सर्वैरेव कृतं भवेत् ॥

परीक्षकाः साक्षिणश्च त एवोक्ताः परस्परम् ।
संदिग्धेऽर्थे वञ्चनायां न चेद्विद्वेषसंयुताः ॥
यः कश्चिद्वंचकस्तेषां विज्ञातः क्रयविक्रये ।
शपथैः सोऽपि शोध्यः स्यात्सर्ववादेष्वयं विधिः ॥

याज्ञवल्क्यः—

जिह्मं त्यजेयुर्निर्लाभं ह्यशक्तोऽन्येन कारयेत् ।
प्रतिषिद्धमनादिष्टं प्रमादाद्यच्च नाशितम् ॥
स तद्दद्याद्विप्लवाच्च रक्षिता दशमांशभाक् ।

कात्यायनः—

शिष्यकाभिज्ञकुशला आचार्याश्चेति शिल्पिनः ।
एवं द्वित्रिचतुर्भागान् हरेयुस्ते यथोत्तरम् ॥

शिष्यकाः शिष्याः । अभिज्ञा ज्ञानवन्तः । कुशला दक्षाः । आचार्या नूतनमार्गप्रवर्तकाः ।

बृहस्पतिः—

हर्म्यं देवगृहं वाऽपि धार्मिकोपस्कराणि च ।
संभूय कुर्वतां तेषां प्रमुखो द्व्यंशमर्हति ॥

स एव—

नर्तकानामेष एव धर्मः सद्भिरुदाहृतः ।
तालज्ञो लभतेऽध्यर्द्धं गायनास्तु समांशिनः ॥

कात्यायनः—

तेषां चेत्प्रसृतानां च ग्रहणं समवाप्नुयात् ।
तन्मोक्षणार्थं यद्दत्तं वहेयुस्ते यथांशतः ॥
वणिजां कर्षकाणां च चौराणां शिल्पिनां तथा ।
अनियम्यांशकर्तॄणां सर्वेषामेष निर्णयः ॥

इति संभूयसमुत्थानम् ।

---

## अथ दत्ताप्रदानिकम् ।

नारदः—

दत्त्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति ।
दत्ताप्रदानिकं नाम व्यवहारपदं हि तत् ॥

असम्यगिति क्रियाविशेषणं निषिद्धमित्यर्थः । स एव—

अथ देयमदेयं च दत्तं चादत्तमेव च ।
व्यवहारे स विज्ञेयो दानमार्गश्चतुर्विधः ॥
अन्वाहितं याचितकमाधिः साधारणं च यत् ।
निक्षेपं पुत्रदाराश्च सर्वस्वं चान्वये सति ॥
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम् ।

अत्र पुत्रदारान्तेषु स्वत्वाभावात्तद्विषये नांतरिक्षे न दिवीतिवन्निषेधानुवादमात्रम् । एतेन स्वकुटुंबाविरोधेन देयं दारसुतादृत इति याज्ञवल्कीयः पर्युदासोऽपि व्याख्यातः । पुत्रदारेषु स्वत्वाभावः पूर्वमुपपादितः स्वत्वविवादे । एतद्दाने न केवलं व्यवहारासिद्धिः किंतु प्रायश्चित्तमपीत्याहैतानि प्रकृत्य दक्षः—

यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः ।

मनुः—

अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति ।
तावुभौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहसम् ॥ इति ।

देयमाह बृहस्पतिः—कुटुंबभक्तवसनाद्देयं यदतिरिच्यते ।

अवश्यदेयमाह कात्यायनः—

स्वेच्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम् ।
न दद्यादृणवद्दाप्यः प्राप्नुयात्पूर्वसाहसम् ॥

गौतमः—

प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यादिति । वृत्तेर्दानविक्रयौ प्रतिषेधति व्यासः—

ये जाता येऽप्यजाताश्च ये च गर्भेष्ववस्थिताः ।
वृत्तिं च तेऽभिकांक्षंति न दानं न च विक्रयम् ॥ इति ।

दत्तादत्तभेदानाह नारदः—

दत्तं सप्तविधं प्रोक्तमदत्तं षोडशात्मकम् ।
पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः ।
स्त्रीशुल्कानुग्रहार्थाय दत्तं दानविदो विदुः ॥

अनुग्रहो धर्मः ।

अदत्तं तु भयक्रोधशोकवेगरुगन्वितैः ।
तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥

VI-9

बालमूढास्वतंत्रार्त्तमत्तोन्मत्तापवर्जितम् ।
कर्ता ममायं कर्मेति प्रतिलाभेच्छया च यत् ॥
अपात्रे पात्रमित्युक्ते कार्ये वाऽधर्मसंज्ञिते ।
यद्दत्तं स्यादविज्ञानाददत्तमिति तत्स्मृतम् ॥

रुगुपतापः । भयादिकृतोपतापान्वितैरित्यन्वयः । ताडनादिभयाद्युपतप्तेन दत्तमित्यर्थः । एवं भ्रात्रादिक्रोधाद्भयो भवत्विति बुद्धया दत्तम् । व्यत्यासो रूप्यं दातुं प्रवृत्तेन भ्रमात्सुवर्णं दत्तम् । छलयोगतः देवदत्ताय राज्ञा गौर्देयेति ज्ञात्वा गृहीतदेवदत्तवेषायान्यस्मै पात्रभूतायापि दत्ता । आर्त्तो रोगेणास्थिरचित्तः । मत्तो मदनीयद्रव्येण । उन्मत्तो वातादिना । अपवर्जितं दत्तम् । मामकमयं कर्म करिष्यतीति कर्माकुर्वाणाय दत्तम् । अधर्मविनियोक्त्रे धर्मं करिष्यतीति बुद्धया दत्तम् । एतानि परावर्तते । कात्यायनः—

कामक्रोधास्वतंत्रार्तक्लीबोन्मत्तप्रमोहितैः ।
व्यत्यासपरिहाराय यद्दत्तं तत्पुनर्हरेत् ॥

कामात्परस्त्रीवंचनार्थम् । क्लीबो भीतः व्यत्यासपरिहाराय दत्तमुत्कोच इत्यर्थः ।

यस्तु कार्यस्य सिद्धयर्थमुत्कोचः स्यात्प्रतिश्रुतः ।
तस्मिन्नपि प्रसिद्धेऽर्थे न देयं स्यात्कथंचन ॥
अथ प्रागेव दत्तं स्यात्प्रतिदाप्यस्ततो बलात् ।
दण्डं चैकादशगुणमाहुर्गार्गीयमानवाः ॥

उत्कोचस्वरूपमाह स एव—

स्तेयसाहसिकोद्वृत्तपारदारिकशंसनात् ।
दर्शनाद्भ्रष्टवृत्तस्य तथाऽसत्यप्रवर्तनात् ॥
प्राप्तमेतैस्तु यत्किंचिदुत्कोचाख्यं तदुच्यते ।

मनुः—

योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यस्य चाप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत् ॥ इति ।

योग उपाधिः । यस्य चान्यस्यापि कार्यस्य तत्सर्वमुपध्यपगमे परावर्तत इत्यर्थः । कात्यायनः—

स्वस्थेनार्त्तेन वा दत्तं श्रावितं धर्मकारणात् ।

अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः ॥

अत्र विस्तरो गुरुकृते द्वैतनिर्णये द्रष्टव्यः।

इति दत्ताप्रदानिकनिर्णयः ॥

---

## अथाभ्युपेत्याशुश्रूषा।

नारदः—

अभ्युपेत्य तु शुश्रूषां यस्तां न प्रतिपद्यते।
अशुश्रूषाभ्युपेत्येतद्विवादपदमुच्यते ॥

तत्र शुश्रूषकत्रैविध्यमाह बृहस्पतिः—

आयुधी तूत्तमः प्रोक्तो मध्यमस्तु कृषीवलः।
भारवाहोऽधमः प्रोक्तस्तथा च गृहकर्मकृत् ॥

नारदः—

सर्वेष्वधिकृतो यः स्यात्कुटुंबस्य तथोपरि।
सोऽपि कर्मकृतो ज्ञेयः स च कौटुंबिकः स्मृतः ॥

कात्यायनः—

स्वतंत्रस्यात्मनो दानाद्दासत्वं दारवद्भृगुः।
त्रिषु वर्णेषु विज्ञेयं दास्यं विप्रस्य न क्वचित् ॥
वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः।
राजन्यवैश्यशूद्राणां त्यजतां हि स्वतंत्रताम् ॥

नारदः—

वर्णानां प्रातिलोम्येन दासत्वं न विधीयते ॥

कात्यायनः—

प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजातयः।
निर्वासं कारयेद्विप्रं दासत्वं क्षत्रिये भृगुः ॥

क्षत्रग्रहणं विट्शूद्रयोरुपलक्षणम्। विप्रनिर्वासप्रकारमाहतुर्दक्षनारदौ—

परिव्रज्यां गृहीत्वा तु यः स्वधर्मे न तिष्ठति।
श्वपदेनांकयित्वा तु राजा शीघ्रं प्रवासयेत् ॥

कात्यायनः—

सवर्णेऽपि तु विप्रे तु दासत्वं नैव कारयेत्।
शीलाध्ययनसंपन्ने तदूनं कर्म कामतः ॥
तत्रापि नाशुभं किञ्चित्प्रकुर्वीत द्विजोत्तमः।

मनुः—

क्षत्रियं चैव वैश्यं च ब्राह्मणो वृत्तिकर्षितौ ।
बिभृयादानृशंस्येन स्वामिकर्म तु कारयेत् ॥

स्वामिकर्म उत्तमं तद्योग्यमित्यर्थः ॥

कात्यायनः—

आदद्याद्ब्राह्मणीं यस्तु विक्रीणीयात्तथैव च ।
राज्ञा तदकृतं कार्यं दंड्याः स्युः सर्व एव ते ॥
कामात्तु संश्रितां यस्तु कुर्याद्दासीं कुलस्त्रियम् ।
संक्रामयेत वाऽन्यत्र दण्ड्यस्तच्चाकृतं भवेत् ॥
बालधात्रीमधात्रीं च दासीमिव भुनक्ति यः ।
परिचारकपत्नीं च प्राप्नुयात्पूर्वसाहसम् ।

विष्णुः—

यस्तूत्तमं वर्णं दास्येऽभियोजति तस्योत्तमसाहसो दंडः ।

कात्यायनः—

विक्रोशमानां यो भक्तां दासीं विक्रेतुमिच्छति ।
अनापदिस्थः शक्तः सन्प्राप्नुयात्पूर्वसाहसम् ॥

दासभेदानाह नारदः—

गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।
अनाकालभृतस्तद्वदाहितः स्वामिना च यः ॥
मोक्षितो महतश्चर्णाद्युद्धे प्राप्तः पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥
भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः ।
विक्रेता चात्मनः शास्त्रे दासाः पंचदश स्मृताः ॥
तत्र पूर्वश्चतुर्वर्गो दासत्वान्न विमुच्यते ।
प्रसादात्स्वामिनोऽन्यत्र दास्यमेषां क्रमागतम् ॥
विक्रीणीते स्वतंत्रः सन् य आत्मानं नराधमः ।
स जघन्यतमस्तेषां सोऽपि दास्यान्न मुच्यते ॥
यो वैषां स्वामिनं कश्चिन्मोचयेत्प्राणसंशयात् ।
दासत्वात्स विमुच्येत पुत्रभागं लभेत च ॥

याज्ञवल्क्यः—

प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकम् ॥

नारदः—

अनाकालभृतो दास्यान्मुच्यते गोयुगं ददत् ।
आहितोऽपि धनं दत्त्वा स्वामी यद्येनमुद्धरेत् ॥
ऋणं तु सोदयं दत्त्वा ऋणी दास्यात्प्रमुच्यते ।
तवाहमित्युपगतो युद्धे प्राप्तः पणे जितः ।
प्रतिशीर्षप्रदानेन मुच्येरंस्तुल्यकर्मणा ॥
कृतकालव्यपगमात्कृतो दासो विमुच्यते ।
भक्तस्योपेक्षणात्सद्यो भक्तदासः प्रमुच्यते ॥
निग्रहाद्वडवायास्तु मुच्यते वडवाभृतः ॥ इति ।

प्रतिशीर्षः प्रतिनिधिः । वडवा दासी ।

याज्ञवल्क्यः—

बलाद्दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यते ॥

नारदः—

तवाहमिति चात्मानं योऽस्वतंत्रः प्रयच्छति ।
न स तं प्राप्नुयात्कामं पूर्वस्वामी लभेत तम् ॥

अस्वतन्त्रः परदासः । अस्मिन्प्रकरणे दासपदगतपुंस्त्वस्याविवक्षितत्वाद्दास्यामप्येष सर्वो विधिर्ज्ञेयः । तत्र दासीत्वविमोककारणमाह कात्यायनः—

स्वां दासीं यस्तु संगच्छेत्प्रसूता च भवेत्ततः ।
अवेक्ष्य बीजं कार्या स्याददासी सान्वया तु सा ॥

बीजमपत्यम् । गुणवदवेक्ष्येत्यर्थः । नारदः—

स्वदासमिच्छेद्यः कर्तुमदासं प्रीतमानसः ।
स्कंधादादाय तस्यासौ भिंद्यात्कुंभं सहांभसा ॥
साक्षताभिः सपुष्पाभिर्मूर्द्धन्यद्भिरवाकिरेत् ।
अदास इति चोक्त्वा त्रिः प्राङ्मुखं तमथोत्सृजेत् ॥
ततः प्रभृति वक्तव्यः स्वाम्यनुग्रहपालितः ।
भोज्यान्नोऽथ प्रतिग्राह्यो भवत्यभिमतः सताम् ॥

कात्यायनः—

दासेनोढा त्वदासी या साऽपि दासीत्वमाप्नुयात् ।
यस्माद्भर्ता प्रभुस्तस्या स्वाम्यधीनः प्रभुर्यतः ॥

दासस्य तु धनं यत्स्यात्स्वामी तस्य प्रभुर्मतः ॥ इति ।

इत्यभ्युपेत्याशुश्रूषा ।

## अथ वेतनादानम् ।

नारदः—

भृतानां वेतनस्योक्तो दानादानविधिक्रमः ।
वेतनस्यानपाकर्म तद्विवादपदं स्मृतम् ॥

याज्ञवल्क्यः—

दाप्यस्तु दशमं भागं वाणिज्यपशुसस्यतः ।
अनिश्चित्य भृतिं यस्तु कारयेत्स महीक्षिता ॥

एतदल्पायासपरम् । आयासबहुत्वे तु बृहस्पतिः—

त्रिभागं पंचभागं वा गृह्णीयात्सीरवाहकः ।
भक्ताच्छादभृतः सीराद्भागं गृह्णीत पंचमम् ॥
जातसस्यात्त्रिभागं तु प्रगृह्णीयादथाभृतः ।
भक्ताच्छादभृतोऽन्नवस्त्रदानेन पोषितः ॥

नारदः—

कर्माकुर्वन्प्रतिश्रुत्य कार्यो दत्त्वा भृतिं बलात् ।
भृतिं गृहीत्वाऽकुर्वाणो द्विगुणां भृतिमाप्नुयात् ॥

मनुः—

भृतोऽनार्तो न यः कुर्याद्दर्पात्कर्म यथोदितम् ।
स दंड्यः कृष्णलान्यष्टौ न देयं चास्य वेतनम् ॥

स एव—

यथोक्तमार्तः स्वस्थो वा यस्तत्कर्म न कारयेत् ।
न तस्य वेतनं देयमल्पोनस्यापि कर्मणः ॥
आर्तस्तु कुर्यात्स्वस्थः सन् यथाभाषितमादितः ।
सुदीर्घस्यापि कालस्य स्वं लभेतैव वेतनम् ॥

विष्णुः—भृतकश्चापूर्णे काले त्यजन्सकलमेव मूल्यं जह्याद्राज्ञे च पणशतं दद्यादिति । स एव स्वामी चेद्भृतकमपूर्णे काले जह्यात्तस्य सर्वमेव मूल्यं दद्यात्पणशतं च राज्ञेऽन्यत्र भृतकदोषात् । वृद्धमनुः—

प्रमादान्नाशितं दाप्यः समं द्विर्द्रोहनाशितम् ।
न तु दाप्यो हृतं चौरैर्दग्धमूढं जलेन वा ॥

द्रोहो द्वेषः । ऊढमपहृतम् । याज्ञवल्क्यः—

प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम् ।
प्रक्रान्ते सप्तमं भागं चतुर्थं पथि संत्यजन् ॥

वृद्धमनुः—

पथि विक्रीय तद्भांडं वणिग्भृत्यं त्यजेद्यदि ।
अथ तस्यापि देयं स्याद्भृतेरर्धं लभेत सः ॥

कात्यायनः—

यथा च पथि तद्भाण्डमासिध्येत ह्रियेत वा ।
यावानध्वा गतस्तेन प्राप्नुयात्तावतो भृतिम् ॥
त्यजेत्पथ्यसहायं यः श्रान्तं रोगार्तमेव वा ।
प्राप्नुयात्साहसं पूर्वं ग्रामे त्र्यहमपालयन् ॥

आ सिद्ध्येत राजाज्ञयाऽवरुद्ध्येत । बृहस्पतिः—

प्रभुणा विनियुक्तः सन्भृतको विदधाति यः ।
तदर्थमशुभं कर्म स्वामी तत्रापराध्नुयात् ॥
कृते कर्मणि यः स्वामी न दद्याद्वेतनं भृते ।
राज्ञा दापयितव्यः स्याद्वेतनं चानुरूपतः ॥ इति ।

नारदः—

अनयन्भाटयित्वा तु भाण्डं च यानवाहने ।
दाप्यो भृतिचतुर्भागं सर्वामर्धपथे त्यजन् ॥

यानं रथादि । वाहनं साक्षादश्वादि । कात्यायनः—

हस्त्यश्वगोखरोष्ट्रादीन् गृहीत्वा भाटकेन यः ।
नार्पयेत्कृतकृत्यः संस्तावद्दाप्यः स भाटकम् ॥

नारदः—

परभूमौ गृहं कृत्वा स्तोमं दत्त्वा वसेत्तु यः ।
स तद्गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टकादिकम् ॥
स्तोमादिना वसित्वा तु परभूमावनिश्चितः ।
यान्येव तृणकाष्ठानि त्विष्टका विनिवेशिताः ॥
विनिर्गच्छंस्तु तत्सर्वं भूमिस्वामिनि वेदयेत ।

स्तोमो भाटकम् ।

इति वेतनादानम् ॥

## अथ संविद्व्यतिक्रमः ।

नारदः—

पाखंडिनैगमादीनां स्थितिः समय उच्यते ।
समयस्यानपाकर्म तद्विवादपदं स्मृतम् ॥

पाखंडिनः वेदमार्गविरोधिनो वाणिज्यादिकराः । नैगमास्तदविरोधिनः । आदिपदेन त्रैविद्या गृह्यन्ते । तत्र राजकृत्यमाह बृहस्पतिः—

वेदविद्याविदो विप्रान् श्रोत्रियानग्निहोत्रिणः ।
आहृत्य स्थापयेत्तत्र तेषां वृत्तिं प्रकल्पयेत् ॥
अनाच्छेद्यकरास्तेभ्यः प्रदद्याद्गृहभूमयः ।
मुक्तभाव्याश्च नृपतिर्लेखयित्वा स्वशासने ॥

न आच्छेद्यो ग्राह्यः करो याभ्यस्ता अनाच्छेद्यकराः । मुक्तभाव्या मुक्तमुत्सृष्टं भाव्यं भूम्यादिफलं यासां ता इत्यर्थः । तेषां च श्रोत्रियादीनां धर्ममाह याज्ञवल्क्यः—

निजधर्माविरोधेन यस्तु सामयिको भवेत् ।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥

नारदः—

पाखंडिनैगमश्रेणिपूगव्रातगणादिषु ।
संरक्षेत्समयं राजा दुर्गे जनपदेषु च ॥

नानाजातीयानामेकजातीयं कर्म कुर्वतां संघाताः श्रेणयः । तेषामेवं भिन्नजातीयं कर्म कुर्वतां संघाः पूगाः । व्राताः ज्ञातिसंबंधिबंधूनां संघाताः । त एव कुलानीत्यप्युच्यंते । पाखंडिनो नैगमाश्च व्याख्याताः । एतेषां पाखंड्यादीनां व्रातान्तानां संघा गणाः । एतेषां समयभेदे दंडमाह याज्ञवल्क्यः—

गणद्रव्यं हरेद्यस्तु संविदं लंघयेच्च यः ।
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत् ॥

इति संविद्व्यतिक्रमः ।

## अथ क्रीतानुशयः ।

नारदः—

क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते ।
क्रीतानुशय इत्येतद्विवादपदमुच्यते ॥

पण्यपरीक्षावधिमाह स एव—

त्र्यहाद्दोह्यं परीक्षेत पंचाहाद्वाह्यमेव तु ।
मुक्तावज्रप्रवालानां सप्ताहं स्यात्परीक्षणम् ॥
द्विपदामर्धमासं च पुंसां तद्द्विगुणं स्त्रियाः ।
दशाहं सर्वबीजानामेकाहं लोहवाससाम् ॥

कात्यायनः—

भूमेर्दशाहेऽनुशयः क्रेतुर्विक्रेतुरेव वा ।

बृहस्पतिः—

अतोऽर्वाक्पण्यदोषस्तु यदि संजायते क्वचित् ।
विक्रेतुः प्रतिदेयं तत्क्रेता मूल्यमवाप्नुयात् ॥

कात्यायनः—

अविज्ञातं तु यत्क्रीतं दुष्टं पश्चाद्विभावितम् ।
क्रीतं तत्स्वामिने देयं पण्यं कालेऽन्यथा न तु ॥

स्वपरीक्षया गृहीते तु नारदः—

क्रीत्वा मूल्येन यः पण्यं दुःक्रीतं मन्यते क्रयी ।
विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यवीक्षितम् ॥
द्वितीयेऽह्नि ददत्क्रेता मूल्यात्त्रिंशांशमाहरेत् ।
द्विगुणं तत्तृतीयेऽह्नि परतः क्रेतुरेव तत् ॥

नारदः—

परिभुक्तं तु यद्वासः कृष्णरूपं मलीमसम् ।
सदोषमपि तत्क्रीतं विक्रेतुर्न भवेत्पुनः ॥

इति क्रीतानुशयः ।

---

## अथ विक्रीयासंप्रदानम् ।

नारदः—

विक्रीय पण्यं मूल्येन क्रेतुर्यन्न प्रदीयते ।
विक्रीयासंप्रदानं तद्विवादपदमुच्यते ॥

याज्ञवल्क्यः—

गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति ।
सोदयं तस्य दाप्योऽसौ दिग्लाभं च दिगागते ॥

दिक् देशांतरम् । तल्लाभो देशांतरीयपण्यलाभः । सोदयं सलाभम् । स एव—

राजदैवोपघातेन पण्ये दोषमुपागते ।
हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः ॥

स एव—

हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत् ।

नारदः—

दीयमानं न गृह्णाति क्रीत्वा पण्यं च यः क्रयी ।
विक्रीणानस्तदन्यत्र विक्रेता नापराध्नुयात् ॥

याज्ञवल्क्यः—

मत्तोन्मत्तेन विक्रीतं हीनमूल्येन येन वा ।
अस्वतंत्रेण मूढेन त्याज्यं तस्य पुनर्भवेत् ॥

अयं च सर्वोऽपि विधिर्मूल्ये दत्ते तुभ्यमेव देयं नान्यस्य इति विक्रेत्रा समये कृते बोध्यः ।

दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्तितः ।
अदत्तेऽन्यत्र समयान्न विक्रेतुरतिक्रमः ॥ इति नारदोक्तेः ।

सदोषपण्यविक्रये याज्ञवल्क्यः—

ज्ञात्वा सदोषं यः पण्यं विक्रीणीताविचक्षणः ।
तदेव द्विगुणं दाप्यस्तत्समं विनयं तथा ॥

इति विक्रीयासंप्रदानम् ।

---

## अथ स्वामिपालविवादः ।

पालदोषेण पश्वादिनाशे याज्ञवल्क्यः—

पालदोषविनाशे तु पाले दंडो विधीयते ।
अर्धत्रयोदशपणः स्वामिने द्रव्यमेव च ॥

द्रव्यं गवादि । पश्वादिमरणनिश्चयात्मकमाह मनुः—

कर्णौ चर्म च बालांश्च वस्ति स्नायु च रोचनाम् ।
पशुस्वामिषु दद्यात्तु मृतेष्वंकाभिदर्शने ॥

अंकः शृंगादीति मदनः । गवादिप्रचारार्थभूभागमाह याज्ञवल्क्यः—

धनुःशतं परीणाहो ग्रामाद्ग्रामान्तरं भवेत् ।
द्वे शते खर्वटस्य स्यान्नगरस्य चतुःशतम् ॥

परीणाहो गवादिप्रचारार्था भूः । अयमेव परीहारः ।

धनुःशतं परीहारो ग्रामस्य स्यात्समन्ततः ॥ इति मनूक्तेः ।

अनेककारुकृषीवलयुक्तो ग्रामः सर्वटः । बहुकंटकसंतान इति केचित् ।

परसस्यादिभक्षणे पशुस्वामिनो दंडमाह याज्ञवल्क्यः—

माषानष्टौ तु महिषी सस्यघातस्य कारिणी ।
दंडनीया तदर्धं तु गौस्तदर्धमजाविकम् ॥
भक्षयित्वोपविष्टानां यथोक्ताद्द्विगुणो दमः ।
सममेषां विवीतेऽपि खरोष्ट्रमहिषीसमम् ॥
यावत्सस्यं विनश्येत्तु तावत्स्यात्क्षेत्रिणः फलम् ।
गोपस्ताड्यस्तु गोमी तु पूर्वोक्तं दंडमर्हति ॥
विवीतं तृणकाष्ठादिसंचयस्थलम् , एतदपवदत्युशना
अदंड्याश्चोत्सवे गावः श्राद्धकाले तथैव च ।

व्यासः—

आक्रम्य च द्विजैर्भुक्तं परिक्षीणैश्च बान्धवैः ।
गोभिश्च नरशार्दूल वाजपेयाद्विशिष्यते ॥

उशना—

गोभिर्विनाशितं धान्यं यो नरः प्रतियाचते ।
पितरस्तस्य नाश्नन्ति नाश्नन्ति त्रिदिवौकसः ॥

इति स्वामिपालविवादः ।

---

## अथ सीमाविवादः ।

सीमाज्ञानोपायानाह बृहस्पतिः—

करीषास्थितुषाङ्गारशर्कराश्मकपालिकाः ।
सिकतेष्टकगोबालकार्पासास्थीनि भस्म च ॥
प्रक्षिप्य कुंभेष्वेतानि सीमान्तेषु निधापयेत् ।

अत्र साक्षिणां विशेषमाह याज्ञवल्क्यः—

सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापि वा ।
रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥

नारदः—

नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि ।
गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थिता ॥

बृहस्पतिः—

ज्ञातृचिह्नैर्विना साधुरेकोऽप्युभयसंमतः ।
रक्तमाल्यांबरधरो मृदमादाय मूर्द्धनि ।
सत्यव्रतः सोपवासः सीमानं दर्शयेन्नरः ।।

कात्यायनः—

सीमाचंक्रमणे कोशे पादस्पर्शे तथैव च ।
त्रिपक्षपक्षसप्ताहं दैवराजिकमिष्यते ।।

मनुः—

यथोक्तेन नयन्तस्ते पूयंते सत्यसाक्षिणः ।
विपरीतं नयन्तस्तु दाप्यास्तु द्विशतं दमम् ।।

नारदः—

अथ चेदनृतं ब्रूयुः सामन्ताः सीमनिर्णये ।
सर्वे पृथक्पृथग्दंड्या राज्ञा मध्यमसाहसम् ।।

कात्यायनः—

बहूनां तु गृहीतानां न सर्वे निर्णयं यदि ।
कुर्युर्भयाद्वा लोभाद्वा दाप्यास्तूत्तमसाहसम् ।।

याज्ञवल्क्यः—

अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्तिता ।।

मनुः—

सीमायामविषह्यायां स्वयं राजा च धर्मवित् ।
प्रादिशेद्भूमिमेकेषामुपकारादिति स्थितिः ।।

स एव—

निवेशकालादारभ्य गृहद्वारापणादिकम् ।
येन यावद्यथा भुक्तं तस्य तन्न विचालयेत् ।।

कात्यायनोऽपि—

मेखलाभ्रमनिष्कासगवाक्षान्नोपरोधयेत् ।
प्रणालीं गृहवास्तुं च पीडयन्दंडभाग्भवेत् ।।

मेखला भित्तिमूलबंधः । भ्रमो, जलनिर्गमः । निष्कासो हर्म्यादिविनिर्गतकाष्ठादिनिर्मितमस्पृष्टभूमिकमुपवेशनस्थलमिति मदनः । भूमिनिष्कास इति क्वचित्पाठः । धूमनिर्गमार्थं गवाक्षादीति तदर्थः । आदिपदेन परभित्त्यादि । स एव—

निवेशसमयादूर्ध्वं नैते योज्याः कदाचन ।
दृष्टिपातं प्रणालीं च न कुर्यात्परवेश्मसु ॥

बृहस्पतिः—

वर्चःस्थानं वह्निचयं गर्तोच्छिष्टांबुसेचनम् ।
अत्यारात्परकुड्यस्य न कर्तव्यं कथंचन ॥

वर्चःस्थानं शौचस्थानम् । अत्यारादतिसमीपे । कात्यायनः—

विण्मूत्रोदकसेकं च वह्निश्वभ्रनिवेशनम् ।
अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत् ॥

बृहस्पतिः—

यांत्यायांति जना येन पशवश्चानिवारिताः ।
तदुच्यते संसरणं न रोद्धव्यं तु केनचित् ॥

नारदः—

अवस्करस्थलश्वभ्रभ्रमस्यंदनिकादिभिः ।
चतुष्पथसुरस्थानराजमार्गान्न रोधयेत् ॥

कात्यायनः—

सर्वे जनाः सदा येन प्रयान्ति स चतुष्पथः ।
अनिषिद्धा यथाकालं राजमार्गः स उच्यते ॥

बृहस्पतिः—

यस्तत्र संकरं श्वभ्रं वृक्षारोपणमेव वा ।
कामात्पुरीषं कुर्याच्च तस्य दंडस्तु माषकः ॥

मनुः—

समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि ।
स द्वौ कार्षापणौ दद्यादमेध्यं चाशु शोधयेत् ॥

कात्यायनः—

तडागोद्यानतीर्थानि योऽमेध्येन विनाशयेत् ।
अमेध्यं शोधयित्वा तु दंडयेत्पूर्वसाहसम् ॥

याज्ञवल्क्यः—

मर्यादायाः प्रभेदे तु सीमातिक्रमणे तथा ।
क्षेत्रस्य हरणे दंडा अधमोत्तममध्यमाः ॥

मनुः—

गृहं तडागमारामं क्षेत्रं वा भीषया हरन् ।
शतानि पंच दंड्यः स्यादज्ञानाद्विशतो दमः ॥

कात्यायनः—

सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः ।
फलं पुष्पं च सामान्यं क्षेत्रस्वामिषु निर्दिशेत् ॥

स एव—

अन्यक्षेत्रे तु जातानां शाखा यत्रान्यसंस्थिताः ।
स्वामिनं तं विजानीयाद्यस्य क्षेत्रेषु संस्थिताः ॥

याज्ञवल्क्यः—

स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्तयेत् ।
उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः ॥

स एव—

न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः ।
परभूमिं हरेत्कूपः स्वल्पक्षेत्रे बहूदकः ॥

न निषेध्य इत्यनुषंगः । नारदोपि—

परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिषिध्यते ।
महागुणोऽल्पदोषश्चेद्वृद्धिरिष्टा क्षये सति ॥

नारदः—

पूर्वप्रवृत्तमुत्सन्नमपृष्ट्वा स्वामिनं तु यः ।
सेतुं प्रवर्त्तयेद्यस्तु न स तत्फलभाग्भवेत् ॥

व्यासः—

क्षेत्रं गृहीत्वा यः कश्चिन्न कुर्यान्न च कारयेत् ।
स्वामिने स शदं दाप्यो राज्ञे दण्डं च तत्समम् ॥

शदं क्षेत्रोत्पत्त्यर्हफलम् ।

इति सीमावादः ।

## अथ वाक्पारुष्यम् ।

बृहस्पतिः—

देशग्रामकुलादीनां क्षेपः पापे नियोजनम् ।
द्रव्यं विना तु प्रथमं वाक्पारुष्यं तदुच्यते ॥

भगिनीमातृसंबन्ध उपपातकशंसनम् ।
पारुष्यं मध्यमं प्रोक्तं वाचिकं शास्त्रवेदिभिः ॥
अभक्ष्यापेयकथनं महापातकदूषणम् ।
पारुष्यमुत्तमं प्रोक्तं तीव्रमर्माभिघट्टनम् ॥ इति ।

द्रव्यं विना द्रव्यवैशिष्ट्यं विना केवलं वाक्कृतमेवेत्यर्थः । अभिघट्टनमुद्घाटनम् । विष्णुः समवर्णाक्रोशने द्वादशपणान्दंड्यः ।

स्मृत्यन्तरे—

पारुष्यदोषावृतयोर्युगपत्संप्रवृत्तयोः ।
विशेषश्चेन्न दृश्येत विनयः स्यात्समस्तयोः ॥

नारदः—

पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक् ।
पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ॥

मनुः—

शतं ब्राह्मणमाक्रुश्य क्षत्रियो दंडमर्हति ।
वैश्योऽध्यर्धशतं द्वे वा शूद्रस्तु वधमर्हति ॥

बृहस्पतिः—

विप्रे शतार्धं दंडस्तु क्षत्रियस्याभिशंसने ।
विशस्तथाऽर्धपंचाशच्छूद्रस्यार्धत्रयोदश ॥

शूद्रविषये स एव—

धर्मोपदेशकर्ता च वेदोदाहरणान्वितः ।
आक्रोशकस्तु विप्राणां जिव्हाच्छेदेन दंड्यते ॥

मनुः—

मातरं पितरं जायां भ्रातरं श्वशुरं गुरुम् ।
आक्षारयन् शतं दाप्यः पंथानं चाददद्गुरोः ॥

भ्राता ज्येष्ठः पित्रादिसाहचर्यात् । मात्रादीनां सापराधत्वे जायायाश्च निरपराधत्वे दंड इति मिताक्षरादिषु । याज्ञवल्क्यः—

बहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः ।
शक्तस्तदर्धिकः पादनासाकर्णकरादिषु ॥
अशक्तस्तु वदन्नेवं दंडनीयः पणान्दश ।
तथा शक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु ॥

स एव—

अभिगंताऽस्मि भगिनीं मातरं वा तवेति च ।
शपंतं दापयेद्राजा पंचविंशतिकं दमम् ॥

स एव—

त्रैविद्यनृपदेवानां दंड उत्तमसाहसः ।

नारदः—

पतितं पतितेत्युक्त्वा चौरं चौरेति वा पुनः ।
वचनात्तुल्यदोषः स्यान्मिथ्या द्विर्दोषतां व्रजेत् ॥

याज्ञवल्क्यः—

सत्यासत्यान्यथास्तोत्रैर्न्यूनांगेन्द्रियरोगिणाम् ।
क्षेपं करोति चेद्दण्ड्यः पणानर्द्धत्रयोदश ॥

उशनाः—

मोहात्प्रमादात्संघर्षात्प्रीत्या वोक्तं मयेति यः ।
नाहमेवं पुनर्वक्ष्ये दंडार्द्धं तस्य कल्पयेत् ॥

इति वाक्पारुष्यम् ।

---

## अथ दण्डपारुष्यम् ।

नारदः—

परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः ।
भस्मादिभिश्चोपघातो दंडपारुष्यमुच्यते ॥

बृहस्पतिः—

आक्रुष्टस्तु समाक्रोशंस्ताडितः प्रतिताडयन् ।
हत्वाऽपराधिनं चैव नापराधी भवेन्नरः ॥ इति ।

कात्यायनः—

कर्णघ्राणपदाक्षीणि जिव्हाशिश्नकरस्य च ।
छेदने चोत्तमो दंडो भेदने मध्यमो भृगुः ॥

याज्ञवल्क्यः—

भस्मपंकरजःस्पर्शे दंडो दशपणः स्मृतः ।
अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणः स्मृतः ॥
समेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च ।
हीनेष्वर्द्धदमो मोहमदादिभिरदण्डनम् ॥

पार्ष्णिः पादपश्चाद्भागः । कात्यायनः—

छर्दिमूत्रपुरीषाद्यैरापाद्यः स चतुर्गुणः ।
षड्गुणः कायमध्ये स्यान्मूर्ध्नि त्वष्टगुणः स्मृतः ॥

याज्ञवल्क्यः—

उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ ।
परस्परं तु सर्वेषां शस्त्रे मध्यमसाहसः ॥

स एव—

पादकेशांशुककरोल्लुंचनेषु पणान्दश ।
पीडाकर्षांशुकावेष्टपादाध्यासे शतं दमः ॥
शोणितेन समं दुःखं कुर्वन् काष्ठादिभिर्नरः ।
द्वात्रिंशतं पणान्दंड्यो द्विगुणो दर्शनेऽसृजः ॥

पीडेत्यादि अंशुकेनावेष्ट्य दृढमाकृष्य पादेनाध्यासे शतमित्यर्थः ।

स एव—

करपाददतो भंगे भेदने कर्णनासयोः ।
मध्यो दंडो व्रणोद्भेदे मृतकल्पहते तथा ॥
विप्रपीडाकरं छेद्यमंगमब्राह्मणस्य तु ।
उद्गूर्णे प्रथमो दण्डः संस्पर्शे तु तदर्धिकः ॥

मनुः—

येन केनचिदंगेन हिंस्याच्छ्रेयांसमंत्यजः ।
छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम् ॥
पाणिमुद्यम्य दंडं वा पाणिच्छेदनमर्हति ।

कात्यायनः—

वाक्पारुष्ये यथैवोक्ताः प्रातिलोम्यानुलोमतः ।
तथैव दंडपारुष्ये पात्या दंडा यथाक्रमम् ॥

विष्णुः—एकं बहूनां निघ्नतां प्रत्येकश उक्तो दंडो द्विगुणः ।

कात्यायनः—

देहेंद्रियविनाशे तु यथा दंडं प्रकल्पयेत् ।
तथा तुष्टिकरं देयं समुत्थानं च पण्डितैः ॥

तुष्टिकरं ताडिततोषकरम् । समुत्थानमौषधादिमूल्यं च पंडितैरभिज्ञैः कल्पितं देयमित्यर्थः । पशुताडनादौ याज्ञवल्क्यः—

दुःखे च शोणितोत्पादे शाखांगच्छेदने तथा ।
दण्डः क्षुद्रपशूनां तु द्विपणप्रभृतिः क्रमात् ॥
लिंगस्य छेदने मृत्यौ मध्यमो मूल्यमेव च ।
महापशुषु चैतेषु स्थानेषु द्विगुणो दमः ॥

वृक्षोपघाते मनुः—

वनस्पतीनां सर्वेषामुपभोगो यथा यथा ।
तथा तथा दमः कार्यो हिंसायामिति धारणा ॥

इति दण्डपारुष्यम् ।

---

## अथ स्तेयम् ।

तदुपयोगितया त्रिविधं द्रव्यमाह नारदः—

मृद्भांडासनखट्वास्थिदारुचर्मतृणादि यत् ।
शमीधान्यं कृतान्नं च क्षुद्रद्रव्यमुदाहृतम् ॥
वासः कौशेयवर्जं च गोवर्जं पशवस्तथा ।
हिरण्यवर्जं लोहं च मध्यं व्रीहियवादि च ॥
हिरण्यरत्नकौशयं स्त्रीपुंगोगजवाजिनः ।
देवब्राह्मणराज्ञां च विज्ञेयं द्रव्यमुत्तमम् ॥

तत्र प्रकाशतस्करांस्तावदाह स एव—

नैगमा वैद्यकितवाः सभ्योत्कोचकवंचकाः ।
दैवोत्पातकराः क्षुद्राः शिल्पज्ञाः प्रतिरूपकाः ॥
अक्रियाकारिणश्चैव मध्यस्थाः कूटसाक्षिणः ।
प्रकाशतस्करा ह्येते तथा कुहकजीविनः ॥

स्मृत्यन्तरेऽपि—

प्रकाशवंचकास्तत्र कूटमानतुलाश्रिताः ।
उत्कोचकाः सोपधिका वंचकाः पापयोषितः ॥
प्रतिरूपकराश्चैव मंगलादेशवृत्तयः ।
इत्येवमादयो ज्ञेयाः प्रकाशास्तस्करा भुवि ॥

बृहस्पतिः—

प्रच्छाद्य दोषं व्यामिश्र्य पुनः संस्कृत्य विक्रयी ।
पण्यं तद्द्विगुणं दाप्यो वणिग्दत्तं च तत्समम् ॥

अज्ञातौषधिमंत्रस्तु यस्तु व्याधेरतत्त्ववित् ।
रोगिभ्योऽर्थं समादत्ते स दण्ड्यश्चोरवद्भिषक् ॥
कूटाक्षदेविनः क्षुद्रा राजभाव्यहराश्च ये ।
गणका वंचकाश्चैव दंड्यास्ते कितवाः स्मृताः ॥
अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः ।
विश्वस्तवंचकाश्चैव निर्वास्याः सर्वे एव ते ॥
ज्योतिर्ज्ञानं तथोत्पातमविदित्वा तथा नृणाम् ।
शकुनादि च ये ब्रूयुर्विनेयास्ते प्रयत्नतः ॥
दंडाजिनादिभिर्युक्तमात्मानं दर्शयंति ये ।
हिंसन्ति छद्मना नृणां वध्यास्ते राजपूरुषैः ॥
स्वल्पमूल्यं तु संस्कृत्य नयंति बहुमूल्यताम् ।
ये चाज्ञकान्वंचयंति दंड्यास्तेऽर्थानुसारतः ॥
हेमरत्नप्रवालाद्यान्कृत्रिमान्कुर्वते तु ये ।
क्रेतुर्मूल्यं प्रदाप्यास्ते राज्ञा च द्विगुणं दमम् ।
मध्यस्था वंचकाः स्युश्चेद्रागलोभादिना यदा ।
साक्षिणश्चान्यथा ब्रूयुर्दाप्यास्ते द्विगुणं दमम् ॥

व्यासः—

साधनाद्यन्विता रात्रौ यदि प्रच्छन्नचारिणः ।
अविज्ञातनिवासाश्च ज्ञेयाः प्रच्छन्नतस्कराः ॥

स एव—

उत्क्षेपकः संधिभेत्ता पांथमुद्ग्रंथिमोचकः ।
स्त्रीपुंगोऽश्वपशुस्तेयी चौरो नवविधः स्मृतः ॥

संधिर्भित्यादेः । याज्ञवल्क्यः—

उत्क्षेपकग्रंथिभेदौ करसंदंशहीनकौ ।
कार्यौ द्वितीयापराधे करपादविहीनकौ ॥

संदंशः तर्जन्यंगुष्ठौ । मनुः—

संधिं भित्वा तु ये चौर्यं रात्रौ कुर्वंति तस्कराः ।
तेषां छित्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत् ॥

बृहस्पतिः—

तथा पांथमुषो वृक्षे गले बध्वाऽवलंबयेत् ।

अंगुलीग्रन्थिभेदस्य छेदयेत्प्रथमे ग्रहे ।
द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥

अंगुली तर्जन्यंगुष्ठौ। द्रव्यं गृहीत्वा चौरपलायने विशेषमाह नारदः—

गोचरे यस्य मुष्येत तेन चौरः प्रयत्नतः ।
ग्राह्यो दाप्योऽथवा द्रव्यं पदं यदि न निर्गतम् ॥
निर्गते पुनरेतस्मान्न चेदन्यत्र पातितम् ।
सामन्तान्मार्गपालांश्च दिक्पालांश्चैव दापयेत् ॥

याज्ञवल्क्योऽपि—

स्वसीम्नि दद्याद्ग्रामस्तु पदं वा यत्र गच्छति ।
पञ्चग्रामी बहिः क्रोशाद्दशग्राम्यथवा पुनः ॥ इति ।

स्त्रीहरणे व्यासः—

स्त्रीहर्ता लोहशयने दग्धव्यो वै कटाग्निना ।
नरहर्ता हस्तपादौ छित्वा स्थाप्यश्चतुष्पथे ॥

बृहस्पतिः—

गोहर्तुर्नासिकां छित्वा वधांतमिति वर्जयेत् ।

नारदः—

सर्वस्वं हरतो नारीं कन्यां तु हरतो वधः ।
वाजिवारणलोहानां चाददीत बृहस्पतिः ॥

सर्वस्वमित्यनुषंगः । व्यासः—

पशुहर्तुस्त्वर्द्धपादं तीक्ष्णशस्त्रेण कर्तयेत् ।

नारदः—

महापशूंस्तेनयतो दण्डमुत्तमसाहसम् ।
मध्यमं मध्यमपशून्पूर्वं क्षुद्रपशून्कृते ॥

मनुः—

धान्यं दशभ्यः कुंभेभ्यो हरतोऽप्यधिके वधः ।
शेषेष्वेकादशगुणं दाप्यस्तस्य च तद्धनम् ॥

कुंभो विंशतिप्रस्थः । स एव—

मुख्यानां चैव रत्नानां हरणे वधमर्हति ।

नारदः—

सुवर्णरजतादीनामुत्तमानां च वाससाम् ।

रत्नानां चैव सर्वेषां शतादभ्यधिके वधः ॥

मनुः—

सुवर्णरजतादीनामुत्तमानां च वाससाम्।
पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते ॥
शेषेष्वेकादशगुणं मूल्याद्दंडः प्रकल्पयेत्।

याज्ञवल्क्यः—

सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत्।

मनुः—

प्रायश्चित्तं च कुर्वाणाः पूर्वे वर्णा यथोदितम्।
नांक्या राज्ञा ललाटे तु दाप्यास्तूत्तमसाहसम् ॥

याज्ञवल्क्योऽपि—

चौरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैः।

नारदः—

भक्तावकाशदातारः स्तेनानां ये प्रसर्पताम्।
शक्ताश्च ये उपेक्षन्ते तेऽपि तद्दोषभागिनः ॥

तद्दण्डभागिनश्च।

इति स्तेयम्।

---

## अथ साहसम्।

तत्स्वरूपं नारदेनोक्तम्—

सहसा क्रियते कर्म यत्किंचिद्बलदर्पितैः।
तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥

बृहस्पतिः—

मनुष्यमारणं चौर्यं परदाराभिमर्शनम्।
पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम् ॥

उभयं वाक्पारुष्यं दण्डपारुष्यं च इति। नारदः—

फलमूलोदकादीनां क्षेत्रोपकरणस्य च।
भंगाक्षेपोपमर्दाद्यैः प्रथमं साहसं स्मृतम् ॥
वासःपश्वन्नपानानां गृहोपकरणस्य च।
एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥

व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम् ।
प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम् ॥

याज्ञवल्क्यः—

बन्दिग्राहांस्तथा वाजिकुंजराणां च हारिणः ।
प्रसह्य घातिनश्चैव शूलानारोपयेन्नरान् ॥

बृहस्पतिः—

प्रकाशघातका ये तु तथा चोपांशुघातकाः ।
ज्ञात्वा सम्यग्धनं हृत्वा हन्तव्या विविधैर्वधैः ॥ इति ।

स एव—

एकस्य बहवो यत्र प्रहरन्ति रुषान्विताः ।
मर्मप्रहारको यस्तु घातकः स उदाहृतः ॥

कात्यायनः—

आरंभकृत्सहायश्च तथा मार्गानुदेशकः ।
आश्रयः शस्त्रदाता च भक्तदाता विकर्मिणाम् ॥
युद्धोपदेशकश्चैव तद्विनाशप्रवर्तकः ।
उपेक्षाकार्ययुक्तश्च दोषवक्ताऽनुमोदकः ॥
अनिषेद्धा क्षमो यः स्यात्सर्वे ते कार्यकारिणः ।
यथाशक्त्यानुरूपं तु दण्डमेषां प्रकल्पयेत् ॥

विप्रस्य दण्डे विशेषमाह नारदः—

अविशेषेण सर्वेषामेष दंडविधिः स्मृतः ।
वधादृते ब्राह्मणस्य न वधं ब्राह्मणोऽर्हति ॥
शिरसो मुंडनं दंडस्तस्य निर्वासनं पुरात् ।
ललाटे चाभिशस्तांकः प्रयाणं गर्दभेन च ॥ इति ।

आततायाप्यपि विप्रो न वध्यः—

नाततायिवधे दोषोऽन्यत्र गोब्राह्मणादिति सुमंतूक्तेः ।

कात्यायनः—

आततायिनि चोत्कृष्टे तपःस्वाध्यायसंयुते ।
वधस्तत्र तु नैव स्यात्पापे हीने वधो भृगुः ॥

आततायिन आह स एव—

उद्यतासिविषाग्निश्च शापोद्यतकरस्तथा ।

आथर्वणेन हन्ता च पिशुनश्चापि राजनि ॥
भार्यातिक्रमकारी च रंध्रान्वेषणतत्परः ।
एवमाद्यान्विजानीयात्सर्वांश्चैवाततायिनः ॥

वसिष्ठोऽपि—

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारहरश्चैव षडेते त्वाततायिनः ॥

यत्तु मनुः,

गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ।
आततायिनमायान्तं हन्यादेवाविचारयन् ॥ इति ।

यच्च कात्यायनः—

आततायिनमायान्तमपि वेदांतपारगम् ।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥ इति ।

तदपिशब्दाद्वाशब्दाच्च ब्राह्मणभिन्नाततायिवधपरम् । ब्राह्मणग्रहणं तु कैमुतिकन्यायार्थम् । आततायी ब्राह्मणोऽपि वध्यः किमुतान्य इति मिताक्षरायाम् ।

उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम् ।
निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत् ॥ इति गालवोक्तेः।
स्वाध्यायिनं कुले जातं यो हन्यादाततायिनम् ।
अहत्वा भ्रूणहा स स्यान्न हत्वा भ्रूणहा भवेत् ॥

इति बृहस्पत्युक्तेश्च । स्ववधार्थमागच्छन्नाततायी ब्राह्मणोऽपि वध्य एव । क्षेत्रदारादिहरो ब्राह्मणो न वध्यः । क्षत्रियादिस्तु तादृशोऽपि वध्य इति चन्द्रिकाशयः । युक्तश्चायम्, मनुकात्यायनगालवबृहस्पतिवचसां स्ववधोद्यताततायिविशेषविषयतया सामान्यविषययोः पूर्वोक्तसुमंतुकात्यायनवचसोर्बाधस्योचितत्वात् ।

यत्तु बृहस्पतिः—

आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतम् ।
यो न हन्याद्वधप्राप्तं सोऽश्वमेधफलं लभेत् ॥ इति ।

तदपि स्ववधोद्यतभिन्नाततायिपरम् । किंच,

आततायिद्विजाग्र्याणां धर्मयुद्धे न हिंसनम् ।

इति कलौ वधोद्यतस्याततायिनो विप्रस्य हननं निषिद्धम् । तस्य विधितोऽप्राप्ते कलौ निषेधो व्यर्थः स्यात् । सर्वेषामपि कलिनिषेधानां विधिप्राप्तगोचरत्वस्य—

इमान्धर्मान्कलियुगे वर्ज्यानाहुर्मनीषिणः ।

इति धर्मपदस्वरसेन सर्वनिबन्धेषु व्यवस्थापितत्वात् । अतः कलौ स्ववधोद्यतोऽप्याततायी विप्रो न वध्यः । युगान्तरे तु वध्य एव । अन्यस्त्वाततायिविप्रः सर्वेष्वपि युगेष्ववध्यः । क्षत्रियादिस्त्वाततायी सर्वोऽपि सर्वयुगेषु वध्य इति दिक् ।

हीनमध्योत्कृष्टद्रव्यहरणे दंडमाह बृहस्पतिः—

क्षेत्रोपकरणं चैव पुष्पमूलफलानि च ।
विनाशयन्हरन् दंड्यः शताद्यमनुरूपतः ॥
पशुवस्त्रान्नपानानि गृहोपकरणं तथा ।
हिंसयंश्चोरयन् शास्यो द्विशताद्यं दमं तथा ॥
स्त्रीपुंगोहेमरत्नानि देवविप्रधनं तथा ।
यौषेयं चोत्तमद्रव्यमेषां मूल्यसमो दमः ॥
द्विगुणो वा कल्पनीयः पुरुषापेक्षया नृपैः ।
हर्ता वा घातनीयः स्यात्प्रसंगविनिवृत्तये ॥

यौषेयं स्त्रीधनम् । वाशब्द एवार्थे । अत्र 'विनाशयन् हर्तेति' पदस्वरसात्साहसविषयमेतद्वच इतिमदनः । साहसप्रयोजकस्य दंडमाह ।

याज्ञवल्क्यः—

यः साहसं कारयति स दाप्यो द्विगुणं दमम् ।
यश्चैवमुक्त्वाऽहं दाता कारयेत्स चतुर्गुणम् ॥

द्वैगुण्यं चातुर्गुण्यं वा साक्षात्कर्तृदंडापेक्षया । साध्वीं विप्रां बलाद्गच्छतो दंडमाह मनुः—

सहस्रं ब्राह्मणो दंड्यो विप्रां गुप्तां बलाद्व्रजन् ।

तादृश्यां विप्रायां क्षत्रियादेस्तु बृहस्पतिराह—

सहसा कामयेद्यस्तु धनं तस्याखिलं हरेत् ।
उत्कृत्य लिंगं वृषणौ भ्रामयेद् गर्दभेन तु ॥

कामयेत्परपत्नीं गच्छेत् । क्षत्रियादीनामनुलोमानां प्रतिलोमानां च बलात्सजातीयभार्यागमने दंडमाह कात्यायनः—

स्त्रीषु कृतोपभोगः स्यात्प्रसह्य पुरुषो यदा ।
वधे तस्य प्रवर्तेत कार्यातिक्रमणं हि तत् ॥

स एव—

अनिच्छन्ती तु या भुक्ता गुप्तां तां वासयेद्गृहे ।
मलिनांगीमधःशय्यां पिंडमात्रोपजीविनीम् ॥

स एव—

हीनवर्णोपभुक्ता या त्याज्या वध्याऽथवा भवेत् ।

वधस्त्विच्छन्त्यां बोध्यः । हीनमध्योत्तमसाहसेषु दंडमाह नारदः—

तस्य दंडः क्रियापेक्षः प्रथमस्य शतावरः ।
मध्यमस्य च शास्त्रज्ञैर्दृष्टः पंचशतावरः ॥
उत्तमे साहसे दंडः सहस्रावर इष्यते ।
वधः सर्वस्वहरणं पुरान्निर्वासनांकने ।
तदंगच्छेद इत्युक्तो दंड उत्तमसाहसः ॥ इति ।

वधच्छेदनाद्युपदेशस्तु राजानं प्रति नान्यस्य, तस्यैव दण्डकरणेऽधिकारात् ।

इति साहसम् ।

## अथ स्त्रीसंग्रहणम् ।

बलात्परभार्यागमनस्य साहसत्वात्तत्र पूर्वमेव दंड उक्तः । छलेन सजातीयपरभार्यागमने त्वाह बृहस्पतिः—

छद्मना कामयेद्यस्तु तस्य सर्वहरो दमः ।
अंकयित्वा भगांकेन पुरान्निर्वासयेत्ततः ॥

सर्वहरः सर्वस्वहरः । अयं च दंडः समायाम् । हीनायामेतदर्द्धम् । उत्तमायां वधः । तथा च स एव—

दमो नेयः समायां यो हीनायामर्धिकस्ततः ।
पुंसः कार्योऽधिकायां तु गमने संप्रमापणम् ॥

हीनमध्योत्तमत्रिविधस्त्रीसंग्रहणे दंडमाह स एव—

त्रयाणामपि चैतेषां प्रथमो मध्य उत्तमः ।
विनयः कल्पनीयः स्यादधिकोऽपि बलाद्ग्रहः ॥

दुर्वृत्तस्य परस्त्रिया सह संभाषणे दंडमाह मनुः—

परस्य पत्न्या पुरुषः संभाषे योजयेत्सह ।
पूर्वमाक्षारितो दोषैः प्राप्नुयात्पूर्वसाहसम् ॥

पित्रादिभिर्निवारितयोः स्त्रीपुंसोः संभाषणे दंडमाह याज्ञवल्क्यः—

स्त्री निषेधे शतं दण्ड्या द्विशतं तु दमं पुमान् ।
प्रतिषेधे तयोर्दण्डो यथा संग्रहणे तथा ॥

प्रत्येकनिषेधविषयं पूर्वमर्धम् । उभयनिषेधे उत्तरम् । उभयोरनुरागकृतसंभोगे दंडमाह याज्ञवल्क्यः—

सजातावुत्तमो दंड आनुलोम्ये तु मध्यमः ।
प्रातिलोम्ये वधः पुंसो नार्याः कर्णादिकर्तनम् ॥

कात्यायनः—

सर्वेषु चापराधेषु पुंसो योऽर्थदमः स्मृतः ।
तदर्धं योषितो दद्युर्वधे पुंसोऽङ्गकर्तनम् ॥

व्यभिचारितविप्रागमने तु मनुः—

शतानि पंच दंड्यः स्यादिच्छंत्या सह संगतः ।

इदं सजातीयापरम् । व्यभिचरितास्वनुलोमासु गमनेऽपि स एव—

अगुप्ते वैश्यराजन्ये शूद्रां वा ब्राह्मणो व्रजन् ।
शतानि पंच दंड्यः स्यात्सहस्रं त्वन्त्यजस्त्रियम् ॥

यत्तु मनुः,

सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन् । इति ।

तत्साध्वीपरम् । शूद्रस्य प्रातिलोम्येन गमने दंडमाह मनुः—

शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन् ।
अगुप्तं लिंगसर्वस्वं गुप्तं सर्वेण हीयते ॥

शूद्रो अगुप्तां द्विजां गच्छंल्लिंगच्छेदनं सर्वस्वहरणं च गुप्तां चेद्वधोऽधिक इति चार्हति । गुप्तां तु गच्छन्सर्वस्वहरणं वधं चार्हतीत्यर्थः ।

गौतमः—

'आचार्यस्त्र्यभिगमने लिंगोद्धारः सर्वस्वहरणं च गुप्ता चेद्वधोऽधिक' इति ।

मनुः—

ब्राह्मणीं तु यदाऽगुप्तां गच्छेतां वैश्यपार्थिवौ ।
वैश्यं पंचशतं कुर्यात्क्षत्रियं तु सहस्रिणम् ॥

स एव—

उभावपि हि तावेव ब्राह्मण्या गुप्तया सह ।
विप्लुतौ शूद्रवद्दंड्यौ दग्धव्यौ वा कटाग्निना ॥

स एव—

वैश्यश्चेत्क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत् ।
यो ब्राह्मण्यामगुप्तायां तावुभौ दंडमर्हतः ॥

अगुप्तब्राह्मणीगमने यो दंडः स इत्यर्थः । वसिष्ठः 'राजन्यश्चेद्ब्राह्मणीमभिगच्छेच्छरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येदेवं वैश्यो राजन्यायां मैथुनमाचरन् शूद्रस्तु राजन्यवैश्ययोरिति' ।

नारदः—

माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा ।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥
दुहिताऽऽचार्यभार्या च सगोत्रा शरणागता ।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥
आसामन्यतमां गच्छन्गुरुतल्पग उच्यते ।
शिश्नस्योत्कर्तनात्तत्र नान्यो दंडो विधीयते ॥

याज्ञवल्क्योऽपि—

पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ।
मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ।
छित्त्वा लिंगं वधस्तस्य सकामायाः स्त्रिया अपि ॥

अयं च दंडो न ब्राह्मणस्य—

परदाराभिमर्शे तु प्रवृत्तं तु महीपतिः ।
उद्वेजनकरैर्दंडैश्चिह्नयित्वा प्रवासयेत् ॥

अब्राह्मणः संग्रहणे प्राणान्तं वधमर्हति ।

इति ब्राह्मणाधिकारे बृहस्पतिवचनात् । शंखलिखितौ—

येन येनांगेनापराधं कुर्यात्तत्तदस्य छेत्तव्यमन्यत्र ब्राह्मणात् ।

ब्राह्मणस्य दास्यादिगमने दंडमाह याज्ञवल्क्यः—

अवरुद्धासु दासीषु भुजिष्यासु तथैव च ।
गम्यास्वपि पुमान्दाप्यः पंचाशत्पणिकं दमम् ॥

अवरुद्धाः स्वामिना पुरुषान्तरं प्रतिगन्तुं निषिद्धाः । नारदः—

स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासिनी च या ।
गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः ॥
आस्वेव तु भुजिष्यासु दोषः स्यात्परदारवत् ।

अब्राह्मणीति स्वैरिणीविशेषणम् ॥

स्वैरिणी स्वतन्त्रा पुंश्चली । निष्कासिनी कुटुम्बान्निर्गता पुंश्चली । याज्ञवल्क्यः—

अन्त्याभिगमने त्वङ्क्यः कुबन्धेन प्रवासयेत् ।
शूद्रस्तथाऽङ्क्य एव स्यादन्त्यस्यार्यागमे वधः ॥

स्त्रीकृते सङ्ग्रहणे तस्या दण्डमाह नारदः—

गृहमागत्य या नारी प्रलोभ्य स्पर्शनादिना ।
कामयेत्तत्र सा दण्ड्या नरस्यार्धदमः स्मृतः ॥

ब्राह्मण्यादीनां शूद्रादिगमने दण्डमाह यमः—

वृषलं सेवते या तु ब्राह्मणी मदमोहिता ।
तां श्वभिः खादयेद्राजा संस्थाने वध्यघातिनाम् ॥
वैश्यं वा क्षत्रियं वाऽपि ब्राह्मणी सेवते तु या ।
शिरसो मुण्डनं तस्याः प्रयाणं गर्दभेन तु ॥

वृषलः शूद्रः । वध्यघातिनः सौनिकास्तेषां स्थाने इत्यर्थः । अयं च दण्डोऽत्यासक्ताविति चन्द्रिकायाम् । व्यभिचारनिश्चयोपायमाह । याज्ञवल्क्यः—

पुमान्संग्रहणे ग्राह्यः केशाकेशि परस्त्रियाः ।
सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा ॥

द्वयोरित्यनेनान्यतरेण प्रतिपन्नेऽपि व्यभिचारे न निश्चयः । दूषण

आह याज्ञवल्क्यः—

शतं स्त्रीदूषणे दद्याद्द्वे तु मिथ्याभिशंसने।
पशून् गच्छञ्छतं दाप्यो दीनां स्त्रीं गां च मध्यमम्॥

तथा—

अयोनौ गच्छतो योषां पुरीषं वाऽभिमेहतः।
चतुर्विंशतिको दण्डस्तथा प्रव्रजितागमे॥

दीनां दुःखितां स्वपत्नीमपि। स्त्रीसम्मुखं पुरीषादि कुर्वत इत्यर्थः।

इति स्त्रीसंग्रहणम्।

## अथ स्त्रीपुंधर्मः।

तत्र भर्तुः सगुणपत्नीत्यागे दण्डमाह—

अनुकूलामवाग्दुष्टां दक्षां साध्वीं पतिव्रताम्।
त्यजन् भार्यामवस्थाप्यो राज्ञा दण्डेन वै पतिः॥

याज्ञवल्क्यः—

आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम्।
त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः॥

स्त्रियं प्रत्याह स एव—

स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः।
आ शुद्धेः सम्प्रतीक्ष्यो हि महापातकदूषितः॥

इति स्त्रीपुंधर्मः।

## अथ द्यूतसमाह्वयौ।

याज्ञवल्क्यः—

प्राप्ते नृपतिना भागे प्रसिद्धे धूर्तमण्डले।
जितं ससभिके स्थाने दापयेदन्यथा न तु॥

प्रसिद्धे अप्रच्छन्ने। धूर्तमण्डले द्यूतस्थाने। सभिको राज्ञा कृतो द्यूताध्यक्षः। एवंप्रकारेण जितं राजा दापयेन्नान्यदित्यर्थः। द्यूते कपटकर्तुर्दण्डमाह स एव—

राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविनः।

उपधिः छलम् । राजाज्ञां विना द्यूते दण्डमाह मनुः—

द्यूतं समाह्वयं चैव यः कुर्यात्कारयेत वा ।
सर्वांस्तान्घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ।।

द्विजलिंगमुपवीतवेदपाठादि ।
द्यूतधर्म समाह्वयेऽतिदिशति याज्ञवल्क्यः—

एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये ।

प्राणिद्यूत इति समाह्वयविशेषणम् । तद्भिन्न इत्यर्थः ।

इति द्यूतसमाह्वयौ ।

---

## अथ प्रकीर्णकम् ।

याज्ञवल्क्यः—

ऊनं वाऽप्यधिकं वाऽपि लिखेद्यो राजशासनम् ।
पारदारिकचौरौ वा मुञ्चतो दंड उत्तमः ।।
अभक्ष्येण द्विजं दुष्यन् दंड्य उत्तमसाहसम् ।
मध्यमं क्षत्रियं वैश्यं प्रथमं शूद्रमर्धकम् ।।

अभक्ष्यं सुरामूत्रपुरीषादि । स एव—

कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी ।
अंगहीनस्तु कर्तव्यो दाप्यश्चोत्तमसाहसम् ।।

विमांसं गवादिमांसम् । च शब्देनाङ्गच्छेदनमपीति मिताक्षरायाम्—
तथा—

शक्तो ह्यमोक्षयन् स्वामी दंष्ट्रिणां शृंगिणां तथा ।।
प्रथमं साहसं दण्ड्यो विक्रुष्टे द्विगुणं तथा ।।

विक्रोशः क्रंदनम् ।
मनुः—

मनुष्यमारणे क्षिप्रं चोरवत्किल्बिषी भवेत् ।
प्राणभृत्सु महत्स्वर्द्धं गोगजोष्ट्रहयादिषु ।।
क्षुद्रकाणां पशूनां तु हिंसने द्विशतो दमः ।
पञ्चाशत्तु भवेद्दण्डं शुभेषु मृगपक्षिषु ।।
गर्दभाजाविकान्हंतुर्दंडः स्यात्पञ्चमाषकः ।
माषकस्तु भवेद्दंडः श्वशूकरनिपातने । इति ।।

अयं च दंडो हृतमूल्यदानानन्तरं बोध्यः ।

याज्ञवल्क्यः—

जारं चौरेत्यभिवदन्दाप्यः पंचशतं दमम् ।
उपजीव्य धनं मुंचंस्तदेवाष्टगुणं स्मृतम् ॥

उपजीव्य गृहीत्वा ।

राज्ञोऽनिष्टप्रवक्तारं तस्यैवाक्रोशकारिणम् ।
तन्मंत्रस्य च भेत्तारं जिह्वां छित्त्वा प्रवासयेत् ॥

अनिष्टं मरणादि । आक्रोशः तव राज्यभ्रंशोऽस्त्वित्यादि ।

मनुः—

राज्ञः कोशापहर्तॄंश्च प्रतिकूलेष्ववस्थितान् ।
घातयेद्विविधैर्दंडैररीणां चोपजापकान् ॥

याज्ञवल्क्यः—

मृतांगलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा ।
राजयानसमारोढुर्दंड उत्तमसाहसम् ॥

मृतांगलग्नं मृतकवस्त्रादि । स एव—

द्विनेत्रभेदिनो राजद्विष्टादेशकृतस्तथा ।
विप्रत्वेन च शूद्रस्य जीवतोऽष्टशतो दमः ॥

द्विनेत्रभेदिनो नेत्रद्वयभेत्तू राजनिषिद्धकर्मकर्तुर्विप्रवृत्त्या जीवितुश्च शूद्रस्येत्यर्थः ।

श्राद्धभोजनार्थं तु यज्ञोपवीतधारणे तप्तशलाकया यज्ञोपवीतवद्रेखा कार्येति स्मृत्यन्तरे । मिताक्षरायां—व्यवहारान्यथाकारिणां दण्डमाह ।

स एव—

दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ।
सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम् ॥
यो मन्येताजितोऽस्मीति न्यायतोऽपि पराजितः ।
तमायातं पुनर्जित्वा दापयेद्द्विगुणं दमम् ॥

अत्र सर्वत्रानुक्तसंख्येया संख्या पणविषयिणी ज्ञेया । पणस्तु कर्षोन्मितं ताम्रम् । 'कार्षिकस्ताम्रिकः पण' इति कोशात् । कर्षः पलचतुर्थांशः ।

वराटकानां दशकद्वयं यत्सा काकिणी ताश्च पणश्चतस्रः ।

इति भास्कराचार्योक्तश्च पणः । उत्तमसाहसादिकं तु—

साशीतिपणसाहस्रो दंड उत्तमसाहसः ।

तदर्द्धं मध्यमः प्रोक्तस्तदर्द्धमधमः स्मृतः ।। इति ।

तथा—उक्तापराधेपूक्तपरिमाणदंडैर्दमनासंभवेऽधिकोऽपि दंडः ।

यथाहापस्तंबः—

दंडो दमनादित्याहुस्तेनादांतान्दमयेदिति ।

तथा सर्वस्वापहारदंडे विशेषमाह नारदः—

आयुधान्यायुधीयानां वाह्यादीन्वाह्यजीविनाम् ।

वेश्यास्त्रीणामलंकारान् वाद्यातोद्यादि तद्विदाम् ।।

यच्च यस्योपकरणं येन जीवंति कारुकाः ।

सर्वस्वहरणेऽप्येतन्न राजा हर्तुमर्हति ।।

अन्यायाद्गृहीतस्य दंडस्य प्रतिपत्तिमाह याज्ञवल्क्यः—

राज्ञाऽन्यायेन यो दंडो गृहीतो वरुणाय तम् ।

निवेद्य दद्याद्विप्रेभ्यः स्वयं त्रिंशद्गुणीकृतम् ।।

त्रिंशद्गुणं वरुणोद्देशेन संकल्प्य विप्रेभ्यो दद्यादित्यर्थः ।।

इति प्रकीर्णकम् ।

---

इति श्रीमीमांसकशङ्करभट्टात्मजभट्टनीलकण्ठकृते भगवद्भास्करे व्यवहारमयूखः समाप्तः ।

---

